असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥

स्पर्धन्तां सह जन्मकुञ्जरतया दिक्कुञ्जरैः कुञ्जराः ग्राम्या वा वनवासिनो मदजलप्रस्विन्नगण्डस्थलाः ।
आः कालस्य विपर्ययं शृणु सखे! प्राचीरपालीमलास्वादस्निग्धकपोलभित्तिरधमः कोलोऽपि संस्पर्धते ॥

बाह्यैर्वर्णाडम्बरैर्मा भ्रमन्तु छित्त्वा गर्भाभ्यन्तरं शोधयन्तु ।
निर्णेतारो नीरसत्वेन को वा डिण्डीराणां डिण्डिमानां च भेदः ॥

आनीयानीलशृङ्गद्युतिरचितजगद्रञ्जनादञ्जनाद्रेः चेञ्च्यामाराध्य कञ्चित्समयमथ निहत्योद्धनुष्कान् तुरुष्कान् ।
लक्ष्मीभूम्यामुभाभ्यां सह निजनिलये स्थापयन् रङ्गनाथं सम्यग्वर्यां सपर्यां पुनरकृत यशोदर्पणो गोप्पणार्यः ॥

॥ इति मुक्तकश्लोकाः समाप्ताः ॥

समाप्ता च

श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

काञ्चीवादिभयङ्करवंशीयाण्णङ्गरार्यदासेन । सैषा मालोपहृता शिरसि च कण्ठे च धार्यतां विबुधैः ॥

अनवधिशास्त्रसिन्धुविनिमग्नगभीरहृदाम्
अभिनवरङ्गनाथपरकालमहायमिनाम् ।
अनुपधिदिव्यभव्यकरुणापरिणामवशात्
अलभत मुद्रणेयमविलम्बसमाप्तिमहो ॥

श्रीः ।

# ग्रन्थमालासंपादकस्य सविनयमावेदनम् ॥

---

अयि भो महाभागाः! अवलेपस्त्वतितरां हेयः। हेयस्स इति धृतनिश्चयेष्वग्रेसरश्चायं जनः। अथापि स जनमिममालम्ब्य लब्धप्रतिष्ठो भवति हन्त। अवलेपो न सर्वथा विगीतः। उपादेयोऽपि भवति स सात्त्विकस्सन्नित्युपपादयन्त्युदारधियः। "तदनुबन्धमदावलिप्ते—मयि" इत्याचक्षाणस्स देशिकमणिः प्रतिपत्तिमिमां गाढं ग्राहयति। श्रीपराङ्कुशपरकालादयोऽपि दिव्यसूरिवरेण्याः स्वस्वदिव्यप्रबन्धेषु अवलेपं विगायन्तोऽपि स्ववाग्भिस्तस्य स्वात्मनि सत्तां च सम्यगुपलम्भयन्तः सात्त्विकावलेपसौवादवमेव समाविष्कृतवन्तो भवन्तीति नैतन्निगूढम्। तदास्माकीनोऽपि स स एवेत्यवधारयन्त्वन्तर्वाणयः।

श्रीमद्वेदान्तदेशिकग्रन्थमालामुद्रणोपक्रमचिन्ताऽप्यस्मादृशां मनसो दवीयसीति स्थिते वस्तुतत्त्वे, सहसा तदुपक्रमणम् अवलीलयैव च तदुपसंहरणमात्मना कृतमसकृदनुध्यायन्नसौ जनस्सत्यमप्रमेयमवलेपमधिवहति पुनःपुनरुद्घुष्यति च "नास्ति समो मम नास्ति समो मम नास्ति समो मम भो" इति। "இல்லை யெனக் கெதிரில்லை யெனக் கெதிரில்லை யெனக் கெதிரே" इत्यनुसंदधानैः श्रीरामानुजपदच्छायाचार्यैः संप्रदर्शितैव सेयं सरणिः॥

अहो! कुत्र भो श्रीमद्वेदशिरोगुरोर्दिव्यसूक्तिनिकरः! कुत्र चाहमज्ञानामकिञ्चनानां चाग्रेसरः। अहह! कथमिदमघटतेत्यन्तरा चिन्त्यमाने "दुर्विज्ञानस्वहृदयमहो! दैवमत्र प्रमाणम्" इति पादुकासहस्रफणितिरेव स्मृतिपथमारूढा सती समाहितमनसोऽस्मान् संविदधातीति सूनृतं वचः। अघटितघटनापटीयसस्सत्यकामस्य सत्यसंकल्पस्य च परस्य पुंसश्चेष्टितविशेषे हन्त! कस्य का नाम पृच्छेति विस्मयाद्विरतिरुचिता।

परमतितरामिहैकमवभाति विस्मयनीयम्। यदुतैतद्ग्रन्थमालामुद्रणनिष्प्रत्यूहनिष्पत्तौ प्रधानसामग्रीभावं प्रतिपद्यमानस्य, श्रीमन्महीशूरनगरमण्डनायमानश्रीमत्परकालमठाधीश्वराणामप्रमेयगुणमहोदधीनां श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तनधुरन्धराणां श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीलक्ष्मीहयवदनदिव्यपादुकासेवकश्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकसमाख्यया सुप्रसिद्धानां श्रीश्रीस्वामिचरणानां परमकृपातिशयस्यानिर्व्याजमभिमुखीभवनम् उत्तरोत्तरमभिवृद्ध्युन्मुखीभवनं चेति।

"प्रथितं पातकिवर्गं कृतघ्न एको हि कृत्स्नमतिशेते। तमिमं क्रियमाणघ्नः तमपि दुरात्मा करिष्यमाणघ्नः॥" इति श्रीमति संकल्पसूर्योदये गुरुचरणैरनुगृहीतामनर्घसूक्तिमनिशमनुसंदधाने दासे कृतघ्नता क्रियमाणघ्नता करिष्यमाणघ्नता वा कदाऽपि मास्म भजदवकाशमिति एकैवेयमभ्यर्थना नैरन्तर्येण विपरिवर्तते चेतसीति युक्तमस्य वचसो नित्यमाम्रेडनम्। सकलविद्याविहारास्थानमण्डपायितमानसानाम् अनवद्यानुष्ठानपवित्रदिव्यमङ्गलवपुषाममीषां यतिपतीनामनवग्रहमनुग्रहमकम्पां चानुकम्पामैकान्त्येन समासादितवतो दासस्य दुस्साधं नास्ति किमपि, सर्वं सुसाधमेवेत्यप्रधृष्यमिदं वच उत्तरोत्तरमुत्तमोत्तमकार्यवर्गसंपत्तिप्रतीक्षापराणां सतामनवधिकानन्दसंदोहसंदायि समिन्धां सन्ततम्।

अस्याश्च ग्रन्थमालायाः शोधनविषये यद्यप्यस्माभिस्ससहायैरन्वभूयत भूयान्परिश्रमः, तथाऽपि शोधनाया अंशास्सुबहवोऽवशिष्यन्त एवेत्यभिधातुमवकाश इह वर्तत एव। उपचत्वारिंशेभ्यो वत्सरेभ्यः पूर्वं केऽधन महाविवेकिभिर्महता परिश्रमेण संशोधितं तात्पर्यचन्द्रिकाश्रीकोशमन्वगृह्णन् परमकृपया श्री. उ. वे. विद्वद्वरिष्ठाः नावल्पाकम् चतुर्वेदिशतक्रतु - नरसिंहाचार्यवर्याः। सोऽयं श्रीकोशः प्राधान्येन महोपकारमारचयामास शोधन इति सकार्तज्ञ्यं विज्ञापयामः। मुद्रणेऽस्मिन् प्रेक्ष्यमाणं पाठभेदादिकं तस्मादेव श्रीकोशात्संगृहीतमिति वेदितव्यम्। प्रसङ्गादिह किञ्चिद्ब्रूमः। बहुविदामपि विदुषां धियामविषयाः प्रवट्टकास्सन्ति भूयिष्ठा देशिकदिव्यसूक्तिष्विति नैतन्नवीनं वचः। तथाद्दशीषु दिव्यसूक्तिषु अर्थावगाहनपूर्वकं शोधनावधानमसंभवि बहुषु स्थलेषु। मुद्रितपूर्वश्रीकोशपाठेषु तालकोशपाठेषु च क्वचिद्वत्त्र वा वस्तुतस्सावद्येषु सत्स्वपि त एव पाठास्सुसमीचीना इति साधयितुं परिकरमावध्नन्तो महान्तस्सुबहवस्समुत्तिष्ठेरन्। तथाविधेषु स्थलेषु पाठांस्तथैव निवेशयितुम् औचितीमनुसृत्य समीकर्तुं चाशक्नुवन्तो वयं "कर्तुं त्यक्तुमपि प्रपत्तुमनलं सीदामि दुःखाकुल" इत्याचार्यवर्यफणितिप्रकारेण सुबहु विह्वला अभूम। तथैव निवेशने, अशुद्धयो नोद्धृता इति विदूषयितुं संनह्येयुः। परिष्करणे तु स्वैरं पाठविपर्यासाः प्रवेशिता इति पटहघोषणां कुर्युरुज्जीरन्। सुमहदिदं संकटं कथमपोह्यताम्। कथञ्चित् कार्यमिदं सुमहत्तरं दिष्ट्या निष्प्रत्यूहं निरवर्तयाम। अवश्यमेव शोधनीयेष्वपि स्थलविशेषेषु क्वचिदौदासीन्यमेवास्माभिरवालम्बि।

मात्रया चात्र किञ्चिदुदाहरामः। **ईशावास्योप**निषदि * पूषन्नेकर्षे इत्यादिकायाः षोडश्या ऋचो भाष्ये एवं नाम पङ्क्तिस्संदृश्यते—

"अत्र वर्तमानव्यपदेश उत्तरवाक्यवत् तात्कालिकानुसन्धानानुवादः। प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थोऽत्र ग्राह्य इत्यपुनरुक्तिः। तदा साधारण्यज्ञापनार्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः।" इति।

एवमेव मुद्रितचरानेकपुस्तकगतः, उपलभ्यमानद्वित्रतालकोशगतश्च पाठः। सर्वथाऽप्यनन्वयोऽत्र सुस्पष्टः। माननीया महामतयस्त्वत्र पाठमेवमुल्लिखन्ति—

"........लिङर्थोऽत्र ग्राह्यः। सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः। 'ते' इति पुनरुक्तिः तदसाधारण्यज्ञापनार्थम्" इति।

एवञ्च सति संपद्यते हि सुसंगतोऽक्लिष्टश्चान्वयः। केचिदन्यथाऽप्यत्र सूक्तिविन्यासमभिमन्यन्ते। भीरुभिरस्मादृशैरेवंविधेषु स्थलेषु कथमिव स्वातन्त्र्यमाश्रीयताम्? सन्त्येवंविधानि स्थलानि सुबहूनि नाम।

यत्रयत्र पाठविसंवादा वर्तन्ते तत्रतत्र विशदविचारप्रपञ्चनपूर्वकं यथायथं पाठा निरूपयितव्याः, येन विवेकिनां विशेषतोऽवधानं च स्यात्—इति समुत्कण्ठा बलवती समिन्धेऽस्माकम्। आदितः प्रभृति सर्वानपि ग्रन्थानस्यां ग्रन्थमालायामवतीर्णान् सुष्ठु परिशील्य यदि केचित्प्राज्ञपरिबृढा औचित्यविशदीकरणपूर्वकं समीचः पाठान् प्रतिबोधयेयुः ध्रुवमनुबन्धसञ्चिकया सर्वं तत्प्रकाशयिष्यामः। एकैकं ग्रन्थमेकैकः पण्डितमणिः परिशीलयतु नाम। अत्यन्तमावश्यकं हि कृत्यमिदमवशिष्यते।

अन्यदपि किञ्चिदवश्यमभिधित्सितम् । वयं तु काञ्च्यां स्मः । मुद्रणं तु मद्रपुर्यामन्यत्र च प्रचलति । कानिचिच्छोधनानि सुष्ठु समाकलितान्यपि मुद्रणालयाधिकृतानां कार्यकराणां भ्रमप्रमादादिवशात् विपर्यासमेव गमितानि भवन्ति । अत्रापि किञ्चिन्निदर्शयामः । **दशावतारस्तोत्रे** *नाथायैव नमःपदमित्यादौ दशमे पद्ये अवसाने "पर्यायचर्यायते" इत्यत्र "पर्यायचर्याः, यते" इति पदच्छेद इति आबाल्यादस्माभिरवधारितमिदम् । "पर्यायचर्याय, ते" इति केषाञ्चिद्बहूनां वाऽत्र भ्रमस्समस्त्येव । तादृशं भ्रममपासितुं "चर्या यते" इति विन्यासं सुस्फुटं संशोधने सूचितवद्भिरप्यस्माभिर्हन्त परस्तात् "चर्याय ते" इत्येव मुद्रणमुपक्लृप्तमुदैक्षि । अथ च महान् विषादस्सत्यमन्वभावि । तावता किमहो फलम् ? एवं नाम संपतिताः कतिचिदशुद्धीरधिकृत्य निर्वेद एव शरणं भवत्यस्माकम् । एतादृशनिर्वेदास्तदाशुद्धिविषये शुद्धिपत्रिकाप्रकाशनेऽपि नास्माकमुत्साहस्संजायते । **शरणागतिगद्ये** द्वादशे वाक्ये— "दैवीं गुणमयीं मायां दासभूतः शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय" इति तावत्प्रायः पठन्ति । अत्र तु दासभूत इत्यपपाठः । दासभूतमित्येव सुपाठः—इत्यप्रकम्प्यमध्यवसायमधिवहत्स्वप्यस्मासु हंहो ! मुद्रणेऽस्मिन् दासभूतः इत्येव (मूले भाष्ये च) पतितमिति निर्वेदमिमं कुत्र कथं कथयेम ? अगत्या शुद्धिपत्रिकयाऽथ समीकरणं भवतीति तु आस्तां नाम ।

अन्तत इदं विनिवेद्य विरमामः । वेदान्तविभागान्तर्गतशतदूषण्यादिग्रन्थानामिव, व्याख्यानविभागान्तर्गतगीताभाष्यतात्पर्यचन्द्रिकायाश्च शोधने, श्रीमच्छुकपुरीनित्यनिवासरसिक श्रीमत्परमहंसेत्यादिबिरुदालंकृत श्रीकोळियालम् स्वामिचरणचरणारविन्दवरिवस्यासमधिगतवेदान्तविज्ञानेन अस्मत्प्रियसुहृद्वरश्रीनिवासार्यतनूजन्मना च तिरुपतिनगरनिवासिना कोळियालं शठकोपाचार्यशिरोमणिना कृतं साहाय्यं संततमनुस्मरणीयमिति । अथ च नक्तंदिवमखिलग्रन्थवृन्दपरिशोधनप्रवणेष्वस्मत्प्रियजामातृपादेषु न्यायवेदान्तविशारदेषु M. A. इत्युपाधिभूषितेषु श्री. उ. वे. अक्कारक्कनि - सम्पत्कुमाराचार्येषु तथा शोधनसाहाय्यममितमाहितवत्सु अस्मत्प्रियमित्ररत्नेषु पण्डितवरेषु श्री. उ. वे. अ. मु. श्रीनिवासाचार्येषु च धन्यवादानाम्रेडयति दासदासः ।

विष्वब्दे मिथुने कृष्णत्रयोदश्यां रवेर्दिने । इत्थं व्यजिज्ञपद्दासो वादिभीकरवंशजः ॥

इति,

**श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यः, श्रीवैष्णवदासः.**

**ग्रन्थमालायाः प्रधानसंपादकः.**

## ॥ पुस्तकसूची - श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

Editor: P. B. Annangaracharya, Conjeeveram.

१. स्तोत्रावलीविभागः । हयग्रीवस्तोत्रादि पादुकासहस्रान्त सकल स्तोत्रजालसमलंकृतः । २ ० ०

२. वेदान्तविभाग—प्रथमसंपुटम् । अधिकरणसारावली शतदूषणी च । ३ ० ०

३. ,, द्वितीयसंपुटम् । मीमांसापादुका, सेश्वरमीमांसा, न्याय-परिशुद्धिः, न्यायसिद्धाञ्जनं च । ३ ० ०

४. ,, तृतीयसंपुटम् । सर्वार्थसिद्धिसमेतः तत्त्वमुक्ताकलापः । ४ ० ०

५. काव्यनाटकविभागः । हंससंदेशः, सुभाषितनीवी, यादवाभ्युदयः, संकल्पसूर्योदयश्च । ३ ० ०

६. व्याख्यानविभाग—प्रथमसंपुटम् । ईशावास्योपनिषद्भाष्यम्, चतुःश्लोकी-भाष्यम्, स्तोत्ररत्नभाष्यम्, गद्यभाष्यं च । २ ० ०

७. ,, द्वितीयसंपुटम् । गीतार्थसंग्रहरक्षा, गीताभाष्यतात्पर्य-चन्द्रिका च । ५ ० ०

८. ,, तृतीयसंपुटम् । तत्त्वटीका, निक्षेपरक्षा सच्चरित्ररक्षा पाञ्चरात्ररक्षादिकं च । ३ ० ०

## శ్రీ విశిష్టాద్వైత సంప్రదాయగ్రన్థ సూచి.

౧. శ్రీభగవద్రామానుజ గ్రన్థమాలా:—శ్రీభగవద్రామానుజ మునిభిరనుగృహీత శ్రీభాష్యాదిగ్రన్థసప్తకమేక సంపుటాత్మకమ్. మూల్యమ్. ౬-౦-౦

౨. శ్రీమద్వరవరమునీన్ద్ర గ్రన్థమాలా:—శ్రీమద్వరవర మునిభిరనుగృహీతమ్ శ్రీవచనభూషణవ్యాఖ్యానం తత్త్వత్రయవ్యాఖ్యానం ముముక్షుప్పడి వ్యాఖ్యానం ఆచార్యహృదయ వ్యాఖ్యానమిత్యేతత్ గ్రన్థచతుష్టయమేకసంపుటాత్మకమ్. ౬-౦-౦

3. శ్రీమద్వేదాన్తదేశిక గ్రన్థమాలాయాం సంప్రదాయ విభాగః:—శ్రీమన్నిగమాన్తమహాదేశికైరనుగృహీతం సంప్రదాయ పరిశుద్ధ్యాది పరమతభఙ్గాన్త సకల రహస్యబృన్దమ్, దేశికప్రబన్ధ బృన్దం చ ఏక సంపుటాత్మకమ్. ౫-౦-౦

ప్రాప్తిస్థానమ్,
ప్రతివాదిభయఙ్కర అణ్ణఙ్గరాచార్యులవారు
గ్రన్థమాలా ఆఫీస్, కాఞ్చీపురం.

प्राप्तिस्थानम्
प्रतिवादिभयङ्कर अण्णङ्गराचार्यः
ग्रन्थमाला आफीस, कञ्जीवरम्.

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमद्यामुनमुनये नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

[ व्याख्यानविभागे द्वितीयसंपुटम् ]

श्रीभगवद्यामुनमुनिविरचितगीतार्थसंग्रहव्याख्या

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्तदेशिकविरचिता

# ॥ श्रीमद्गीतार्थसंग्रहरक्षा ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

मानत्वं भगवन्मतस्य महतः पुंसस्तथा निर्णयस्तिस्रस्सिद्धय आत्मसंविदखिलाधीशानतत्त्वाश्रयाः ।
गीतार्थस्य च संग्रहः स्तुतियुगं श्रीश्रीशयोरित्यमून्यद्ग्रन्थाननुसन्दधे यतिपतिस्तं यामुनेयं नुमः ॥ १ ॥

श्रीमद्वेङ्कटनाथेन यथाभाष्यं विधीयते । भगवद्यामुनेयोक्तगीतासंग्रहरक्षणम् ॥ २ ॥

* तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः ॥ (भा. शा. ३४७. ८३)
* आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ (ना. पु. १८. ३४)
इत्यादिभिस्तत्त्वहितरूपं समस्ताध्यात्मशास्त्रार्थसारं महर्षयस्संजगृहुः । तदेतदुभयं सर्वोपनिषत्सारसङ्कलनात्मिकायां भगवद्गीतायां प्रतिपाद्यतया प्रदर्शयंस्तत्राप्युपनिषदां तत्त्वप्राधान्यस्य **शारीरके** सूत्रितत्वादिहापि तत्प्रधानतया व्यपदिशति ॥

## ॥ श्रीगीतार्थसंग्रहः ॥

**स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः । नारायणः परं ब्रह्म गीताशास्त्रे समीरितः ॥ १ ॥**

स्वे धर्माः **स्वधर्माः**—स्ववर्णाश्रमनियतशास्त्रार्थाः, * स्वेस्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः । (१८.४५) इति हि गीयते । स्वस्य धर्म इति समासेऽप्ययमेवार्थः । **ज्ञान**मत्र परशेषतैकरसयथावस्थितात्मविषयम् । **वैराग्यं**—परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः, * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि । (बार्ह. स्मृ.) इति मुमुक्षोः स्वभावप्रतिपादनात् । तथा च **पातञ्जलयोगानुशासनसूत्रं**—* दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् (१. १५) इति । कर्मयोगपरिकरभूतस्यापि वैराग्यस्य पृथगुपादानमपवर्गस्य तदन्वयव्यतिरेकानुविधायित्वेन तत्प्राधान्य-

ज्ञापनार्थं कन्दभूतरागनिवृत्त्या तन्मूलक्रोधादिसमस्तदोषनिवृत्तिज्ञापनार्थं च । तत्र स्वधर्मज्ञानयोः प्रथमं कर्मयोगज्ञानयोगरूपेणावस्थितयोरात्मसाक्षात्कारद्वारा भक्तियोगाधिकारनिर्वर्तकत्वेन तत्साधकत्वम् । तदभिप्रायेणोक्तमात्मसिद्धौ— * उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः इति । उत्पन्नभक्तियोगानामपि विशदतमप्रत्यक्षसमानाकारस्य तैलधारावदविच्छिन्नस्मृतिसन्ततिरूपस्य आप्रयाणादनुवर्तनीयस्य अहरहरभ्यासाधेयातिशयस्य भक्तियोगस्य सत्त्वविवृद्धिसाध्यतया तद्विरोधिरजस्तमोमूलभूतपापनिबर्हणद्वारेण सत्त्वोपचयहेतुतयोपकारकत्वादात्मयाथात्म्यज्ञानपूर्वकैः परित्यक्तफलसङ्गकर्तृत्वादिभिः परमपुरुषाराधनैकवेषैर्नित्यनैमित्तिककर्मभिर्भक्तेरुपचीयमानत्ववेषेण साध्यत्वम् । तदेतत्सर्वमभिसन्धायोक्तं भगवता **पराशरेण**—

* इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ इति । (वि. ६.६.१२) महनीयविषये प्रीतिर्भक्तिः । * [प्रीति]स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते (लै. उ. ९. १९) इति वचनमपि पूज्यविषयविशेषनियतं योज्यम् । सैव वेदनोपासनध्यानादिशब्दैरध्यात्मशास्त्रेषु मोक्षोपायविधिवाक्यैस्सामान्यतो विशेषतश्च प्रतिपाद्यते, गुरुलघुविकल्पानुपपत्तेः, सामान्यशब्दानां समानप्रकरणोक्तविशेषविश्रमे च संभवति द्वारिद्वारादिकल्पनायोगात्, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात् * निदिध्यासितव्यः (बृ. ४. ४. ५ ; ६. ५. ६) इत्यस्य स्थाने विज्ञानशब्दश्रवणाच, परमपुरुषवरणीयताहेतुभूतगुणविशेषवतैव लभ्यत्वश्रुतेश्च, तद्वरणस्यास्मिन् शास्त्रे भक्त्यधीनत्वोक्तेश्च । एवं सति वेदनेतरमोक्षोपायनिषेधकश्रुतीनां * भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ (गी. ११. ५४) इत्यादिस्मृतीनां चाविरोधः । तदेतदुक्तं **भक्त्येकगोचर** इति । भक्तेरेव गोचरो नान्यस्येत्यर्थः । एतेन कर्मसमुच्चयवाक्यार्थज्ञानादिपक्षाः प्रतिक्षिप्ताः । गोचरत्वमिह फलत्वेन ग्राह्यम्, * भक्त्येकलभ्ये पुरुषे पुराणे (गा. पू. २१९. ३४) इत्यादिभिरेकरस्यात्, भक्तियोगलभ्य इति स्वोक्तसंवादाच्च । उपायतया फलतया चैकस्यैवावलम्बनादैश्वर्याद्यर्थभक्तिव्यवच्छेदार्थं वात्रैकशब्दः । अत्र ह्यैश्वर्याद्यर्वाचीनपुरुषार्थग्रहणं भूमविद्यायामिव निरतिशयपुरुषार्थप्रतिपादनार्थम् । तदभिप्रायेण च **भाष्यम्**—* परमपुरुषार्थलक्षणमोक्षसाधनतया वेदान्तोदितं स्वविषयं ज्ञानकर्मानुगृहीतभक्तियोगमवतारयामास (गी. १) इति । यद्वा निरतिशयैश्वर्ययुक्ततया भक्त्यर्हत्वमिह तद्गोचरत्वम् । ऐकान्तिकत्वादिव्यञ्जनाय त्वेकशब्दः । * परावरज्ञं भूतानाम् (भा. मो. २२९. ७) इत्याद्युक्तपरावरतत्त्वनिश्चयेन अन्यभक्त्युन्मूलनादव्यभिचारेण अनन्यविषयत्वमैकान्तिकत्वम् । सातिशयनिरतिशयपुरुषार्थविवेकेन तदेकभोग्यतया उत्तरावधिराहित्यमात्यन्तिकत्वम् । कारणवाक्यस्थानां सद्ब्रह्मादिसामान्यशब्दानां समानप्रकरणमहोपनिषदादिपठिताबाधितासंभवद्वृत्त्यन्तरनारायणादिविशेषशब्दार्थविश्रमं व्यञ्जयितुं—**नारायणः परं ब्रह्मे**ति विशेषतस्सामान्यतश्च व्यपदेशद्वयम् । अनेनाविभक्तिकेऽपि **नारायणानुवाक**वाक्ये पूर्वापरवाक्यच्छायानुसाराच्छाखान्तरसविसर्जनीयपठनाच्च व्यस्तत्वं व्यञ्जितम् । तेन च सर्वपरविद्योपास्यविशेषनिर्धारणार्थतया केवलपरतत्त्वप्रतिपादनपरनारायणानुवाकसिद्ध एवास्य शास्त्रस्य विषयः । तद्विभूतित्वेन * विश्वमेवेदं पुरुषः (तै. ना.) इतिवत्समानाधिकरणतया तत्राम्नातानां ब्रह्मशिवेन्द्रादीनां नारशब्दार्थानामिहापि * ब्रह्माणमीशम् (गी. ११.१५) इत्यादिभिस्तद्विभूत्येकदेशाश्रयत्वं प्रतिपाद्यत इति ख्यापितम् । उक्तं च **स्तोत्रे** * स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः । ब्रह्मा शिवश्शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ (११) इति । **संवित्सिद्धौ** च अद्वितीयश्रुतिव्याख्याने च दर्शितम्—*यथा चोलनृपस्सम्रा-

ऽद्वितीयोऽस्ति भूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः ॥ न तु तत्पुत्रतद्भृत्यकलत्रादिनिषेधकम् । तथा सुरासुरनर-ब्रह्मब्रह्माण्डकोटयः । क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः । ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः । विष्णोर्विभूति-महिमसमुद्रद्रप्सविप्रुषः ॥ इति । **पुरुषनिर्णये** च एतत्प्रपञ्चो ग्राह्यः । तदेतद्व्यपदेशद्वयं * श्रियःपतिरित्यादिना प्रारम्भ-**भाष्येण** व्याकृतम् । अत एव हि तत्रापि—* परं ब्रह्म पुरुषोत्तमो नारायणः इत्यन्तेन समभिव्याहृतम् । प्रपञ्चितमेत-दस्माभिस्**तात्पर्यचन्द्रिकाया**मिति नात्र विस्तृणीमहे । निर्विशेषणस्यैव ब्रह्मशब्दस्य काष्ठाप्राप्तबृहत्वबृंहणत्वयोगिनि परमात्मन्येव योगरूढत्वेऽपि तस्मादन्यत्र जीवादौ तद्गुणलेशयोगादौपचारिकप्रयोगरूढेस्तद्व्यवच्छेदाय **परम्** इति विशे-षितम् । एवमेव ह्यन्यत्रापि विशेष्यते । व्योमातीतवादिमतनिरासार्थं वा परत्वोक्तिः । गीतैव तत्त्वहितयोर्यथावच्छासनात् **गीताशास्त्रम्** । उपनिषत्समाधिना सिद्धव्यवहारनिरूढेः स्त्रीलिङ्गनिर्देशः । एतेन शास्त्रान्तरादस्य शास्त्रस्याधिक्यं व्यञ्जितम् । स्वयं च **महाभारते** महर्षिणोक्तम्—* अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् (आ. १. २७९) इति । उक्तं चाभियुक्तैः—* यस्मिन् प्रसादसुमुखे कवयोऽपि ये ते शास्त्राण्यशासुरिह तन्महिमाश्रयाणि । कृष्णेन तेन यदिह स्वयमेव गीतं शास्त्रस्य तस्य सदृशं किमिवास्ति शास्त्रम् ॥ इति । पञ्चमवेदे चास्यांशस्य प्राधान्यमुद्धृत्याहुः * भारते भगवद्गीता धर्मशास्त्रेषु मानवम् । वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम् ॥ (पा.) इति । **समीरितः**—सम्यगीरितः; अज्ञानसंशयविपर्ययप्रतिक्षेपेण परमप्राप्यत्वप्रापकत्वसर्वकारणत्वसर्वरक्षकत्वसर्वसंहर्तृत्वसर्वाधिकत्वसर्वाधारत्वसर्वनियन्तृत्व-सर्वशेषित्वसर्ववेदवेद्यत्वसर्वहेयरहितत्वसर्वपापमोचकत्वसर्वसमाश्रयणीयत्वादिभिः स्वभावैस्समस्तवस्त्वन्तरविलक्षणतया पुरुषोत्तमत्वेन प्रतिपादित इत्यर्थः । समन्वयसूत्रवन्निरतिशयपुरुषार्थत्वविवक्षया वा समित्युपसर्गः । एवमनेन श्लोकेन शास्त्रार्थः संगृहीतः ॥ १ ॥

**ज्ञानकर्मात्मिके निष्ठे योगलक्ष्ये सुसंस्कृते । आत्मानुभूतिसिद्ध्यर्थे पूर्वषट्केन चोदिते ॥ २ ॥**

अथ त्रिभिः श्लोकैस्त्रयाणां षट्कानामर्थं संगृह्णाति ॥ ज्ञानात्मिका निष्ठा ज्ञानयोगः, कर्मात्मिका निष्ठा कर्मयोगः । नितिष्ठत्यस्मिन्नर्थे अधिकर्तव्येऽधिकारीति निष्ठा, नियता स्थितिरेव वा निष्ठा, यावत्फलं स्थिरपरिगृहीतमुपायानुष्ठानमित्यर्थः । अनयोः स्वरूपं व्यञ्जयिष्यति * कर्मयोगस्तपस्तीर्थे (गी. सं. २३) इत्यादिना । **योगलक्ष्ये**—योगस्साध्यतया लक्ष्यम्—उद्देश्यं ययोस्ते योगलक्ष्ये । अत्र कर्मनिष्ठया ज्ञाननिष्ठामारुह्य तया योगप्राप्तिरिति द्वैतीयः क्रमः । तार्तीयस्तु ज्ञाननिष्ठा-व्यवधानमन्तरेण कर्मनिष्ठयैव यावद्योगारम्भं दृढपरिगृहीतया अन्तर्गतात्मज्ञानया शिष्टतया व्यपदेश्यानां लोकानुविधेया-नुष्ठानानामितरेषामपि निष्प्रमादसुकरोपायसक्तानां योगावाप्तिरिति । योगोऽत्रासनादिविशेषपरिकरवान् साक्षात्कारार्थम् आत्मावलोकनापरनामा चित्तसमाधानविशेषरूपो व्यापारः, तत्साध्यसाक्षात्कार एव वा । तेन स्मृतिसन्ततिविशेषरूपात् स्वकारणभूतज्ञानयोगात्स्वकार्यभूतादात्मानुभवाच्च भेदः । **सुसंस्कृते**—परमात्माधीनत्वतत्प्रीत्यर्थत्वफलान्तरसङ्गराहित्यादि-बुद्धिविशेषैः परिकर्मिते इत्यर्थः । **आत्मानुभूतिसिद्ध्यर्थे**—*सुखमात्यन्तिकं यत्तत् (गी. ६.२१) इत्याद्युक्तप्रकारेण वैषयिकानन्दविलक्षणस्वेतरसमस्तवैतृष्ण्यावहसुखस्वभावप्रत्यगात्मसाक्षात्कारविशेषरूपसिद्धिविशेषप्रयोजने, इत्यर्थः । **पूर्व-षट्केन चोदिते**—कर्तव्यतयाऽनुशिष्टे इति यावत् । तादर्थ्यादुपोद्घातरूपस्य प्रथमाध्यायस्य * न त्वेवाहम् (२. १२) इत्यतः पूर्वस्य द्वितीयाध्यायैकदेशस्य च तदनुप्रवेशवाचोयुक्तिः । आहुश्चोपोद्घातलक्षणं * चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते इति । एवमनेन श्लोकेन प्रथमषट्कस्यावरतत्त्वविषयव्यवहितोपायपरत्वमुक्तम् ॥ २ ॥

**मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये । ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥ ३ ॥**

अथ मध्यमषट्कस्य परतत्त्वविषयाव्यवहितोपायपरत्वमाह ॥ पूर्वश्लोके समासस्थस्यापि षट्कशब्दस्यात्र बुद्ध्या निष्कृष्य विपरिणतस्यानुषङ्गः । **भगवच्छब्दो** मध्यमषट्कोक्त [सकल] निखिलजगदेककारणत्वनिर्दोषत्वकल्याणगुणाकरत्वयोगिनि परस्मिन् ब्रह्मणि प्रत्यक्षरं प्रकृतिप्रत्ययरूढिभिश्च **भगवत्पराशरादिभिर्निरुक्तो** द्रष्टव्यः । यस्यैष संग्रहः— * तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥ (वि. ६.५.७७) इति । अयं च ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वे निदर्शनतया **शारीरकभाष्यारम्भे** दर्शितः *भगवच्छब्दवत् इति । भक्तेषु भागवतसमाख्या च भजनीये भगवच्छब्दस्य नामधेयतां व्यनक्ति । भगवानेव तत्त्वं—**भगवत्तत्त्वम्** । तत्त्वमिह प्रामाणिकः पदार्थः । * तत्त्वेन प्रवेष्टुम् (गी. ११. ४४) इत्यस्यार्थं व्यनक्ति—**याथात्म्यावाप्तिसिद्धय** इति । ऐश्वर्यादिपुरुषार्थान्तरोक्तेरन्यार्थत्वमनेन सूचितम् । याथात्म्यमत्र अनवच्छेदेन पुष्कलमनारोपितं रूपम् । अवाप्तिः—अनवच्छिन्नानन्दतयाऽनुभूतिः, सैव सिद्धिः पुरुषार्थकाष्ठारूपत्वात् । तस्या वा सिद्धिर्लब्धिः । **ज्ञानकर्माभिनिर्वर्त्य** इत्यनेन प्रथममध्यमषट्कयोः क्रमनियामकस्सङ्गतिविशेषस्सूचितः । तदनुसारेण **सप्तमारम्भे भाष्यम्**— * प्रथमेनाध्यायषट्केन परमप्राप्यभूतस्य परस्य ब्रह्मणो निरवद्यस्य निखिलजगदेककारणस्य सर्वज्ञस्य सर्वभूतात्मभूतस्य सत्यसङ्कल्पस्य महाविभूतेः श्रीमतो नारायणस्य प्राप्त्युपायभूतं तदुपासनं वक्तुं तदङ्गभूतमात्मज्ञानपूर्वककर्मानुष्ठानसाध्यं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनमुक्तम् । इदानीं मध्यमेन षट्केन परब्रह्मभूतपरमपुरुषस्वरूपं तदुपासनं च भक्तिशब्दवाच्यमुच्यते । तदेतदुत्तरत्र—* यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ इत्यारभ्य, * विमुच्य निर्ममश्शान्तो ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । (गी. १८. ४६—५४) इति संक्षिप्य वक्ष्यत इति । भक्तिरेव योगः **भक्तियोगः** । * योगस्सन्नहनोपायध्यानसङ्गतियुक्तिषु (ना. शा. ३. १७९) इति पाठाद्योगशब्दोऽत्र उपायपरः । ध्यानपरत्वेऽपि सामान्यविशेषरूपतयाऽन्वयसिद्धिः । **प्रकीर्तितः**—स्वरूपत इतिकर्तव्यतातो विषयतः कार्यतश्च प्रकृष्टतया कीर्तित इत्यर्थः ॥ ३ ॥

एवं षट्कद्वयोक्तनानाविधतत्त्वहितविशोधनपरं क्रमादन्तिमषट्कत्रिकद्वयमित्यभिप्रायेणाह—

**प्रधानपुरुषव्यक्तसर्वेश्वरविवेचनम् । कर्म धीर्भक्तिरित्यादिः पूर्वशेषोऽन्तिमोदितः ॥ ४ ॥**

**प्रधानं**—कारणावस्थमचिद्द्रव्यम् । **पुरुषः** अचिन्मिश्रावस्थो विशुद्धावस्थश्च। **व्यक्तं** तु महदादिविशेषान्तं, तदारब्धदेवतिर्यङ्मनुष्यादिरूपं च कार्यजातम् । **सर्वेश्वरः**—* यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । (गी. १५. १७) इत्युक्तः पुरुषोत्तमः । एतेनार्वाचीनपरिच्छिन्नेश्वरव्यवच्छेदः । समाख्या चैषा सार्था भगवतः, * अजस्सर्वेश्वरस्सिद्ध इति तन्नामपाठात् । एतेषां **विवेचनं**—परस्परव्यावर्तको धर्मः । तेन वा पृथक्त्वानुसन्धानम् । **कर्मधीर्भक्तिरिति** कर्मयोगादीनां स्वरूपग्रहणम्, **इति**—निर्दिष्टपदार्थवर्गः **आदिः** यस्य स इत्यादिः । आदिशब्देन तदुपादानप्रकारः तदुपयुक्तशास्त्रवश्यत्वादिकं च गृह्यते । **पूर्वशेष** इत्यनेन प्रकृतशोधनरूपतया पुनरुक्तिपरिहारः सङ्गतिप्रदर्शनं च । अयं श्लोकः **त्रयोदशारम्भभाष्येण** स्पष्टं व्याख्यातः—*पूर्वस्मिन् षट्के परमप्राप्यस्य परस्य ब्रह्मणो भगवतो वासुदेवस्य प्राप्त्युपायभूतभक्तिरूपभगवदुपासनाङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यदर्शनं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयसाध्यमुक्तम्

मध्यमे च परमप्राप्यभूतभगवत्तत्त्वयाथात्म्यतन्माहात्म्यज्ञानपूर्वकैकान्तिकात्यन्तिकभक्तियोगनिष्ठा प्रतिपादिता । अतिशयितैश्वर्यापेक्षाणामात्मकैवल्यमात्रापेक्षाणां च भक्तियोगस्तत्तदपेक्षितसाधनमिति चोक्तम् । इदानीमुपरितने तु षट्के प्रकृतिपुरुषतत्संसर्गरूपप्रपञ्चेश्वरतद्याथात्म्यकर्मज्ञानभक्तिस्वरूपतदुपादानप्रकाराश्च षट्कद्वयोदिता विशोध्यन्ते—इति । अत्र त्रिकभेदविवक्षा च षोडशारम्भे दर्शिता—* अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विविक्तयोस्संसृष्टयोश्च याथात्म्यम्, तत्संसर्गवियोगयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वम्, सर्वप्रकारेणावस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वम्, विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनश्चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्वव्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्वेन याथात्म्यं च वर्णितम्—इति । तदत्र तृतीयषट्के तत्त्वविशोधनपरं प्रथमत्रिकम् । अनुष्ठानशोधनपरं द्वितीयमिति प्रायिकतयाऽयं विभागो ग्राह्यः ॥ ४ ॥

**अस्थानस्नेहकारुण्यधर्माधर्म[भ]धियाऽऽकुलम् । पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥ ५ ॥**

एवं शास्त्रार्थष्षट्कत्रयार्थश्च चतुर्भिश्श्लोकैस्संगृहीतः । इतः परमष्टादशभिः श्लोकैः प्रत्यध्यायमर्थास्संगृह्यन्ते । तत्र शोकतदपनोदनरूपकथावान्तरसङ्गत्या महर्षिणा प्रथमद्वितीयाध्यायविभागे कृतेऽपि शास्त्रतदुपोद्घातरूपार्थविभागज्ञापनाय द्वितीयैकदेशमपि प्रथमश्लोकेन संगृह्णाति । तद्व्यञ्जनाय च * तमुवाच हृषीकेशः (२. १०) इत्यस्मात्पूर्वम् अर्थव्याख्यानपूर्वकमयं श्लोको **भाष्यकारै**रुदाहृतः—* एवमस्थाने समुपस्थितस्नेहकारुण्याभ्यामप्रकृतिं गतं क्षत्रियाणां युद्धं परमधर्ममप्यधर्मं मन्वानं धर्मबुभुत्सया च शरणागतं पार्थमुद्दिश्य आत्मयाथात्म्यज्ञानेन युद्धस्य फलाभिसन्धिरहितस्यात्मप्राप्त्युपायताज्ञानेन च विनाऽस्य मोहो न शाम्यतीति मत्वा भगवता परमपुरुषेण अध्यात्मशास्त्रावतरणं कृतम् । तदुक्तम् * अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् । पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम् ॥ इति । * अस्थानशब्दोऽत्र स्नेहकारुण्याभ्यामेवान्वेतव्यः । धर्मेऽप्यधर्मधीः धर्माधर्मधीः ; शुक्तिकारजतधीरितिवत् । प्रकृतिभ्रंशहेतुतया निमित्तभूताभ्यामस्थानस्नेहकारुण्याभ्यां जाता धर्माधर्मधीः **अस्थानस्नेहकारुण्यधर्माधर्मधी**रिति अत्र भाष्याभिप्रायः । *बन्धुस्नेहेन परया च कृपया धर्माधर्मभयेन च अतिमात्रसन्नसर्वाङ्गः इति **प्रथमाध्यायान्तभाष्यानुसारेण** *धर्माधर्मभयाकुलम् इतिपाठे त्रयाणां द्वन्द्वः । धर्माधर्मभयं रज्जुसर्पभयमितिवत् । उद्दिश्य व्याजीकृत्येत्यर्थः । तदेतत्सूचितमारम्भे * पाण्डुतनययुद्धप्रोत्साहनव्याजेन इति । प्रपन्नत्वात्तमुद्दिश्यैवेति वा विवक्षितम् । तदपि सूचितम् * अस्य मोहो न शाम्यतीति मत्वा इति । तदत्र * तमुवाच (२. १०) इत्यादिश्लोकपर्यन्तो ग्रन्थः शास्त्रावताररूपः । तावत्संग्रहणायात्र श्लोके प्रथमाध्याय इत्यनुक्तिः । अस्ति ह्युत्तरेषु सप्तदशसु तत्तदध्यायग्रहणम् । अनन्तरे च संग्रहश्लोके * न त्वेवाहं जातु नासम् (२. १२) इत्यादेरर्थमभिप्रेत्य द्वितीयग्रहणम् । स च द्वितीयान्ते व्याख्यानपूर्वक [मुदाहृतः] मुद्धृतः—* एवमात्मयाथात्म्यं युद्धाख्यस्य च कर्मणस्तत्प्राप्तिसाधनतामजानतश्शरीरात्मज्ञानेन मोहितस्य तेन च मोहेन युद्धान्निवृत्त[स्या]स्य मोहशान्तये नित्यात्मविषया सांख्यबुद्धिस्तत्पूर्विका च असङ्गकर्मानुष्ठानरूपकर्मयोग[विषया] बुद्धिः स्थितप्रज्ञतायोगसाधनभूता द्वितीयाध्याये प्रोक्ता । तदुक्तम्—* नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः । द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये ॥ इति ॥ ५ ॥

**नित्यात्मासङ्गकर्मेहागोचरा सांख्ययोगधीः । द्वितीये स्थितधीलक्षा प्रोक्ता तन्मोहशान्तये ॥ ६ ॥**

संख्यया– बुद्ध्याऽवधारणीयमात्मतत्त्वं सांख्यम्, तद्विषयबुद्धिस्सांख्यधीः। **नित्यात्मगोचरे**ति तद्विवरणम्। एवमत्र असङ्गकर्मेहाशब्देनापि योगशब्दार्थविवरणादपौनरुक्त्यम्। सांख्ययोगयोर्धीः–सांख्ययोगधीः। **स्थितधीः**– स्थितप्रज्ञता, ज्ञाननिष्ठेत्यर्थः। सा साध्यत्वेन लक्ष्यं यस्यास्सा तथोक्ता। **तन्मोहशान्तये**– उक्तप्रकारस्य अर्जुनस्य देहात्मादिभ्रमनिवृत्त्यर्थम्। एवं द्वितीयाध्यायोक्तस्य प्रपञ्चनरूपतया षष्ठान्तानां चतुर्णामेकपेटिकात्वम्। एकीकरणार्थं **तृतीयारम्भे**ऽनुभाषितम्––*तदेवं मुमुक्षुभिः प्राप्यतया वेदान्तोदितनिरस्तनिखिलाविद्यादिदोषगन्धानवधिकातिशयासंख्येयकल्याणगुणगणपरब्रह्मपुरुषोत्तमप्राप्त्युपायभूतवेदनोपासनध्यानादिशब्दवाच्यां तदैकान्तिकात्यन्तिकभक्तिं वक्तुं तदङ्गभूतं *य आत्मा अपहतपाप्मा (छा. ८. ९. १) इत्यादिप्रजापतिवाक्योदितं प्राप्तुरात्मनो याथात्म्यदर्शनं तन्नित्यताज्ञानपूर्वकासङ्गकर्मनिष्पाद्यज्ञानयोगसाध्यमुक्तम्–इत्यारभ्य *अतःपरमध्यायचतुष्टयेन इदमेव प्राप्तुः प्रत्यगात्मनो दर्शनं ससाधनं प्रपञ्चयति–इति ॥ ६ ॥

**असक्त्या लोकरक्षायै गुणेष्वारोप्य कर्तृताम्। सर्वेश्वरे वा न्यस्योक्ता तृतीये कर्मकार्यता ॥ ७ ॥**

**असक्त्या**––परमपुरुषप्रीतिव्यतिरिक्तस्वर्गादिफलसंगत्यागपूर्वकमित्यर्थः। **लोकरक्षायै**––अनुविधेयानुष्ठानस्य कृत्स्नविदस्स्वस्यानुष्ठानानुसन्धानेनाकृत्स्नविदशिष्टलोकस्य निष्प्रमादलुण्टाकरहितघण्टापथप्रवर्तनार्थमित्यर्थः। एतेन लोकसंग्रहशब्दो (गी. ३. २०) व्याख्यातः। एवं लोकरक्षणार्थं प्रवृत्तेरन्ततः स्वरक्षापर्यन्तत्वं **भाष्योक्तम्** *अन्यथा लोकनाशजनितं पापं ज्ञानयोगादप्येनं प्राच्यावयेदिति। **गुणेषु**–सत्त्वरजस्तमस्संज्ञकेषु प्रकृतिगुणेष्वित्यर्थः। **आरोप्य कर्तृताम्**–स्वस्य देशकालावस्थादिनियतविषयज्ञानचिकीर्षाप्रयत्नाश्रयत्वलक्षणां कर्तृतां गुणप्रयुक्ततया अनुसन्धायेत्यर्थः। तथा च **भाष्यम्**–*गुणेषु कर्तृत्वानुसन्धानं चेदमेव; आत्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वम्; अपि तु गुणसंपर्ककृतमिति प्राप्ताप्राप्तविवेकेन गुणकृतमित्यनुसन्धानम् (३. २९) इति। *मयि सर्वाणि कर्माणि(३. ३०) इत्यत्र असच्छब्दाभिप्रेतं व्यनक्ति–**सर्वेश्वरे वा न्यस्ये**ति। गुणानां तदाश्रयस्य त्रिगुणद्रव्यस्य तत्संसृष्टस्य वियुक्तस्य च जीवस्य नियन्तरि भगवति तस्यास्तन्मूलत्वभावनया निवेश्येत्यभिप्रायः। **सूत्रकारश्च** *कर्ता शास्त्रार्थवत्त्वात् (२.३.३३) इत्यादिभिरात्मनः कर्तृत्वमुपपाद्य अनन्तरं तस्य परमात्माधीनत्वं *परात्तु तच्छ्रुतेः (२.३.४०) इत्याह। सर्वेश्वरे कर्तृत्वानुसन्धानप्रकारश्चैवं भाषितः–*इदानीमात्मनां परमपुरुषशरीरतया तन्नियाम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्वात्मभूते गुणकृतं च कर्तृत्वमारोप्य कर्मकर्तव्यतोच्यते (गी. ३. ३०) इति। पिण्डितार्थश्च दर्शितः *स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैस्स्वाराधनैकप्रयोजनाय परमपुरुषस्सर्वशेषी सर्वेश्वरस्स्वयमेव स्वकर्माणि कारयति (३. ३०) इत्यादिना ॥

**प्रसङ्गात्स्वस्वभावोक्तिः कर्मणोऽकर्मताऽस्य च। भेदाज्ञानस्य माहात्म्यं चतुर्थाध्याय उच्यते ॥ ८ ॥**

स्वशब्देनावतीर्णावस्थो भगवानिह विवक्षितः, तस्य **स्वभावः**–स्वासाधारणो भावः। **स्वस्वभावोक्तिरुच्यत** इति ओदनपाकः पच्यत इतिवत्। क्रियत इत्यर्थः। **कर्मणोऽकर्मता**–*कर्मण्यकर्म यः पश्येत् (गी.४.१८) इत्यादिभिरुक्ता; अकर्मशब्दोऽत्र तदन्यवृत्त्या कर्मयोगासन्नात्मज्ञानविषयः। अस्य च भेदाः–*दैवमेवापरे यज्ञम् (४. २५) इत्यादिनोक्ताः देवार्चनेन्द्रियनिरोधप्राणायामयागदानहोमतपस्तीर्थसेवास्वाध्यायतदर्थाभ्यासादिरूपा वर्णाश्रमधर्मेतिकर्तव्यताकाः, यथाज्ञानं यथाशक्ति यथारुचि प्रधानतया परिगृहीताः कर्मयोगावान्तरविशेषा इत्यर्थः। **ज्ञानस्य माहात्म्यम्**–

* श्रेयान् द्रव्यमयाद्यज्ञात् (४. ३३) इत्युक्तं प्राधान्यम् । अयं च श्लोकः तृतीयसंगतिपूर्वकं **चतुर्थारम्भे** व्याख्यातः— * तृतीयेऽध्याये प्रकृतिसंसृष्टस्य मुमुक्षोस्सहसा ज्ञानयोगेऽनधिकारात्कर्मयोग एव कार्यः, ज्ञानयोगाधिकारिणोऽपि अकर्तृत्वानुसन्धानपूर्वककर्मयोग एव श्रेयानिति सहेतुकमुक्तम्, [वि]शिष्टतया व्यपदेश्यस्य तु विशेषतः कर्मयोग एव कार्य इति चोक्तम्, चतुर्थेन इदानीमस्यैव कर्मयोगस्य निखिलजगदुद्धारणाय मन्वन्तरादावेवोपदिष्टतया कर्तव्यतां द्रढयित्वा, अन्तर्गतज्ञानतयाऽस्यैव ज्ञानयोगाकारतां प्रदर्श्य, कर्मयोगस्वरूपं तद्भेदाः, कर्मयोगे ज्ञानांशस्यैव प्राधान्यं चोच्यते; प्रसंगाच्च भगवदवतारयाथात्म्यमुच्यत इति । ईदृशं चावतारयाथार्थ्यमत्र निरमन्थि, निखिलहेयप्रत्यनीककल्याणैकतानस्यापि भगवतो जन्म नेन्द्रजालवन्मिथ्या, अपि तु सत्यम्, अवतरंश्च भगवानसदादिवन्न ज्ञानसंकोचादिमान् भवति, किंतु अजत्वाव्ययत्वसर्वेश्वरत्वादिकं सर्वं पारमेश्वरं स्वभावमजहदेव अवतरति; न चावतारविग्रहोऽप्यस्य गुणत्रयमयः प्राकृतः, प्रत्युत अप्राकृतशुद्धसत्त्वमयः; नचास्य जन्म पुण्यापुण्यरूपेण कर्मणा, अपि तु स्वेच्छयैव; नवा कर्मविपाककाले अस्य जन्म, अपि तु धर्मग्लान्यधर्मोत्थानकाले; नापि भगवज्जन्मनः सुखदुःखमिश्राणि फलानि, अपि तर्हि साधुपरित्राणदुष्कृद्विनाशनधर्मसंस्थापनादीनीति; स्वरूपतः प्रकारतो द्रव्यतः कारणतः कालतः प्रयोजनतश्च दिव्यत्वम्, एवं ज्ञानवतश्चैकस्मिन्नेव जन्मनि उपायपूर्त्याऽनन्तरजन्मप्रतिषेधेन भगवत्प्राप्तिर्गीयते * जन्म कर्म च मे दिव्यम् (४. ९) इत्यादिना । अत एव हि प्राचेतसपराशरपाराशर्यशुकशौनकादयः परमर्षयः प्रायस्तत्रैव निष्ठां भूयसीमाद्रियन्त इति ॥ ८ ॥

**कर्मयोगस्य सौकर्यं शैघ्र्यं काश्चन तद्विधाः । ब्रह्मज्ञानप्रकारश्च पञ्चमाध्याय उच्यते ॥ ९ ॥**

तृतीयचतुर्थाभ्यां यथांशं संगतिप्रदर्शनपूर्वकमयं श्लोकः **पञ्चमारम्भे** व्याख्यातः—* चतुर्थेऽध्याये कर्मयोगस्य ज्ञानाकारतापूर्वकस्वरूपभेदः, ज्ञानांशस्य च प्राधान्यमुक्तम् । ज्ञानयोगाधिकारिणोऽपि कर्मयोगस्यान्तर्गतात्मज्ञानत्वादप्रमादत्वात्सुकरत्वान्निरपेक्षत्वाच्च ज्यायस्त्वं तृतीय एवोक्तम् । इदानीं कर्मयोगस्यात्मप्राप्तिसाधनत्वे ज्ञाननिष्ठायाश्शैघ्र्यं कर्मयोगान्तर्गताकर्तृत्वानुसन्धानप्रकारं च प्रतिपाद्य तन्मूलं ज्ञानं च विशोध्यत इति । सौकर्यस्यात्रानुद्धरणं पूर्वोक्तानुवादताज्ञापनार्थम् । **सौकर्य**शब्देनात्र * सुखं बन्धात्प्रमुच्यते (५. ३) इत्यस्य हेतुर्दर्शितः । शैघ्र्यं तु * योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति (५. ६) इत्युक्तम् । अत्र विधाशब्द इतिकर्तव्यतापरः, तथा खलु * नैव किंचित्करोमि (५. ८) इत्यादेरधिष्ठिका *यतस्सौकर्याच्छैघ्र्याच्च कर्मयोग एव श्रेयानतस्तदपेक्षितं शृण्विति । अकर्तृत्वानुसन्धानप्रकारशब्दोऽप्येतत्परः । ब्रह्मशब्दोऽत्र ब्रह्मसमानाकारशुद्धात्मविषयः । ज्ञानशब्दश्चात्र समदर्शनरूपज्ञानविपाकविश्रान्तः । प्रकारशब्दस्तु तद्धेतुभूतप्रकारार्थः । अत एव हि * येन प्रकारेणावस्थितस्य कर्मयोगिनस्समदर्शनरूपो ज्ञानविपाको भवति, तं प्रकारमुपदिशतीत्युक्त्वा * न प्रहृष्येत्प्रियं प्राप्य (५. २०) इत्यादिकमवतारितम् । षष्ठारम्भस्त्वेवं संगमितः * उक्तः कर्मयोगस्सपरिकरः, इदानीं ज्ञानयोगकर्मयोगसाध्यात्मावलोकनरूपयोगाभ्यासविधिरुच्यते, तत्र कर्मयोगस्य निरपेक्षयोगसाधनत्वं द्रढयितुं ज्ञानाकारः कर्मयोगो योगशिरस्कोऽनूद्यत इति । एतेन * योगी युञ्जीत (६. १०) इत्यतः पूर्वस्य ग्रन्थस्यानुवादरूपत्वात् **संग्रहे** नोपन्यास इति व्यञ्जितम् ॥ ९ ॥

**योगाभ्यासविधिर्योगी चतुर्धा योगसाधनम् । योगसिद्धिस्स्वयोगस्य पारम्यं षष्ठ उच्यते ॥ १० ॥**

ननु अत्र पञ्चार्थास्संगृहीताः भाष्ये तु कथमेकः ? इत्थम् । * स्पर्शान्कृत्वा बहिर्बाह्यान् (५. २७) इत्यादिना पञ्चमे प्रस्तुतो योगाभ्यासविधिरेवात्र प्रपञ्च्यत इति तत्प्रधानोऽयमध्यायः, तदनुबन्धाः प्रसङ्गादन्ये प्रतिपाद्यन्त इति ।

एतेनाध्यायान्तरेष्वप्यनेकानुबन्ध एकैकार्थः प्रधानतम इति सूचितम् । तद्यथा—श्रवणाधिकारी, तन्मोहशमनं, कर्मयोगकर्तव्यत्वम्, तदावान्तरभेदः, तदन्तर्गतज्ञानविपाकः, योगाभ्यासविधिः, प्रतिबुद्धप्राधान्यम्, त्रिविधाधिकारवेद्योपादेयविभागः, सप्रका[रो]रको भक्तियोगः, गुणविभूत्यानन्त्यम्, वैश्वरूप्यदर्शनोपायः, भक्त्यारोहक्रमः, विशुद्धक्षेत्रज्ञविज्ञानम्, त्रैगुण्यविशोधनम्, पुरुषोत्तमवैलक्षण्यम्, शास्त्रवश्यत्वम्, शास्त्रीयविवेचनम्, सारोद्धारः इति । अतोऽत्र योगाभ्यासविध्यनुबन्धत्वेन योगिचातुर्विध्यादिप्रदर्शनम् । योगी चतुर्धा—* सर्वभूतस्थमात्मानम् (गी. ६. २९) इत्यादिश्लोकचतुष्टयोदितसमदर्शनचातुर्विध्यात् । तत्र ह्येवं भाष्यम्—* अथ योगविपाकदशा चतुष्प्रकारोच्यत इति । एवं तत्र समदर्शनविपाकक्रमोऽभिप्रेतः, आत्मनां ज्ञानत्वानन्दत्वादिभिरन्योन्यसाम्यदर्शनम्, शुद्धावस्थायामपहतपाप्मत्वादिभिरीश्वरेण साम्यदर्शनम्, परित्यक्तप्राकृतभेदानामसंकुचितज्ञानैकाकारतया ईश्वरेण तदपृथक्सिद्धविशेषणत्वादिभिरन्योन्यं च साम्यदर्शनम्, औपाधिकैः पुत्रादिभिरसंबन्धसाम्यदर्शनं चेति । **योगसाधनम्**—अभ्यासवैराग्यादिकम् । **योगसिद्धिः**—योगभ्रष्टस्यापि प्रत्यवायविरहः; पुण्यलोकाद्यवाप्तिर्विच्छिन्नप्रतिसन्धानाद्यनुरूपविशिष्टकुलोत्पत्तिः अभिक्रमनाशाभावेन क्रमाच्छेषपूरणेनापवर्गाविनाभावः इत्येवंरूपा । **स्वयोगस्य पारम्यम्**—वक्तुर्भगवतो वासुदेवस्य भजनरूपो योगोऽत्र स्वयोगः; तस्य पारम्यं—स्वापेक्षयोत्कृष्टराहित्यम् । एतच्च मध्यमषट्कप्रतिपाद्यमपि तत्प्रस्तावनारूपेण * योगिनामपि सर्वेषामिति प्रथमषट्कान्तिमश्लोकेन दर्शितम् । तथा हि तत्र **भाष्यम्** * तदेवं परविद्याङ्गभूतं प्रजापतिवाक्योदितं प्रत्यगात्मदर्शनमुक्तम्, अथ परविद्यां प्रस्तौतीति ॥ १० ॥

**स्वयाथात्म्यं प्रकृत्याऽस्य तिरोधिश्शरणागतिः । भक्तिभेदः प्रबुद्धस्य श्रैष्ठ्यं सप्तम उच्यते ॥ ११ ॥**

तत्र **भाष्यम्**—* सप्तमे तावदुपास्यभूतपरमपुरुष [स्वरूप] याथात्म्यम्, प्रकृत्या तत्तिरोधानम्, तन्निवृत्तये भगवत्प्रपत्तिः, उपासकविधाभेदो ज्ञानिनश्श्रैष्ठ्यं चोच्यत इति । तत्र प्रकृतिशब्देन * मम माया दुरत्यया (७. १३) इति मायाशब्दो व्याख्यातः । गुणमयीति विशेषणात् सैव हि विवक्षितेति गम्यते । श्रुतावपि * अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः इति प्रस्तुतयोर्मायातद्वतोः * मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् (श्वे. ४. ९) इति स्वयमेव विवरणाच्च । अतो विचित्रसृष्ट्युपकरणवस्तुत्वात् प्रकृताविह मायाशब्दप्रयोग इति भावः । अष्टमारम्भसङ्गतौ चैतच्छ्लोकार्थः स्पष्टमभिहितः—* सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यत्वम्, निखिलचेतनाचेतनवस्तुशेषित्वम्, कारणत्वम्, आधारत्वम्, सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वम्, सर्वनियन्तृत्वम्, सर्वैश्च कल्याणगुणगणैस्तस्यैव परतरत्वम्, सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानम्, अत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निवर्तनम्, सुकृततारतम्येन च प्रतिपत्तिविशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षया चोपासकभेदम्, भगवन्तं प्रेप्सोर्नित्ययुक्ततया एकभक्तितया च अत्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यं दुर्लभत्वं च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीदिति ॥ ११ ॥

**ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम् । वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ १२ ॥**

अष्टमश्चैवमवतारितः—* इदानीमष्टमे प्रस्तुतान् ज्ञातव्योपादेयभेदान्विविनक्तीति । तत्रैष संग्रहः । **ऐश्वर्यमत्र** इन्द्रप्रजापतिपशुपतिभोगेभ्योऽतिशयितभोगः, **अक्षरयाथात्म्यम्**—विविक्तात्मस्वरूपम्, **वेद्यास्तु** * अक्षरं ब्रह्म परमम्

(८.२) इत्यादिनोक्ताः शुद्धात्मस्वरूपप्रभृतयः, **उपादेयास्तु** तत्तदिष्टफलानुरूपपरमपुरुषचिन्तनान्तिमप्रत्ययगतिचिन्तनादयः, त एव **भावाः**—पदार्थाः, तेषां **भेदः**—तत्तदधिकारानुरूपो विशेषः ॥ १२ ॥

**स्वमाहात्म्यं मनुष्यत्वे परत्वं च महात्मनाम् । विशेषो नवमे योगो भक्तिरूपः प्रकीर्तितः ॥ १३ ॥**

**स्वमाहात्म्यम्**—*मया ततमिदं सर्वम् (९. ४) इत्यादिभिः शोधितम् । *अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ (७. २४) इति परत्वस्य मनुष्यदशायामप्यव्ययत्वमुक्तम् । प्रस्तुतावतारविवक्षया मनुष्यावस्थत्वोक्तिः । तन्मुखेन सर्वेष्वप्यवतारेषु अव्ययः परमो भाव उपलिलक्षयिषितः । उक्तं च **श्रीवत्सचिह्नमिश्रैः**—*परो वा व्यूहो वा विभव उत वाऽर्चावतरणो भवन्वाऽन्तर्यामी वरवरद यो यो भवसि वै । स स त्वं सन्नैशान्वरगुणगणान् बिभ्रदखिलान् भजद्भ्यो भास्येवं सततमितरेभ्यस्त्वितरथा ॥ (व. स्त. १८) इति । *महात्मानस्तु मां पार्थेत्यादिना (९.१३) महात्मनां विशेषो विशोधितः । अत्र भक्तिरूपस्य योगस्यैव प्राधान्यं **भाष्योक्तम्**—*उपासकभेदनिबन्धना विशेषाः प्रतिपादिताः, इदानीमुपास्यस्य परमपुरुषस्य माहात्म्यं ज्ञानिनां विशेषं च विशोध्य भक्तिरूपस्योपासनस्य स्वरूपमुच्यते इति ॥ १३ ॥

**स्वकल्याणगुणानन्त्यकृत्स्नस्वाधीनतामतिः । भक्त्युत्पत्तिविवृद्ध्यर्था विस्तीर्णा दशमोदिता ॥ १४ ॥**

अत्र नवमसंगतिपूर्वकं **भाष्यम्**—*भक्तियोगस्सपरिकर उक्तः, इदानीं भक्त्युत्पत्तये तद्विवृद्धये च भगवतो निरङ्कुशैश्वर्यादिकल्याणगुणानन्त्यं कृत्स्नस्य जगतस्तच्छरीरतया तदात्मकत्वेन तत्प्रवर्त्यत्वं च प्रपंच्यत इति । **एकादशारम्भे** च भाषितम् *एवं भक्तियोगनिष्पत्तये तद्विवृद्धये च सकलेतरविलक्षणेन स्वाभाविकेन भगवदसाधारणेन कल्याणगुणगणेन सह भगवतस्सर्वात्मत्वं, तत एव तद्व्यतिरिक्तस्य कृत्स्नस्य चिदचिदात्मकस्य वस्तुजातस्य तच्छरीरतया तदायत्तस्वरूपस्थितिप्रवृत्तित्वं चोक्तम् । तमेतं भगवदसाधारणं स्वभावं कृत्स्नस्य तदायत्तस्वरूपस्थितिप्रवृत्तितां च भगवत्सकाशादुपश्रुत्य एवमेवेति निश्चित्य तथाभूतं भगवन्तं साक्षात्कर्तुकामोऽर्जुन उवाचेति ॥ १४ ॥

**एकादशे स्वयाथात्म्यसाक्षात्कारावलोकनम् । दत्तमुक्तं विदिप्राप्त्योर्भक्त्येकोपायता तथा ॥ १५ ॥**

साक्षात्कारहेतुभूतमवलोकनं **साक्षात्कारावलोकनम्**, अवलोक्यतेऽनेनेत्यवलोकनमिह दिव्यं चक्षुः । **विदिप्राप्त्योरिति** दर्शनस्याप्युपलक्षणम् । तथा हि गीयते—*भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ (११. ५४) इति । अयं तु संग्रहो **द्वादशारम्भे** सङ्गतिं विवक्षद्भिर्व्याख्यातः—*भक्तियोगनिष्ठानां प्राप्यभूतस्य परस्य ब्रह्मणो भगवतो नारायणस्य निरङ्कुशैश्वर्यं साक्षात्कर्तुकामायार्जुनायानवधिकातिशयकारुण्यौदार्यसौशील्यादिगुणसागरेण सत्यसङ्कल्पेन भगवता स्वैश्वर्यं यथावदवस्थितं दर्शितम्, उक्तं च तत्त्वतो भगवज्ज्ञानदर्शनप्राप्तीनामैकान्तिकात्यन्तिकभगवद्भक्त्येकलभ्यत्वम् । इति ॥ १५ ॥

**भक्तेश्श्रैष्ठ्यमुपायोक्तिरशक्तस्यात्मनिष्ठता । तत्प्रकारास्त्वतिप्रीतिर्भक्ते द्वादश उच्यते ॥ १६ ॥**

अत्र च **भाष्यम्**—*अनन्तरमात्मप्राप्तिसाधनभूतादात्मोपासनाद्भक्तिरूपस्य भगवदुपासनस्य स्वसाध्यनिष्पादने शैघ्र्यात्सुसुखोपादानत्वाच्च श्रैष्ठ्यं भगवदुपासनोपायश्च तदशक्तस्याक्षरनिष्ठता तदपेक्षिताश्चोच्यन्त इति । **अत्रातिप्रीतिर्भक्ते** इत्यस्योपादानमुपसंहारमात्रताव्यञ्जनार्थम् । **उपायोक्तिः**—*अथ चित्तं समाधातुम् (१२. ९) इत्यादिश्लोकद्वयेन कृता । भगवति चित्तं समाधातुमशक्तस्य भगवद्गुणाभ्यासस्तत्राप्यशक्तस्य प्रीतिपूर्वकभगवदसाधारणकर्मकरणम्, तस्मि-

न्यप्यसमर्थस्यात्मनिष्ठेति क्रमः । **तत्प्रकाराः**—कर्मयोगाद्यपेक्षिताः * अद्वेष्टा सर्वभूतानाम् (१२. १३) इत्यादिनोक्ता उपादेयगुणप्रकाराः । तथाच तत्र भाषितम्—*अनभिसंहितफलकर्मनिष्ठस्योपादेयान् गुणानाह इति । **अतिप्रीतिर्भक्तेः**— * ये तु धर्म्यामृतमिदं यथोक्तम् (१२. २०) इत्यादिना अध्यायान्तिमश्लोकेनोक्ता । तदभिप्रेतं चैवमुक्तम् * [न]अस्मा दात्मनिष्ठाद्भक्तियोगनिष्ठस्य श्रैष्ठ्यं प्रतिपादयन्यथोपक्रममुपसंहरति इति ॥ १६ ॥

**देहस्वरूपमात्माप्तिहेतुरात्मविशोधनम् । बन्धहेतुर्विवेकश्च त्रयोदश उदीर्यते ॥ १७ ॥**

अत्र भाष्यम्—*तत्र तावत्त्रयोदशे देहात्मनोस्स्वरूपं देहयाथात्म्यशोधनं देहवियुक्तात्मप्राप्त्युपायो विविक्तात्मस्वरूप[सं]शोधनं तथाविधस्यात्मनश्चाचित्संबन्धहेतुस्ततो विवेकानुसन्धानप्रकारश्चोच्यत इति । अत्र देहस्वरूपमित्यने- नैवाभिप्रेतं देहात्मनोस्स्वरूपमिति देहयाथात्म्यशोधनमिति च विवृतम् । **आत्माप्तिहेतुः** * अमानित्वम् (१३. ७) इत्यादिभिरुक्तः । **आत्मविशोधनं**—* ज्ञेयं यत्तत्प्रवक्ष्यामि (१३. १२) इत्युपक्रम्य कृतम् । **बन्धहेतुस्तु** * कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु (१३. २१) इत्युक्तः । * ध्यानेनात्मनि पश्यन्ति (१३. २४) इत्यादिना विवेकानुसन्धानप्रकारो यथाधिकारं दर्शितः ॥ १७ ॥

**गुणबन्धविधा तेषां कर्तृत्वं तन्निवर्तनम् । गतित्रयस्वमूलत्वं चतुर्दश उदीर्यते ॥ १८ ॥**

अत्र प्रकृतिविशोधनरूपतया संगतिपूर्वकं भाष्यम्—* त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञाय अमानित्वादिभिर्भगवद्भक्त्यनुगृहीतैर्बन्धान्मुच्यत इत्युक्तम्, तत्र बन्धहेतुः पूर्वपूर्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितम्—* कारणं गुणसंयोगोऽस्य सदसद्योनिजन्मसु (१३. २१) इति । अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यते इति । गुणकर्तृत्वादेरिह भाष्येऽनुक्तिः पूर्ववदेवेति भाव्यम् । सत्त्वं सुखज्ञानसङ्गेन बध्नाति; रजस्तु कर्मसङ्गेन; तमस्तु प्रमादालस्यनिद्राभिरिति बन्धहेतुताप्रकारः । तेषां कर्तृत्वं प्रागुक्तप्रकारेण प्राप्ताप्राप्तविवेकेन तेष्वारोपितम्, तच्चात्र * नान्यं गुणेभ्यः कर्तारम् (१४. १९) इति स्मारितम् । **गुणनिवर्तनप्रकारस्तु** * **मां च यो- ऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥** (१४. २६) इत्यन्तेनोक्तः । अत एवात्र गतित्रयस्वमूलत्वमित्येतत् * ब्रह्मणो हि प्रतिष्ठाऽहम् इत्यध्यायान्तिमश्लोकोक्तमेव संगृह्णाति । तत एव हि तत्रैवं भाषितम् * पूर्वत्र * **दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥** (७. १४) इत्यारभ्य गुणात्ययस्य तत्पूर्वकाक्षरैश्वर्यभगवत्प्राप्तीनां च भगवत्प्रपत्त्येकोपायतायाः प्रतिपादितत्वादेकान्तभगवत्प्रपत्त्येकोपायो गुणात्ययः, तत्पूर्वकब्रह्मभावश्च (१४. २७) इति । ऊर्ध्वं गच्छन्ति (१४. १८) इत्याद्युक्तगतित्रयविवक्षायां तु संग्रहक्रमभङ्गस्स्यात् ॥ १८ ॥

**अचिन्मिश्राद्विशुद्धाच्च चेतनात्पुरुषोत्तमः । व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः ॥ १९ ॥**

अत्र * अचिन्मिश्राद्विशुद्धाच्च इत्यस्य सूचनीयां सङ्गतिं विवृण्वन् क्षराक्षरशब्दव्याख्यानतां व्यनक्ति—* क्षेत्राध्याये क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोस्स्वरूपं विशोध्य विशुद्धस्यापरिच्छिन्नज्ञानैकाकारस्यैव पुरुषस्य प्राकृतगुणसङ्गप्रवाहनिमित्तो देवाद्याकारपरिणतप्रकृतिसंबन्धोऽनादिरित्युक्तम्, अनन्तरे चाध्याये पुरुषस्य कार्यकारणोभयावस्थप्रकृतिसंबन्धो गुणसङ्गमूलो भगवतैव कृत इत्युक्त्वा गुणसङ्गप्रकारं सविस्तरं प्रतिपाद्य गुणसङ्गनिवृत्तिपूर्वकात्मयाथात्म्यावाप्तिश्च भगवद्भक्तिमूलेत्युक्तम् । इदानीं भजनीयस्य भगवतः क्षराक्षरात्मकबद्धमुक्तविभूतिमत्तां विभूतिभूतात्क्षराक्षरपुरुषद्वयान्निखिल-

हेयप्रत्यनीककल्याणैकतानतयात्यन्तोत्कर्षेण विसजातीयस्य भगवतः पुरुषोत्तमत्वं च वक्तुमारभते इति । अत्र व्यापन-भरणस्वाम्यानि * यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः (१५. १७) इति प्रतिपादितानि । एवं प्राधान्यतश्चिदचिदीश्वररूपतत्त्वत्रयविशोधनं क्रमादध्यायत्रयेण कृतमित्यनुसन्धेयम् ॥ १९ ॥

**देवासुरविभागोक्तिपूर्विका शास्त्रवश्यता । तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥ २० ॥**

अत्र पूर्वोत्तरसमस्तप्रतिष्ठापकष्षोडशाध्यायार्थस्संगृह्यते । एतदभिप्रायेण **भाष्यम्**—* अनन्तरमुक्तस्य कृत्स्नस्यार्थस्य स्थेम्ने शास्त्रवश्यतां वक्तुं शास्त्रवश्यतद्विपरीतयोर्देवासुरसर्गयोः विभागं श्रीभगवानुवाच इति । अत एव सप्तदशमवतारयन्नेवमन्वभाषत * देवासुरविभागोक्तिमुखेन प्राप्यतत्त्वज्ञानं तत्प्राप्त्युपायज्ञानं च वेदैकमूलमित्युक्तम् इति । अत्र शास्त्रवश्यता—* तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इति अध्यायान्तिमश्लोकेनोक्ता ॥ २० ॥

**अशास्त्रमासुरं कृत्स्नं शास्त्रीयं गुणतः पृथक् । लक्षणं शास्त्रसिद्धस्य त्रिधा सप्तदशोदितम् ॥ २१ ॥**

अत्र **भाष्यम्**—* इदानीमशास्त्रविहितस्यासुरत्वेन अफलत्वं शास्त्रविहितस्य च गुणतस्त्रैविध्यं शास्त्रसिद्धस्य लक्षणं चोच्यते इति । शास्त्रं यस्य विधायकत्वेन नास्ति तदशास्त्रमित्यभिप्रायेणाशास्त्रविहितस्येत्युक्तम् । * ओं तत्सदिति (१७. २३) शास्त्रसिद्धस्य त्रिविधं लक्षणमुक्तम् ॥ २१ ॥

**ईश्वरे कर्तृताबुद्धिस्सत्त्वोपादेयताऽन्तिमे । स्वकर्मपरिणामश्च शास्त्रसारार्थ उच्यते ॥ २२ ॥**

तदेतत्पूर्वाध्यायसंगतिप्रदर्शनपूर्वकं व्याचष्टे—* अतीतेनाध्यायद्वयेन अभ्युदयनिश्श्रेयससाधनभूतं वैदिकमेव यज्ञतपोदानादिकं कर्म, नान्यत्, वैदिकस्य च कर्मणस्सामान्यलक्षणं प्रणवान्वयः, तत्र मोक्षाभ्युदयसाधनयोर्भेदस्तत्-सच्छब्दनिर्देश्यत्वेन, मोक्षसाधनं च कर्म फलाभिसन्धिरहितं यज्ञादिकम्, तदारम्भश्च सत्त्वोद्रेकाद्भवति, [सत्त्वोद्रेकश्च] सत्त्ववृद्धिश्च सात्त्विकाहारसेवयेत्युक्तम् । अनन्तरं मोक्षसाधनतया निर्दिष्टयोस्त्यागसंन्यासयोरैक्यम्, त्यागस्य च स्वरूपं भगवति सर्वेश्वरे[च] सर्वकर्मणां कर्तृत्वानुसन्धानं, सत्त्वरजस्तमसां कार्यवर्णनेन सत्त्वगुणस्यावश्योपादेयत्वं, स्ववर्णोचितानां कर्मणां परमपुरुषाराधनभूतानां परमपुरुषप्राप्तिनिर्वर्तनप्रकारः, कृत्स्नस्य च गीताशास्त्रस्य सारार्थो भक्तियोगः इत्येते प्रतिपाद्यन्ते इति । अत्र त्यागसन्न्यासशब्दावेकार्थाविति भगवदुक्तेनोत्तरेण स्थापितम् । **भाष्ये सर्वेश्वरे** कर्तृत्वानुसन्धानं च * दैवं चैवात्र पञ्चमम् (१८.१४) इत्यत्रैव दर्शितम्—* अत्र कर्महेतुकलापे, दैवं पञ्चमम्—परमात्माऽन्तर्यामी कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । उक्तं हि * सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च (१५. १५) इति । वक्ष्यति च * ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ (१८. ६१) इति । परमात्मायत्तं च जीवात्मनः कर्तृत्वं * परात्तु तच्छ्रुतेः (ब्र. २. ३. ४०) इत्युपपादितम् । नन्वेवं परमात्मायत्ते जीवात्मनः कर्तृत्वे जीवात्मा कर्मण्यनियोज्यो भवतीति विधिनिषेधशास्त्राण्यनर्थकानि स्युः । इदमपि चोद्यं **सूत्रकारेणैव** परिहृतम् * कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः (२. ३. ४१) इति । एतदुक्तं भवति—परमात्मना दत्तैस्तदाधारैश्च करणकलेबरादिभिस्तदाहितशक्तिभिः स्वयं च जीवात्मा तदाधारस्तदाहितशक्तिस्सन् कर्मनिष्पत्तये स्वेच्छया करणाद्यधिष्ठानाकारं प्रयत्नं चारभते । तदन्तरवस्थितः परमात्मा स्वानुमतिदानेन तं प्रवर्तयतीति जीवस्यापि स्वबुद्ध्यैव प्रवृत्तिहेतु-

यद्वा बहूनां हेतुत्वं विधिनिषेधभाक्त्वं चेतीति ।
त्वमस्ति । यथा गुरुतरशिलामहीरुहादिचलनादिफलप्रवृत्तिषु बहुपुरुषसाध्यासु बहूनां हेतुत्वं विधिनिषेधभाक्त्वं चेतीति ।
तत्र शास्त्रसारार्थः * सर्वगुह्यतममित्यादिना सादरं संमुखीकृत्य * मन्मना भव मद्भक्तः, * सर्वधर्मान् परित्यज्य (१८.६६)
इति श्लोकद्वयेन शिष्टः । चरमश्लोकार्थश्च **तात्पर्यचन्द्रिकायां निक्षेपरक्षायां** चास्माभिः यथाभाष्यं यथासंप्रदायं च
समस्तपरपक्षप्रतिक्षेपपूर्वकमुपपादितः । तत्रायमस्मदीयसंग्रहः * सुदुष्करेण शोचेद्यो येन येनेष्टहेतुना । स स तस्याह-
मेवेति चरमश्लोकसंग्रहः ॥ इति । सारार्थो भक्तियोग इति **भाष्यं** त्वङ्गाधिकारे प्रपत्तिं प्रत्यपि भक्तेरङ्गित्वेन प्राधा-
न्यात् ॥ २२ ॥

**कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम् । ज्ञानयोगो जितस्वान्तैः परिशुद्धात्मनि स्थितिः ॥ २३ ॥**

अथ दशभिश्श्लोकैस्सुखग्रहणाय कर्मयोगज्ञानयोगभक्तियोगादीनां स्वरूपादिकं विविनक्ति । तत्र कर्मयोगस्य
लक्षणं पूर्वमेव दर्शितमिति कृत्वा तत्तदधिकारिणां ज्ञानशक्तियोग्यतानुगुण्येन यथाधिकारं परिग्रहार्थं चतुर्थीकानवा-
न्तरभेदाननुक्तानपि सर्वानादिशब्देन संगृह्णन्नुदाहरति । आफलोदयं सादरं निरन्तरपरिग्रहोऽत्र सेवनम् ॥ अथ तत्सा-
ध्यस्य ज्ञानयोगस्याधिकारिप्रदर्शनपूर्वकं लक्षणमाह । निरन्तरचिन्तनरूपेणेति शेषः । तेन तत्फलतदुपायज्ञानाभ्यां
व्यवच्छेदः ॥ २३ ॥

**भक्तियोगः परैकान्तप्रीत्या ध्यानादिषु स्थितिः । त्रयाणामपि योगानां त्रिभिरन्योन्यसङ्गमः ॥ २४ ॥**

अथान्तरङ्गैस्सह भक्तियोगं लक्षयति । परस्मिन् ब्रह्मण्येकान्तेन प्रीतिः परैकान्तप्रीतिः । तेन महनीयविषये
प्रीतिः भक्तिरिति लक्षणं सूचितम् । * स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते (लै. उ. ९. १९) इत्याद्यनुसारेण लक्ष्य-
स्वरूपं ध्यानशब्देनोक्तम् । आदिशब्देनार्चनप्रणामाद्यन्तरङ्गवर्गसंग्रहः । उक्तं च **वेदार्थसंग्रहे** * अशेषजगद्धितानु-
शासनश्रुतिनिकरशिरसि समधिगतोऽयमर्थः—जीवपरयाथात्म्यज्ञानपूर्वकवर्णाश्रमधर्मेतिकर्तव्यताकपरमपुरुषचरणयुगलध्याना-
र्चनप्रणामादिरत्यर्थप्रियस्तत्प्राप्तिफलः । इति । ननु—कर्मयोगेऽप्यात्मज्ञानमाराध्यप्रीतिश्चानुवर्तते, ज्ञानयोगेऽप्यन्तःकरण-
शुद्ध्यर्थं नियतं कर्म न त्याज्यम्, तदाराध्येश्वरभक्तिश्च । एवं भक्तियोगेऽपि तदितरानुवृत्तिस्सिद्धा ; अतो विभागा-
नुपपत्तिरित्यत्राह । प्रधानभूते कस्मिंश्चित्क्षीरशर्करान्यायेन गुणतया इतरानुप्रवेशो न विभागभञ्जक इति भावः ॥२४॥

**नित्यनैमित्तिकानां च परराधनरूपिणाम् । आत्मदृष्टेस्त्रयोऽप्येते योगद्वारेण साधकाः ॥ २५ ॥**

नन्वेवं परैकान्तप्रीतिस्त्रिष्वपि समाना, । ऐकान्त्यं चानन्यदेवताकत्वपर्यन्तम् । यथोक्तं **मोक्षधर्मे** * ब्रह्माणं
शितिकण्ठं च याश्चान्या देवतास्स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥ (३५०. ३६) इति । **आश्वमेधिके**
च * अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः । मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ॥ (१०४. ९१) इति । तत-
श्चाग्नीन्द्रादिनानादेवतासंकीर्णानां वर्णाश्रमधर्माणामैकान्त्यविरोधात् त्रिष्वपि योगेषु तत्परित्यागः प्राप्त इत्यत्राह । अत्र त्रिभि-
स्संगम इत्यर्थतो बुद्ध्या विभज्यान्वेतव्य[:]म् । अयमभिप्रायः—*नियतस्य (गी. १८. ७) *यतः प्रवृत्तिः (गी. १८. ४६)
* आचारप्रभवः (भा. आनु. २५४. १३९) * वर्णाश्रमाचारवता (वि. ३. ८. ९) इत्यादिभिर्वर्णाश्रमधर्मेतिकर्तव्यता-
कत्वसिद्धेः, अग्नीन्द्रादिशब्दानामपि प्रतर्दनविद्यान्यायेन तच्छरीरकपरमात्मपर्यन्तत्वानुसन्धानात् * साक्षादप्यविरोधं
जैमिनिः (ब्र. १. २. २९) इति न्यायेन यज्ञाग्रहराध्यायोक्त (भा. मो. ३४९) प्रक्रियया च साक्षात्प्रतिपादकत्वेन वा
तत्तत्कर्मणामपि परमपुरुषाराधनत्वसंभवात्, तदनुष्ठातुरनन्याराधकत्वसिद्धेरैकान्त्यं प्रतिष्ठितमिति । एतेन कर्मयोगेऽपि

नित्यनैमित्तिकानामितिकर्तव्यतात्वं सूचितम् । तथा * सर्वेऽप्येते यज्ञविदः (४. ३०) इति श्लोके भाष्यम्—* [दैव] द्रव्ययज्ञप्रभृतिप्राणायामपर्यन्तेषु कर्मयोगभेदेषु स्वसमीहितेषु प्रवृत्ता एते सर्वे *सह यज्ञैः प्रजास्सृष्ट्वा (३. १०) इत्यभिहितमहायज्ञपूर्वकनित्यनैमित्तिककर्मरूपयज्ञविदस्तन्निष्ठास्तत एव क्षपितकल्मषा यज्ञशिष्टामृतेन शरीरधारणं कुर्वन्त एव कर्मयोगे व्यापृतास्सनातनं ब्रह्म यान्तीति । * एवं बहुविधा यज्ञाः (४. ३२) इत्यत्र चोक्तम्—* एवं हि बहुप्रकाराः कर्मयोगाः ब्रह्मणो मुखे वितताः—आत्मयाथात्म्यावाप्तिसाधनतया स्थिताः । तानुक्तलक्षणानुक्तभेदान्कर्मयोगान् सर्वान् कर्मजान् विद्धि—अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मजान् विद्धीति । * भोक्तारं यज्ञतपसाम् (५. २९) इति श्लोकमवतारयंश्चैवमाह—* उक्तस्य नित्यनैमित्तिककर्मेतिकर्तव्यताकस्य कर्मयोगस्य योगशिरस्कस्य सुशकतामाहेति ॥

अथ त्रयाणां योगानां परभक्तिजनने प्रत्यगात्मदर्शनरूपमवान्तरव्यापारं सहेतुकमाह—**आत्मेति** ॥ योगोऽत्र समाधिरूपमन्तःकरणैकाग्र्यम्, तत्साध्यसाक्षात्कारो दृष्टिः । ननु यद्यपि कर्मयोगस्य ज्ञानयोगव्यवधानमन्तरेणापि आत्मावलोकनसाधनत्वं पूर्वमेवोक्तम्; तथाऽपि भक्तियोगस्य तत्साधकत्वमयुक्तम्, तस्यात्मावलोकनपूर्वकत्वादिति चेत्, नैवम्; भक्तिनिष्ठाया एव पर्वभेदेन सर्वोपपत्तेः ज्ञानदर्शनप्राप्तीनामविशेषेण भक्तिसाध्यत्वमुच्यते । तच्च पर्वभेदमन्तरेण नोपपद्यते । अत एव ह्यात्मावलोकनानन्तरं * मद्भक्तिं लभते पराम् (१८. ५४) इति परशब्देन विशेष्यते । अत आत्मावलोकनरहितस्याप्यद्यतनभक्तानामिव स्तुतिनमस्कारकीर्तनादिनिष्ठया सेवारूपत्वादभिव्यक्तया भक्तिशब्दाभिलप्यया आत्मावलोकनमुपपद्यते । दर्शितश्च परावरभक्तिविभागो **वेदार्थसंग्रहे**—* सोऽयं परब्रह्मभूतः पुरुषोत्तमः निरतिशयपुण्यसञ्चयक्षीणाशेषजन्मोपचितपापराशेः परमपुरुषचरणारविन्दशरणागतिजनिततदाभिमुख्यस्य सदाचार्योपदेशोपबृंहितशास्त्राधिगततत्त्वयाथात्म्यावबोधपूर्वकाहरहरुपचीयमानशमदमतपश्शौचक्षमार्जवभयाभयस्थानविवेकदयाहिंसाद्यात्मगुणोपेतस्य वर्णाश्रमोचितपरमपुरुषाराधनवेषनित्यनैमित्तिककर्मोपसंहृतिनिषिद्धपरिहारनिष्ठस्य परमपुरुषचरणारविन्दयुगलन्यस्तात्मात्मीयस्य तद्भक्तिकारितानवरतस्तुतिस्मृतिनमस्कृतियतनकीर्तनगुणश्रवणवचनध्यानार्चनप्रणामादिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्तस्वान्तध्वान्तस्य अनन्यप्रयोजनानवरतनिरतिशयप्रियविशदतमप्रत्यक्षतापन्नानुध्यानरूपभक्त्येकलभ्यः । तदुक्तं परमगुरुभिर्भगवद्यामुनाचार्यपादैः—* उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिकभक्तियोगलभ्यः (आ. सि) इतीति ॥२५॥

**निरस्तनिखिलाज्ञानो दृष्ट्वाऽऽत्मानं परानुगम् । प्रतिलभ्य परां भक्तिं तयैवाप्नोति तत्पदम् ॥ २६ ॥**

एवं यथाधिकारं परिगृहीतैस्त्रिभिरात्मावलोकनसिद्धिद्वारा परभक्त्युत्पादनप्रकारं परभक्तेरेव प्रकृष्टायाः परमप्राप्तिसाधनत्वं च दर्शयति—**निरस्तेति** ॥ उपायविरोधिसर्वाज्ञाननिवृत्तिरिह **निरस्तनिखिलाज्ञान** इत्यनेन विवक्षिता । **परानुगम्**—परानुचरं, परशेषतैकरसमित्यर्थः । यथोच्यते * नायं देवो न मर्त्यो वा न तिर्यक् स्थावरोऽपि वा । ज्ञानानन्दमयस्त्वात्मा शेषो हि परमात्मनः ॥ इति । आह च **सर्वज्ञो मन्त्रराजपदस्तोत्रे**—* दासभूतास्स्वतस्सर्वे ह्यात्मानः परमात्मनः । अतोऽहमपि ते दास इति मत्वा नमाम्यहम् ॥ इति । प्रतिलभ्य—परमात्मसकाशात्प्राप्येत्यर्थः । तयैव—परमभक्तिरूपविपाकापन्नयेति शेषः । अत्र एवकारेण नैरपेक्ष्यमव्यवहितत्वं च सूच्यते । तत्पदं—तच्चरणम्, पद्यत इति व्युत्पत्त्या पदं मुक्तप्राप्यतया सिद्धं परमपुरुषस्याप्राकृतं स्थानम्, स्वरूपं वा । तदेतत् श्लोकद्वयेन गीयते—* ब्रह्मभूतः प्रसन्नात्मा न शोचति नो काङ्क्षति । समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ (१८. ५४, ५५) इति ॥ २६ ॥

ता ॥ *तेषामिति श्लोकस्यार्थ एव *उदारा इत्यनेनापि दृढीक्रियते । ज्ञानिनोऽत्यर्थप्रियत्ववचनादन्येषामपि किञ्चित्प्रियत्वं फलितम्; तदेव *उदारास्सर्वे इति पादेन विशदीकृतम् । तदेकोपायत्वस्य साधारण्यं **मामेवोपासत** इत्यनेन दर्शितम् । उदारशब्दस्यात्र मन्दप्रयोजनोत्कर्षमात्रपरत्वव्युदासाय प्रसिद्ध्यनुरोधेनाह—**वदान्या** इति । अर्थित्वेनावस्थितानां कथं [उदार]वदान्यत्वमित्यत्राह—**ये मत्त** इति । सकलफलप्रदत्वलक्षणं परमौदार्यमेव हि मम सर्वस्वम्; तच्च प्रतिग्रहीतृसापेक्षं तदभावे कथं स्यादित्युक्तं भवति । *मतमिति नपुंसकत्वान्न ज्ञानीत्यनेनान्वयः; मत इति परोक्तपाठस्त्वप्रसिद्धः; तस्मादितिशब्दोऽध्याहृतः । अयमर्थस्त्वय्यन्तसिद्धान्तो भवतु वा मा वा; कृष्णसिद्धान्तस्त्वयमिति भावः । आत्मशब्दस्यात्र बहुप्रमाणविरुद्धत्वान्न तादात्म्यादिविषयत्वम्; तथा सति व्यतिरेकनिर्देशबाधश्च । अतस्तदभिप्रेतमाह—**तदायत्तेति** । शरीरं प्रति धारको ह्यात्मा । प्रियत्वातिशयप्रतिपादनाय सावधारणोऽयमात्मत्वारोपः । अस्मिन्नभिमानमात्रसारे भवत्सिद्धान्ते किं प्रमाणमभिमतमित्याकाङ्क्षायाम् *आस्थित इत्यादिकमुच्यत इत्याह—**कस्मादेवमिति** । हिर्हेतौ । *युक्तात्मेत्याशंसायां क्तः; परमात्मयोगाशंसाविशिष्ट एव आत्मा यस्य सोऽत्र युक्तात्मा; तदेतदभिप्रेत्योक्तं—**मया विनाऽऽत्मधारणासंभावनयेति** । मदनुसन्धानाभावे सति अर्थान्तरानुसन्धानप्रवृत्तेरसमर्थस्वभावतयेत्यर्थः । **आमेवेति**—अयुक्तदशायामसत्त्वमेव हि स्यादिति भावः । **मामेव**—उपायभूतमेव, न तु फलान्तर[रूप]त्वमित्यर्थः । **प्राप्यमिति**—गतिशब्दोऽत्र गन्तव्यपरः । अस्त्वेवं तदायत्तधारणो यथाप्रमाणं ज्ञानी, ततः किमायातं भगवतस्तदायत्तधारणत्वस्येत्यत्राह—**अतस्तेन विनेति** । सहृदयानां मदभिप्रायविदां चैतद्व्यक्तमित्यभिप्रायः । तथा हि *न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः । विद्यते त्रिषु लोकेषु ततोऽस्म्येकान्तितां गतः । नारदैतद्धि ते सत्यं वचनं समुदाहृतम् । नास्य भक्तैः प्रियतरो लोके कश्चन विद्यते ॥ (भा. मो. ३५३. ६५) इति । **ततो ममात्मा हि स** इति—आधारत्वादिविशेषो ह्यात्मलक्षणमिति भावः । ऐश्वर्यादिकामास्सर्व एव मत्स्वरूपस्यातिशयहेतवः; ज्ञानी तु मम स्वरूपसत्ताहेतुरिति स्वभक्तस्तुतिपरः श्लोकः ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥** १९

भा ॥ नाल्पसंख्यासङ्ख्यातानां पुण्यजन्मनां फलमिदम्, यन्मच्छेषतैकरसात्मयाथात्म्यज्ञानपूर्वकं मत्प्रपदनम्; अपि तु बहूनां जन्मनां पुण्यजन्मनामन्ते—अवसाने, वासुदेवशेषतैकरसोऽहं तदायत्तस्वरूपस्थितिप्रवृत्तिश्च, सचासङ्ख्येयैः कल्याणगुणगणैः परतर इति ज्ञानवान्भूत्वा, वासुदेव एव मम परमप्राप्यं प्रापकं च, अन्यदपि यन्मनोरथवर्ति स एव मम तत्सर्वमिति मां प्रपद्यते—मामुपास्ते; स महात्मा—महामनाः सुदुर्लभः—दुर्लभतरो लोके । वासुदेवस्सर्वमित्यस्यायमेवार्थः, *प्रियो हि ज्ञानिनोऽत्यर्थमहम्, *आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिमिति प्रक्रमात् । ज्ञानवांश्चायमुक्तलक्षण एव, अस्यैव पूर्वोक्तज्ञानित्वात्, *भूमिरापः इत्यारभ्य *अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम् (५) इति हि चेतनाचेतनप्रकृतिद्वयस्य परमपुरुषशेषतैकरसतोक्ता; *अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । (७) इत्यारभ्य *ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ (१२)इति प्रकृतिद्वयस्य कार्यकारणोभयावस्थस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वं परमपुरुषस्य च सर्वैः प्रकारैस्सर्वस्मात्परतरत्वमुक्तम्; अतस्स एवात्र ज्ञानीत्युच्यते ॥ १९ ॥

**ता ॥** पुनरप्युक्तज्ञानवत्त्वस्यानेकजन्मसाध्यपुण्यफलत्वेन दुर्लभतरतया ज्ञानिनः श्रैष्ठ्यं दर्शयति—* बहूनामिति श्लोकेन । *ये जन्मकोटिभिस्सिद्धास्तेषामन्तेऽत्र संस्थितिः (पौ. सं) इति **भगवच्छास्त्रं**, *जन्मान्तरसहस्रेषु (इ. स. १७) इत्यादिकां स्मृतिं चानुसन्दधान आह—**नाल्पेति** । * बहूनां जन्मनामित्यत्र न तावद्बहुजन्मसद्भावमात्रं विवक्षितम्, तस्यात्रानुपयुक्तत्वात् । न च बहुजन्ममात्रस्य ज्ञानहेतुत्वमुच्यते; सर्वेषामयत्नतो ज्ञानित्वप्रसङ्गात् । अतः **पुण्यजन्मनाम्** इति विशेषितम् । ईदृशज्ञानवत्त्वमेवंभूतविशिष्टप्रपत्तौ हेतुरिति दर्शयितुं, ज्ञानवतोऽनेकजन्मभ्रमव्युदासाय च **ज्ञानवान् भूत्वेत्युक्तम्** । * वासुदेवस्सर्वमिति सामानाधिकरण्यस्य बाधाध्यासतादात्म्यादिविषयत्वायोगाच्छरीरशरीरिभावादिनिर्वाहादपि प्रकरणविशेषसिद्धस्यार्थस्य ग्राह्यतरत्वात् **परमप्राप्य**मित्यादिकमुक्तम् । लौकिकं धारकादिकमभिप्रेत्याह—**अन्यदपी**त्यादि । * त्वमेव माता च पिता त्वमेव, * माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः (सु. ६) इत्यादिकमपीहाभिप्रेतम् । प्रपत्तेरत्रोपासनाङ्गत्वादाह—**मामुपास्त** इति । ज्ञानिनोऽपि स्वरूपमहत्त्वं प्रमाणविरुद्धम्; पङ्क्तिपावनत्वादिमाहात्म्यं सदपि प्रकृतेऽनपेक्षितम्; तस्माज्ज्ञानविशेषाधीनमाहात्म्यमिह विवक्षितमित्याह—**महामना** इति । फलान्तरपरस्यापि भगवदुपासकस्य दुर्लभत्वात्तद्व्यवच्छेदाय सुशब्द इति दर्शयितुं **दुर्लभतर** इत्युक्तम् । * वासुदेवस्सर्वमिति सामानाधिकरण्यस्य पराभिमतमर्थं प्रतिक्षिपन् स्वोक्तं द्रढयति—**वासुदेव** इति । अत्र ह्युपक्रमः प्राप्यभेदनिबन्धनाधिकारिभेदपरः । प्रकरणविरुद्धः, प्रकरणानुपयुक्तो वाऽर्थः प्रकरणविशेषसिद्धोपयुक्ततमार्थे जागरूकेऽनादरणीय इति भावः । ज्ञानवानित्यत्रापि निर्विशेषादिज्ञानजीवमात्रज्ञानादिव्युदासायाह—**ज्ञानवांश्चाय**मिति । उक्तलक्षणः वासुदेवशेषतैकरसस्वात्मवेदीत्यर्थः । उक्तलक्षणत्वे हेतुमाह—**अस्यैव पूर्वोक्तज्ञानित्वा**दिति । * ज्ञानी च भरतर्षभ (१६) इति पूर्वोक्ते ज्ञानिनि कथमुक्तलक्षणत्वमित्यत्राह—**भूमिराप इत्यारभ्ये**ति । यद्वा पूर्वोक्तज्ञानित्वादित्येकभक्तित्वादिकं विवक्षितम्; * भूमिराप इत्यादिना हेत्वन्तरोक्तिः । **कार्यकारणोभयावस्थस्ये**ति—कार्यत्वकारणत्वरूपोभयावस्थाविशिष्टस्येत्यर्थः । स्वरूपस्थित्यादितादधीन्यं * मयि सर्वं (७), * रसोऽहमित्यादिषु व्यक्तम् । उक्तलक्षणत्वं निगमयति—**अत** इति । **स एवेति**—* वासुदेवशेषतैकरसोऽहमित्यादिनोक्तलक्षण एवेत्यर्थः । उक्तलक्षण एव ज्ञानवानित्यभिधीयत इति दर्शयितुं **ज्ञानीत्युच्यत** इत्युपसंहृतम् ॥ १९ ॥

**भा ॥ तस्य ज्ञानिनो दुर्लभत्वमेवोपपादयति—**

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तंतं नियममास्थाय प्रकृत्या नियतास्स्वया ॥** २०

**भा ॥ सर्व एव हि लौकिकाः पुरुषाः स्वया प्रकृत्या**—[पाप]**वासनया गुणमयभावविषयया नियताः—नित्यान्विताः तैस्तैस्स्ववासनानुरूपैर्गुणमयैरेव कामैः—इच्छाविषयभूतैः हृतमत्स्वरूपविषयज्ञानाः तत्तत्कामसिद्ध्यर्थमन्यदेवताः—मद्व्यतिरिक्ताः केवलेन्द्रादिदेवताः तंतं नियममास्थाय—तत्तद्देवताविशेषमात्रप्रीणनासाधारणं नियममास्थाय, प्रपद्यन्ते—ता एवाश्रित्यार्चयन्ते ॥ २० ॥**

**ता ॥** * कामैस्तैस्तैरित्यादेः, * स्वर्गं यान्ति परन्तपेत्यन्तस्य प्रकृतसङ्गतिमाह—**तस्ये**ति । देवतान्तरफलान्तरसङ्गादिकं प्रतिबन्धकर्मिति भावः । [हृतज्ञाना इत्यत्र] बहुवचनासङ्कोचं * सर्वभूतानि संमोहमिति वक्ष्यमाणं चानुसन्धायोक्तं—**सर्व एव हीति** । **स्वयेति** । प्राचीनस्वकीयानुभवजनितया प्रत्यात्मनियततया तदेकनिष्ठफलप्रसाधिकयेत्यर्थः । वासनाया नियतविषयेच्छाजनकत्वायोक्तं—**गुणमयभावविषयये**ति । एतेन स्वभावपर्यायः प्रकृतिशब्दोऽत्र * कामैस्तैस्तै-

रित्यादिसमभिव्याहारात्तत्तदिच्छाहेतुभूतसहजवासनाविषय इत्यपि निर्व्यूढम्। नियतत्वं नामादृष्टव्यभिचारस्संबन्ध इत्यभिप्रायेणोक्तं **नित्यान्विता** इति। वीप्साभिप्रेतमाह—**स्ववासनानुरूपैरि**ति। *लभते च ततः कामान् (२२) इत्यनन्तराभिधीयमानैकार्थ्यात्कामशब्दोऽत्र कर्मणि व्युत्पन्नः। *हृतज्ञाना इत्यत्र ज्ञानशब्देन पूर्वप्रसक्तमेव ज्ञानं विवक्षितमिति प्रदर्शयितुं—**हृतमत्स्वरूपविषयज्ञाना** इत्युक्तम्। तदेव चान्यदेवताभजनकारणम्। फलकारणयोस्स्वरूपेण निर्दिष्टयोरपि साध्यसाधनभावोऽर्थसिद्ध इति दर्शयितुं **तत्तत्कामसिद्ध्यर्थमि**त्युक्तम्। **तैस्तैः**—तत्तद्देवताभिर्दातुं शक्यैरित्यर्थः। इन्द्रादिदेवतानामपि भगवत्पर्यन्तानुसन्धाने तत्तद्विशेषणविशिष्टस्य भगवत एव तत्तद्देवतात्वादन्यदेवतात्वं तथाविधानुसन्धानराहित्यनिबन्धनमिति ज्ञापनायोक्तं—**मद्व्यतिरिक्ताः केवलेन्द्रादिदेवता** इति। एतेन *कामैस्तैस्तैरित्यादिकमितरभक्तत्रयविषयमिति परोक्तं निरस्तम्। तत्तत्कामार्थमपि निपुणैर्भगवानेव प्रपदनीयः; अत एव हि संगृहीतम्—*ऐकान्त्यं भगवत्येषां समानमधिकारिणाम् (गी. सं. २८) इति। अन्यथा *तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिरिति भावः। **तंतं नियम**मिति—नियमोऽत्र सङ्कल्पविशेषादिः। *श्रद्धयाऽर्चितुमिच्छतीति वक्ष्यमाणवशादत्रापि प्रपत्तेरर्चनाङ्गत्वं दर्शयति—**ता एवाश्रित्यार्चयन्त** इति। विश्वासगर्भफलप्रदत्ववरणपूर्वकं तत्तत्कर्मभिः प्रीणयन्तीत्यर्थः। प्रपत्तिस्वरूपसामर्थ्यादवधारणसिद्धिः। *तदेकोपायता याच्ञा (वि. सं.) इति हि तल्लक्षणम्॥ २०॥

**योयो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति।**
**तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम्॥** २१

**भा॥ ता अपि देवता मदीयास्तनवः *य आदित्ये तिष्ठन्....यमादित्यो न वेद यस्यादित्यश्शरीरम् (बृ. ५.९) इत्यादिश्रुतिभिः प्रतिपादिताः। मदीयास्तनव इत्यजानन्नपि योयो यांयां मदीया [मादित्या]मिन्द्रादिकां तनुं भक्तश्श्रद्धयाऽर्चितुमिच्छति; तस्यतस्याजानतोऽपि मत्तनुविषयैषा श्रद्धेत्यहमनुसन्धाय तामेवाचलां—निर्विघ्नां विदधाम्यहम्॥ २१॥**

**ता॥** एवं देवतान्तरफलान्तरसक्ता अपि तत्तदाराधनतत्फलयोश्शैथिल्ये सति *अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायेन अनर्थहेतुषु निषिद्धेषूपायेषु निमज्जेयुरिति भयात्परमकारुणिकोऽहमेव तत्तदाराधनहेतुश्रद्धाविघ्नशान्तिं तत्फलं च प्रयच्छामीति श्लोकद्वयेनाह—*योय इति। एक एवेश्वरो रामकृष्णाद्यवतारवदादित्यादिविग्रहभाक्, नतु चेतनान्तर[मस्ती]मिति कुदृष्टिमतनिरासायाह—**ता अपी**ति। अयमभिप्रायः—पूर्वश्लोके *प्रपद्यन्तेऽन्यदेवताः (२०) इति निर्देशो न तावदीश्वरासाधारणविग्रहविशेषविषयः, तद्विशिष्टेश्वरविषयो वा भवितुमर्हति, तत्रान्यदेवतात्वव्यपदेशायोगात्, रामकृष्णादिवदेव। ततश्च चेतनान्तरविषयत्वमवश्याभ्युपगमनीयम्। *देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि (२३) इति च पृथग्वक्ष्यते। अतोऽत्र तनुशब्दः पूर्वोत्तरपरामर्शवशाच्चेतनविशेषविषयः इति। सर्वासां चेतनविशेषरूपदेवतानामीश्वरशरीरत्वप्रदर्शनार्थं श्रुतिमुदाहरति—**य आदित्य** इति। नात्र तनुत्वेन भजनं विवक्षितम्, तथा सति प्रतर्दनविद्यादिष्विव परमात्मोपासनत्वप्रसङ्गात्, *नतु मामभिजानन्ति तत्त्वेन (९. २४) इति वक्ष्यमाणत्वाच्चेत्यभिप्रायेणाह—**मदीयास्तनव इत्यजानन्नपी**ति। तर्हि तनुत्वेनात्र निर्देशोऽनुपपन्नो निरर्थकश्च, यांयां देवतामित्येव हि वक्तव्यमित्यत्राह—**तस्यतस्ये**ति। यथा नरपतेरात्मस्वरूपमजानतोऽपि राजशरीरप्रसाधनादिकं कर्तुरन्ततो राजादिनैव फलमिति न्यायसूचनादुपपन्नोऽत्र तनुशब्द इति भावः। जातायाश्श्रद्धाया अचलत्वं प्रतिबन्धकराहित्येनाफललाभं निरन्तरसंतन्यमानत्वमित्यभिप्रायेणोक्तम्—**निर्विघ्ना**मिति॥ २१॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२

भा ॥ स तया—निर्विघ्नया श्रद्धया युक्तस्तस्य—इन्द्रादेराराधनं प्रतीहते । ततो—मत्तनुभूतेन्द्रादिदेवताराधनात्तानेव हि स्वाभिलषितान्कामान्मयैव विहितान्लभते । यद्यप्याराधनकाले आराध्येन्द्रादयो मदीयास्तनवः, तत एव तदर्चनं च मदाराधनमिति न जानाति ; तथाऽपि तस्य वस्तुतो मदाराधनत्वादाराधकाभिलषितमहमेव विदधामि ॥ २२ ॥

ता ॥ *स तयेति श्लोकेऽपि पूर्ववद्वीप्सा भाव्या । *तयेत्यस्य प्रस्तुतोपयुक्ताकारपरामर्शित्वज्ञापनाय **निर्विघ्नयेत्युक्तम्** । स्त्रीलिङ्गेन देवताशब्देन तनुशब्देन च पूर्वनिर्देशेऽपि *तस्येति पुंलिङ्गेन प्रतिनिर्देशो बुद्धिस्थतत्तद्देवपरः । *देवान्देवयजो यान्तीति ह्यनन्तरमुच्यत इत्यभिप्रायेण तस्येन्द्रादेरित्युक्तम् । यद्यपि तस्या इति पदच्छेदश्शक्यः, तथाऽपि राधनमित्यस्योपसर्गरहितस्य आराधने प्रसिद्ध्यभावात्तदनादरः । यद्वा, फलितोक्तिरियं ; राधनमित्येव पदच्छेदः । **तत** इति व्याख्येयनिर्देशः । तद्व्याख्यानम्—**मत्तनुभूतेन्द्रादिदेवताराधना**दिति । अयमभिप्रायः—*तत इतिपदस्येन्द्रादिपरत्वं मन्दम्, *मयैव विहितानिति स्वस्यैव फलदातृत्ववचनात् । ततस्तन्निमित्तमेवात्रापेक्षितम् । अतः *तस्याराधनमीहते इति प्रधानतया प्रस्तुतपरामर्श एवायमिति । *हितानित्यत्र हीत्यव्ययम् । सर्वत्र तच्छब्दनिर्देशात्कामानित्यत्रापि तानिति विशेषणमुचितम् ; भगवतस्समस्ताभिलषितदायित्वसूचनादपेक्षितं च । हितत्ववचनं च प्रकरणविरुद्धम् । *अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसामिति (६. २३) [ए]तन्निन्दाप्रवृत्तत्वादित्यभिप्रायेणोक्तम्—**तानेव हि स्वाभिलषिता**निति । त्वद्विषयज्ञानहीनस्य त्वया फलदानं कथमित्यत्र *मयैवेत्यवधारणाभिप्रेतमाह—**यद्यपी**ति ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३

भा ॥ तेषामल्पमेधसाम्—अल्पबुद्धीनामिन्द्रादिमात्रयाजिनां तदाराधनफलमल्पम्, अन्तवच्च भवति । कुतः ? देवान् देवयजो यान्ति—यत इन्द्रादीन् देवान् तद्याजिनो यान्ति । इन्द्रादयोऽपि हि परिच्छिन्नभोगाः परिमितकालवर्तिनश्च ; ततस्तत्सायुज्यं प्राप्ताः तैस्सह प्रच्यवन्ते । मद्भक्ता अपि तेषामेव कर्मणां मदाराधनरूपतां ज्ञात्वा परिच्छिन्नफलसङ्गं त्यक्त्वा मत्प्रीणनैकप्रयोजनाः मां प्राप्नुवन्ति ; न च पुनर्निवर्तन्ते । *मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते (८. १६) इति हि वक्ष्यते ॥ २३ ॥

ता ॥ यदि भवत्प्रसादात्तेषामपि फलसिद्धिस्तर्हि तत्र को विशेषो भवदुपासकेभ्य इत्यत्रोत्तरम्—*अन्तवत्तु इत्यादि । पूर्वार्धे संभवत्येकवाक्यत्वे वाक्यभेदभ्रमनिरासाय **तेषामल्पमेधसा**मिति सामानाधिकरण्यं दर्शितम् । तेषामिति फलाल्पत्वहेतुपरामर्श इत्याह—**इन्द्रादिमात्रयाजिना**मिति । तत्र हेतुरल्पबुद्धित्वम् । अल्पेष्विन्द्रादिषु तदधीनफलेषु च मेधा बुद्धिर्येषां तेऽल्पमेधसः । अल्पगोचरत्वादल्पा मेधा येषामिति वा । अल्पमेधस्त्वादेव तत्फलस्याप्यल्पत्वं सिद्धमिति कृत्वा **अल्पमन्तवच्च भवती**त्युक्तम् । *देवान् देवयज इत्यत्र देवशब्दो गोबलीवर्दन्यायान्मच्छब्दोक्तभगवद्व्यतिरिक्तदेवपरः अथवा मनुष्यादिसहपठितकर्मवश्यदेवजातिविशेषपर इत्यभिप्रायेण **इन्द्रादीन् देवांस्तद्याजिन**

इत्युक्तम् । कथमिन्द्रादिप्राप्तिः फलस्याल्पास्थिरत्वहेतुरित्यत्राह—**इन्द्रादयोऽपि** हीति । अस्तु तेषामल्पभोगत्वमस्थिरत्वं च; ततः किं तदुपासकस्य भवत्प्रसादाधीनफललाभस्येत्यत्राह—**तत** इति । केवलेन्द्रादियाजिनां तत्तदभिलषितं तत्सायुज्यादिकमेव हि भगवान् प्रयच्छति; सायुज्यं च समानभोगत्वमेव; तत इन्द्रादिभोगस्य परिमितस्वरूपत्वात्परिमितकालवर्तित्वाच्च तत्समानस्तदुपासकभोगोऽपि तथाविध एव भवेदिति भावः । *मामिति निर्दिष्टभगवत्स्वरूपस्य निरतिशयानन्दमयत्वात्तत्साधर्म्यमागतस्यापि निरतिशयभोगत्वं सिद्धम् । **सूत्रं** च *भोगमात्रसाम्यलिङ्गाच्च (४. ४. २१) इति । तन्नित्यत्वाच्च तदुपासकभोगस्यापि नित्यत्वं दर्शयति—**नच पुनर्निवर्तन्त** इति । अत्राभिप्रेतं वक्ष्यमाणवचनेन विशदयति—**मामुपेत्येति** । अत्रापि **सूत्रम्** *अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् (४.४.२२) इति । *मद्भक्ता यान्ति मामपीत्यत्र भगवति फलान्तरार्थिनामपि मोक्षे विश्रमो **नारायणार्यै**रुक्तः—*तथा देवतान्तरभक्तानामपेक्षितार्थलाभ एव फलम्; भगवद्भक्तानां तु न तावन्मात्रं फलम्; किं तु स्वभावप्राप्तादनभिसंहितादपि पापक्षयात्सत्त्वाधिक्योन्मीलनेन शुद्धेषु धर्मेषु श्रद्धोत्पत्त्या शनैश्शनैर्ज्ञानवैराग्यादिलाभद्वारेण पूर्वोक्तभक्तिविशेषलाभाच्चिरतरेणापि कालेन भगवत्प्राप्तिर्भविष्यतीति नित्यफलत्वमित्यभिप्रायः इति । इदं च **शाण्डिल्यसंहितायाम**पि भागवतापचारसंग्रहे प्रोक्तं—*भगवन्तं समुद्दिश्य तदेकशरणा नराः । कदाचिन्न च हीयन्ते काम्यकर्मरता अपि ॥ इति ॥ २३ ॥

**भा ॥ इतरे तु सर्वसमाश्रयणीयत्वाय मम मनुष्यादिष्ववतारमप्यकिञ्चित्करं कुर्वन्तीत्याह—**

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥** २४

**भा ॥ सर्वैः कर्मभिराराध्योऽहं सर्वेश्वरो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावः परमकारुण्यादाश्रितवात्सल्याच्च सर्वसमाश्रयणीयत्वायाजहत्स्वभाव एव वसुदेवसूनुरवतीर्ण इति ममैवं परं भावमव्ययमनुत्तममजानन्तः प्राकृतराजसूनुसमानमितः पूर्वमनभिव्यक्तमिदानीं कर्मवशाज्जन्मविशेषं प्राप्य व्यक्तिमापन्नम्—प्राप्तं मामबुद्धयो मन्यन्ते ; अतो मां नाश्रयन्ते ; न कर्मभिराराधयन्ति च ॥ २४ ॥**

**ता ॥** ननु फलान्तरदेवतान्तरवासनया हि त्वद्विषयज्ञानप्रतिबन्ध उक्तः; त्वत्साक्षात्काराभावे हि तदुपपत्तिः; त्वयि कारुण्यादिगुणप्रेरिते सर्वसमाश्रयणीयत्वायावतारवशादशेषजननयनगोचरे कथं त्वत्परित्याग इत्यत्रोत्तरम्—*अव्यक्तं व्यक्तिमापन्नमित्यादीत्यभिप्रायेणाह—**इतरे त्विति** । इतरे—चतुर्विधसुकृतिभ्योऽन्ये । *परं भावमित्यनेनाभिप्रेतं निरतिशयपरत्वसौलभ्यरूपं स्वभावं दर्शयति—**सर्वैः कर्मभि**रित्यादिना **अवतीर्ण** इत्यन्तेन । **अजहत्स्वभाव** इत्यव्ययशब्दाभिप्रेतोक्तिः । अस्मादुत्तमं नास्तीत्यनुत्तमम्—अनवधिकातिशयमित्यर्थः । अत्र *अव्यक्तं व्यक्तिमापन्नमित्येतत्सामर्थ्यादवतारविषयत्वम्, तत्रापि *मामित्यस्यौचित्यादवतारविशेषविषयत्वं च सिद्धमित्यभिप्रेत्योक्तं—**वसुदेवसूनुरवतीर्ण** इति, **प्राकृतराजसूनुसमान**मिति च । इदं सर्वावतारोपलक्षणतया विशेषोदाहरणमात्रं वा । *अव्यक्तं व्यक्तिमापन्नमित्यनयोरर्थान्तरभ्रमव्युदासायाह—**प्राकृते**त्यादि । मन्दमतिबोध्यतया निन्द्यमानोऽर्थोऽत्रायमेव भवितुमर्हतीति भावः । इतः पूर्वमनभिव्यक्तत्वमिदानीमवताराद्व्यक्तत्वमपि प्रमाणसिद्धम्; तत्कथमत्र प्रतिक्षिप्यत इत्यत्रोक्तं—**कर्मवशाज्जन्मविशेषं प्राप्येति** । उत्सर्गापवादादिनयात्सङ्कोच इति भावः । *अबुद्धय इत्यनेन परमात्मतदवतारादिविषयश्रवणमननादिराहित्यं वैलक्षण्यज्ञापकलिङ्गदर्शनेऽपि तदूहशक्तिवैकल्यं च विवक्षितम् । फलितमाह—**अत** इत्यादि ।

आश्रयणमत्र [प्रीति]प्रपत्तिपूर्वकभजनम्, तदभावाच्च तदङ्गतया वर्णाश्रमादिधर्मान्, स्तुतिनमस्कारादींश्च न कुर्वत इत्याह—**न कर्मभिरिति** ॥ २४ ॥

**भा ॥ कुत एवं न प्रकाश्यत इत्यत्राह—**

**नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥** २५

**भा ॥ क्षेत्रज्ञासाधारणमनुष्यत्वादिसंस्थानयोगाख्यमायया समावृतोऽहं न सर्वस्य प्रकाशः । मयि मनुष्यत्वादिसंस्थानदर्शनमात्रेण मूढोऽयं लोको मामतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसमुपलभ्यमानमप्यजमव्ययं निखिलजगदेककारणं सर्वेश्वरं मां सर्वसमाश्रयणीयत्वाय मनुष्यत्वसंस्थानमास्थितं नाभिजानाति ॥ २५ ॥**

**ता ॥** यदि त्वमप्रतिहतसङ्कल्पस्साभिसंधिकं सर्वसमाश्रयणीयत्वायावतीर्णः, तर्हि कथं तत्फलासिद्धिरित्यभिप्रायेण शङ्कते—**कुत** इति । मायाशब्दस्तावद्विचित्रसृष्टिकरार्थवाचितया प्रागेव प्रपञ्चितः । त्रिगुणात्मिकया मायया समावृतत्वं तु परावस्थावतारावस्थयोस्साधारणम्; असाधारणश्चावरणहेतुरत्र संभवे वक्तुमुचितः; सङ्कल्पादिश्च साधारणः; योगशब्दोऽपि संबन्धे प्रचुरप्रयोगत्वात्तदर्थः प्राप्तः; तत्संबन्धी चार्थसिद्धः; सचात्रौचित्यात्प्रदेशान्तरेषु प्र[दर्शित]सिद्धत्वाच्च मनुष्यादिसंस्थानवेष[विशेष]भाषादिरेव; तेनैवेन्द्रजालमायाव्यवच्छेदोऽपि सिद्धः इत्यभिप्रायेणाह—**मनुष्यत्वादी**ति । प्रकाशः, परस्वभावेनेति शेषः । तर्हि तवैवायं दोष इत्यत्रोत्तरं—**मूढोऽय**मित्यादि । अधिगम्यत्वायापादितं मनुष्यत्वादिकं दुर्मतीनां परित्यागहेतुरभूत्; नच पारमेश्वरस्वभावो मया सर्वस्तिरोहितः; लोकोत्तरकर्मतेजःप्रभृतीनां प्रकाशनात् । किंत्वयं मन्दो लोको यत्किञ्चित्साधर्म्याद्घनावृते मयूखमालिनि खद्योतभावमवगच्छतीत्यभिप्रायेणाह—**मयी**ति । मूढः—मयि मनुष्यत्वादिभ्रमविशिष्ट इत्यर्थः । *मामिति तदानीन्तनोपलभ्यमानाकारनिर्देशसामर्थ्यात्प्रदेशान्तरोक्तत्वाच्च **अतिवाय्विन्द्रकर्माण**मित्याद्युक्तम् । परावस्थस्याज्ञानं सर्वेषां प्राप्तमेव हि । इहतु *परं भावमजानन्तो ममाव्ययमनुत्तमम्(२४) इति मनुष्यत्वे परत्वस्याज्ञानमुच्यते; तत्र प्रतिषेध्यस्य ज्ञानस्य प्रसङ्गार्थं लिङ्गोक्तिरियम् । निरतिशयदीप्तियुक्तत्वमपि जगत्कारणपरमपुरुषासाधारणधर्मतया वेदान्तेषु निर्णीतम् । अतिवाय्विन्द्रकर्मत्वं च सर्वनियन्तृत्वलिङ्गम् । *मामजमित्यनेन फलितमाह—**निखिलजगदेककारण**मिति । *अव्ययमित्यनेन लब्धमाह—**सर्वेश्वर**मिति । स्वरूपतो धर्मतश्च निर्विकारत्वं हि तस्याव्ययत्वम् । एतेन *अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्निति (४.६) प्रागुक्तसूचनं वा । अजमव्ययं नाभिजानाति, किंतु पुरुषान्तरवत्कर्माधीनजन्मानं ज्ञानसङ्कोचादिमन्तं जानातीति शेषः ॥ २५ ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥** २६

**भा ॥ अतीतानि वर्तमानान्यनागतानि च सर्वाणि भूतान्यहं वेद—जानामि । मां तु वेद न कश्चन—मयाऽनुसंधीयमानेषु कालत्रयवर्तिषु भूतेषु मामेवंविधं वासुदेवं सर्वसमाश्रयणीयत्वायावतीर्णं विदित्वा मामेव समाश्रयन्न कश्चिदुपलभ्यत इत्यर्थः । अतो ज्ञानी सुदुर्लभ एव ॥ २६ ॥**

**ता ॥** अयं लोको नाभिजानातीत्येतावता वर्तमानमात्रपरत्वं नाशङ्कनीयं; किं तु त्रैकाल्यवर्तीन्यपि भूतानि न जानन्तीत्युच्यते—*वेदाहमित्यादिना । अत्र *अतीतानीति पृथङ्निर्दिष्टत्वात् भूतानि इत्येतत्क्षेत्रज्ञपरम् । स्वस्य

सर्वज्ञत्वमत्र किमर्थमुच्यत इत्यत्राह—**मयेति**। तद्वेदनफलं हि तदेकसमाश्रयणमिति दर्शयितुं—**मामेव समाश्रयन्ति**-त्युक्तम्। परमप्रकृतेन सङ्गमयति—**अत इति**॥ २६॥

भा॥ तथा हि—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।**
**सर्वभूतानि संमोहं सर्गे यान्ति परन्तप॥** २७

भा॥ इच्छाद्वेषाभ्यां समुत्थितेन शीतोष्णादिद्वन्द्वाख्येन मोहेन सर्वभूतानि सर्गे—जन्मकाल एव संमोहं यान्ति। एतदुक्तं भवति—गुणमयेषु सुखदुःखादिद्वन्द्वेषु पूर्वपूर्वजन्मनि यद्विषयाविच्छाद्वेषावभ्यस्तौ; तद्वासनया पुनरपि जन्मकाल एव तदेव द्वन्द्वाख्यमिच्छाद्वेषविषयत्वेन समुत्थितं भूतानां मोहनं भवति; तेन मोहेन सर्वभूतानि संमोहं यान्ति; तद्विषयेच्छाद्वेषस्वभावानि भवन्ति, न मत्संश्लेषवियोगसुखदुःखस्वभावानि। ज्ञानी तु मत्संश्लेषवियोगैकसुखदुःखस्वभावः; न तत्स्वभावं किमपि भूतं जायते—इति॥ २७॥

ता॥ एवं ज्ञानिनो दौर्लभ्याय कालत्रयवर्तिसर्वभूतसाधारणं भगवदज्ञानकारणम् *इच्छेति श्लोकेनोच्यत इत्यभिप्रायेणाह—**तथा हीति**। पदार्थमन्वयार्थं च दर्शयति—**इच्छाद्वेषाभ्यामिति**। इच्छाद्वेषाभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थः। ननु जन्मकाल एवेच्छाद्वेषौ कारणाभावान्न संभवतः; संभवन्तौ वा भगवद्विषयौ किं न स्याताम्? नचेच्छाद्वेषमात्रेण शीतोष्णादेरुत्थानं, तस्य च हेमन्तघर्मादिस्वकारणाधीनत्वात्। द्वन्द्वस्य च कथं मोहशब्दार्थता? मोहेन मोहं यान्तीत्यात्माश्रयादिप्रसङ्गः। इच्छाद्वेषावेव द्वन्द्वशब्देन गृह्येते; अतो द्वन्द्वनिमित्तो मोहो द्वन्द्वमोह इत्यादि परव्याख्यानं च पुनरुक्त्यादिदुस्स्थम्। एतेन सुखं मे भूयात्, दुःखं मा भूदित्यभिनिवेशो द्वन्द्वमोह इत्यपि मन्दमित्यादिकमाशङ्क्याह—**एतदुक्तं भवतीति**। जन्मान्तरवासनाख्यं कारणमस्ति; वासनायाश्च स्वकारणस्वभावविषयत्वादिच्छाद्वेषयोर्न भगवत्संश्लेषविश्लेषविषयत्वप्रसङ्गः। उत्थानं चेच्छाद्वेषविषयतया स्फुरणमेव। मोहशब्दस्य करणे व्युत्पत्त्या द्वन्द्वे प्रयोगः। मोहकारणस्य मोहजनने च नात्माश्रयादिरिति भावः। अभोग्ये भोग्यताबुद्धिरद्वेष्ये च द्वेष्यताबुद्धिरिह संमोह इत्यभिप्रायेणाह—**तद्विषयेति**। एवंविधसंमोहवशादिच्छाद्वेषयोस्साक्षात्प्राप्तविषयपरित्यागं दर्शयति—**न मत्संश्लेषेति**। उचितविषयेच्छाद्वेषशालिनं सुदुर्लभं ज्ञानिनं तद्व्यतिरेकप्रकाशनाय दर्शयति—**ज्ञानी त्विति**। *ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः। तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः॥ (२९) इति **संग्रहः**। तद्व्यतिरेकमेव भूतानां जन्मसिद्धं दर्शयति—**न तदिति**॥ २७॥

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥** २८

भा॥ येषां त्वनेकजन्मार्जितेनोत्कृष्टपुण्यसंचयेन गुणमयद्वन्द्वेच्छाद्वेषहेतुभूतं मदौन्मुख्यविरोधि चानादिकालप्रवृत्तं पापमन्तगतम्—क्षीणम्; ते पूर्वोक्तेन सुकृततारतम्येन मां शरणमुपपद्य गुणमयान्मोहाद्विनिर्मुक्ताः जरामरणमोक्षाय, महते चैश्वर्याय, मत्प्राप्तये च दृढव्रताः—दृढसङ्कल्पाः मामेव भजन्ते॥ २८॥

ता॥ यद्येवं सर्वभूतानि संमोहं यान्ति; तर्हि भगवदुपासनं कदाचिदपि कस्यचिदपि न स्यात्; अतः *चतुर्विधा भजन्ते मामित्यादिनोक्तं चानुपपन्नं स्यादित्यत्रोत्तरं—*येषां त्वित्यादि। *पुण्यकर्मणाम् इत्येतत्पापनिवृत्तिहेतुपरम्।

तथा च श्रुतिः *धर्मेण पापमपनुदति (ना. ५०) इति। जनशब्दश्च जननवति वर्तमानत्वात् पुण्यप्रचयहेतुभूतानेकजन्मसूचनपर इत्यभिप्रायेणोक्तम्—**अनेकजन्मार्जितेनोत्कृष्टपुण्यसञ्चयेनेति**। भगवज्ज्ञानप्रतिबन्धकपापनिवर्तकत्वाचोत्कृष्टत्वं फलितम्। गुणमयशब्देन सुखदुःखरूपभगवत्संश्लेषविश्लेषाख्यद्वन्द्वव्यवच्छेदः। *द्वन्द्वमोहविनिर्मुक्ता मां भजन्ते इति फलद्वयदर्शनात्तत्प्रतिबन्धकेऽपि पापे द्वन्द्वेच्छाद्वेषहेतुभूतं मदौन्मुख्यविरोधि चेति भेदो दर्शितः। अनेकजन्मार्जितोत्कृष्टपुण्यनाश्यत्वायोक्तम्—**अनादिकालप्रवृत्तमिति**। उपासनारम्भे पापस्य द्वन्द्वमोहस्य च निश्शेषविनष्टत्वाभावादन्तगतशब्देनाल्पावशिष्टत्वं विवक्षितमित्यभिप्रायेणोक्तं—**क्षीणमिति**। *मामेव ये प्रपद्यन्ते (१४) इत्यादिकं *चतुर्विधा भजन्ते माम् (१६) इत्यादिकं च प्रागुक्तमनन्तराभिधीयमानं च *जरामरणमोक्षाय इत्यादिकमनुसन्दधान आह—**ते पूर्वोक्तेनेति**। नचात्र द्वन्द्वमोहविनिर्मुक्तत्ववचनादैश्वर्यार्थिनां प्रसङ्गानुपपत्तिः, तेषामपि क्षुद्रतरद्वन्द्वनिरोधस्यावश्यापेक्षितत्वात्। व्रतशब्दस्सङ्कल्पविशेषे[षु] मुख्यः; तत्संबन्धादेव क्रियाविशेषे[षु] तत्प्रयोग इत्यभिप्रायेण—**दृढसङ्कल्पा इत्युक्तम्**। दृढव्रतशब्देन देवतान्तरपरित्यागादिनियमोऽपि यथाप्रमाणं सूचित इत्यभिप्रायेण—**मामेव भजन्त इत्युक्तम्**। *मां भजन्ते इत्यने[न]नैव भजनाङ्गव्रतादेरपि सिद्धत्वात् **मत्प्राप्तये** चेत्य[न्ते]नेन दृढसङ्कल्पत्वं स्वाभिमतफलविषयतया व्याख्यातम्॥ २८॥

**भा॥ अत्र त्रयाणां भगवन्तं भजमानानां ज्ञातव्यविशेषानुपादेयांश्च प्रस्तौति—**

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्॥** २९

**भा॥ जरामरणमोक्षाय—प्रकृतिवियुक्तात्मस्वरूपदर्शनाय मामाश्रित्य ये यतन्ते; ते तद्ब्रह्म विदुः, अध्यात्मं च कृत्स्नं विदुः, कर्म चाखिलं विदुः॥ २९॥**

**ता॥** अथाष्टमाध्याये प्रपञ्चयिष्यमाणस्यार्थस्य प्रस्तावश्श्लोकद्वयेन क्रियत इत्याह—**अत्रेति**। *जरामरणमोक्षायेत्येतावतो निर्देशात् **प्रकृतिवियुक्तात्मस्वरूपदर्शनायेत्युक्तम्**। यतनमत्राराधनरूपं विवक्षितम्। एषां ब्रह्माध्यात्मकर्मादीनां सप्तानां प्रश्नपूर्वकं प्रपञ्चो भविष्यति। अत्र *विदुः इति सिद्धवन्निर्देशो वर्तमानापदेशोऽपि विध्यर्थः॥ २९॥

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥** ३०

॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु **विज्ञानयोगो** नाम सप्तमोऽध्यायः॥ ७॥

**भा॥ अत्र य इति पुनर्निर्देशात्पूर्वनिर्दिष्टेभ्योऽन्ये अधिकारिणो ज्ञायन्ते; साधिभूतं साधिदैवं मामैश्वर्यार्थिनो ये विदुः—इत्येतदनुवादस्वरूपमप्यप्राप्तार्थत्वाद्विधायकमेव; तथा साधियज्ञमित्यपि त्रयाणामधिकारिणामविशेषेण विधीयते, अर्थस्वाभाव्यात्। त्रयाणां हि नित्यनैमित्तिकरूपमहायज्ञाद्यनुष्ठानमवर्जनीयम्। ते च प्रयाणकालेऽपि स्वप्राप्त्यनुगुणं मां विदुः। तेचेति चकारात्पूर्वे जरामरणमोक्षाय यतमानाश्च प्रयाणकाले विदुरिति समुच्चीयन्ते; अनेन ज्ञानिनोऽप्यर्थस्वाभाव्यात्साधियज्ञं मां विदुः, प्रयाणकालेऽपि स्वप्राप्त्यनुगुणं मां विदुरित्युक्तं भवति॥ ३०॥**

**॥ इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये सप्तमोऽध्यायः॥ ७॥**

**ता** ॥ *साधिभूतेति श्लोकस्यैश्वर्यार्थिविषयत्वं वक्तुमधिकारि[णो]भेदमात्रज्ञापकं तावद्दर्शयति—**अत्रे**ति । पूर्वाधिकारिविषयत्वे *साधियज्ञं च ते विदुरिति हि वक्तव्यम्; नचैवं शिष्टाः पठन्ति; नचात्र यच्छब्दावृत्तेः प्रयोजनमस्तीति भावः । प्रश्नोत्तरवशाच्चाधिकारिभेदस्सेत्स्यति । एवं सामान्येन ज्ञातमधिकारिभेदमधिभूतादिसामर्थ्याद्विशिनष्टि—**ऐश्वर्यार्थिन** इति । *जरामरणमोक्षायेत्यादाविव अत्रापि यच्छब्दवशादनुवादत्वं प्रतीतमिति तत्प्रतिक्षिपति—**इत्येत**दित्यादिना । *यदाग्नेयोऽष्टाकपालः (शत. २. ५. १. ११) इत्यादिवदिति भावः । अस्य विधित्वं प्रश्नादिवशाच्च फलिष्यति । न ह्यवगते प्रश्नाद्यवकाशः । *साधियज्ञम् इत्यस्यैकस्मिन्नधिकारिणि निर्दिष्टस्याप्यर्थस्वाभाव्यात्त्रिष्वप्यन्वयं दर्शयति—**तथे**ति । **अर्थस्वाभाव्या**दिति—सर्वाधिकारिसाधारणतया प्रमाणसिद्धयज्ञाख्यपदार्थस्वाभाव्यादित्यर्थः । एतदेव दर्शयति—**त्रयाणां** **ही**ति । अन्यथा *सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु (द. स्मृ) इत्यादिक्रमेण [अकर्मण्य]-कर्मानर्हत्वादिप्रसङ्ग इत्यभिप्रायेणाह—**अवर्जनीय**मिति । अपि चेत्येकान्वयत्वे प्रयोजनाभावात् पृथक्त्वे सप्रयोजनतया अन्वयसंभवाच्च विभज्याह—**तेचे**ति । अन्तिमप्रत्ययस्यै[कस्यै]व वक्ष्यमाणं विषयविशेषेण प्राप्यानुगुणाकारत्वं युक्तचेतश्शब्देन विवक्षितमित्याह—**स्वप्राप्यानुगुण**मिति । चकारस्य पृथगन्वयेन लब्धमाह—**तेचे**ति । **चकारा**दिति—यद्वृत्तप्रतियोगिकत्वात्तद्वृत्तमैश्वर्यार्थिविषयमेव । चकारात्तु पूर्वश्लोकोक्तानां समुच्चयः । तेषामपि ह्यन्तिमप्रत्यये विशेषो वक्ष्यत इति भावः । *त्रयाणामित्यादिकमयुक्तं, ज्ञानिनामत्र प्रसङ्गाभावादित्यत्राह—**अनेने**ति । यज्ञान्तिमप्रत्ययमात्रयोरधिकारित्रयसाधारण्यसिद्धेरिति भावः ॥ ३० ॥

**इति श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां सप्तमोऽध्यायः ॥ ७॥**

---

## ॥ अथ अष्टमोऽध्यायः ॥ ८ ॥

**भा ॥ सप्तमे परस्य ब्रह्मणो वासुदेवस्योपास्यत्वम्, निखिलचेतनाचेतनवस्तुशेषित्वम्, कारणत्वम्, आधारत्वम्, सर्वशरीरतया सर्वप्रकारत्वेन सर्वशब्दवाच्यत्वम्, सर्वनियन्तृत्वम्, सर्वैश्च कल्याणगुणगणैस्तस्यैव परतरत्वम्, सत्त्वरजस्तमोमयैर्देहेन्द्रियत्वेन भोग्यत्वेन चावस्थितैर्भावैरनादिकालप्रवृत्तदुष्कृतप्रवाहहेतुकैस्तस्य तिरोधानम्, अत्युत्कृष्टसुकृतहेतुकभगवत्प्रपत्त्या च तन्निवर्तनम्, सुकृततारतम्येन च प्रतिपत्तिवैशेष्यादैश्वर्याक्षरयाथात्म्यभगवत्प्राप्त्यपेक्षयोपासकभेदम्, भगवन्तं प्रेप्सोर्नित्ययुक्ततयैकभक्तितया चात्यर्थपरमपुरुषप्रियत्वेन च श्रैष्ठ्यम् दुर्लभत्वं च प्रतिपाद्य एषां त्रयाणां ज्ञातव्योपादेयभेदांश्च प्रास्तौषीत्। इदानीमष्टमे प्रस्तुतान् ज्ञातव्योपादेयभेदान् विविनक्ति ॥**

**अर्जुन उवाच—**

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम । अधिभूतं च किं प्रोक्तम् अधिदैवं किमुच्यते ॥ १**
**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन । प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २**

**भा ॥ जरामरणमोक्षाय भगवन्तमाश्रित्य यतमानानां ज्ञातव्यतयोक्तं तद्ब्रह्माध्यात्मं च कर्म च किमिति वक्तव्यम्। ऐश्वर्यार्थिनां ज्ञातव्यमधिभूतमधिदैवं च किम्? त्रयाणां ज्ञातव्योऽधियज्ञशब्दनिर्दिष्टश्च कः? तस्य चाधियज्ञभावः कथम्? प्रयाणकाले चैभिस्त्रिभिर्नियतात्मभिः कथं ज्ञेयोऽसि? ॥ १, २ ॥**

**ता** ॥ सङ्गतिप्रदर्शनायाह—**सप्तम** इति । **परस्य ब्रह्मणो वासुदेवस्योपास्यत्व**मिति *मय्यासक्तमनाः (१) इत्यादेरर्थः; तत्रैव ह्युपासनं प्रस्तुतम् । तच्छेषतया चान्यत्सर्वमिहोच्यते । तस्यैव प्रपञ्चनम् *अहं सर्वस्य प्रभवः

(१०. ८), * वासुदेवस्सर्वं (७. १९), * चतुर्विधा भजन्ते माम् (७. १६) इत्यादिभिः परस्तात्क्रियत इति भावः। **परस्ये**त्यादिभिरुपहितब्रह्मव्योमातीतादिपक्षप्रतिक्षेपः। ब्रह्मशब्दस्य विशेषशब्दसमभिव्याहाराद्देवतान्तरव्यावृत्तिः। वासुदेवशब्देनात्रावतारविशेषो वा विवक्षितः। **निखिले**त्यादिभिरुपास्यत्वपरब्रह्मत्वोपयुक्ताकारकथनम्। **निखिलचेतनाचेतनवस्तुशेषित्वमि**ति * भूमिरापः (७. ४) इत्यादेः श्लोकद्वयस्यार्थः। निखिलशब्देन कार्यकारणादिरूपावस्थासंग्रहात् कार्यभूतब्रह्मरुद्रादेरपि क्रोडीकारः। कारणत्वम् * एतद्योनीनि (७. ६) इति श्लोकस्यार्थः। * मत्तः परतरं नान्यत् (७) इत्युक्तस्य परत्वस्य * मामेभ्यः परम् (१३) इत्यत्रोपयुक्ततया तत्रैवोदाहर्तुमत्र तदतिक्रमेण * मयि सर्वम् (७) इत्याद्युक्ताधारत्वोपादानम्। * रसोऽहम् (८) इत्यादिसामानाधिकरण्यफलितं सर्वशब्दवाच्यत्वम्। तत्र हेतुराधारत्वादिविशेषसिद्धं सर्वशरीरकत्वम्। एवं शेषित्वाद्यनुवादेन वक्ष्यमाणतत्तदधिकारिप्राप्यवस्तुविशेषसामानाधिकरण्यस्यापि शरीरात्मभावहेतुकत्वं दर्शितम्। * मत्त एवेति तान्विद्धि (१२) इत्यादिषु प्रवृत्तितादधीन्यस्यापि विवक्षितत्वात्सिद्धं सर्वनियन्तृत्वम्। **सर्वैश्चे**त्यनेनानिर्दिष्टानाम्, अन्येषां च आभिप्रायिकाणां संग्रहः। **तस्यैवे**त्यवधारणेन * नान्यत्किञ्चिदस्ति (७) इत्यस्यार्थ उक्तः। * त्रिभिर्गुणमयैः (१३) इति श्लोकस्य सार्धस्यार्थः **सत्त्वे**त्यादिनोक्तः। * मामेव (१४) इत्याद्युक्तप्रपत्तेः सुकृतविशेषहेतुकत्वं * जनास्सुकृतिनः (१६) इत्यनेन दर्शितमाह—**अत्युत्कृष्टसुकृते**ति। * न मां दुष्कृतिनः (१५) इत्यादेः पूर्वोक्ततिरोधानप्रकारविशेषकथनरूपत्वात्सुकृतिप्रशंसाशेषत्वाच्च तदर्थोऽत्र पृथङ्नोपात्तः। * चतुर्विधाः (१६) इत्यादिकं **सुकृततारतम्येने**त्यादिनाऽनुसंहितम्। उपासकभेदं चेत्यन्वयः। * तेषां ज्ञानी (१७) इत्यादेःश्लोकद्वयस्यार्थो **भगवन्त**मित्यादिनोक्तः। * बहूनां जन्मनाम् (१९) इत्यादिना * सर्गे यान्ति परन्तप (२७) इत्यन्तेन सिद्धमाह—**दुर्लभत्व**मिति। * येषां तु (२८) इत्यादेरध्यायशेषस्य अर्थमाह—**एषां त्रयाणा**मिति। ज्ञातव्यमिह सिद्धरूपं विवक्षितम्। **उपादेयम्**—अनुष्ठेयम्। एतेन * स्वयाथात्म्यम् (११) इत्यादि संग्रहश्लोकस्यार्थोऽपि प्रपञ्चितः। अयं त्वष्टमस्य संग्रहः * ऐश्वर्याक्षरयाथात्म्यभगवच्चरणार्थिनाम्। वेद्योपादेयभावानामष्टमे भेद उच्यते ॥ (१२) इति। अत्र भेदोक्तेरध्यायार्थत्वात्स्वरूपप्रस्तावः प्रागेव कृत इति दर्शितम्। प्रस्तुतसङ्गतिमाह—**इदानी**मिति ॥

जीवस्वरूपादिज्ञातव्यस्योपासनाद्यनुष्ठेयस्य च भेदजिज्ञासयाऽर्जुन उवाच—* किं तदिति। * आर्तो जिज्ञासुः (७.१६) इत्यादिना प्रागेवाधिकारित्रयस्योक्तत्वात् * जरामरणमोक्षाय (२९) इत्यादिषु यच्छब्दावृत्तिसामर्थ्याद‍र्थस्वभावाच्चाधिकारिभेदस्तेषां ज्ञातव्योपादेयवस्तुप्रतिनियमश्चार्जुनेन ज्ञातः; तत्रैव विशेषबुभुत्सयाऽयं प्रश्नः। वक्ष्यते च विशेषः। ततश्च * किंतद्ब्रह्मेत्यर्धमक्षरयाथात्म्यार्थिविषयम्, * अधिभूतं चेत्यर्धमैश्वर्यार्थिविषयम्; * अधियज्ञः इति श्लोकस्तु अर्थस्वभावात् त्रयाणां साधारण इति विविनक्ति—**जरामरणे**ति। **कथ**मिति प्रकारप्रश्ने। **अधियज्ञभाव** इत्यर्थलब्धम्। **अत्रे**त्येतच्छब्दश्शास्त्रसन्निध्युपाधिकः; तच्चोत्तरग्रन्थे व्याख्यास्यति—* अत्र इन्द्रादौ मम देहभूते इति। * अस्मिन्निती‌दंशब्दस्तु स्वप्रत्यक्षसन्निध्युपाधिकः; प्रत्यक्षा हीन्द्रादयोऽपि प्रष्टुरर्जुनस्य। एतच्छब्देदंशब्दयोश्चैकस्मिन्वाक्ये सामानाधिकरण्येन प्रयोगो दृश्यते—* स एष द्वाभ्यां दर्शनीभ्यां विराड्भ्यामनयोर्द्वाविंशयोर्द्वि[पद]वचनयोरयं पुरुषः प्रतिष्ठितः इत्यादौ। यद्वा * अत्रेति यज्ञस्वरूपपरामर्शः; नियतात्मत्वं त्रयाणामपेक्षितम्; अत्र बहुवचनमधिकारित्रयपरमित्यभिप्रायेणोक्तम्—**एभिस्त्रिभि**रिति ॥ १, २ ॥

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३

भा ॥ तद्ब्रह्मेति निर्दिष्टं परममक्षरं न क्षरतीत्यक्षरम्, क्षेत्रज्ञसमष्टिरूपम्। तथा च श्रुतिः—*अव्यक्त-मक्षरे लीयते अक्षरं तमसि लीयते [सु. २] इत्यादिका। परममक्षरं प्रकृतिविनिर्मुक्तमात्मस्वरूपम्। स्वभावोऽध्यात्ममुच्यते—स्वभावः—प्रकृतिः। अनात्मभूतम्, आत्मनि संबध्यमानं, भूतसूक्ष्मतद्वासनादिकं पञ्चाग्नि-विद्यायां ज्ञातव्यतयोदितम्। तदुभयं प्राप्यतया त्याज्यतया च मुमुक्षुभिर्ज्ञातव्यम्। भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः—भूतभावः—मनुष्यादिभावः; तदुद्भवकरो यो विसर्गः *पञ्चम्यामाहुतावापः पुरुष-वचसो भवन्ति (छा. ५. ९. १) इति श्रुतिसिद्धो योषित्संबन्धजः, स कर्मसंज्ञितः। तच्चाखिलं सानुबन्धम् उद्वेजनीयतया, परिहरणीयतया च मुमुक्षुभिर्ज्ञातव्यम्। परिहरणीयता चानन्तरमेव वक्ष्यते, *यदिच्छन्तो ब्रह्मचर्यं चरन्ति (१२) इति ॥ ३ ॥

ता ॥ *अक्षरं ब्रह्म परममित्यत्र उद्देश्योपादेयान्यथाभावनिरासायाह—तद्ब्रह्मेति निर्दिष्टमिति। ब्रह्मशब्दोऽत्र परमात्मसाधर्म्यादुपचारवृत्त्येति भावः। अक्षरशब्दस्य निर्वचनं प्रतिपाद्यं च दर्शयति—न क्षरतीत्यादिना। क्षेत्रज्ञ-समष्टौ श्रौतं प्रयोगं दर्शयति—तथा चेति। लयोऽत्र संश्लेषविशेषः। अथवा श्रुतावक्षरशब्देन उन्मग्नचेतनांशः प्रकृत्यवस्थाविशेष एव अभिधीयत इति साक्षात्प्रलयार्थत्वेऽपि न विरोधः। तथाऽपि शब्दप्रवृत्तिद्वारभूतचिदंशे तात्पर्या-त्तदुदाहरणम्। *परममक्षरमित्यत्र विशेषणाभिप्रेतमाह—प्रकृतिविनिर्मुक्तमात्मस्वरूपमिति। स्वभावशब्दार्थः—प्रकृतिरिति। नियतसंबद्धमिति यावत्। किं तदित्याकाङ्क्षायाम् अध्यात्मशब्दानुसारेणाह—अनात्मेति। आत्मन्यधि-वसनात् संबध्यमानमित्यध्यात्मशब्दनिर्वचनम्। तत एव सिद्धमनात्मत्वम्। तद्वासनादिकं—तत्संसर्गोपाधिकाज्ञान-कर्मवासनादिकम्। भूतसूक्ष्मादेर्ज्ञातव्यत्वे श्रुतिं दर्शयति—पञ्चाग्निविद्यायामिति। *वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति (छा. ५. ३. ३) इत्युपक्रम्य *इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति (छा. ५. ९. १) इत्युक्त्वा *तद्य इत्थं विदुः (छा. ५. १०. १) इत्यप्छब्दोपलक्षितपञ्चभूतसूक्ष्मवेद्यत्वं ह्युक्तमिति भावः। ननूपाय-कर्तृभूतेदानीन्तनात्मस्वरूपपरित्यागेन परिशुद्धात्मस्वरूपकथनं मुमुक्षोः क्वोपयुक्तम्? भूतसूक्ष्मादिकथनं च किमर्थमित्य-त्राह—तदुभयमिति। यथाक्रममन्वयः। अत्र पञ्चमाहुतेर्विवक्षितत्वाद्योनिजभूतविषयोऽयं भूतशब्द इत्यभिप्रायेणाह—भूतभावो मनुष्यादिभाव इति। मनुष्यत्वादिविशिष्टशरीरयोग इत्यर्थः। विशिष्टस्य विसर्गस्य ज्ञातव्यत्वे तस्य मनु-ष्यादिभावहेतुत्वे च श्रुतिं दर्शयति—पञ्चम्यामिति। अत्र सूत्रमरुन्मलादिविसर्गव्यवच्छेदार्थमुक्तं—भूतभावोद्भवकर इति। तदेव दर्शयति—योषित्संबन्धज इति। विसर्गविशेषणसामर्थ्यादेतत्सिद्धम्। एवं कर्मसंज्ञितरेतोविसर्गज्ञानस्य सप्रयोजनतामाह—तच्चाखिलमिति। अत्र कर्माभिप्रायेण नपुंसकनिर्देशः। अखिलं—मनुष्यत्वमृगत्वादिजातिभेद-हेतुतयाऽनेकप्रकारम्। सानुबन्धं—हेतुभूतैः कर्मभिः फलभूतैश्च गर्भवासादिभिस्सहितमित्यर्थः। पञ्चाग्निविद्यायामचित-स्सर्वावस्थानुयायित्वदुस्त्यजत्वगर्भजन्मादिदुःखकरत्वादेः फलितत्वाज्जुगुप्सनीयतारूपाऽऽत्मभयावहत्वरूपा चोद्वेजनीयता युक्ता। परिहरणीयता तु कुतस्सिध्येदित्यत्राह—परिहरणीयता चेति ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४

भा ॥ ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्टमधिभूतं क्षरो भावः वियदादिभूतेषु वर्तमानस्तत्परिणामविशेषः क्षरणस्वभावो विलक्षणश्शब्दस्पर्शादिस्साश्रयः, विलक्षणास्साश्रयाश्शब्दस्पर्शरूपरसगन्धाः ऐश्वर्यार्थिभिः प्राप्यास्तैरनुसन्धेयाः। पुरुषश्चाधिदैवतम्—अधिदैवतशब्दनिर्दिष्टः पुरुषः। अधिदैवतम्—देवतोपरि वर्तमानः इन्द्रप्रजापतिप्रभृतिकृत्स्नदेवतोपरि वर्तमानः, इन्द्रप्रजापतिप्रभृतीनां भोग्यजाताद्विलक्षणशब्दादेर्भोक्ता पुरुषः। सा च भोक्तृत्वावस्था ऐश्वर्यार्थिभिः प्राप्यतयाऽनुसन्धेया। अधियज्ञोऽहमेव [—अधियज्ञशब्दनिर्दिष्टोऽहमेव]। अधियज्ञः—यज्ञैराराध्यतया वर्तमानः। अत्र इन्द्रादौ मम देहभूते आत्मतयाऽवस्थितोऽहमेव यज्ञैराराध्य इति महायज्ञादिनित्यनैमित्तिकानुष्ठानवेलायां त्रयाणामधिकारिणामनुसन्धेयमेतत् ॥ ४ ॥

ता ॥ **ऐश्वर्यार्थिनां ज्ञातव्यतया निर्दिष्ट**मित्येतदधिदैवतेऽप्यनुषञ्जनीयम्। अधिभूतक्षरशब्दनिर्वचनानुरोधेन व्याख्याति—**वियदादी**ति। भूतशब्दस्यात्र जन्तुविषयत्वव्यवच्छेदाय वियदादिशब्दः। शब्दाद्यवस्थातद्वतोर्भोग्ययोर्द्वयोरपि क्षरशब्देन संग्रहणाय **क्षरणस्वभाव** इति निर्वचनम्। नश्वर इत्यर्थः। **विलक्षण** इति—* इन्द्रप्रजापतिप्रभृतीनां भोग्यजातादिति वक्ष्यमाणमत्रापि द्रष्टव्यम्। एवंविधं च वैलक्षण्यं स्वासाधारणभक्तियोगप्रसन्नपरमात्मसङ्कल्पविशेषप्रसूतभोगरूपत्वात्। अस्य ज्ञातव्यताहेतुं दर्शयति—**विलक्षणा** इति। * क्षरो भावः इत्येकवचनं जात्यभिप्रायमिति भावः। **प्राप्याः**—प्राप्यत्वादित्यर्थः। अधिदैवतशब्दे रूढिभ्रमव्युदासायाह—**अधिदैवतशब्दनिर्दिष्ट** इति। तन्निरुक्तिः **देवतोपरिवर्तमान** इति। देवतोपरीति संबन्धसामान्यषष्ठ्या समासः। दैवतशब्दस्यात्र सर्वेश्वरात्सङ्कोचं देवतान्तरेष्वभिव्याप्तिं चाह—**इन्द्रे**ति। उपरि वर्तमानत्वमिह न केवलं देशाद्यपेक्षया; किंतु भोगप्रकर्षादपीत्यभिप्रायेणेत्याह—**इन्द्रे**त्यादि **पुरुष** इत्यन्तम्। ननु पुरुषान्तरमिह विवक्षितम्, स्वात्मस्वरूपपुरुषानुसन्धानमधिकार्यन्तरस्यापि समानम्; ततोऽत्र को विशेष इत्यत्राह—**साचे**ति। न परिशुद्धस्वरूपमिहानुसन्धेयम्, न चाशुद्धेऽपि हेयत्वमिह भाव्यम्। पुरुषशब्दनिर्देशश्चात्र भावप्रधान इति भावः। **अहमेवे**ति **क** इति प्रश्नस्योत्तरम्। **कथ**मिति प्रश्नस्योत्तरत्वं तदभिप्रेतं विवृणोति—**अधियज्ञ** इति। यज्ञे संबध्यमानोऽधियज्ञः। तत्र च सर्वेश्वरस्याराध्यतया संबन्ध इत्याह—**यज्ञैराराध्यतया वर्तमान** इति। इन्द्रादयो हि तत्र आराध्याश्श्रुताः; तत्कथमहमेवेत्युच्यत इत्यत्रोत्तरम् * अत्र **देहे** इत्यनेन विवक्षितमिति दर्शयति—**अत्रेन्द्रादावि**ति। * अधियज्ञोऽहमेवात्र देहे इतीश्वरेणाभिधीयमानत्वात्तद्देहविषयत्वं प्रतीतम्; सचेश्वरदेहः * यज देवपूजायामिति याज्यदेवतापेक्षयज्ञप्रसङ्गादिन्द्रादिरेवेत्यभिप्रायेणोक्तम्—**इन्द्रादा**विति। * यां यां तनुम् (७. २१) इति प्रागुक्तं स्मारयति—**मम देहभूत** इति। कर्मणा ह्यचिद्द्रव्यं कस्यचिद्देहो भवति; न तथाऽत्र देहत्वं कादाचित्कमिति ज्ञापनाय **देहभूत** इति प्रयोगः। देहभूतकेवलेन्द्रादिव्यवच्छेदार्थम्—**अहमेवे**त्यवधारणम्। पूर्वनिर्दिष्टब्रह्माध्यात्मकर्माधिभूताधिदैववन्न तत्त्वान्तरमिति ज्ञापनार्थं वा। * विष्णुस्सर्वा देवताः (ऐ. ब्रा.) इति च श्रुतिः। एतेन * कथमिति प्रश्नस्याप्युत्तरं दत्तम्। तत्तद्विशिष्टस्याराध्यत्वात्, * देहभृतां वरेत्यनेनाध्यात्मचिन्तानुगुणसत्त्वोत्तरदेहेन्द्रियादिमत्त्वम्, स्वस्यालौकिकेन्द्रादिदेहवत्त्वे निदर्शनं चाभिप्रेतम्। एवंविधाधियज्ञविज्ञानमनुष्ठानानुप्रविष्टम्; न तु तदुपकारकमात्रम्; नचैश्वर्यार्थिमात्रविषयमिति दर्शयति—**इति महायज्ञे**ति। अकरणनिमित्तानर्हतादिपरिहाराय त्रयाणामवश्यकर्तव्यताद्योतनाय—**नित्यनैमित्तिकोक्तिः** ॥ ४ ॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५

भा ॥ इदमपि त्रयाणां साधारणम् । अन्तकाले च मामेव स्मरन् कलेबरं त्यक्त्वा यः प्रयाति ; स मद्भावं याति—मम यो भावः स्वभावः तं याति ; तदानीं यथा मामनुसन्धत्ते, तथाविधाकारो भवतीत्यर्थः ; यथा आदिभरतादयस्तदानीं स्मर्यमाणमृगसजातीयाकारास्संभूताः ॥ ५ ॥

ता ॥ *प्रयाणकाले इत्यस्य प्रश्नस्य संग्रहेणोत्तरम् *अन्तकाले इति श्लोकः । अतो न ज्ञानिमात्रविषय इत्यभिप्रायेणाह—इदमपीति । अधियज्ञपदार्थस्वाभाव्याद्वक्ष्यमाणप्रकाराच्चेति भावः । अन्वयं दर्शयति—अन्तकाले-चेति । *मद्भावं यातीत्यत्र श्रुत्यादिविरुद्धतादात्म्यावाप्तिभ्रमव्युदासायाह—मम यो भाव इति । नन्वीश्वरस्वभाव-प्राप्ताव[स्या]पि कुशोदरीनीडनिहितकीटस्य तज्जातीयत्ववदीश्वरान्तरत्वप्रसङ्गः, त्रयाणामधिकारिणां गुणाष्टकरूपेश्वरस्व-भावप्राप्त्यविशेषेऽधिकारिभेदश्च न स्यादित्यत आह—तदानीमिति । तत्तदनुसन्धेयाकारविशेषसाम्यप्राप्तिर्विवक्षिता । साम्यं च स्वरूपभेद[के]क वैधर्म्ये स्थिते सत्येवेति न कश्चिद्दोष इति भावः । एवं प्राप्तिप्रश्नाः प्रत्युक्ताः ; *नास्त्यत्र संशयः इत्यनेन अभिप्रेतां प्रयोजकप्रसिद्धिं दर्शयति—यथाऽऽदिभरतादय इति । एतेनोदाहरणेनापि तादात्म्यभ्रमो निरस्तः ; न ह्यादिभरतस्य स्मर्यमाणमृगेण तादात्म्यम् ; अपि तु तत्समानाकारमृगशरीरपरिग्रह एवेति तत्रैव प्रसिद्धम् । तदानीं—देहवियोगकाल इत्यर्थः ॥ ५ ॥

भा ॥ स्मर्तुस्स्वविषयसजातीयाकारतापादनमन्तिमप्रत्ययस्य स्वभाव इति सुस्पष्टमाह—

यंयं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६

भा ॥ अन्ते—अन्तकाले । यंयं वापि भावं स्मरन् कलेबरं त्यजति, तंतं भावमेव मरणानन्तरमेति । अन्तिमप्रत्ययश्च पूर्वभावितविषय एव जायते ॥ ६ ॥

ता ॥ न केवलमीश्वरविषयान्तिमप्रत्ययस्वभावोऽयमिति मन्तव्यम्, किंतु सर्वसाधारणमिदमत्राप्युक्तमिति प्रयोजकाकारो *यंयमिति श्लोकेनोच्यत इत्याह—स्मर्तुरिति । अन्तशब्दोऽत्र पूर्वश्लोकाभिहितान्तकालपरः । तस्य चान्तिमप्रत्ययप्रभावज्ञापनाय *स्मरन् इत्यनेनान्वय इति दर्शयति—अन्ते अन्तकाले इति । वीप्सया *वाऽपीत्यनेन च स्मर्तव्यविषयानियमो नीचोत्तमविषयवैषम्याभावश्च दर्शितः । *तंतमिति वीप्सया त्वसङ्कीर्णतत्तत्प्राप्तिः । अवधारणेन प्रबलपुण्यान्तरेणापि तस्या दुर्वारत्वं च विवक्षितम् । भावशब्दोऽत्र स्वभावपरः । धर्मिप्रत्ययस्तु नान्तरीयकः । भाव-शब्दस्यात्र पदार्थपरत्वे प्रस्तुतभावशब्दवैरूप्यम्, *तंतमेतीति साजात्यलक्षणा च । *तंतमेवैतीत्यत्र यत्र क्वचन जन्मनि सर्वसाधारणतज्जातियोगमात्रव्युदासायोक्तम्—मरणानन्तरमिति । नह्यादिभरतमृगत्वे जन्मान्तरव्यवधानम् । *सदा तद्भावभावितः इत्यनेनान्तिमस्मृतिहेतुर्विवक्षित इत्याह—अन्तिमप्रत्ययश्चेति । तद्भावभावितः—तद्भावनावासित इत्यर्थः, तस्मिन् भावो भावितो येनेति वा तद्भावभावितः ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिः मामेवैष्यस्यसंशयः ॥ ७

**भा॥ यस्मात् पूर्वकालाभ्यस्तविषय एवान्तिमप्रत्ययो जायते, तस्मात्सर्वेषु कालेष्वाप्रयाणादहरहर्मामनुस्मर। अहरहरनुस्मृतिकरं युद्धादिकं वर्णाश्रमानुबन्धि श्रुतिस्मृतिचोदितं नित्यनैमित्तिकं च कर्म कुरु। एवमुपायेन मय्यर्पितमनोबुद्धिरन्तकाले च मामेव स्मरन् यथाभिलषितप्रकारं मां प्राप्स्यसि ; नात्र संशयः ॥ ७॥**

**ता ॥** एवमन्तिमप्रत्ययाधीने फले अन्तिमप्रत्यये चानवरतभावनाधीने भवताऽपि तथाविधभावना तदनुग्राहकं कर्म च कर्तव्यमित्युच्यते—*तस्मादिति श्लोकेन । *सर्वेषु कालेष्वित्यनेन *स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते (छा. ८. १५. १) *प्रायणान्तमोङ्कारमभिध्यायीत (प्र. ५. १) इत्यादिश्रुतिश्चानुस्मृतेत्यभिप्रायेण **आप्रयाणादि**त्युक्तम् । सूत्रं च *आप्रयाणात्तत्रापि हि दृष्टम् (४. १. १२) इति । प्रतिमासं प्रतिपक्षमनुस्मरणेऽप्याप्रयाणादिति वक्तुं शक्यमिति तद्व्युदासाभिप्रायेण बहुवचनमित्याह—**अहरहरि**ति । *तं पूर्वापररात्रेषु युञ्जानः इत्यादिविहितैकाग्रतानुरूपसात्त्विककालेष्वित्युक्तं भवति । तथा च **सूत्रम्**—*यत्रैकाग्रता तत्राविशेषात् (४. १. ११) इति । *युध्यच इति विहितस्य युद्धस्य अत्र *फलवत्सन्निधावफलं तदङ्गमित्यादिन्यायादनुस्मृत्यङ्गत्वं सिद्धम् ; तच्च युद्धमत्र प्रस्तुतत्वादुपलक्षणतयोक्तम् ; ततश्च प्रमाणसिद्धं यथास्वं वर्णाश्रमकर्मावश्यं कर्तव्यमित्युक्तं भवतीत्यभिप्रायेणाह—**अहरहरनुस्मृतिकरं युद्धादिक**मिति । **वर्णाश्रमानुबन्धी**त्युपलक्ष्यसंग्राहकाकारः । **चोदित**मित्यनेन शमादिविधेश्चोदितव्यतिरिक्तविषयत्वं सूचितम् । नित्यनैमित्तिकशब्देन फलाभिसन्धिपूर्वकर्मव्युदासः । *मय्यर्पितमनोबुद्धिरित्यस्य उक्तार्थानुवादरूपत्वं दर्शयति—**एवमि**ति । **उपायेन**—कर्मादिरूपेणेत्यर्थः । अनुस्मरणमेवात्र मनसोऽर्पणम् ; बुद्धेरर्पणं तु फलप्रदत्वाध्यवसायः । प्रकरणसिद्धावान्तरव्यापारकथनम्—**अन्तकाले च मामेव स्मरन्नि**ति । यद्वा अत्रोपायेनेति कर्मानुगृहीतानुस्मृतिरेवोच्यते । तत्फलं *मय्यर्पितमनोबुद्धिरिति । तस्यैवार्थः—**अन्तकाले च मामेव स्मरन्नि**ति । पूर्वोत्तरानुवृत्ताधिकारित्रयसाधारण्यायाह—**यथाभिलषितप्रकारं मामि**ति । *निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः । ससंशयान् हेतुबलान्नाध्यावसति माधवः ॥ (भा. मो. ३६९. ७१) इत्यादिवत् *असंशय इत्यस्यार्जुनविशेषणत्वेऽपि फलितमाह—**नात्र संशय** इति । *अ मा नो नाः प्रतिषेधे (काव्यानु) इति वचनादकारो वाऽत्र पृथगनुसन्धेयः । *एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्ति (छा. ३. १४. ४) इत्यादिकमत्रानुसन्धेयम् ॥७॥

**भा॥ एवं सामान्येन स्वप्राप्त्यावाप्तिरन्तिमप्रत्ययाधीनेत्युक्त्वा तदर्थं त्रयाणामुपासनप्रकारभेदं वक्तुमुपक्रमते ; तत्रैश्वर्यार्थिनामुपासनप्रकारं यथोपासनमन्तिमप्रत्ययप्रकारं चाह—**

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥** ८

**भा॥ अहरहरभ्यासयोगाभ्यां युक्ततया नान्यगामिना चेतसा अन्तकाले परमं पुरुषं दिव्यं मां वक्ष्यमाणप्रकारं चिन्तयन् मामेव याति—आदिभरतमृगत्वप्राप्तिवदैश्वर्यविशिष्टतया मत्समानाकारो भवति। अभ्यासः—नित्यनैमित्तिकाविरुद्धेषु सर्वेषु कालेषु मनसोपास्यसंशीलनम्। योगस्त्वहरहर्योगकालेऽनुष्ठीयमानं यथोक्तलक्षणमुपासनम्॥ ८॥**

**ता ॥** अन्तिमप्रत्ययप्रसङ्गात्तद्धेतुतया *अनुस्मरेत्युपासनं प्रस्तुतम् ; तत्प्रकारभेदोऽनन्तरप्रघट्टकार्थ इत्यभिप्रायेणाह—**एवमि**ति । गतिभेदोऽपि वक्ष्यमाणोऽनेनोपलक्षणीयः । *अभ्यासेत्यादिश्लोकत्रयार्थमाह—**तत्रे**ति । योग-

शब्दस्य संबन्धमात्रपरत्वे नैरर्थक्यादत्र ध्यानपरत्वं वक्तुं युक्तम्, तत्पुरुषाच्च द्वन्द्वस्योभयपदार्थप्रधानत्वात्परिग्राह्यत्वमस्ति; तदाह—**अभ्यासयोगाभ्या**मिति । *नान्यगामिनेत्येतन्नैकादिशब्दवत्, अनन्यगामिनेत्यर्थः । अन्यत्र विषयान्तरे गन्तुं शीलं नास्येति नान्यगामि । अभ्यासयोगशब्देन प्राचीनचिन्तनस्योक्तत्वात्, *अनुचिन्तयन्नित्येतदन्तिमस्मृतिपरमिति प्रदर्शनाय **अन्तकाल** इत्युक्तम् । चिन्तनस्य ध्यानस्य च पुरुष एवात्र कर्म; स च परमशब्देन विशेषितत्वादीश्वर एवेत्यभिप्रायेण **मा**मिति पदद्वयम् । *दिव्यमित्यस्य सूर्यमण्डले स्थितमिति शङ्करोक्तं निर्मूलम्, *आदित्यवर्णं तमसः परस्तादिति वक्ष्यमाणविरुद्धं चेत्यभिप्रायेणाह—**वक्ष्यमाणप्रकार**मिति । अनन्तरश्लोकद्वयेनेति शेषः । कथमैश्वर्यार्थिनोऽनपेक्षितपरमपुरुषप्राप्तिः फलतयोच्यत इत्यत्राह—**आदिभरते**ति । अन्तकाले स्मर्यमाणभोगप्रदानोपयुक्ताकारविशिष्टपरमपुरुषसमानैश्वर्यप्राप्तिरिह परमपुरुषप्राप्तिः । तत्साम्यापत्तिरेव हि तत्प्राप्तितया *यंयमिति श्लोकेनोदाहृतेति भावः । *आरम्बणसंशलीनं पुनःपुनरभ्यासः इति **वाक्यकार**वचनानुरोधेनाभ्यासशब्दार्थमाह—**अभ्यास** इति । पुनःपुनरिति वचनान्मध्येऽवश्यंभाविभिः कैश्चिद्व्यवधानं सूचितमित्यभिप्रायेणोक्तम्—**नित्यनैमित्तिकाविरुद्धे**ष्विति । **सर्वेषु कालेष्विति**—न केवलं योगकाले, तदातनस्य शीलनस्य योगशब्देनोपात्तत्वादिति भावः । आरम्बणम्—आलम्बनम्; तच्चात्रोपास्यशब्देन व्याख्यातम् । योगशब्देनात्राङ्गिस्वरूपमुच्यत इत्यभिप्रायेणाह—**योगस्त्वि**ति । **यथोक्ते**ति । अत्यर्थप्रियविशदतमप्रत्यक्षतापन्नेत्यर्थः ॥ ८ ॥

**कविं पुराणमनुशासितारम् अणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपम् आदित्यवर्णं तमसः परस्तात् ॥** ९
**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥** १०

भा ॥ **कविं—सर्वज्ञम्, पुराणम्—पुरातनम्, अनुशासितारम्—विश्वस्य प्रशासितारम्, अणोरणीयांसम्—जीवादपि सूक्ष्मतरम्, सर्वस्य धातारम्—सर्वस्य स्रष्टारम्, अचिन्त्यरूपम्—सकलेतरविसजातीयस्वरूपम्, आदित्यवर्णं तमसः परस्तात्—अप्राकृतस्वासाधारणदिव्यरूपम्, तमेवंभूतमहरहरभ्यस्यमानभक्तियुक्तयोगबलेनारूढसंस्कारतया अचलेन मनसा प्रयाणकाले भ्रुवोर्मध्ये प्राणमावेश्य—संस्थाप्य; तत्र भ्रूमध्ये दिव्यं पुरुषं योऽनुस्मरेत्; स तमेवोपैति—तद्भावं याति, तत्समानैश्वर्यो भवतीत्यर्थः ॥ ९ ॥ १० ॥**

**ता** ॥ क्रान्तदर्शी हि कविरित्युच्यते; अत्र तु कविशब्दः ईश्वरविषयत्वात् सर्वदर्शित्वपर इत्यभिप्रायेणाह—**सर्वज्ञ**मिति । पुराणशब्देनानादित्वं विवक्षितमित्यभिप्रायेणोक्तं—**पुरातन**मिति । अनुपूर्वश्शासिर्विविच्य ज्ञापनार्थ इत्येतावन्मात्रपरत्वव्युदासाय **विश्वस्य प्रशासितार**मित्युक्तम् । ईश्वरस्य सतोऽनुशासनमाज्ञापनमेवेति भावः । अनुशा[स्यकर्माकाङ्क्षायां]सनं कस्येत्याकाङ्क्षायां *सर्वस्य धातारमित्यत्र सर्वस्येति पदमाकर्षणीयम्; विशेषनिर्देशाभावाद्वा सर्वविषयत्वमित्यभिप्रायेण—**विश्वस्ये**त्युक्तम् । *एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः (बृ. ५. ८. ९) इत्यादिकमत्र भाव्यम् । *अन्तः प्रविष्टश्शास्ता जनानाम् (य. आ. ३. ३) इत्यादिषु प्रशासनसहपठितान्तःप्रवेशौपयिकसूक्ष्मतरत्वमत्र *अणोरणीयांसमित्युच्यत इत्यभिप्रायेणोक्तं—**सूक्ष्मतर**मिति । *धाता पुरस्ताद्यमुदाजहार (पु.) *सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् (ना.) इत्यादिषु धातृशब्दस्य स्रष्टरि प्रयोगाद्धातूनां चानेकार्थगर्भत्वात्

**सर्वस्य स्रष्टार**मित्युक्तम्। *विष्णुना विधृते भूमी (यजु. आ. १. २७) *सर्वाधारं धाम विष्णुसंज्ञम् (मै. उ.) इत्युक्तं सर्वाधारत्वं सर्वस्रष्टुरेवेति फलितोक्तिर्वा। उक्तप्रकारस्येश्वरस्वरूपस्य सामान्यतो दृष्टैस्तर्कैरसंभावनीयतां केचिदभिमन्येरन्निति तन्निरासपरम् *अचिन्त्यरूपमितिपदमित्यभिप्रायेणाह—**सकलेतरविसजातीयस्वरूपमि**ति। वर्णयोगस्य स्वरूपेणाघटनात् प्रमाणसिद्धविलक्षणविग्रहद्वारा तद्योगमाह—**अप्राकृते**ति। *येन सूर्यस्तपति तेजसेद्धः (काठके. ३. ९. ७) *यस्यादित्यो भामुपयुज्य भाति (भा. आनु. १५८. २२-?) *तस्य भासा सर्वमिदं विभाति (मु. २. २. ११) *तं देवा ज्योतिषां ज्योतिः (बृ. ६. ४. १६) इत्यादिषु निरतिशयदीप्तियोगस्सिद्धः। *आदित्यवर्णं तमसः परस्तात् (ना) इति श्रुतिखण्डस्यात्र निबन्धः, *तम आसीत्तमसा गूढमग्रे प्रकेतम् (ऋ. ७. ७. १०. ११. ७; अष्ट. २. ७. ९) *तमसस्तन्महिनाजायतैकं (अष्ट. २. ४. ९) *यदा तमः (श्वे. ४. १८) इत्यादिश्रुत्यन्तरोपलक्षणार्थः। तेन *तमसः इति सर्वकारणभूततमोद्रव्यविवक्षा। *तमसः परस्तादित्यनेन फलितमप्राकृतत्वम्; तत एवचाकर्माधीनत्वं, नित्यत्वं, निरवद्यत्वमित्यादि सूचितम्। एतच्छ्लोकच्छायश्च मानवश्श्लोकः—*प्रशासितारं सर्वेषामणीयांसमणीयसाम्। रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्॥ (मनु. १२. १२२) इति। अनुकूलानां हितरमणीयत्वाद्याकारेण हिरण्यवर्णत्वरुक्माभत्वादिव्यपदेशः। प्रतिकूलदुष्प्रेक्षत्वप्रकाशातिरेकादिविवक्षया आदित्यवर्णत्वाद्युक्तिः। *दिवि सूर्यसहस्रस्य (११. १२) इत्यादि च वक्ष्यति। एतेनादित्यशब्दस्य नित्यचैतन्यप्रकाशपरत्वं, तमश्शब्दस्य चाज्ञानविषयत्वं परोक्तं निरस्तम्। श्लोकद्वयस्यान्वयं दर्शयति—**तमेवंभूतमि**त्यादिना। *भक्त्या युक्तो योगबलेनेति पृथङ्निर्देशात्परोक्तप्राणजयबलादिपृथगर्थताप्रतीतिस्स्यादिति तदपाकरणाय विशिष्टैकार्थतां दर्शयितुं **भक्तियुक्तयोगबलेने**त्युक्तम्। मनसोऽचलत्वे हेतुरिदम्; तस्य चावान्तरव्यापारः योग्यपर्यायियुक्तशब्देन विवक्षित इत्याह—**आरूढसंस्कारतये**ति। *आवेश्येत्यनेन योगप्रकरणेषूक्तं निश्चलावस्थापनं विवक्षितमित्याह—**संस्थाप्ये**ति। अत्र पुरुषध्यानस्यापि भ्रूमध्यमेव देशः, देशान्तरानभिधानाद्योगप्रकरणान्तरेषूपदेशाच्च तत्सिद्धेरिति विभाव्योक्तं—**तत्र भ्रूमध्य** इति। तमेवंभूतं दिव्यं पुरुषम् इत्यन्वयः। *तं तमेवैति (६) इत्यवधारणदर्शनात् *स तं परं पुरुषमित्यत्रापि तमितीतरव्यवच्छेदपरमित्यभिप्रायेणाह—**स तमेवोपैतीति**ति। *यः प्रयाति स मद्भावं याति (५) इति प्रक्रान्तप्रकार एवात्र विवक्षित इति दर्शयति—**तद्भावं याती**ति। भावप्रधानोऽत्र निर्देश इति भावः। तत्र तादात्म्यादिभ्रमं व्युदस्यति—**तत्समानैश्वर्यो भवतीत्यर्थ** इति। परमसाम्यापत्तिव्यवच्छेदाय समानैश्वर्य इत्युक्तम्। एतेन *कविमित्यादिभिस्सर्वज्ञत्वादयो गुणाः ऐश्वर्यप्रदत्वार्थमनुसन्धेयतयोक्ताः, नतु प्राप्यत्वार्थमिति फलितम्। एवमन्तिमकालस्मर्तव्यतया निर्दिष्ट एवाकारः प्रागपि ध्येयतयोक्त इति मन्तव्यम्। एवमुत्तरत्रापि॥ ९॥ १०॥

भा॥ **अथ कैवल्यार्थिनां स्मरणप्रकारमाह—**

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये॥** ११

भा॥ **यदक्षरम्—अस्थूलत्वादिगुणकं वेदविदो वदन्ति, वीतरागाश्च यतयो यदक्षरं विशन्ति, यदक्षरं प्राप्तुमिच्छन्तो ब्रह्मचर्यं चरन्ति, तत्पदं संग्रहेण ते प्रवक्ष्ये। पद्यते गम्यते चेतसेति पदम्; तत् निखिलवेदान्तवेद्यं मत्स्वरूपमक्षरं यथोपास्यम्, तथा संक्षेपेण प्रवक्ष्यामीत्यर्थः॥ ११॥**

**तदनुगुणमनोवृत्तिद्वयं मन्तव्यम्, तत्प्रकरणात्; तपोदाने च तथा। एवमाद्यास्सर्वेषां भूतानां भावाः-प्रवृत्ति-निवृत्तिहेतवो मनोवृत्तयो मत्त एव—मत्सङ्कल्पायत्ता भवन्ति ॥ ४ ॥ ५ ॥**

**ता ॥** *भक्त्युत्पत्तिविवृद्धयर्थेत्यत्र विवक्षितं विवृण्वन्नुक्तेन तत्फलितेन च वक्ष्यमाणप्रकरणस्य च सङ्गति-माह—**एव**मिति । बुद्धिज्ञानशब्दयोः पौनरुक्त्यपरिहाराय *बुद्धिमत्त्वाज्जानातीति प्रयोगानुसारेण शक्तिलक्षणया बुध्यते-ऽनयेति व्युत्पत्त्या वा हेतुकार्यपरतया व्याख्याति—**बुद्धिर्मनसो निरूपणसामर्थ्य**मिति । असंमोहासत्त्या तद्धेतुभूतं ज्ञानमिह विवक्षितमित्यभिप्रायेणाह—**ज्ञानं चिदचिद्वस्तुविशेषविषयो निश्चय** इति । बुद्धिज्ञानशब्दयोरध्यवसाय-मोक्षधीविषयत्वेन व्याख्यानं शब्दद्वयसङ्कोचादिप्रसङ्गादनादृतम् । विजातीये सजातीयताबुद्धिस्संमोहः; तदुदाहरति—**पूर्वे**ति । **पूर्वगृहीतात्**—आपणादिनिष्ठतयाऽनुभूतादित्यर्थः । इदं च स्मर्यमाणाध्यासोदाहरणम् । न कोपाख्यविकारा-भावमात्रेण सुषुप्त्यादिषु क्षमाशब्दः, अपितु कोपहेतुषु सत्सु तदभावे तत्प्रयोग इत्यभिप्रायेणाह—**मनोविकारे**ति । क्रोधहेतावाक्रोशताडनादौ सत्यपीत्यर्थः । ननु कथं हेतौ सति तत्कार्यनिवृत्तिः; तथात्वे तस्य हेतुत्वमेव हीयेत । उच्यते—न ह्यवश्यं हेतौ सति कार्येण भवितव्यमिति नियमः; अपितु प्रतिबन्धकरहितायां सामग्र्यां सत्याम्; अन्यथा प्रत्येकं हेतूनां प्रतिबद्धानां च तत्तत्कार्यजनकत्वे कार्यस्य सदातनत्वसार्वत्रिकत्वप्रसङ्गात्; नित्यविभोश्च कारणस्य सद्भा-वात्; तर्हि कः क्षमायां विस्मय इति चेद्यथा मणिमन्त्रादिभिः स्फोटसामग्री स्तभ्यते, तथा प्रबलविवेकाख्यप्रतिबन्ध-केन कोपसामग्र्या दुर्निवारायाः स्तम्भनादिति भावः । वस्तुसत्यत्वस्य यथार्थदर्शनमप्यपेक्षितम्, तथाऽपि यथादृष्ट-वचनमात्रे वक्तुर्नापराधः, भ्रमस्य दैवागतत्वादित्यभिप्रायेण **यथादृष्टविषय**मित्येतावदुक्तम् । परमार्थत्वेऽपि परानर्थहेतोः *सत्यं भूतहितं प्रोक्तम् (व्या. स्मृ) इत्यादिभिस्सत्यत्वप्रतिक्षेपात् **भूतहितरूप**मिति विशेषितम् । भावशब्दस्य मनोवृत्तौ प्रसिद्धिप्रकर्षबलमग्रचप्रायनयं चाभिप्रेत्य सत्यशब्दस्यात्र लाक्षणिकत्वमाह—**तदनुगुणे**ति । शमदमशब्दयोरेकैकस्योभय-नियमनाभिधानसामर्थ्येऽपि पौनरुक्त्यपरिहाराय विषयभेदे वक्तव्ये नियमनक्रमेण दमशमयोर्बाह्यान्तरकरणविषय-त्वोक्तिः । शास्त्रीयेभ्यो नियमनस्य निषिद्धत्वात् **अनर्थविषयेभ्य** इत्युक्तम् । **तथे**ति अनर्थविषयेभ्य एव । अनु-कूलत्वमात्रं प्रतिकूलत्वमात्रमेव च सुखदुःखयोर्लक्षणम्; तथाऽपि मनोवृत्तिरूपत्वसिद्ध्यर्थमनुभवशब्दः । सुखदुःख-भयाभयमध्यपठितत्वात् *भवोऽभावः इत्यत्रापि परस्परविरुद्धार्थविषयत्वं संभवदपरित्याज्यम्; ततश्च भवभावशब्दयोः प्रत्ययभेदमात्रमेव, न त्वर्थभेदः; तत्र चाभाव इत्येव पदच्छेदः; तयोरपि मनोवृत्तिरूपत्वं वक्तव्यम्; प्रस्तुतयोरेव च सुखदुःखयोस्तद्धेतुत्वमुचितम्; अत एव *भवो भव्यता, भावोऽभिप्रायः इत्यादि परव्याख्यानं मन्दम्; तदेत-दखिलमभिप्रेत्याह—**अनुकूले**ति । **भवनमिति** उद्धर्षोऽत्र विवक्षितः, अवसादप्रतियोगित्वात् । अनवसादानुद्धर्षौ हि सहोक्तौ **वाक्यकारेण**—*तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः (बोधा) इति । सुखदुःखशब्दा-भ्यां पौनरुक्त्यव्युदासाय भयाभयशब्दयोस्तद्विशेषविषयतां दर्शयति—**आगामिन** इति । आगामिप्रत्यवायोत्प्रेक्षा भय-मिति लक्षणेऽपि तस्यैव ज्ञानविशेषस्य प्रतिकूलरूपत्वाद्दुःखत्वम्; नह्यन्यो दुःखाख्यो गुणोऽस्मद्दर्शने । **परदुःखाहेतुत्व**-मित्यत्र दुःखशब्देनाहितं विवक्षितम्, चिकित्सादौ हितरूपदुःखकरणस्य हिंसात्वाभावात्, प्रपञ्चितं चैतत्प्रागेव । अभयाहिंसयोरभावरूपयोरपि भावान्तरत्ववेषेण मनोवृत्तिरूपत्वं भाव्यम् । समत्वप्रकारेषु बहुषु सत्स्वपि हिंसानिषेध-प्रसङ्गाद्धिंसाविषयभूतशत्रुस्मृतिर्जाता; ततश्च द्वेषाद्यभावेन शत्रुमित्रादिसाम्यं प्रदेशान्तरप्रपञ्चितमिह विवक्षितमित्यभिप्राये-णाह—**आत्मनी**ति । *सममतिरात्मसुहृद्विपक्षपक्षे (वि. ३. ७. २०) इति भगवत्पराशरवचनमिह तत्तत्पदैः सारितम् ।

निर्देशः कालान्तरवर्तिनित्यसृष्टेरपि संग्राहकः, नतु व्युदासकः, ईश्वरस्य तत्राप्यापरोक्ष्यादित्यभिप्रायेणाह—**प्रतिक्षणमाप्रलयादि**ति । **उत्पादकाः पालकाश्चे**ति महर्षीणां मनूनां च यथाक्रमं निर्देशः । उत्पादिकाः इत्यादिस्त्रीलिङ्गपाठे तु तत्तत्प्रजाभिर्यथासंभवमन्वयः । **मम यो भावस्स एव येषां भाव** इति । भावसामानाधिकरण्यफलितोक्तिरियम्, मध्यमपदलोपी वा समासः । राज्ञो भाव एव किङ्करस्य भाव इतिवदभिप्रायसाम्यापेक्षयाऽयं व्यपदेश इति दर्शयति—**मन्मते स्थिता** इति । स्वाच्छन्द्यादभिप्रायसाम्यं, भृत्यादिवद्बुद्धिपूर्वानुवर्तनमात्रं च व्युदस्यति—**मत्सङ्कल्पानुवर्तिन** इति ॥ ६ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविक[म्पे]म्प्येन योगेन युज्यते नात्र संशयः ॥** ७

भा ॥ विभूतिः—ऐश्वर्यम्, एतां **सर्वस्य मदायत्तोत्पत्तिस्थितिप्रवृत्ति[ता]रूपां विभूतिं, मम हेयप्रत्यनीककल्याणगुणगणरूपं योगं च यस्तत्त्वतो वेत्ति, सोऽविक[म्पे]म्प्येन—अप्रकम्प्येन भक्तियोगेन युज्यते । नात्र संशयः ; मद्विभूतिविषयं कल्याणगुणविषयं च ज्ञानं भक्तियोगवर्धनमिति स्वयमेव द्रक्ष्यतीत्यभिप्रायः ॥ ७ ॥**

**ता** ॥ *एतां विभूतिं योगं चेति पूर्वोक्तार्थस्य बुद्धिस्थक्रमेणानुवादः । *स्वकल्याणेत्यादिसंग्रहश्लोके (१४) त्वयमेवार्थो यथाक्रममुक्तः ; तदनुसारेण पदार्थवाक्यार्थावाह—**विभूतिरैश्वर्यमि**त्यादिना । **सर्वस्य मदायत्तोत्पत्तिस्थितिप्रवृत्तितारूपां विभूतिमि**ति—तन्निरूप्यत्वात्तत्सामानाधिकरण्यम् । उत्पत्तिस्थित्योरपि सङ्कल्पाधीनत्वान्नियमनविषयत्वम् । प्रवृत्तिरिह स्वकार्यार्थव्यापारः, स्पन्दादेरसार्वत्रिकत्वात् । *विभूतिर्भूतिरैश्वर्यम् (नाम. १. स्व.) इति नैघण्टुकाः । विभुशब्दश्च नियन्तरि प्रयुक्तचरः ; अतो विभवनमिह नियमनमेव वक्ति, तस्य भावार्थतास्वारस्यात्, अनपवादाच्च । वस्त्वन्तरसामानाधिकण्यवद्विभूतिशब्देषु तु नियन्तव्यविषयता वक्ष्यते । युज्यत इति व्युत्पत्त्या उभयलिङ्गत्वमिह योग उक्तः । ईश्वरेऽनीश्वरस्वभावभूतपारतन्त्र्यदुःखाज्ञानाद्यारोपमनीश्वरे चेश्वराधीनस्वातन्त्र्यादेस्स्वतस्सिद्धत्वाद्यारोपं च परित्यज्येति *तत्त्वतः इत्यस्य भावः । *अविक[म्पे]म्प्येनेत्यत्र स्वतः कम्पराहित्यमात्रव्युदासेन बाधकशतैरप्यविचाल्यत्वं दर्शयितुम् **अप्रक[म्पे]म्प्येने**त्युक्तम् । पूर्वापरपरामर्शादुपासकान्वितयोगशब्दस्य योगविशेषनिष्ठतामाह—**भक्तियोगेने**ति । शास्त्रसिद्धस्याप्यर्थस्य साक्षात्कारे सत्येव ह्यत्यन्तवैशद्यमित्यभिप्रायेण *नात्र संशयः इत्यस्याशयं विशदयति—**मद्विभूती**ति ॥ ७ ॥

भा ॥ **विभूतिज्ञानविपाकरूपां भक्तिवृद्धिं दर्शयति—**

**अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥** ८

भा ॥ **अहम्, सर्वस्य—विचित्रचिदचित्प्रपञ्चस्य, प्रभवः—उत्पत्तिकारणम्, सर्वं मत्त एव प्रवर्तत इतीदं मम स्वाभाविकं निरंकुशैश्वर्यं, सौशील्यसौन्दर्यवात्सल्यादिकल्याणगुणगणयोगं च मत्वा बुधाः—ज्ञानिनः भावसमन्विताः माम्—सर्वकल्याणगुणान्वितं भजन्ते । भावः—मनोवृत्तिविशेषः । मयि स्पृहयालवो मां भजन्त इत्यर्थः ॥ ८ ॥**

**ता** ॥ उक्तार्थस्यानन्तरमुदाहरणप्रदर्शनमुखेन प्रपञ्चनं क्रियत इत्यभिप्रायेणाह—**विभूतिज्ञाने**ति । तदेव हि ज्ञानं भक्तिरूपेण परिणमत इत्यभिप्रायेण विभूतिज्ञानविपाकरूपत्वोक्तिः । असंकोचात्कार्यभूतब्रह्मादिसमस्तगोचरः सर्वशब्द इत्यभिप्रायेण—**विचित्रे**त्यादिकमुक्तम् । प्रभवशब्दस्यात्रोत्पत्तिक्रियादिमात्रपरत्वव्युदासायाह—**उत्पत्तिकारण**मिति । अत्र वक्ष्यमाणप्रकारेण सृष्ट्युपयुक्तकल्याणगुणयोगोऽपि गर्भितः । ब्रह्मादेरपि स्वप्रवृत्तिसामर्थ्यं मदधीनमिति *मत्तस्सर्वमित्यनेन विवक्षितमित्यभिप्रायेणाह—**सर्वं मत्त एवे**ति । पूर्वोक्तविभूत्याद्यनुवादरूपतां दर्शयति—**इतीद**मित्यादिना । स्वाभाविकनिरङ्कुशशब्दाभ्याम् अर्वाचीनेश्वरव्यवच्छेदाय श्रुतिसिद्धाहेतुसाध्यत्वानवधिकत्वोक्तिः । वक्तृरूपावतारसौलभ्यपरास्मच्छब्दाभिप्रेतं *मां भजन्ते इत्युच्यमानभजनस्यात्यन्तोपयुक्तं योगशब्दार्थमाह—**सौशील्ये**त्यादिना । **सौशील्यवात्सल्ये**ति दिव्यात्मगुणवर्गस्य प्रदर्शनार्थम्, **सौन्दर्ये**त्याकर्षकतमदिव्यमङ्गलविग्रहगुणवर्गस्य । बुधशब्देनात्र प्रकृतज्ञानविशेषवन्तः प्रागुक्ता महात्मानो विवक्षिता इत्यभिप्रायेण—**ज्ञानिन** इत्युक्तम् । मत्वा भावसमन्विता इत्यन्वयः ; एवंविधज्ञानस्य भक्तिसाधनत्वे तात्पर्यात् । *मामित्यनेनात्र भजनदशानुसन्धेयगुणगणविशिष्टस्वरूपं विवक्षितमित्यभिप्रायेणोक्तं—**सर्वकल्याणगुणान्वित**मिति । अनेकार्थस्य भावशब्दस्य प्रकृतानुगुणमर्थमाह—**भावो मनोवृत्तिविशेष** इति । तमेव विशेषं विशदयति—**मयि स्पृहयालव** इति ॥ ८ ॥

**भा ॥ कथम् ?**

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥** ९

**भा ॥ मच्चित्ताः—मयि निविष्टमनसः, मद्गतप्राणाः—मद्गतजीविताः, मया विनाऽऽत्मधारणमलभमाना इत्यर्थः ; स्वैःस्वैरनुभूतान् मदीयान् गुणान् परस्परं बोधयन्तो मदीयानि दिव्यानि रमणीयानि कर्माणि च कथयन्तः तुष्यन्ति च रमन्ति च—वक्तारस्तद्वचनेनानन्यप्रयोजनेन तुष्यन्ति ; श्रोतारश्च तच्छ्रवणेनानवधिकातिशयप्रियेण रमन्ते ॥ ९ ॥**

**ता** ॥ भावसमन्वितत्वप्रपञ्चनमेवानन्तरं क्रियत इत्यभिप्रायेण तदाकाङ्क्षां दर्शयति—**कथ**मिति । भक्तिपरिपाकक्रमविशेषसिद्धाकारप्रदर्शनं *मच्चित्ताः इत्यादिभिश्चतुर्भिर्विशेषणैः क्रियत इत्यभिप्रायेण—**मयि निविष्टमनस** इत्यादिकमुक्तम् । *मद्गतप्राणाः इत्यस्य तात्पर्यप्रदर्शनाय पर्यायं तावदाह—**मद्गतजीविता** इति । भक्तगतस्य जीवितस्य कथं तद्गतत्वमित्यत्राह—**मया विने**ति । बोधनकथनशब्दयोरेकविषयत्वे पौनरुक्त्याद्विषयभेदो वाच्यः ; तत्र च बोधयन्तः इत्यनेन [अ]ज्ञातार्थज्ञापनं *कथयन्तः इत्यनेन च इतिवृत्तवर्णनं च स्वरसतः प्रतीयत इत्यभिप्रायेण—**स्वैस्वै**रित्यादिकमुक्तम् । **दिव्यानी**त्यतिमानुषत्वप्रयुक्ताद्भुतत्वं विवक्षितम् । तस्यैव भोग्यत्वं **रमणीयानी**त्यनेनोक्तम् । *तुष्यन्ति च रमन्तिचेत्यनयोर्द्वयोरपि कथकविषयत्वेऽनतिभिन्नार्थतया मन्दप्रयोजनत्वात्कस्यचित्कथकविषयत्वमन्यस्य कथनाक्षिप्तश्रोतृविषयत्वं च युक्तम्; तत्र च स्वप्रयोजनान्तरसाधकपरप्रीत्यर्थं हि लोके कथाप्रयोगो दृष्टः । तोषशब्दश्चाधिकस्पृहानिवृत्त्यर्थः ; ततोऽत्र *तुष्यन्तीत्यनन्यप्रयोजनकथकविषयम्, पारिशेष्यात् *रमन्तीत्यस्य श्रवणमूलत्वं लब्धम् । *तुष्यन्ति च रमन्ति चेत्यनयोः *मच्चित्ताः इत्याद्युक्तैककर्तृत्वं कथनश्रवणयोरेकस्मिन्नेव कालभेदेन संभवान्न परित्याज्यम् । तदेतदखिलमभिप्रेत्याह—**वक्तार** इत्यादि **रमन्त** इत्यन्तम् ॥ ९ ॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥** १०

भा ॥ **तेषां सततयुक्तानाम्—मयि सततयोगमाशंसमानानां मां भजमानानामहं तमेव बुद्धियोगं विपाकदशापन्नं प्रीतिपूर्वकं ददामि ; येन ते मामुपयान्ति** ॥ १० ॥

**ता** ॥ भगवद्गुणविभूतिज्ञानस्य भक्त्युत्पत्तिविवृद्धिहेतुत्वमुक्तम् ; तथाविधविवृद्धभक्तेर्भगवत्प्राप्तिपूर्वभाविविशदतमसाक्षात्काररूपावस्थाविशेषहेतुत्वं भगवत्प्रसादावान्तरव्यापारकमुच्यते—**तेषा**मिति । **मयि सततयोगमाशंसमानाना**मिति—नहि सततं समाधानरूपो योगश्शक्यः; सततशब्देन प्रतिदिनविवक्षा च न स्वारसिकी, न च प्राप्तिरूपसततयोग इदानीं वृत्तः; अत आशंसार्थत्वमेव युक्तमिति भावः । **तमेवे**ति । आशंसाविषयान्तर्गतमेवेत्यर्थः । सततयोगाशंसयैव भजने प्रीतिरूपत्वस्य फलितत्वात् *प्रीतिपूर्वकमित्यस्य भजनान्वये प्रयोजनं मन्दम्; *ददामीत्यनेनान्वये तु भजनावान्तरव्यापारकथनरूपेण परमोदारत्वादिभगवद्गुणगणप्रकाशनेन च महत्प्रयोजनमित्यभिप्रायेण **प्रीतिपूर्वकं ददामी**त्यन्वय उक्तः । *मामुपयान्तीत्यत्रापरामृष्टपदपदार्थभूढैरैक्यापत्तिर्व्याख्याता ॥ १० ॥

भा ॥ **किञ्च,**

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥** ११

भा ॥ **तेषामेवानुग्रहार्थमहम्, आत्मभावस्थः—तेषां मनोवृत्तौ विषयतयाऽवस्थितो मदीयान् कल्याणगुणगणांश्चाविष्कुर्वन् मद्विषयज्ञानाख्येन भास्वता दीपेन ज्ञानविरोधि प्राचीनकर्मरूपाज्ञानजं मद्व्यतिरिक्तपूर्वाभ्यस्तविषयप्रावण्यरूपं तमो नाशयामि** ॥ ११ ॥

**ता** ॥ उक्तबुद्धियोगोत्पत्तिप्रतिबन्धनिरसनं *तेषामेवेति श्लोकेनोच्यत इत्यभिप्रायेणाह—**किंचे**ति । अनुकम्पाशब्देनात्र अनिष्टनिवृत्तिपूर्वकेष्टप्राप्तिहेतुः *मदनुग्रहाय (११. १) इति वक्ष्यमाणप्रसादविशेषो विवक्षितः, सहजकारुण्यमात्रपरत्वेऽर्थशब्दस्य व्यर्थत्वादित्यभिप्रायेणोक्तम्—**अनुग्रहार्थ**मिति । अत्र चाहंचब्देनानुग्रहौपयिकज्ञानशक्तिकरुणादिव्यमङ्गलविग्रहादिविशिष्टस्वरूपं विवक्षितम् । **मनोवृत्ता**विति—आत्मभावशब्दस्यात्रात्मत्वस्वस्वभावादिपरत्वेऽधिकप्रयोजनं नास्ति ; मनोवृत्तिविषयत्वं तु बुद्धियोगस्यात्यन्तोपयुक्तमिति भावः । व्याप्तस्येश्वरस्य कीदृशीयमपूर्वा स्थितिरित्यत्रोक्तं—**विषयतये**ति । दीपतया रूपितस्य ज्ञानस्य भास्वरत्वं परितः प्रकाशनम्; तच्च प्रकारविशेषप्रकाशनं भवितुमर्हति । तथाविधविशदानुभवादज्ञाननिवृत्तिः, शब्दादिप्राकृतगुणप्रावण्यनिवृत्तिश्चेत्यभिप्रायेणाह—**मदीयान्कल्याणगुणगणांश्चाविष्कुर्वन्नि**ति । हेतुकार्यभावेन व्यपदेशादज्ञानतमश्शब्दयोरत्रार्थान्तरं वाच्यम्; कर्मणि च ज्ञानविरोधित्वेनाज्ञानशब्दः; यथोक्तम्—*अविद्या कर्मसंज्ञान्या (वि. ६. ७. ६१) इति । कर्मजन्यं भगवत्साक्षात्काररूपप्रकाशप्रतिबन्धकं च तमोऽर्थस्वभावाद्विषयान्तरप्रावण्यमेव । निरतिशयभोग्यभगवज्ज्ञानस्य भोग्यान्तरप्रावण्यनिवर्तकत्वं युक्तं, *स्थितेऽरविन्दे (स्तो. २७) इत्यादिन्यायात्; तदेतदभिप्रेत्योक्तं—**ज्ञानविरोधी**त्यादि । तमश्शब्देन तमोवृत्तिलक्षणादिपक्षोऽप्यनेन निरस्तः । यद्यपि विषयप्रावण्यनिवृत्तिपूर्वकं भजनं, तथाऽपि संस्कारशेषादनुवृत्तं सूक्ष्मं प्रावण्यमिह भजनविनाश्यतयोक्तमिति नान्योन्याश्रयः ॥ ११ ॥

भा ॥ एवं सकलेतरविसजातीयं भगवदसाधारणं शृण्वतां निरतिशयानन्दजनकं कल्याणगुणगणयोगं तदैश्वर्यविततिं च श्रुत्वा तद्विस्तारं श्रोतुकामोऽर्जुन उवाच—

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।

भा ॥ परं ब्रह्म परं धाम परमं पवित्रमिति यं श्रुतयो वदन्ति, स हि भवान् । *यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति (भृ) *ब्रह्मविदाप्नोति परम् (आ) *स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति (मु. ३. २. ९) इति । तथा परं धाम; धामशब्दो ज्योतिर्वचनः, परं ज्योतिः—*अथ यदतः परो दिवो ज्योतिर्दीप्यते (छा. ३. १३. ७) *परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते (छा. ८. १२. २) *तं देवा ज्योतिषां ज्योतिः (६. ४. १६) इति । तथा च परमं पवित्रम्—परमं पावनम्; स्मर्तुरशेषकल्मषाश्लेषकरम्, विनाशकरं च । *यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते (छा. ४. १४. ३) *तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते (छा. ५. २४. ३) *नारयण परं ब्रह्म तत्त्वं नारयणः परः । नारयण परो ज्योतिरात्मा नारायणः परः (ना) इति हि श्रुतयो वदन्ति ॥ ११॥

ता ॥ *परं ब्रह्मेत्यादेः *अमृतमित्यन्तस्यार्जुनवाक्यस्य पूर्वोत्तरसंगतिं दर्शयति—**एवमिति** । *यो मामजम् (३) इत्याद्यनुसन्धानेनोक्तं—**सकलेतरेत्यादि** । *तुष्यन्ति च रमन्ति च (९) इत्यनेनोक्तमाह—**शृण्वतां निरतिशयानन्दजनकमिति** । *विस्तरेणात्मनो योगं (१८) *विस्तरस्य मे (१९) इति प्रष्टृप्रतिवक्तृभ्यां विस्तरशब्दप्रयोगेऽपि वक्ष्यमाणस्यार्थप्रपञ्चरूपत्वाच्छब्दप्रपञ्चोपलक्षितार्थप्रपञ्चेऽत्रत्यविस्तरशब्दस्य तात्पर्यमिति दर्शयितुं **तद्विस्तारं श्रोतुकाम** इत्युक्तम् । विस्तरं श्रोतुकामश्चार्जुनस्संग्रहोक्तस्यार्थस्य प्रतिपन्नतां तस्य सत्यत्वाध्यवसायेनानसूयुतां च दर्शयति—**परंब्रह्मेत्यादिभिः** । अत्र तावत् *भवानिति प्रथमान्तत्वात् *आहुरित्युत्तरत्र न संबन्धः, *परं ब्रह्मेत्यादीनां प्राथम्यादिनोद्देश्यत्वं, *भवानित्यस्य च विधेयत्वं प्रतीतम्; उद्देश्यस्य च पूर्वमेव सिद्धिरपेक्षिता; तदाह—**यं श्रुतयो वदन्ति, सहि भवानिति** । त्रिष्वपि क्रमाच्छ्रुतीरुदाहरति । तत्र *यतो वेत्युपास्यब्रह्मलक्षणवाक्यम्; तत्पुरोवादेनोपास्यं ब्रह्मैव प्राप्यमिति प्रदर्शनाय परशब्दविशेषणसिद्धये च *ब्रह्मविदिति वाक्यमुपात्तम् । उभयत्रातिस्फुटं वाक्यं *स यो हेति । *ब्रह्मैव भवतीत्येतच्छारीरकभाष्ये (१. १. ४) व्याख्यातम्—*प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौः इति । ब्रह्मात्यन्तसाम्याद्ब्रह्मव्यपदेशो मुख्यप्राय इत्यर्थः । सेयं गौरिति दृष्टान्तोऽपि साधर्म्यमूलव्यपदेशविषयः; यद्वा *ब्रह्मैव भवतीत्यत्राप्येवकार इवशब्दार्थोऽपि स्यादिति केचित् *इववद्वैवमेवेति निघण्टुसद्भावात्, *वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति (यजु. २. १. ३. १६) इत्यादिप्रयोगसद्भावाच्च । नह्यत्र पशुयागमात्रेण विष्णुरेवासौ जातः; नापि स्पर्धमानस्य मोक्षाधिकारः; न च विष्णुरेव भवतीति तावदेव फलं निर्दिष्टं, किंतु *इमान् लोकानभिजयतीति सांसारिकफलमुक्तम्; अतः पराक्रमादिगुणयोगेन विष्णुरिव भूत्वेमान् लोकानभिजयतीति वाक्यार्थ इति । अतो *ब्रह्मैव भवतीति साधर्म्यहेतुकं सामानाधिकरण्यम् । *परमं साम्यमुपैति (मु. ३. १. ३) इति हि श्रुतिः । वक्ष्यति च *मम साधर्म्यमागताः (१४. २) इति । श्रुतिप्रदर्शनार्थं विषयमुपादायशोधयति—**तथेत्यादिना** । सामानाधिकरण्यप्रयोगाद्वस्त्वन्तरसामानाधिकरण्यसहपाठाभावाद्भगवतस्तत्तच्छ्रुतिप्रतिपादितपरत्वप्रकारव्यञ्जने तात्पर्याच्च अत्र

धामशब्दस्य स्थानादिपरत्वमयुक्तमित्यभिप्रायेणाह—**धामशब्दो ज्योतिर्वचन** इति । * विष्णुसंज्ञं सर्वाधारं धाम (मैत्राव) इत्यादि धामशब्दप्रयोगेऽपि परं धामेति विशेषणादर्शनात्पर्यायान्वयमुखेन तत्प्रदर्शयति—**परंज्योतिरिति** । * अथ यदतः इत्यादिवाक्येनाप्राकृतलोकादिविशिष्टत्वं * पादोऽस्य सर्वा भूतानि (छा. ३. १२. ६) इत्यादिव्यपदेशसिद्धपुरुषसूक्तप्रकरणैकार्थ्याच्च सन्नीहितमखिलं सिद्धम्; * परंज्योतिरुपसंपद्येति वाक्येन मुक्तप्राप्यत्वादिकम्, * परंज्योतिरिति विशिष्टप्रयोगश्च सिद्धः । *तं देवा ज्योतिषां ज्योतिरित्यादिना देवोपास्यत्वमुखेन ज्योतिषां ज्योतिष्ट्वेन च परत्वमर्थलब्धम् । भगवदसाधारणं परमशब्दविशेषितं पावनत्वं दर्शयितुं पवित्रशब्दस्यात्र संज्ञात्वव्युदासायाह—**परमं पावनमिति** । **विनाशकरमित्यत्र** कल्मषशब्दो बुद्ध्या निष्कृष्यानुसन्धेयः । **प्रदूयन्ते**—नश्यन्तीत्यर्थः । **सूत्रं** च * तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् (ब्र. ४. १. १३) इति । तत्त्वनिर्णयैकतत्परनारायणानुवाकवाक्येनापि परब्रह्मत्वादिकं * भवानिति निर्दिष्टदेवताविशेषस्यैव संवादयति—**नारायणेति** । अनयोर्वाक्ययोः प्रथमौ नारायणशब्दौ लुप्तविभक्तिकौ; * तत्त्वं नारायणः परः इत्यादिसहपाठवशाद्यस्तत्वं प्रथमान्तत्वं च प्राप्तम् । तथैव सविभक्तितया श्रुत्यन्तरेऽधीयते * नारायणः परं ब्रह्म (महो) इत्यादि । एतेन पञ्चमीसमासतां वदन् भगवद्द्वेषी प्रत्युक्तः, सर्वश्रुतिस्मृतिसूत्रन्यायविरोधाच्च । **इति हि श्रुतयो वदन्तीत्यत्र** * यतो वा इमानि (भृ. १) इत्यादिकमखिलमन्वेतव्यम्; मध्ये तत्तदर्थवैशद्यायावान्तरवाक्यम् ॥ ११ ॥

**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥** १२
**आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे ॥** १३

भा ॥ ऋषयश्च सर्वे परावरतत्त्वयाथात्म्यविदस्त्वामेव शाश्वतं दिव्यं पुरुषमादिदेवमजं विभुमाहुः; **तथैव देवर्षिर्नारदः** असितो देवलो व्यासश्च । * एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः । नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥ (ह. वि. १२३. ६२) *पुण्या द्वारवती तत्र यत्रास्ते मधुसूदनः । साक्षाद्देवः पुराणोऽसौ स हि धर्मस्सनातनः ॥ * ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् । पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् । त्रैलोक्यं पुण्डरीकाक्षो देवदेवस्सनातनः । आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ (भा. व. ७६. २४-२८) तथा * यत्र नारायणो देवः परमात्मा सनातनः । तत्र कृत्स्नं जगत्पार्थ तीर्थान्यायतनानि च ॥ तत्पुण्यं तत्परं ब्रह्म तत्तीर्थं तत्तपोवनम् । तत्र देवर्षयस्सिद्धास्सर्वे चैव तपोधनाः ॥ ....आदिदेवो महायोगी यत्रास्ते मधुसूदनः । पुण्यानामपि तत्पुण्यं माभूत्ते संशयोऽत्र वै ॥ (भा. व. ९०. २८-३२) * कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥ (भा. स. ३८. २३) इति । तथा स्वयमेव ब्रवीषि च * भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ (७. ४) इत्यादिना * अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते (१०. ८) इत्यन्तेन ॥ १२ ॥ १३ ॥

**ता** ॥ एवं श्रुतिसिद्धोऽर्थः स्मृतीतिहासपुराणायमानमहर्षिवचनाच्छ्रुतिवदन्यानपेक्षसर्वज्ञवचनाच्च सिद्ध इत्याह— * **पुरुषमिति** सार्धेन । सर्वशब्देनाविगीतत्वं विवक्षितम् । **परावरतत्त्वयाथात्म्यविद** इति ऋषिशब्दाभिप्रेतोक्तिः ।

तेनाप्ततमत्वमुक्तं भवति । * त्वामित्येतद्ब्रह्मरुद्रादिविशेषान्तरव्युदासार्थमित्यभिप्रायेण **त्वामेवे**त्युक्तम् ; यद्वा अवतीर्णं त्वामेवेत्यर्थः । **शाश्वतं**—नित्यम्, **दिव्यं**—परमव्योमनिलयम्, **पुरुषं**—* परात्परं पुरिशयं पुरुषमीक्षते (प्र. ५. ५) इत्यादिप्रतिपादितम् । * शाश्वतं दिव्यं पुरुषमिति व्युत्क्रमोपादानं दिवि वर्तमानस्य पुरुषस्य पुरुषसूक्तोदितामृत-त्रिपाद्विभूतिविशिष्टवेषेण शाश्वतत्वमिह विवक्षितमिति व्यञ्जनार्थम् । आदिश्चासौ देवश्चेत्यादिदेवः जगत्कारणभूतः क्रीडारूपजगद्व्यापारश्चेत्यर्थः । स्मरन्ति च * क्रीडतो बालकस्येव (वि. १. २. १८), * क्रीडा हरेरिदं सर्वम् (भा. मो.), * बालः क्रीडनकैरिव (भा. स. ९०. ३१) इति । सूत्रितं च * लोकवत्तु लीला कैवल्यम् (ब्र. २. १. ३३) इति । एतेन ब्रह्मादीनामपि देवजात्यनुप्रविष्टानां परमपुरुषलीलोपकरणत्वं कार्यत्वं चोक्तं भवति । * नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते (ना. उ.), * एको ह वै नारायण असीन्न ब्रह्मा नेशानः (महो. १. १), * तस्माच्च देवा बहुधा संप्रसूतास्साध्या मनुष्याः पशवो वयांसि (मु. २. १. ७) * एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ (भा. व. ८६. २४), * आवां तवाङ्गे संभूतौ (भा. मो. ३५०. १९) इत्यादेः कारणवाक्यस्यार्थ उक्तः । शोधक-वाक्यार्थमुपलक्षयति—**अज**मिति । कर्मकृतजन्मादिरहितमित्यर्थः । स्वरूपापेक्षया वा निर्विकारत्वमुच्यते । विभुम् * आकाशवत्सर्वगतश्च नित्यः (ह. वि. १३२. ४८) इति प्रक्रियया व्याप्तं ; नियन्तारमिति वा ; एतेन कारणत्वाद्यनु-गुणव्याप्तिनियमनादिकमन्तर्यामिब्राह्मणादिसिद्धं स्मारितम् । एतैः पदैः * एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः (सु. ७) इति श्रुतिस्सूचिता । सर्वे इति सामान्यतस्संग्रहेऽप्याप्ततमत्वविवक्षया नारदादेः पृथगभि-धानम् । देवर्षिशब्देन जात्याऽपि सत्त्वोत्तरत्वं प्रकाश्यते । तत्राप्यसौ * देवर्षीणां च नारदः (गी. १०. २६) इति प्रकृष्टः । असितः, देवलश्च तस्य पिता । व्यासश्चात्र भगवान् पाराशर्यः । * आहुस्त्वामृषयस्सर्वे इत्यादिकं संवादयति—**येचे**ति । वेदविदः कर्मभागवेदिनः, अध्यात्मविदः वेदान्तार्थवेदिनः । कृष्णं महात्मानं सनातनं धर्मं वदन्तीत्यन्वयः । महात्मशब्देन सर्वातिशायिपरमैश्वर्यादिकं विवक्षितम् ; महानात्मेति परमात्मत्वं वा, * स वा एष महानज आत्मा (बृ. ६. ४. २२) इत्यादेः । यागदानादयो हि देशकालादिपरिमितफलदायिनः, स्वयं चानित्याः ; अयं तु नित्यनिरतिशयफलदायी, नित्यश्चेति सनातनशब्देन धर्मस्य विशेषणम् । पवित्रशब्दोऽत्र पापनिबर्हणपरः । पुण्यशब्दोऽभिमतफलविशेषसाधनपरः । मङ्गलशब्दश्च स्वसन्निधिमात्रेणातिसमृद्धिहेतुभूतकल्याणवस्तुपरः । * त्रैलोक्यं पुण्डरीकाक्षः (भा. व. ८६. २८) इति कार्यकारणभावेन शरीरात्मभावेन वा सामानाधिकरण्यम् । त्रयो लोकास्त्रै-लोक्यम्—बद्धमुक्तनित्या इत्यर्थः । यद्वोपलक्षणतया भूम्यन्तरिक्षादिकमुच्यते । पुण्डरीकाक्षशब्देन अन्तरादित्यविद्या-प्रतिपादितविलक्षणविग्रहत्वं दर्शितम् । * तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी (छा. १. ६. ७) इत्यस्य च वाक्यस्य **द्रमिडभाष्यो**दितेषु षट्स्वर्थेषु सिद्धान्तत्वेन **भाष्यकार**परिगृहीतास्त्रयोऽर्थाः । तथा हि **वेदार्थसंग्रहे** दर्शितं *गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः इति । इदं च **वरदगुरुभिस्तत्त्वसारे** प्रपञ्चि-तम् । नारायणशब्देन परतत्त्वनिर्णयैकपरनारायणानुवाकसूचनम् । *श्रीमान् * क्षीरार्णवनिकेतनः इत्याभ्यां * ह्रीश्च ते लक्ष्मीश्च पत्न्यौ (ना) * अम्भस्यपारे (ना) * यमन्तस्समुद्रे (ना) इत्यादिकं स्मारितम् । * उत्सृज्यागतः इत्यवतार-मात्रत्वं विवक्षितम्, कृष्णावतारदशायामपि क्षीरार्णवगतनागपर्यङ्कशायिविग्रहस्य तत्रैव स्थितत्वात् । **साक्षा**दिति । न त्वौपचारिकः, आत्मान्तरव्यवहितो वेत्यर्थः । **तथे**ति—प्रकरणान्तरत्वव्यक्त्यर्थम् । * देवर्षिर्नारदस्तथेति व्याख्येय-विभागावगमात्तदुक्तवाक्योपादानमपि तथाविभागेन कुर्मह इति च दर्शितम् । * तत्र कृत्स्नमित्यादि नारायणस्यैव

सर्वाश्रयत्वात्, सर्वप्रकारातिशययोगित्वाद्वा । * तत्पुण्यमित्यादिकं ब्रह्मशब्दानुरोधेन नारायणविषयं वा, प्रकरणविशेषेण तदाश्रितस्थानप्रशंसनं वा । **स्वयमेवे**ति । स्वतस्सर्वज्ञो ब्रह्मादीनामपि गुरुस्त्वमेवेत्यर्थः ।*भूमिरापः (७. ४) इत्यादिषु सर्वशेषित्वं सर्वकारणत्वं सर्वशरीरित्वमित्यादिकमुक्तम् ॥ १२ ॥ १३ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥** १४

भा ॥ **अतस्सर्वमेतद्यथावस्थितवस्तुकथनं मन्ये, न प्रशंसाद्यभिप्रायम्; यन्मां प्रत्यनन्यसाधारणमनवधिकातिशयं स्वाभाविकं तवैश्वर्यं कल्याणगुणानन्त्यं च वदसि। अतो भगवन्—निरतिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधे, ते व्यक्तिं—व्यञ्जनप्रकारम्, नहि परिमितज्ञाना देवा दानवाश्च विदुः ॥ १४ ॥**

**ता** ॥ सङ्गत्यर्थमाह—**अत** इति । आप्ततमैराप्तार्यैर्महर्षिभिर्भवताऽपि चोक्तत्वादिति भावः । * ऋतं मन्ये इत्यस्याभिप्रेतमाह—**न प्रशंसाद्यभिप्राय**मिति । अन्येषु हि तद्गुणारोपणेन प्रशंसेत्यभिप्रायः । * मामित्यनेन * शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् (गी. २. ७) इत्यादिकमभिप्रेतम् । वदिरिह शिष्यमनुवदन् शास्त्यर्थे वर्तमानो द्विकर्मकः । एवं शिष्यस्यानुभाषणं शासनविशेषप्रार्थनार्थम् । **अनन्यसाधारणमनवधिकातिशय**मिति विशेषणाभ्यां समाधिकराहित्यम्, **स्वाभाविक**मित्यनन्याधीनत्वं विवक्षितम् । अतो न विदुरित्यन्वयः । * ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ (वि. ६. ५. ७९) इति भगवत्**पराशर**वचनानुसारेण देवादिभिरवेद्यत्वाय भगवच्छब्दार्थं दर्शयति—**निरतिशयज्ञाने**त्यादिना । व्यक्तिशब्दोऽत्र * किमात्मिकैषा भगवतो व्यक्तिः (र. ब्रा.) इत्यादिष्विव न विग्रहादिपरः, अप्रसक्तत्वादनन्तरं चापृच्छ्यमानत्वात्; अतो * वक्तुमर्हस्यशेषेणेत्यनन्तरं विवक्षोः अन्ये त्वत्प्रतिपादनप्रकारमपि न जानन्ति, किं पुनः प्रत्यक्षादिवत्प्रकाशनमित्ययमर्थोऽपेक्षितत्वात्स्वीकार्य इत्यभिप्रायेणाह—**व्यञ्जनप्रकार**मिति । * अक्षरक्षरयोर्व्यक्तिम् [प्र]इच्छाम्यरिनिषूदन । उपलब्धुम् (मो. ध. ३०८. २) इतिवत् । **परिमितज्ञाना** इति हिशब्दतात्पर्योक्तिः ॥ १४ ॥

**स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥** १५

भा ॥ **हे पुरुषोत्तम, आत्मना आत्मानम्—त्वां स्वयमेव—स्वेनैव ज्ञानेन वेत्थ । भूतभावन—सर्वेषां भूतानामुत्पादयितः, भूतेश—सर्वेषां भूतानां नियन्तः, देवदेव—दैवतानामपि परमदैवत, यथा मनुष्यमृगपक्षिसरीसृपादीन् सौन्दर्यसौशील्यादिकल्याणगुणगणैर्दैवतान्यतीत्य वर्तन्ते, तथा तानि सर्वाणि दैवतान्यपि तैस्तैर्गुणैरतीत्य वर्तमान, जगत्पते—जगत्स्वामिन् ॥ १५ ॥**

**ता** ॥ देवादीनां भगवद्वैभवे वक्तृत्वयोग्यता प्रतिक्षिप्ता; अथ भगवत एव स्ववैभववचनयोग्यतामाह—* स्वयमेवेति श्लोकेन । अत्र * पुरुषोत्तमेति संज्ञा; शेषं तु तत्संज्ञान्वयौपयिकगुणपरमिति विभजनाय पूर्वमेव **हे पुरुषोत्तमे**त्युक्तम् । अत्र * त्वमेव त्वां वेत्थ योऽसि सोऽसि (काठ. १. ३. १) इति श्रुतिस्मरणाद्यभिप्रायेण * आत्मानमित्यस्य **त्वा**मिति प्रतिपदम् । * स्वयमेवेत्यनेन फलितोक्तिः **स्वेनैव ज्ञानेने**ति । **आत्मना**—अन्यैरननुगृहीत इत्यर्थः । यथाऽन्येषां * मत्तस्स्मृतिर्ज्ञानम् (गी. १५. १५) इति; न तथाऽस्येति भावः । यद्वा * आत्मनेत्यस्य

व्याख्या **ज्ञानेने**ति ; * आत्मा जीवे इत्यारभ्य * यत्नेऽर्केऽग्नौ मतौ वायौ इति पाठात् । भावनशब्दस्य चिन्ताद्यर्थ-परत्वव्युदासायाह—**उत्पादयितरि**ति । भूतेशजगत्पतिशब्दयोः पौनरुक्त्यशङ्काव्युदासाय नियन्तृत्वस्वामित्वकथनम् । रक्षणे व्युत्पन्नस्यापि पतिशब्दस्य शेषित्वे रूढिः । * स कारणं करणाधिपाधिपः (श्वे. ६. ८), * तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ (श्वे. ६. ७) इति श्रुतिसिद्धाश्चत्वारोऽर्थाः * भूतभावनेत्यादिभिश्चतुर्भिः प्रतिपाद्यन्त इति ज्ञापनाय **दैवतानामपि परमदैवते**ति श्रुतिगतैः पदैर्व्याख्यातम् । देवशब्दस्य जातिविशेषवाचकत्वेन प्रतिसंबन्धिशब्दत्वाभावात् द्वितीयो देवशब्द उत्कर्षविशेषविषयतया औपचारिक इति मुख्यगौणानुगतमुपचारनिमित्तं दर्शयति—**यथे**ति । अन्योन्यवैलक्षण्यस्याकिंचित्करत्वायात्यन्तवैलक्षण्य-ज्ञापनाय च मृगपक्षिसरीसृपग्रहणम् । यथा देवादीनां कीटः, तथा परमात्मनो देवा अपि । * कीटास्समस्तास्सुरा दृष्टे यत्र (मुकुन्द) इति ह्याहुः । **सौन्दर्यसौशील्ये**तिविग्रहगुणानामात्मगुणानां चोपलक्षणम् ॥ १५ ॥

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥** १६

**भा ॥ दिव्याः—त्वदसाधारण्यो विभूतयो याः, तास्त्वमेवाशेषेण वक्तुमर्हसि—त्वमेव व्यञ्जयेत्यर्थः । याभिरनन्ताभिर्विभूतिभिः—यैर्नियमनविशेषैर्युक्तः इमान् लोकांस्त्वं नियन्तृत्वेन व्याप्य तिष्ठसि ॥ १६ ॥**

**ता ॥** आत्मशब्दोऽन्यविभूतित्वव्युदासार्थ इत्याह—**त्वदसाधारण्य** इति । * विभूतयः इति प्रथमान्तत्वेन * वक्तुमर्हसीत्यनेन अन्वयायोगात् **विभूतयो या** इति यच्छब्दाध्याहारः । यद्वा दिव्या हि, अतोऽवश्यवक्तव्याः ; अतस्ता वक्तुमर्हसीति वाक्यवृत्तिज्ञापनार्थः । * अर्हसीति योग्यत्वनिर्देशेन तत्प्रार्थनं विवक्षितम् । ईश्वरेणाप्यशेषेण वक्तुम्, अर्जुनेन च श्रोतुमशक्यत्वाद्वचनतः प्रसादतश्च प्रकाशनमात्रमिह प्रार्थ्यते ; * न हि ते भगवन् व्यक्तिम् (१४) इति हि पूर्वमुक्तमित्यभिप्रायेणाह—**त्वमेव व्यञ्जयेत्यर्थ** इति । बहुवचनासङ्कोचात् * अशेषेणेति निर्देशाच्च आनन्त्यमिह विवक्षितम्, * नास्त्यन्तो विस्तरस्य (१९) इत्याद्युत्तरवशाच्चेत्यभिप्रायेण **अनन्ताभि**रित्युक्तम् । विपूर्वो भवतिः भावप्रत्ययान्तो नियमनवाचीत्युक्तम् । न चात्रार्थान्तरं घटते, नियन्तव्यसामानाधिकरण्याद्यभावादित्यभिप्रायेण **यैर्नियमनविशेषै**रित्युक्तम् । प्रभूतनियमनविषये कौतुकातिरेकद्योतनाय विशेषशब्दः । तृतीयाया इह करणाद्यर्थत्वा-योगादित्थंभूतलक्षणार्थत्वं विवक्षितमित्यभिप्रायेण **युक्त** इत्युक्तम् । अत्र विभूतिशब्दस्य नियन्तव्यपरत्वेऽश्वत्थादीनां न लोकव्याप्तिकारणत्वम् ; नच तद्विशिष्टस्य, तैस्सह वा तदितरव्याप्तिः ; नच व्याप्तौ नियन्तव्यानामित्थंभूतलक्षणत्वम्, नैरर्थक्यात् ; नियमनविशेषाणां तु श्रुत्यनुसारादाकाशादिव्याप्तिव्यवच्छेदार्थत्वाच्च तदुपपत्तिरित्यभिप्रायेणाह—**नियन्तृत्वेन व्याप्ये**ति । * अन्तःप्रविष्टश्शास्ता जनानाम् (य. आ. ३. १०), * अन्तरो यमयति अन्तर्याम्यमृतः (बृ. ५. ७) इत्यादि हि श्रूयते । * व्याप्य तिष्ठसीत्यनेन * व्याप्य नारायणः स्थितः (ना) इति श्रुतिः स्मारिता ॥ १६ ॥

**कथं विद्यामहं योगी त्वां सदा परिचिन्तयन् ।**
**केषुकेषु च भावेषु चिन्त्योऽसि भगवन्मया ॥** १७

**भा ॥ अहं योगी—भक्तियोगनिष्ठस्सन् भक्त्या त्वां सदा परिचिन्तयन्—चिन्तयितुं प्रवृत्तः चिन्त-नीयं त्वां परिपूर्णैश्वर्यादिकल्याणगुणगणं कथं विद्याम् ? पूर्वोक्तबुद्धिज्ञानादिभावव्यतिरिक्तेष्वनुक्तेषु केषुकेषु च भावेषु मया नियन्तृत्वेन चिन्त्योऽसि ? ॥ १७ ॥**

ता ॥ योगिशब्दः प्रकरणविशेषात् * त्वां सदा परिचिन्तयन्नित्यादेस्सामर्थ्याच्च योगिविशेषविषय इत्याह—**भक्तियोगनिष्ठस्सन्नि**ति । सन्नित्यनेन निष्पन्नयोगिपरत्वमपि व्यावर्तितम् । अत्र * योगिन्निति परेषां पाठोऽनार्षः । * सदेतिविशेषणसामर्थ्यात् **भक्त्ये**ति सिद्धम् । वेदनात्पूर्वं चिन्तनाशक्तेः, * कथं विद्यामित्यस्य चिन्तनहेतुत्वात् * लक्षणहेत्वोः क्रियायाः (अष्टा. ३. २. १२६) इति शतुरनुशासनाच्च **चिन्तयितुं** प्रवृत्त इत्युक्तम् । * त्वामिति धर्मिविशेषस्य प्रतिपन्नत्वात्प्रकारविशेषेषु बुभुत्सेति ज्ञापनायोक्तम्—**परिपूर्णे**त्यादि । प्रश्नो ह्यज्ञातविशेषज्ञापनार्थ इत्यभिसन्धायोक्तं—**पूर्वोक्ते**त्यादि । * भावेष्विति सप्तम्यभिप्रेतोक्तिः प्रकृतानुकर्षणं वा—**नियन्तृत्वेने**ति ॥ १७ ॥

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥** १८

भा ॥ * **अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते** (१०.८) **इति संक्षेपेणोक्तं तत्र स्रष्टृत्वादियोगं, विभूतिं—नियमनं च, भूयो विस्तरेण कथय। त्वयोच्यमानं त्वन्माहात्म्यामृतं शृण्वतो मे तृप्तिर्नास्ति हि; ममातृप्तिस्त्वयैव विदितेत्यभिप्रायः** ॥ १८ ॥

ता ॥ प्रतिकूलजनानां नरकादिगमयितृत्वात् अनुकूलजनैः स्वाभिलषितं याच्यमानत्वाद्वा जनार्दनः । विस्तरबुभुत्साहेतुज्ञापनार्थं योगशब्दविवक्षितव्यक्त्यर्थं च भूयश्शब्दफलितमाह—**अहं सर्वस्ये**ति । अमृतशब्दोऽत्रातृप्तिसमभिव्याहारान्माहात्म्ये भोग्यत्वपरः । भोग्यतमत्वायोक्तं—**त्वयोच्यमान**मिति । त्वन्मुखचन्द्रनिस्सृतमिति भावः । हिशब्दाभिप्रेतं विवृणोति—**ममे**ति ॥ १८ ॥

**श्रीभगवानुवाच—**

**हन्त ते कथयिष्यामि विभूतीरात्मनश्शुभाः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥** १९

भा ॥ **हे कुरुश्रेष्ठ! मदीयाः कल्याणीर्विभूतीः प्राधान्यतस्ते कथयिष्यामि । प्राधान्यशब्देनोत्कर्षो विवक्षितः;** * **पुरोधसां च मुख्यं माम्** (२४) **इति हि वक्ष्यते। जगत्युत्कृष्टाः काश्चन विभूतीर्वक्ष्यामि, विस्तरेण वक्तुं श्रोतुं च न शक्यते, तासामानन्त्यात्। विभूतित्वं नाम नियाम्यत्वम्, सर्वेषां भूतानां बुद्ध्यादयः पृथग्विधा भावा मत्त एव भवन्तीत्युक्त्वा** * **एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः** (७) **इति प्रतिपादनात्। तथा तत्र योगशब्दनिर्दिष्टं स्रष्टृत्वादिकं विभूतिशब्दनिर्दिष्टं तत्प्रवर्त्यत्वमिति ह्युक्तम्। पुनश्च** * **अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः** ॥ (८) **इति** ॥ १९ ॥

ता ॥ एवमतृप्त्या पृच्छन्तमर्जुनं प्रति अतिप्रसन्नो भगवांस्तस्याभिजनादिवर्णनमुखेन योग्यतां दर्शयन् विभूतेर्विस्तरेण प्रत्येकं वक्तुं श्रोतुं च अशक्यत्वात्केनचिदुपाधिविशेषेण संगृहीता विभूतीर्वक्ष्यामीत्याह—**हन्ते**ति । ते—अनसूयुत्वप्रीयमाणत्वातृप्तत्वादिगुणपूर्णायेति भावः । गुणत्वादिप्रतियोगिकशेषित्वादिप्राधान्यविवक्षायां वक्ष्यमाणसमस्तोदाहरणव्याप्त्यभावाद्गुणानां च प्राधान्येन व्यपदेक्ष्यमाणत्वात्संग्राहकमर्थविशेषमाह—**प्राधान्यशब्दे**नेति । तस्यैव विवक्षितत्वं वक्ष्यमाणेन संवादयति—**पुरोधसा**मिति । पिण्डितार्थमाह—**जगती**ति । विस्तरेण कथयेति पृच्छन्तं प्रति प्राधान्यतः कथयिष्यामीति कथमुच्यत इति शङ्कायां * **नास्त्यन्तो विस्तरस्य मे** इत्युच्यते । विभूतीनामिति शेषः । * विभूते-

विस्तरो मया (४०) इति हि वक्ष्यते । नास्तिशब्दाभिप्रेतमशक्यत्वं दर्शयति—**विस्तरेण वक्तुमि**ति । नेदं वक्तृश्रोत्रोरसामर्थ्यनिवन्धनमित्याह—**तासामानन्त्यादि**ति । तदेतदुक्तं—* नास्त्यन्त इति । वक्ष्यमाणेषु पदार्थेषु विभूतिशब्दप्रयोगनिमित्तमाह—**विभूतित्वं नामे**ति । नियन्तव्यवस्त्वन्तरविषयो विभूतिशब्दो विभवनकर्मपरः । अन्यत्र च * ब्रह्मा दक्षादयः कालः (वि. १. २२. ३१), * विष्णुर्मन्वादयः कालः (३२), * रुद्रः कालान्तकाद्याश्च (३३) इत्यादिषु * जनार्दनविभूतयः इति नियन्तव्येषु विभूतिशब्दो दृष्ट इति भावः । कुत इत्यत्राह—**सर्वेषा**मिति । प्रस्तुतं तादधीन्यं ह्येतच्छब्देन परामृश्यत इति भावः । समनन्तरश्लोकेनापि तस्य श्लोकस्य तदर्थपरत्वं दर्शयति—**तथे**ति । नन्वस्य श्लोकस्य व्याख्याने पूर्वं * सौशील्यवात्सल्यसौन्दर्यादिकल्याणगुणयोगमित्युक्तम्; इहतु योगशब्दनिर्दिष्टं स्रष्टृत्वादिकमुच्यते; तत्कथं घटते? इत्थम्, उभयत्रोभयमप्यादिशब्देन संगृहीतमित्येकार्थत्वात् । अत एव हि * एतां विभूतिं योगं च (७) इत्यत्र * मम हेयप्रत्यनीककल्याणगुणगणरूपं योगं चेति प्रयोजकेन संगृहीतम् । * एतां विभूतिमित्यादेः पूर्वं नियमनपरत्वेन व्याख्यानेऽपि अत्र तदुपादानं समृद्ध्याद्यर्थान्तरव्युदासेन सोपसर्गधात्वर्थव्यञ्जनार्थम् । * विस्तरेणात्मनो योगं विभूतिं चेत्यत्र तु * याभिर्विभूतिभिरिति तत्पूर्वप्रश्नवाक्यस्थविभूतिशब्दैकार्थ्यस्वारस्यान्नियमनार्थतोक्ता । अतः प्रश्नोत्तरपरयोरीषद्वैरूप्यं सह्यम् ॥ १९ ॥

**भा ॥ तत्र सर्वभूतानां प्रवर्तनरूपं नियमनमात्मतयाऽवस्थायेतीममर्थं योगशब्दनिर्दिष्टं सर्वस्य स्रष्टृत्वं पालयितृत्वं संहर्तृत्वं चेति सुस्पष्टमाह—**

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥** २०

**भा ॥ सर्वेषां भूतानां मम शरीरभूतानाम् आशये—हृदये अहमात्मतयाऽवस्थितः । आत्मा हि नाम शरीरस्य सर्वात्मना आधारः, नियन्ता, शेषी च । तथा वक्ष्यते—* सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च (१५ १५), * ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ (१८. ६१) इति । श्रूयते च * यस्सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरं यस्सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः (बृ. ५. ७. १५) इति, * य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः (शत. १४. ५. ३०) इति च । एवं सर्वभूतानामात्मतयाऽवस्थितोऽहं तेषामादिर्मध्यं चान्तश्च, तेषामुत्पत्तिस्थितिप्रलयहेतुरित्यर्थः ॥ २० ॥**

**ता ॥** * विस्तरेणात्मनो योगं विभूतिं चेति पृष्टमर्थद्वयं विस्तरेण वक्तुं तस्योत्तरद्वयम् * अहमात्मेति श्लोकेन संगृह्योच्यत इत्यभिप्रायेणाह—**तत्रे**ति । एतेन प्रागुक्तेषु वक्ष्यमाणेषु च सामानाधिकरण्यनिर्देशेषु यथासंभवं निमित्तद्वयमुक्तं भवति । **आत्मतयाऽवस्थित** इति फलितान्वयप्रदर्शनम् । अनेकार्थोऽप्यात्मशब्दश्शरीरप्रतिसंबन्धिनि प्रसिद्धिप्राचुर्यात्प्रतिसंबन्धिरूपं शरीरमपेक्षते; ततश्च वृत्त्यन्तर्गतोऽपि भूतशब्दो बुद्ध्या निष्कृष्यान्वेतव्य इत्यभिप्रायेण **सर्वेषां भूतानां मम शरीरभूताना**मित्युक्तम् । ईश्वरस्य जीवशरीराणि भूतानि, जीवांश्च प्रति, कथमात्मत्वमित्यत्रात्मलक्षणं दर्शयति—**आत्मा ही**ति । त्रयमप्येकं लक्षणमित्येके । तत्र श्रुत्याद्यनुसारेण जन्मादित्रयस्य

ब्रह्मलक्षणत्व इव शङ्कितमात्रव्यवच्छेदार्थतया त्रयाणां साफल्यं भाव्यम् । लक्षणत्रयमिति चान्ये । तत्र त्वेवं विवेकः— * यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यमित्यादि शरीरलक्षणवाक्यमपि भाव्यम् । शरीर-लक्षणान्तराणि च तत्रतत्र विस्तरेण प्रतिक्षिप्तानि । चैतन्यविशिष्टं प्रत्यपृथक्सिद्धविशेषणभूतद्रव्यं शरीरमिति भाष्याभि-प्रेतोऽस्माकं निष्कर्षः । अत्र सर्वभूतशब्देन शरीरमात्रनिर्देशशङ्काव्युदासाय आशयशब्दस्य च हृदयविषयत्वव्यञ्जनाया-धारत्वनियन्तृत्वादेरात्मलक्षणत्वसिद्ध्यर्थं चाह—**तथेति** । * सर्वस्य चाहम् (गी. १५. १५) इत्यस्यानन्तरं * द्वाविमौ पुरुषौ (१६) इत्युपक्रम्य * क्षरस्सर्वाणि भूतानि इति वचनात्सर्वभूतशब्दोऽचिद्विशिष्टक्षेत्रज्ञपर इति निश्चीयते; तद्व-दत्रापि । तथाऽस्मिन्नेव प्रकरणे * उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । * यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ (१७) इत्युक्तम् । अत्र बिभर्तीश्वर इत्याभ्याम् आधारत्वनियन्तृत्वे स्पष्टे; ईश्वरशब्दरूढ्या च स्वामित्वसिद्धिः; न खलु गरुडादिषु भुजङ्गादीन्नियच्छत्सु तदीश्वरशब्दः । ईश्वरशब्दस्याहंशब्दस्य चात्रैकविषयत्वं श्लोकद्वयोपादानेन दर्शितम् । अत्र हि सर्वभूतशब्दो जीवपर एव * यन्त्रारूढानि मायया (गी. १८. ६१) इत्यभिधानात् । * भ्रामय-न्नित्यनेन नियन्तृत्वादिसिद्धिः । हृद्देशस्थित्या च * मयि सर्वमिदं प्रोतम् (७. ७) इत्याद्युक्तधारकत्वादि सूचितम् । एवं चिदचिदात्मकसमस्तवस्तुशरीरत्वं सर्वभूतशब्दान्वयेनैव वदन्तीं श्रुतिं दर्शयति—**यस्सर्वेषु भूतेष्विति** । चिदंशं प्रति शरीरित्वं प्रपञ्चयद्वाक्यमुपादत्ते—**य आत्मनीति** । आत्मत्वेनावस्थानस्योपादानत्वनिमित्तत्वोपयोगात्पूर्वार्धेन सङ्गमयन्नुत्त-रार्धं व्याख्याति—**एवमिति** । एवमात्मतयाऽवस्थितोऽहमित्यनेन निर्विकारस्य स्वस्यैवोपादानत्वस्थापनम् । देशतः कालतो वा आदिमध्यान्तत्वमात्रमनुचितमिति तदुपचरितमाह—**तेषामुत्पत्तीति** ॥ २० ॥

**भा ॥ एवं भगवतस्स्वविभूतिभूतेषु सर्वेष्वात्मतयाऽवस्थानं तत्तच्छब्दसामानाधिकरण्यनिर्देशहेतुं प्रतिपाद्य विभूतिविशेषान् सामानाधिकरण्येन व्यपदिशति । भगवत्यात्मतयाऽवस्थिते हि सर्वे शब्दास्तस्मिन्नेव पर्यवस्यन्ति ; यथा देवो मनुष्यः पक्षी वृक्षः इत्यादयश्शब्दाश्शरीराणि प्रतिपादयन्तस्तत्तदात्मनि पर्यवस्यन्ति ; भगवतस्तत्तदात्मतयाऽवस्थानमेव तत्तच्छब्दसामानाधिकरण्यनिबन्धनमिति विभूत्युपसंहारे वक्ष्यति * न तदस्ति विना यत्स्यान्मया भूतं चराचरम् (३९) इति सर्वेषां स्वेनाविनाभाववचनात् । अविनाभावश्च नियाम्यत-येति * मत्तस्सर्वं प्रवर्तते (८) इत्युपक्रमोदितम् ।**

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥** २१

**भा ॥ द्वादशसंख्यासंख्यातानामादित्यानां द्वादशो य उत्कृष्टो विष्णुर्नामादित्यः, सोऽहम् । ज्योतिषां— जगति प्रकाशकानां योंऽशुमान् रविरादित्यगणः, सोऽहम् । मरुतामुत्कृष्टो मरीचिर्यः, सोऽहमस्मि । नक्षत्राणा-महं शशी ; नेयं निर्धारणे षष्ठी, *भूतानामस्मि चेतना (२२) इतिवत् । नक्षत्राणां पतिर्यश्चन्द्रः, सोऽहमस्मि ॥२१**

**ता ॥** *आदित्यानामहं विष्णुरित्युपक्रम्य *यच्चापि सर्वभूतानां बीजं तदहमर्जुन (३९) इत्यन्तं सामानाधिकरण्य-प्रघट्टकम् *अहमात्मा (२०) इति श्लोकेन सङ्गमयन्नवतारयति—**एवं भगवत** इति । एतेन *अहमात्मेत्यादिकास्समस्ता-श्चतस्रो विभूतयः इति मतान्तरं निरस्तम् । **विभूतिविशेषानिति** । प्राधान्यत इति ह्युपक्रान्तम् । ननु शरीरवाचिन-

श्शरीरादिशब्दा नात्मनि पर्यवस्यन्ति ; तद्वदत्रापीति लक्षणास्वीकार एव न्याय्यः ; न शक्तिकल्पना, लाघवाच्चेत्यत्राह— **भगवती**ति । हिशब्दो हेत्वर्थः । अपृथक्सिद्धविशेषणवाचिनश्शब्दास्तत्तद्द्वारा धर्मिण्यपि मुख्यवृत्ता इति प्रयोजकरूपेण गुणादिष्वपि सिद्धत्वान्न शक्तिकल्पनागौरवमिति भावः । तदेतदुक्तं–**पर्यवस्यन्ती**ति । शरीरवाचिशब्दानां स्वरसतस्तत्तदात्मनि पर्यवसानमपृथक्सिद्ध्युपाधिकं दर्शयति–**यथे**ति । शरीरादिशब्दास्तु गुण इत्यादिशब्दवन्निष्कर्षकशब्दत्वाच्च धर्मिणि पर्यवस्यन्ति । एतदभिप्रायेणोक्तं–**देवो मनुष्यः पक्षी वृक्ष इत्यादयश्शब्दा** इति । अध्यासादिहेतुकसामानाधिकरण्यशङ्कामपनयति–**भगवतस्तत्तदात्मतये**ति । नह्युपक्रमोपसंहारविरुद्धोऽर्थो मध्ये स्वीकार्यः ; न च ब्रह्मणस्सर्वहेयमयत्वं भ्रमाद्वा तत्त्वतो वाऽङ्गीकर्तुं युक्तमिति भावः । **अविनाभाववचना**दिति-आत्मना विना हि शरीरभूतं न भवतीति भावः । अग्निना विना धूमो नास्ति ; गुणिना विना गुणो नास्तीत्युक्ते अग्न्यादिरेव परमार्थः, धूमादिस्तु मिथ्याभूत इति वा, अग्न्याद्यात्मक इति वा प्रत्ययो हि न भवति ; तद्वदत्रापीति । ननु यज्ञदत्तं विनाऽन्ये गृहे न सन्ति, रज्जुं विना सर्पादिकं नास्तीत्युक्ते यथैकस्यैव सत्त्वं तदतिरिक्तानां चासत्त्वं प्रतीयते, तद्वदत्रापि किं न स्यादित्यत्राह–**अविनाभावश्चे**ति । असंजातविरोधिकालसमुदितोपक्रमविरुद्धतया उपसंहारस्य नोदय इत्युपक्रमाधिकरणसिद्धमिति भावः । **नियाम्यतये**त्यनेन धूमाग्निव्याप्तिवैषम्यमपि दर्शितम् । एवमेतावता ग्रन्थेन * अहमात्मा गुडाकेश सर्वभूताशयस्थितः (२०) इति सर्वशरीरवर्तिनां जीवानां ब्रह्मस्वरूपैक्यमुच्यत इति कुदृष्टिमतमुन्मूलितम् ।

आदित्यानाम्–अदित्यपत्यानाम् । *अजघन्यो जघन्यजः इत्यादिवचनानुसारेण **द्वादशो य उत्कृष्ट** इत्युक्तम् । अत्र चोत्तरेषु च निर्धारणार्थविशेषप्रदर्शनार्थ उत्कृष्टशब्दः । स च * पुरोधसां च मुख्यम् (२४) इति वक्ष्यमाणमुख्यपर्यायतया अपेक्षितप्रदेशे सर्वत्र निहितः । अत्र चोद्ध्रियमाणानां पदार्थानां केषांचित्प्राधान्यं प्रत्यक्षम् ; केषांचिदागमिकम् । क्वचिदव्यवहितं, क्वचिज्जीवव्यवहितं च सामानाधिकरण्यम् । ज्योतिश्शब्देन तारकामात्रग्रहणे ततो बहिर्भूतस्य तत्संबन्धरहितस्य च रवेर्निर्धारणाद्ययोगात् **प्रकाशकाना**मिति सामान्येनोक्तम् । जगत्कारणभूतपरज्योतिरपेक्षया रवे खद्योतकल्पत्वात्तद्व्यवच्छेदाय **जगतीति** विशेषितम् । * अंशुमानिति निर्धारणौपयिकातिशयितप्रकाशयोगो मतुप विवक्षितः, अन्यथा पौनरुक्त्यात् । रविशब्दस्य द्वादशादित्यसाधारणत्वादेकवचनं समुदायाभिप्रायमिति प्रदर्शनायोक्तम्- **आदित्यगण** इति । मरुतो वायवः एकोनपञ्चाशद्दितिपुत्राः, येषां सप्तकास्सप्त गणा भवन्ति । शशिनोऽपि यदि नक्षत्र स्यात्, तदा हि तस्माद्वर्गात्तस्य निर्धारणमित्यभिप्रायेणाह–**नेयमि**ति । कस्तर्ह्यत्रार्थ इत्यत्राह–**नक्षत्राणां पतिरि**ति *प्राधान्यतः इति ह्युपक्रान्तमिति भावः । ननु पूर्वापरेषु सर्वेषु निर्धारणार्थेषु मध्ये कस्यचित्संबन्धमात्रपरत्वमयुक्तम् नक्षत्रशब्देन निशि प्रकाशमात्रं छत्रिन्यायाद्ग्राह्यम्, * सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि (यजु. ५.४.१.३ इति श्रुतेश्चन्द्रमण्डलस्यापि वा स्वर्गिणां भोगस्थानत्वान्नक्षत्रत्वं * यो वा इह यजते अमुं स लोकं न क्षते तन्नक्षत्रा नक्षत्रत्वं देवगृहा वै नक्षत्राणि (अष्ट. १.५.२.१०) इति ; तत्राह–**भूतानामस्मि चेतनेतिवदि**ति । मुख्ये संभव लक्षणा न न्याय्या, नचात्र सर्वत्र निर्धारणार्थता * भूतानामस्मि चेतना (२२), * सर्गाणामादिरन्तश्च मध्यं चैवाह मर्जुन (३२), *वादः प्रवदतामहम् (३२), *अहमेवाक्षयः कालः–(३३), *उद्भवश्च भविष्यताम् (३४)*द्यूतं छल तामस्मि तेजस्तेजस्विनामहम् । जयोऽस्मि व्यवसायोऽस्मि (३६) इत्यादिषु निर्धारणाभावात् ; अतोऽत्र चन्द्रस्य नक्षत्रजातीयत्वाभावात् षष्ठ्यभिहितस्य संबन्धसामान्यस्य प्रमाणसिद्धविशेषे पर्यवसानमिति भावः ॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥** २२

भा ॥ वेदानाम्—ऋग्यजुस्सामाथर्वणां य उत्कृष्टस्सामवेदः, सोऽहम् । देवानामिन्द्रोऽहमस्मि । एकादशानामिन्द्रियाणां यदुत्कृष्टं मनइन्द्रियम्, तदहमस्मि। इयमपि न निर्धारणे। भूतानां चेतनावतां या चेतना, साऽहमस्मि ॥ २२ ॥

ता ॥ गीतिर्हि सामशब्दार्थः; तस्य वेदेषु निर्धारणं कथमिति शङ्काव्युदासाय * सामवेदोऽस्मीति निर्देश इति प्रदर्शयति—**ऋग्यजुरिति** । सामवेदस्योत्कर्षो गीतिप्रधानत्वसहस्रशाखत्वादिभिः; अन्येषां तु तदभावात्तावन्मात्रेणापकर्षः; न तु प्रामाण्यतारतम्यात् । * ऋक्च वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक्सामो पावदन्मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत् साम ज्यायान्वा अतो मम महिमा (ऐ. ब्रा.) इति गीतिरूपस्य साम्नः प्राधान्याद्गीत्यात्मकस्य सामवेदस्य प्राधान्यम्; * ऋग्भ्यो जातं वैश्यं वर्णमाहुः यजुर्वेदं क्षत्रियस्याहुर्योनिं सामवेदो ब्राह्मणानां प्रसूतिः (काठ. ३. ९. ५०) इतिच । देवा इति स्वर्गवासिनो विवक्षिताः; ब्रह्मादिसंग्रहायोगात् । वासवशब्दस्येन्द्रशब्देन व्याख्यानमतिशयद्योतनार्थम् , * इदि परमैश्वर्ये इति । * इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः (क. ३. १०), *एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च (मु. २. १. ३) इत्यादिषु मनस इन्द्रियेभ्यः पृथगभिधानात्कथम् * इन्द्रियाणां मनश्चास्मीति निर्धारणमित्यत्राह—**एकादशेन्द्रियाणां यदुत्कृष्टं मनइन्द्रियमिति** । अयमभिप्रायः—* इन्द्रियाणि दशैकं च (गी. १३. ५) * एकादशं मनश्चात्र (वि. १.२.४७) इत्यादिषु मनसोऽपीन्द्रियत्वेन व्यपदेशात्क्वाचित्कः पृथग्व्यपदेशो गोबलीवर्दनयादिति निर्धारणोपपत्तिरिति । नहि भूतेषु चेतनासंज्ञकं किञ्चिद्भूतमस्तीत्यभिप्रायेणाह—**इयमपीति** । षष्ठीति शेषः । * तेजस्तेजस्विनां, * सत्त्वं सत्त्ववताम् (३६) इत्यादिवद्विशिष्टे सारभूतविशेषणांशो विवक्षित इत्यभिप्रायेण—**चेतनावतामि**त्युक्तम् । ननु भूतानां षष्ठत्वेन चेतनासंज्ञं किमप्यन्यत्रोच्यते; यथा * महाभूतानि खं वायुरग्निरापस्तथा मही। षष्ठस्तु चेतनाधातुरात्मा सप्तम उच्यते । अष्टमं तु मनो ज्ञेयम् (मो. ध. ३३७. ४६) इति; तथा * षष्ठस्तु चेतनाधातुर्मन इत्युपदिश्यते (भा. आ. २१४. १९) इति च । अत्र मनसोऽधिष्ठानतया चेतनायास्तदपृथग्वचनमित्यविरोधः । अतो * भूतानामस्मि चेतना इति निर्धारणार्थत्वं युज्यत इति; मैवं, नहि भूतषष्ठनिर्देशमात्रान्महाभूतत्वम्, अन्यथाऽपि संख्यानिवेशसंभवात्, अत्र च सप्तमतया अष्टमतया च निर्दिष्टयोर्महाभूतत्वानभ्युपगमात् , चेतनाशब्दस्य च अप्रसिद्धार्थत्वात् , प्रसिद्धार्थस्वीकारस्योचितत्वात् । अतस्संबन्धमात्रविवक्षयैव अत्र षष्ठी युक्तेति ॥ २२ ॥

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुश्शिखरिणामहम् ॥** २३

भा ॥ **रुद्राणामेकादशानां शङ्करोऽहमस्मि । यक्षरक्षसां वैश्रवणोऽहम् । वसूनामष्टानां पावकोऽहम् । शिखरिणाम्—शिखरशोभि[ता]नां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥**

ता ॥ **रुद्राणामिति**—रुद्रेष्वेकस्य शङ्करसंज्ञयैवोत्कर्षद्योतनम् । यक्षराक्षसजात्योरदूरविप्रकर्षात्—**यक्षरक्षसामित्युक्तम्**, न तु वित्तेशस्य राक्षसत्वगन्धः; यद्वा * नक्षत्राणामहं शशीतिवज्जातिद्वयपतित्वमात्रमिह विवक्षितम् ।

वित्तेशसंज्ञया च धनदस्यासाधारणैश्वर्योत्कर्षद्योतनम् । * स्थावराणां हिमालयः इति पर्वतमात्राणां परस्ताद्वक्ष्यमाणत्वात् * मेरुश्शिखरिणामित्यत्र शिखरिशब्देन पर्वतविशेषो विवक्षितः ; शक्तश्चायं शब्दो विशेषं दर्शयितुमित्यभिप्रायेणोक्तं—**शिखरशोभिनां पर्वताना**मिति । प्रशंसापरः प्रत्यय इति भावः । प्रशस्तरत्नकाञ्चनादिमयशिखरविशेषयोगान्मेरोरतिशयः ॥ २३ ॥

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥** २४

भा ॥ **पुरोधसामुत्कृष्टो बृहस्पतिर्यः, सोऽहमस्मि । सेनानीनां—सेनापतीनां स्कन्दोऽहमस्मि । सरसां सागरोऽहमस्मि ॥ २४ ॥**

**ता ॥** बृहस्पतिसंज्ञया बृहतां पतिरित्यतिशयसिद्धिः; गिरां पतिर्ह्यसौ । सेनानीशब्देनात्र कर्मवश्यसेनापतिसंग्रहः । स्कन्दस्य देवसेनानीत्वलक्षणोऽतिशयः । सरश्शब्देन प्रवाहव्यतिरिक्तस्थास्नुसलिलाशयमात्रस्य विवक्षितत्वात्सागरसंग्रहः; स्रोतसां पृथग्वक्ष्यमाणत्वात् ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥** २५

भा ॥ **महर्षीणां मरीच्यादीनां भृगुरहम् । अर्थाभिधायिनश्शब्दा गिरः; तासामेकमक्षरं प्रणवोऽहमस्मि । यज्ञानामुत्कृष्टो जपयज्ञोऽस्मि । पर्वतमात्राणां हिमवानहम् ॥ २५ ॥**

**ता ॥** * देवर्षीणां (२५), *मुनीनाम् (३७) इत्यादेर्वक्ष्यमाणत्वादत्र महच्छब्देन विशेषणाच्च *महर्षीणामिति ऋषिगणविशेषो विवक्षित इत्यभिप्रायेण **मरीच्यादीना**मित्युक्तम् । * गिरामिति न शब्दमात्रं विवक्षितम्; समुद्रघोषादिषु तत्प्रयोगाभावात् । अत एव नाक्षरमात्रम्, * अक्षराणामकारोऽस्मीति पृथग्वक्ष्यमाणत्वाच्च । ततएव *एकमक्षरमित्यप्यकारव्यतिरिक्तविषयम् । * ओमित्येकाक्षरं ब्रह्म (गी. ८. १३) इत्यादिषु प्रणवेऽप्येकशब्दविशेषितोऽक्षरशब्दः प्रयुक्त इत्यभिप्रायेणाह—**अर्थाभिधायिन** इति । अर्थाभिधायिषु प्रणवस्योत्कर्षः सर्वोत्कृष्टार्थाभिधायित्वादिना, शङ्कुना पर्णानामिव सर्वासां वाचां प्रणवेन संतृण्णत्वश्रुतेश्च । यज्ञेषु जपयज्ञस्य प्राशस्त्यमन्यत्र सिद्धं * विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः (मनु. २.८५) इति । किंच *कुर्याद्घृतपशुं संख्ये[सङ्गे] कुर्यात्पिष्टपशुं तथा । न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कथंचन ॥ (मनु. ५. ३७) इति । * पशुयज्ञैः कथं हिंस्रैः मादृशो यष्टुमर्हति (भा. मो. १७५. ३४) *हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः । प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥ इत्यादिवचनबलादहिंसात्मकयज्ञानर्हाणां हिंसात्मकयज्ञानुज्ञानम् । तत्रापि विधितः प्रवृत्तेः अपकारानभिसन्धानादुपकारश्रुतेर्देवताप्रीणनत्वाच्च न प्रत्यवायः । फलार्थिनां तु तत्फलमल्पमस्थिरं, दुःखमिश्रं च । अहिंसात्मकास्तु यज्ञा विशिष्टाधिकारिसा[पेक्षा]ध्या भगवतोऽतिप्रीणनत्वादपवर्गप्रत्यासन्नाः । अत एव ह्युपरिचरादयः पिष्टपशुभिरिष्टवन्तः । एवमितरेषु यज्ञेषु हिंसादिप्रसङ्गोऽधिकारिविशेषादिना विषयव्यवस्थापनमित्यादिर्महान् क्लेशः; जपयज्ञे तु तत्प्रसङ्गाभावादव्याक्षेपेणार्थप्रतीत्या सबीजयोगद्वारा सहसा समाधौ निवेशनाच्च यज्ञान्तरेभ्यो जपयज्ञः प्रशस्ततमः; सर्वाश्रमसाधारण्यात्,

* जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ (मनु. २. ८७) इति विधुरादेरपि सिद्धिहेतुत्वाच्च । पर्वतविशेषाणां पूर्वमुक्तत्वाद्वृक्षाणां वक्ष्यमाणत्वाच्च तदुभयव्यवच्छेदार्थं हिमवतश्शैलराजत्वप्रसिद्ध्यनुरोधार्थं चोक्तं—**पर्वतमात्राणामि**ति ॥ २५ ॥

**अश्वत्थस्सर्ववृक्षाणां देवर्षीणां च नारदः । गन्धर्वाणां चित्ररथस्सिद्धानां कपिलो मुनिः ॥** २६
**उच्चैश्श्रवसमश्वानां विद्धि माममृतोद्भवम् । ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥** २७
**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् । प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥** २८
**अनन्तश्चास्मि नागानां वरुणो यादसामहम् । पितॄणामर्यमा चास्मि यमस्संयमतामहम् ॥** २९

भा ॥ **वृक्षाणां पूज्योऽश्वत्थोऽहम् । देवर्षीणां नारदोऽहम् । कामधुक्—दिव्या सुरभिः । जननहेतुः कन्दर्पश्चाहमस्मि । सर्पाः—एकशिरसः ; नागाः—बहुशिरसः । यादांसि—जलवासिनः, तेषां वरुणोऽहम् । दण्डयतां वैवस्वतोऽहम्** ॥ २६—२९ ॥

**ता** ॥ ननु * सर्ववृक्षाणामित्येतदनुपपन्नं, पारिजाताद्यपेक्षया अश्वत्थस्य निकृष्टत्वादित्यत्रोक्तं—**पूज्य** इति । पारिजातादीनामप्यश्वत्थवत्पूज्यत्वं नास्तीति भावः । देवा मन्त्रदर्शिनो देवर्षयः, देवर्षिषु नारदस्य बहुप्रकारोऽतिशयो बहुषु प्रदेशेषु महाभारत एव प्रपञ्चितः । चित्ररथः—गन्धर्वराजः । * सिद्धानामित्यादि । पूर्वसंचितसुकृतविशेषवशाज्जन्मप्रभृतिसिद्धाणिमाद्यैश्वर्याः सिद्धाः । आदिविद्वान्सिद्धः इति कपिलमाहुः । * ऋषिं प्रसूतं कपिलं महान्तम् (श्वे. ५. २) इति च श्रुतिः । * ददृशुः कपिलं तत्र वासुदेवं सनातनम् (रा. बा. ४०. २४) इति चाहुः । अयमपि परशुरामादिवत् ॥ * अमृतोद्भवमिति जन्मतः प्रकर्षसूचनम् । अमृतमत्र जलं, मथ्यमानावस्था सुधैव वा । गजेन्द्रशब्देन दिग्गजा विवक्षिताः । तेषु प्रधानतया दिक्पालेश्वरस्य शचीपतेरौपवाह्य ऐरावतः । अमृतोद्भवत्वं च काकाक्षिन्यायादैरावतेऽप्यन्वेतव्यम् । रथन्तरसामोद्भवत्वं वा द्रष्टव्यम् । नराधिपशब्देनैव निर्वाहकत्वलक्षणोऽतिशयस्सिद्धः * आयुधानामित्यर्वाचीनायुधपरं, सुदर्शनाद्यपेक्षया दधीचेरस्थिसंभवस्य वज्रस्यापि निकृष्टत्वात् । धेनूनां—दोग्ध्रीणाम् । **दिव्या सुरभि**रिति । यौगिकः कामधुक्शब्दोऽत्र व्यक्तिविशेषनिष्ठ इति भावः । प्रजनशब्देन जननहेतुत्वं कन्दर्पस्यासाधारणोऽतिशय उक्तः । स मदायत्त इत्यर्थः । अप्रजार्थकन्दर्पव्यवच्छेदार्थो वा प्रजनशब्दः । पर्याययोस्सर्पनागशब्दयोः कथं पृथग्व्यपदेश इत्यत्राह—**सर्पा एकशिरसः ; नागा बहुशिरस** इति । यादश्शब्देन वरुणस्यापि संग्रहार्थमाह—**यादांसि जलवासिन** इति । यद्वा जलजन्तुमात्रं विवक्षितम् ; तेषां पतित्वेन संबन्धो वरुणस्य तत्साजात्याभावाद्ग्राह्यः । अर्यमा—पितृराजः । संयमतां—संयच्छतामित्यर्थः ; तदाह—**दण्डयता**मिति ॥ २६—२९ ॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥** ३०

भा ॥ **अनर्थप्रेप्सुतया गणयतां मध्ये कालः—मृत्युरहम्** ॥ ३० ॥

**ता** ॥ * उपमानमशेषाणां साधूनां यस्सदाऽभवत् (वि. १. १५. १५६) इत्यादिना प्रह्लादोत्कर्षः । * अहमेवाक्षयः कालः (३३) इति नित्यस्य कालतत्त्वस्य परस्ताद्वक्ष्यमाणत्वात् यमस्य च पूर्वमुक्तत्वात्तद्व्यतिरिक्तः पुरुषविशेष इह

पत्तेः । नचान्तःकरणावच्छिन्नचैतन्यरूपजीवस्य पुरुषशब्देन विवक्षितत्वात्, *कामस्संकल्पः इत्यादिश्रुत्यनुसारेण योग्यतयाऽन्तःकरणस्य तदाश्रयत्वपरमेव *पुरुषस्सुदुखःखानाम् (१३. २०) इति वाक्यमिति वाच्यम्, देहादिवदन्तःकरणस्यापि प्रकृतिपरिणामत्वेन कार्यकरणकर्तृत्वे सुखदुःखानां भोक्तृत्वे च हेतुः प्रकृतिरुच्यत इत्येवोक्त्यापत्तेः । चैतन्यसंबन्धप्रयुक्तं भोक्तृत्वाश्रयत्वमिति *पुरुषस्सुखदुःखानामित्युक्तिरिति चेत्; कर्तृत्वाश्रयत्वमपि तत्संबन्धायत्तमिति तत्रापि तथोक्तिस्स्यात् । नचैवं *कामस्सकल्प इति श्रुतेः *पञ्चवृत्तिर्मनोवद्व्यपदिश्यते (२. ४. ११) इति सूत्रभाष्यस्य च कथमुपपत्तिरिति वाच्यम्, कामसंकल्पादिशब्दवाच्यधर्मभूतज्ञानपरिणामहेतुभूतमनोवृत्तीनां तत्कार्यवाचिशब्देनाभिधानपूर्वकं मनसस्तत्त्वान्तरत्वाभावप्रतिपादनपरत्वेनोपपत्तेः । ननूभयसंप्रतिपन्नमनोवृत्तिभिरेव तत्तन्नाम्नीभिस्सर्वकार्योपपत्तौ कामादिशब्दवाच्यधर्मभूतज्ञानपरिणामकल्पने प्रमाणाभावात्कामादिशब्दानां मनोवृत्तिषु लाक्षणिकत्वमनुपपन्नमिति चेन्न, *सोऽकामयत (आ. ६) *अथ पुरुषो ह वै नारायणोऽकामयत (ना. उ.) इति स्थाने *तदैक्षत (छा. ६.२.३) *स ईक्षांचक्रे (प्र. ६. ३) इत्यन्तःकरणरहितजगत्कारणाश्रितज्ञानविशेषवाचीक्षतिशब्दपाठात्, *स तपोऽतप्यत (आ. ६) इति तत्स्थानपठिततपश्शब्दस्य *यस्य ज्ञानमयं तपः (मु. १. १. ९) इति ज्ञानशब्देन व्याख्यानात्, *स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति (छा. ८. २. १) इति मुक्ताश्रितत्वेन कामसंकल्पयोश्श्रवणात्, सुखत्वापरपर्यायानन्दत्वस्य *रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति (आ. ७) *आनन्दं ब्रह्मणो विद्वान् (आ. ९) इत्यादिषु *अनुकूलज्ञानमेव ह्यानन्दः इति भाष्यकृदुक्तरीत्या मुक्तब्रह्मसंबन्धिज्ञानवृत्तित्वश्रवणात्, *निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥ (वि. ५. ६. ५९) इति भगवदनुभवरूपभगवत्प्राप्तेस्सुखरूपत्वस्मृतेश्च कामसंकल्पसुखादीनां ज्ञानावस्थाविशेषत्वस्य अवश्याभ्युपगमनीयत्वात् । मनोवृत्तीनामज्ञानत्वेनान्याधीनप्रकाशतयाऽनन्याधीनप्रकाशत्वादिरूपव्यापकनिवृत्त्या व्याप्यभूतार्थान्तरप्रकाशादिहेतुत्वासंभवेन ज्ञानावस्थाविशेषानङ्गीकारे विषयप्रकाशव्यवहारादेरनुपपत्तेस्स्वप्रकाशज्ञानावस्थाविशेषाणामावश्यकत्वात् । अनेकशक्तिकल्पने गौरवेण कामसंकल्पादिशब्दानां वृत्तिषु लाक्षणिकत्वस्य न्याय्यत्वाच्च । नच वृत्तीनां चैतन्यसंबन्धेन विषयप्रकाशादिसमर्थत्वमिति वाच्यम्, निर्विशेषचैतन्यस्य सर्वविषयविमुखस्य विषयप्रकाशाद्ययोग्यत्वेन तत्सहायस्य *शतमप्यन्धानां न पश्यतीति न्यायेन विषयप्रकाशादिसामर्थ्यानापादकत्वान्निर्विशेषचैतन्यस्य तद्योग्यत्वे तेनैव प्रकाशाद्युपपत्तौ वृत्त्यवच्छेदकल्पना निष्फला स्यात् । नच संसारदशायां संकुचितस्य तस्य विषयव्यव[स्थित्यौ] स्थौपयिकतया साफल्यमिति वाच्यम्, तस्य संकोचाङ्गीकारे निर्विकारत्वादिप्रतिपादकश्रुत्यादिविरोधाच्चक्षुरादिवृत्तिभिरेव विषयव्यवस्थोपपत्तेश्च; धर्मभूतज्ञानस्य च विकारोऽङ्गीकृत एवेति न किंचिदनुपपन्नमस्माकमिति । एतत्सर्वमभिप्रेत्य भाषितम्—**तेषां पुरुषधर्मत्वं *पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते इति वक्ष्यत** इति । *चेतनाधृतिरित्यत्र न तावत्पदद्वयम्, चैतन्यस्य क्षेत्रानन्तर्भावात्; एकपदत्वेऽपि चेतनाया धृतिरिति न विग्रहः, धृतिशब्दस्याधारपरत्वे शरीरस्य चैतन्याधारत्वासंभवात्; भोगस्थानपरत्वे निर्विशेषचैतन्यस्य भोक्तृत्वानभ्युपगमात् *एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः (प्र. ४. ९) इति ज्ञातृत्वकर्तृत्वविशिष्टचेतनस्यैव भोक्तृत्वश्रवणाच्च । चेतनस्याधृतिरिति विग्रहः । चेतनशब्देनात्मा निर्दिश्यते । *भूतैरुद्याम (वि. २. ३. ६९) इतिवत् आधृतिशब्दोऽपि *अकर्तरि च कारके संज्ञायाम् (अष्टा. ३. ३. ९) इत्याधारपर इत्याह—**आधृतिराधार** इति । अत्रोद्दिष्टार्थक्रमवशाद्व्युत्क्रमेण व्याख्यातम् । आधारत्वस्यात्र भोगायतनत्वरूपत्वान्नाधेयत्वरूपशरीरलक्षणविरोध इत्यभिप्रेत्याह—**सुखेति** । *महाभूतानीत्यादेस्सुग्रहत्वाय

* महाभूतानीत्यादेः * तत्क्षेत्रं यच्च यादृक्चेत्यादियदुक्तपञ्चकार्थविषयतां दर्शयन्पिण्डितार्थमाह—**प्रकृत्यादी**ति । सविकारशब्देनेच्छादीनां क्षेत्रपरिणामत्वशङ्काव्युदासायाह—**सकार्य**मिति ॥ ५ ॥ ६ ॥

**भा ॥ अथ क्षेत्रकार्येष्वात्मज्ञानसाधनतयोपादेया गुणाः प्रोच्यन्ते—**

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥** ७

**भा ॥ अमानित्वम्—उत्कृष्टजनेष्ववधीरणारहितत्वम् ; अदम्भित्वम्—धार्मिकत्वयशःप्रयोजनतया धर्मानुष्ठानम् दम्भः, तद्रहितत्वम् ; अहिंसा—वाङ्मनःकायैः परपीडारहितत्वम् ; क्षान्तिः—परैः पीड्यमानस्यापि तान्प्रत्यविकृतचित्तत्वम् ; आर्जवम्—परान्प्रति वाङ्मनःकायप्रवृत्तीनामेकरूपता ; आचार्योपासनम्—आत्मज्ञानप्रदायिन्याचार्ये प्रणिपातपरिप्रश्नसेवादिनिरतत्वम् ; शौचम्—आत्मज्ञानतत्साधनयोग्यता मनोवाक्कायगता शास्त्रसिद्धा ; स्थैर्यम्—अध्यात्मशास्त्रोदितेऽर्थे निश्चलत्वम् ; आत्मविनिग्रहः—आत्मस्वरूपव्यतिरिक्तविषयेभ्यो मनसो निवर्तनम् ॥ ७ ॥**

**ता ॥** पूर्वं क्षेत्रज्ञादपि पश्चाज्ज्ञानोद्देशेऽपि तत्साधनानामनुष्ठेयानामिच्छादिवत्क्षेत्रकार्यत्वात्तदनन्तरमिह तदुक्तिरित्यभिप्रायेणाह—**अथ क्षेत्रकार्येष्वि**ति । विद्याभिजनधनादिसंपत्तिमूल उत्कृष्टजनावमानहेतुर्गर्वोऽत्र मानः ; तद्वान्मानी, तदन्योऽमानी ; तस्य भावस्तत्त्वम् ; मानित्वस्याभावो वाऽत्रामानित्वम् ; एवमदम्भित्वमपि ; तदाह—**तद्रहितत्व**मिति । * धर्मध्वजः (वि. ध. ८१. ३५) इति स्मृत्यनुसारेणाह—**धार्मिकत्वयशःप्रयोजनत**येति । न पुनश्चोदितकर्तव्यताबुद्ध्येति भावः । अनर्थैकफलपरपीडारूपो व्यापारो हिंसा ; स च वाङ्मनःकायैस्त्रिभिरपि शापादिद्वारा संभवतीति संभावितसमस्तप्रकारनिषेधस्य वचनात्सिद्धस्य असंकोचेन विवक्षितत्वात् **वाङ्मनःकायै**रित्युक्तम् । **परपीडे**ति प्रायिकत्वाभिप्रायम्, अशास्त्रीयस्वपीडाया अपि हिंसात्वात् । * मनस्यन्यद्वचस्यन्यत् इत्येवंरूपं हि कौटिल्यम् ; तन्निवृत्तिरार्जवमित्यभिप्रायेणाह—**परान्प्रति वाङ्मनःकायप्रवृत्तीनामेकरूपते**ति । उपकारबुद्ध्या आचार्योपासनस्य स्वरसवाहित्वज्ञापनायाह—**आत्मज्ञानप्रदायिनी**ति । यद्वा आत्मज्ञानापेक्षितत्वज्ञापनाय तदुक्तिः । * तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया (४. ३४) इति प्राक्प्रपञ्चितमिहोपासनशब्देन संगृहीतमिति ज्ञापनाय प्रणिपाताद्युपादानम् । अशुचित्वं ह्युत्तरकर्माद्ययोग्यत्वरूपम् ; शुचित्वं च तद्योग्यत्वम् ; तच्चात्र प्रकरणविशेषितविषयमित्याह—**आत्मज्ञाने**ति । रागादयोऽनृतादयो निषिद्धभक्षणादयश्च मनोवाक्कायानामशुद्धयः । प्रत्यक्षाद्यगोचरत्वप्रामाणिकत्वप्रतिपादनाय तत्तद्विशेषावगमाय च **शास्त्रसिद्धे**त्युक्तम् । स्थैर्यं निश्चलत्वम् ; तच्च प्रकृते नियच्छति—**अध्यात्मे**ति । निश्चलत्वं बाह्यकुदृष्टिभिरक्षोभणीयत्वं, निस्संदेहत्वमित्यर्थः । निग्राह्यत्वसामर्थ्यादत्रात्मशब्दो मनोविषयः । अत एव परोक्तं सङ्घातपरत्वमयुक्तम् । स्वभावेन सर्वतः प्रवृत्तस्य निग्रहश्चापथान्निवर्तनं, तदाह—**आत्मस्वरूपे**ति ॥ ७ ॥

**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥** ८

**भा ॥ इन्द्रियार्थेषु वैराग्यम्—आत्मव्यतिरिक्तेषु विषयेषु सदोषतानुसंधानेनोद्वेजनम् ; अनहंकारः—अनात्मनि देहे आत्माभिमानरहितत्वम्, प्रदर्शनार्थमिदम् ; अनात्मीयेष्वात्मीयाभिमानरहितत्वं च विवक्षितम् ;**

**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्—सशरीरत्वे जन्ममृत्युजराव्याधिदुःखरूपस्य दोषस्यावर्जनीयत्वानुसंधानम्** ॥ ८ ॥

**ता** ॥ बाह्यविषयवैराग्यं हि आत्म[नि]रागनिबन्धनमित्यभिप्रायेणाह—**आत्मव्यतिरिक्तेषु विषयेष्विति** । विरागस्य भावो वैराग्यम् , तत्प्रकारमाह—**सदोषतानुसंधानेनोद्वेजन**मिति । दुःखसाध्यत्वदुःखमिश्रत्वनश्वरत्वादिभिस्तेषां दोषमयत्वम् । गर्वरूपस्याहंकारस्य पूर्वं निषेधादत्रानहंकारशब्देन देहात्मभ्रमो निवार्यत इत्याह—**अनात्मनी**ति । अहंकारस्य निषेधस्तन्मूलस्य सर्वत्र तत्सहपठितस्य ममकारस्यापि निषेधं प्रदर्शयितुमित्याह—**प्रदर्शनार्थ**मिति । शरीरप्रयुक्तजन्मादिदोषदर्शनं *नह वै सशरीरस्य सतः प्रियाप्रिययोः (छा. ८. १२. ९) इत्यादिप्रकारेण शरीरस्य हेयताप्रतिपत्त्यर्थमित्यभिप्रायेणाह—**सशरीरत्व** इति । जन्ममृत्युजराव्याधिभिर्जन्यं दुःखं जन्ममृत्युजराव्याधिदुःखम् , स एव दोष इति समासार्थः । जन्मादय एव वा दुःखान्तास्सर्वे दुःखसाधनत्वाद्दुःखत्वाच्च दोषाः । नहि तुषतण्डुलवच्छरीरमवस्थाप्य दोषाः परिहर्तुं शक्या इति दर्शयितुमवर्जनीयत्वोक्तिः । अनुदर्शनं भूयोभूयोदर्शनमित्याह—**अनुसंधान**मिति ॥ ८ ॥

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥** ९

**भा** ॥ **असक्तिः—आत्मव्यतिरिक्तपरिग्रहेषु सङ्गरहितत्वम् ; अनभिष्वङ्गः पुत्रदारगृहादिषु—तेषु शास्त्रीयकर्मोपकरणत्वातिरेकेण श्लेषरहितत्वम् ; संकल्पप्रभवेष्विष्टानिष्टोपनिपातेषु हर्षोद्वेगरहितत्वम्** ॥ ९ ॥

**ता** ॥ पूर्वम् *इन्द्रियार्थेषु वैराग्यमिति सांस्पर्शि[क]के शब्दादिविषये विरक्तिरुक्ता ; इदानीम् *असक्तिरित्याभिमानिकेषु सङ्गरहितत्वमुच्यत इति पुनरुक्तिं परिहर्तुम् **आत्मव्यतिरिक्तपरिग्रहेष्वि**त्युक्तम् । तर्हि गृहस्थस्य मुमुक्षोराभिमानिकसर्वधर्मपरित्यागेन कथमाश्रमधर्मो निर्वर्त्येतेत्यत्रोच्यते—**अनभिष्वङ्गः पुत्रदारगृहादिष्विति** । नात्र तेषूपयुक्तानामपि स्वरूपेण त्यागो विवक्षितः, प्रव्रजितस्याप्यवर्जनीयेषु सङ्गमात्रनिषेधात्—*न कुण्ड्यां नोदके सङ्गो न चेले न च विष्टरे । नागारे नासने नान्ये यस्य वै मोक्षवित्तु सः ॥ इति । अतो धर्मोपयुक्तत्वमात्रेण [तु] परिग्रह एवेत्यभिप्रायेणाह—**शास्त्रीये**ति । सङ्गोऽभिष्वङ्गहेतुः, *सङ्गात्संजायते कामः (२. ६२) इत्युक्तत्वात् । अतः कारणाभावात्कार्याभाव इति भावः । अभिष्वङ्गोऽतिसक्तिः । सांस्पर्शिकेष्टानिष्टयोस्समचित्तत्वस्याशक्यत्वादाह—**संकल्पप्रभवेष्विति** । पुत्रदारादिप्रसङ्गात्तद्विषयत्वं युक्तमेवेति [च] भावः ॥ ९ ॥

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥** १०

**भा** ॥ **मयि—सर्वेश्वरे चैकान्त्ययोगेन स्थिरा भक्तिः ; जनवर्जितदेशवासित्वम् , जनसंसदि चाप्रीतिः** ॥१०

**ता** ॥ *मयीत्यनेनान्यभक्त्युन्मूलनेनाव्यभिचारित्वोपयुक्ताकारविवक्षामाह—**मयि सर्वेश्वर** इति । *अनन्ययोगेनेति देवतान्तरादिपरित्यागस्संगृहीतः । तत एव चाव्यभिचारित्वं तन्मूलं स्थैर्यम् , अन्यथा पुनरुक्तेरित्यभिप्रायेणाह—**ऐकान्त्ययोगेन स्थिरे**ति । *अनन्ययोगेनापृथक्समाधिनेति शंकरोक्तमेतेन प्रत्युक्तम् । न व्यभिचरितुं शीलमस्या इत्यव्यभिचारिणीति । समाधिविरोधपरिहाराद्यर्थं **विविक्ते**त्यादि । *अहेरिव गणाद्भीतः (भा. मो. २५१. ३)

इत्यादिवत् । उक्तं च **मोक्षधर्मे**—* नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । सत्यं धृतिर्दण्डनिधान-मार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ (२८३. ३८) इति । जनोऽत्र सत्त्वोत्तरेतरः ॥ १० ॥

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थचिन्तनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११

**भा ॥ आत्मनि ज्ञानम्—अध्यात्मज्ञानं तन्निष्ठत्वम्; तत्त्वज्ञानार्थचिन्तनम्—तत्त्वज्ञानप्रयोजनं यच्चिन्तनं तन्निरतत्वमित्यर्थः; ज्ञायतेऽनेनात्मेति ज्ञानम्, आत्मज्ञानसाधनमित्यर्थः; क्षेत्रसंबन्धिनः पुरुषस्यामानित्वादिक-मुक्तं गुणवृन्दमेवात्मज्ञानोपयोगि, एतद्व्यतिरिक्तं सर्वं क्षेत्रकार्यमात्मज्ञानविरोधीत्यज्ञानम् ॥ ११ ॥**

**ता ॥** * अध्यात्मज्ञाननित्यत्वमित्यत्र नित्यशब्देनाविच्छिन्नानुवृत्तिर्विवक्षितेत्याह—**तन्निष्ठत्व**मिति । तत्त्व-ज्ञानार्थचिन्तनमिति, उक्तस्य तत्त्वज्ञानस्य अर्थचिन्तनमित्यनुचितम्; न हि तत्त्वज्ञानस्य कोऽर्थ इति चिन्तन-प्रकारः, अपितु तत्त्वं किमिति ततस्तत्त्वचिन्तनमिति वा तत्त्वार्थचिन्तनमिति वा वक्तव्यम्; न पुनस्तत्त्वज्ञानार्थ-चिन्तनमिति । एवं तत्त्वज्ञानविषयस्य प्रयोजनस्य वा चिन्तनं, तत्त्वज्ञानपुरुषार्थदर्शनमित्यादिकमपि मन्दप्रयोज-नम्; दर्शनशब्दश्चात्राध्येतृभिर्न पठ्यते; ततोऽस्यार्थान्तरमुचितमाह—**तत्त्वज्ञानप्रयोजन**मिति । फलितमन्यत्र चिन्ता-राहित्यमभिप्रेत्याह—**तन्निरतत्वमित्यर्थ** इति । अमानित्वादीनां सर्वेषामविशेषेण ज्ञानशब्दनिर्देशोचितं निर्वचनमाह—**ज्ञायतेऽनेने**ति । आत्मेत्यर्थप्रकरण[ादि]लब्धविषयविशेषाभिधानम् । करणव्युत्पत्तिं विवृण्वन् फलितमाह—**आत्म-ज्ञाने**ति । आपातप्रतीत्यादेः पूर्वसिद्धत्वादपरोक्षादिज्ञानमिह विवक्षितम् । * एतज्ज्ञानमिति निर्दिश्य * यदतोऽन्यथेति सामान्येन तद्व्यतिरिक्तस्य सर्वस्याज्ञानतोक्तिस्तस्य सर्वस्य परिहरणीयत्वपरेत्यभिप्रायेणाह—**क्षेत्रसंबन्धिन** इति । क्षेत्र-संबन्धोक्तिस्तदत्यन्तनिवृत्तेः ज्ञानसापेक्षत्वसूचनार्था । * एतदित्यवच्छिद्य निर्देशेनाभिप्रेतं **गुणवृन्दमेवे**त्यवधारणेन विवृतम् । न केवलं प्रकृतगुणप्रतिपक्षभूतमानित्वादिमात्रमित्यभिप्रायेणाह—**एतद्व्यतिरिक्तं सर्व**मिति । * अज्ञानमित्यत्र करणव्युत्पत्तिनैरपेक्ष्यात्प्रसिद्धभावव्युत्पत्त्यनुसारेण ज्ञानविरोधित्वमुच्यत इत्याह—**क्षेत्रकार्यमात्मज्ञानविरोधीत्यज्ञान**मिति । अवैरूप्याय करणार्थत्वेऽप्यसौ फलितोक्तिर्वा ॥ ११ ॥

**भा ॥ अथ * एतद्यो वेत्तीति वेदितृत्वलक्षणेनोक्तस्य क्षेत्रज्ञस्य स्वरूपं विशोध्यते—**

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२

**भा ॥ अमानित्वादिभिस्साधनैः ज्ञेयं प्राप्यं यत्प्रत्यगात्मस्वरूपं तत्प्रवक्ष्यामि, यत् ज्ञात्वा जन्मजरा-मरणादिप्राकृतधर्मरहितममृतमात्मानं प्राप्नोति; अनादि—आदिर्यस्य न विद्यते, तदनादि; अस्य हि प्रत्यगात्मन उत्पत्तिर्न विद्यते; तत एवान्तो न विद्यते, श्रुतिश्च * न जायते म्रियते वा विपश्चित् (क. २. १८) इति; मत्परम्—अहं परो यस्य तन्मत्परम्, * इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्, जीवभूताम् (७. ५) इति ह्युक्तम्। भगवच्छरीरतया भगवच्छेषतैकरसं ह्यात्मस्वरूपम्; तथाच श्रुतिः—* य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति (बृ. ५. ७. २२. मा.) इति, यथा * स कारणं करणाधि-पाधिपो न चास्य कश्चिज्जनिता नचाधिपः (श्वे. ६. ९) * प्रधानक्षेत्रज्ञपतिर्गुणेशः (श्वे. ६. १६) इत्यादिका।**

ब्रह्म—बृहत्त्वगुणयोगि, शरीरादेरर्थान्तरभूतम्, स्वतश्शरीरादिभिः परिच्छेदरहितं क्षेत्रज्ञतत्त्वमित्यर्थः ; *स चानन्त्याय कल्पते (श्वे. ५. ९) इति हि श्रूयते ; शरीरपरिच्छिन्नत्वं चास्य कर्मकृतम् ; कर्मबन्धान्मुक्तस्यानन्त्यम् ; आत्मन्यपि ब्रह्मशब्दः प्रयुज्यते—*स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च (गी. १४. २६. २७) *ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ (गी. १८. ५४) इति । न सत्तन्नासदुच्यते—कार्यकारणरूपावस्थाद्वयरहिततया सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते, कार्यावस्थायां हि देवादिनामरूपभाक्त्वेन सदित्युच्यते, तदनर्हतया कारणावस्थायामसदित्युच्यते ; तथा च श्रुतिः—*असद्वा इदमग्र आसीत् । ततो वै सदजायत (आ. ७) *तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत (बृ. ३. ४. ७) इत्यादिका । कार्यकारणावस्थाद्वयान्वयस्त्वात्मनः कर्मरूपाविद्यावेष्टनकृतः, न स्वरूपकृत इति सदसच्छब्दाभ्यामात्मस्वरूपं नोच्यते । यद्यपि *असद्वा इदमग्र आसीदिति कारणावस्थं परं ब्रह्मोच्यते, तथाऽपि नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरं परं ब्रह्म कारणावस्थमिति कारणावस्थायां क्षेत्रक्षेत्रज्ञस्वरूपमप्यसच्छब्दवाच्यम् ; क्षेत्रज्ञस्य साऽवस्था कर्मकृतेति परिशुद्धस्वरूपं न सदसच्छब्दनिर्देश्यम् ॥ १२ ॥

**ता** ॥ ज्ञाता हि पूर्वमुद्दिष्टः—*स च यो यत्प्रभावश्च (३) इति ; स एव पुनः परामृष्टः ; तत्कथं *ज्ञेयं यत्तत्प्रवक्ष्यामीत्युच्यत इत्यत्राह—**अथे**ति । वेद्यविशेषस्यात्मनो लक्षणतया हि वेदितृत्वं प्रागुक्तमिति भावः । अत एव *ज्ञेयं यदित्यादेः परब्रह्मविषयत्वभ्रमो निरस्तः, *क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति प्रक्रमात्, *क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा (३४) इति उपसंहरिष्यमाणत्वात् ; मध्येच *प्रकृतिं पुरुषं चैवेति तयोरेव निरूपणात्, इन्द्रियाधीनभोगत्वोत्क्रमणगुणवश्यत्वादिवचनाच्च । स्वरूपशब्देन नपुंसकनिर्देशविवक्षाद्योतनम् ; वक्ष्यमाणब्रह्मशब्दापेक्षया वा नपुंसकत्वम् । स्वेतरसमस्तव्यावर्तकं हि लक्षणम् । तत्र वेदितृत्वलक्षणेन विविक्तस्वरूपस्य किमन्यत्स्वरूपशोधनमिति चेत् ; तन्न, लक्षणेनान्यत्वमात्रं हि प्रतीयते, न पुनर्भावाभावरूपाः सर्वे प्रकाराः ; यथा गन्धवती पृथिवीत्यत्र तेनाकारेण जलादिव्यावृत्तिमात्रं सिध्यति, न पुनः पाकजरूपादिमत्त्वादिकम्, तद्वदिहापि ज्ञातृत्वलक्षणाभिधानेऽपि तस्य ज्ञातुः कार्यत्वाकार्यत्वादिविवेको न सिध्येत् ; अतस्स वक्तव्य इत्यभिप्रायेण *ज्ञेयमित्यनेन सूचितां संगतिमाह—**अमानित्वादिभि**रिति । **प्रवक्ष्यामि**—प्रकर्षेण यथावद्वक्ष्यामीत्यर्थः । *अनादिमदिति पदच्छेदो न युक्तः, प्रत्ययमन्तरेणापि बहुव्रीहिवशात्तदर्थसिद्धेरित्यभिप्रायेणाह—**आदिर्यस्ये**ति । अनादि—कारणरहितमित्यर्थः । अयमर्थः *नात्मा श्रुतेः (ब्र. २. ३. १८) इत्यधिकरणसिद्ध इत्यभिप्रायेणाह—**अस्य ही**ति । पूर्वोक्तामृतत्वेऽपि हेतुरयमित्य[भिप्रायेण]ाह—**तत एवे**ति । उभयत्र प्रमाणमाह—**श्रुतिश्चे**ति । *अनादिमदिति पदच्छेदेऽत्र निर्दिश्यमानं ब्रह्म परशब्देन विशेषणीयम् ; तच्चाप्रकरणत्वादस्वरसम् ; अतः प्रकरणोचितपदच्छेदार्थमाह—**अहं परो यस्ये**ति । प्रागुक्तसंग्रहो ह्ययमित्यभिप्रायेणाह—**इतस्त्वन्या**मिति । परशब्दोऽत्र शेषिपरः । शरीरत्वे शेषत्वे च क्रमाच्छ्रुतिमाह—**तथा चे**ति । एतेन *मत्परमिति पदच्छेदेऽर्थासंभवान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थ इति शंकरोक्तं प्रत्युक्तम् । ननु परशब्देनाविशेषितोऽपि ब्रह्मशब्दः परमात्मन्येव मुख्यः, तत्कथमस्य जीवविषयत्वमित्यत्राह—**बृहत्त्वगुणयोगी**ति । अणुत्वेन श्रुतिसिद्धस्य संकुचितज्ञानस्य कथं बृहत्त्वमित्यत्राह—**शरीरादिभि**रिति । **परिच्छेदरहितम्**—स्वतस्सर्वविषयत्वार्हस्य ज्ञानस्य संकोचरहितमित्यर्थः । स्वरूपाविर्भावदशायां बृहत्त्वं श्रुतिसिद्धमित्याह—**सचे**ति । अनन्तस्वभावस्य परिच्छिन्नत्वासंभवादान-

न्त्यमौपचारिकमित्यत्राह—**शरीरपरिच्छिन्नत्वं चे**ति । औपाधिकमवस्थाभेदेनाविरुद्धं चेत्यभिप्रायः । औपचारिकस्यापि ब्रह्मशब्दप्रयोगस्य प्रसिद्धिमाह—**आत्मन्यपी**ति । अत एव हि परं ब्रह्मेति विशेषणस्य सार्थतेत्यभिप्रायः । अत्रैव शास्त्रे बहुषु प्रदेशेषु प्रत्यगात्मन्येव ब्रह्मशब्दप्रयोगं दर्शयति—**स गुणानि**ति । **ब्रह्मभूयाय**—ब्रह्मत्वाय । नहि जीवस्य मुक्तस्यापि साक्षाद्ब्रह्मत्वम्, * मम साधर्म्यमागताः (गी. १४. २) इत्यादिविरोधादिति भावः । * ब्रह्मणो हि प्रतिष्ठाऽहमित्यत्र * अहमिति परं ब्रह्म निर्दिश्यते ; तत्प्रतिष्ठं च ब्रह्म ततोऽन्यदेवेति भावः । * ब्रह्मभूतः (१८. ५४) इत्यत्र श्लोके परब्रह्मप्राप्तिसाधनभूतभक्त्युत्पत्तेः पूर्वमेव ब्रह्मभूतत्वं च नहि परब्रह्मस्वरूपत्वमिति भावः । * न सत्तन्नासदुच्यते इत्यत्र न सर्वप्रकारोक्तिगोचरत्वप्रतिक्षेपः, स्ववचनविरोधात् । न च सत्त्वासत्त्वनिषेधः, * परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायात् ; नापि सदसत्संज्ञकाभ्यां वस्तुभ्यां व्यावृत्तिः ; तयोरसिद्धत्वात् ; नच शुभाशुभादिव्यवच्छेदः, शुभत्वनिषेधायोगात् ; अतोऽत्र किमुच्यत इत्यत्राह—**कार्यकारणे**ति । परिशुद्धाकारविषयमिदमिति ज्ञापनाय **आत्मस्वरूपमि**त्युक्तम् । अवस्थाद्वये सदसच्छब्दयोः प्रयोगनिमित्तमाह—**कार्यावस्थाया**मिति । तन्निबन्धनं श्रुतौ परमात्मादिविषयप्रयोगं दर्शयति—**तथाचे**ति । *असद्वा इदमित्यत्रासच्छब्दनिर्दिष्टं हि *तत इति कारणतयोच्यते ; * सदजायतेति कार्यं सच्छब्देन, * तद्धेदमिति समानार्थश्रुत्यन्तरेणासदादिशब्दौ क्रमान्नामरूपप्रहाणतद्योगनिमित्तौ व्याख्यातौ । ननु * असद्वा इदमग्र आसीदित्याद्युक्तमवस्थाद्वयं जीवस्याप्यस्त्येव, अन्यथा प्रागुक्तप्रकृतित्वानुपपत्तेः, * तोयेन जीवान्व्यससर्ज भूम्याम् (ना) इति श्रुत्या च तत्सिद्धेरित्यत्राह—**कार्यकारणे**ति । कर्मोपाधिकमेव ह्यवस्थाद्वयम्, न पुनस्स्वाभाविकम् । अत्र स्वाभाविकरूपमुच्यत इत्यर्थः । ननु * कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः (ब्र. १. ४. १४) इत्यस्मिन्नधिकरणे सदसदव्याकृतादयस्सर्वे कारणवाक्यगताश्शब्दाः परमात्मपरा इति निर्णीतम्, तत्कथमत्रासच्छब्देन जीवप्रसङ्ग इत्यत्राह—**यद्यपी**ति । सदसच्छब्दौ ह्यत्र परमात्मनि सद्वारकौ, अतो द्वारभूते जीवेऽपि तद्वाच्यत्वं सिद्धमिति भावः । तर्हि परिशुद्धावस्थायामपि कार्यनामरूपविभागाभावादसच्छब्दः प्राप्त इत्यत्राह—**क्षेत्रज्ञस्ये**ति । कर्मकृतावस्थाद्वयनिषेधेऽत्र तात्पर्यमिति भावः ॥ १२ ॥

**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥** १३

भा ॥ **सर्वतः पाणिपादं तत्—परिशुद्धात्मस्वरूपं सर्वतःपाणिपादकार्यशक्तम्, तथा सर्वतोऽक्षिशिरोमुखं सर्वतश्श्रुतिमत्—सर्वतश्चक्षुरादिकार्यकृत्, * अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्णः (श्वे. ३. १९) इति परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकृत्त्वं श्रूयते, प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकृत्त्वं श्रुतिसिद्धमेव ; * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति (मु. ३. १. ३) इति हि श्रूयते ; * इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः (१४. २) इति च वक्ष्यते । लोके सर्वमावृत्य तिष्ठति—लोके यद्वस्तुजातं तत्सर्वं व्याप्य तिष्ठति, परिशुद्धस्वरूपं देशादिपरिच्छेदरहिततया सर्वगतमित्यर्थः ॥ १३ ॥**

**ता** ॥ आत्मस्वरूपस्याशरीरत्वान्निरवयवत्वान्निरिन्द्रियत्वाच्च पाणिपादप्रसङ्ग एव नास्ति, न चेदमनेकबाहुत्वादिप्रागुक्तपरं, जीवप्रकरणत्वस्थापनात् ; अत एव जीवकर्मगृहीतैस्स्वेच्छागृहीतैश्च पाण्यादिभिर्विश्वात्मकस्य ब्रह्मणो योग उच्यत इत्यादिकल्पनाऽपि निरस्ता। पादादिषु पाण्याद्यभावाच्च सर्वत इत्यपि न घटते ; तत्कथं सर्वतः पाणिपादत्वादिक-

मित्यत्राह—**परिशुद्धेति** । पाण्यादिरहितस्यापि परिशुद्धात्मनः पाण्यादिशब्दलक्षिते शक्तियोगे श्रुतिं दर्शयितुं परमात्मनस्तद्रहितस्यापि तच्छक्तियोगं तावद्दर्शयति—**अपाणीति** । *अपाणिपादः (श्वे. ३. १९) इति निषेध्यस्य कर्मेन्द्रियवर्गस्योपलक्षणम्; *अचक्षुरकर्णः इति ज्ञानेन्द्रियवर्गस्य [उपलक्षणम्] । तर्हि परमात्मासाधारणस्वभावस्यात्र अल्पशक्तौ जीवे कथं व्यपदेश इत्यत्राह—**प्रत्यगात्मनोऽपीति** । मुक्तदशायां ब्रह्मगुणाष्टकयोगादसंकुचितज्ञानशक्तेस्तदुपपत्तिरिति भावः । साम्यश्रुतिसंकोचाभावाद्विशेषकण्ठोक्त्यभावेऽपि सर्वतःपाणिपादत्वादिकं सिद्धमेवेत्यभिप्रायेणैवकारः । साम्यापत्तिमात्रे सर्वथा साम्यं कथं श्रुतिसिद्धमित्यत्राह—**तदेति** । इदं हि परमसाम्यं जगद्व्यापारव्यतिरिक्तसर्वविषयमिति फलपादे मीमांसितमिति भावः । सच श्रुत्यर्थोऽत्राप्युपदेक्ष्यते, तद्विवक्षाऽत्र युक्तेत्याह—**इदं ज्ञानमिति** । *तिष्ठतीत्यत्र व्याप्तेरप्रच्युतिर्विवक्षिता । कर्मवेष्टितज्ञानस्याणोः कथं सर्वव्यापित्वावस्थितिरित्यत्राह—**परिशुद्धेति** । इदं च व्यापकत्वं धर्मभूतज्ञानद्वारेति निरूपितं **शारीरके**—*प्रदीपवदावेशस्तथा हि दर्शयति (४. ४. १५) इत्यादिना; जीवस्वरूपस्याणुत्वेनैव लक्षणात्, निर्विकारश्रुत्या च स्वरूपविकारायोगात् ॥ १३ ॥

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥** १४

भा ॥ **सर्वेन्द्रियगुणाभासम्—सर्वेन्द्रियगुणैराभासो यस्य तत्सर्वेन्द्रियगुणाभासम्, इन्द्रियगुणा इन्द्रियवृत्तयः, इन्द्रियवृत्तिभिरपि विषयान् ज्ञातुं समर्थमित्यर्थः । स्वभावतस्सर्वेन्द्रियविवर्जितम्—विनैवेन्द्रियवृत्तिभिः स्वत एव सर्वं जानातीत्यर्थः । असक्तम्—स्वभावतो देवादिदेहसङ्गरहितम्, सर्वभृच्चैव—देवादिसर्वदेहभरणसमर्थं च, *स एकधा भवति त्रिधा भवति (छा. ७. २६. २) इत्यादिश्रुतेः । निर्गुणम्—तथा स्वभावतस्सत्त्वादिगुणरहितम् । गुणभोक्तृ च—सत्त्वादीनां गुणानां भोगसमर्थं च ॥ १४ ॥**

ता ॥ स्वरूपमिन्द्रियगुणैराभासत इत्यादिपरोक्तव्युदासायाह—**सर्वेन्द्रियगुणैराभासो यस्येति** । योग्यत्वं शुद्धावस्थायामप्यस्तीति भावः । नन्विन्द्रियाण्येव करणभूतानि, न पुनरिन्द्रियगुणा इत्यत्राह—**इन्द्रियगुणा इन्द्रियवृत्तय इति** । स्वयंप्रकाशस्यात्मस्वरूपस्य कथमिन्द्रियवृत्तिभिराभासः? विषयाभासविवक्षायामपि परिशुद्धस्वरूपप्रसङ्गे कथमैन्द्रियिकज्ञानोक्तिरित्यत्राह—**इन्द्रियवृत्तिभिरपीति** । एतेन *सर्वेन्द्रियव्यापारैः व्याप्तमिव ज्ञेयमिति शंकरस्योद्ग्रन्थकल्पना निरस्ता । कदाचिदिन्द्रियवतः कथं सर्वेन्द्रियविवर्जितत्वमित्यत्राह—**स्वभावत इति** । सर्वेन्द्रियनिषेधे तदधीनज्ञानाभावात्परोक्तं पाषाणकल्पत्वप्रसङ्गं प्रागुक्तेन परिहरति—**विनैवेति** । मुक्तस्यापि जगदाधारत्वाभावात्पर्यायेण सर्वजातीयदेहभृत्त्वाभावाच्च तच्छक्तिरत्रापि विवक्षिता; स्वतस्तत्सङ्गराहित्यं च *असक्तमित्युच्यत इत्याह—**स्वभावतो देवादीति** । सामर्थ्यं परिशुद्धावस्थाभाविना कार्येण दर्शयति—**स एकधेति** । आत्मस्वरूपस्य भिदुरत्वाभावाज्जक्षणादिश्रुतिवशाच्च विग्रहद्वारैव हि त्रिधाभवनादिक[थन]मिति भावः । एतेन *सर्वभृत्त्वं सर्वाध्यासाधिष्ठानत्वमिति वदन् प्रत्युक्तः । *निर्गुणमित्यत्र न सत्त्वादिगुणसमवायित्वं प्रतिषिध्यते, तस्याशुद्धावस्थायामपि प्रसङ्गाभावात्; *गुणभोक्तृ चेत्येतत्प्रतिपक्षरूपत्वाभावाच्च; अतोऽत्र कर्मोपाधिकस्य प्राकृतगुणभोगस्य प्रतिक्षेपः क्रियत इति न निर्विशेषवादावकाश इत्यभिप्रायेणाह—**स्वभावतस्सत्त्वादिगुणरहितमिति** । **स्वभावत** इत्यनेन गुणभोक्तृत्वविरोधपरिहारः । **भोगसमर्थमित्यत्रापि** पूर्ववदभिप्रायः । **औपाधिकं गुणभोक्तृत्वं, स्वभावतस्तदभावः**, तत्सामर्थ्यमात्रं तु नित्यमित्यविरोधः ॥ १४ ॥

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥** १५

भा ॥ पृथिव्यादीनि भूतानि परित्यज्याशरीरो बहिर्वर्तते ; तेषामन्तश्च वर्तते, * **जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा** (छा. ८. १२. ३) इत्यादिश्रुतिसिद्धस्वच्छन्दवृत्तिषु ; अचरं चरमेव च—**स्वभावतोऽचरं चरं च देहित्वे, सूक्ष्मत्वात्तदविज्ञेयम्—एवं सर्वशक्तियुक्तं सर्वज्ञं तदात्मतत्त्वमस्मिन् क्षेत्रे वर्तमानमप्यतिसूक्ष्मत्वा-देहात् पृथक्त्वेन संसारिभिरविज्ञेयम्, दूरस्थं चान्तिके च तत्**—अमानित्वाद्युक्तगुणरहितानां विपरीतगुणानां पुंसां स्वदेहे वर्तमानमप्यतिदूरस्थम्, तथा अमानित्वादिगुणोपेतानां तदेवान्तिके वर्तते ॥ १५ ॥

ता ॥ सशरीरत्वावस्थायां हि भूतान्तर्वृत्तिरिति मुक्तस्याशरीरत्वात्तद्बहिर्वृत्तिर्युक्ता ; तदन्तर्वृत्तिस्तु कथमित्यत्राह—**जक्षदि**ति । स्वच्छन्दवृत्तिषु तेषामन्तश्च वर्तत इत्यन्वयः । नचैतत्कर्मकृतं सशरीरत्वं, * स्वेन रूपेणाभिनिष्पद्यते (छा. ८. १२. २) इत्याविर्भूतस्वरूपस्य तदुक्तेः, तस्य च विधूतपुण्यपापत्वात् * स्वराड्भवति (छा. ७. २५. २) इति वचनाच्च । तदेतदभिप्रेत्य **स्वच्छन्दवृत्तिष्वि**त्युक्तम् । * स यदि पितृलोककामो भवति (छा. ८.२.१) * इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् (भृ) इत्यादिकमादिशब्देन गृह्यते । स्वरूपतो निर्विकारस्यात्मनस्त्रिधा भावादिकं जक्षणादिकं पितृलोककामादिकं च शरीरपरिग्रहमन्तरेण नोपपद्यते ; शरीरं चास्य प्राकृतानामप्राकृतानां वा भूतानां संघात एवेति भूतान्तर्वर्तित्वं सिध्यतीत्यभिप्रायः । अचरत्वचरत्वयोर्न चराचरान्तरत्वे शुद्धावस्थायामन्वयः ; अतः * बहिरन्तः इत्युक्तसशरीरत्वाशरीरत्वे तत्र हेतू इति दर्शयति—**स्वभावतोऽचरं चरं च देहित्व** इति । पादाद्य-धीनसंचारतदभावाविह विवक्षितौ । योग्यानुपलम्भबाध[क]परिहारायोच्यते—**सूक्ष्मत्वात्तदविज्ञेय**मिति । अहमिति नित्यमुपलभ्यमानस्य अविज्ञेयत्वं केनाकारेणेत्यत्राह—**एवं सर्वशक्तियुक्तं सर्वज्ञ**मिति । तच्छब्दपरामृष्टोऽयमर्थः । योग्यत्वशङ्कासूचनाय दूरत्वाद्यनुपलम्भकारणान्तराभावोपलक्षणतया **अस्मिन् क्षेत्रे वर्तमानमपी**त्युक्तम् । पृथिव्याद्यपे-क्षया सूक्ष्माणामपि वाय्वादीनां पृथगुपलम्भोऽस्तीति तद्व्युदासायोक्तम्—**अतिसूक्ष्मत्वादि**ति । * अहं जानामीत्यात्मन उपलम्भे सत्यपि विविच्य ज्ञातुमशक्य[त्व]मविज्ञेय[त्व]मिति सोपसर्गनिषेधेन विवक्षितमिति दर्शयितुं—**देहात्पृथक्त्वेने**-त्युक्तम् । पृथक्त्वस्य सर्वदा सर्वैरनुपलम्भे शशशृङ्गादिवदप्रामाणिकत्वमेव स्यात्, योगाभ्यासविधानस्य च निरर्थकत्वं स्यादित्यत्रोक्तं—**संसारिभि**रिति । योगिनामपि मुक्तवदविच्छिन्नविशदतमप्रत्ययाभावात्—**संसारिभि**रिति सामान्येनोक्तम्। यद्वा योगविरहिता इह संसारिशब्देन विवक्षिताः, योगिनामासन्नमोक्षत्वेन मुक्तप्रायत्वात् । * दूरस्थं चान्तिके च तदित्यनेन न व्याप्तिर्विवक्षिता, तस्याः * सर्वमावृत्य तिष्ठतीति प्रागेवोक्तत्वात् । अतोऽत्र सूक्ष्मत्वात्संसारिभिरविज्ञेयस्य कथं तैरेव विज्ञातव्यत्वविधिरिति शङ्काव्युदासायाधिकारिभेदेन दुर्ग्रहत्वसुग्रहत्वपरत्वमाह—**अमानित्वादी**ति ॥ १५ ॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥** १६

भा ॥ देवमनुष्यादिभूतेषु सर्वत्र स्थितमात्मवस्तु वेदितृत्वैकाकारतया अविभक्तम् ; अविदुषां देवा-द्याकारेण अयं देवो मनुष्यः इति विभक्तमिव च स्थितम् ; * देवोऽहम्, मनुष्योऽहमिति देहसामानाधिकर-ण्येनानुसन्धीयमानमपि वेदितृत्वेन देहादर्थान्तरभूतं ज्ञातुं शक्यमिति आदावुक्त[म्]मेव * एतद्यो वेत्ति (१)

इति; इदानीं प्रकारान्तरैश्च ज्ञातुं शक्यमित्याह—भूतभर्तृ चेति। भूतानां पृथिव्यादीनां देहरूपेण संहतानां यद्भर्तृ, तद्भर्तव्येभ्यो भूतेभ्योऽर्थान्तरं ज्ञेयम्, अर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः। तथा ग्रसिष्णु—अन्नादीनां भौतिकानां ग्रसिष्णु, ग्रस्यमानेभ्यो भूतेभ्यो ग्रसितृत्वेनार्थान्तरभूतमिति ज्ञातुं शक्यम्, प्रभविष्णु च—प्रभवहेतुश्च, ग्रस्तानामन्नादीनामाकारान्तरेण परिणतानां प्रभवहेतुः, तेभ्योऽर्थान्तरमिति ज्ञातुं शक्यमित्यर्थः; मृतशरीरे ग्रसनप्रभवादीनामदर्शनान्न भूतसंघातरूपं क्षेत्रं ग्रसनप्रभवभरणहेतुरिति निश्चीयते ॥ १६ ॥

ता ॥ स्वरूपभेदवत्स्वविग्रहक्षेत्रादिष्वविभक्तशब्दप्रयोगात् *पण्डितास्समदर्शिनः (५. १८) इति प्रागुक्तं साम्यमिहापि विवक्षितमित्याह—**देवमनुष्यादी**ति। **अविभक्तं**—स्वरूपेण देव[त्व]ादिविभागरहितमित्यर्थः। *विभक्तमिवेतीवशब्देन भ्रान्तोपलम्भविषयीकारसूचनमाह—**अविदुषा**मिति। एवं शुद्धयवस्थोक्ता, तत्र *भूतभर्त्रित्यादीनां जगद्व्यापारभ्रमव्युदासाय प्रकरणस्य भोक्तृव्यतिरेकपरतामेव वदन् पूर्वोक्तपुनरुक्तिं च परिहरति—**देवोऽहमि**त्यादिना ग्रन्थद्वयेन। अहंत्वानहंत्वज्ञातृत्वाज्ञ[तृ]त्वादिरूपो भेदः प्रागुक्तः; अत्र त्वाधाराधेयभावभोक्तृत्वभोग्यत्वविकार्यत्वविकारहेतुत्वैर्विवेकः क्रियत इत्यर्थः। अत्र जीवभर्तव्यविषयो भूतशब्दोऽचिन्मात्रपरः; तत्रापि प्रसिद्ध्यनुरोधेन महाभूतविषयत्वेऽपि क्षेत्रप्रकरणात्तादृशपरिणामवद्भूतविषय इत्याह—**भूताना**मिति। ज्ञेयशब्दश्च *ज्ञेयं यत्तत्प्रवक्ष्यामीत्युपक्रान्तत्वेऽपि पुनरिहोच्यमानत्वात्तदतिरिक्तार्थतया व्याख्यातः। भर्तृत्वभर्तव्यत्वफलितमाह—**अर्थान्तर**मिति। **प्रभवहेतु**रिति—देहव्यतिरिक्तत्वोपपादने तात्पर्यादयमेवार्थ उचित इति भावः। प्रभवोऽत्र रेतोगर्भादिरूपेण परिणामः। **आकारान्तरेण**—रसमलधात्वादिरूपेणेत्यर्थः। ननु शरीरेणैव ग्रासादिकं क्रियमाणं दृश्यते, न च कार्यकरणसंघातमन्तरेण निरवयवस्य ग्रसनादिसंभवः, तत्कथमात्मधर्मत्वेन व्यपदिश्यत इति शङ्कायामुक्तमर्थं व्यतिरेकेण द्रढयति—**मृतशरीर** इति। क्षेत्रं शरीरत्ववेषेण ग्रसनादिकारणम्? उत भूतसंघातमात्रेण? आद्ये शरीरत्वस्यात्मप्रतियोगिकत्वादात्मसापेक्षत्वं ग्रसनादेस्सिद्धम्, द्वितीये मृतशरीरादिष्वदर्शनादयुक्तिः। यद्यपि मृतशरीरेऽपि केचिद्विशेषा दृश्यन्ते; तथाऽपि जीवज्ञानपूर्वकग्रसनभरणाद्यभावान्न ते जीवापेक्षाः। ईश्वरापेक्षा तु सार्वत्रिकीति न तत्र विशेष इति भावः। अत्र भरणग्रसनादिकं रज्ज्वादिषु सर्पादेरिवेति वदन्तश्श्रुतहानाश्रुतकल्पनादिभिर्निरस्ताः ॥ १६ ॥

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥** १७

भा ॥ ज्योतिषाम्—दीपादित्यमणिप्रभृतीनामपि तदेव ज्योतिः—प्रकाशकम्, दीपादित्यादीनामप्यात्मप्रभारूपं ज्ञानमेव प्रकाशकम्; दीपादयस्तु विषयेन्द्रियसन्निकर्षविरोधिसंतमसनिरसनमात्रं कुर्वते; तावन्मात्रेण तेषां प्रकाशकत्वम्। तमसः परमुच्यते—तमश्शब्दस्सूक्ष्मावस्थप्रकृतिवचनः, प्रकृतेः परमुच्यत इत्यर्थः। अतो ज्ञानं ज्ञेयम्—ज्ञानैकाकारमिति ज्ञेयम्। तच्च ज्ञानगम्यम्—अमानित्वादिभिर्ज्ञानसाधनैरुक्तैः प्राप्यमित्यर्थः। हृदि सर्वस्य विष्ठितम्—सर्वस्य मनुष्यादेः हृदि विशेषेणावस्थितम्—सन्निहितम् ॥ १७ ॥

ता ॥ ननु स्वरूपमात्रप्रकाशरूपस्य आत्मस्वरूपस्य कथं मण्यादिप्रकाशकत्वमित्यत्राह—**दीपादित्यादीनामपी**ति। दीपादित्यादीनां यथा विषयसंबन्धिप्रभाद्वारा प्रकाशकत्वं, न स्वरूपतः, तद्वदत्रापि प्रभास्थानीयेन ज्ञानाख्यधर्मेण प्रकाशकत्वमिति भावः। अन्यप्रकाशकानामपीत्यपिशब्दार्थः। प्रकाश्यभूतघटादिवत्तत्प्रकाशक[ाः]ज्ञानाश्रयभूते

प्रत्यगात्मनीति भावः। विषयेन्द्रियसन्निकर्षशब्देनात्र सामग्रीमध्यपातिसन्निकर्षोऽभिप्रेतः; तन्मूलप्रकाशो वा लक्षितः, संतमसस्य कुड्यादिव[द्विषय]दिन्द्रियसन्निकर्षविरोधित्वाभावात्। अन्यथा संतमसवर्तिनः पुरुषस्य संतमसान्तरितप्रकाश-मध्यवर्तिनां पदार्थानां कुड्यान्तरितपदार्थवदप्रकाशप्रसङ्गात्। एतेन दीपादेश्चाक्षुषपदार्थमात्रप्रतिनियततया ज्ञानवन्न सर्वव्यापकं प्रकाशकत्वमिति सूचितम्। **तावन्मात्रेण**—न तु साक्षात्प्रकाशजनकत्वेनापीत्यर्थः। ज्योतिस्सन्निकर्षात्प्र-सिद्धिप्राचुर्याच्चात्र तमश्शब्दस्य तिमिरविषयत्वधीव्युदासायाह—**तमश्शब्द** इति। ज्योतिषामपि प्रकाशकतया **कैमुत्य-**सिद्धस्य तिमिरात्परत्वस्याभिधाने प्रयोजनाभावात्, प्रकृतेः परत्वस्य चावश्यवक्तव्यत्वात्, तमश्शब्दस्य च *यस्य तमश्शरीरं (बृ. ५. ७. १३), *तम आसीत्तमसा गूढमग्रे प्रकेतं (अष्ट. २. ८. ९. ४), *यदा तमस्तत् (श्वे. ४. १८), *तम एव एकीभवति (सु. २), आसीदिदं तमोभूतम् (मनु. १. ६) इत्यादिषु मूलप्रकृतिविषयतया श्रौतस्मार्त-प्रयोगप्राचुर्याच्चेति भावः। परम्—अन्यदित्यर्थः; भोक्तृतया प्रधानभूतमिति वा। प्रागपि हि ते परावरतया [प्रकृती] विभक्ते। **उच्यत** इति। *निर्गुणः प्रकृतेः परः (वि. २. १४. २९) इत्यादिष्विति शेषः। एतेन जडवैलक्षण्यं विवक्षितमित्यभिप्रायेणाह—**अत** इति। पूर्ववद्वैधर्म्यानुसंधानशक्यतायां ज्ञेयशब्दस्य तात्पर्यम्; अन्यथा पौनरुक्त्यादि-त्यभिप्रायेणाह—**ज्ञानैकाकारमिति ज्ञेयमिति**। *ज्ञानगम्यमित्यत्र सर्वसाधारणज्ञानविषयत्वमात्राभिधाने प्रयोजनाभा-वात् *ज्ञेयमित्यनेन पौनरुक्त्याद्गम्यशब्दस्य प्राप्यपर्यायत्वप्रसिद्धेश्च प्रकृतसंगतं विवक्षितमाह—**अमानित्वादिभिरिति**। *एतज्ज्ञानमितिवत् (११) अत्रापि करणव्युत्पत्तिं व्यनक्ति—**ज्ञानसाधनैरुक्तैरिति**। **मनुष्यादेरिति**। पिण्डस्येति शेषः। भोक्तृत्वादिरूपेणावस्थानं विशेषेणावस्थानम्। यद्वा हृदि स्वरूपेणावस्थानम्; अवयवान्तरेषु तु स्वधर्मभूतज्ञानेनेति विशेषः। स्थितिशब्दस्यात्र मुख्यार्थायोगात्सन्निधिमात्रपरत्वमुक्तम्; सर्वस्य गृहेऽप्ययमेव व्रीहिरितिवज्जात्यैक्यविवक्षया सर्वस्य हृदि स्थितिनिर्देशः॥ १७॥

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥** १८

**भा॥ एवं *महाभूतान्यहङ्कारः (५) इत्यादिना *संघातश्चेतनाधृतिरित्यन्तेन क्षेत्रतत्त्वं समासे-नोक्तम्। *अमानित्वम् (७) इत्यादिना *तत्त्वज्ञानार्थचिन्तनमित्यन्तेन ज्ञातव्यस्यात्मतत्त्वस्य ज्ञानसाधन-मुक्तम्। *अनादि मत्परम् (१२) इत्यादिना *हृदि सर्वस्य विष्ठितमित्यन्तेन ज्ञेयस्य क्षेत्रज्ञस्य याथात्म्यं च सङ्क्षेपेणोक्तम्। मद्भक्तः एतत्—क्षेत्रयाथात्म्यम्, क्षेत्राद्विविक्तात्मस्वरूपप्राप्त्युपाययाथात्म्यम्, क्षेत्रज्ञ-याथात्म्यं च विज्ञाय, मद्भावायोपपद्यते मम यो भावः—स्वभावः, असंसारित्वम्; असंसारित्वप्राप्तये उपपन्नो भवतीत्यर्थः॥ १८॥**

**ता॥** उपसंहरन्नुक्तयाथात्म्यज्ञानस्य फलं चाह—*इतीतिश्लोकेन। प्रकृतपरामर्शिन एतच्छब्दस्य **विशेषका-**भावात्प्रकृतार्थत्रयविषयत्वमाह—**क्षेत्रयाथात्म्य**मित्यादिना। *मद्भावायेत्यत्र साम्यश्रुत्यादिविरुद्धतादात्म्यभ्रमव्युदासा-याह—**मम यो भावः स्वभाव** इति। नित्यसिद्धज्ञानत्वादिस्वभावव्यवच्छेदायाह—**असंसारित्वमिति**। *उपपद्यते इत्यस्य ज्ञानजन्ययोग्यतायां तात्पर्यमुपपन्नशब्देन दर्शितम्॥ १८॥

**भा॥ अथात्यन्तविविक्तस्वभावयोः प्रकृत्यात्मनोस्संसर्गस्यानादित्वं संसृष्टयोर्द्वयोः कार्यभेदस्संसर्ग-हेतुश्चोच्यते—**

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९

भा ॥ प्रकृतिपुरुषावुभावन्योन्यसंसृष्टावनादी इति विद्धि ; बन्धहेतुभूतान् विकारान्—इच्छाद्वेषादीन्, अमानित्वादिकांश्च गुणान् मोक्षहेतुभूतान् प्रकृतिसंभवान् विद्धि ; पुरुषेण संसृष्टेयमनादिकालप्रवृत्ता क्षेत्राकारपरिणता प्रकृतिः स्वविकारैरिच्छाद्वेषादिभिः पुरुषस्य बन्धहेतुर्भवति ; सैवामानित्वादिभिस्स्वविकारैः पुरुषस्यापवर्गहेतुर्भवतीत्यर्थः ॥ १९ ॥

**ता ॥** अथ * बन्धहेतुरित्यनेन (गी. सं. १७) संगृहीतं * प्रकृतिं पुरुषमित्यारभ्य विवेकानुसंधानात्पूर्वस्यार्थं विविनक्ति—**अथेति** । **संसर्गहेतुश्चेति** । प्रवाहानादेस्संसर्गस्य निमित्तमित्यर्थः । * उभावनादी इत्यत्र प्रकृतिं पुरुषं चेतीतरेतरयोगपरचकारेण लब्धं विशेषं दर्शयति—**प्रकृतिपुरुषावुभावन्योन्यसंसृष्टाविति** । तदपेक्षया द्विवचनान्तप्रयोग उपपन्नः । **प्रकृतिपुरुषावित्यत्र** * परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः (अष्टा. २. ४. २६) इति पुल्लिङ्गत्वम् । तद्विशेषणत्वात् * उभावनादी इत्यनयोरपि तल्लिङ्गतैव । * इच्छाद्वेष इत्यादिना (६) * अमानित्वमित्यादिना (७) च निर्दिष्टा यथाक्रमं विकारगुणशब्दाभ्यामनूद्यन्त इति दर्शयति—**बन्धहेतुभूतानिति** । * तत्क्षेत्रं....यद्विकारि (३) इति प्रकरणोपक्रमे विकारिशब्दः क्षेत्रकार्यमात्रपरः ; तत्प्रत्यभिज्ञानाच्चात्रापि विकारशब्दस्तद्विषयः । अतः प्रकरणबलान्न महदादिविकारपरत्वम्; तत्साहचर्याच्च गुणशब्दस्यापि प्राकरणिकार्थविषयत्वौचित्यात्सत्त्वादिगुणविषयत्वमयुक्तमिति भावः । *विकारांश्च गुणांश्चेति भेदोक्तिनिदानज्ञापनाय बन्धमोक्षहेतुत्वेन वचनम् । हेयोपादेयगुणवर्गद्वयोपदेशो हानोपादानार्थतया सप्रयोजनः, तस्य प्रकृतिसंभवत्वोपदेशस्तु किमर्थ इति शङ्कायामुच्यमानतया ज्ञातव्यार्थे * विद्धीत्यधिकोक्त्यभिप्रेतमाह—**पुरुषेणेति** । प्रकृतेरेवाकारभेदेन हेयत्वोपादेयत्वज्ञापनार्थस्तत्संभवत्वोपदेश इति भावः । **स्वविकारैरित्यमानित्वादीनां** विकारत्व[ा]भाषणं * प्रकृतिसंभवानित्युक्तप्रकृतिकारणत्वाविशेषाद्गोबलीवर्दनयसूचनार्थम् ॥ १९ ॥

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २०

भा ॥ कार्यं—शरीरम् कारणानि—ज्ञानकर्मात्मकानि समनस्कानीन्द्रियाणि, तेषां क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिरेव हेतुः ; पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रया भोगसाधनभूताः क्रिया इत्यर्थः । पुरुषस्याधिष्ठातृत्वमेव ; तदपेक्षया * कर्ता शास्त्रार्थवत्त्वात् (ब्र. २ ३. ३३) इत्यादिकमुक्तम् ; शरीराधिष्ठानप्रयत्नहेतुत्वमेव हि पुरुषस्य कर्तृत्वम् ; प्रकृतिसंसृष्टः पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः, सुखदुःखानुभवाश्रय इत्यर्थः ॥ २० ॥

**ता ॥** अथान्योन्यसंसृष्टयोः प्रकृतिपुरुषयोस्संसर्गविशेषनिबन्धनो व्यापारभेद उच्यते—* कार्यकारणेति श्लोकेन । **कार्यं शरीरमिति** । प्रकरणात् कारणशब्दस्य समभिव्याहाराच्च अत्र कार्यशब्दो भोगायतनाख्यकार्यविशेषपर इति भावः । * इन्द्रियाणि दशैकं च (५) इति इन्द्रियादिप्रकृतविषयोऽत्र कारणशब्द इत्याह—**ज्ञानकर्मात्मकानीति** । एतेन * कार्यं भूततन्मात्ररूपेण दशविधम्; करणं बुद्ध्यहंकाररूपेण त्रयोदशविधम्; तेषां स्वरूपोत्पत्तौ प्रतिक्षणपरिणामे च हेतुर्मूलप्रकृतिः इत्यादिव्याख्यानान्तराणि निरस्तानि । * कार्यकरणकर्तृत्वे इति परोक्तं

पाठान्तरमप्रसिद्धेरनादृतम् । कर्तृशब्दोऽत्र न प्रयत्नाद्याश्रयत्वपरः, अचेतने तदसंभवात्; अतो यथास्वं व्यापाराश्रयत्वं विवक्षितमित्याह—**तेषां क्रियाकारित्व** इति । यद्यप्यबुद्धिपूर्वेषु केषुचिन्मनश्श्रोत्रादिव्यापारेषु पुरुषेच्छाधीनत्वं नास्ति; तथाऽपि तेषां पुरुषभोगार्थत्वात् भोक्तृत्वदशापन्नपुरुषसन्निधानरूपमधिष्ठानमपेक्षितम्; बाहुल्येन च प्रयत्नाधीनत्वमस्तीत्यभिप्रायेणाह—**पुरुषाधिष्ठिते**ति । विभज्य व्यापारनिर्देशात् **प्रकृतिरेवे**त्यवधारणलाभः । ननु पुरुषाधिष्ठिता प्रकृतिरित्ययुक्तं, प्रलयदशायां करणकलेवरविधुरस्य संसारिणः स्वेच्छया प्रकृत्यधिष्ठानासंभवादित्यत्राह—**पुरुषाधिष्ठितक्षेत्राकारपरिणते**ति । भोगतत्साधनयोराश्रयत्वलक्षणं हेतुत्वमिह विविच्यत इत्यभिप्रायेण प्रकृत्याश्रयत्वादिकथनम् । प्रकृतेः कर्तृत्वे *कर्ता शास्त्रार्थवत्वात् (ब्र. २. ३. ३३) इत्यादिभिस्सूत्रैर्विरोधस्स्यादित्यत्राह—**पुरुषस्याधिष्ठातृत्वमेवे**ति । यदि पुरुषस्याधिष्ठातृत्वमात्रं, तदा साक्षात्कर्तृत्वं प्रकृतेरेवेति पुरुषस्य कर्तृत्वमौपचारिकं स्यादित्यत्राह—**शरीराधिष्ठाने**ति । अयमभिप्रायः—नहि प्रयत्नाधीनपरिस्पन्दाश्रयत्वलक्षणं कर्तृत्वं पुरुषस्य सूच्यते; तत्र शास्त्रार्थवत्त्वादिहेतूनामन्यथासिद्धेः; नच शरीरादिप्रेरकप्रयत्नाश्रयत्वे कर्तृशब्दस्यौपचारिकता, कृतिप्रयत्नयोः पर्यायत्वात्कृत्याश्रयत्वरूपत्वाच्च कर्तृत्वस्य । ततश्चान्यत्रैव कर्तृत्वमौपचारिकमिति फलितम् । यदि पुनर्यथास्वं व्यापाराश्रयत्वमेव सर्वेषां कर्तृत्वमित्युच्यते; तथाऽपि पुरुषस्य कर्तृत्वं मुख्यमेवेति । ननु पुरुषस्सुखदुःखानां भोक्तेत्ययुक्तम्, शुद्धस्य पुरुषस्य प्रियाप्रियविधुरत्वश्रुतेः । यद्यपि मोक्षे विलक्षणं सुखमनुभूयते, तथाऽपि दुःखप्रसङ्गस्तु नास्त्येवेत्यत्राह—**प्रकृतिसंसृष्ट** इति । *नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति (छा. ८. १२. १) इत्यपि श्रूयत इति भावः । विषयेन्द्रियादिरूपेण परिणतायाः प्रकृतेरपि भोक्तृत्वे हेतुत्वमस्ति; तत्कथं पुरुषो विशिष्य निर्दिश्यत इत्यत्राह—**सुखदुःखानुभवाश्रय** इति । तत्कालस्वसमवेतसुखदुःखसाक्षात्कारो भोग इति भोगलक्षणमप्यनेन सूचितम् । एतेन निर्विकारपुरुषसन्निधानात् प्रकृतेरेव भोक्तृत्वमिति पक्षो निरस्तः । तदा *पुरुषोऽस्ति भोक्तृभावात् (सां. का. १७), *पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य (२१) इत्यादिस्वग्रन्थविरोधश्च । अयं हि पक्षः **शारीरके** *रचनानुपपत्तेश्च (२. २. १) इत्यारभ्य *विप्रतिषेधाच्चासमञ्जसम् (९) इत्यन्तैस्सूत्रैर्विस्तरेण प्रतिक्षिप्तः । अत्र च श्लोके यदि प्रकृतेरेव भोक्तृत्वमपि विवक्षितं स्यात्, तदा कर्तृत्वे भोक्तृत्वे च प्रकृतिरेव हेतुरिति वक्तव्यम्; नतु विवेक्तव्यम्; भोक्तृत्वस्यापि कर्तृत्वविशेषत्वात्, *शास्त्रफलं प्रयोक्तरि (पू. मी. ३. ७. १८) इति न्यायाच्च । नच वाच्यं कर्तृत्वं प्रकृतेस्स्वतस्सिद्धं, भोक्तृत्वे तु तस्याः पुरुषो हेतुरिति प्रदर्शनाय विवेक इति; पुरुषनिरपेक्षायाः केवलायाः प्रकृतेः कर्तृत्वस्याप्ययोगादनभ्युपगमाच्च । अन्यथा विशुद्धकेवलज्ञानोदयेऽपि *तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् (सां. का. ६५) इत्युक्तसप्तरूपविनिवृत्तिभङ्गप्रसङ्गात् । तथाच मुक्तावपि यथापूर्वमेव प्रकृतिप्रवृत्तिस्स्यात् । *संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥ जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ (सां. का. १७. १८) इत्यधिष्ठानायुगपत्प्रवृत्तिभ्यां पुरुषतद्बहुत्वकल्पनं च भज्येत । अत्र *पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणानित्यनन्तरोक्तिश्च व्याहन्येतेति भावः ॥ २० ॥

**भा ॥ एवमन्योन्यसंसृष्टयोः प्रकृतिपुरुषयोः कार्यभेद उक्तः; पुरुषस्य स्वतस्स्वानुभवैकसुखस्यापि वैषयिकसुखदुःखोपभोगहेतु[त्व]माह—**

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**

भा ॥ गुणशब्दः स्वकार्येष्वौपचारिकः ; स्वतस्स्वानुभवैकसुखः पुरुषः प्रकृतिस्थः—प्रकृतिसंसृष्टः, प्रकृतिजान् गुणान्—प्रकृतिसंसर्गोपाधिकान् सत्त्वादिगुणकार्यभूतान् सुखदुःखादीन्, भुङ्क्ते—अनुभवति ॥

भा ॥ प्रकृतिसंसर्गहेतुमाह—

कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१

भा ॥ पूर्वपूर्वप्रकृतिपरिणामरूपदेवमनुष्यादियोनिविशेषेषु स्थितोऽयं पुरुषस्तत्तद्योनिप्रयुक्तसत्त्वादिगुणमयेषु सुखदुःखादिषु सक्तस्तत्साधनभूतेषु पुण्यपापकर्मसु प्रवर्तते ; ततस्तत्पुण्यपापफलानुभवाय सदसद्योनिषु साध्वसाधुषु योनिषु जायते ; ततश्च कर्मारभते ; ततो जायते ; यावदमानित्वादिकानात्मप्राप्तिसाधनभूतान् गुणान् [न]सेवते, तावदेव संसरति ; तदिदमुक्तं * कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु इति ॥२१॥

**ता** ॥ उक्तैकदेशे शङ्कोदयार्थम् [उक्त]वक्ष्यमाणपुनरुक्तिपरिहारार्थं चोक्तं विविच्यानुभाषते—**एव**मिति । परिशुद्धस्य स्वानुभवसुखैकतानस्य प्रत्यगात्मनो वैषयिकबाह्यसुखदुःखोपभोगो न तात्त्विकः स्यात्, अपि तु स्फटिकमणौ जपाकुसुमपाटलिमवदासक्तिविशेषादारोपित एव स्यादिति शङ्का *पुरुष इत्यर्थेन परिह्रियत इत्याह—**पुरुषस्ये**ति । सत्त्वादिगुणा न साक्षाद्भोक्तव्याः, [अपि तु] सुखदुःखमोहकार्योन्नेयतयाऽतीन्द्रियत्वात् ; तत्सुखदुःखानां भोक्तृत्वं च प्रसक्तमुपपादनीयम् ; तच्च हिशब्देन द्योतितम् । अत्र तु * प्रकृतिजान् गुणान् भुङ्क्त इति गुणभोक्तृत्वं कथमुच्यत इत्यत्राह—**गुणशब्द** इति । **स्वकार्येष्वि**ति लक्षणानिमित्तकथनम् । स्वशब्देन गुणस्वरूपग्रहणम् । यद्यपि गुणशब्दस्सुखदुःखेष्वपि मुख्यः, तथाऽपि प्रकृतिगुणत्वस्य विवक्षितत्वादौपचारिक इत्युक्तम् । उत्तरत्रापि हि बहुशो गुणशब्दस्सत्त्वादिविषय एव । यथावस्थिताकारोऽत्र पुरुषशब्देनानूदित इत्याह—**स्वतस्स्वानुभवैकसुख** इति । प्रकृतिस्थशब्दस्स्वास्थ्यादिपरोऽपि प्रयुज्यत इति तद्व्युदासाय—**प्रकृतिसंसृष्ट** इत्युक्तम् । * प्रकृतिजानित्यनेन प्रकृत्याश्रयत्वं न विवक्षितम्, सुख्यहं, दुःख्यहमिति स्वाश्रिततयैव तदुपलम्भात्, अन्तःकरणविकाराणां सुखादीनां स्वात्मन्यारोप इति पक्षस्य[।]निर्दिष्टप्रमाणविरुद्धत्वात् । अतस्तदुपाधिकत्वमेव विवक्षितमिति ज्ञापनाय प्रकृतिसंसर्गोपाधिकत्वोक्तिः । आदिशब्देन पूर्वसमभिव्याहृतेच्छाद्वेषादिसंग्रहः । तेऽपि हि कर्मफलभूता भोक्तव्याः । आत्मनेपदान्तत्वादर्थानन्वयाच्चात्र पालनार्थत्वमयुक्तम्; अभ्यवहारार्थोऽप्यत्रानौचित्यादेव त्यक्तः; अतोऽत्र भुङ्क्त इति प्रस्तुतानुभवमात्रं विवक्षितम् । स्वसमवेतवर्तमानसुखदुःखसाक्षात्कारो भोग इत्यपि हि लक्षयन्तीत्यभिप्रायेणाह—**अनुभवती**ति ॥

स्वानुभवैकतानस्य वैषयिकसुखदुःखोपभोगे प्रकृतिसंसर्गो हेतुरुक्तः, परिशुद्धस्यात्मनस्सोऽपि प्रकृतिसंसर्गः कथमिति शङ्कामनन्तरं परिहरतीत्यभिप्रायेणाह—**प्रकृतिसंसर्गहेतुमाहे**ति । बीजाङ्कुरन्यायेन प्रवाहानादित्वादन्योन्याश्रयणचक्रकादिपरिहारसिद्धौ नानवस्थादोषः; प्रवाहेषु च पूर्व[हेतु]वैचित्र्यादुत्तरोत्तरवैचित्र्यसिद्धिः । गुणसङ्गस्य विहितनिषिद्धकर्मद्वारा तत्फलानुभवार्थविचित्रजन्महेतुत्वाच्छास्त्रसाफल्यं, * कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्.... रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् (छा. ५. १०. ७) इति सदसद्योनिप्राप्तेः कर्ममूलत्वश्रुत्यविरोधं चाह—**पूर्वपूर्वे**ति । सत्त्वादीनां साक्षात्सङ्गास्पदत्वायोगादत्रापि गुणशब्दस्य पूर्ववदौपचारिकत्वाभिप्रायेण **सत्त्वादिगुणमयेषु सुखदुःखादिष्वि**त्युक्तम् । दुःखसङ्गो नाम दुःखे सुखभ्रान्त्या सङ्गः ; दुःखहेतुषु हि सागरतरणादिषु सुखलवसङ्गात्सज्जते ; * भ्रान्तिज्ञानवतां पुंसां प्रहारोऽपि सुखायते (वि. १. १७. ६१) इति चाहुः । यो हि यदिच्छति,

तस्य तस्मिन् तत्साधने वा कार्यताबोध इति स्थिते सुखस्य स्वरूपेण कर्तुमशक्यत्वात्तत्साधनेष्वेव पुरुषप्रवृत्तिरित्यभिप्रायेण **तत्साधनभूतेष्वित्युक्तम्** । श्रूयते च—* स यथाकामो भवति तत्क्रतुर्भवतीति (बृ. ६. ४. ५); सदसच्छब्दयोरस्ति-नास्तीत्याद्यर्थतायामनन्वयात्, * तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा....अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकर-योनिं वा चण्डालयोनिं वा इत्यादिश्रुत्यनुसाराच्च, साध्वसाधुशब्दः साध्वसाधुषु योनिष्विति वदता * सदसतोर्योनिषु जन्मस्विति परव्याख्या निरस्ता । बहुवचनेनैकस्यैव पुरुषस्य प्रवाहरूपेण विचित्रानन्तसदसद्योनिसंबन्धो विवक्षित इत्यभि-प्रायेण **ततश्च कर्मारभते, ततो जायत** इत्यादिकमुक्तम् । एवं प्रवाहतोऽनादित्ववदविच्छेदात्प्रवाहानन्तत्वमपि किं स्यादिति शङ्कां परिहरति—**यावदि**ति । प्रकृतिसंसर्गस्य गुणसंसर्गः कारणमित्युक्ते सति, अर्थात् * कारणाभावे कार्या-भाव इति न्यायादमानित्वादिभिर्गुणसङ्गनिवृत्त्या सदसद्योनिजन्मप्रवाहोऽप्युच्छिद्येतेत्युक्तं भवतीत्याह—**तदिदमुक्त**मिति । अत्र कण्ठोक्त्यभावेऽपि गुणसङ्गस्य पूर्वपूर्वदेहसंबन्धप्रयुक्तत्वं कर्मद्वारा योनिप्राप्तिहेतुत्वादिकं च श्रुतिस्मृत्यन्तरानुसारा-दभिप्रायत उक्तमिति भावः ॥ २१ ॥

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥** २२

**भा ॥ अस्मिन् देहेऽवस्थितोऽयं पुरुषो देहप्रवृत्त्यनुगुणसङ्कल्पादिरूपेण देहस्योपद्रष्टा अनुमन्ता च भवति । तथा देहस्य भर्ता च भवति ; तथा देहप्रवृत्तिजनितसुखदुःखयोर्भोक्ता च भवति । एवं देहनियमनेन, देहभरणेन, देहशेषित्वेन च देहेन्द्रियमनांसि प्रति महेश्वरो भवति । तथाच वक्ष्यते * शरीरं यदवाप्नोति यच्चा-प्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ (१५. ८) इति । अस्मिन् देहे देहेन्द्रियमनांसि प्रति परमात्मेति चाप्युक्तः । देहे मनसि चात्मशब्दोऽनन्तरमेव प्रयुज्यते—* ध्यानेनात्मनि पश्यन्ति केचि-दात्मानमात्मना (२४) इति ; अपिशब्दान्महेश्वर इत्यप्युक्त इति गम्यते ; पुरुषः परः—* अनादि मत्परम् (१२) इत्यादिनोक्तोऽपरिच्छिन्नज्ञानशक्तिरयं पुरुषोऽनादिप्रकृतिसंबन्धकृतगुणसङ्गादेतद्देहमात्रमहेश्वरो देहमात्र-परमात्मा च भवति ॥ २२ ॥**

**ता ॥** सदसद्योनिजन्मसमनन्तरभाविनः पुरुषस्वभावानाह—* उपद्रष्टेति श्लोकेन । द्रष्टा प्रमाणादिवशेन दृश्यानां प्रदर्शकः; उपद्रष्टा यथाप्रियं प्रवृत्तः; अनुमन्ता—प्रवर्तमानस्यानुसंधाता ; तत्तत्साधर्म्यादिहोपद्रष्ट्रनुमन्तृशब्दा-वित्याह—**देहप्रवृत्त्यनुगुणसंकल्पादिरूपेणे**ति । आदिशब्देन प्रेरणं संगृहीतम् । यद्वा प्रवृत्तस्य प्रवर्तकोऽनुमन्तेति भेदमभिप्रेत्य आदिशब्दः । उपद्रष्टृत्वानुमन्तृत्वादेः प्रतिसंबन्धिसापेक्षत्वादधिकरणतया सन्निहितोऽपि देहः प्रतिसं-बन्धितयाऽप्यर्थादन्वयमर्हतीत्यभिप्रायेण **देहस्येत्युक्तम्** । नियन्तृत्वधारकत्वशेषित्वानां शरीरप्रतिसंबन्ध्यात्मलक्षणानां विभागप्रदर्शनाय प्रवृत्तिविषयोपद्रष्टृत्वानुमन्तृत्वयोरेकवाक्यकरणं, **तथे**त्यादिवाक्यभेदश्च । भर्ता—धारकः । उक्तहेतुकं सन्निहितदेहादिविषयमेवास्य महेश्वरत्वमित्याह—**एव**मिति । देहजन्यफलभोक्तृत्वकथनेन देहस्य तदर्थतया देहिन-श्शेषित्वं फलितमित्यभिप्रायेणाह—**देहशेषित्वेन चे**ति । कर्माधीनजननमरणभागिनि जीव एवेश्वरशब्दस्य परिच्छिन्न-विषयतया प्रयोगं दर्शयति—**तथा चे**ति । जीवात्मन्येव ज्ञानतो व्याप्त्या परमात्मशब्दप्रयोगोपपत्तये सन्निहितसंकोच-

कान्वयमाह—अस्मिन्देह इति । साक्षात्परमात्मविषयत्वे सति अस्मिन् देह इत्यसङ्गतमिति भावः । अत्र देहेन्द्रियमनांसीति मनसः पृथगुपादानं तस्याप्यात्मशब्दप्रयोगविषयत्वप्रदर्शनार्थम् । परमशब्दव्यवच्छेद्याभावाज्जीवविषयत्वानुपपत्तिरित्यत्राह—देहे मनसि चेति । अयं प्रयोगः प्रबन्धान्तरे प्रदेशान्तरे वा न मृग्यः ; अपि त्वेतत्प्रकरणे श्लोकमात्रव्यवधानेन ; अतो व्यवच्छेद्यसन्निधानमपि तद्व्यवच्छेदमात्रार्थत्वस्य व्यवस्थापकमित्यभिप्रायेण अनन्तरमेवेत्युक्तम् । परमात्मशब्दवन्महेश्वरशब्दस्यापि सन्निहितसंकोचकावच्छिन्नविषयत्वं चकारातिरिक्तविषयेणापिशब्देनापि प्रतीतमित्याह—अपिशब्दादिति । * उक्तः इत्यनेनापरमात्मन्ययमापेक्षिकः परमात्मादिशब्द इति सूचितम् । * पुरुषः परः इत्यत्र परशब्दस्यापि पूर्ववदवच्छिन्नविषयत्वानुग्राहकं देहव्यपदेशस्यापेक्षिकमहेश्वरत्वादिव्यपदेशस्य च तात्पर्यं, श्लोके चोद्देश्योपादेयविभागं, पिण्डितार्थं च दर्शयति—अनादीति । अनादिमत्परमित्यादिनोक्त इति [अनेन] परमत्वाभा[व उक्तः]-वोक्तिः । अपरिच्छिन्नज्ञानशक्तिरिति तु परत्वमात्रप्रदर्शनम् । अयमित्यनेन तन्मध्यपतितः * उपद्रष्टेति श्लोकोऽपि तद्विषय एवेति प्रकरणस्य जीवविषयत्वं प्रदर्शितम् । * देहेऽस्मिन्नित्यनेन प्रागुक्तो हेतुर्विवक्षित इत्यभिप्रायेण अनादिप्रकृतिसंबन्धकृतगुणसङ्गादित्युक्तम् ॥ २२ ॥

**य एनं वेत्ति पुरुषं प्रकृतिं च गुणैस्सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥** २३

**भा ॥ एनम्—उक्तस्वभावं पुरुषम्, [एनाम्—] उक्तस्वभावां च प्रकृतिं वक्ष्यमाणस्वभावयुक्तैस्सत्त्वादिभिर्गुणैस्सह, यो वेत्ति—यथावद्विवेकेन जानाति, स सर्वथा—देवमनुष्यादिदेहेष्वतिमात्रक्लिष्टप्रकारेण वर्तमानोऽपि, न भूयोऽभिजायते—न भूयः प्रकृत्या संसर्गमर्हति, अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मानमात्मानं तद्देहावसानसमये प्राप्नोतीत्यर्थः ॥ २३ ॥**

**ता ॥** अथ विवेकानुसंधानप्रकारं वक्तुं तत्रात्यादराय तत्फलं प्रथमं प्रदर्श्यते * य एनमिति श्लोकेन । अन्वादेशः प्रागुक्तविविक्ताकारपरामर्शीत्याह—**उक्तस्वभाव**मिति । प्रकृतेरपि प्रागेवोक्तत्वात् * एनामिति विपरिणम्य **उक्तस्वभावामित्युक्तम्** । गुणानां तु प्राक्प्रदर्शनमात्रम् ; प्रपञ्चनं तु चतुर्दशाध्याय इत्यभिप्रायेणाह—**वक्ष्यमाणस्वभावयुक्तै**रिति । प्रकृतिपुरुषयोरेव प्रधानत्वाद्गुणानां चाप्रधानत्वात् **गुणैस्सहे**त्युक्तम् । पुरुषस्य प्रकृत्या समुच्चित्य सहनिर्देशोऽपि गुणशब्दोऽत्र पूर्वोत्तरप्रपञ्चितप्रकृतिगुणमात्रविषय इति ज्ञापनाय **सत्त्वादिभिरि**त्युक्तम् । प्रकृतितद्गुणसहितवेदनमशुद्धवेदनं स्यादिति शङ्कायाम् * एनं वेत्तीत्यनेनाभिप्रेतमाह—**यथावद्विवेकेन जानाती**ति । उच्छास्त्रप्रवृत्तित्वशङ्काव्युदासाय * सर्वथेत्यनेन नानाविधदेहसंसर्गप्रयुक्तो योगविरोधिविचित्रक्लेशान्वयो विवक्षित इत्यभिप्रायेणाह—**देवमनुष्यादी**ति । एतदुक्तं भवति—तत्त्वविदः प्रारब्धकर्मवशात्तदानीन्तनक्लेशानुभवेऽपि नेतरपुरुषसाधर्म्येण जन्मान्तरमनुमातुं शक्यमिति । अपिशब्दादक्लिष्टवृत्तिषु कैमुत्यं सूचितम् । * न जायते म्रियते (२. २०) इत्यनेनैव आत्मस्वरूपस्य जन्माभाव उक्तः ; अतोऽत्र तत्प्रसङ्गाभावात्तत्र भूयश्शब्दानन्वयाच्च * सदसद्योनिजन्मसु (२१) इति प्रसक्तदेहसंसर्गलक्षणजनिरेव निषिध्यत इत्यभिप्रायेणाह—**न भूयः प्रकृत्या संसर्गमर्हती**ति । प्रलयाद्यवस्थासु विनष्टदेहस्य देहान्तरमेव देहसंबन्धलक्षणजन्यभावेऽपि पुनर्देहसंबन्धयोग्यताऽस्ति, अस्य तु ज्ञानाग्निदग्धकर्मत्वात् साऽपि नास्तीत्यभिप्रायेणार्हतिशब्दः । अनर्हतामेव व्यञ्जयन् पुनर्भवादिरूपानिष्टनिवृत्तेरर्थादिष्टप्राप्तिपर्यन्ततामाह—**अपरिच्छिन्ने**ति ।

अज्ञानस्य कर्मणश्च निश्शेषविनाशात् नहि देहसंबन्धयोग्यतेत्यभिप्रायेण **अपरिच्छिन्नज्ञानलक्षणमपहतपाप्मान**मिति विशेषणद्वयम् । भूयश्शब्दाभिप्रेतमाह—**तद्देहावसानसमय** इति ॥ २३ ॥

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥** २४

भा ॥ **केचित्—निष्पन्नयोगा आत्मनि—शरीरेऽवस्थितमात्मानम् आत्मना—मनसा ध्यानेन—योगेन पश्यन्ति । अन्ये च अनिष्पन्नयोगाः, सांख्येन योगेन—ज्ञानयोगेन, योगयोग्यं मनः कृत्वा आत्मानं पश्यन्ति । अपरे—ज्ञानयोगानधिकारिणः तदधिकारिणश्च सुकरोपायसक्ताः, व्यपदेश्याश्च, कर्मयोगेनान्तर्गतज्ञानेन मनसो योगयोग्यतामापाद्यात्मानं पश्यन्ति** ॥ २४ ॥

**ता** ॥ उक्तमेवार्थं श्लोकद्वयेन विवृण्वन्नात्मज्ञानस्य पर्वभेदानाह—**ध्यानेने**ति । अधिकरणतया, कर्मतया, करणतया च निर्देशादात्मशब्दत्रयमिह भिन्नविषयमिति तत्तदुचितमाह—**आत्मनि शरीर** इत्यादिना । उत्तरोत्तरापकृष्टपर्वनिर्देशक्रमात् ध्यानशब्दोऽत्र सांख्यादप्युत्कृष्टं साक्षाद्योगाख्यं पर्वाभिधत्ते । **अनिष्पन्नयोगा** इत्यादि पर्वक्रमप्रदर्शनमात्मदर्शने स्वतन्त्रोपायत्वशङ्काव्युदासार्थम् । *ज्ञानयोगेन सांख्यानाम् (३. ३) इति पूर्वोक्तानुसारेण *सांख्येन योगेनेत्यस्यार्थमाह—**ज्ञानयोगेने**ति । *अपरे इत्यनेन प्रागुक्तकर्मयोगाधिकारिवर्गविवक्षेत्यभिप्रायेणाह—**ज्ञानयोगानधिकारिण** इत्यादिना ॥ २४ ॥

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥** २५

भा ॥ **अन्ये तु—कर्मयोगादिष्वात्मावलोकनसाधनेष्वनधिकृता अन्येभ्यः—तत्त्वदर्शिभ्यो ज्ञानिभ्यः श्रुत्वा कर्मयोगादिभिरात्मानमुपासते ; तेऽप्यात्मदर्शनेन मृत्युमतितरन्ति ; ये श्रुतिपरायणाः—श्रवणमात्रनिष्ठाः, ते च श्रवणनिष्ठाः पूतपापाः क्रमेण कर्मयोगादिकमारभ्यातितरन्त्येव मृत्युम् ; अपिशब्दाच्च पर्वभेदोऽवगम्यते** ॥ २५ ॥

**ता** ॥ अनिष्पन्नकर्मयोगानां मुमुक्षूणां कर्मयोगोपक्रमदशोच्यते । *अन्ये त्विति तुशब्देन, *एवमजानन्तः इत्यनेन च स्वविवेचनशक्त्याद्यभावात्कर्मयोगादिष्वनधिकृतत्वं द्योतितम् । *अन्येभ्यः इत्यनेन उपदेष्टृ[त्व]विषयेण *उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः (४.३४) इति प्रागुक्ता विवक्षिता इत्यभिप्रायेणोक्तं—**तत्त्वदर्शिभ्यो ज्ञानिभ्य** इति । *तेऽपीत्यादिना कर्मयोगोपक्रमेऽप्यसमर्था निर्दिश्यन्त इत्यभिप्रायेणाह—**तेऽप्यात्मे**ति । यद्वाऽस्य वाक्यस्य पूर्वेणान्वयः ; *श्रुतिपरायणाश्चेत्यन्वयेन वाक्यान्तरम् ; तद्दर्शयति—**ये श्रुतिपरायणा** इति । श्रुतिः परमयनं निष्ठा येषां ते श्रुतिपरायणाः ; श्रुतिपरायणशब्दश्श्रुत्वोपासीनेभ्यो व्यवच्छेदकः ; अन्यथा श्रुत्वेत्युक्तेऽपि श्रुतिपरायणशब्दस्य नैरर्थक्यप्रसङ्गादित्यभिप्रायेणाह—**श्रवणमात्रनिष्ठा** इति । अत्र श्रवणनिष्ठायाः पावनत्वरूपं प्राशस्त्यं विवक्षितमित्याह—**श्रवणनिष्ठाः पूतपापा** इति । **क्रमेणे**त्यादिना कर्मयोगादिविधिवैयर्थ्यप्रसङ्गपरिहारः । अत्र पृथगुपायान्तरपरत्वं किं न स्यादित्यत्राह—**अपिशब्दादि**ति । अपिशब्देनान्येषां कैमुत्यमेषामपकृष्टपर्वनिष्ठत्वं च सूचितमिति भावः ॥ २५ ॥

भा ॥ अथ प्रकृतिसंसृष्टस्यात्मनो विवेकानुसन्धानप्रकारं वक्तुं सर्वं स्थावरं जङ्गमं च सत्त्वं चिदचित्संसर्गजमित्याह—

यावत्संजायते किञ्चित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६

भा ॥ यावत् स्थावरजङ्गमात्मना सत्त्वं जायते, तावत् क्षेत्रक्षेत्रज्ञयोरितरेतरसंयोगादेव जायते—संयुक्तमेव जायते, न त्वितरेतरवियुक्तमित्यर्थः ॥ २६ ॥

ता ॥ एवमात्मदर्शनमुक्तं, तदर्थं * समं सर्वेषु (२७) इत्यादिभिः श्लोकैः प्रकृतिपुरुषयोर्विवेकानुसंधानप्रकारो वक्ष्यते । स चाविविक्तप्रतीतौ सत्यामेवोपदेष्टव्यः, अन्यथा निष्प्रयोजनत्वात् ; सा च न दोषमन्तरेण घटते ; सच दोषोऽत्र भोक्तृत्वभोगायतनत्वनिर्वाहकस्संसर्गविशेषः ; तदिदं * यावत्संजायते इति श्लोकेनोच्यत इति संगतिमाह—अथेति । सर्वशब्देन यावच्छब्दस्यात्र साकल्यपरत्वमुक्तम् । यावच्छब्दस्य यच्छब्दार्थत्वेन व्याख्यानमवाचकत्वान्मन्दप्रयोजनत्वाच्चायुक्तमिति भावः । सत्त्वशब्दोऽत्र जन्तुपरः ; * द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु (नाम. ३. ना) इति पाठात् । वृक्षगुल्मलतावीरुत्तृणादिषु चैतन्यविकासाभावमात्रेण जैनप्रक्रियया केवलाचेतनत्वशङ्कानिरासायात्र स्थावरशब्दः । स्थावरजङ्गमत्वयोर्बाल्ययौवनवार्धकादिवद्यावच्छरीरभावित्वाभावज्ञापनाय—**स्थावरजङ्गमात्मनेत्युक्तम्** । क्षेत्रक्षेत्रज्ञाभ्यां सहान्यस्य संयोगशङ्काव्युदासायोक्तम्—**इतरेतरसंयोगादि**ति । विधेयांशं दर्शयितुं—**संयोगादेवे**त्युक्तम् । मातापितृसंसर्गात्पुत्रोत्पत्तिवत्क्षेत्रक्षेत्रज्ञसंयोगात्ततोऽन्यत्सत्त्वं जायेतेत्यत्राह—**संयुक्तमेवे**ति । पृथक्सिद्धप्रसिद्धक्षेत्रक्षेत्रज्ञसंबन्धव्यवच्छेदायाह—**नत्वि**ति । * तद्विद्धीति तच्छब्देन जन्मनः परामर्शः ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७

भा ॥ **एवमितरेतरयुक्तेषु सर्वेषु भूतेषु देवादिविषमाकारात् विविक्तं तत्रतत्र तत्तद्देहेन्द्रियमनांसि प्रति परमेश्वरत्वेन स्थितमात्मानं ज्ञातृत्वेन समानाकारं तेषु देहादिषु विनश्यत्सु विनाशानर्हस्वभावेनाविनश्यन्तं यः पश्यति, स पश्यति—स आत्मानं यथावदवस्थितं पश्यति ; यस्तु देवादिविषमाकारेणात्मानमपि विषमाकारं जन्मविनाशादियुक्तं च पश्यति, स नित्यमेव संसरतीत्यभिप्रायः ॥ २७ ॥**

ता ॥ अथ समत्वविषमत्वनियन्तृत्वनियाम्यत्वनित्यत्वानित्यत्वैर्द्वयोर्विवेकानुसंधानमभिधाय तदेव तत्त्वाध्यवसायरूपत्वेन परमपुरुषार्थहेतुतया प्रशंसति—* सममिति श्लोकेन । * क्षेत्रक्षेत्रज्ञसंयोगादित्यत्र शंकरेणोक्तम् * आकाशवन्नि[रंश]रवयवतया अवयवसंश्लेषलक्षणसंयोगासंभवात्क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमेन समवायासंभवाच्च विषयविषयिणोस्तयोरितरेतरधर्माध्यासलक्षणस्संयोगः ; तन्निवर्तनं च सम्यग्दर्शनं * समं सर्वेष्वित्यादिनोच्यते इति ; तदेतद्बालिशभाषितम्, निरवयवस्यापि संयोगसंभवात् ; युतसिद्धयोस्संबन्धस्संयोगः इति हि तं लक्षयन्ति ; स च निरवयवयोस्सावयवयोर्निरवयवसावयवयोश्च संभवति । तन्मते च अध्यासानुपपत्त्यादयः प्रपञ्चिताः । * सर्वेषु भूतेष्विति देवमनुष्यादिरूपवैषम्यं विवक्षितम् । यथा मृण्मयहिरण्मयादिघटोपात्तस्यापि गङ्गोदकस्य तत्रतत्र स्थितिमात्रमेव, न पुनर्मृण्मयत्वादिसिद्धिः ; तथाऽऽत्मनोऽपि देवमनुष्यादिदेहेषु स्थितिमात्रमेव ; नतु रुमाप्रक्षिप्तकाष्ठादिलवणत्वन्यायेन स्वरूपेण

**देवमनुष्यत्वादिवैषम्याश्रयत्वमिति** * तिष्ठन्तमित्यस्याभिप्रायमाह—**देवादिविषमाकाराद्विविक्तमिति**। यद्वा * सममिति वचनादर्थाक्षिप्तवैषम्यनिवृत्तिकथनमिदम्; * तिष्ठन्तमिति तु परत्रान्वेतव्यम्। अतो हि भाष्यते—**परमेश्वरत्वेन स्थित**मिति। अनीश्वरस्याल्पशक्तेः क्षेत्रज्ञस्य कथं परमेश्वरत्वमित्यत्र पूर्ववत्संकोचमाह—**तत्रतत्र तत्तद्देहेन्द्रियमनांसि प्रती**ति। देहात्माभिमानिनो हि देहनाशादात्मनाशं मन्यन्ते; नत्वप्रतीतस्य परमात्मनो नाशम्; तस्मात् * अविनश्यन्तमिति प्रसक्तविनाशप्रतिषेधार्थपदसमानाधिकरणः परमेश्वरशब्दः प्रक्रान्तविषय इति भावः। समशब्देन न बाह्यदेवत्वादिवैषम्यनिवृत्तिमात्रं विवक्षितम्; अपितु * गवामनेकवर्णानां क्षीरस्य[त्वे]प्येकवर्णता। क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा॥ (अ. बि. उ) इति श्रुत्यनुसारेणात्मनां स्वरूपेषु मिथो वैषम्यनिवृत्तिरपि। तच्च साम्यं कथंभूतमिति शङ्कायाम् * एतद्यो वेत्ति (१) इति प्रक्रमानुसारेणाह—**ज्ञातृत्वेन समानाकार**मिति। ज्ञानत्वादेरप्युपलक्षणमेतत्। * येन सर्वमिदं ततम् (१८. ४६) इत्यादिना प्रपञ्चितानविनाशित्वहेतून् स्मारयति—**विनाशानर्हस्वभावेने**ति। * यः पश्यति स पश्यतीत्यनयोरनतिशयितार्थतया नैरर्थक्यम्, उद्देश्योपादेयभङ्गश्चेत्यत्राह—**स आत्मानं यथावदवस्थित**मिति। इतरे तु पीतशङ्खादिदर्शिवद्विपरीतदर्शितया पश्यन्तोऽपि न पश्यन्तीति भावः। *स पश्यतीति प्रशंसयाऽत्र परमपुरुषार्थलाभादिनिबन्धना व्यतिरेकनिन्दा च फलितेत्यभिप्रायेणाह—**यस्त्व**ति॥ २७॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥** २८

**भा॥ सर्वत्र—देवादिशरीरेषु तत्तच्छेषित्वेनाधारतया नियन्तृतया च स्थितमीश्वरम्—आत्मानं देवादिविषमाकारवियुक्तं ज्ञानैकाकारतया समं पश्यन् आत्मना—मनसा, स्वम्—आत्मानं, न हिनस्ति—रक्षति, संसारान्मोचयति; ततः—तस्मात् ज्ञातृतया सर्वत्र समानाकारदर्शनात्, परां गतिं याति; गम्यत इति गतिः, परं गन्तव्यं यथावदवस्थितमात्मानं प्राप्नोति; देवाद्याकारयुक्ततया सर्वत्र विषम[ाकार]मात्मानं पश्यन् आत्मानं हिनस्ति—भवजलधिमध्ये प्रक्षिपति॥ २८॥**

**ता॥** उक्तमुपपादयति—* समं पश्यन्निति श्लोकेन। हीति हेतौ। प्रस्तुतं समदर्शनं ह्यत्र फलद्वारा स्तूयते। * सर्वत्रावस्थितो देहे (३२) इति वक्ष्यमाणावेक्षणेन * सर्वत्रेति शब्दस्य विवक्षितमाह—**देवादिशरीरेष्वि**ति। *भर्ता भोक्ता महेश्वरः (२२) इति पूर्वोक्तानुरोधेन * समवस्थितमित्यत्रोपसर्गसामर्थ्यलब्धस्थितिवैशेष्यं व्यनक्ति—**तत्तच्छेषित्वेने**त्यादिना। अतएव हि *स्थितमित्येतावद्विभज्य निर्दिष्टम्। ईश्वरशब्देनापि शेषित्वनियन्तृत्वे सिद्धे। अत्रापीश्वरशब्दः पूर्वोक्तन्या[यात्परि]येनावच्छिन्नविषयोऽनुसंधेयः। देहात्माभिमानप्रसक्तदेवादिवैषम्यप्रतिषेधार्थोऽत्र समशब्द इत्यभिप्रायेणाह—**देवादिविषमाकारवियुक्त**मिति। * क्षेत्रक्षेत्रज्ञसंयोगात् (२६) * यदा भूतपृथग्भावम् (३०) इति पूर्वापरपरामर्शाद्देहसंबन्धसिद्धवैषम्यनिवृत्तिर्विवक्षितेति भावः। तृतीयान्त आत्मशब्दोऽत्र करणविभक्त्यन्तत्वादौचित्याच्च मनोविषयः; द्वितीयान्तस्तु हिंसाकर्मत्वसामर्थ्यात्संसार्यात्मविषय इति ज्ञापयति—**मनसा स्वमात्मान**मिति। समदर्शि[त्वात्]नो हिंसकत्वं नास्तीत्यत्र अविहिताप्रतिषिद्ध[वर्ग]कर्तृवत्समदर्श[न]कस्याबाधकत्वमात्रमुक्तं स्यात्; तच्चानर्थकम्; अपिच विषमदर्शिनोऽप्यात्मा नित्यत्वान्न हिंसार्हः; अतोऽत्र * न हिनस्तीत्यनेन किमपि समदर्शनसाध्यं पुरुषेष्टमभिप्रेतमित्याह—**रक्षती**ति। प्रकरणतो वाक्यशेषाच्च रक्षां विशिनष्टि—**संसारा**दिति। ततश्शब्दोऽत्र न वाक्या-

र्थादिपरामर्शी, अनिष्टनिवृत्तेरपि स्वयंफलत्वेनेष्टप्राप्तिहेतुत्वनिर्देशानौचित्यात्; अत उभयकारणं समदर्शनमेव परामृश्यत इत्याह—**तस्मादि**त्यादिना। *परां गतिमिति प्राप्यविशेषस्य विवक्षितत्वाद्भावार्थमात्रपरत्वे तदसिद्धेस्तदुचितां व्युत्पत्तिमाह—**गम्यत इती**ति। तदेव विशिनष्टि—**यथावदि**ति। प्रकरणं हीदं जीवविषयं समर्थितम्; परगतिशब्दश्च *अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् (गी. ८. २१) इत्यादिषु जीवेऽपि प्रयुक्तचर इति भावः। आत्मनि वैषम्यदर्शी तु स्वात्मानं हिनस्तीति, विशेषनिषेधश्शेषाभ्यनुज्ञानार्थः इति न्यायेन सिद्धमित्याह—**देवाद्याकारे**ति। नित्यस्यात्मस्वरूपस्याच्छेद्यत्वादिस्वभावतया *कं घातयति हन्ति कम् (२. २१) इति प्रागुक्तस्य का[सा]ऽसौ हिंसेत्यत्राह—**भवजलधी**ति। अनेनापि श्लोकेन प्रकृतिपुरुषयोस्स्वाकारानुदर्शनद्वारा संसारहेतुत्वमोक्षहेतुत्वाभ्यामपि विवेक उक्तो भवतीत्यभिप्रायः॥ २८॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति॥** २९

**भा॥ सर्वाणि कर्माणि *कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते (२०) इति पूर्वोक्तरीत्या प्रकृत्या क्रियमाणानीति यः पश्यति, तथा आत्मानं ज्ञानाकारमकर्तारं च यः पश्यति, तस्य प्रकृतिसंयोगस्तदधिष्ठानं तज्जन्यसुखदुःखानुभवश्च कर्मरूपाज्ञानकृतानीति च यः पश्यति, स आत्मानं यथावदवस्थितं पश्यति॥ २९॥**

**ता॥** अथ साक्षात्क्रियाश्रयत्वतदभावादिवैधर्म्यमुच्यते—*प्रकृत्यैवेति श्लोकद्वयेन। अत्र कर्माण्याकुञ्चनप्रसारणादीनि। प्रकृत्या क्रियमाणानां कर्मणां स्वरूपदर्शनमात्रं विद्वदविद्वत्साधारणम्; विदुषस्तु प्रकृत्या क्रियमाणत्वदर्शनं विशेष इत्युपादेयांशविशदीकरणाय **क्रियमाणानीती**ति इतिकरणम्। अकर्तृत्वमात्मशब्दाभिप्रेतेन शुद्धाकारेण स्थापयति—**ज्ञानाकार**मिति। *ज्ञाताकारमिति वा पाठः। कथं तर्हि शास्त्रवश्यत्वतत्फलभोक्तृत्वादिकमित्यत्राह—**तस्ये**ति। सर्वस्यास्य चक्रवत्परिवर्तमानोपाधिप्रवाहनिबन्धनत्वान्न कश्चिद्दोष इति भावः॥ २९॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा॥** ३०

**भा॥ प्रकृतिपुरुषतत्त्वद्वयात्मकेषु देवादिषु सर्वेषु भूतेषु सत्सु तेषां देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथग्भावमेकस्थम्—एकतत्त्वस्थम्, प्रकृतिस्थं यदा पश्यति, नात्मस्थम्, तत एव—प्रकृतित एवोत्तरोत्तरपुत्रपौत्रादिभेदविस्तारं च यदा पश्यति, तदैव ब्रह्म संपद्यते—अनवच्छिन्नं ज्ञानैकाकारमात्मानं प्राप्नोतीत्यर्थः॥**

**ता॥** अथ परिणामित्वापरिणामित्वलक्षणं वैषम्यमुच्यते—*यदेतिश्लोकेन। [एकशब्देनान्यतरस्यनिर्धारणार्थं] भूतशब्दोऽत्र तिलतैलवन्मिथश्श्लिष्टचिदचित्समुदायपर इत्यभिप्रायेणाह—**प्रकृतिपुरुषे**ति। पृथग्भावशब्दोऽत्र जातिरूपं गुणादिरूपं च भेदमविशेषात्संगृह्णाति। स च सर्वोऽप्यवस्थान्तरापत्तिरूपतया निर्विका[रात्पुरुषा]रस्वरूपाद्भेदः, तदाह—**देवत्वमनुष्यत्वह्रस्वत्वदीर्घत्वादिपृथग्भाव**मिति। एकशब्दोऽत्र प्रकृतयोरन्यतरनिर्धारणार्थ इत्याह—**एकतत्त्वस्थ**मिति। किं तदेकमित्यत्राह—**प्रकृतिस्थ**मिति। यद्यात्मा अत्रैकशब्देन विवक्षितः, तदा तस्यैव देवादिवैषम्यदर्शनमुक्तं स्यात्; तच्च *समं पश्यन् (२८) इत्याद्युपक्रमेण *पण्डितास्समदर्शिनः इत्यादिस्मृत्यन्तरोक्त्या च विरुध्येतेत्यभिप्राये-

णाह—**नात्मस्थ**मिति । सन्मात्रस्यैकस्यैव ब्रह्मणस्सकलविकल्पसकलपरिणामास्पदत्वमिहोच्यत इति परेषां जल्पाः प्रागेव निरस्ता इति चाभिप्रायः । *आत्मा वै पुत्रनामाऽसि (मं. प्र. २. १२) इत्यादिषु योऽयमात्मनः पुत्रादिरूपः परिणामः प्रतीयते, सोऽपि *अङ्गादङ्गात्संभवसीत्यादिकमनुसंदधानस्य प्रकृत्यंशगत एव प्रकाशेतेत्युच्यते *तत एव च विस्तार-मिति । तद्विवृणोति—**प्रकृतित एवे**ति । प्रकृतितत्त्वस्य प्रथमं देवादिरूपविचित्रपरिणामे, तन्मूले च सन्तानव्यपदेश-भाजि परिणामे भोक्तुः पुरुषस्य भोगार्थसन्निधिमात्रमपेक्षितम्, न पुनर्भोगायतनादिगतविकारास्पदत्वमपीत्येवकाराभि-प्रायः । *ब्रह्म संपद्यते इत्यत्र परमात्मभावस्य विरुद्धत्वाज्जीवात्मभावस्य नित्यसिद्धत्वात् *परमं साम्यमुपैति (मु. ३. १. ३) *मम साधर्म्यमागताः (गी. १४. २) इत्यादिभिरैकार्थ्यात्परब्रह्मसाम्यापत्तिर्विवक्षितेत्यभिप्रायेणाह—**अनवच्छिन्न**-मिति । यद्वा देहात्मविवेकज्ञानमात्रेण साक्षात्परमात्मप्राप्तिर्न स्यादित्यभिप्रायः । ब्रह्म संपद्यते—ब्रह्म भवतीत्यर्थः । तत्र फलितार्थकथनम्—**आत्मानं प्राप्नोती**ति । यद्वा ब्रह्मेति द्वितीयान्तम्; संपद्यत इति संप्राप्नोतीत्यर्थः ॥ ३० ॥

**अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥** ३१

**भा ॥ अयं परमात्मा देहान्निष्कृष्य स्वस्वभावेन निरूपितः, शरीरस्थोऽपि अनादित्वात्—अनारभ्यत्वात् अव्ययः—व्ययरहितः, निर्गुणत्वात्—सत्त्वादिगुणरहितत्वात्, न करोति, न लिप्यते—देहस्वभावैर्न लिप्यते ॥**

**ता ॥** आत्मनो नित्यत्वाकर्तृत्वापरिणामित्वादिभिरुक्तं वैधर्म्यं सहेतुकं स्थिरीकरोति—*अनादित्वादिति श्लोकेन । आपेक्षिकपरमात्मत्वविषयेण *अयं परमात्मेत्यनेनाभिप्रेतमाह—**देहान्निष्कृष्ये**त्यादिना । ज्ञानसङ्कोचरूप-व्ययस्य देहादिप्रेरणरूपकर्तृत्वस्य च प्रत्यक्षादिसिद्धत्वात्कथमव्ययत्वादिरित्यत्राह—**स्वस्वभावेन निरूपित** इति । अनादि-त्वादित्यव्ययहेतोरुत्पत्तिराहित्यं विवक्षितमित्याह—**अनारभ्यत्वादि**ति । आरभ्यमाणमेव हि व्येतीति दृष्टमिति भावः । *निर्गुणत्वादिति सामान्येन ज्ञानादिगुणनिषेधपरिहारायाह—**सत्त्वादिगुणरहितत्वादि**ति । एवं हेतुद्वयशक्त्यनुसारेण यथायोग्यं साध्यद्वयान्वयो दर्शितः । लेपशङ्काप्रतिषेधयोस्संभावितविषययोरेव युक्तत्वात्, *तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम् इत्याम्नातस्य पटादिषु पङ्कादेरिव संसर्गेण लेपकत्वस्वभावात् *शरीरस्थोऽपीत्यनेन सूचितमाह—**देहस्वभावै**रिति ॥ ३१ ॥

**भा ॥ यद्यपि निर्गुणत्वान्न करोति, नित्यसंयुक्तो देहस्वभावैः कथं न लिप्यत इत्यत्राह—**

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥** ३२

**भा ॥ यथा आकाशं सर्वगतमपि सर्वैर्वस्तुभिस्संयुक्तमपि सौक्ष्म्यात्सर्ववस्तुस्वभावैर्न लिप्यते, तथा आत्मा अतिसौक्ष्म्यात्सर्वत्र—देवमनुष्यादौ देहेऽवस्थितोऽपि तत्तद्देहस्वभावैर्न लिप्यते ॥ ३२ ॥**

**ता ॥** *न करोतीत्युक्तमकर्तृत्वं तु पूर्वत्रोत्तरत्र च विशोधितस्वरूपम्; *शरीरस्थोऽपि न लिप्यते इत्यस्मिन् साध्यांशे रुमागतकाष्ठादिन्यायशङ्का अनन्तरश्लोकेन परिह्रियत इत्याह—**यद्यपी**ति । *संसर्गजा दोषगुणा भवन्ति *शुष्केणार्द्रं दह्यते मि[श्र]त्रभावात् (भा. रा. ७३. २३) इति हि प्रसिद्धमिति भावः । *यं प्राप्यातिपवित्राणि

वस्त्राण्याभरणानि च । अशुचित्वं क्षणाद्यान्ति किमन्यदशुचिस्ततः ।। इति न्यायाद्देहेन क्षणमात्रयोगेऽपि वस्त्रादय उपहन्यन्ते ; किंपुनरनादिसंयुक्त इत्यभिप्रायेणाह—**नित्यसंयुक्त** इति । संसर्गस्य संसर्गिणि संसर्ग्यन्तरस्वभावापादकत्वमनियतमिति व्यभिचारोपपादनार्थो *यथा सर्वगतमित्यनुवाद इति ज्ञापनायोभयत्र अपिशब्दोपादानम् । सर्वगतत्वानुवाद: *शरीरस्थोऽपीति शङ्कोत्थापक इति च भावः । **सर्वैर्वस्तुभिस्संयुक्तमपी**ति सर्वगतशब्देन परस्परविरुद्धानन्तस्वभावलेपप्रसङ्गोऽभिप्रेत इति भावः । यथा आकाशो भूतान्तरेभ्यस्सूक्ष्मः, तथा आकाशादपि सूक्ष्मतरोऽयमिति ज्ञापनार्थमुक्तम्—**अतिसौक्ष्म्यादि**ति । तथेत्यनेन हेतुरप्यतिदिश्यत इति भावः । केचित्पदार्थाः कैश्चित्संसर्गे तत्स्वभावलेपरहिता अपि ततोऽन्यैः कैश्चित्संसर्गे तत्स्वभावलेपवन्तो दृश्यन्ते ; यथा कार्पासादावञ्जनादिवासनयाऽपि न श्यामतादियोगः, लाक्षारसवासनया त्वरुणता दृष्टा ; तथेहापि संभवतीति शङ्काव्युदासाय दृष्टान्तदार्ष्टान्तिकयोस्सर्वशब्दः ॥३२

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥** ३३

**भा ॥ यथैक आदित्यः स्वया प्रभया कृत्स्नमिमं लोकं प्रकाशयति, तथा क्षेत्रमपि क्षेत्री, ममेदं क्षेत्रमीदृशम् इति कृत्स्नम्—बहिरन्तश्चापादतलमस्तकं स्वकीयेन ज्ञानेन प्रकाशयति ; अतः प्रकाश्याल्लोकात्प्रकाशकादित्यवद्वेदितृत्वेन वेद्यभूतादस्मात् क्षेत्रादत्यन्तविलक्षणोऽयमुक्तलक्षण आत्मेत्यर्थः ॥ ३३ ॥**

**ता ॥** अथाध्यायारम्भे *एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति वेद्यत्ववेदितृत्वाभ्यां प्रतिपादितं संघातात्मकत्वासंघातात्मकत्वप्रयुक्तनानात्वैकत्वाभ्यां सिद्धं च भेदं दृष्टान्तपूर्वं स्थिरीकरोति,—*यथा प्रकाशयतीति श्लोकेन । स्वरूपधर्मभूतयोर्ज्ञानयोरेकजातीययोरपि वैधर्म्यप्रदर्शनार्थं प्रभोदाहरणम् । *कृत्स्नं क्षेत्रमित्यनेन कृत्स्नशब्देन सर्वेषां शरीराणां संग्रहः प्रतीयते । व्याचख्युश्च परे—*रविदृष्टान्तोऽत्र रविवत्सर्वक्षेत्रेष्वेक आत्मा अलेपकश्चेति ज्ञापनार्थ इति । तच्चायुक्तं, प्रतिक्षेत्रमात्मनां भिन्नत्वादेकैकस्य सर्वक्षेत्रप्रकाशनाभावाज्जातिपरत्वे तु आदित्यदृष्टान्तासङ्गतिरित्यभिप्रायेणाह—**बहिरन्तश्चापादतलमस्तक**मिति । बहिस्त्वगादिः, अन्तर्मांसादिः । एकैकस्य शरीरस्य अवयवभेदप्रयुक्तनानात्वेन आत्मव्यतिरेकप्रदर्शनार्थमवयवेषु कस्यचिद्वेदितृत्वशङ्काव्युदासार्थं च कृत्स्नशब्द इति भावः । अनेकावयवसमुदायात्मकाच्छरीरात्तदखिलमपि ज्ञातृत्वेन प्रतिसंधीयमान एक आत्मा भिन्न इत्युपलम्भबलसिद्धमित्युक्तं भवति । न प्रकाशकत्वमात्रप्रतिपादनपरोऽत्र दृष्टान्तः ; अपितु तदधीनवैलक्षण्यपर इत्याह—**प्रकाश्यादि**ति । कर्मकर्तृभावादिना भेदोऽत्र स्फुट इति भावः ॥ ३३ ॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥** ३४

इति श्रीमद्भगवद्गीतासूपनिषत्सु **क्षेत्रक्षेत्रज्ञविभागयोगो** नाम त्रयोदशोऽध्यायः ॥ १३ ॥

**भा ॥ एवम्—उक्तेन प्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं—विशेषं विवेकविषयज्ञानाख्येन चक्षुषा ये विदुः, भूतप्रकृतिमोक्षं च, ते परं यान्ति—निर्मुक्तबन्धमात्मानं प्राप्नुवन्ति ; मोक्ष्यतेऽनेनेति मोक्षः, अमानित्वादिकं [उक्तं] मोक्षसाधनमित्यर्थः ; क्षेत्रक्षेत्रज्ञयोर्विवेकविषयेणोक्तेन ज्ञानेन तयोर्विवेकं विदित्वा भूताकारपरिणत-**

प्रकृतिमोक्षोपायममानित्वादिकं चावगम्य य आचरन्ति, ते निर्मुक्तबन्धाः स्वेन रूपेणावस्थितमनवच्छिन्नज्ञान-लक्षणमात्मानं प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

॥ इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

ता ॥ अथैतदध्यायप्रधानार्थभूतहेयोपादेयविज्ञानस्य फलमुच्यते—क्षेत्रक्षेत्रज्ञयोरिति । एवंशब्दानूदितमाह—उक्तेन प्रकारेणेति । अज्ञत्ववेदितृत्वधार्यत्वधारकत्वशेषत्वशेषित्वादिप्रकारेणेत्यर्थः । *अन्तरमवकाशावधिपरिधानान्तर्धि-भेदतादर्थ्ये (नाम. ३. ना. १८७) इत्यनेकार्थस्यान्तरशब्दस्यात्र विवक्षितमाह—विशेषमिति । *ज्ञानचक्षुषेत्यत्र दिव्य-ज्ञानादिप्रसङ्गव्युदासार्थं विवेकविषयत्वोक्तिः । प्रक्रान्तोपदेशलब्धज्ञानमिह विवक्षितमिति भावः । ज्ञानस्य चक्षुष्ट्वरूपण-मपरोक्षज्ञानान्तरहेतुत्वात् । विविच्यतेऽनेनेति विवेकोऽत्र व्यावर्तकाकारः । भूतमय्याः प्रकृतेर्मोक्षः भूतप्रकृतिमोक्षः, भूतानां जीवानां प्रकृतेर्मोक्ष इति वा । यत्तु *भूतानां प्रकृतिरविद्यालक्षणा अव्यक्ताख्या, तस्याः प्रकृतेर्मोक्षणमभाव-गमनम् इति शंकरेणोक्तम्, तत् *गौरनाद्यन्तवती (मं. उ) इत्यादिश्रुतिविरोधादवधीरणीयम् । जीवात्मज्ञानफलविषय-त्वात्परशब्दोऽत्र परिशुद्धजीवविषयः । तस्य च परत्वं संसारित्वलक्षणस्वकीयपूर्वावस्थापेक्षयेत्यभिप्रायेणाह—निर्मुक्त-बन्धमिति । अध्यायारम्भे क्षेत्रक्षेत्रज्ञौ पूर्वमुपपादितौ ; परंपरया परिशुद्धात्मप्राप्त्युपायतया अमानित्वादिगुणवर्गश्च ; अतोऽत्र निगमनेऽपि क्षेत्रक्षेत्रज्ञाभ्यां सह समुच्चीयमानो भूतप्रकृतिमोक्षस्स एव गुणवर्गो भवितुमर्हतीत्यभिप्रायेणाह—मोक्ष्यतेऽनेनेति । लुप्ताभ्यासे सन्नन्ते वा, मोक्षशब्दप्रकृतिके मोक्षयतीति णिजन्ते वा *मोक्ष मोक्षणे इति धात्व-न्तरे वा मोक्ष्यत इति यक्प्रयोगः । तत्र चायं मोक्षशब्दः *अकर्तरि च कारके संज्ञायाम् (अष्टा. ३. ३. १९) इति करणार्थघञन्तः । उक्तेषु ज्ञातव्येषु सिद्धं ज्ञातव्यांशं विवृण्वन्, वाक्यार्थज्ञानमात्रस्य साक्षान्मोक्षहेतुत्वाभावादनु-ष्ठानशेषतां च ज्ञापयन्, भूतप्रकृतिमोक्षशब्देनानिष्टनिवृत्तिं सूचयन्, *परं यान्तीत्यनेन चेष्टप्राप्तेर्विवक्षितत्वं दर्शयन्, पिण्डितं महावाक्यार्थमाह—क्षेत्रक्षेत्रज्ञयोरिति ॥ ३४ ॥

॥ इति श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

## ॥ अथ चतुर्दशोऽध्यायः ॥ १४ ॥

भा ॥ त्रयोदशे प्रकृतिपुरुषयोरन्योन्यसंसृष्टयोः स्वरूपयाथात्म्यं विज्ञायामानित्वादिभिर्भगवद्भक्त्यनु-गृहीतैर्बन्धान्मुच्यत इत्युक्तम् । तत्र बन्धहेतुः पूर्वपूर्वसत्त्वादिगुणमयसुखादिसङ्ग इति चाभिहितं *कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु (२१) इति । अथेदानीं गुणानां बन्धहेतुताप्रकारो गुणनिवर्तनप्रकारश्चोच्यते ।

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः ॥ १

भा ॥ परम्—पूर्वोक्तादन्यत् प्रकृतिपुरुषान्तर्गतमेव सत्त्वादिगुणविषयं ज्ञानं भूयः प्रवक्ष्यामि । तच्च ज्ञानं सर्वेषां प्रकृतिपुरुषविषयज्ञानानामुत्तमम् । यज्ज्ञानं ज्ञात्वा सर्वे मुनयस्तन्मननशीलाः इतः—संसार [बन्धा] मण्डलात्परां सिद्धिं गताः—परां-परिशुद्धात्मस्वरूपप्राप्तिरूपां सिद्धिमवाप्ताः ॥ १ ॥

**ता** ॥ पूर्वाध्यायप्रकृतविशोधनरूपतयाऽस्य तत्संगतिं प्रदर्शयन् *गुणबन्धविधा तेषां कर्तृत्वं तन्निवर्तनम् । गतित्रयस्वमूलत्वं चतुर्दश उदीर्यते ॥ इति **संग्रहश्लोकं** (१८) व्याचष्टे—**त्रयोदश** इति । *इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते इत्यारभ्य *इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ (१८) इत्यन्तार्थमभिप्रेत्य **प्रकृतिपुरुषयो**रित्यादि **बन्धान्मुच्यत इत्युक्त**मित्यन्तमभिहितम् । **गुणानां बन्धहेतुताप्रकार** इत्यनेन * गुणबन्धविधेत्येतद्व्याख्यातम् । **गुणनिवर्तनप्रकारश्चे**त्यनेन *तन्निवर्तनमित्येतद्व्याख्यातम् । संग्रहोक्तगुण-कर्तृत्वगतित्रयस्वमूलत्वयोर्भाष्येऽनुक्तिरन्यार्थानुवादत्वप्रासङ्गिकत्वाभ्यामिति द्रष्टव्यम् ।

परशब्दस्योत्कृष्टपरत्वे उत्तमशब्देन पौनरुक्त्यं स्यादित्यन्यथा व्याचष्टे—**पूर्वोक्तादन्य**दिति । एवं सत्युक्तस्यैव पुनर्वचने *परं भूयः प्रवक्ष्यामीत्येतद्विरुध्येतेत्याशङ्कावारणाय तदभिप्रेतमाह—**प्रकृतिपुरुषान्तर्गतमेवे**ति । संग्रहेण पूर्वाध्यायोक्तं गुणानां बन्धहेतुत्वमेव विस्तरेणात्र भूयः प्रवक्ष्यामीति *भूयः प्रवक्ष्यामीत्यस्यार्थ इति न विरोध इति भावः । *ज्ञानानामुत्तमं ज्ञानं भूयः प्रवक्ष्यामीत्यन्वयसंभवेऽपि तज्ज्ञानस्यावश्यज्ञातव्यत्वसिद्धये *ज्ञानानामुत्तममित्यस्य वाक्य-भेदेन विधेयतयाऽन्वयमाह—**तच्च ज्ञान**मिति । *ज्ञानानामिति सामान्यनिर्देशेन सर्वज्ञानापेक्षयोत्तमत्वलाभेऽपि भगव-द्विषयज्ञानापेक्षयोत्तमत्वासंभवात्तद्व्यवच्छेदाय **सर्वेषां प्रकृतिपुरुषविषयज्ञानाना**मित्युक्तम् । एतज्ज्ञानविषयज्ञानमात्रस्य परसिद्धिहेतुत्वासंभवात्तदभ्यासरूपानुष्ठानालाभाच्च **सर्वे मुनयस्तन्मननशीला** इत्युक्तम् । *इतः इत्यस्य प्रकृतज्ञान-हेतुतापरत्वे, तदभावेऽपि भूतभव्यसमुच्चा[र]रिन्यायेन तद्धेतुतालाभाद्भगवद्भक्त्येकलभ्यभगवत्प्राप्तिरूपसिद्धेरेतत्साध्यत्वा-संभवेन परत्वप्रतिसंबन्धिविशेषस्य अपेक्षितत्वाच्च तत्परत्वमाह—**इतस्संसारमण्डलात्परा**मिति । इयं परा सिद्धिः कीदृशी-त्यतः तत्स्वरूपमाह—**परां परिशुद्धात्मस्वरूपप्राप्तिरूपा**मिति ॥ १ ॥

भा ॥ पुनरपि तज्ज्ञानं फलेन विशिनष्टि—

**इदं ज्ञान[म]मुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥** २

**भा ॥ इदम्—वक्ष्यमाणं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः—मत्साम्यं प्राप्ताः, सर्गेऽपि नोप-जायन्ते—न सृजिकर्मतां भजन्ते ; प्रलये न व्यथन्ति च—न च संहृतिकर्मताम् [भजन्ते] ॥ २ ॥**

**ता** ॥ अपौनरुक्त्यं सूचयन् उत्तरश्लोकमवतारयति—**पुनरपि तज्ज्ञान**मिति । इष्टप्राप्तिः पूर्वत्रोक्ता, अनिष्ट-निवृत्तिरत्रोच्यत इति न पौनरुक्त्यमिति भावः । इदंशब्दस्योक्तपरत्वे प्रकृतासंगत्या अन्यथा व्याचष्टे—**वक्ष्यमाण**मिति । *आगता इत्यस्यागमनकर्तृपरत्वे प्रकृतानन्वयात्प्राप्त्यर्थत्वमाह—**प्राप्ता** इति । *व्यथन्तीत्यस्य दुःखार्थकत्वेऽपि जनिसमभिव्याहारात्संहारलक्षकत्वमुचितमित्यभिप्रायेणाह—**न च संहृतिकर्मतां भजन्त** इति ॥ २ ॥

**भा ॥ अथ प्राकृतानां गुणानां बन्धहेतुताप्रकारं वक्तुं सर्वस्य भूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं *यावत्संजायते किञ्चित् (१३. २६) इत्यनेनोक्तं भगवता स्वेनैव कृतमित्याह—**

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**संभवस्सर्वभूतानां ततो भवति भारत ॥** ३

भा ॥ कृत्स्नस्य जगतो योनिभूतं मम महद्ब्रह्म यत्, तस्मिन् गर्भं दधाम्यहम्; *भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयम् (७. ४) इति निर्दिष्टा अचेतनप्रकृतिर्महदहङ्कारादिविकाराणां कारणतया महद्ब्रह्मेत्युच्यते। श्रुतावपि क्वचित्प्रकृतिरपि ब्रह्मेति निर्दिश्यते—* यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ (मु. १. १. १०) इति; * इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम् (७. ५.) इति चेतनपुञ्जरूपा या परा प्रकृतिर्निर्दिष्टा, सेह सकलप्राणिबीजतया गर्भशब्देनोच्यते। तस्मिन्नचेतने योनिभूते महति ब्रह्मणि चेतनपुञ्जरूपं गर्भं दधामि; अचेतनप्रकृत्या भोगक्षेत्रभूतया भोक्तृवर्गपुञ्जभूतां चेतनप्रकृतिं संयोजयामीत्यर्थः। ततस्तस्मात्प्रकृतिद्वयसंयोगान्मत्संकल्पकृतात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति ॥ ३ ॥

ता ॥ गुणसंबन्धहेतुताप्रकारतन्निवर्तनप्रकारप्रतिपादकत्वाभावात् *मम योनिर्महद्ब्रह्मेति श्लोकः प्रकृतासंगत इति शङ्कापरिहाराय तच्छ्लोकमवतारयति—**अथ प्राकृताना**मिति। वक्ष्यमाणगुणबन्धहेतुत्वमपि स्वकृतमिति द्योतनाय सर्वभूतजातस्य प्रकृतिपुरुषसंसर्गजत्वं स्वकृतमित्यनेनोच्यत इति भावः। **कृत्स्नस्य जगतो योनिभूत**मिति—मम योनिभूतमित्यन्वये *अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥ (७. ६) इत्यादिभिर्विरोधः; स्वयोनिभूते तस्मिन् गर्भाधानाभिधानं चानुपपन्नम्; *तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता इत्युत्तरश्लोकवैरस्यं, *तस्मिन् गर्भं दधाम्यहमित्यसामञ्जस्यं च। अतः जगत्पितृत्वेनावस्थितस्य स्वस्य जगद्गर्भाधानक्षमसाक्षाद्विकारिद्रव्यमिह योनिशब्देन विवक्षितमिति भावः। *मम योनिरित्येतत् *भूमिराप इत्यादिप्रतिपादितार्थविषयत्वादनुवादरूपमिति ज्ञापनार्थं तच्छब्दप्रतिसंबन्धितया यच्छब्दनिर्देशः। ननु जगद्योनिभूतं महद्ब्रह्म परमात्मैव; *वासुदेवः परा प्रकृतिः, *यद्भूतयोनिं (मु. १.१.६), *कर्तारमीशं पुरुषं ब्रह्मयोनिम् (मु. ३. १. ३) इत्यादिषु श्रूयते; स कथं *ममेति व्यतिरेकेण निर्दिश्यते? ब्रह्मशब्दस्य च न प्रकृतिवाचकत्वं, *महद्ब्रह्मेति विशेषणं च तत्प्रतिकूलमेव; अतः परमात्मस्वरूपमेव *ब्रह्म पुच्छं प्रतिष्ठा (आ. ५) इत्यादिष्विवात्रापि भेदेनोपचर्यत इति योज्यम्। तत्राह—**भूमिराप** इति। अयमभिप्रायः—षट्कद्वयोक्तवैशद्याय हि तृतीयषट्कप्रवृत्तिः; ततश्च *भूमिराप इत्यादौ स्वशेषतया निर्दिष्टा प्रकृतिरेवात्रापि संबन्धि[विभक्ति]वशात्प्रकृतिशब्दपर्याययोनिशब्दादिभिश्च तद्गर्भशब्दाभिहितचेतनप्रकृत्याधानक्षेत्रत्वेन भोगायतनत्वप्रतीतेश्च प्रत्यभिज्ञायते। *एतद्योनीनि (७.६) इति योनिशब्दोऽपि पूर्वं तत्र प्रयुक्तः। तस्याश्च महतां भूतानां तत्कारणस्याहंकारस्य तत्कारणस्य महत्तत्त्वस्य च कारणतया तत्तत्कार्यापेक्षया महत्त्वविशेषितब्रह्मत्वमप्युपपन्नम्। ब्रह्मशब्दश्च कारणत्वबृहत्त्वादिसादृश्यादब्रह्मण्यपि प्रयोक्तुं युज्यते, तथा च श्रौतप्रयोगोऽप्यस्ति। प्रकृतेर्जगद्योनित्ववचनं तु न परमात्मनो जगदुपादानत्वविरुद्धम्; अपि त्वनुगुणमेव, प्रकृतिविशिष्टवेषेणैव निर्विकारस्य तस्य जगद्योनित्वात्। अतो हि पूर्वम् *एतद्योनीनि भूतानि सर्वाणीत्युपधारयेत्युक्त्वा तदनन्तरम् *अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा (७. ६) इत्युक्तमिति। प्रसिद्धगर्भासंभवात् गर्भशब्दाभिलप्यत्वमत्र जीवस्य कथमित्यत्राह—**इतस्त्वन्या**मिति। *मम योनिरित्यनेन प्रत्यभिज्ञापितस्वकीयप्रकृतिद्वयविषयप्राचीनवचनपरामर्शादनन्तरग्रन्थसामञ्जस्याच गर्भशब्दोऽत्र परप्रकृतिशब्दनिर्दिष्टचित्समष्टिपर इति भावः। *गर्भमित्येकवचनं समुदायैक्यपरमिति ख्यापनाय पुञ्जशब्दः। अन्वितार्थमाह—**तस्मिन्नि**ति। ननु पूर्वं *ययेदं धार्यते जगत् (७. ५) इति चेतनप्रकृतेराधारत्वमचेतनस्य च धार्यत्वमुक्तम्। इह तु *तस्मिन् गर्भं दधाम्यहमिति तद्विपरीतमुच्यत इत्यत्राह—**अचेतने**ति। नात्र तादधीन्यपर्यन्ताधा-

राधेयभावोऽभिमतः; अपितु तदेवेदमित्यभेदनिर्देशमात्रयोग्यस्संयोगः; तथाविधसंयोगकरणस्य कर्मवश्यानां पुंसां कर्मानुरूपभोगः प्रधा[गप्रदा]नं प्रयोजनमित्युक्तं भवति । अत्र तत इति नानन्तर्यपरम्, मन्दप्रयोजनत्वात्; आनन्तर्येण हेतुभावस्य फलितत्वादपि तत्कण्ठोक्तेर्युक्तत्वात् । अतः *क्षेत्रक्षेत्रज्ञसंयोगात् (२६) इति पूर्वाध्यायोक्त एव हेतुरिह सांख्यमतशङ्कानिरासाय स्वाधीनत्वेन विशेष्यत इत्यभिप्रायेणाह—**प्रकृतिद्वयसंयोगान्मत्संकल्पकृता**दिति । अत एव तस्य कार्यकरत्वं चोपपन्नमिति भावः । अत्र *सर्वभूतानामिति न महदादितत्त्वपरं, भूतशब्दस्य महदादिष्वरूढत्वात् । नापि महाभूतादिविवक्षा, क्षेत्रज्ञानां बन्धहेतुप्रकारपरत्वात् । तच्च क्षेत्रज्ञत्वं भूतशब्दविवक्षितसृज्यत्वाविशेषात्, *आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ (वि. ध. १०४. २३), *ब्रह्माद्यास्सकला देवा मनुष्याः पशवस्तथा । विष्णुमायामहावर्तमोहान्धतमसावृताः ॥ (वि. ५. ३०. १७), *हिरण्यगर्भो भगवान् (वि. ६. ७. ५६) इत्यादिभिश्च ब्रह्मेशानादेरपि समानमित्यभिप्रायेण सर्वशब्द इति दर्शयितुं—**ब्रह्मादिस्तम्बपर्यन्ताना**मित्युक्तम्। *अबुद्धिपूर्वकस्सर्गः प्रादुर्भूतस्तमोमयः (वि. १. ५. ४) इत्यादिषु चतुर्मुखसंकल्पमन्तरेणैव स्थावरादिसृष्टिवचनाद्धिरण्यगर्भवत् तत्सृष्टानामपि स्तम्बपर्यन्तानां परमात्मसृज्यत्वं स्पष्टम् ॥ ३ ॥

**भा ॥ कार्यावस्थोऽपि चिदचित्प्रकृतिसंसर्गो मयैव कृत इत्याह—**

**सर्वयोनिषु कौन्तेय मूर्तयस्संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥** ४

**भा ॥ सर्वासु देवगन्धर्वयक्षराक्षसमनुष्यपशुमृगपक्षिसरीसृपादिषु योनिषु तत्तन्मूर्तयो याः संभवन्ति— जायन्ते, तासां ब्रह्म महत् योनिः—कारणम्; मया संयोजितचेतनवर्गा महदादिविशेषान्तावस्था प्रकृतिः कारणमित्यर्थः । अहं बीजप्रदः पिता—तत्रतत्र च तत्तत्कर्मानुगुण्येन चेतनवर्गस्य संयोजकश्चाहमित्यर्थः ॥ ४ ॥**

**ता** ॥ एवमनेन श्लोकेन प्राकृतनैमित्तिकसृष्ट्योस्स्वाधीनत्वमुक्तम्; अथ नित्यसृष्टिरपि स्वेनैव कृतेत्युच्यते— *सर्वयोनिष्विति श्लोकेन । श्लोकयोः पुनरुक्तिपरिहारमभिप्रेत्याह—**कार्यावस्थोऽपी**ति । नित्यसर्गावच्छिन्नोऽपीत्यर्थः। हिरण्यगर्भमूलचतुर्विधसृष्टेस्समनन्तरमप्याप्रलयात्क्षुद्रेष्वपि जन्तुषु या संततिः, तत्रापि नेश्वरस्स्वयमुदासीनस्सन्नन्यैः कारयतीत्यभिप्रायेण सर्वयोनिशब्द इत्याह—**देवगन्धर्वे**त्यादिना । प्रमाणसिद्धं प्रतिनियतकारणवस्तुवैजात्यलक्षणं वैचित्र्यं स्रष्टुस्स्वस्य विचित्रशक्तियोगज्ञप्तये *याः इति प्रसिद्धवन्निर्देशेनानूद्यत इत्यभिप्रायेणाह—**तत्तन्मूर्तय** इति । *संभवन्तीत्यस्य संभावनार्थताव्युदासार्थमुपादानोपादेयभावज्ञापनार्थं चाह—**जायन्त** इति । अव्यवहितोपादानत्वाद्यभावात् **कारण**मित्युक्तम् । चित्संपर्कविरहे सर्वेश्वराधिष्ठानविरहे च केवलस्याचिन्मात्रस्य हेतुत्वायोगमभिप्रेत्याह—**मया संयोजितचेतनवर्गे**ति । *सर्वयोनिष्वित्यादिना निर्दिश्यमानचरमव्यष्टिसृष्टौ बहुयोनिकतया प्रतीयमानायां च कथमेकस्या मूलप्रकृतेर्योनित्वमित्यत्राह—**महदादिविशेषान्तावस्थे**ति । विशेषाः पञ्चभूतानि । अत्र को बीजशब्दार्थः? किं च पितृत्वव्यपदेशहेतुभूतं तत्प्रदानम्? *तासां ब्रह्म महद्योनिरहं बीजप्रदः पितेत्यनेन च सेश्वरसांख्यवत्प्रकृतेरेवोपादानत्वम्, ईश्वरस्य च केवलनिमित्तत्वं प्रतीयते; तच्च श्रुतिविरुद्धम्; एकस्यामेव च योनावेकस्मिन्नेवाविषमे पितरि जायमानानां वैचित्र्यं किंनिबन्धनमित्यत्राह—**तत्रतत्रे**ति । महद्ब्रह्म योनिरिति पूर्वश्लोकोक्ता प्रकृतिरत्रापि स्वशब्देनोपात्ता । तत्र गर्भशब्दस्थानीयो बीजशब्दस्तत्तत्सृष्ट्यनुगुणचेतनवाचीति भावः ॥ ४ ॥

भा ॥ एवं सर्गादौ प्राचीनकर्मवशादचित्संसर्गेण देवादियोनिषु जातानां पुनःपुनर्देवादिभावेन जन्म-हेतुमाह—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५

**भा ॥ सत्त्वरजस्तमांसि त्रयो गुणाः प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः प्रकाशादिकार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूतास्तद्विकारेषु महदादिषूद्भूता महदादिविशेषान्तैरारब्धदेवमनुष्यादिदेहसंबन्धिनमेनं देहिन-मव्ययम्—स्वतो गुणसंबन्धानर्हं देहे वर्तमानं निबध्नन्ति, देहे वर्तमानत्वोपाधिना निबध्नन्तीत्यर्थः ॥ ५ ॥**

**ता ॥** ननु नैमित्तिकसर्गादौ प्राचीनकर्मानुरूपपरमपुरुषसंकल्पकृताचित्संसर्गाज्जन्मोपपद्यते ; प्राचीनं च कर्म तेनैव दत्तफलम्, तदारम्भककर्मावसाने च तच्छरीरं विनश्येत् ; स्वतश्चात्मा विशुद्धः ; कुतः पुनरस्य नित्यसृष्टि-विषयतेत्यत्र गुणबन्धप्रकरणमवतारयति—**एवमि**ति । **एवं**—समष्टिव्यष्टिविषयश्लोकद्वयोक्तप्रकारेणेत्यर्थः । स्वरूपनिरूपक-धर्मा हि धर्मिणं कदाचिदपि न त्यजन्ति, अतः प्रकृतिसंभवत्वमिह कार्यदशायां विषमतयोद्भवमात्रमित्यभिप्रायेणाह—**प्रकृतेस्स्वरूपानुबन्धिन** इति । निरुपाधिका इत्यर्थः । कार्यावस्थप्रकृतिगतेभ्यश्शब्दादिगुणेभ्यस्स्वरूपनिरूपकत्व-नित्यानुबन्धित्वलक्षणवैषम्यप्रकाशनाय इतिशब्दः । सत्त्वादीनामेव प्रकृतिद्रव्यतां वदतस्सांख्यान् प्रतिक्षिपति—**स्वभाव-विशेषा** इति । असाधारणधर्मविशेषा इति यावत् । चेतनासाधारणत्वेऽप्यौपाधिकास्सुखदुःखादयः ; स्वाभाविका अपि साधारणा द्रव्यत्वादयः ; तदुभयव्यवच्छेदाय—**स्वरूपानुबन्धिनस्स्वभावविशेषा** इति पदद्वयम् । एतेन * गुणा इति पारिभाषिकश्शब्दः, न रूपादिवद्द्रव्याश्रिता गुणाः इत्यादि शंकरोक्तं निरस्तम् । गुणशब्दप्रसिद्धिस्तन्मते विरुद्धेति भावः । ननु शब्दादिवन्न सत्त्वादिसंज्ञा गुणाः प्रत्यक्षेण दृश्यन्ते ; न च नित्यातीन्द्रियेऽनुमानं क्रमत इति शारीरके स्थापितम् ; नचानुपलब्धेषु प्रकृतिगुणेषु वायसरदनवदुपदेशस्य प्रयोजनं पश्यामः ; अतो वैशेषिकादिवदन्यपरत्वमिह वक्तुं युक्त-मित्यत्राह—**प्रकाशादी**ति । अयमभिप्रायः—प्रकाशप्रवृत्तिमोहरूपाणि कार्याणि तावत्प्रत्यक्षाणि । तत्कारणविशेषाश्च कार्य-भूतैस्तैरेव सामान्यतोऽनुमीयन्ते, कारणविशेषमन्तरेण कस्यापि कार्यस्यानुत्पत्तेः । सच विशेषस्सत्त्वादिरूप इत्यागम-सिद्धम् । न चात्र निष्प्रयोजनता, अतीन्द्रियविषभेषजशक्तिविशेषोपदेशवद्धानोपादानपर्यवसानादिति । कार्यैकनिरूप-णीयाश्चेत्प्रतिसर्गदशायां सुखदुःखादिकार्याभावात्सत्त्वादिगुणानामभावः प्राप्नोति ; अतः कथं स्वरूपानुबन्धित्वमित्यत्राह—**प्रकृत्यवस्थायामनुद्भूता** इति । कार्यहेतुरुद्भवस्तदानीं नास्तीति भावः । **तद्विकारेष्वित्यादि** । परिणामवशात्पुष्प-फलादिषु गन्धाद्युद्भववदिति भावः । प्रकृतितद्विकारस्था गुणास्स्वतोऽव्ययत्वाद्गुणसंबन्धानर्हं कथं बध्नन्तीत्यस्योत्तरं देहिशब्द इत्याह—**महदादी**ति । अव्ययशब्दोऽत्र गुणसंबन्धकृतज्ञानसंकोचरूपव्ययनिषेधपर इत्यभिप्रायेणाह—**अव्ययं स्वतो गुणसंबन्धानर्ह**मिति । तथाऽपि * शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते (१३. ३१) इत्युक्तस्य कथं बन्धाख्यो लेप इत्यत्र आमोक्षादविच्छिन्नदेहसंबन्धोपाधिकत्वं * देहे इत्यनेनाभिप्रेतमित्याह—**देहे वर्तमानत्वोपाधि-ने**ति । एतेन * क्षेत्रज्ञं बध्नन्तीव ; तमास्पदीकृत्य आत्मानं प्रतिलभन्त इति शंकरदुरुक्तिर्निरस्ता । न ह्येष गुणबन्धः प्रकोष्ठबलेन हन्तुं शक्यत इत्यभिप्रायेण महाबाहुशब्दः । * दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः इति भावः । यथा त्वद्भुजबलेन परेषां बन्ध इति वा ॥ ५ ॥

भा ॥ सत्त्वरजस्तमसामाकारं बन्धनप्रकारं चाह—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६

भा ॥ तत्र सत्त्वरजस्तमस्सु सत्त्वस्य स्वरूपमीदृशम्—निर्मलत्वात्प्रकाशकम् ; प्रकाशसुखावरणस्वभावरहितता निर्मलत्वम् ; प्रकाशसुखजननैकान्तस्वभावतया प्रकाशसुखहेतुभूतमित्यर्थः । प्रकाशो—वस्तुयाथात्म्यावबोधः ; अनामयम्—आमयाख्यकार्यं न विद्यत इत्यनामयम, अरोगताहेतुरित्यर्थः । एष सत्त्वाख्यो गुणो देहिनमेनं सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति–पुरुषस्य सुखसङ्गं ज्ञानसङ्गं च जनयतीत्यर्थः । ज्ञानसुखयोस्सङ्गे हि जाते तत्साधनेषु लौकिकवैदिकेषु प्रवर्तते ; ततश्च तत्फलानुभवसाधनभूतासु योनिषु जायत इति सत्त्वं सुखज्ञानसङ्गद्वारेण पुरुषं बध्नाति । ज्ञानसुखजननं पुनरपि तयोस्सङ्गजननं च सत्त्वमित्युक्तं भवति ॥ ६ ॥

ता ॥ * तत्रेत्यादिश्लोकत्रयस्य प्रकृतसंगतिमाह–सत्त्वेति । आकारम्–निरूपकस्वभावमित्यर्थः । * तत्रेति निर्धारणार्थः समुदायनिर्देश इत्याह–सत्त्वरजस्तमस्स्विति । ननु निर्मलानां स्फटिकमण्यादीनां न प्रकाशकत्वं दृश्यत इत्यत्राह–प्रकाशेति । मलशब्दोऽत्र तमस्स्वभावभूतप्रकाशविरोध्याकारपर इत्यर्थः । वक्ष्यमाणपरामर्शादिह सुखोपादानम् । आवरणस्वभावरहितानामप्याकाशवाय्वादीनां न प्रकाशकत्वमित्यत्राह–प्रकाशसुखजननैकान्तस्वभावतयेति । सत्त्वमिश्ररजस्तमसोरपि भ्रान्तिबुद्धिविशेषहेतुत्वस्य वक्ष्यमाणत्वात्कथमिह सत्त्वस्यैव प्रकाशजनकत्वमित्यत्राह–प्रकाशो वस्तुयाथात्म्यावबोध इति । राजसतामसधियोरप्यधिष्ठानस्वरूपप्रकाशादिकं सत्त्वस्यांश इति भावः । सत्त्वस्यामयप्रसङ्गाभावात्तन्निषेधो न युक्त इत्यत्राह–आमयाख्यकार्यं न विद्यत इति । [आमयाख्यं कार्यं न विद्यत इत्यर्थः । ] अत्र सहपठिते गुणान्तरे कार्यत्वेनामयस्य संबन्धोऽस्ति, सोऽत्र प्रसक्तः प्रतिषिध्यत इति भावः । आमयाख्यकार्यनिषेधोऽत्र फलतस्तद्विपरीतकार्यान्तरविध्यभिप्रायेणेत्याह–अरोगताहेतुरिति । * तन्निबध्नातीत्युत्तरश्लोकयोरिवात्रापि स्वरूपनिर्देशेन बन्धहेतुत्वनिर्देशेन च वाक्यभेदमाह–एष इति । अन्यतस्सिद्धस्य सुखादिसङ्गस्य करणतामात्रं तृतीयया प्रतिपादितम् ; नच तद्युक्तम्, हेत्वन्तरानुक्तेः ; तत्राह–पुरुषस्येति । बन्धावान्तरव्यापारत्वमिह विवक्षितमिति भावः । बन्धो हि कर्मफलानुभवार्थदेहसंबन्धः ; स च कर्ममूलः, स कथं सुखादिसङ्गादित्यत्राह–ज्ञानसुखयोरिति । ननु वैदिकसाधनानुष्ठानं योनिप्राप्त्यैव भवतीति युक्तम् ; लौकिकं तु साधनं दृष्टफलमात्राय स्याद्वा, नवा ; न तु जन्मान्तरादिप्रसाधकम् । प्रवृत्तिदृष्टान्ततयाऽपि लौकिकग्रहणं मन्दप्रयोजनम् । अत्र ब्रूमः–अत्र लौकिकशब्देन स्मार्तग्रहणम् ; अथवा निषिद्धग्रहणम् ; हिंसादेस्सुखसाधनत्वं हि लौकिकम् ; अलौकिक्या तु शक्त्या पापिष्ठजन्मादिप्रसाधकत्वमिति । रजसि च वक्ष्यति, * ताश्च [क्रियाः] पुण्यपापरूपाः (७) इति । यदि सत्त्वमेव प्रकाशं सुखं च स्वयं जनयति, *ततस्सिद्धयोस्तयोः प्रवृत्तिहेतुस्सङ्गो न जायेतेत्यत्राह–ज्ञानसुखेति । बीजाङ्कुरन्यायेनोत्तरसङ्गतद्विषययोस्सत्त्वं साधकमित्यर्थः । * न काङ्क्षे विजयम् (गी. १. ३२) इत्यादिवदतस्तव न सङ्ग इत्यभिप्रायेणानघशब्दः ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७

भा ॥ रजो रागात्मकम्—रागहेतुभूतम् । रागो योषित्पुरुषयोरन्योन्यस्पृहा । तृष्णासङ्गसमुद्भवम्—तृष्णासङ्गयोरुद्भवस्थानम्, तृष्णासङ्गहेतुभूतमित्यर्थः । तृष्णा—शब्दादिसर्वविषयस्पृहा ; सङ्गः पुत्रमित्रादिषु

**संबन्धिषु संश्लेषस्पृहा। तथा देहिनं कर्मसु—क्रियासु स्पृहाजननद्वारेण निबध्नाति; क्रियासु हि स्पृहया याः क्रिया आरभते देही, ताश्च पुण्यपापरूपा इति तत्फलानुभवसाधनभूतासु योनिषु जन्महेतवो भवन्ति। अतः कर्मसङ्गद्वारेण रजो देहिनं निबध्नाति। तदेवं रजो रागतृष्णासङ्गहेतुः कर्मसङ्गहेतुश्चेत्युक्तं भवति ॥ ७ ॥**

**ता ॥** रजसो लोभ एवच (१७) इति वक्ष्यते; अतः *प्रकाशकम्, *मोहनमिति पूर्वोत्तरवत् *रागात्मकमित्यत्रापि रागहेतुत्वं विवक्षितमित्याह—**रागहेतुभूत**मिति। कारणे कार्योपचारः। रज्यतेऽनेनेति व्युत्पत्त्या वा रागहेतुत्वं रागशब्देन विवक्षितमिति भावः। सहप्रयुक्ततृष्णादिशब्दपुनरुक्तिपरिहाराय रागशब्दं प्रयोगप्राचुर्यानुसारेण विषयविशेषे नियच्छति—**योषित्पुरुषयोरन्योन्यस्पृहे**ति। तृष्णासङ्गाभ्यां रजस उत्पत्तिकथनं मन्दम्; रजोगुणात्तयोरुत्पत्त्यभिधानं तु बन्धावान्तरव्यापारज्ञापनेन सार्थकमित्यभिप्रायेणाह—**तृष्णासङ्गयोरुद्भवस्थान**मिति। आत्मधर्मभूतयोस्तयोरात्मैव ह्युद्भवस्थानमित्यत्राह—**तृष्णासङ्गहेतुभूतमित्यर्थ** इति। *क्षुत्तृष्णोपशमम् (वि. १. १७. ६०) इत्यादिप्रयोगात्पिपासामात्रशङ्काव्यावृत्त्यर्थमाह—**तृष्णा शब्दादिसर्वविषये**ति। सांस्पर्शिकगुणपञ्चकग्रहणमिदम्। **पुत्रमित्रादिष्वि**त्याभिमानिकपरम्, विषयतृष्णा विषयवैतृष्ण्यमित्यादिप्रयोगात्। तृष्णा सांस्पर्शिकसमस्तविषया; सङ्गस्तु परिशेषात् प्रयोगानुसाराच्च आभिमानिकविषय इति भावः। रागादिहेतुकस्तद्विषयोपायसङ्गोऽत्र कर्मसङ्ग इत्याह—**तथे**ति। ननु रागतृष्णासङ्गा अप्यन्यत्र सुखविशेषसङ्गा एव व्याख्याताः। ज्ञानसुखयोस्सङ्गे जाते तत्साधनेषु प्रवृत्तिवचनात्सत्त्वेनापि क्रियासङ्गो जन्यते; तत्कथं विवेकः? इत्थं—सत्त्वगुणस्सुखं प्रधानीकृत्य तदर्थतयाऽन्यत्र सञ्जयति; *प्रयोजनेषु सज्जन्ते न विशेषेषु पण्डिताः इतिवत्। रजोगुणस्तु तत्तद्वस्तूनि क्रियास्वरूपं च प्रधानीकृत्य सुखमल्पं प्रभूतं वेत्यत्रोदासीनो भवति। राजदाराभिलाषदुष्पुत्रादिसंरक्षणवृथाचेष्टादिष्वेतद्व्यक्तमिति। कर्मसङ्गस्य कथं बन्धद्वारत्वमित्यत्राह—**क्रियासु** हीति। कर्मसङ्गवद्रागादेरपि बन्धद्वारत्वज्ञापनाय पिण्डितमाह—**तदेव**मिति। तत्—रागादीनां बन्धे पर्यवसानेन साफल्यादित्यर्थः। एवम्—सत्त्वतमोव्यावृत्तस्वभावेनोक्तप्रकारेणेत्यर्थः ॥ ७ ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥** ८

**भा ॥ ज्ञानादन्यदिहाज्ञानमभिप्रेतम्। ज्ञानं वस्तुयाथात्म्यावबोधः; तस्मादन्यत् तद्विपर्ययज्ञानम्। तमस्तु वस्तुयाथात्म्यविपरीतविषयज्ञानजम्। मोहनं सर्वदेहिनाम्—मोहो विपर्ययज्ञानम्; विपर्ययज्ञानहेतुरित्यर्थः। तत्—तमः प्रमादालस्यनिद्राहेतुतया तद्द्वारेण देहिनं निबध्नाति। प्रमादः—कर्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतमनवधानम्; आलस्यम्—कर्मस्वनारम्भस्वभावः, स्तब्धतेति यावत्; पुरुषस्येन्द्रियप्रवर्तनश्रान्त्या सर्वेन्द्रियप्रवर्तनोपरतिर्निद्रा; तत्र बाह्येन्द्रियप्रवर्तनोपरमः स्वप्नः; मनसोऽप्युपरतिः सुषुप्तिः ॥ ८ ॥**

**ता ॥** अत्यन्तपरिहरणीयत्वलक्षणवैषम्यद्योतनाय—**तमस्त्व**ति तुशब्दः। अज्ञानशब्दस्य पुण्यपापरूपे कर्मणि ज्ञानाभावादिषु च प्रयोगादिह तद्व्यावृत्तं मोहजनकत्वानुरूपं कारणविशेषमाह—**ज्ञानादन्य**दिति। सर्वज्ञानव्यतिरेकव्युदासायाह—**ज्ञानं वस्तुयाथात्म्यावबोध** इति। विपर्ययज्ञानस्य तमोजनकत्वं पापानुष्ठानादिद्वारा। तमःकार्यतया वक्ष्यमाणं धर्मवैपरीत्यज्ञानमिह मोहशब्देन विवक्षितमित्याह—**मोहो विपर्ययज्ञान**मिति। प्रत्ययस्यात्र हेतुमात्रपरतामाह—**विपर्ययज्ञानहेतुरित्यर्थ** इति। **अनवधान**मित्येतावत्प्रमादशब्दार्थः। **कर्तव्यादी**त्यादिना प्रमादस्य

बन्धहेतुत्वनिर्वहणम्; अकर्तव्ये हि प्रवृत्तिः पापिष्ठजन्मादिहेतुर्भवति; एवं कर्तव्यकर्मस्वनारम्भोऽपि; स्मरन्ति हि— * अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥ (मनु. ११. ४४) इति। आलस्यशब्दस्यात्र सप्रयोजनेऽपि विषये प्रवृत्तिविरोधिस्वभावपरतामाह—**स्तब्धते**ति। सर्वदा तमसि वर्तमानेऽपि कदाचिन्निद्रा कुत इत्यत्राह—**इन्द्रियप्रवर्तनश्रान्त्ये**ति। स्वप्नस्यानुक्तिशङ्कापरिहाराय स्वप्नसुषुप्त्योर्निद्राभेदत्वं दर्शयति—**तत्रे**ति। निद्राया बन्धकत्वं चोदितानुष्ठानविरुद्धादकालकरणात्काले चाकरणात्पापिष्ठस्वप्नद्वारा च द्रष्टव्यम्। उक्तं च * युक्तस्वप्नावबोधस्य (६. १७) इति॥ ८॥

**भा॥ सत्त्वादीनां बन्धद्वारभूतेषु प्रधानान्याह—**

**सत्त्वं सुखे संजयति रजः कर्मणि भारत।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥** ९

**भा॥ सत्त्वं सुखसङ्गप्रधानम्; रजः कर्मसङ्गप्रधानत्; तमस्तु वस्तुयाथात्म्यज्ञानमावृत्य विपरीतज्ञानहेतुतया कर्तव्यविपरीतप्रवृत्तिसङ्गप्रधानम्॥ ९॥**

**ता॥** * सत्त्वं सुखे इति श्लोकस्य अर्थविभागेन पुनरुक्ततां परिहरति—**सत्त्वादीना**मिति। **सत्त्वं सुखसङ्गप्रधान**मिति। ज्ञानसङ्गोऽपि सुखार्थ इति भावः। **रजः कर्मसङ्गप्रधान**मिति। रागतृष्णादयोऽपि हि कर्मणि विश्राम्यन्तीति भावः। निश्शेषज्ञानावरणे सुषुप्त्यादिरूपत्वात्प्रमादाख्यदशाऽपि न स्यादित्यत्राह—**वस्तुयाथात्म्यज्ञानमावृत्ये**ति॥ ९॥

**भा॥ देहाकारपरिणतायाः प्रकृतेः स्वरूपानुबन्धिनस्सत्त्वादयो गुणाः; ते च स्वरूपानुबन्धित्वेन सर्वदा सर्वे वर्तन्त इति परस्परविरुद्धं कार्यं कथं जनयन्तीत्यत्राह—**

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत।**
**रजस्सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा॥** १०

**भा॥ यद्यपि सत्त्वादयस्त्रयः प्रकृतिसंसृष्टात्मस्वरूपानुबन्धिनः, तथाऽपि प्राचीनकर्मवशाद्देहाप्यायनभूताहारवैषम्याच्च सत्त्वादयः परस्परसमुद्भवाभिभवरूपेण वर्तन्ते। रजस्तमसी कदाचिदभिभूय सत्त्वमुद्रिक्तं वर्तते। तथा तमस्सत्त्वे अभिभूय रजः कदाचित्। कदाचिच्च रजस्सत्त्वे अभिभूय तमः॥ १०॥**

**ता॥** अनन्तरग्रन्थस्यासंगतिशङ्कां परिहरति—**देहाकारे**ति। परस्परविरुद्धं—यथार्थायथार्थज्ञानसुखदुःखसङ्गादिरूपमित्यर्थः। उद्भवाभिभवानियमप्रसङ्गपरिहाराय भगवदनुग्रहनिग्रहहेतूनां कर्मणां विषमविपाकसमयत्वात्तदनुरूपोद्भवाभिभवप्रवाह उपपद्यत इत्याह—**प्राचीनकर्मवशा**दिति। यथा वातपित्तकफानां तत्तत्प्रचुरैर्द्रव्यैरुपचयं * वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः (अष्टाङ्ग. १. १४) इत्यायुर्वेदविदो वदन्ति, तथाऽत्रापि वक्ष्यमाणसात्त्विकाद्याहारभेदादित्याह—**देहाप्यायनभूताहारवैषम्याच्चे**ति। * ततो देवा अभवन् परासुराः (यजु. ५. ३. ३. ११) इत्यादिष्विव भवतिरत्रोद्भवविषय इत्याह—**उद्रिक्तं वर्तत** इति। रजस्तमसोरुद्भूतयोः परिहारार्थमयमुद्भवाभिभवोपदेशः॥ १०॥

**भा॥ तच्च कार्योपलब्ध्यैवावगच्छेदित्याह—**

**सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ॥** ११

**भा ॥ सर्वेषु चक्षुरादिषु ज्ञानद्वारेषु यदा वस्तुयाथात्म्यप्रकाशे ज्ञानमुपजायते, तदा तस्मिन् देहे सत्त्वं प्रवृद्धमिति विद्यात् ॥ ११ ॥**

**ता ॥** ते च कुतो ज्ञाते चिकित्सितव्ये इत्यत्र *सर्वद्वारेष्वित्यादिश्लोकत्रयमवतारयति—**तच्चेति** । नात्र द्वारशब्दो नवद्वारविषयः, नाप्येकादशेन्द्रियविषयः, तेषां सर्वेषां ज्ञानेनानन्वयात्; अतश्चैतन्यप्रसरद्वारभूतमनष्षष्ठज्ञानेन्द्रियवर्गपर इत्याह—**चक्षुरादिषु ज्ञानद्वारेष्विति** । प्रकाशशब्दोऽत्र न प्रथमान्तः, ज्ञानशब्देन पुनरुक्तिप्रसङ्गात्, प्रकाश इत्यस्य व्याख्यानं ज्ञानमितीति कैश्चिदुक्तस्य क्लिष्टत्वात् । सप्तम्यन्तत्वे तु ज्ञानफलभूतव्यवहारानुगु[ण]ण्यविषयतया वा, प्रकाश्यस्वरूपादिपरतया वा, ज्ञानशब्देन मनोवृत्तिविवक्षया वा अन्वय उपपद्यत इत्यभिप्रायेणाह—**वस्तुयाथात्म्यप्रकाशे ज्ञान**मिति । एतेन *प्रकाश आलोकस्थानीयः, ज्ञानं चक्षुस्स्थानीयम् इति वदन्तो निरस्ताः । एकस्यैव योगिनः सौभर्यादेर्युगपत्परिगृहीतानेकदेहस्य देहभेदेन गुणभेदवृद्धिसंभवज्ञापनार्थं युगपन्महाप्रलयादिवत्सर्वसाधारण्यपरिहारार्थं च *अस्मिन् देहे इति विशेषितमित्याह—**तदा तस्मिन् देहे सत्त्वं प्रवृद्ध**मिति ॥ ११ ॥

**लोभः प्रवृत्तिरारम्भः कर्मणामशमस्स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥** १२

**भा ॥ लोभः—स्वकीयद्रव्यस्यात्यागशीलता, प्रवृत्तिः—प्रयोजनमनुद्दिश्यापि चलनस्वभावता, आरम्भः कर्मणां—फलसाधनभूतानां कर्मणामारम्भः, अशमः—इन्द्रियानुपरतिः, स्पृहा—विषयेच्छा । एतानि रजसि प्रवृद्धे जायन्ते ; यदा लोभादयो वर्तन्ते तदा रजः प्रवृद्धमिति विद्यादित्यर्थः ॥ १२ ॥**

**ता ॥** *लोभः प्रवृत्तिरित्यादौ स्पृहाशब्दपौनरुक्त्यपरिहाराय रूढिप्रकर्षसिद्धं लोभशब्दार्थमाह—**स्वकीयद्रव्यस्यात्यागशीलते**ति । आरम्भशब्दस्साभिसन्धिकप्रवृत्तौ समग्रप्रयोगः । अत्र *कर्मणामिति समभिव्याहारस्वारस्याच्च तत्सिद्धम् । अतोऽत्रारम्भशब्दो दृष्टादृष्टफलसाधनभूतकृषियज्ञादिविषयः । अतश्च प्रवृत्तिशब्दोऽत्र ततो व्यावृत्ततृणच्छेदाङ्गकम्पादिवृथाचेष्टाविषय इत्याह—**प्रयोजनमनुद्दिश्यापि चलनस्वभावते**ति । द्वाभ्यामपौनरुक्त्याय अशमोऽत्र प्रवृत्तिहेतुरिन्द्रियोद्रिक्ततेत्याह—**इन्द्रियानुपरतिरि**ति । पूर्वश्लोकवदत्रापि गुणविवृद्धिलिङ्गोपदेशपरतामाह—**यदे**ति ॥ १२

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥** १३

**भा ॥ अप्रकाशः—ज्ञानानुदयः, अप्रवृत्तिश्च—स्तब्धता, प्रमादः—अकार्यप्रवृत्तिफलमनवधानम्, मोहो—विपरीतज्ञानम् । एतानि तमसि प्रवृद्धे जायन्ते—एतैस्तमः प्रवृद्धमिति विद्यात् ॥ १३ ॥**

**ता ॥** *अप्रकाशोऽप्रवृत्तिश्चेति श्लोके प्रमादो हि समीक्षावसरे सत्यप्यसमीक्षा, अतोऽप्रकाशप्रमादयोस्सामान्यविशेषरूपत्वाद्गोबलीवर्दनयेनापुनरुक्तिरित्यभिप्रायेणाह—**अप्रकाशो ज्ञानानुदय** इति । प्रागुक्तनिद्रादिरूप इहायमभिप्रेतः । अप्रवृत्तिश्च प्रागुक्तमालस्यमित्याह—**स्तब्धते**ति । मोहप्रमादावपि हि तावेवेत्याह—**प्रमाद** इत्यादिना ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४

भा ॥ यदा सत्त्वं प्रवृद्धम्, तदा सत्त्वे प्रवृद्धे देहभृत् प्रलयम्—मरणं याति चेत्, उत्तमविदाम्—उत्तमतत्त्वविदाम्, आत्मयाथात्म्यविदां, लोकान्—समूहान्, अमलान्—मलरहितान्, अज्ञानरहितान्, प्रतिपद्यते—प्राप्नोति ; सत्त्वे प्रवृद्धे तु मृतः आत्मविदां कुलेषु जनित्वा आत्मयाथात्म्यज्ञानसाधनेषु पुण्यकर्मस्वधिकरोतीत्युक्तं भवति ॥ १४ ॥

ता ॥ अन्त्यकाले रजस्तमस्समुद्भवहेतूनामादावेव परिहरणार्थमन्त्यकालप्रवृद्धानां गुणानां पृथक्फलमुच्यते—* यदा सत्त्वे इत्यादिना श्लोकद्वयेन । देहप्रलयविवक्षया देहभृदिति विशेषणमित्यभिप्रायेणाह—**मरणं यातीति** । उत्तम........(नोच्यन्ते । देवलोकशब्दो वा परब्रह्मलोकमपि संगृह्णातीति $........) ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।

भा ॥ रजसि प्रवृद्धे मरणं प्राप्य फलार्थं कर्म कुर्वतां कुलेषु जायते ; तत्र जनित्वा स्वर्गादिफलसाधनकर्मस्वधिकरोतीत्यर्थः ॥

तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५

भा ॥ तथा तमसि प्रवृद्धे मृतो मूढयोनिषु—श्वसूकरादियोनिषु जायते ; सकलपुरुषार्थारम्भानर्हो जायत इत्यर्थः ॥ १५ ॥

कर्मणस्सुकृतस्याहुस्सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६

एवं सत्त्वप्रवृद्धौ मरणमुपगम्यात्मविदां कुले जायते ; तेनानुष्ठितस्य सुकृतस्य—फलाभिसन्धिरहितस्य मदाराधनरूपस्य कर्मणः फलं पुनरपि ततोऽधिकसत्त्वजनितं निर्मलं—दुःखगन्धरहितं भवतीत्याहुस्सत्त्वगुणपरिणामविदः । अन्त्यकालप्रवृद्धस्य रजसस्तु फलं फलसाधनकर्मसङ्गिकुलजन्मफलाभिसन्धिपूर्वककर्मारम्भतत्फलानुभवपुनर्जन्मरजोवृद्धिफलाभिसन्धिपूर्वककर्मारम्भपरम्परारूपं सांसारिकदुःखप्रायमेवेत्याहुस्तद्गुणयाथात्म्यविदः । अज्ञानं तमसः फलम्—एवमन्त्यकालप्रवृद्धस्य तमसः फलमज्ञानपरम्परारूपम् ॥ १६ ॥

भा ॥ तदधिकसत्त्वादिजनितं निर्मलादिफलं किमित्यत्राह—

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७

भा ॥ एवं परम्परया जातादधिकसत्त्वादात्मयाथात्म्यापरोक्ष्यरूपं ज्ञानं जायते । तथा प्रवृद्धाद्रजसस्स्वर्गादिफललोभो जायते । तथा प्रवृद्धाच्च तमसः प्रमादः—अनवधाननिमित्तासत्कर्मणि प्रवृत्तिः ; ततश्च मोहः—विपरीतज्ञानम् ; ततश्चाधिकतरं तमः ; ततश्चाज्ञानम्—ज्ञानाभावः ॥ १७ ॥

$ इतःपरं श्लोकपञ्चकस्य तात्पर्यचन्द्रिका न लभ्यते ।

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८**

भा ॥ एवमुक्तेन प्रकारेण सत्त्वस्था ऊर्ध्वं गच्छन्ति—क्रमेण संसारबन्धान्मोक्षं गच्छन्ति । रजसस्स्वर्गादिफललोभकरत्वाद्राजसाः फलसाधनभूतं कर्मानुष्ठाय तत्फलमनुभूय पुनरपि जनित्वा तदेव कर्मानुतिष्ठन्तीति मध्ये तिष्ठन्ति । पुनरावृत्तिरूपतया दुःखप्रायमेव तत् । तामसास्तु जघन्यगुणवृत्तिस्था उत्तरोत्तरनिकृष्टतमोगुणवृत्तिषु स्थिता अधो गच्छन्ति—अन्त्यत्वम्, ततस्तिर्यक्त्वम्, ततः क्रिमिकीटादिजन्म, [ततः] स्थावरत्वम्, ततोऽपि गुल्मलतात्वम्, ततश्च शिलाकाष्ठलोष्टतृणादित्वं गच्छन्तीत्यर्थः ॥ १८ ॥

भा ॥ आहारविशेषैः फलाभिसन्धिरहितसुकृतविशेषैश्च परम्परया प्रवर्धितसत्त्वानां गुणात्ययद्वारेण ऊर्ध्वगमनप्रकारमाह—

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९**

भा ॥ एवं सात्त्विकाहारसेवया फलाभिसन्धिरहितभगवदाराधनरूपकर्मानुष्ठानैश्च रजस्तमसी सर्वात्मनाऽभिभूय उत्कृष्टसत्त्वनिष्ठो यदाऽयं द्रष्टा गुणेभ्योऽन्यं कर्तारं नानुपश्यति ; गुणा एव स्वानुगुणप्रवृत्तिषु कर्तार इति पश्यति ; गुणेभ्यश्च परं वेत्ति—कर्तृभ्यो गुणेभ्यश्च परम्—अन्यमात्मानमकर्तारं वेत्ति ; स मद्भावमधिगच्छति—मम यो भावस्तमधिगच्छति । एतदुक्तं भवति—आत्मनस्स्वतः परिशुद्धस्वभावस्य पूर्वपूर्वकर्ममूलगुणसङ्गनिमित्तं विविधकर्मसु कर्तृत्वम् ; आत्मा स्वतस्त्वकर्ता अपरिच्छिन्नज्ञानैकाकार इत्येवमात्मानं यदा पश्यति, तदा मद्भावमधिगच्छतीति ॥ १९ ॥

**ता ॥** ननु *ऊर्ध्वं गच्छन्ति सत्त्वस्थाः इति यदि सत्त्वस्थस्यापवर्गोऽभिधीयते ; तर्ह्यनन्तरं गुणत्रयातीतस्यापवर्गवचनं व्याहन्येतेति शङ्कायामनन्तरग्रन्थमवतारयति—**आहारविशेषै**रिति । आहारविशेषादेस्सत्त्वविवृद्धिहेतुत्वं पूर्वापरसिद्धम् । सांसारिकत्रिगुणातिक्रमः, प्रवृद्धेन सत्त्वेनोर्ध्वगमनं च सुसंगतमिति भावः । *यज्ञशिष्टाशिनस्सन्तः (३. १३), *भोक्तारं यज्ञतपसां (५. २९), *रजस्तमश्चाभिभूय सत्त्वं भवति भारत (१४. १०) इति पूर्वोक्तानुसारेण प्रकृतसंगतमर्थमाह—**एवं सात्त्विकाहारे**ति । **सर्वात्मने**ति; अपुनरुद्भवमित्यर्थः । *नान्यं गुणेभ्यः कर्तारमिति गुणव्यतिरिक्तस्य कर्तृत्वनिषेधस्तत्र कर्तुरात्मनो गुणेभ्योऽन्यत्वनिषेधधीर्माभूदितीत्याह—**गुणा एवे**ति । पुरुषधर्मभूतप्रयत्नाश्रयत्वलक्षणकर्तृत्वव्युदासायाह—**स्वानुगुणप्रवृत्तिषु कर्तार** इति । क्वचित्कर्तृत्वानुदर्शनस्यानात्मविदामपि संभवात्ततो विशेष उच्यते—**गुणेभ्यश्चे**ति । परत्वं प्रकृताकारापेक्षया नियन्तुमाह—**कर्तृभ्य** इति । *कर्तृभ्यः परमित्युक्त्या कर्तृत्वातिशयधीव्युदासः । **अन्य**मिति । गुणानां परस्परमिवान्यत्वेऽपि कर्तृत्वमविरुद्धमित्यत्र प्रस्तुताकारविरहोऽन्यशब्दाभिप्रेत इत्याह—**अकर्तार**मिति । गुणाश्रयप्रवृत्तीनामनाश्रयभूतं स्वतश्च तन्मूलप्रवृत्त्यनर्हमित्यर्थः । स्वरूपैक्यभ्रमव्युदासायानन्तरग्रन्थ इत्यभिप्रायेण मद्भावशब्दार्थमाह—**मम यो भाव** इति । गुणानां कर्तृत्वज्ञानमनुपयुक्तम्, आत्मनोऽकर्तृत्वं तु *कर्ता शास्त्रार्थवत्त्वात् (ब्र. २. ३. ३३) इत्यादिविरुद्धम् ; तत्राह—**एतदुक्त**मिति । पुण्यपापरूपेषु लौकिकेषु च कर्मसु कर्तृत्वमस्वाभाविकं, न पुनः प्रयत्नाश्रयत्वमित्यभिप्रायेणाह—**आत्मनस्स्वत** इति । एतेन परशब्द-

स्यात्र परमात्मपरत्वं न विवक्षितमित्यपि दर्शितम् । **विविधकर्मस्विति**—सांसारिकसात्त्विकराजसतामसकर्मस्वित्यर्थः । **स्वतस्त्वकर्तेति**—गुणकृतेषु तेष्वेव ; अन्यथा *जक्षत्क्रीडन् (छा. ८. १२. ३) इत्यादिविरोधात् । अत्र *मद्भावमिति तादात्म्यं प्रतीतं स्यात्, तच्च *मम साधर्म्यमागताः (२) इति प्रागुक्तविरुद्धम् । श्रुतिश्च *परमं साम्यमुपैति (मु. ३. १. ३) इति । श्रुत्यन्तरं च *यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥ (क. ४. १५) इति । अत्रोदकद्वयस्य संसर्गेऽपि स्वरूपैक्यासंभवात्तादृक्छब्दस्वारस्याच्च साम्यपरत्वं व्यक्तम् । आह च जनकाय वसिष्ठः—*परेण परधर्मी च भवत्येष समेत्य वै । विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् । विमुक्तधर्मा मुक्तेन समेत्य हि तदा भवेत् । वियोगधर्मिणा चैव वियोगात्मा भवत्यपि । विमोक्षिणा विमोक्षी च समेत्येह तदा भवेत् । शुचिना च शुचिश्चैव भवत्यमितदीप्तिमान् । विमलात्मा भवत्येष समेत्य विमलात्मना । केवलात्मा तथा चैव केवलेन समेत्य वै । स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुयात् (भा. मो. ३१३. २६-३०) इति ॥ १९ ॥

**भा ॥ कर्तृभ्यो गुणेभ्योऽन्यमकर्तारमात्मानं पश्यन् भगवद्भावमधिगच्छतीत्युक्तम् ; स भगवद्भावः कीदृश इत्यत आह—**

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥** २०

**भा ॥ अयं देही देहसमुद्भवान्—देहाकारपरिणतप्रकृतिसमुद्भवानेतान् सत्त्वादीन् त्रीन् गुणानतीत्य तेभ्योऽन्यं ज्ञानैकाकारमात्मानं पश्यन् जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमात्मानमनुभवति ; एष मद्भाव इत्यर्थः ॥ २० ॥**

**ता ॥** तदेवमनेकश्रुतिस्मृत्यादिविरुद्धं मुक्तस्य भगवत्त्वं कथमुच्यत इति शङ्कायामुक्तमर्थं कर्तृभ्य इत्यादिनाऽनूद्यानन्तरश्लोकमवतारयति—**स भगवद्भावः कीदृश** इति । *देहसमुद्भवानित्यत्र देहोत्पत्तिबीजभूतानिति परव्याख्यानमयुक्तम्, *गुणाः प्रकृतिसंभवाः इतिवदत्रापि प्रकृतिपरिणतिरूपदेहाश्रयत्ववचनस्य युक्तत्वादित्यभिप्रायेणाह—**देहाकारपरिणतप्रकृतिसमुद्भवानि**ति । वक्ष्यमाणप्रकारेण गुणात्ययो बद्धदशायामेवेत्याह—**गुणानतीत्य तेभ्योऽन्यमि**त्यादिना । **जन्ममृत्युजरादुःखैः** जन्मादिकृतैर्दुःखैरित्यर्थः ; जन्मादिभिस्तत्साध्यैश्च दुःखैरिति वा । *मद्भावं सोऽधिगच्छति (१९) इत्युक्तमेव *विमुक्तोऽमृतमश्नुते इत्यनेन विवृतमित्याह—**आत्मानमनुभवति, एष मद्भाव इत्यर्थ** इति । **एष** इति—न पुनश्श्रुत्यादिवि[रोध]रुद्ध इत्यर्थः ॥ २० ॥

**भा ॥ अथ गुणातीतस्य स्वरूपसूचनाचारप्रकारं गुणात्ययहेतुं च पृच्छन् अर्जुन उवाच—**

**अर्जुन उवाच—**

**कैर्लिङ्गैस्त्रिगुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥** २१

**भा ॥ सत्त्वादीन् त्रीन् गुणानेतानतीतः कैर्लिङ्गैः—कैर्लक्षणैः उपलक्षितो भवति? किमाचारः—केनाचारेण युक्तोऽसौ? अस्य स्वरूपावगतिलिङ्गभूताचारः कीदृश इत्यर्थः । कथं चैतान्—केनोपायेन सत्त्वादींस्त्रीन् गुणानतिवर्तते? ॥ २१ ॥**

ता ॥ अप्राप्तत्वादन्यत्वस्य विधेयत्वं वदन् तस्य प्रतियोगिसापेक्षत्वात्प्रकृतक्षराक्षरपुरुषयोरेव प्रतियोगित्वमाह—**उत्तमः पुरुषस्तु ताभ्यामिति** । * परमात्मेत्युदाहृत इत्यस्य विधेयपरत्वासंभवेन अन्यत्वहेतुपरत्वमाह—**सर्वासु श्रुतिष्विति** । * तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः (ना), * आत्मा नारायणः परः (ना) इत्यादिष्वित्यर्थः । परमात्मेतिनिर्देशहेतुत्वोपपादकत्वेनोत्तरार्धमवतारयति—**कथमिति** । लोकशब्दस्य भुवनपरत्वे लोकत्रयं—भूरादिलोकत्रयं, स्वर्गमर्त्यपाताललक्षणलोकत्रयं वा स्यात् । तथा च तद्व्यापनभरणयोस्सर्वात्मत्वपर्यवसितपरमात्मत्वोपपादकत्वेन क्षराक्षरात्मकसर्वान्यत्वसाधकत्वं न स्यात् । कृतकमकृतकं कृतकाकृतकमिति लोकत्रयपरत्वेऽपि तत्रत्यपुरुषेषु लक्षणा स्वीकार्या ; ततो वरं योगवृत्त्याश्रयणमित्यभिप्रेत्य व्याचष्टे—**लोक्यत इति लोक** इत्यादिना । कथनचाक्षुषयोर्बद्धमुक्तयोर्लोकनकर्मत्वमित्यत आह—**प्रमाणावगम्यमेतत्त्रयमिति** । * य इति * अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा (य. आ. ३. ११), * भर्ता सन् भ्रियमाणो बिभर्ति (य. आ. ३. १४) इत्यादिकमत्राभिप्रेतम् । **स** इति—परमात्मेति निर्दिष्ट इत्यर्थः । * य इत्यस्य तत्परत्वात्प्रत्येकं विशेषणानामन्यत्वसाधन[ ]सामर्थ्यात्तदर्थस्थितिमात्रविवक्षायामत्रानपेक्षितोक्त्या पदान्तरवैयर्थ्यादित्यभिप्रायेणाह—**इतथेति** । अत्रावेशभरणेश्वरत्वानां कर्मकर्तृभावेन [निर्दिष्टयोः] अन्यत्वोपस्थापकत्वम्, अव्ययत्वस्य तु साक्षात्स्वभावविरोधादित्यभिप्रायेणाह—**अव्ययस्वभावो हीति** । एवमवान्तरवैषम्यं दर्शयिष्यति—* अव्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेन चेति । **तत्संबन्धेन तदनुसारिण** इति—तदधीनजन्मविनाशादिक्लेशभाज इत्यर्थः ; तद्वत् ज्ञानसङ्कोचविकासलक्षणविकारयोगिन इति वा । योग्यता नाम, सहकारिसन्निधौ कुर्वत्स्वभावत्वं, सहकार्यभावप्रयुक्तकार्याभाववत्त्वं वा । सा च मुक्तस्याप्यस्तीति स्वभावविरोधस्तत्राप्यविशिष्ट इत्याह—**अचित्संबन्धयोग्यतया पूर्वसंबन्धिन** इति । अनवच्छिन्ना[त्म]व्ययत्वं मुक्तस्यापि नास्तीति भावः । ईश्वरशब्दोऽत्र नानुपयुक्तसंज्ञामात्ररूप इत्यभिप्रायेणाह—**तथैतस्येति** । अत्रात्मलक्षणान्तर्गतानुप्रवेशधारणनियमनानां कण्ठोक्तौ स्वार्थधारणादिवशादेव शेषित्वमपि सिध्यतीत्यभिप्रायेण संग्रहश्लोके स्वाम्योक्तिः । तथाच तत्र नियन्तृत्वमुपलक्षणीयम् । एवम् * अव्ययत्वव्यापनभरण स्वाम्यैरित्यनन्तराध्यायारम्भभाष्येऽपि द्रष्टव्यम् । यद्वा केवलनियन्तृत्वादिविशिष्टेष्वपीश्वरशब्दस्य प्रयुक्तचरत्वाभावात्स्वाम्योपश्लिष्टनियमनवेषे च निरूढप्रयोगत्वादीश्वरशब्देनैव शेषित्वमप्युपस्थापितम् । अपि चात्र * यः इति व्याप्त्याद्यनुवादे * मयि सर्वमिदं प्रोतम् (७. ७) इत्यादिपुरोवादपरामर्शात्तत्प्रकरणे * भूमिरापः (७. ४) इत्यादिनोक्तं शेषित्वमप्याकृष्यत इति * पतिं विश्वस्यात्मेश्वरम् (ना) इति पतिशब्दस्थाने चेश्वरशब्दः प्रयुक्त इति भावः ॥ १७ ॥

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥** १८

**भा ॥ यस्मादेवमुक्तैस्स्वभावैः क्षरं पुरुषमतीतोऽहम्, अक्षरान्मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतमः, अतोऽहं लोके वेदे च पुरुषोत्तम इति प्रथितोऽस्मि। वेदार्थावलोकनाल्लोक इति स्मृतिरिहोच्यते। श्रुतौ स्मृतौ चेत्यर्थः। श्रुतौ तावत् * परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुषः (छा· ८. १२. २) इत्यादौ। स्मृतावपि * अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः (वि· ५. १७. ३३) इत्यादौ ॥१८॥**

ता ॥ एवं प्रतिज्ञातमन्यत्वं श्रुतिस्मृतिप्रसिद्धधात्वर्थया समाख्यया स्थापितम् । तदेव पुनस्तथाभूतसमाख्यान्तरेण * उत्तमः पुरुष इत्यनुवादसारितेन स्थिरीक्रियते * यस्मादिति श्लोकेन । एतेन पूर्वश्लोके पराक्त्वनिर्देशोऽपि

स्वविषय एवेति दर्शितम् । अत्र यतोऽसावग्निमान्, अत एव धूमवानित्यादिवत्साध्यमेव साधकं प्रति नियामकतया हेतुर्व्यपदिश्यते । तच्च साध्यं सहेतुकमिह समाख्यानिदानमित्यभिप्रायेणाह—**यस्मादेवमुक्तैस्स्वभावैरि**ति । *क्षरमतीत इति तत्स्वभावगन्धानाघ्रातत्वमुच्यते । अत्रापि क्षरशब्दः प्रस्तुतैकार्थ्यान्न प्रधानविषय इत्याह—**क्षरं पुरुष**मिति । अक्षरशब्दस्य प्रधानेश्वरादिष्वपि प्रयोगात्तद्व्यवच्छेदाय *कूटस्थोऽक्षरः इत्युक्तैकार्थ्यमाह—**अक्षरान्मुक्तादि**ति । एतेन पुरुषोत्तमशब्दनिरुक्तिरप्यत्र दर्शिता । **उक्तैर्हेतुभि**रिति—*षष्ठी हेतुप्रयोगे (अष्टा. २. ३. २६) इति नियमस्य प्रयोजनरूपहेतुविषयतयैव प्रयोगप्राचुर्यान्न तृतीयानुपपत्तिः । उत्तमशब्दे प्रकृतिप्रत्ययभेदेन विवक्षितमाह—**उत्कृष्टतम** इति । मुक्तो हि बद्धादुत्कृष्टः; ततोऽप्यसौ सर्वान्तरात्मत्वादिभिरुक्तैर्हेतुभिरुत्कृष्टतमः । प्रथितशब्देन केवलप्रथाविधेः प्रकृतानन्वयात्सविशेषणोऽसौ विशेषणोपसंक्रामीत्यभिप्रायेण **पुरुषोत्तम इती**ति इतिकरणम् । नात्र लोकशब्दो भुवनविषयो जनविषयो वा, तत्र प्रकृतनिरुक्तिविवक्षाप्रमाणत्वासंभवात् । नच काव्यादिप्रयोगपरता, तत्राप्यतितरां स्वारस्याभावात् । अतो वेदसहपाठात्तदनुवर्तिस्मृतिपरोऽयम्, तत्र च लोक्यतेऽनेन वेदार्थ इति व्युत्पत्त्या वृत्तिरित्यभिप्रायेणाह—**वेदार्थावलोकनादि**ति । **श्रुतौ स्मृतौ चेत्यर्थ** इति । अयमभिप्रायः—श्रूयते नित्यमिति हि श्रुतिः । अतो वक्तृदोषप्रसङ्गाभावादशिथिलसंप्रदायत्वाच्च तदुक्तं तावत्प्रामाणिकमेव । स्मृतिरप्यल्पश्रुतैर्दुरवबोधसकलशाखानुगतमर्थं सङ्कल्य्योपबृंहयन्ती परमाप्ततममन्वादिप्रणीता प्रमाणमेवेति तया वेदार्थावलोकनं युक्तमिति । *परं ज्योतिरुपसंपद्येति मुक्तोपसंपत्तव्यतया निर्दिष्टो निरतिशयदीप्तियुक्तः पुरुष एवात्र *स उत्तमः पुरुषः इति परामृश्य विशेष्यते; तदुपबृंहणाय हि *उत्तमः पुरुषस्त्वन्यः इति तत्तुल्यव्यस्तप्रयोगोऽयं प्रदर्शित इत्यभिप्रायेण *परं ज्योतिरित्यादिवाक्योदाहरणम् । अत्र *प्रथितः पुरुषोत्तमः इत्यस्योक्तसमस्तप्रयोगप्रदर्शनार्थतया *अंशावतारं पुरुषोत्तमस्येति स्मृत्युदाहृतिः । अत्र *विष्णोरिति संज्ञानिर्देशेऽपि *पुरुषोत्तमस्येति विशेषणैकार्थ्यस्य विवक्षितत्वाद्योगरूढोऽयं शब्द इति सिद्धम् । एतेन *रूढ्या तु कामं पुरुषोत्तमोऽस्तु इति प्रलपन् वेदबाह्यः प्रत्युक्तः । ननु कथं यौगिकार्थविवक्षायामस्य साधुता, न तावदसौ समानाधिकरणसमासः, *सन् महत्परमोत्तमोत्कृष्टाः पूज्यमानैः (अष्टा. २. १. ६१) इति प्रथमानिर्दिष्टस्योत्तमशब्दस्योपसर्जनतया पूर्वनिपातापातात् । नापि व्यधिकरणसमासः, उत्तमः पुरुष इवेत्युपमितविवक्षानुपपत्तेः; तदर्थतयोदाहृतायां श्रुतावपि वैयधिकरण्यादर्शनात् । नचासौ षष्ठीसमासः, निर्धारणे तन्निषेधात् । नचान्यस्यापीह संभव इति । मैवं; षष्ठीसमासस्यैवात्र युक्तत्वात्; नहि वयमत्र निर्धारणार्थतां ब्रूमः । पुत्रादिवत्संबन्धिशब्दो ह्यसौ । अधमादिसापेक्षं ह्युत्तमत्वम् । इदं च सूचितम्—**उक्तैर्हेतुभिरुत्कृष्टतम** इति । जातिगुणादिसंबन्धिशब्देषु हि निर्धारणे षष्ठी । संबन्धसामान्यविहिता च षष्ठी तत्तत्संबन्धिशब्दसमभिव्याहारानुरोधेन तत्संबन्धविशेषं प्रतिपादयति । एवमेव हि नागोत्तमादिशब्दानां साधुत्वं वैयाकरणैर्व्याख्यातम् । अत्र च *उत्तमःपुरुषस्त्वन्यः, *क्षरमतीतोऽहमक्षरादपि चोत्तमः इति चार्थकथनमात्रं, नतु तत्समासांशद्वयविवक्षा । एवमेव *स उत्तमः पुरुष इति श्रुत्युदाहरणमपि । केचित्तु पञ्चमीसमासं व्याकुर्वते । नचोत्तमशब्दयोगे पञ्चमी न शिष्टेति वाच्यं; यथा *यस्मादधिकम् (अष्टा. २. ३. ९) इत्यादिसौत्रप्रयोगादशिष्टस्यापि परिग्रहः; एवम् *अक्षरादपि चोत्तमः इत्यादिप्रयोगबलादेव तत्परिग्रहोपपत्तेः । इदमपि सूचितम्—**मुक्तादप्युक्तैर्हेतुभिरुत्कृष्टतम** इति । योगविभागाच्च पञ्चम्या उत्तमादिशब्दैस्समासोऽप्यनुशिष्ट एव । एवं सप्तमीसमासत्वेऽपि न दोषः, शौण्डादिष्वपठितत्वेऽपि तत्रापि योगविभागाभ्यनुज्ञानादेव तदुपपत्तेः । एतत्सर्वं विजानद्भिर्महाकविभिरपि विवक्षितयोग एवायं प्रयुज्यते प्रतिपाद्यते च । तथा**ऽऽदि-**

**काव्ये** *नच तेन विना निद्रां लभते पुरुषोत्तमः (रा. बा. १८.२९) इति। तदेतत्सर्वमभिसन्धाय **भगवद्यामुनमुनिभि**रुक्तं स्तोत्रे—* कः पुण्डरीकनयनः पुरुषोत्तमः कः (१२) इति ॥ १८ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥** १९

**भा ॥ य एवम्—उक्तेन प्रकारेण पुरुषोत्तमं मामसंमूढो जानाति—क्षराक्षरपुरुषाभ्यामव्ययस्वभावतया व्यापनभरणैश्वर्यादियोगेन च विसजातीयं जानाति, स सर्ववित्—मत्प्राप्त्युपायतया यद्वेदितव्यं तत्सर्वं वेद। भजति मां सर्वभावेन—ये च मत्प्राप्त्युपायतया मद्भजनप्रकारा निर्दिष्टास्तैश्च सर्वैर्भजनप्रकारैर्मां भजते, सर्वैर्मद्विषयैर्वेदनैर्मम या प्रीतिर्या च मम सर्वैर्मद्विषयैर्भजनैः; उभयविधा सा प्रीतिरनेन वेदनेन मम जायते ॥ १९ ॥**

**ता ॥** एवं पुरुषोत्तमशब्दनिर्वचनं तथाऽनुचिन्तनार्थमिति व्यञ्जयन् पुरुषोत्तमत्ववेदनं स्तौति—* यो मामेवमिति श्लोकेन। पुरुषोत्तमत्वेन जानातीति विवक्षायामसंमूढपदनैरर्थक्यम्। अत एव * पुरुषोत्तमं मामित्यर्थस्थितिं निर्दिश्य तत्र यथावज्ज्ञानम् * असंमूढो जानातीत्यनेनोच्यते। तदाह—**य एवमुक्तेने**ति। एकीकृत्य मोहरहितत्वमसंमूढत्वम्। तच्च पूर्वोक्तस्वप्रकारान्यत्वानुसन्धानादित्याह—**क्षराक्षरे**ति। एवमसंमूढशब्देन पराभिमतजीवेश्वरैक्यवेदनस्य भ्रान्तिरूपत्वं प्रकृतिपुरुषेश्वरभेदस्य पारमार्थिकत्वं च व्यञ्जितम्। * स सर्वविदित्यत्र पुरुषोत्तमशब्दार्थवेदनेनाष्टादशविद्यास्थानादिवेदनासिद्धेरत्र चानपेक्षितकेशकीटादिसङ्ख्यावेदनेन स्तुत्यसंभवात्, तस्य * भजति मां सर्वभावेनेत्यत्र मन्दप्रयोजनत्वाच्च भजनानुष्ठानोपयोगिविषयतया नियच्छति—**मत्प्राप्त्युपायतये**ति। भजनक्रियावशीकृतस्सर्वभावशब्दो भजनावान्तरभेदतया प्राक्प्रपञ्चितकीर्तनयतनादिप्रकारपरः। * वासुदेवस्सर्वम् (गी. ७. १९) इत्याद्यर्थविवक्षातोऽप्ययमेवार्थः स्तुत्युपयोगातिशयादिहोपादेय इत्यभिप्रायेणाह—**ये चे**ति। भावशब्दोऽत्र क्रियावाची पदार्थमात्रवाची वा सत्प्रकाराख्यविशेषे विश्रान्तः। नन्वत्र तत्त्वहितवेदनं हितानुष्ठानं च शास्त्रफलं विवक्षितम्। तत्र न तावत्पुरुषोत्तमत्ववेदनमेव परव्यूहविभवगुणचेष्टितादिसर्ववेदनं सर्वविधभजनकरणं च, स्वरूपान्यथात्वात्। नचारोप्य स्तुतिः, अनूर्जितत्वान्निष्फलत्वाच्च। नचात्र हेतुफलभावविवक्षा, * एतद्बुध्वा बुद्धिमान् स्यादित्यनन्तरेण पौनरुक्त्यात्; अतो निरर्थकमिदमित्यत्राह—**सर्वैर्मद्विषयैरि**ति ॥ १९ ॥

**भा ॥ इत्येतत्पुरुषोत्तमत्ववेदनं पूजयति—**

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ।**
**एतद्बुद्ध्वा बुद्धिमांत्स्यात्कृतकृत्यश्च भारत ॥** २०

इति श्रीमद्भगवद्गीतासूपनिषत्सु **पुराणपुरुषोत्तमयोगो** नाम पञ्चदशोऽध्यायः ॥ १५ ॥

**भा ॥ इत्थं मम पुरुषोत्तमत्वप्रतिपादनं सर्वेषां गुह्यानां गुह्यतममिदं शास्त्रं त्वमनघतया योग्यतम इति कृत्वा मया तवोक्तम्। एतद्बुद्ध्वा बुद्धिमांत्स्यात्कृतकृत्यश्च—मां प्रेप्सुना उपादेया या बुद्धिस्सा सर्वा उपात्ता स्यात्; यच्च तेन कर्तव्यम्, तत्सर्वं कृतं स्यादित्यर्थः। अनेन श्लोकेनानन्तरोक्तं पुरुषोत्तमविषयं ज्ञानं शास्त्रजन्यमेवैतत्सर्वं करोति, नतु साक्षात्काररूपमित्युच्यते ॥ २० ॥**

**इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये पञ्चदशोऽध्यायः ॥ १५ ॥**

**ता** ॥ यदि पुरुषोत्तमत्ववेदनमात्रेण भगवतस्सर्वविधा प्रीतिर्जायते, तर्हि भजनाद्यनुष्ठानविधिवैयर्थ्यम्; तत्राह—**इत्येतदिति** । सर्वासां प्रतीतीनामेतदेव हि मूलकारणम् । फलसाम्याद्वा सर्वस्य विदिततत्त्वकृतकृत्यत्ववचनमिति भावः । इत्येतदित्यादिकमुत्तरश्लोकावतारिका वा । रहस्यतया गोपनीयतमत्वं पारमार्थिकत्वं फलप्रकर्षं च व्यञ्जयन्निगमयति—* इति गुह्यतमिति श्लोकेन । एतदेव गीताशास्त्रनिगमननिति वदतां प्रतिक्षेपायाह—**पुरुषोत्तमत्वप्रतिपादन**मिति । पञ्चदशोऽध्याय इत्यर्थः । * अनघेति संवुद्धिरधिकारिसूचनार्थेत्याह—**अनघतया योग्यतम इति कृत्वेति** । एवं भारतसंबुद्धिरपि जन्मतोऽधिकारित्वसूचनार्था । **इद**मिति—अस्य वक्ता श्रोता च दुर्लभः इत्यभिप्रायः । **इदं**—शास्त्रान्तरेभ्य उत्कृष्टतममिति वा । उक्तं चाभियुक्तैः—*यस्मिन् प्रसादसुमुखे कवयोऽपि ते ते शास्त्राण्यशासुरिह तन्महिमाश्रयाणि । कृष्णेन तेन यदिह स्वयमेव गीतं शास्त्रस्य तस्य सदृशं किमिहास्ति शास्त्रम् ॥ इति । **मया**—वक्तव्यतत्त्ववेदिना, त्वदधिकारवेदिना, तव सख्या चेत्यर्थः । प्रागुक्तशास्त्रानुवादताभ्रमव्युदासायाह—**तवोक्त**मिति । * सा विद्या या विमुक्तये....विद्याऽन्या शिल्पनैपुणम् (वि. १. १९. ४१) * तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् (वि. ६. ५. ८७) *एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा (गी. १३.१२) इत्यादिभिरन्यासां बुद्धीनाम् अबुद्धिप्रायतोक्तेरिह बुद्धिशब्दविवक्षितमाह—**मां प्रेप्सुनोपादेयेति** । कृत्यशब्दोऽप्यत्र मुमुक्ष्वपेक्षितविषयः । तस्यैव * तत्कर्म यन्न बन्धाय (वि. १. १९.४१) इत्यादिषु ग्रहणात्, अन्येषां च * आयासायापरं कर्मेति निन्दनादित्यभिप्रायेणाह—**यच्च तेन कर्तव्यमिति** । प्रस्तुतोऽर्थस्तज्ज्ञानं वाऽत्र प्रशंसनीयम्, किमत्र शास्त्रग्रहणेन? तथाचात्र पूर्वश्लोकपौनरुक्त्यमित्यत्राह—**अनेन श्लोकेनेति** । अयमभिप्रायः—सार्थकशास्त्रज्ञानं शक्त्या *एतद्बुद्ध्वेत्यनूद्यते; अतोऽर्थज्ञान एव तात्पर्यम्; तत्र शास्त्रशब्दग्रहणं शास्त्रमात्रजन्यस्यापि ज्ञानस्य फलाविनाभावापेक्षयेति । * स सर्वविदित्यादेः (१९) * बुद्धिमान्स्यादित्यादेश्च अर्थैक्यमभिसन्धाय[पि] पुनरुक्तिपरिहारश्चात्र कृतः । भारत एतद्बुद्ध्वा त्वमपि कृतकृत्य इति च भावः ॥ २० ॥

इति श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

---

## ॥ अथ षोडशोऽध्यायः ॥ १६ ॥

**भा ॥ अतीतेनाध्यायत्रयेण प्रकृतिपुरुषयोर्विविक्तयोस्संसृष्टयोश्च याथात्म्यं तत्संसर्गवियोगयोश्च गुणसङ्गतद्विपर्ययहेतुकत्वम्, सर्वप्रकारेणावस्थितयोः प्रकृतिपुरुषयोर्भगवद्विभूतित्वम्, विभूतिमतो भगवतो विभूतिभूतादचिद्वस्तुनश्चिद्वस्तुनश्च बद्धमुक्तोभयरूपादव्ययत्वव्यापनभरणस्वाम्यैरर्थान्तरतया पुरुषोत्तमत्वेन याथात्म्यं च वर्णितम् । अनन्तरमुक्तस्य कृत्स्नस्यार्थस्य स्थेम्ने शास्त्रवश्यतां वक्तुं शास्त्रवश्यतद्विपरीतयोर्दैवासुरसर्गयोर्विभागं श्रीभगवानुवाच—**

**श्रीभगवानुवाच—**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥** १

**अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम् । दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥** २

**तेजः क्षमा धृतिश्शौचमद्रोहो नातिमानिता । भवन्ति संपदं दैवीमभिजातस्य भारत ॥** ३

**भा ॥ इष्टानिष्टवियोगसंयोगरूपस्य दुःखस्य हेतुदर्शनजं दुःखं भयम्, तन्निवृत्तिरभयम् । सत्त्वसंशुद्धिः—सत्त्वस्यान्तःकरणस्य रजस्तमोभ्यामस्पृष्टत्वम् । ज्ञानयोगव्यवस्थितिः—प्रकृतिवियुक्तात्मस्वरूपविवेक-**

निष्ठा । दानम्—न्यायार्जितधनस्य पात्रे प्रतिपादनम् । दमः—मनसो विषयोन्मुख्यनिवृत्तिसंशीलनम् । यज्ञः—फलाभिसन्धिरहितभगवदाराधनरूपमहायज्ञाद्यनुष्ठानम् । स्वाध्यायः—सविभूतेर्भगवतस्तदाराधनप्रकारस्य च प्रतिपादकः कृत्स्नो वेद इत्यनुसन्धाय वेदाभ्यासनिष्ठा । तपः—कृच्छ्रचान्द्रायणद्वादश्युपवासादेर्भगवत्प्रीणनकर्मयोग्यतापादनस्य करणम् । आर्जवम्—मनोवाक्कायवृत्तीनामेकनिष्ठता परेषु । अहिंसा—परपीडावर्जनम् । सत्यम्—यथादृष्टार्थगोचरभूतहितवाक्यम् । अक्रोधः—परपीडाफलचित्तविकाररहितत्वम् । त्यागः—आत्महितप्रत्यनीकपरिग्रहविमोचनम् । शान्तिः—इन्द्रियाणां विषयप्रावण्यनिरोधसंशीलनम् । अपैशुनम्—परानर्थकरवाक्यानिवेदनाकरणम् । दया भूतेषु—सर्वभूतेषु दुःखासहिष्णुत्वम् । अलोलुप्त्वम्—अलोलुपत्वम् । अलोलुत्वमिति वा पाठः; विषयेषु निस्स्पृहत्वमित्यर्थः । मार्दवम्—अकाठिन्यम्, साधुजनसंश्लेषार्हतेत्यर्थः । ह्रीः—अकार्यकरणे व्रीडा । अचापलम्—स्पृहणीयविषयसन्निधावचञ्चलत्वम् । तेजः—दुर्जनैरनभिभवनीयत्वम् । क्षमा—परनिमित्तपीडानुभवेऽपि परेषु तं प्रति चित्तविकाररहितता । धृतिः—महत्यामप्यापदि कृत्यकर्तव्यतावधारणम् । शौचम्—बाह्यान्तरकरणानां कृत्ययोग्यता शास्त्रीया । अद्रोहः—परेष्वनुपरोधः; परेषु स्वच्छन्दवृत्तिनिरोधरहितत्वमित्यर्थः । नातिमानिता—अस्थाने गर्वोऽतिमानित्वम्, तद्रहितता । एते गुणाः दैवीं संपदमभिजातस्य भवन्ति—देवसंबन्धिनी संपत् दैवी, देवा भगवदाज्ञानुवृत्तिशीलाः, तेषां संपत्, सा च भगवदाज्ञानुवृत्तिरेव, तामभिजातस्य—तामभिमुखीकृत्य जातस्य, तां निर्वर्तयितुं जातस्य भवन्तीत्यर्थः ॥१–३॥

ता ॥ तृतीयषट्कस्य त्रिकभेदादिप्रकारः प्रागेवास्माभिः प्रपञ्चितः । तत्र त्रिकभेदं प्रदर्श्य त्रिभिस्सङ्गततया षोडशमवतारयितुं तत्त्वत्रयविशोधनपरस्य त्रयोदशादित्रिकस्यार्थं क्रमादनुवदति—**अतीतेनाध्यायत्रयेणे**ति । गुणसङ्गतद्विपर्ययहेतुकत्वमिति पाठः । कप्रत्ययप्रयोगाभावेऽप्यत्र बहुव्रीहित्वमेवेति । *इति गुह्यतमं शास्त्रमिति पूर्वाध्यायान्ते शास्त्रमुपक्षिप्तम् । अनघभारतशब्दाभ्यां च तदधिकारी सूचितः । स एव हि *मा शुचस्संपदं दैवीमभिजातोऽसि पाण्डव (५) इति वक्ष्यते । तत्रोक्तार्थव्यवसायस्य शास्त्राधीनत्वात्पुरुषस्य शास्त्रवश्यत्वं तावद्वक्तव्यम् । तच्च *तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ इत्यध्यायान्ते वक्ष्यते । तदर्थमेव च पूर्वाध्यायान्तसूचिताधिकारिविशेषविवेचनायात्रादौ दैवासुरविभागोक्तिः । तदभिप्रायेण संगृहीतं *दैवासुरविभागोक्तिपूर्विका शास्त्रवश्यता । तत्त्वानुष्ठानविज्ञानस्थेम्ने षोडश उच्यते ॥ (सं. २०) इति । तदेतत्सर्वमभिप्रेत्याह—**अनन्तर**मिति । **उक्तस्य कृत्स्नस्यार्थस्ये**ति वक्ष्यमाणस्यानुष्ठानविवेकस्याप्युपलक्षणम् । उक्तैकदेशविशोधनरूपत्वाद्वा त[द्वि]दविवक्षा । संग्रहश्लोकोक्तानुष्ठानमपि **कृत्स्नस्ये**ति विशेषणेन अन्तर्भावितम् । हेयोपादेयस्वभावकथनस्य हानोपादानार्थतया फलितमाह—**शास्त्रवश्यतां वक्तु**मिति । शास्त्रवश्यत्वकथने दैवासुरविभागोक्तिः कुत्रोपकुरुते; तत्राह—**शास्त्रवश्यतद्विपरीतयो**रिति । भगवदाज्ञा हि शास्त्रम्, तदनुवर्तिनो देवास्तेनानुगृह्यन्ते; अतस्तथा वर्तितव्यम् । तदाज्ञातिक्रामिणोऽसुरास्तेन निगृह्यन्ते; अतस्तथा न वर्तितव्यमिति भावः । नैसर्गिकविरोधद्योतनायात्र वक्ष्यमाणसर्गशब्दोपादानम् ।

विभागोऽत्र गुणक्रियादिभिर्वक्ष्यमाणैः । *यया स्वप्नं भयं शोकम् (गी. १८. ३५) इत्यादिभिस्तमश्शीलं हि भयम्; तत्सात्त्विकस्य दैवसर्गस्य न भवतीत्यभिप्रायेण भयनिरूपणार्थं तत्प्रतियोगिस्वरूपं शिक्षयति—**इष्टानिष्टे**ति । वियोगसंयोगशब्दाविष्टानिष्टाभ्यां यथाक्रममन्वेतव्यौ । इदं च स्वरूपकथनम्; नतु भयलक्षणानुप्रविष्टम्; आगामिदुःख-

हेतुदर्शनजं दुःखमित्येव हि तत्। सत्त्वसंशुद्धिः—सत्त्वाधिष्ठानमन्तःकरणमिह सत्त्वम्; तस्य समीची[न]शुद्धिस्संशुद्धिः, सर्वदोषनिवृत्तिः। तत्र कन्दभूतरजस्तमोनिवृत्त्या कामरागासूयावञ्चनादिसर्वदोषनिवृत्तिमभिप्रेत्याह—**रजस्तमोभ्यामस्पृष्टत्व**मिति। ज्ञानयोगशब्दोऽत्र न कर्मयोगादीनां व्यवच्छेदार्थः, तेषामपि सात्त्विकोपादेयत्वात्; अतः कर्मज्ञानभक्तीनां साधारणं शास्त्रीयं शुद्धात्मस्वरूपविवेचनमिह विवक्षितमित्याह—**प्रकृतिवियुक्ते**ति। ज्ञानमेवात्रोपायत्वाद्योगः। यद्वा शास्त्रजन्यज्ञाननिष्पाद्यं चिन्तनं ज्ञानयोगः। **न्यायार्जिते**त्यादिकं दानस्य शास्त्रीयाकारप्रदर्शनम्, अनेवंकरणस्य राजसतामसत्वेन वक्ष्यमाणत्वात्। एतच्च यथाविभवमनुसन्धेयम्। दमनं दमः, तच्चान्तःकरणकर्मकम् अमार्गान्निवर्तनं प्रकरणान्तरादिसिद्धमाह—**मनस** इति। बाह्येन्द्रियनियमनं हि शान्तिशब्देन वक्ष्यति। एतेन केषां चिदनयोश्शब्दयोर्व्युत्क्रमेणार्थव्याख्यानं निरस्तम्। *यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् (१७) इत्यासुरयज्ञानां वक्ष्यमाणत्वादत्र मोक्षप्रकरणेऽभिमतं सात्त्विकं यज्ञविशेषमाह—**फलाभिसन्धिरहिते**ति। समस्तनित्यनैमित्तिकोपलक्षणतयाऽत्र यज्ञोपादानमित्यादिशब्दः। अपकृष्टदेवताविषयस्य अल्पफलकाम्यकर्मविधायकस्य च वेदभागस्य *यावानर्थ उदपानन्यायात् मुमुक्षुणाऽनभ्यसनीयत्वमाशङ्क्य तत्रापि त्रैवर्गिकवेदाभ्यासाद्व्यावृत्तिं प्रकरणलब्धामाह—**सविभूते**रिति। *सर्वे वेदा यत्पदमामनन्ति (क. २. १५), *सर्वे वेदा यत्रैकं भवन्ति (य. आ. ३. ११. १) इत्यादिक्रमेणानुसन्धाय पठत उपनिषदभ्यासविधिप्रयुक्तस्य सर्वं प्रणवाष्टाक्षरषडक्षरद्विषट्कनिषदुपनिषदभ्यासकल्पमित्यभिप्रायः। एतेन *अन्या वाचो विमुञ्चथ (मु. २. २. ५) इत्यादिकमप्यन्यपरं निवृत्तम्, *ओमित्यात्मानं ध्यायथेति ध्यानदशायां प्रणवस्यैवोपादेयत्वे तात्पर्याच्च। यद्यपि स्वेनाधीयत इति स्वाध्यायः स्वशाखा; तथाऽपि *नचैकं प्रति शिष्यते इति न्यायात्सर्वशाखानुगतस्यार्थस्यानुसन्धेयत्वात्, जपविधेश्च सर्वत्राविशेषात्—**वेदाभ्यासनिष्ठे**ति सामान्येनोक्तम्। शास्त्रीयो भोगसङ्कोचस्तप इति लक्षिते तद्विशेषानुदाहरति—**कृच्छ्रे**ति। *एकभुक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन न निर्द्वादशिको भवेत्॥ (अ. स्मृ. १. १२४) इत्यादिविहितद्वादशीसमाराधनार्थैकादश्युपवासोऽत्र द्वादश्युपवास इत्युक्तः। यद्वा तिथिव्रतेषु तिथिद्वयव्रते च द्वादश्युपवासोऽप्यस्त्येव। आदिशब्देन करणत्रयनिष्पाद्यानां वक्ष्यमाणानां तपसां ग्रहणम्। राजसतामसग्राह्यफलार्थतपोव्यवच्छेदार्थमाह—**भगवत्प्रीणनकर्मयोग्यतापादनस्ये**ति। तपसा शुद्धस्य ह्यर्चनादिष्वधिकारः। अत्रान्येषामपि करणत्रयस्य स्वस्मिन्नैकरूप्यात्तद्व्यावृत्त्यर्थमाह—**परेष्वि**ति। कौटिल्यप्रसङ्गस्थले हि तन्निवृत्तिर्वक्तव्येत्यभिप्रायः। **परपीडावर्जन**मिति स्वपीडोपलक्षणम्। स्वपीडाऽपि मूर्खाणां परपीडाभिप्रायेति वा भावः। यथादृष्टार्थवचनेनैव सत्यवादी भवति; तथाऽपि *सत्यं भूतहितं प्रोक्तम् (व्या. स्मृ) इति नियमात् भूतहितोक्तिः। **परपीडाफले**ति प्राग्वद्व्याख्येयम्। स्वभावार्थशास्त्रप्राप्तानां निद्राशनमहायज्ञदण्डकुण्डिकादीनां त्यागायोगाद्विशेषे नियच्छति—**आत्महितप्रत्यनीके**ति। दमशब्देन मनोनियमनस्योक्तत्वात् *शान्तो दान्तः (बृ. ६. ४. २२) इत्यादिष्विव शान्तिरिह बाह्येन्द्रियगतेत्यभिप्रायेणाह—**इन्द्रियाणा**मिति। अक्रोधाहिंसादिष्विव प्रतियोगिलक्षणद्वारेण अपैशुनं लक्षयति—**परानर्थे**ति। *दयेत्येतावता भूतविषयत्वे सिद्धेऽपि पुनरुपादानं बहुवचनं च शत्रुमित्रादिसर्वविषयाभिप्रायेण। यथोक्तं गौतमेन—*दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति (गौ. ध. ७. १०) इति। अन्यत्र च—*सर्वभूतदया पुण्यम् (पा. पा. ७३. ५७) इत्यादि। तदाह—**सर्वभूतेष्वि**ति। *तापत्रयेणाभिहतं यदैतदखिलं जगत्। तदा शोच्येषु भूतेषु [द्वेषं प्राज्ञः करोति कः] करुणां न करोति कः॥ (वि. १. १७. ७०) इति हि करुणाख्यचित्तपरिकर्म **प्रह्लादः** प्राह। दुःखासहिष्णुत्वं तन्निराकरणेच्छेत्यर्थः। लुपिधातौ

यङ्लुगन्ते क्विपि कृते लोलुविति पकारान्तं पदम्; अचि कृते तु लोलुप इति; तद्व्यञ्जयति—**अलोलुप्त्वम् अलोलुपत्व-**मिति। *लुञ् छेदने इति धातौ लोलू इति यङ्लुगन्तम्; तत्र *[त्वे च (अष्टा. ३. ३. ६४) इति] च्छान्दसं ह्रस्व-मभिप्रेत्याह—**अलोलुत्वमिति वा पाठ** इति। अयोग्यस्पृहारूपं लौल्यमिह निषिध्यत इत्यभिप्रायेणाह—**विषयेष्विति**। मुख्यस्य मार्दवस्यात्रानन्वयात् [स्मितपूर्वक]पूर्वभाषित्वमुखसौम्यत्वादिव्यञ्जचमौपचारिकं दर्शयितुमाह—**अकाठिन्य**मिति। कठिनं हि द्रव्यमन्येषामनुप्रवेशानर्हम्; तद्वदिह स्तब्धप्रकृतिरिति तद्व्यतिरेकविवक्षया फलतो मार्दवं व्यनक्ति—**साधु-जने**ति। अवमतत्वादीनां योगोपकारकत्वात्तन्मूला व्रीडा सत्त्वनिष्ठानामयुक्ता; अत उपयुक्तं ह्रीविशेषमाह—**अकार्य-करणे व्रीडे**ति। प्रख्याताभिजनविद्यावृत्ता हि महान्तः परेष्वप्यकार्यकारिष्वपत्रपन्ते; स्वयं तु किमुतेति भावः। अलोलुपत्वाचापलत्वयोरपौनरुक्त्यायाह—**स्पृहणीयविषयसन्निधावि**ति। एतेन क्रीडापरिहासमृगयाक्षादिष्वप्रसङ्गोऽपि दर्शितः। भूतेतरविषयस्तेजश्शब्दः पराभिभवनसामर्थ्ये अन्यानपेक्षतायां वा प्रयुज्यते; अतोऽत्राभिभावकत्वाविनाभूत-मनभिभवनीयत्वं विवक्षितम्; तच्च दुर्जनावकाशप्रदायिकार्पण्याभावद्वारेत्यभिप्रायेणाह—**दुर्जनै**रिति। अक्रोधात् क्षमायाः विशेषं दर्शयति—**परनिमित्तपीडानुभवेऽपी**ति। निरपराधेषु निर्विकारता ह्यौदासीन्यमात्रम्; न तु क्षमा; पठ्यते च निरपराधेष्वपि क्रोधः—*ब्राह्मणा गणिका वैद्यास्सारमेयाश्च कुक्कुटाः। दृष्टमात्रेण कुप्यन्ति न जाने तत्र कारणम्॥ इतीत्यभिप्रायः। **परेषु तं प्रती**ति—परेषां पीडानुभवं प्रतीत्यर्थः। भयचापलनिवृत्तेः पृथगुक्तत्वादुपस्थितायामपि महत्या-मापदि शास्त्रीयानुष्ठानसंकल्पस्य अप्रच्युतावलम्बनमिह सात्त्विकी धृतिरित्यभिप्रायेणाह—**महत्या**मिति। *महत्यापदि संप्राप्ते स्मर्तव्यो भगवान् हरिः (भा. स. ९०. ४२) इति सुकरमुख्यकर्तव्यापरित्यागादितरदपि कर्तव्यं कृतमेव हि स्यादिति भावः। वक्ष्यति च सात्त्विकीं धृतिं—*धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी॥ (१८. ३३) इति। योगेनाव्यभिचारिण्या—मोक्षसाधनभूतभगव[दाराध]दुपासनाख्यप्रयोजनेन प्रयोजनान्तरनिरपेक्षयेत्यर्थः। शरीरवाङ्मनांसि ह्यशुचिपुरुषस्पर्शाशुचिद्रव्योपयोगादिभिरुपहतसत्त्वानि तेषुतेषु कर्म-स्वयोग्यानि शास्त्रैश्शिष्यन्ते। तदभावोऽत्र शौचमित्याह—**बाह्ये**ति। प्रत्यक्षसिद्धकरणपाटवादिरूपकृत्ययोग्यताव्यव-च्छेदायाह—**शास्त्रीये**ति। अहिंसाया उक्तत्वादद्रोहस्य ततो विशेषप्रदर्शनायाह—**परेष्वनुपरोध** इति। प्रबलेन हि दुर्बलास्स्ववशे स्थापितास्स्वाच्छन्द्यान्निवार्यन्ते; सोऽयमुपरोधः; तदकरणमत्रानुपरोध इत्याह—**स्वच्छन्दे**ति। स्वस्य तु योगोपकारी स्वच्छन्दवृत्तिनिरोधस्तप एव। अतः **परेष्वि**ति विशेषितम्। मानो गर्व इति पर्यायः; स तु सामान्यत इह निषेद्धुमिष्टः; तथाऽपि वंशवीर्यश्रुताद्यनुगुणं मात्रया भवन्नसौ सह्येतापि; अन्यथाभवन्नसुराणां धर्मतया वक्ष्यमाणोऽत्र न प्रसङ्गमर्हतीत्यभिप्रायेण सोपसर्गमाननिषेध इत्याह—**अस्थाने गर्व** इति। *दैवीं संपदमित्युक्ते देवानां विभूतिः प्रती-येत; सा चात्र नान्वेति; अतोऽभिप्रेतमवतारयितुं व्युत्पत्तिं तावदाह—**देवसंबन्धिनी**ति। *सत्त्वं देवगुणं विद्यादि-तरावासुरौ गुणौ (भा. मो. २१८. २२) इति विभागात्, *सत्त्वात्संजायते ज्ञानम् (गी. १४. १७) इति सत्त्वस्या-नुष्ठानपर्यन्तज्ञानहेतुत्वाच्च सत्त्वोत्तरत्वादेव भगवदाज्ञां नातिवर्तन्ते; तदादावेवाह—**भगवदाज्ञानुवृत्तिशीला** इति। **सैव च तेषां संपद**भिमता; अविवेकिनां भोग्यतत्साधनसमृद्धिवत्तेषां भगवदाज्ञानुवृत्तेः प्रीतिविषयत्वात्परमपुरुषार्थहेतुत्वाच्चे-त्याह—**सा चे**ति। उक्तं च *महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥ (९. १३) इति। अन्यत्र च *विष्णुभक्तिपरो देवः (वि. ध. १०९. ७४) इति। जातस्येत्यकर्मकस्य जायतेः पतत्यादि-ष्विवोपसर्गवशात्सकर्मकत्वात्कर्मणि द्वितीयान्वयमाह—**तामभिमुखीकृत्ये**ति। *अभिरभागे (अष्टा. १.४.९१) **इति** कर्म-

प्रवचनीययोगाद्वा द्वितीया। **अभिमुखीकृत्य**—अभिलक्ष्य; यथा दैवी संपद्भवति, तथा कृत्वा जातस्येति यावत्। ईदृशगुणयुक्तानामेवंविधायास्संपदोऽवश्यंभावित्वमत्र अभिमुखीकरणं विवक्षितम्। तथाच स्मर्यते—*जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः॥ (भा. ३४९. ७३) इति। तदिदमाह—**तां निर्वर्तयितुं जातस्ये**ति॥ १–३॥

**दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्॥** ४

भा॥ दम्भः—**धार्मिकत्वख्यापनाय धर्मानुष्ठानम्।** दर्पः—**कृत्याकृत्याविवेककरो विषयानुभवनिमित्तो हर्षः।** अतिमानश्च—**स्वविद्याभिजनाननुगुणोऽभिमानः।** क्रोधः—**परपीडाफलचित्तविकारः।** पारुष्यम्—**साधूनामुद्वेगकरः स्वभावः।** अज्ञानम्—**परावरतत्त्वकृत्याकृत्याविवेकः। एते स्वभावा आसुरीं संपदमभिजातस्य भवन्ति। असुरा भगवदाज्ञातिवृत्तिशीलाः॥ ४॥**

**ता॥** *दम्भो दर्पः इत्यादौ भवन्तीत्यनुषज्यते। **धार्मिकत्वख्यापनाये**ति—न तु भगवदाज्ञानुवृत्तिबुद्ध्येत्यर्थः। **कृत्याकृत्याविवेककर** इति। शास्त्रातिलङ्घनहेतुरिति भावः। अतिमानशब्दोक्तगर्वापरपर्यायादभिमानात्तत्कारणस्य दर्पस्य विशेषमाह—**विषयानुभवनिमित्त** इति। एतेनाचार्यभगवत्सन्दर्शनादिनिमित्तहर्षव्यवच्छेदः। अस्थान इति पूर्वोक्तमत्र **स्वविद्याभिजनाननुगुण** इत्यनेन विवृतम्। विद्याभिजनग्रहणं वीर्यादेरप्युपलक्षणम्। *वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च। वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह॥ (मनु. ४. १७) इत्यस्योल्लङ्घनमिहाभिप्रेतम्। बाह्यकुदृष्टिषु चोरादिषु च वाक्पारुष्यं दण्डपारुष्यं च नातीव दोष इत्यभिप्रायेणाह—**साधूनामुद्वेगकरस्स्वभाव** इति। अत एव साधुबहिष्काराच्छास्त्रबहिष्कारोऽपि स्यादेवेत्यर्थः। प्राप्तकालनिद्रादिरूपमनुपयुक्तविषयं चाज्ञानमासुराणामन्येषामपि तुल्यमदोषश्च। तद्व्यवच्छिनत्ति—**परावरे**ति। ईदृशाज्ञानमूलमागमान्तरेषु परावरतत्त्वव्यत्ययकल्पनं, वेदविरुद्धाचारपरिग्रहश्च। पूर्वोक्तकतिपयगुणव्यतिरेकप्रदर्शनमिहोपलक्षणार्थम्। चकारेण वाऽनुक्तसमस्तसमुच्चयः। आसुरीं संपदमभिव्यङ्क्तुमाह—**भगवदाज्ञातिवृत्तिशीला** इति। यान् प्रत्युच्यते च *पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चैव मानसं समभिप्लुतम्॥ (भा. मो. ३५७.७७) इति; *विपरीतस्तथासुरः (वि. ध. १०९.७४) इति च। प्रजापतिवाक्ये च देहात्माभिमानादिमूलत्रिवर्गमात्रनिष्ठामधिकृत्योच्यते * असुराणां ह्येषोपनिषत् (छा. ८. ८. ५) इति। अत्र संपच्छब्दो भगवदाज्ञातिलङ्घनरुचीनामभिप्रायेणोपालम्भाभिप्रायेण[वा]संपद्यत इत्येतावन्मात्रविवक्षया वा नेतव्यः॥ ४॥

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता।**

भा॥ दैवी—**मदाज्ञानुवृत्तिरूपा संपत्,** विमोक्षाय—**बन्धान्मुक्तये भवति; क्रमेण मत्प्राप्तये भवतीत्यर्थः।** आसुरी—**मदाज्ञातिवृत्तिरूपा संपत्,** निबन्धाय भवति—**अधोगतिप्राप्तये भवतीत्यर्थः॥ ५॥**

**ता॥** देवासुरस्वभावयोश्श्रद्धोद्वेगजननाय *ऊर्ध्वं गच्छन्ति सत्त्वस्थाः (१४. १८) इत्यादिनोक्तमिह संक्षिप्य स्मार्यते—*दैवी संपदित्यर्धेन। विमोक्षस्येष्टप्राप्तिपर्यन्ततां वक्तुमात्यन्तिकानिष्टनिवृत्तिरूपं शब्दस्य मुख्यार्थमाह—**बन्धान्मुक्तय** इति। अव्यवहितहेतुत्वविवक्षायां समाधिपर्यन्तशास्त्रार्थवैयर्थ्यं स्यादित्यभिप्रायेणाह—**क्रमेणे**ति। आत्मसाक्षात्कारादिद्वारेति वा। निबन्धः—नियतो बन्धः। तत्र *अधोगच्छन्तीत्येतत्स्मारयति—**अधोगती**ति॥ ५॥

भा ॥ एतच्छ्रुत्वा स्वप्रकृत्यनिर्धारणादतिभीतायार्जुनायैवमाह—

मा शुचस्संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५

भा ॥ शोकं मा कृथाः; त्वं तु दैवीं संपदमभिजातोऽसि, पाण्डव—धार्मिकाग्रेसरस्य हि पाण्डोस्तनयस्त्वमित्यभिप्रायः ॥ ५ ॥

ता ॥ अत्र *मा शुचः इति वचनं न शास्त्रोपक्रमप्रक्रान्ताशोच्यविषयशोकप्रतिषेधार्थम्, तस्य बहुधा परिहृतत्वात्, *संपदं दैवीमभिजातोऽसीत्यनेन तत्परिहारासंभवाच्च। अतो *निबन्धायासुरी मतेत्युक्ते शास्त्रीयमर्यादानतिलङ्घिन्यपि स्वात्मनि *स्थिरो निगूढाहङ्कारः (दश. २. ४) इति प्रक्रियया धीरोदात्तनायकगुणभूतस्य निगूढस्वाहङ्कारत्वस्य स्वात्मसाक्षिकत्वात्तावन्मात्रेणापि स्वस्मिन्नासुरत्वमतिशङ्कमानस्य श्रुतद्विविधसंपत्कस्य भीभत्सोस्स्वप्रकृत्यनिर्धारणात् पुनरपारसंसारसागरनिमज्जनभीत्या शोचतो दैवप्रकृतित्वज्ञापनेन शोकमपनयतीत्याह—**एतच्छ्रुत्वे**ति। अत्राप्यस्थाने शोकं त्वमेवाहारयसीत्यभिप्रायेणाह—**शोकं मा कृथा** इति। नहि देवप्रकृतीनां धर्मोत्तराणामासुराः पुत्रास्संभवन्तीत्यभिप्रायेण पाण्डवशब्दसंबुद्धिरित्याह—**धार्मिकाग्रेसरस्ये**ति ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६

भा ॥ अस्मिन् कर्मलोके कर्मकराणां भूतानां सर्गौ द्विविधौ—दैवश्चासुरश्चेति; सर्गः—उत्पत्तिः, प्राचीनपुण्यपापरूपकर्मवशाद्भगवदाज्ञानुवृत्तितद्विपरीतकरणायोत्पत्तिकाल एव विभागेन भूतान्युत्पद्यन्त इत्यर्थः। तत्र दैवस्सर्गो विस्तरशः प्रोक्तः—देवानां मदाज्ञानुवृत्तिशीलानामुत्पत्तिर्यदाचारकरणार्था, स आचारः कर्मयोगज्ञानयोगभक्तियोगरूपो विस्तरशः प्रोक्तः; असुराणां सर्गश्च यदाचारार्थः, तमाचारं मे शृणु—मम सकाशाच्छृणु ॥ ६ ॥

ता ॥ स्वरूपादिभिस्समेषु सर्वेष्वात्मसु दैवासुरविभागस्य किं निदानमिति शङ्कां सविशेषानुवादेन परिहरन्नत्यन्तपरिहर्तव्यत्वज्ञापनाय प्रसक्तस्यासुरवृत्तान्तस्य विवक्षितमुपक्षिपति—*द्वौ भूतसर्गाविति श्लोकेन। *अस्मिन् लोके इति न लोकान्तरव्यवच्छेदार्थम्, सर्वत्र देवासुरविभागसिद्धेः; न च निरर्थकाधिकरणमात्रनिर्देशो युक्तः; अतो लोकोपलम्भसिद्धाकारेण विहितनिषिद्धकरणसूचनमिह विवक्षितमित्यभिप्रायेणाह—**कर्मकराणा**मिति। कर्मलोकविवक्षया वा *अस्मिन्निति विशेषणम्। *सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु इति बह्वर्थस्याभिप्रेतं वक्तुमिहार्थवशाद्धातोः प्रयोज्यव्यापारपरत्वं तावदाह—**सर्ग उत्पत्ति**रिति। उत्पत्तिस्वरूपे कथं दैवत्वासुरत्वविभाग इति शङ्कायां *लोकेऽस्मिन्नित्यनेन दैवासुरविभागे सर्गशब्देन चाभिप्रेतं संकलय्याह—**प्राचीने**ति। दैवासुरसंपदर्थत्वादुत्पत्तौ दैवासुरत्वोक्तिरित्यर्थः। सर्गशब्दस्य स्वभावपरत्वं सृज्यमानपरत्वं चाप्रसिद्धत्वादनादृत्य प्रसिद्धसृष्टिपरत्वेन व्याख्या[त]नम्। दैवस्सर्गो विस्तरशः प्रोक्त इत्युक्ते देवानां सर्गादिकं वंशानुचरितकीर्तनवत्प्रतीयते; नच तथा कृतम्। यद्यपि *प्रजहाति यदा कामान् (२. ५५), *दैवमेवापरे यज्ञं (४. २५), *चतुर्विधा भजन्ते मां (७. १६), *महात्मानस्तु मां पार्थ (९. १३) इत्यादिभिर्ज्ञानयोगकर्मयोगभक्तियोगनिष्ठाः पुरुषा निर्दिष्टाः; तथाऽपि तत्कर्तव्यप्रपञ्चन एव तत्रापि तात्पर्यम्; अतोऽत्र दैवसर्गस्य विस्तरेणोक्तिस्तत्कार्यद्वारेत्यभिप्रायेण **यदाचारकरणार्थे**त्यादिकमुक्तम्। *अभयं सत्त्वसंशुद्धिः

इत्यादिकं प्राग्विस्तरेणोक्तस्य संग्रहणमित्यभिप्रायेण कर्मयोगादिग्रहणम् । * आसुरं सर्गमित्यत्रापि वक्ष्यमाणानुसारादेव-मेव विवक्षेत्याह—असुराणामिति । आसुरं सर्गं मे शृण्वित्युक्ते सर्गान्वयेन कर्तरि षष्ठीप्रतीतिस्स्यात्; ततोऽपि शृण्वि-त्यस्यापेक्षितमाततमत्वनूचनमेवोचितमित्यभिप्रायेणाह—मम सकाशादिति । अविदितमुपादेयं यथा नोपादातुं शक्यं, तथा हेयमप्यविदितं न हातुं शक्यम्; अतोऽत्र सावधानो भवेत्यभिप्रायेण * शृण्वित्युक्तम् ॥ ६ ॥

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥** ७

भा ॥ **प्रवृत्तिं च निवृत्तिं च—अभ्युदयसाधनं मोक्षसाधनं च वैदिकं धर्मम् आसुरा न विदुः—न जानन्ति । शौचम्—वैदिककर्मयोग्यत्वं शास्त्रसिद्धम्; तद्बाह्यमान्तरं चासुरेषु न विद्यते; नापि चाचारः—तद्बाह्यान्तरशौचं येन सन्ध्यावन्दनादिना आचारेण जायते, सोऽप्याचारस्तेषु न विद्यते । यथोक्तम्—** * संध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु (द. स्मृ. २. २२) इति । **तथा सत्यं च तेषु न विद्यते—यथाज्ञानं भूतहितरूपभाषणं तेषु न विद्यते ॥ ७ ॥**

**ता ॥** अत्र प्रवृत्तिनिवृत्तिशब्दौ न लौकिकविषयौ; आसुराणामेव लौकिकेष्टानिष्टप्राप्तिपरिहारार्थमपथप्रवृत्ते-स्सत्पथनिवृत्तेश्च सिद्धत्वात्; न च विहितनिषिद्धमात्रविषयौ, रागप्राप्तशास्त्रप्राप्तविषयौ वा, * न शौचं नापि चाचारः इत्यादेः पुनरुक्तिप्रसङ्गात्; अतोऽत्र मुमुक्ष्वपेक्षितप्रवर्तकनिवर्तकधर्मविवेकाभावे तात्पर्यमित्याह—**अभ्युदयसाधनमि-त्यादिना** । तावेतौ धर्मौ स्मर्येते—* प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् । निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥ (भा. मो. २१९. २) इति । * न विदुरित्यत्र * न सत्यं तेषु विद्यते इतिवदसद्भावमात्रं न विवक्षितम्, अपितु शत-कृत्वः प्रतिपादितेऽपि तमःप्राचुर्यादपरिज्ञानमित्यभिप्रायेणाह—**न जानन्तीति** । * कृत्ययोग्यतेति प्रागुक्तमत्र **वैदिक-कर्मयोग्यत्वमित्यनेन** विवृतम् । बाह्यशौचमशुचिसंशीलनादिभिरवश्यकर्तव्याकरणाच्च न विद्यते; आन्तरं त्वात्मगुणा-भावात् । * न शौचं नापि चाचारः इति क्रमात्कार्यकारणयोर्निषेध इत्यभिप्रायेणाह—**तदिति** । ननु संध्यावन्दनादेर्वर्णा-श्रमधर्मस्य * प्राजापत्यं गृहस्थानाम् (वि. १. ६. ३७) इत्यादिभिः फलान्तरं श्रूयते; तत्कथं तस्य शौचहेतुत्वोक्तिरित्य-त्राह—**यथोक्तमिति** । व्यतिरेकोक्त्या हेतुहेतुमद्भावोऽत्र दृढीकृतः । इदं नित्यकर्मान्तरहानादावपि ग्राह्यम् । **यथा-ज्ञानमित्यादि**—विप्रलम्भरसिकत्वात् यथाज्ञानं भाषणाभावः, हिंसास्वभावत्वाद्धितरूपभाषणाभावः ॥ ७ ॥

**भा ॥ किंच—**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहेतुकम् ॥** ८

भा ॥ **असत्यम्—जगदेतत्सत्यशब्दनिर्दिष्टब्रह्मकार्यतया ब्रह्मात्मकमिति नाहुः । अप्रतिष्ठम्—तथा ब्रह्मणि प्रतिष्ठितमिति न वदन्ति । ब्रह्मणाऽनन्तेन धृता हि पृथिवी सर्वान् लोकान् बिभर्ति । यथोक्तं** * **तेनेयं नागवर्येण शिरसा विधृता मही । बिभर्ति मालां लोकानां सदेवासुरमानुषाम् ॥ (वि. २. ५. २७) इति । अनीश्वरम्—सत्यसंकल्पेन परेण ब्रह्मणा सर्वेश्वरेण मयैतन्नियमितमिति च न वदन्ति ।** * **अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते (१०. ८) इति ह्युक्तम् । वदन्ति चैवम्—अपरस्परसंभूतम्, किमन्यत्—योषित्पुरुषयोः**

परस्परसंबन्धेन जातमिदं मनुष्यपश्वादिकमुपलभ्यते, अनेवंभूतं किमन्यदुपलभ्यते? किंचिदपि नोपलभ्यत इत्यर्थः। अतस्सर्वमिदं जगत् कामहेतुकमिति ॥ ८॥

**ता** ॥ एवं न सत्यस्याभाषणमात्रम्, अपितु तद्विपरीतभाषणमस्तीत्यनन्तरमुच्यत इत्याह—**किंचे**ति। असत्यशब्दोऽत्र न मिथ्यात्वपरः, तस्य लोकोपलब्धिस्ववचनविरोधादिभिरेव प्रतिक्षिप्तत्वेन अतिस्थूलत्वात्, परमार्थं स्थिरं चैश्वर्यमभिमत्य निरूढाभिनिवेशानामासुराणां प्रपञ्चमिथ्यात्वकूटयुक्तिभिः प्रतार्यत्वासंभवाच्च। यथा वयमनृतप्रायाः, तथा सर्वं जगदिति प्राहुरिति व्याख्याऽपि मन्दा; जगच्छब्दस्य चेतनमात्रविषयत्वाभावात्, निषेधानां चात्र पूर्वोक्ताकारव्यतिरेकपरत्वात्, *अप्रतिष्ठमनीश्वरम् इतिवच्छास्त्रसिद्धप्रतिषेधपरत्वात्, असुराणां च शास्त्रप्रद्वेषशीलत्वात्। अतोऽत्र शास्त्रसिद्धस्य प्रतिषेधपरोऽयं शब्दः। तच्च सत्यं ब्रह्मैवेति *सत्यं ज्ञानमनन्तं ब्रह्म (आ) इत्यादिषु प्रसिद्धम्। छान्दोग्ये च चेतनाचेतननियन्तृत्वेन ब्रह्मनामतयाऽसौ निरुक्तः—*तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति, तानि हवा एतानि त्रीण्यक्षराणि सत् ति यमिति तद्यत्सत्तदमृतम् अथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति (छा. ८. ३. ४, ५) इति। अतोऽत्र कपिलगुरुकुमारिलजिनसुगतचार्वाकादिमतानुवर्तिन इवाब्रह्मात्मकं जगदाहुरिति विवक्षामाह—**सत्यशब्दे**ति। अप्रतिष्ठशब्देनापि सर्वलोकविरोधादिभिः प्रत्यक्षसिद्धप्रतिष्ठानिषेधासंभवाच्छास्त्रेषु प्रतिष्ठात्वेन उपदिष्टसर्वप्रतिषेधविवक्षामाह—**तथे**ति। तदेवोदाहरणविशेषेण विवृणोति—**ब्रह्मणाऽनन्तेने**ति। एतेन प्रतिष्ठाशब्दस्य धर्माधर्ममात्रपरत्वेन व्याख्या निरस्ता। **सर्वाल्लोकान् बिभर्ती**ति। स्वरूपतः कार्यतश्चेति भावः। आदिकूर्मशेषदिङ्नागप्रभृतिभिर्मही विधृतेति शास्त्रेणोक्ते हि हैतुकैरेवं जल्प्यते—*धर्ता धरित्र्या यदि कश्चिदन्यस्तस्यापरस्तस्य परस्ततोऽन्यः। एवं हि तेषामनवस्थितिस्स्यात्ततो हि भर्त्री भुव एव शक्तिः॥ इति। वायुवेगवशाच्च भूभ्रमणवादं केचिदिच्छन्ति। गुरुत्वान्नित्यपतनं च **जैनाः**। अनीश्वरशब्दोऽप्यत्र न प्रतिमाराजादिलौकिकेश्वरप्रतिषेधार्थः, तैस्तत्प्रतिषेधाभावात्। यथाऽनुवदन्ति—*लोकव्यवहारसिद्ध इति **चार्वाकाः** (न्या. कु.) इति। नच ब्रह्मनिषेधमात्रार्थः, *असत्यमित्यादिना पुनरुक्तेः। अतोऽत्र व्युत्पत्त्यनुसारेणालौकिकनियन्तृनिषेधे तात्पर्यमित्याह—**सत्यसंकल्पेने**त्यादिना। अयस्कान्तादिवदचित्स्वभावात् *जीवाजीवात्मकं सर्वं जगदेतन्निरीश्वरमिति जैनादिदृष्ट्या धर्मादिमात्रवशाद्वा, *परमेश्वरसंज्ञो ज्ञः किमन्यो मय्यवस्थितः (वि. १. १७. २३) इतिवदभिमानिकेश्वरशासनाद्वा, देशकालावच्छिन्नेश्वरसमुदायप्रवाहवशाद्वा जगत्प्रवृत्तिरिति हि तत्तन्मतमिति भावः। **नियमित**मिति—ये तु मद्व्यतिरिक्तान्प्रजापतिपशुपतिप्रभृतीनपि परमेश्वरत्वेन कल्पयन्ति, त आसुरा एवेति भावः। अन्येऽपि केचिदीश्वराः प्रवर्तका दृश्यन्ते; श्रूयन्ते च; तत्कथं भगवतस्सर्वनियमनमित्यत्राह—**अहं सर्वस्ये**ति। अन्येषामपि नियन्तृणां नियमनरूपप्रवृत्तिर्भगवदधीनैव। तथा च सूत्रितं *कर्ता शास्त्रार्थवत्त्वात् (ब्र. २. ३. ३३) इत्युपक्रम्य *परात्तु तच्छ्रुतेः (४०) इति। एवं त्रिभिर्जगत उत्पत्तिस्थितिप्रवृत्तीनां परब्रह्माधीनत्वं नेच्छन्तीत्युक्तं भवति। तत्र जगदुत्पत्तेः प्रतिज्ञातं ब्रह्मनैरपेक्ष्यमन्यतस्सिद्धतयैवमुपपादयन्तीत्याह—**वदन्ति चैव**मिति। *अपरस्परेत्यादिकं न पूर्वेणैकवाक्यम्, *किमन्यदित्यादेरनन्वयात्क्लिष्टकल्पनादनुपपत्तेश्च। एतदेवैषामासुरत्वे पर्याप्तं, किमन्यदुच्यत इति कल्पना अध्याहारादिग्रस्ता। **वदन्ति चैव**मिति तु नाध्याहारादिविवक्षयोक्तम्, *एतां दृष्टिमित्यनेनैव तत्सिद्धेः। अतः *कामहेतुकमित्यस्यैवोपपादनाय *अपरस्परसंभूतमित्याद्युक्तिरित्यभिप्रायेणाह—**योषिदि**ति। क्रियासान्तत्येन हेतुफलभावरहितमिति व्याख्यान्तरमतिमन्दं, प्रसिद्धतमार्थत्यागात् *कामहेतुकमित्यनन्वयाच्चेत्यभिप्रायेणाह—**अनेवंभूतं**

**किमन्यदुपलभ्यत** इति । यद्यपि योषित्पुरुषसंसर्गमन्तरेणैव स्वेदजानां स्थावराणां चोत्पत्तिर्दृश्यते ; तथाऽपीश्वरमात्रहेतुका देवादिसृष्टिर्नोपलभ्यते ; दृश्यमानं त्वयोनिजं योनिजवदेव दर्शनबलादङ्गीकुर्मः ; तत्राप्यन्वयव्यतिरेकावस्थिततत्तत्सामग्रीमात्रात्कार्यसिद्धिसंभवे किमीश्वरेण कर्त्रा कल्पितेनागमिकतया स्वीकृतेन वेति भावः । * अकिंचित्कामहेतुकम् इति परोक्तपाठान्तरस्य अप्रसिद्धत्वादिभिरनादरव्यक्त्यर्थं * किमन्यदिति पाठस्य प्रतिनिषेधपरतां व्यनक्ति— **किंचिदपि नोपलभ्यत** इति । **अत** इति—अन्वयव्यतिरेकबलादित्यर्थः । * कामहेतुकमिति दृष्टकारणोपलक्षणम् । कामप्रावण्यवशात्तदुक्तिः । यथा पाषण्डागमा अपि तत्तत्पुरुषप्रवर्तिता इति तत्तदागमैस्तदातनप्रत्यक्षमूलतयोपदेशपरंपरया च व्यवस्थाप्यन्ते, यथा वा चिरन्तननगरवृत्तान्तादयः ; एवं कल्पेकल्पे प्रवृत्तमीश्वरशिल्पिनो जगन्नगरवृत्तान्तं संभावितमपि तीव्रौषधकल्पशास्त्रप्रद्वेषादपलपन्तीत्युक्तं भवति ॥ ८ ॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥** ९

**भा ॥ एतां दृष्टिमवष्टभ्य—अवलम्ब्य, नष्टात्मानः—अदृष्टदेहातिरिक्तात्मानः, अल्पबुद्धयः—घटादिवत् ज्ञेयभूते देहे ज्ञातृत्वेन देहव्यतिरिक्त आत्मोपलभ्यत इति विवेकाकुशलाः, उग्रकर्माणः—सर्वेषां हिंसकाः जगतः क्षयाय प्रभवन्ति ॥ ९ ॥**

**ता ॥ एतां दृष्टिमिति**—विपरीतां दृष्टिमित्यर्थः । * अवष्टभ्येत्याक्रमणादिप्रतीतिव्युदासायाह—**अवलम्ब्येति** । नित्यस्यात्मनो विनाशाभावात् * णश अदर्शने इति धात्वर्थोऽत्र विवक्षित इत्याह—**अदृष्टेति** । स्वयंज्योतिषः प्रत्यगात्मस्वरूपस्य देहाध्यासाधिष्ठानतया नित्यमुपलम्भाद्देहातिरिक्तत्वेन विशेषितम् । नष्टात्मत्वहेतुरिहाल्पबुद्धित्वमुच्यत इति पुनरुक्तिपरिहाराभिप्रायेणाह—**घटादिवदिति** । यद्वा पशुमृगादिवत्कर्मवशात्स्वारसिको विविक्तात्मानुपलम्भः । * अल्पबुद्धयः इति तु तत्परिहाराशक्तिरुच्यत इति भावः । एवं परावरात्मविषयविपरीतदृष्टिरुक्ता ; अथ * प्रभवन्त्युग्रकर्माणः इत्यादिना तत्फलमुच्यते । * उग्रकर्माणः इत्यत्रोग्रव्रतादिप्रतीतिव्युदासायाह—**सर्वेषां हिंसका** इति । अशुभाः—स्वसंसर्गिणामपि दोषावहा इत्यर्थः । **जगतः क्षयाय प्रभवन्तीति**—* अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् (३. १०), * परस्परं भावयन्तः श्रेयः परमवाप्स्यथ (११) इत्यादिप्रतिपादितां भगवन्मूलां लोकभावनधर्ममर्यादामतिलङ्घयन्ति ; तदनुवर्तिनश्चान्येऽपि मन्दाः तदाचारोपदेशादिविस्रम्भादिक्रमेण सर्वस्य जगतस्त्रिवर्गापवर्गरूपवृद्धिविरहिणस्त्रिविधतापाभिहतिरूपाय क्षयाय भवन्तीत्यर्थः ॥ ९ ॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥** १०

**भा ॥ दुष्पूरम्—दुष्प्रापविषयं काममाश्रित्य तत्सिषाधयिषया मोहात्—अज्ञानात्, असद्ग्राहान्—अन्यायगृहीतपरिग्रहान्, गृहीत्वा, अशुचिव्रताः—अशास्त्रविहितव्रतयुक्ताः दम्भमानमदान्विताः प्रवर्तन्ते ॥ १० ॥**

**ता ॥** कामो हि जगद्धेतुरुक्तः ; अतस्स एव हि तेषामाश्रयणीयोऽभिमतः ; तदाश्रयणेतिकर्तव्यतारूपास्तु दम्भमानादयोऽशुचिव्रतपर्यन्ता इत्युच्यते—* काममिति श्लोकेन । दुष्प्रापविषयत्वं दुष्पूरत्वे हेतुः ; यद्वा विषयप्राप्तिर्हि

कामस्य पूरणम्; अतो दुष्प्रापविषयत्वमेव दुष्पूरत्वम्। आश्रित्य—प्रयोजनतयाऽभिसंधायेत्यर्थः। तदभिप्रायेणाह—**तत्सिषाधयिषयेति**। विपरीतप्रवृत्तिहेतुभूतं कृत्याकृत्यविवेकान्ध्यत्वमिह मोहशब्देन विवक्षितमित्याह—**अज्ञानादिति**। असत् ग्रहणम्—आर्जनं येषां तेऽत्रासद्ग्राहाः। धर्माभिसंधिमन्तो हि न्यायेनार्जयन्ति; कामप्रवणास्तु चौर्यादिभिस्तदुपकरणानीत्याह—**अन्यायगृहीतपरिग्रहानिति**। परिग्रहशब्दोऽत्र परिग्राह्यपरः। *ईहन्ते कामभोगार्थमन्यायेनार्थसंचयानिति (१२) त्वेतस्यैव विवरणम्। अत एवाशुभाभिनिवेशानिति व्याख्याऽप्यत्र मन्दा। **गृहीत्वेति** तादात्विकविनियोगपरत्वादात्मीयत्वाभिमानपरत्वाद्वा पुनरुक्तिपरिहारः। पाषण्डागमादिनिर्दिष्टानि हि व्रतानि पुरुषस्य दर्शनस्पर्शनाद्ययोग्यताहेतुत्वात्स्वयमशुचीन्येवेत्यभिप्रायेणाह—**अशास्त्रविहितव्रतयुक्ता** इति। धर्माभिसंधिरहितानामपि तामसानां विषहरणपाषाणस्फोट[न]दिव्यस्तम्भनप्रतिमाजल्पादिवञ्चनोपायैर्वशीकृतानां वेदबाह्येषु व्रतेषु मात्रया संयोगो भवति; यद्वा शौर्याहंकारादिमूलश्शास्त्रविरुद्धस्सङ्कल्पोऽत्र व्रतशब्दाभिप्रेतः। शास्त्रीयेष्वपि व्रतेषु भगवत्समाराधनविवक्षामजानतामयथाशास्त्रकरणादशास्त्रविहितप्रयुक्तत्वम्। दम्भमानौ प्रागेव व्याख्यातौ। मदोऽत्र धनाभिजनविद्यादिमूलमयथायथचेष्टितारम्भकमौद्धत्यम्॥ १०॥

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।**
**कामोपभोगपरमा एतावदिति निश्चिताः॥** ११

**भा॥ अद्य श्वो वा मुमूर्षवः चिन्तामपरिमेयाम्—अपरिच्छेद्यां, प्रलयान्ताम्—प्राकृतप्रलयावधिकालसाध्यविषयाम्, उपाश्रिताः, तथा कामोपभोगपरमाः—कामोपभोग एव परमपुरुषार्थ इति मन्वानाः, एतावदिति निश्चिताः—इतोऽधिकः पुरुषार्थो न विद्यत इति संजातनिश्चयाः॥ ११॥**

**ता॥** एवं प्रवर्तकानामुपर्युपरि मनोविकारादय उच्यन्ते—*चिन्तामपरिमेयामित्यादिभिः। अशक्यविषयवृथाप्रयासव्यञ्जनायाह—**अद्य श्वो वेति**। *अपरिमेयामित्यसंख्येयविषयत्वेनानन्तशाखत्वं विवक्षितमित्याह—**अपरिच्छेद्यामिति**। *प्रलयान्तामित्यत्र शरीरपातावधिकत्वोक्तिर्मन्दा; अनन्तकालसाध्यमल्पकालेन सिषाधयिषन्तीति व्यामोहातिशयख्यापनेन सप्रयोजनमिदम्; प्रलयशब्दश्च प्रसिद्धतमविषय उचितः; चिन्तयितॄणां पुरुषाणामाप्रलयस्थायित्वाभावाच्चिन्तायास्स्वरूपेण प्रलयान्तत्वं चायुक्तमित्यभिप्रायेणाह—**प्राकृतप्रलयावधिकालसाध्यविषयामिति**। असंख्येयेषु चिन्ताविषयेष्वेकैकोऽपि दुस्साध इति भावः। प्रयोजनतयाऽभिमतेषु कामोपभोग एव परमो येषां तेऽत्र कामोपभोगपरमाः; तदाह—**कामोपभोग एवेति**। स्वर्गापवर्गप्रतिषेधार्थं एतावच्छब्द इत्याह—**इतोऽधिक** इति। **संजातनिश्चया** इति—अत्र निश्चितशब्दे *भुक्ता ब्राह्मणाः इतिवत्कर्तरि क्त इति भावः॥ ११॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्॥** १२

**भा॥ आशापाशशतैः—आशाख्यपाशशतैर्बद्धाः, कामक्रोधपरायणाः—कामक्रोधैकनिष्ठाः, कामभोगार्थमन्यायेनार्थसंचयान् प्रतीहन्ते॥ १२॥**

**ता॥** चिन्ता कर्तव्यविषया; आशा तु फलविषया; आशाविषयाणामसंख्यातत्वात्तदाशानामपि शतशाखत्वेन तथात्वम्। *कामक्रोधपरायणाः इत्यत्र क्रोधस्य परमप्राप्यतया तदभिमानविषयत्वाभावात्कामक्रोधयोरैकाग्र्यमात्रं विव-

क्षितमित्याह—**कामक्रोधैकनिष्ठा** इति । अयनशब्दोऽत्र आश्रयपरः; कामो हि विहन्यमानः क्रोधात्मना परिणमतीति प्राक्प्रपञ्चितस्मारणे तात्पर्यात्पूर्वोत्तरापुनरुक्तिः । **कामभोगार्थ**मिति । विषयानुभवार्थम् । परमनिःश्रेयससाधनभूतपरमपुरुषसमाराधनार्थं यत्कर्तव्यं, हन्त तदनर्थावहातिक्षुद्रक्षणिकसुखाभासार्थमासीदिति भावः । **अन्यायेने**ति—नहि यज्ञादिवन्न्यायार्जितैः कामोपभोगो न निष्पाद्यत इति भावः । द्वितीयान्वयज्ञापनायाह—**प्रती**ति । प्रवर्तन्ते ईहन्त इत्युभयमत्र समानविषयं, तत्र ईहया निष्पादयन्तीति विवक्षितत्वात् * अर्थसञ्चयानिति द्वितीयान्वयः ॥ १२ ॥

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥** १३

**भा ॥ इदम्—क्षेत्रपुत्रादिकं सर्वं मया मत्सामर्थ्येनैव लब्धम्, नादृष्टादिना; इमं च मनोरथमहमेव प्राप्स्ये, नादृष्टादिसहितः । इदं धनं मत्सामर्थ्येन लब्धं मे अस्ति, इदमपि पुनर्मे मत्सामर्थ्येनैव भविष्यति ॥ १३ ॥**

**ता** ॥ एवं * सहस्रभगसंदर्शनात्मकश्च महानन्दलक्षणो मोक्षः इत्यादिभिः कामोपभोगः परमपुरुषार्थ इति कृत्वा तदर्थमर्थपुरुषार्थस्वीकार इत्युक्तम्; अथ तत्र प्रवृत्तस्य व्यतिरेकसंज्ञासंस्थितयोगिवल्लब्धालब्धकृताकृतप्रत्यवेक्षणमुच्यते—**इदमद्ये**त्यादिना । एतेन पूर्वोक्तचिन्ताविषयानन्त्यमप्युदाहृतं भवति । वक्ष्यमाणधनव्यतिरिक्तविषयत्वद्योतनाय पुत्रक्षेत्रादिशब्दः । सात्त्विकानामीश्वराद्यधीनकृताकृतप्रत्यवेक्षणाव्यवच्छेदाय अहङ्कारगर्भतयाऽपि तथाविधानुसन्धानस्य भ्रान्तिरूपत्वं * मयेत्यनेन सूच्यत इत्याह—**मत्सामर्थ्येनैवे**ति । एवकाराभिप्रेतं विवृणोति—**नादृष्टादिने**ति । एवमेवोत्तमपुरुषाकृष्टाहंशब्दव्याख्यानरूपे * अहमेवेत्यादावप्यभिप्रायः । * इदमस्तीदमपीति चिन्तायां विषयभूयस्त्वज्ञापनम् ॥ १३ ॥

**असौ मया हतश्शत्रुर्हनिष्ये चापरानपि ।**

**भा ॥ असौ मया बलवता हतश्शत्रुः, अपरानपि शत्रूनहं शूरो वीरश्च हनिष्ये, किमत्र मन्दधीभिर्दुर्बलैः परिकल्पितेनादृष्टपरिकरेण ॥ १३= ॥**

**ता** ॥ एवमिष्टप्राप्तावभिप्राय उक्तः; अथानिष्टनिवृत्तावुच्यते—**असौ मये**ति । अत्र * मयेत्यादेश्शत्रुहननोपयुक्तगुणवत्ताभिमानगर्भतामाह—**बलवते**ति । शूरः व्याघ्रादिवत्परबलं तृणीकृत्य निर्भयप्रवेशशीलः, * शूरं भीरुं कविं जडम् (भा. मो. १७४. ३२) इति शूरस्य भीरुप्रतियोगिकत्वेन पाठात् । वीरोऽत्र पराक्रमे ग्लान्यादिविकाररहितः । प्रेक्षावदनन्तपुरुषप्रवृत्तिविषयादृष्टानादरेण स्वसामर्थ्यमात्रावलम्बने को हेतुरित्यत्राह—**किमत्रे**ति । **मन्दधीभि**रिति । अयमभिप्रायः—अर्थादिग्रहणलुब्धैः निगूढाभिप्रायैर्ग्रन्थैः प्रतारिता दानयज्ञादिषु प्रवृत्तास्सिद्धमप्यर्थं परित्यज्य कृपणा भवन्तीति । **दुर्बलै**रिति । प्रबलो हि न प्रतारयितुं शक्यते, * न भेदसाध्या बलदर्पिता जनाः (रा. सु. ४१. ३) इति न्यायादिति भावः । **परिकल्पितेने**ति—न तु लोकायतशास्त्रविवक्षितप्रत्यक्षान्वयव्यतिरेकरूपप्रमाणसिद्धेनेत्यर्थः ॥१३=॥

**भा ॥ तथा च—**

**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥** १४

भा ॥ **ईश्वरोऽहम्—स्वाधीनोऽहम्, अन्येषां चाहमेव नियन्ता। अहं भोगी—स्वत एवाहं भोगी, नादृष्टादिभिः। सिद्धोऽहम्—स्वतस्सिद्धोऽहम्, न कस्माच्चिददृष्टादेः। तथा स्वत एव बलवान्; स्वत एव सुखी ॥ १४ ॥**

**ता ॥** एवमिष्टप्राप्त्यनिष्टपरिहारयोस्स्वसामर्थ्यमात्राधीनत्वभ्रम उक्तः; अतस्स्वसामर्थ्यादावपि कारणभूतादृष्टादिनैरपेक्ष्यभ्रम उच्यते—ईश्वरोऽहमित्यादिनेत्याह—**तथा चेति** । सर्वैश्वरवदीशितव्यत्वाभावोऽप्यत्रेश्वरशब्देन विवक्षित इत्याह—**स्वाधीनोऽहमिति** । स्वव्यतिरिक्तसमस्तनियन्तृत्वाभिमानोऽप्यत्राभिप्रेत इत्याह—**अन्येषां चेति** । तवांसकूटे भूमण्डलम्, त्वं हि सर्वेषां नियन्ता इत्युक्ते तथाविधत्वाभिधानादेव हि तथाविधानां प्रीत्यादिसंभव इति भावः । पूर्वापरानुगुण्यात् *भोगीति भोगसामर्थ्यपरम्; तत्राहं चेत्, न धर्मस्वभावादेवंभूत इत्यहंशब्दाभिप्रायमाह—**स्वत एवेति** । सिद्धः—ज्ञानाद्यतिशयसंपन्न इत्यर्थः। सिद्धसमीहित इति वा । **सुखीति**—पुत्रजन्मादिसुखयोगीत्यर्थः। भोगिसुखशब्दयोर्हेतुफलविवक्षया वा पौनरुक्त्यपरिहारः । एषामीश्वरत्वादीनामभिजनान्तानां मुक्तशिष्टकर्मनूलत्वं प्रागेव श्रुतिस्मृतिभिरुपपादितम् ॥ १४ ॥

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥** १५

भा ॥ **अहं स्वतश्चाढ्योऽस्मि; [अभिजनवानस्मि—स्वत एवोत्तमकुले प्रसूतोऽस्मि;] अस्मिन् लोके मया सदृशः कोऽन्यस्स्वसामर्थ्यलब्धसर्वविभवो विद्यते? अहं स्वयमेव यक्ष्ये, दास्यामि, मोदिष्ये इत्यज्ञानविमोहिताः—ईश्वरानुग्रहनिरपेक्षेण स्वेनैव यागदानादिकं कर्तुं शक्यमित्यज्ञानविमोहिता मन्यन्ते ॥ १५ ॥**

**ता ॥ अस्मिँल्लोके** इति—लोकान्तरं तु नास्तीति हि तदभिप्रायः; यद्वा अस्तिशब्दाभिप्रेतसार्वकालिकसमनिषेधविवक्षया *अस्मिँल्लोके इति निर्देशः। यावल्लोकमन्वेषणेऽपीति भावः। प्रकृतैरेवाकारैरेकैकशोऽपि सदृशः प्रतिषिध्यत इत्याह—**स्वसामर्थ्येति** । मया सदृशः क इत्येतावति वक्तव्ये, अन्यशब्दः अन्यत्वमेवासामर्थ्ये हेतुरिति द्योतनार्थः। यद्वा, मत्तोऽन्यो मया सदृशो नास्ति; अहमेव मया सदृश इति *रामरावणयोर्युद्धं रामरावणयोरिव (रा. यु. ११०. २४) इतिवद्वाव्यम् । *यक्ष्ये दास्यामीत्येतत्सात्त्विकविडम्बनमात्रविश्रान्तेन दम्भेनैव; *दम्भेनाविधिपूर्वकमिति ह्यनन्तरं विशेष्यते। **मोदिष्य** इति न स्वर्गादिविवक्षया; अपि तु यजमानत्वादिनिमित्तमहच्छब्दादिलाभेन । *यक्ष्ये इत्यादिप्रतिपत्तावपि प्राकरणिकीमहङ्कारोपहतिं दर्शयति—**ईश्वरानुग्रहनिरपेक्षेणेति** । **इत्यज्ञानविमोहिता** इत्येव पर्याप्तं; **मन्यन्त** इति तु वैशद्यार्थमुक्तम् ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥** १६

भा ॥ **अदृष्टेश्वरादिसहकारमृते स्वेनैव सर्वं कर्तुं शक्यमिति कृत्वा एवं कुर्याम, तच्च कुर्याम्; अन्यच्च कुर्यामित्यनेकचित्तविभ्रान्ताः, एवंरूपेण मोहजालेन समावृताः, कामभोगेषु प्रकर्षेण सक्ताः, मध्ये मृताः अशुचौ नरके पतन्ति ॥ १६ ॥**

**ता** ॥ ईश्वरे न्यस्तभरा हि प्रायशो निश्चिताः, तद्व्यतिरेकमाह—**स्वेनैव सर्वमिति** । **इति कृत्वा**—इति मत्वेत्यर्थः । चिन्तारूपवृत्तियुक्तं मन एव चित्तम्; त[त्र]त्प्रवृत्तिभेदादनेकत्वोक्तिः; तद्दर्शयति—**एवं कुर्यामित्यादिना** । **विभ्रान्ताः**—विक्षिता इत्यर्थः । यद्वा विभ्रान्तिर्विपरीतज्ञानम्; मोहस्त्वज्ञानम् । अथवा *अन्यथा चिन्तितं कार्यं देवेन कृतमन्यथा इति न्यायाचिन्तानामेव भ्रान्तिरूपत्वमाह—**एवंरूपेणेति** । *न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ (मनु. २. ९४; वि. ४. १०. २३) इत्ययमर्थ उपसर्गेण द्योत्यत इत्याह—**प्रकर्षेण सक्ता** इति । *इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् । एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥ (भा. मो. १७५. २१) इत्युक्तमाह—**मध्ये मृता** इति । अशुचौ कामभोगे प्रसक्तानां तथाविधमेव फलमित्यभिप्रायेण नरकस्याशुचित्वविशेषणम् । पूयरुधिरवसादिमयत्वं चाशुचित्वम् ॥ १६ ॥

**आत्मसंभाविताः स्तब्धाः धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥** १७

भा ॥ आत्मनैव संभाविताः, आत्मनैवात्मानं संभावयन्तीत्यर्थः । **स्तब्धाः—परिपूर्णमन्यमाना न किंचित्कुर्वाणाः । कथम्? धनमानमदान्विताः—धनेन विद्याभिजनाभिमानेन च जनितमदान्विताः, नामयज्ञैः—नामप्रयोजनैः, यष्टेतिनाममात्रप्रयोजनैर्यज्ञैः यजन्ते । तदपि दम्भेन हेतुना यष्टृत्वख्यापनाय, अविधिपूर्वकम्—अयथाचोदनं यजन्ते** ॥ १७ ॥

**ता** ॥ *आत्मसंभाविताः इत्यत्र परसंभावनाप्रसङ्गरहिततया *अब्भक्षः इतिवदवधारणगर्भतामाह—**आत्मनैव संभाविता** इति । आत्मप्रशंसादिरूपदोषव्यक्त्यर्थमाह—**आत्मनैवात्मान**मिति । परैस्संभाविता अपि हि सन्तो लज्जन्ते। स्तब्धताहेतुः **परिपूर्णमन्यमाना इति** । **न किंचित्कुर्वाणा** इति तुशब्दार्थः । किंचित्—गुरुवन्दनादिकमपीत्यर्थः । धनादिदृष्टसंपत्तिमदेन अदृष्टवैकल्यतिरस्कार इति वक्तुं पारलौकिकाप्रवृत्तिहेतुं शङ्कते—**कथ**मिति । * विद्यामदो धनमदस्तृतीयोऽभिजनो मदः (भा. उ. ३४. ४६) इति सन्नियोगशिष्टत्वाद्धनस्यात्रोक्तेश्च तत्समभिव्याहृतो मदहेतुर्मानो विद्याभिजननिबन्धन इत्याह—**विद्याभिजनाभिमानेन चे**ति । नामसंबन्धिनो यज्ञा नामयज्ञाः; संबन्धश्चात्र धर्मादिप्रयोजनाभिसन्धिव्युदासाय फलफलिभावेनेत्यभिप्रायेणाह—**नामप्रयोजनै**रिति । कीर्त्यादिष्वपि नामशब्दप्रयोगात्तदभिसंधेश्च *दम्भेनेत्यादिना सिद्धेस्संज्ञायां प्रसिद्धिप्रकर्षादपहासार्थत्वौचित्याच्च—**यष्टेतिनाममात्रप्रयोजनै**रित्युक्तम् । अत एव *यज्ञसमाख्यामात्रम्; न तु वस्तुतोऽसौ यज्ञः इति व्याख्याऽपि मन्दा प्रदर्शिता; अविधिपूर्वकत्वोक्त्यैव तदर्थसिद्धेश्च । **दम्भेन हेतुने**त्यभिसंधिविशेषस्य हेतुत्वोक्तिः । **यष्टृत्वख्यापनाये**ति तु विषयतः प्रयोजनतश्च तद्विवरणम् । विधिरत्र विधायकं वाक्यम् । तदुक्तप्रकारपरित्यागोऽत्राविधिपूर्वकत्वमित्याह—**अयथाचोदन**मिति ॥ १७ ॥

भा ॥ ते चेदंभूता यजन्त इत्याह—

**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥** १८

भा ॥ **अनन्यापेक्षोऽहमेव सर्वं करोमीत्येवंरूपमहंकारमाश्रिताः, तथा सर्वस्य करणे मद्बलमेव पर्याप्तमिति च बलम्, अतो मत्सदृशो न कश्चिदस्तीति च दर्पम्, एवंभूतस्य मम काममात्रेण सर्वं संपत्स्यत इति**

(१६.५) इत्यत्राव्यवहितप्रस्तुतोपाधिकशोकापनोदनार्थत्वं, तथाऽत्रापीति युक्तम् । न च सूक्ष्मधियः क्षत्रियस्य धार्मिकाग्रेसरस्यार्जुनस्य सर्वज्ञप्रदर्शितेषूपायेष्वज्ञानादनर्हत्वात्प्रधानांशानिश्चयाद्वा शोकोऽयम् । फलसंशयोऽपि *मामेवैष्यसीत्यादिना निश्शेषनिर्मूलितः । अतः परिशेषाद्दीर्घकालनैरन्तर्यादरसेवनीयोपायदौष्कर्यात्फलविलम्बाद्वा शोकोऽयं संभवेदिति तथाविधशोकप्रशमनपरेणानेन श्लोकेन भवितव्यमित्युक्तार्थान्तरा[रोहे तदुचितं]रुचेरुचितं स्वारसिकत्यागशब्दार्थमर्थान्तरमाह—अथवेति । अत्र **सर्वपापविनिर्मुक्त**त्युपायविरोधिसर्वविषयम् । पापनिर्मोक्षादत्यर्थभगवत्प्रियत्वम् । *नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते (ल. वि) इति ह्युच्यते । *विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्यते (वि. ध. ७४. ९४) इत्याद्यनुसंधानेनाह—**तदारम्भविरोधिपापानामानन्त्या**दिति । *जन्मान्तरसहस्रेषु (ल. वि.) इत्याद्यनुसारेण **परिमितकालकृतैरि**[त्यनेन]ति पाठे विलम्बाक्षमत्वं सूचितम् । **अपरिमितकालकृतै**रिति पाठे तु अपिशब्दोऽध्याहर्तव्यः । तेनोपायस्य दुस्संपादत्वं व्यञ्जितम् । **शोकमपनुद**न्निति—शोकापनोदनायेत्यर्थः ।

*मन्मना भव मद्भक्त इति पूर्वश्लोके भक्तियोगस्य प्रकृतत्वात्तदारम्भविरोधित्वेन शोकनिमित्तपापविषयोऽत्र सर्वपापशब्दः । तन्निराकरणायोक्तधर्मवर्गविषयस्सर्वधर्मशब्दः, यस्यैतत्संग्रहशासनं *धर्मेण पापमपनुदति (ना.) इति । बहुवचनेन सर्वशब्देन च वैविध्यमानन्त्यं च पापेषु धर्मेषु च व्यज्यते । तदिदमाह—**भक्तियोगारम्भविरोधी**त्यादिना । **कृच्छ्रचान्द्रायणे**त्यादिना संप्रतिपन्नपापनिवर्हणोदाहरणम् । अग्निष्टोमादयोऽपि विनियोगपृथक्त्वेन अनेकफलसाधका इति प्रागेवोक्तम् । आदिशब्देन कर्मयोगावान्तरभेदतया *दैवमेवापरे यज्ञम् (४. २५) इत्यादिभिः प्राक्प्रपञ्चितानामनुक्तानां च ग्रहणम् । एवं ज्ञानयोगोऽप्यादिशब्देन संगृहीतः, तस्यापि भक्तियोगारम्भविरोधिपापनिबर्हणत्वेन प्रागेव प्रपञ्चनात् । **परिमितकालवर्तिने**त्येकशरीराभिप्रायः । अतिदुष्करानुष्ठानमूलानेकजन्मसंसिद्धिसाध्यत्वनिश्चयादेव ह्यस्य शोकः । *सर्वधर्मान्परित्यज्येति स्वरूपत्याग एवास्यां योजनायाम् । नच तावता नित्यनैमित्तिकलोपप्रसङ्गः, दुरनुष्ठानप्रायश्चित्तादिविषयत्वोक्तेः । तुल्यन्यायतया तु नित्यनैमित्तिकेष्वपि यानि दुरनुष्ठानानि, तत्रैवं स्यात्, शक्तमधिकृत्यैव शास्त्रप्रवृत्तेः, अशक्तस्याकरणे दोषाभावात् । अनुकल्पमात्रशक्तौ च तस्यैवानुष्ठेयत्वात्, इह च मुख्याशक्तस्य सर्वप्रकारमुख्यानुकल्पतया एकस्यैव भगवत्प्रपदनस्य विधानाच्छक्ताशक्ताधिकारिभेदाच्च मुख्यानुकल्पयोस्सर्वत्र फलाविशेषोपपत्तेः । अत एव गुरुलघुविकल्पानुपपत्तिप्रसङ्गाभावः ; यथा *प्रणवं वा त्रिरभ्यसेत्स्मरेद्वा विष्णुमव्ययम् इति । यथा च *मान्त्रं भौमं तथाऽऽग्नेयं वायव्यं दिव्यमेव च । वारुणं मानसं चेति स्नानं सप्तविधं स्मृतम् ॥ (यो. या.) इति विष्णुचिन्तनमेवावगहनादिष्वसमर्थस्यापि तत्फलसाधकतया विधीयते, तथेहापीति न कश्चिद्दोष इति । अत्र दुष्करतया चिरकालसाध्यतया चाल्पशक्तिना परिमितकालवर्तिना च दुरनुष्ठानानां धर्माणामर्थसिद्ध एव त्यागो भगवदेकोपायतावरणविधेरुपकारित्वेन विधिच्छाययाऽनूद्यते ; यथा निदिध्यासनोपकारितया रागप्राप्ते श्रवणमनने *श्रोतव्यो मन्तव्यः इति । तदेकोपायतावरणविधानं च तदन्योपायपरित्यागविशिष्टविषयम् ; तेन तत्फलसाधनत्वेन चोदितानामन्यदेवताविषयाणां भगवति च धर्मान्तराणां त्यागस्संगृह्यते । अर्थसिद्धे च देवतान्तरधर्मनिषेधे तत्सिध्यर्थं नात्र व्यधिकरणसमासस्समाश्रयणीय इत्यभिप्रायेण **सर्वान् धर्मा**निति दर्शितम् । ननु शक्तमधिकृत्य निषेधे शास्त्रवैयर्थ्यम्, अशक्तं प्रति तु न विध्यपेक्षेति चेन्न, शक्तं प्रत्येव ब्रह्मास्त्रबन्धादाविवोपायान्तरपरिग्रहस्य तद्विरोधित्वज्ञापनेनापेक्षितत्वात् । यद्वा यदर्थं शरणव्रज्याऽनुष्ठिता, तदर्थोपायान्तरशक्तेः पश्चात्कुतश्चिद्धेतुवशात्संभवेऽपि तदर्थं तदुपादानस्याकर्तव्यताज्ञापनेन

सार्थम् । अत्र * अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः इति फलस्य भगवदेकाधीनतया तदेकप्रपदनमेकं फलतयाऽनुष्ठेयं शिष्टम्, सर्वधर्मपरित्यागस्य तु वाक्यात्तच्छेषत्वं सिद्धम्, फलवत्सन्निधौ चाफलं तदङ्गम् । तत्र पूर्वसिद्धाकारपरामर्शो अधिकारकोटौ निवेशः, अन्यथा तु लिङ्गात्तदेकशरणव्रज्योपयोगिरूपे विश्रान्तिः । तदेकोपायताध्यवसायो हि तदन्योपायपरिग्रहेण विरुद्धः । अतस्त्यागस्यावहन्तेश्शोध्यपेक्षिततण्डुलोपयोगिरूपे पर्यवसानवत्तदेकप्रपदनविरोधिधर्मत्यागे पर्यवसानादतत्फलार्थानामविरोधिनां नित्यादीनां त्यागोऽस्य नापेक्षित इति वर्णाश्रमानुबन्धिस्वतन्त्रविधिप्राप्तास्त[थै]द्वदेवावतिष्ठन्ते । न च तेऽपि प्रपदनस्याङ्गान्यङ्गिनो वा, तथा नियोगाभावात्, अशक्तं प्रति दुष्करकर्माङ्गकप्रपदनविधानासंभवात्, अतदङ्गस्यापि यज्ञादेरन्यार्थमाश्रमाद्यर्थं चानुष्ठानोपपत्तेः । सर्वशब्दनिर्दिष्टप्रत्यनीकतया वा * मामेकमित्येकशब्दः । ततश्च भगवत्प्रपदनमेकमेव सर्वप्रायश्चित्तं स्यादित्युक्तं भवति । शरणागतिस्वभावात्तु तदन्योपायपरित्यागः सिध्येत् । यथा लक्षयन्ति—* अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिः ॥ (विष्व) इति । शरणशब्दोऽत्रोपायपर्यायः । यथोक्तं प्रपत्तिप्रकरणे—* उपाये गृहरक्षित्रोः शब्दश्शरणमित्ययम् । वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥ (अहि. ३६. ३३) इति । पठन्ति च—* शरणं गृहरक्षित्रोरुपाये च निगद्यते (नाम. ३. २०९) इति । उपायत्वं च कारुण्यादिगुणविशिष्टस्योपायस्थानेऽवस्थाय तत्कार्यकरणादित्यभिप्रायेण परमकारुणिकत्वादिगुणोक्तिः । * एकमिति नैरपेक्ष्यपरं वा । तत्सिद्ध्यर्थमपि * मामित्यनेनाभिप्रेततया कारुण्यादिग्रहणम् । **परमकारुणिक**मिति ; * वधार्हमपि काकुत्स्थः कृपया पर्यपालयत् (रा. सु. ३८. ३४) इत्यादिभिः कृपायाः पारस्यम्, ततश्शरण्यत्वं च सिद्धम् । तस्यासङ्कोचमाह—**अनालोचितविशेषाशेषलोकशरण्य**मिति । * सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् (श्वे. ३. १७) इति श्रुतिः । * सर्वलोकशरण्याय (रा. यु. १७. १४) इति रावणावरजवाक्यम् । स्ववाक्यं च * विभीषणो वा सुग्रीव यदि वा रावणस्स्वयम् (रा. यु. १८. ३६) इति । विशेषशब्दोऽत्र जातिवर्णविद्यावृत्तगुणसंस्कारभूतभाव्युपकारादिपरः । उक्तगुणाविनाभूतं गुणान्तरमाह—**आश्रितवात्सल्यजलधि**मिति । * विदितस्स हि धर्मज्ञश्शरणागतवत्सलः (रा. सु. २१. १९) इति ह्युक्तम् । * दोषो यद्यपि तस्य स्यात् (रा. यु. १८. ३) इत्यादिप्रक्रियया दोषानादराय वात्सल्योक्तिः । गत्यर्थानां बुद्ध्यर्थतया प्रयोगाद्व्रजतिधातुः पूर्वयोजनायामनुसंधानमात्रपरतया व्याख्यातः । इह तु * रक्षिष्यतीति (ल) महाविश्वासपूर्वकविशिष्टाध्यवसायलक्षणबुद्धिविशेषनिरूढपदेन व्याचष्टे—**प्रपद्यस्वे**ति । **अहं त्वे**ति—सर्वज्ञः सर्वशक्तिरहम् अल्पज्ञमल्पशक्तिं च त्वामित्यर्थः । **माशुचः**—एकेन सुकरेणाविलम्बेनाशेषपापनिवृत्तिसिद्धेरनन्तैर्दुष्करैर्विल[म्ब्य]म्बकारिभिः प्रत्येकपापनिवर्हणैरिदानीं भक्तियोगारम्भार्हतासंपादनस्याशक्यतानिमित्तशोकं मा कृथा इत्यर्थः । एवं सकलाभिमतसाधनतया भगवच्छास्त्रादिषु प्रसिद्धं भगवत्प्रपदनमिह प्रकृतभक्तियोगारम्भविरोधिपापनिवर्हणरूपोदाहरणविशेषे प्रदर्शितम् । **श्लो.**—सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना । ससतस्याहमेवेति चरमश्लोकसंग्रहः ॥ अतएवात्रत्य**भाष्यग्रन्थस्य गद्यस्तुते**श्चाविरोध इति ।

यदिह **शंकरेणो**क्तम्—* मन्मना भवेति श्लोकेन सर्वकर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीं कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारं विहितं वक्तव्यमित्याह—सर्वधर्मानितीति ; अयमपि * सर्वार्थान्विपरीतांश्च (१८. ३२) इत्यस्योदाहारणविशेषः, कर्मयोगनिष्ठायाः पृथक्त्वेन भक्तियोगनिष्ठायाः प्रदर्शितत्वादत्रैव * शरणं व्रजेति कण्ठोक्तिदर्शनेन पूर्वत्र तदुपसंहारवाचोयुक्तेरसंगतत्वात् । यच्चात्र * मामेकं सर्वात्मानं समं सर्वभूतस्थमीश्वरमहमेवेत्येवमेकं शरणं व्रज ; न मत्तोऽन्यदस्तीत्यवधारयेत्युक्तम् ; अत्र तावन्न शब्दस्यैवं शक्तिः, नच तदुपरोधेन लाक्षणिकार्थ-

स्वीकारे हेतुं पश्यामः ; प्रत्युत *अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्यादिस्वारस्याद्राघवविभीषणादिवच्छरण्यशरणागतयोर्गोप्तृत्वरक्षितव्यत्वलक्षणो भेदः प्रतीयते । शास्त्रान्तराणि चैतदविरोधेन पूर्वमेव स्थापितानि । यच्चात्र *सर्वधर्मान् परित्यज्येत्यनेन सर्वकर्मस्वरूपसंन्यासविधिरिति, इदमप्यध्यायारम्भोक्ततामसत्यागस्वीकरणम् । एतन्निराकरणायैव सात्त्विकस्त्यागोऽत्र **भाष्ये** दर्शितः ॥

ननु कर्माधिकृतेष्वेवायं सात्त्विकराजसतामसरूपस्त्यागविकल्पः, सर्वकर्मसंन्यासिनां तत्त्वविदां मोहदुःखमूलत्यागासंभवात् ; सात्त्विकत्यागोऽपि कर्मनिष्ठमधिकृत्यैवोच्यत इति तत्रैवास्माभिर्व्याख्यातमिति चेत् ; तदसत्, सामान्यतस्त्यागसंन्यासरूपविषयत्वात्प्रश्नस्योत्तरस्यापि सामान्यविषयत्वं प्रतीयते, ज्ञाननिष्ठानामपि नित्यनैमित्तिककर्मस्वरूपपरित्यागस्य प्रागेव दूषितत्वाच्च । यच्चानुगीतायामुच्यते—*नैव धर्मी नचाधर्मी न चापि हि शुभाशुभी । यस्त्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ॥ (भा. आश्व. २०. ७) इति, *ज्ञानं संन्यासलक्षणम् (,, ४३. २६) इत्यादि च ; यच्च श्रीमति भागवते पुराणे—*तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥ (११. १२. १४) इति ; यच्चान्यत्र *त्यज धर्ममधर्मं च त्यज सत्यानृते अपि । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ (भा. मो. ३३०. ४०) इति । एवमीदृशानि वचनानि सात्त्विकत्यागोक्तप्रक्रिययैव नेतव्यानि । समाधिदशातत्परेषु तु वचनेषु न कश्चिद्विरोधः । *त्यज धर्ममसंकल्पादधर्मं चाप्य[लिप्स]हिंसया । उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ (,,.४१) इत्यादिषु च सात्त्विक एव धर्मत्यागस्तत्तद्वचनोक्त इति सुव्यक्तम् । *मामेकमित्यत्र च निर्विशेषचिन्मात्रैक्यादिविवक्षां शृण्वन्तो बाला अपि परिहसेयुः । भाष्योक्तस्त्वेकशब्दार्थो वचनस्वारस्यपूर्वापरशास्त्रान्तरसङ्गतः । एकशब्दश्चात्यन्तपृथग्भूतेष्वपि दृश्यते । *अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् । क्षमं मम सहानेन नैकत्वमनया सह ॥ (भा. मो. ३०८.३८) इति । तथा *वानराणां नराणां च कथमासीत्समागमः (रा. सु. ३५. २) इति प्रश्ने *रामसुग्रीवयोरैक्यं देव्येवं समजायत (५२) इत्यादिषु । या तु *सर्वधर्मान्परित्यज्येत्यत्र विरोधिधर्ममात्रत्यागविषयत्वेन **यादवप्रकाशादीनां** योजना ; न तत्रार्थविवादः । सर्वधर्मानवश्यकरणीयानपि परित्यज्येति स्तुतिरूपयोजना तु अपिशब्दाध्याहारादिभिरयुक्ता । अनियतधर्मपरित्यागोऽत्र विवक्षित इति **नारायणार्य**व्याख्यायामपि नानुष्ठानविरोधः ।

अपिचात्रादितःप्रभृति संमृशामः—**प्रथमे** तावदध्यायेऽर्जुनस्यास्थानस्नेहकारुण्यादिभिश्शास्त्रोल्लङ्घनप्रसङ्गेष्वुनोपक्षिप्तपूर्वपक्षबुद्धिप्रशमनाय **द्वितीये**नाध्यात्मशास्त्रमवतारितमित्येतावति सर्वेषामविवादः । द्वितीयाध्यायोक्तस्य योगादेरपि भगवानेवाराध्य इत्यत्रापि न विप्रतिपत्तिः । व्रीह्यादिविषयैः प्रोक्षणावघातादिशास्त्रार्थैरपि हि स एवाराध्यते । स तु तत्र न साक्षाद्विषय इति प्रकरणादिबलात्, साक्षाद्भगवद्योगिनश्च—*योगिनामपि सर्वेषां मद्गतेनान्तरात्मना (६. ४७) इत्यादि प्रस्तुत्य प्रतिपादयिष्यमाणत्वाच्च समर्थितम् ।

**तृतीये** योगाख्योपायांशभूतयोः क्रियायोगबुद्धियोगयोः विमर्श इत्येतदपि *ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् (३. ३) इत्यधिकारिभेदवर्णनेन निरस्तम् । नच *दूरेण ह्यवरं कर्म (२. ४९) इति प्रतिपादनात्तुल्यकक्ष्यत्वानुपपत्तिरिति वाच्यं, तस्य तत्प्रकरणनिन्द्यकाम्यकर्मविषयत्वस्थापनात् । *यस्त्वात्मरतिरेव स्यात् (३. १७) इत्यादिश्लोकद्वये दृष्टानुश्रविकविषयवितृष्णस्य परमात्मैकरतेः पुरुषस्य कृत्यानुष्ठाने प्रयोजनाभावोऽकृत्यकरणे प्रत्यवायाभावश्च

प्रतिपाद्यत इति यदुच्यते, तदप्ययुक्तं, *नाविरतो दुश्चरितात् (क. २. २४) इत्यादिविरोधोपपादनात्, तत एव *हत्वाऽपि स इमाल्लोकान् (१८.१७) इत्यादेरपि वक्ष्यमाणस्यात्रोदाहृतस्यान्यविषयत्वस्थापनात्। अथ चेत्समाधिदशायां कर्तव्यान्तराभावोऽस्मिन् श्लोकद्वये विवक्षित इत्यभिप्रायः, तदा तु मुक्तदशायामिव विरोधाभावादभ्यनुजानीमः। उक्तं च समाधिदशाविषयत्वं षष्ठे तैरेव। तथा हि—*यं संन्यास इति प्राहुर्योगं तं विद्धि पाण्डव (६.२) इति श्लोके *समाधिवेलायामेव कर्मसंन्यासः कार्यो नान्यदेति यावदित्युक्तम्। *आरुरुक्षोर्मुनेर्योगम् (६.३) इत्यत्र चैवं व्यञ्जितं—*यस्य वशिनो योगेन सकलकर्मकालो व्याप्तः, तस्य कर्मपरित्यागो युक्तः, नान्यस्येति। एतदेव तृतीयचतुर्थपञ्चमेष्वपि भगवता प्रतिपादितमित्यनुसंधातव्यम्। तृतीये तावत् *यस्त्वात्मरतिरेव स्यात् (१७) इत्यत्र। चतुर्थेऽपि *योगसंन्यस्तकर्माणम् (४१) इत्यत्र। पञ्चमे च *सर्वकर्माणि मनसा संन्यस्यास्ते (१३) इत्यत्र। तेनात्मरतीनां वशिनां योगारूढानामेव कर्मसंन्यासो युक्तः; तेषामपि लोकविख्यातानां सर्वलोकादर्शभूतानां विदुषामात्मानुग्रहाभावेऽपि लोकानुग्रहार्थं कर्मयोग एव युक्त इति भगवदभिप्रायो ग्राह्य इति निगमितम्। यत्पुनर्निषिद्धानुष्ठाने प्रत्यवायाभावात्तदकरणे प्रयोजनं नास्तीति, एतत्तु तस्यामवस्थायामप्रसक्तोपन्यासः। यत्तु *कर्मणैव हि संसिद्धिमास्थिता जनकादयः (३. २०) इत्यत्र राज्ञामुपन्यासस्तद्वृत्तान्तानामेव लोके प्रसिद्धत्वादिति, अत्रायमेव भाव उचितः। यत्त्वनन्तरं पक्षान्तरमुक्तम् *एवं परंपराप्राप्तमिमं राजर्षयो विदुः (४. २) इति लिङ्गाद्राज्ञामेवायं योगिनां कर्मापरित्यागोपदेशो नान्येषामिति, तन्मन्दम्, अन्येषामपि कर्मस्वरूपापरित्यागस्य सर्वत्र सुस्पष्टत्वात्; अत एव हि चतुर्थे स्वयमेवोक्तम्—इह केचित् *राजर्षयो विदुरित्यभिधानात्पूर्वस्मिन्नध्याये निदर्शनार्थं जनकोपन्यासात्, नवमेऽध्याये *राजविद्या राजगुह्यम् (२) इति वक्ष्यमाणत्वाच्च राज्ञामेवास्मिन् भगवदुपदिष्टे योगेऽधिकारः, नान्येषामिति मन्यन्ते; तदयुक्तं, नवमेऽध्याये *स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् (३२) इति सर्वाधिकारस्य वक्ष्यमाणत्वात्। तस्मान्निदर्शनार्थं राज्ञां प्रवृत्तिविशेषाद्युपन्यासो नान्यथेत्यभ्युपगन्तव्यमिति।

यत्तु **पञ्चमे** *संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ (२) इत्युक्तसंन्यासकर्मयोगाभ्यामनन्तरं *सांख्ययोगौ पृथग्बालाः (४) इत्याद्युक्तसांख्ययोगयोरर्थान्तरत्वोपपादनं, तदपि मन्दम्, *ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् (४) इति प्रागुक्तप्रत्यभिज्ञानात्। नच प्रसिद्धिविरोधः, अस्मिन् शास्त्रे तयोरेवमेव प्रसिद्धेः। नच *निश्श्रेयसकरावुभावित्युक्तेन पुनरुक्तिः, संग्रहविस्तररूपत्वादिना तत्परिहारात्, सर्वत्र चैवं सर्वैरभ्युपगमात्। यदपि *पण्डितास्समदर्शिनः (१८) इत्यत्र सर्वत्राहिंस्यताबुद्धिरनुग्राह्यताबुद्धिस्सर्वेषां भूतानामीश्वरानुग्राह्यताबुद्धिरीश्वरविभूतित्वबुद्धिश्च समदर्शनमभिप्रेतमिति, तावति न विवादः; यत्तु तत्रानन्तरमुक्तं *न पुनर्हिंसानुग्रहेषु फलसाम्यबुद्धिः ब्राह्मण्यादिविशेषतिरस्कारो वा; कुत एतत्? शास्त्रान्तरानुसारात्प्रमाणान्तरानुसाराच्चेति, अयमप्यात्मव्यतिरिक्तमिथ्यात्वादिवादिनां मतस्योपालम्भः, न पुनस्स्वतःपरस्परसमानानामात्मनामौपाधिकसत्यवैषम्यवादिमतस्य, विषमदेहादीनामपि स्वरूपसाम्यदर्शने शास्त्रान्तरप्रमाणान्तरविरोधाभावात्, प्रत्युत तत्संवादाच्चेति। **षष्ठोक्त**योगस्य विषयविशेषादिकं तत्रैव सुस्पष्टमुपापीपदाम। दुरपह्नवं च तैरपि योगिनां वैविध्यम्। अत एव हि *योगिनामपि सर्वेषाम् (४७) इति श्लोके व्याचख्युः—योगिनश्चित्तालम्बनवैचित्र्याद्बहुविधाः। तेषु मय्यर्पितचित्तो मामेव श्रद्धया भजते, स मे युक्ततमो मत इति ह्याहेति, योऽस्माभिरिह संक्षेपविस्तराभ्यामुपन्यस्तो योगः, स सर्वेभ्यो योगेभ्यश्श्रेष्ठतमो मत इति च। *शब्दब्रह्मातिवर्तते (४४) इत्येतदपि त्रिवर्गातिलङ्घनविषयमेवाभ्युपगन्तव्यम्। अत्र वेदद्वारा तत्फलविवक्षायां लक्षितलक्षणा-

संकोचादिर्महान् क्लेशः। भाष्योक्तप्रक्रिया तु शृङ्गग्राहिकया विवक्षितं वक्तीति विशेषः। * तपस्विभ्योऽधिको योगी (४६) इति श्लोके यदुक्तम्—* अत्र तपश्शब्देन वानप्रस्थधर्माणां परिग्रहः; ज्ञानशब्देन ब्रह्मचारिधर्माणां, कर्मशब्देन गृहस्थधर्माणामिति, अयं विभागो निर्मूलः; सर्वेष्वाश्रमेषु स्वाश्रमाविरोधिनां तपोज्ञानकर्मणां संभवाद्यथाश्रुतविरोधाभावाद्वानप्रस्थादिलक्षणायाः प्रयोजनाभावाच्च। सप्तमोक्तचेतनाचेतनरूपप्रकृतिद्वयस्यापि ब्रह्मस्वरूपादत्यन्तभेदोऽस्माभिस्तत्रतत्र समर्थितः। अपरप्रकृतेरष्टधाविभागश्च यथाश्रुत एवोपपन्न इति स्थापितम्। यच्च * रसोऽहमप्सु (८) इत्यादिसामानाधिकरण्यनिर्वाहायोक्तं * समस्तकल्याणगुणसमष्टिविग्रहोऽहम्, अतो मदंशास्सर्वे सर्वत्र कल्याणगुणा इत्यभिप्रायेणाहेति; तत्र तावद्रसादिकल्याणगुणसमष्टिर्न भगवत्स्वरूपं, नचाप्राकृतस्य विग्रहस्य प्राकृतरसादिमयत्वम्; अतः परिशेषाद्रसादीनामेव विग्रहत्वमुक्तं स्यात्; तत्र समष्टिव्यष्टिभावेनांशत्वोक्तिर्निष्फला। तस्मात्तदुत्पत्तिताद्धीन्यादिभिरेव सामानाधिकरण्यगमनिका समीचीना। भेदाभेदनयेन कल्याणगुणतादात्म्यविवक्षायामकल्याणैरपि सर्वात्मनस्तस्य तादात्म्यात् समस्तहेयास्पदत्वादिदोषप्रसङ्गः। एवमुत्तरेष्वपि सामानाधिकरण्येषु भाव्यम्।

अष्टमे च * किं तद्ब्रह्म (१) इत्यादिप्रश्नानामेकाधिकारिवेद्यविषयत्वं तत्रैवास्माभिर्निराकृतम्। ब्रह्मायुर्दिवसकल्पना पौरुषाहोरात्रकल्पनामूलमहाकल्पप्रक्रियोपन्यासश्च स्मृत्यन्तरानुसारेणास्माभिरप्यभ्युपगमाद्धिरण्यगर्भदिवसावसाने महाप्रलयवादिनामयमुपालम्भः। * यं प्राप्य न निवर्तन्ते तद्धाम परमं मम (२१) इत्यस्य परमव्योमविषयतायां सिद्धान्तविरोधाभावेऽप्यत्र परिशुद्धात्मविषयत्वे युक्तयस्तत्रैवावस्थापिताः। यत्पुनः * अग्निर्ज्योतिः (२४) * धूमो रात्रिः (२५) इत्यत्राग्निधूमशब्दाभ्यामहोरात्रैकदेशभूतः कालविशेषो लक्ष्यत इति; तदसत्, तत्तच्छब्दैरत्र देवयानपितृयानाख्यगतिद्वयप्रत्यभिज्ञानात्, * नैते सृती (२७) इति निगमनात्, * यत्र काले (२३) इत्युपक्रमस्थकालशब्दस्य कालाभिमानिदेवतातिवाहिकभूयस्त्वविवक्षया स्थापितत्वाच्च। अतः उदगयनपूर्वपक्षाहःपूर्वाह्णसन्निपाते ब्रह्मविद्भिर्योगिभिरपुनरावृत्तये प्रयातव्यमिति नियमनमशक्यम्। दक्षिणायनापरपक्षापराह्णरात्रिषु प्रयातानां योगिनां चान्द्रमसज्योतिः प्राप्य पुनरावृत्तिप्रतिपादनमुत्तरेण श्लोकेन कृतमित्यप्यसत्, * निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च (ब्र. ४. २. १८), * अतश्चायनेऽपि दक्षिणे (१९) इत्यधिकरणाभ्यां दक्षिणायनरात्रिमृतस्यापि योगिनस्तैत्तिरीयोक्तप्रक्रियया चन्द्रसायुज्यपूर्वकं परब्रह्मप्राप्त्यपुनरावृत्त्योस्समर्थितत्वेनास्य श्लोकस्य साक्षाद्योगिव्यतिरिक्तधूमादिमार्गोचिताधिकारिविषयत्वव्यवस्थापनात्। यच्च कथं पुनरग्निज्योतिर्धूमशब्दयोर्यथोक्तकालविशेषपरत्वमवगम्यत इति परिचोदनापूर्वकमुक्तं, श्रुतिषु च स्मृतिषु च समस्तासूदगयनपूर्वपक्षाहःपूर्वाह्णानां सामान्यतो दैवकर्माङ्गत्वोपदेशात्प्रयाणकालानुसरणस्यापि दैवत्वाविशेषाच्छास्त्रान्तरेष्वनयोर्दैवकर्मत्वेन दक्षिणायनादिषु वर्जनप्रसङ्गादिति,............।

यत्पुनः, असमाहितचित्तानामपि सुकरं सुखावगमं क्षिप्रं फलं प्रति भगवत्प्रपत्तिप्रकारं वक्तुं भगवानुवाचेति नवमारम्भे व्याख्यातम्, तदपि पूर्वोक्तज्ञानिसाध्यानन्यभजनस्यैव प्रपञ्चनपरत्वप्रतीतेरपाकृतम्। यच्च * ज्ञानयज्ञेन चाप्यन्ये (१५) इति श्लोके प्रकल्पितं * सांख्ययोगाभ्यां समुच्चिताभ्यामुपासनमेकत्वेनोपासनं, विकल्पिताभ्यामुपासनं पृथक्त्वेनोपासनं, बुद्धियोगो वात्र ज्ञानशब्देन विवक्षितः; तत्राप्ययमर्थः—केचित्कर्मयोगबुद्धियोगाभ्यां समुच्चिताभ्यामुपासते; केचित्केवलेन कर्मयोगेन; अपरे केवलेन बुद्धियोगेनेत्येवं बहुधोपासते इति। अत्र सांख्ययोगादिप्रसञ्जकं न किंचिद्दृश्यते। * अहं क्रतुः (१६) इत्याद्यनन्तरविवरणग्रन्थानुसारेण एकत्वपृथक्त्वयोरुपास्यविषयत्वं सुस्पष्टम्।

* अनन्याश्चिन्तयन्तो माम् (२२) इत्यादौ तु, नचावश्यंभाविने योगक्षेमायापि मद्भक्तैरेकान्तिभिर्देवतान्तराणि धर्मान्तराणि वाऽपेक्षणीयानीत्यादिकं सर्वमङ्गीकृतमस्माभिः। **दशमे** च * विस्तरेणात्मनो योगं विभूतिं च (१८) इत्यत्र योगशब्दस्य भगवत्कर्मयोगविषयतया व्याख्यानमयुक्तम्; * पश्य मे योगमैश्वरम् (११. ८), * एतां विभूतिं योगं च (१०. ७) इत्यादिप्रत्यभिज्ञाविरोधात्, अनन्तरमस्मिन्नध्याये तद्विस्तरादर्शनाच्च। * मत्कर्मकृदित्याद्येकादशाध्यायान्तिमश्लोकस्तदुत्तरमित्यपि दूरव्यवधानात्तत्रापि विस्तरादर्शनाच्च निरस्तम्। विभूतिविशेषाणां कृत्स्नस्य च जगतस्स्वरूपैकदेशत्वेनांशतया सामानाधिकरण्यवर्णनमपि प्रागुक्तसदोषत्वादिप्रसङ्गप्रक्रियया परास्तम्। एवं श्रीविश्वरूपविग्रहस्यावयवत्वेन विश्वस्य वर्णनमपि प्राकृताप्राकृतविभागादवधूतम्। **द्वादशोक्त**स्याक्षरोपासनस्य भगवदुपासनाद्भेदस्स्ववाक्यस्वारस्यपुरुषोत्तमत्वादिप्रकरणान्तरैकरस्यादिभिस्साधितः। यत्पुनः, भेदव्यपदेशास्तु कथंचिदवस्थाभेदमाश्रित्य नेतव्याः; अवस्थाभेदश्चात्र निर्विशेषनिखिलवस्तुमात्ररूपता, आविर्भूतसमस्तकल्याणगुणसमष्टिरूपता च विवक्षिता, इति; तदेतदनेकविषयव्याघातविसंस्थुलमाकुमारमपहास्यम्। अन्यत्र च दूषणप्रपञ्चनादिहोपरम्यते। **त्रयोदशे** क्षेत्रज्ञविषये वक्तव्यं सर्वं पूर्वमेवोक्तम्। * यतश्च तदिति (३) पाठोऽप्रसिद्धः। तथा पाठेऽपि ज्ञानपरामर्शोऽस्वरसः। क्षेत्रस्य नित्यत्वेनाहेतुकत्वाद्धेतुर्न निर्दिष्ट इत्युक्तमिति चेत्सत्यमुक्तं, दुरुक्तं तु तत्, * महाभूतान्यहंकारः (५) इत्यादिना वक्ष्यमाणस्य क्षेत्रस्याव्यक्तव्यतिरिक्तस्य समस्तस्यानित्यत्वसंप्रतिपत्तेः, * तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम (भा. मो. ३३५. ३१) * अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते (,,. ३४७. ३१) इत्यादिभिर्नित्यस्याप्यव्यक्तस्य परब्रह्मण्येकीभावपृथग्भाववचनाच्च। यच्च * ब्रह्मसूत्रपदैश्चैव (४) इत्यत्रोक्तं—* क्षेत्रादितत्त्वव्यवस्थापनपराणि पञ्चशिखादिप्रणीतानि सूत्रपदानीति, तदप्यनादेशिकं, पञ्चशिखादिग्रन्थे ब्रह्मसूत्रप्रसिद्ध्यभावात्। यत्तु * मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते (१८) इति निगमनाद्भगवानेव * ज्ञेयं यत्तत् प्रवक्ष्यामि (१२) इत्यत्र ज्ञेयत्वेनोक्त इति; तन्न, * इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः (१८) इति निगमितानां त्रयाणामेतच्छब्देनानुवादात्, तत्र क्षेत्रज्ञानवत्कर्मवश्यक्षेत्रज्ञज्ञानस्यापि मोक्षोपयोगित्वोपपत्तेः, क्षेत्रादिज्ञानरूपस्यापि शास्त्रार्थस्य सर्वप्रशासितुर्भगवतस्समाराधनरूपत्वेन * मद्भक्त एतद्विज्ञाय (१८) इत्यनेन विरोधाभावाच्च।

यदपि **चतुर्दशे** * मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् (३) इत्यत्र परावरप्रकृत्योर्जीवाव्यक्तसंज्ञयोरंशो मिलितो गर्भ इत्युक्तं, तत्र ब्रह्मशब्देनाव्यक्तस्य निर्दिष्टत्वात्तत्र तदंशाधानवचनस्य प्रयोजनाभावात्, * क्षेत्रक्षेत्रज्ञसंयोगात् (१३. २६) इत्युक्तस्य चात्र प्रत्यभिज्ञानात्, गर्भशब्देन चेतनविवक्षैव युक्ता। * सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते। ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत॥ (११) इति श्लोके प्रकाशज्ञानशब्दयोः बाह्यान्तरेन्द्रियवृत्तिविषयतया व्यवस्थापनमशक्यं, विपरिवर्तेऽपि विरोधाभावाद्वक्ष्यमाणराजसतामसज्ञानव्यवच्छेदार्थं प्रकाशशब्दप्रयोगोपपत्तेश्च। रजःकार्यश्लोके लोभप्रवृत्तिर्लोभोद्भव इति समस्ततया व्याख्यानमयुक्तं, तथाऽनध्ययनात्, * अप्रकाशोऽप्रवृत्तिश्चेति तमःकार्यश्लोके सत्त्वकार्यप्रकाशनिषेधवद्रजःकार्यप्रवृत्तिनिषेधस्यापि पृथगुपन्यासात्तत्प्रतियोगितया प्रवृत्तेरिह पृथङ्निर्देशोपपत्तेः, * आरम्भः कर्मणामित्यस्य तु गोवलीवर्दन्यायेन निर्वाहात्। **पञ्चदशे**ऽपि * प्रपद्ये यतः प्रवृत्तिः (४) इति पाठोऽप्रसिद्धः। यदपि * ममैवांशो जीवलोके जीवभूतस्सनातनः (७) इत्यत्र संसारिव्यतिरिक्तस्सर्वेश्वरस्यैव कश्चिदंशो जीवशब्दार्थतया प्रथमं व्याख्यायि; तत्र यद्यपि अर्थविरोधो नास्ति, तथाऽपि विभूतिप्रकरणमध्यपाठात्, अन्तर्यामिणस्तु * सर्वस्य चाहं हृदि सन्निविष्टः (१५) इत्यनन्तरमेव वक्ष्यमाणत्वात्, परमात्मांशविशेषे च जीवशब्दस्य प्रसिद्धिप्रकर्षाभावात्, मानवादिशास्त्रान्तरप्रसिद्धेरपि * जीवभूतां महाबाहो (७. ५) इति स्वशास्त्रप्रसिद्धेर्बलवत्त्वेन स्वीकर्तुमुचितत्वात्,

*विषयानुपसेवते (९) इत्यत्र च प्रतिकूलोदासीनभोगेभ्यस्संकोचस्य क्लिष्टत्वात्, उत्क्रमणाद्युक्तेः, हृदयव्याप्तेरन्तर्यामिणः स्वारस्यात्, इन्द्रियाधिष्ठानेश्वरशब्दादेश्च तत्तन्नियन्तरि संसारिण्यप्युपपत्तेः, *आत्मन्यवस्थितम् (११) इत्यत्र चात्मशब्दस्य नानार्थस्य प्रकरणोचितार्थपरिग्रहोपपत्तेः, भवदुक्ता द्वितीयैव योजना भाष्यकृदभिमता समीचीनेति मन्यामहे। *वेदैश्च सर्वैरहमेव वेद्यः (१५) इत्यादौ वेदवेदान्तशब्दयोर्वक्तव्यं प्रागेवोक्तम्। *कूटस्थोऽक्षरः (१६) इत्यस्य च जीवभूतपरप्रकृतिव्यतिरिक्ते मुक्ते वृत्तिश्च साधुतरा।

यत्तु **षोडशे** प्रोक्तम्—प्रकारान्तरेणाप्यर्जुनस्य शोकमपनेतुं देवप्रकृतीनां रूपं, तेषां परमकल्याणप्रत्यासक्तिः, अर्जुनस्य दैवप्रकृतित्वम्, आसुरप्रकृतीनां रूपं, तन्निमित्तता च सकलस्यानर्थजातस्योक्तमिति; तदयुक्तं, शास्त्रारम्भेऽर्जुनस्य स्वप्रकृत्यनिर्धारणमूलशोकप्रसङ्गाभावात्, अत्र तत्प्रसङ्गे तदपनोदनस्यापि प्रासङ्गिकस्य युक्तत्वात्; अतः *तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थिताविति निगमनानुसारेण भगवद्यामुनेयोक्तप्रक्रियया शास्त्रवश्यतैवाध्यायप्रधानार्थः। **सप्तदशे** श्रद्धात्रैविध्यं शास्त्रीयेतरविषयमित्ययुक्तम्; अनन्तरम् *अशास्त्रविहितम् (५) इति पृथगभिधानात्। नच तत्र श्रद्धात्रैविध्यमपि समुच्चेतुं शक्यं, तदनुक्तेस्तत्क्लृप्त्यनुपपत्तेश्च। *ॐ तत्सदिति निर्देशः (२३) इत्यत्र मुमुक्षूणां यज्ञादिषु किंचिदङ्गं तेषां वीर्यातिशयार्थमुपदिश्यत इत्ययुक्तम्, अमुमुक्षूणामपि तदविरोधाद्विशेषकाभावाच्च। अतो *लक्षणं शास्त्रसिद्धस्य त्रिधा (गी. सं. २१) इत्ययमेवार्थ उचितः। **अष्टादशे** त्यागस्वरूपादिविवेके नातीव विरोधः, चरमश्लोके वक्तव्यं तु सर्वं सूक्ष्मस्माभिः। एवमन्येष्वपि भूतेषु भविष्यत्सु च श्रीमद्गीताभाष्येषु भगवद्यामुनाचार्यभाष्यकार[हृदया]मतानुसारेण दिङ्मोहः प्रशमयितव्यः; क्षुद्रस्खलितेष्वदूरविप्रकृष्टयोजनाभेदेषु चोदासितव्यमित्यलमतिप्रसङ्गेन।

पिशाचरन्तिदेवगुप्तशङ्करयादवप्रकाशभास्करनारायणार्ययज्ञस्वामिप्रभृतिभिः स्वंस्वं मतमास्थितैः परश्शतैर्भाष्यकृद्भिः अस्मत्सिद्धान्ततीर्थकरैश्च भगवद्यामुनाचार्यभाष्यकारादिभिरविगीतपरिगृहीतोऽयमत्र सारार्थः—भगवानेव परं तत्त्वम्, अनन्यशरणैर्यथाधिकारं तदेकाश्रयणं परमधर्मः—इति ॥ ६६ ॥

**इदं ते नातपस्काय नाभक्ताय कदाचन। नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७**

**भा॥ इदं ते परमं गुह्यं शास्त्रं मयाऽऽख्यातम्, अतपस्काय—अतप्ततपसे त्वया न वाच्यम्; त्वयि वक्तरि मयि चाभक्ताय कदाचन न वाच्यम्, तप्ततपसे चाभक्ताय न वाच्यमित्यर्थः। न चाशुश्रूषवे—भक्तायाप्यशुश्रूषवे न वाच्यम्। नच मां योऽभ्यसूयति—मत्स्वरूपे मदैश्वर्ये मद्गुणेषु च कथितेषु यो दोषमाविष्करोति, न तस्मै वाच्यम्। असमानविभक्तिनिर्देशस्तस्यात्यन्तपरिहरणीयताज्ञापनाय ॥ ६७ ॥**

**ता॥** एवं स्वोपदेशेन प्रतिष्ठिततत्त्वहितज्ञानस्यार्जुनस्य कर्तव्यविशेषोपदेशव्याजेन संप्रदायविधिसिद्ध्यर्थमस्मिन् शास्त्रेऽनधिकारिणस्तावद्व्यनक्ति—*इदं त इति श्लोकेन। *इदमिति सामान्येन निर्दिष्टं पूर्वापरग्रन्थस्थैः पदैर्विवृणोति—**इदं ते परमं गुह्यं शास्त्रं मयाऽऽख्यात**मिति। अत्र तेशब्दः *इति ते ज्ञानमाख्यातमिति श्लोकादाकृष्टः; श्लोकस्थस्य तु तेशब्दस्य **त्वये**ति व्याक्रिया। अतपस्कशब्देन तपःप्रारम्भमात्रे कृतेऽपि श्रवणानधिकारित्वं विवक्षितमित्याह—**अतप्ततपस** इति। *यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ (श्वे. ६. २३) इति श्रुत्यनुसारेणाह—**त्वयि वक्तरि मयि चाभक्ताये**ति। अभक्तत्वे विशेषसंकोचकाभावात्, *मद्भक्तेष्वभिधास्यतीत्यनन्तरं भक्तावादरदर्शनाच्च, कदाचनेत्यनेन तपसि सम्यगनुष्ठितेऽपीति विवक्षितमित्याह—**तप्ततपसे चाभक्ताये**ति। प्रत्येकपरिहरणीयत्वाय च नञ्प्रयोगावृत्तिः।

उत्तरोत्तरतीव्रत्वतात्पर्येण क्रमविशेष इत्यभिप्रायेणाह—**भक्तायाप्यशुश्रूषव** इति । अत्रापि संकोचहेत्वभा[वः]वात् पूर्ववत् । *प्रब्रूहि तं श्रद्दधानाय मह्यम् (क. १. १३) इति श्रुत्या च शुश्रूषाप्राधान्यमवगतम् । मामभ्यसूयति—मह्यमभ्यसूयतीत्यर्थः । *क्रुधद्रुहेर्ष्यासूयार्थानामित्यत्र, *यं प्रति कोपः (अष्टा. १. ४. ३७) इति कर्मत्वस्यापि सिद्धत्वात् द्वितीयाऽत्रानपोदिता । मां प्रत्यसूयतीत्युक्तं भवति । विषयतो लक्षणतश्च असूयां व्यनक्ति—**मत्स्वरूप** इत्यादिना । *मामिति सप्रकारपरामर्श इति भावः । प्रक्रमानुरोधेन *नचाभ्यसूयव इति वक्तव्ये प्रक्रमभङ्गेन विरूपवाक्यकरणं केनाभिप्रायेणेत्यत्राह—**असमाने**ति । *असूयकायानृजवे (भा. मो. २४६. १७), *असूयकाय मां मा दाः (मनु. २. ११४) इत्यादिभिरसूयामात्रवते प्रवचनं निषिद्धम् । भगवत्यभ्यसूयावते तु प्रवचनमत्यन्तपरिहरणीयमिति भावः । *नच....वाच्यम् इत्यनेनानधिकारिषु प्रवचने प्रत्यवायस्सूचितः । अत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पोऽन्यत्र दृष्टः ; भक्तादेस्तु न तथा ; अतो भक्त्यादिरहिताय न मेधाविने नापि तपस्विने वाच्यम् ; सर्वगुणयोगेऽपि भगवत्यभ्यसूयावते न वाच्यमित्युक्तं भवति ॥ ६७ ॥

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८**

**भा ॥ इदं परमं गुह्यं मद्भक्तेषु योऽभिधास्यति—व्याख्यास्यति, सः मयि परमां भक्तिं कृत्वा मामेवैष्यति ; न तत्र संशयः ॥ ६८ ॥**

**ता ॥** अथाधिकारिविशेषेष्ववश्यवक्तव्यत्वं तेषु वचनस्यापवर्गाख्यफलपर्यवसानं चोच्यते—*य इदमिति श्लोकेन । *मद्भक्तेष्वित्यनेनैवातपस्कत्वादिदोषा दूरोत्सारिताः, सितमनसां तेषां तदसंभवात् । *श्रावयेच्चतुरो वर्णान् (भा. मो. ३३५. ४८) इत्येतावता सर्वेषु वक्तव्यम्, तेष्वेव मद्भक्ता एव श्रवणाधिकारिण इत्युक्तं भवति । अत्राभिधास्यतीत्यर्थश्रावणपर्यन्तमित्याह—**व्याख्यास्यती**ति । यद्वृत्तवशात् *स इत्यध्याहृतम् । योग्येषु व्याख्यानमपि कर्मयोगादिकोटौ, भक्तियोगाङ्कुरे वा निविष्टं परभक्तिं जनयतीति *भक्तिं मयि परां कृत्वेत्युच्यते । *मामेवेत्यवधारणेन मद्गीताव्याख्यायिनो न क्षुद्रफलेषु सङ्गं जनयामीत्यभिप्रेतम् । फलितमाह—**न तत्र संशय** इति । *असंशय इति संशय एव वा निषिध्यते ॥ ६८ ॥

**नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता नच मे तस्मादन्यः प्रियतरो भुवि ॥ ६९**

**भा ॥ सर्वेषु मनुष्येष्वितःपूर्वं तस्मादन्यो मनुष्यो मे न कश्चित्प्रियकृत्तमोऽभूत् ; इत उत्तरं च न भविता । अयोग्यानां प्रथममुपादानं योग्यानामकथनादपि तत्कथनस्यानिष्टतमत्वात् ॥ ६९ ॥**

**ता ॥** स्वशास्त्रव्याख्यानस्य स्वप्राप्तिसाधनत्वे द्वारमुच्यते—*नच तस्मादिति श्लोकेन । प्रियकृत्तमत्वप्रियतरत्वयोर्हेतुकार्यभावेन *भवितेत्युपात्तक्रिययैवान्वये संभवत्यपि कालत्रयवर्तिनिषेधेऽर्थगौरवेण तात्पर्यसिद्ध्यर्थं—**मनुष्येष्वितः पूर्व**मित्याद्युक्तम् । ननु शास्त्रस्याधिकारी अपेक्षितः, अतस्स तावद्वक्तव्यः ; अनधिकारी तु तत एवार्थाद्व्युदस्यते ; प्रधानतमादधिकारिणोऽनन्तरं वा व्यवच्छेद्यतया अनधिकारी वक्तव्यः ; इह तु तद्वैपरीत्ये किं निबन्धनमित्यत्राह—**अयोग्याना**मिति । **तत्कथनस्य**—अयोग्यान्प्रति कथनस्येत्यर्थः । **अनिष्टतमत्वात्**—अनिष्टतमत्वज्ञापनार्थमित्यर्थः । योग्यानामकथनस्यानिष्टत्वं *प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् (मु. १. २. १३) इति ब्रह्मविद्याप्रवचनस्य वैधत्वाल्लभ्यते । प्रोवाच—प्रब्रूयादित्यर्थः, *छन्दसि लुङ्लङ्लिटः (अष्टा. ३. ४. ६) इति विधानात् । अन्यथा *स गुरुमेवाभिगच्छेदिति प्रथमेन वाक्येनानन्वयात् ॥ ६९ ॥

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टस्स्यामिति मे मतिः ॥** ७०

भा ॥ य इममावयोर्धर्म्यं संवादमध्येष्यते, तेन ज्ञानयज्ञेनाहमिष्टस्स्यामिति मे मतिः—**अस्मिन् यो ज्ञानयज्ञोऽभिधीयते, तेनाहमेतदध्ययनमात्रेणेष्टस्स्यामित्यर्थः** ॥ ७० ॥

**ता** ॥ एवमुपदेष्टुः फलमुक्तम्; अथ शब्दतोऽर्थतश्च गुरुसकाशादध्येतुः फलमुच्यते—* अध्येष्यत इत्यादिना श्लोकद्वयेन । * शृणुयादिति परैरधीयमानपाठश्रवणमात्रं वा । * अध्येष्यते इति—नहि सर्वज्ञस्य भगवतो भविष्यद्भारतनिबन्धावेक्षणेन स्वसंवादाध्ययनभावित्वोक्तिः; अपितु भूतावेक्षणेन । महाभारतं हि धृतराष्ट्राद्युत्पत्तेः प्रागेव भगवत्प्रसादलब्धदिव्यचक्षुषा भगवता व्यासेन निबद्धम्; अनुज्ञातं च शिष्येभ्यः; तैश्च * नारदोऽश्रावयद्देवानसितो देवलः पितॄन् । गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥ (भा. आ. १. ११३) इति मानुषव्यतिरिक्तेषु लोकेषु प्रकाशितम् । मानुषे तु लोके जनमेजयपुरस्कारेण प्रकाशिष्यते । तदपेक्षयोक्तम्—* अध्येष्यत इति । उपनिषत्सारत्वादध्ययनोक्तिः । कथितं चाश्रमवर्णने कविभिः * अनवरताधीतभगवद्गीतम् (काद) इति । * श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप (४.३३) इति यः प्रथमषट्के ज्ञानयज्ञोऽभिहितः, नासावत्र विवक्षितः; अपितु भक्तियोगप्रकरणे *ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते (९. १५) इति यो भगवदनुसंधानविशेषरूपो ज्ञानयज्ञ उक्तः, स एवात्र शास्त्रसारभूतो विवक्षित इत्यभिप्रायेणाह—**अस्मिन् यो ज्ञानयज्ञ** इति । विधिजपोपांशुमानसानां ज्ञानयज्ञो मानसत्वाद्विशिष्टः । **एतदध्ययनमात्रेणे**ति—अयमभिप्रायः—* योऽश्वमेधेन यजते, य उ चैनमेवं वेद (अश्व. २) * यंयं क्रतुमधीते तेनतेनास्येष्टं भवति (य. आ. २. १५) इत्यादिषु यथा तत्तत्क्रत्वध्ययनस्य तत्तुल्यफलता, तथा अत्रापि ज्ञानयज्ञवद्भगवत्प्रीतिजनकत्वं तद्गीताध्ययनस्य—इति ॥ ७० ॥

**श्रद्धावाननसूयुश्च शृणुयादपि यो नरः । सोऽपि मुक्तश्शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥** ७१

भा ॥ श्रद्धावाननसूयुश्च यो नरश्शृणुयादपि, तेन **श्रवणमात्रेण सोऽपि भक्तिविरोधिपापेभ्यो मुक्तः पुण्यकर्मणां मद्भक्तानां लोकान्—समूहान् प्राप्नुयात्** ॥ ७१ ॥

**ता** ॥ *श्रद्धावाननसूयुश्चेति चकारादत्रानुषक्तानामपि प्रागुक्तानां प्रणिपातपरिप्रश्नसेवानां ग्रहणम् । *शृणुयादित्यनेन आचार्यसकाशादिति गम्यते । श्रूयते हि—* तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् (मु. १. २. १२) इति । * आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत् (छा. ४. ९. ३) इति च । एतेन स्वयं ग्रन्थनिरीक्षणमन्यायेनान्यस्माद्ग्रहणं च व्यवच्छिद्यते । सोऽपीति विलम्बस्सूच्यते । तेन **भक्तिविरोधिभ्यो मुक्त** इत्युक्तम् । अन्यथा विध्यन्तरवैयर्थ्यादिप्रसङ्ग इति भावः । अर्थज्ञानादिमतश्च कैमुत्यमपिशब्देन व्यञ्जितम् । प्रवचनपठनयोर्मोक्षैकान्तफलस्य पूर्वमुक्तत्वात्सहभावेनाग्रचप्रायन्यायाच्छ्रवणेऽपि तादृशफलं भगवदभिप्रेतं स्वीकर्तुमुचितम्; नतु नरककल्पस्वर्गादि, तत्प्राप्तेरनभिमतत्वात् । अतो मद्भक्तानां **लोकान्समूहानि**त्युक्तम् । अत्र पाठश्रवणादिप्रीतो भगवान् स्वभक्तान् प्रापयति । भगवद्भक्तानां प्राप्तिर्हि योगोपदेशादिद्वारा मोक्षाय स्यात् ॥ ७१ ॥

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ॥** ७२

भा ॥ **मया कथितमेतत्पार्थ त्वयाऽवहितेन चेतसा कच्चिच्छ्रुतम्, तवाज्ञानसंमोहः कच्चित्प्रनष्टः, येनाज्ञानेन मूढो न योत्स्यामीत्युक्तवान्** ॥ ७२ ॥

**ता** ॥ अथार्जुनस्य विदिताशयोऽपि भगवानादरेणाविस्मरणायोपदेशसाफल्यं जिज्ञासमान इव पृच्छति—**कच्चिदिति**। एतदित्यर्थपर्यन्तत्वात् श्रुतमिति अर्थधीपर्यन्तम्। मत्कथितमेतत्किं निरर्थकमित्यभिप्रायेणैतच्छब्द इत्याह—**मया कथितमेतदि**ति। अज्ञानसंमोहः कच्चित्प्रनष्ट इति श्रुतफलानुयोगः। अज्ञानहेतुकं भ्रान्तिज्ञानमिहाज्ञानसंमोहः। येनाज्ञानेन मूढ इत्यस्याज्ञानसंमोह इति प्रतिनिर्देशे तेनाज्ञानेन जनितसंमोह इत्यन्वयो भाव्यः ॥ ७२ ॥

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत। स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥** ७३

भा ॥ मोहः—विपरीतज्ञानम्, त्वत्प्रसादान्मम तद्विनष्टम्। स्मृतिः—यथावस्थिततत्त्वज्ञानम्, त्वत्प्रसादादेव तच्च लब्धम्। अनात्मनि प्रकृतावात्माभिमानरूपो मोहः, परमपुरुषशरीरतया तदात्मकस्य कृत्स्नस्य चिदचिद्वस्तुनः अतदात्माभिमानरूपश्च, नित्यनैमित्तिकरूपस्य कर्मणः परमपुरुषाराधनतया तत्प्राप्त्युपायभूतस्य बन्धकत्वबुद्धिरूपश्च सर्वो विनष्टः। आत्मनः प्रकृतिविलक्षणत्वतत्स्वभावरहितताज्ञातृत्वैकस्वभावतापरमपुरुषशेषतातन्नियाम्यत्वैकस्वरूपताज्ञानम्, निखिलजगदुद्भवस्थितिप्रलयलीलाशेषदोषप्रत्यनीककल्याणैकस्वरूपस्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृतिसमस्तकल्याणगुणगणमहार्णवपरब्रह्मशब्दाभिधेयपरमपुरुषयाथात्म्यज्ञानं च; एवंरूपपरावरतत्त्वयाथात्म्यविज्ञानतदभ्यासपूर्वकाहरहरुपचीयमानपरमपुरुषप्रीत्येकफलनित्यनैमित्तिककर्मनिषिद्धपरिहारशमदमाद्यात्मगुणनिवर्त्यभक्तिरूपतापन्नपरमपुरुषोपासनैकलभ्यो वेदान्तवेद्यः परमपुरुषो वासुदेवस्त्वमिति ज्ञानं च लब्धम्। ततश्च बन्धुस्नेहकारुण्यप्रवृद्धविपरीतज्ञानमूलात्सर्वस्मादवसादाद्विमुक्तो गतसंदेहः स्वस्थः स्थितोऽस्मि। इदानीमेव युद्धादिकर्तव्यताविषयं तव वचनं करिष्ये; यथोक्तं युद्धादिकं करिष्य इत्यर्थः ॥ ७३ ॥

**ता** ॥ अथ कृतज्ञतांशं व्यञ्जयन्नर्जुनश्श्रुतफलसिद्ध्या प्रतिवक्ति *नष्टो मोह इति। अर्जुनेनास्यार्थस्येतःपूर्वमनवगमाद्वाक्येन प्रथमं स्मृतेरनुदयात्तन्मूलभूतशब्दजन्योऽनुभव इह स्मृतिशब्देन लक्ष्यत इत्याह—**स्मृतिर्यथावस्थिततत्त्वज्ञान**मिति। *स नो देवश्शुभया स्मृत्या संयुनक्तु (ना) इत्यस्य मन्त्रस्य *स नो बुद्ध्या शुभया संयुनक्तु (श्वे. ३. ४) इति शाखान्तरे पाठदर्शनात्स्मृतिबुद्धिशब्दावदूरविप्रकर्षेणैकार्थौ युक्ताविति भावः। निवर्त्यमोहस्वरूपं चोपदेशस्यामूलचूडपरामर्शेन व्यनक्ति—**अनात्मनी**त्यादिना। प्रकृतिविलक्षणत्वं स्वप्रकाशत्वादिभिः; विकाराद्यभावात्तत्स्वभावरहितता। स्वस्थः प्रकृतिस्थ इत्यर्थः। उपदेशवचनस्य स्वरूपेणाननुष्ठेयत्वात्तेन तत्प्रतिपाद्यं लक्ष्यत इत्याह—**यथोक्तं युद्धादिक**मिति। एवं चाभिप्रायः। आदिशब्देन भक्तियोगपर्यन्तग्रहणम्। अननुष्ठानं तु स्मृतिभ्रंशात्; स्मृतिभ्रंशादिति हि वक्ष्यति—*यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात्। तत्सर्वं पुरुषव्याघ्र भ्रष्टं मे नष्टचेतसः ॥ (भा. आश्व. १७. ६) इति। प्रतिवक्ष्यति च भगवान्—*श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्। धर्मं स्वरूपिणं पार्थ सर्वलोकांश्च शाश्वतान्। अबुद्ध्या यन्नगृह्णीयास्तन्मे सुमहदप्रियम् ॥....सहि धर्मस्सुपर्याप्तो ब्रह्मणः [परि]पदवेदने। (१२) इतीति ॥ ७३ ॥

**भा** ॥ **धृतराष्ट्राय स्वपुत्राः पाण्डवाश्च युद्धे किं करिष्यन्तीति पृच्छते**

**संजय उवाच—**

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः। संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥** ७४

भा ॥ इति—एवं वासुदेवस्य—वसुदेवसूनोः, पार्थस्य च—तत्पितृष्वसुः पुत्रस्य च महात्मनो महाबुद्धेस्तत्पदद्वन्द्वमाश्रितस्येमं रोमहर्षणमद्भुतं संवादमहं यथोक्तमश्रौषम्—श्रुतवानहम् ॥ ७४ ॥

ता ॥ *मामकाः पाण्डवाश्चैव किमकुर्वत संजय (१.१) इति प्रश्ने कृत्स्नं संगमयतीत्याह—**धृतराष्ट्रायेति**। *महात्मनः इत्युक्तं व्यनक्ति—**तत्पदद्वन्द्वमाश्रितस्ये**ति । * कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः (भा. द्रो. १८३. २४) इति ह्यन्यत्रोक्तम् । अत्रच * शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् (२. ७) इति । अद्भुतत्वातिशयाद्रोमहर्षणत्वम् । **यथोक्तमश्रौषमिति** । यथा ताभ्यामुक्तम्, तत्र ममाश्रुतांशो नास्तीत्यर्थः । एतेन यथार्थदर्शित्वं व्यञ्जितम् । यद्वा—यथा तव मयोक्तम्, एवमेव श्रुतवानस्मि, ततश्च यथादृष्टार्थवादित्वं व्यञ्जितं भवति । अहमश्रौषमिति योजना ॥ ७४ ॥

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् । योगं योगेश्वरात्कृष्णात्साक्षात्कथयतस्स्वयम् ॥ ७५**

भा ॥ व्यासप्रसादात्—व्यासानुग्रहेण दिव्यचक्षुश्श्रोत्रलाभात् एतत्परं योगाख्यं गुह्यं योगेश्वरात्—ज्ञानबलैश्वर्यवीर्यशक्तितेजसां निधेर्भगवतः कृष्णात् स्वयमेव कथयतः साक्षाच्छ्रुतवानहम् ॥ ७५ ॥

ता ॥ मन्दस्य मोहनकालुष्यनिवृत्तिलक्षणप्रसादस्यात्राभावात्—**व्यासानुग्रहेणे**त्युक्तम् । देवैरप्यदृश्यस्य श्रीविश्वरूपस्य दर्शनार्थं दूरस्थवाक्यश्रवणार्थंच अनुग्रहावान्तरव्यापारमाह—**दिव्यचक्षुश्श्रोत्रलाभा**दिति । अतीन्द्रियादिग्रहणसामर्थ्यादिमात्रेणात्र दिव्यत्वम् । एतदिति नपुंसकनिष्पत्तये योगशब्दं विशेषणीकरोति—**योगाख्य**मिति । परं गुह्यमित्यश्रवणयोग्यताभिप्रायम् । तथाभूतमपि हि मया श्रुतमिति व्यासमाहात्म्यव्यञ्जनम् । * योगेश्वरादित्यत्र योगशब्दः कल्याणगुणयोगपरः, * एतां विभूतिं योगंच (१०. ७) इति प्रागुक्तवदित्याह—**ज्ञाने**ति । स्वयमेव कथयतः, नतु परैर्वा [चितात्] चयत इत्यर्थः । तेन वक्तृवैलक्षण्योक्तिः । यथा * पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम् (भा. मो. ३५९. ६८) इति । **साक्षाच्छ्रुतवान**हमिति—न तु विवस्वदर्जुनादितच्छिष्यद्वारेत्यर्थः । यद्वा दूरस्थोऽपि प्रत्यक्षं श्रुतवानिति ॥ ७५ ॥

**राजन् संस्मृत्यसंस्मृत्य संवादमिममद्भुतम् । केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६**

भा ॥ केशवार्जुनयोरिमं पुण्यमद्भुतं संवादं साक्षाच्छ्रुतं स्मृत्वा मुहुर्मुहुर्हृष्यामि ॥ ७६ ॥

ता ॥ अद्भुततरत्वमाह—* राजन्नित्यादिना श्लोकद्वयेन । पुण्यं—श्रवणमात्रेणापि ज्ञानयज्ञादिवत्पावनम् । अद्भुतं—शब्दतोऽर्थतश्च आश्चर्यावहम् ॥ ७६ ॥

**तच्च संस्मृत्यसंस्मृत्य रूपमत्यद्भुतं हरेः । विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः ॥ ७७**

भा ॥ तच्चार्जुनाय प्रकाशितमैश्वरं हरेरत्यद्भुतं रूपं मया साक्षात्कृतं संस्मृत्यसंस्मृत्य हृष्यतो मे महान् विस्मयो जायते ; पुनःपुनश्च हृष्यामि ॥ ७७ ॥

ता ॥ तच्च रूपमित्येतत्सर्वजनप्रत्यक्षवसुदेवतनयरूपाद्व्यवच्छेदार्थमित्याह—**अर्जुनाय प्रकाशितमैश्वरं रूप**मिति । * संस्मृत्येत्यस्य समानकर्तृकत्वाय हृष्यामीति समभिव्याहारानुसारेण **हृष्यत** इत्युपात्तम् । दृष्टं च फलं महत्तरमित्यस्य श्लोकस्य भावः ॥ ७७ ॥

भा ॥ किमत्र बहुनोक्तेन—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥** ७८

॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु **मोक्षसंन्यासयोगो** नाम अष्टादशोऽध्यायः ॥ १८ ॥

भा ॥ यत्र योगेश्वरः—कृत्स्नस्योच्चावचरूपेणावस्थितस्य चेतनस्याचेतनस्य च वस्तुनो ये ये स्वभावयोगाः, तेषां सर्वेषां योगानामीश्वरः, स्वसंकल्पायत्तस्वेतरसमस्तवस्तुस्वरूपस्थितिप्रवृत्तिभेदः कृष्णः वसुदेवसूनुः, यत्र च पार्थो धनुर्धरः तत्पितृष्वसुः पुत्रः तत्पदद्वन्द्वैकाश्रयः; तत्र श्रीर्विजयो भूतिर्नीतिश्च ध्रुवा—निश्चला; इति मतिर्ममेति ॥ ७८ ॥

इति श्रीभगवद्रामानुजविरचिते श्रीमद्गीताभाष्ये अष्टादशोऽध्यायः ॥ १८ ॥

**ता ॥** सुयोधनविजयबुभुत्सया कृतस्य प्रश्नस्य सहसा साक्षादुत्तरं वक्तुमशक्नुवन् *अर्थोक्ताः कुरुपाञ्चालाः इति मत्वा गूढाभिसंधिस्संवादाद्भुतत्वादिकमुक्तवान् । तावताऽप्यजानतस्सर्वात्मनाऽन्धस्य साक्षादुत्तरमाहेत्याह—**किमत्र बहुनेति**। अनभिप्रायज्ञस्य ते भगवता अर्जुनायाध्यात्मोपदेशवैश्वरूप्यप्रकाशनादिभिः पाण्डवविजयसूचकैरलम्; सूचितमेव स्पष्टं वदामीत्युच्यत इति भावः । यत्र—यस्मिन् पक्ष इत्यर्थः । योगेश्वरशब्दस्य *कथयतस्स्वयमित्यत्राततमत्वाय प्रागुक्तादर्थादर्थान्तरकथनम्, अनेकार्थसंभवात्प्रकरणानुगुण्येन तत्तद्विशेषपरिग्रहोपपत्तेश्च । ईश्वरशब्दस्य नियन्तव्यसाकाङ्क्षतया योगशब्देन नियन्तव्यविशेषसमर्पणं च युक्ततमम्; अतो विवक्षितविजयाद्यनुगुणमर्थमाह—**कृत्स्नस्येत्यादिना**। तत्र फलितमाह—**स्वसंकल्पेति** । अवस्थान्तरेऽपि नामभूतः कृष्णशब्दोऽत्रावतारदशायामपि योगेश्वरत्वेनाजहत्स्वस्वभावत्वसूचनार्थ इत्यभिप्रायेणाह—**वसुदेवसूनुरिति** । पार्थसंबन्धविशेषोऽप्यनेन सूचितः । अत एवहि पार्थशब्द एवं व्याख्यायते—**तत्पितृष्वसुः पुत्र** इति । *विसृज्य सशरं चापम् (१. ४७) इति प्रागुक्तावस्थाव्यतिरेकपरोऽत्र धनुर्धरशब्दः भगवदनुशिष्टयथोक्तकरणार्थतया गाण्डीवाख्यधनुर्ग्रहणद्योतनार्थः । तत्र विशिष्टोपकरणविशेषवीर्यादिविशेषोऽप्यन्तर्नीतः । *पार्थस्य च महात्मनः (१८. ७४) इति प्रागुक्तमहामतित्वं पार्थशब्देन सूचितमित्याह—**तत्पदद्वन्द्वैकाश्रय** इति । नह्यसौ त्वत्पुत्रवत्कृष्णमभ्यर्थ्य निस्साराल्पपरिकरत्वेन परिजग्राहेति भावः । *तत्रेति सामान्यनिर्देशः प्रत्यक्षपारुष्यपरिहारार्थः । श्रीः—राज्यादिभोग्यसमृद्धिरूपा । विजयः—शत्रुनिरासः । तत्र ध्रुवः इति विपरिणामः । भूतिः—ऐश्वर्यम्, *विभूतिर्भूतिरैश्वर्यम् (नाम. १. स्व) इति पर्यायपाठात् । तेनास्य पुरुषस्य प्रभुत्वादिशक्तियोगो विवक्षितः । उत्पन्नायास्समृद्धेरुत्तरोत्तराभिवृद्धिरूपभवनं वा भूतिः, नीतिः—अर्थशास्त्रजन्यकर्तव्यनिश्चयः; चोदितधर्माविरुद्धा वा वृत्तिः । पटुप्रज्ञैरवहितैरपि युष्माभिश्चतुर्भिरप्युपायैरकम्पनीयो नयो ध्रुवशब्दाभिप्रेत इत्याह—**निश्चलेति** । *मतिर्ममेत्यस्यान्वयार्थमितिशब्दोऽध्याहृतः । ममैव मतिः—* [विद्या]शृणु राजन्न ते विद्या मम विद्या महीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥....मायां न सेवे भद्रं ते न वृथाधर्ममाचरे । शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ (भा. उ. ६८. २-५) इति । अतस्ते ध्रुवा नैवं मतिः, मम त्वेवं समीचीना मतिस्संजातेति भावः ॥ ७८॥

कृष्णस्तत्त्वं परं तत्परमपि च हितं तत्पदैकाश्रयत्वं शास्त्रार्थोऽयं च षट्कैस्त्रिभिरिह कथितस्तत्र पूर्वत्र षट्के ।
भक्त्यर्थस्वात्मदृष्टेः करयुगलदशा मध्यमे भक्त्युपायः स्वोक्तानुष्ठानवृत्तिं द्रढयितुमखिलं प्रोक्तमन्तेऽप्यशोधि ॥

अध्यायैश्शिष्यमोहस्तदुपशमविधिः कर्मयोगोऽस्य भेदास्तत्सौकर्यादियोगस्तदुचितमहिमा भूतिकामादिभेदः ।
भक्तिस्तन्मूलभूमा भजनसुलभता भक्तिशैघ्र्यादि जीवः त्रैगुण्यं शासिताज्ञा तदधिगमपरस्सारवर्गश्च गीताः ॥

.... .... .... .... .... .... .... .... .... .... .... ....

§ इत्यादिस्सर्वयोगो भगवति परमैकान्त्यसंप्रीतियुक्तं .... .... .... .... .... .... ।
[ए]येषामन्योन्ययोगो भवति च कलया नित्यनैमित्तिकानां त्रिष्वप्येतेषु योगं परममितफलं वक्तुमन्यत्प्रसक्तम् ॥

शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशता प्रज्ञातल्पपरिष्कृतश्रुतिशिरःप्रासादमासेदुषी ।
नित्यानन्दविभूतिसन्निधिसदासामोददामोदरद्वित्रालिङ्गनदौर्ललित्यललितोन्मेषा मनीषास्तु मे ॥
तत्त्वं यत्प्रणवे धनञ्जयरथेऽप्यग्रे दरीदृश्यते तच्चित्तो भुवि वेंकटेश्वरकविर्भक्तोऽनुकम्प्यस्सताम् ।
तत्तादृग्गुरुदृष्टिपातमहिमग्रस्तैनसा येन सा गीताविष्णुपदी यतीश्वरवचस्तीर्थैरवागाह्यत ॥

॥ इति श्रीमद्गीताभाष्यटीकायां तात्पर्यचन्द्रिकायां अष्टादशोऽध्यायः ॥ १८ ॥

इति श्रीमद्भगवद्गीतायां

## ॥ तृतीयषट्कं समाप्तम् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य

वेदान्ताचार्यस्य कृतिषु

**॥ श्रीगीताभाष्यतात्पर्यचन्द्रिका समाप्ता ॥**

§ इत्यादिस्सर्वयोगास्तदुचितभगवत्पारमैकान्त्ययुक्तं । पाठान्तरम्

## ॥ संकेताक्षरविवरणम् ॥

| | |
|---|---|
| अत्रि ; अ. स्मृ. | अत्रिस्मृतिः, |
| अथ. | अथर्वशिखोपनिषत् |
| अथर्व. | अथर्वशिरउपनिषत् |
| अ. पु. | अग्निपुराणम् |
| अ. वि. उ. | अमृतबिन्दूपनिषत् |
| अश्व. | अश्वमेधः |
| अष्ट. ; य. अ. | यजुरष्टकम् |
| अष्टा. | अष्टाध्यायी |
| अष्टा. वा. | अष्टाध्यायी-वार्तिकम् |
| अष्टा. भा. | महाभाष्यम् |
| अष्टाङ्ग. | अष्टाङ्गहृदयम् |
| अहि. | अहिर्बुध्न्यसंहिता. |
| आ. | आनन्दवल्ली |
| आप. श्रौ ; आ. श्रौ. | आपस्तम्बश्रौतसूत्रम् |
| आप. | आपस्तम्बधर्मसूत्रम् |
| आ. सि. | आत्मसिद्धिः |
| इ. स. ; इति. स. | इतिहाससमुच्चयः |
| ई. सं. | ईश्वरसंहिता |
| ऐ. | ऐतरेयोपनिषत् |
| ऐ. आ. | ऐतरेयारण्यकम् |
| ऐ. ब्रा. | ऐतरेयब्राह्मणम् |
| क. ; कठ. | कठोपनिषत् |
| काठ ; यजु. का. | काठकम् |
| काद. | कादम्बरी |
| काव्या. | काव्यादर्शः |
| काव्यानु. | काव्यानुशासनम् |
| कौ. | कौषीतक्युपनिषत् |
| ग. | गर्भोपनिषत् |
| गा. पू. | गारुडपुराणे पूर्वखण्डः, |
| गी. | भगवद्गीता |
| गी. सं. ; सं. | गीतार्थसंग्रहः |

| | |
|---|---|
| गौ ; गौ. ध. | गौतमधर्मसूत्रम् |
| च. | चतुश्श्लोकी |
| छा. | छान्दोग्योपनिषत् |
| जि. | जितन्तेस्तोत्रम् |
| तत्त्व. | तत्त्वसारः |
| तव. | तवलकारश्रुतिः |
| तै. ना. ; ना. | तैत्तिरीये नारायणानुवाकः |
| तै. ब्रा. ; या. ब्रा. ; | तैत्तिरीयब्राह्मणम् |
| यजु. ब्रा. | यजुर्ब्राह्मणम् |
| दश. | दशरूपकम् |
| द. स्मृ. | दक्षस्मृतिः |
| द्र. भा. | द्रमिडभाष्यम् |
| ध्यान. | ध्यानबिन्दूपनिषत् |
| ना. उ. | नारायणोपनिषत् |
| ना. प. ; ना. प. उ. | नारदपरिव्राजकोपनिषत् |
| ना. पु. ; नार. | नारसिंहपुराणम् |
| नार. पु. | नारदपुराणम् |
| नाम. ; ना. शा. | नामलिङ्गानुशासनम् |
| न्या. कु. | न्यायकुसुमाञ्जलिः |
| पा. | पाद्मसंहिता |
| पाञ्च. ; पञ्च. | पाञ्चरात्रम् |
| पा. पा. | पाद्मे पुराणे पातालखण्डः |
| पु. | पुरुषसूक्तम् |
| पू. मी. | पूर्वमीमांसासूत्राणि |
| पौ. सं. | पौष्करसंहिता |
| प्र. | प्रश्नोपनिषत् |
| म. | मत्स्यपुराणम् |
| म. उ. ; महो. | महोपनिषत् |
| मनु. | मनुस्मृतिः |
| मालती. | मालतीमाधवम् |
| मु. | मुण्डकोपनिषत् |

| | |
|---|---|
| मुकुन्द. | मुकुन्दमाला |
| मै. उ. | मैत्रायणीयोपनिषत् |
| मैत्राव. | मैत्रावरुणीयोपनिषत् |
| मं. उ. | मन्त्रिकोपनिषत् |
| मं. प्र. | मन्त्रप्रश्नः |
| य. आ. ; यजु. आ. | यजुरारण्यकम् |
| यजु | यजुस्संहिता |
| य. स्मृ. | यमस्मृतिः |
| या. स्मृ. ; याज्ञ. स्मृ. | याज्ञवल्क्यस्मृतिः |
| या. स्मृ. आ. | ,, आचारकाण्डः |
| यो. या. | योगयाज्ञवल्क्यस्मृतिः |
| यो. सू. ; पा. सू. | पातञ्जलयोगसूत्रम् |
| बा. स्मृ. ; बार्ह. स्मृ. | बार्हस्पत्यस्मृतिः |
| बृ. | बृहदारण्यकोपनिषत् |
| बोधा. | बोधायनवृत्तिः (ब्रह्मसूत्राणाम्) |
| बो. सू. | बोधायनसूत्रम् |
| ब्र. ; शा. | ब्रह्मसूत्राणि |
| ब्र. कै. प्र. | ब्रह्मकैवर्ते प्रकृतिखण्डः |
| ब्र. पु. | ब्रह्माण्डपुराणम् |
| बृ. हा. | बृहद्धारीतस्मृतिः |
| भर. | भरद्वाजस्मृतिः |
| भा. | महाभारतम् |
| भा. आ. | महाभारते आदिपर्व |
| भा. आनु. | ,, आनुशासनिकपर्व |
| भा. आश्व. | ,, आश्वमेधिकपर्व |
| भा. स. | ,, सभापर्व |
| भा. व. | ,, वनपर्व |
| भा. वि. | ,, विराटपर्व |
| भा. उ. | ,, उद्योगपर्व |
| भा. भी. | ,, भीष्मपर्व |
| भा. द्रो. | ,, द्रोणपर्व |
| भा. स्त्री. | ,, स्त्रीपर्व |
| भा. शा. | ,, शान्तिपर्व |
| भा. मो. ; मो. ध. | महाभारते शान्तिपर्वणि मोक्षधर्मपर्व |
| भा. रा. | ,, शान्तिपर्वणि राजधर्मपर्व |
| भा. मौ. | ,, मौसलपर्व |
| भाग. | भागवतम् |
| भृ. | भृगुवल्ली |
| र. ब्रा. | रहस्याम्नायब्राह्मणम् |
| रा. | श्रीरामायणम् |
| रा. बा. | श्रीरामायणे बालकाण्डम् |
| रा. अ. | ,, अयोध्याकाण्डम् |
| रा. आ. | ,, आरण्यकाण्डम् |
| रा. कि. | ,, किष्किन्धाकाण्डम् |
| रा. सु. | ,, सुन्दरकाण्डम् |
| रा. यु. | ,, युद्धकाण्डम् |
| रा. उ. | ,, उत्तरकाण्डम् |
| ल. | लक्ष्मीतन्त्रम् |
| ल. पा. | लघुपाराशरस्मृतिः |
| ल. वि. | लघुविष्णुस्मृतिः |
| लै. उ. | लैङ्गपुराणे उत्तरभागः |
| व. पु. ; वरा. | वराहपुराणम् |
| वासिष्ठ. | वासिष्ठस्मृतिः |
| व. स्त. | वरदराजस्तवः |
| वायु. | वायुपुराणम् |
| वि. | विष्णुपुराणम् |
| वि. ध. | विष्णुधर्मः |
| वि. स. | विष्णुसहस्रनामस्तोत्रम् |
| वि. सं. | विष्वक्सेनसंहिता |
| विह. ; विह. सं | विहगेश्वरसंहिता |
| वृ. हा. | वृद्धहारीतस्मृतिः |
| वै. स्त. | श्रीवैकुण्ठस्तवः |
| व्या. | व्यासस्मृतिः |
| व्या. भा. | व्यासभाष्यम् (योगसूत्राणाम्) |
| शत. ; श. ब्रा. | शतपथब्राह्मणम् |
| ,, माध्य | ,, माध्यन्दिनपाठः |
| शा. भा. | शाबरभाष्यम् |

| | | | |
|---|---|---|---|
| शां. स्मृ. | शाण्डिल्यस्मृतिः | सा. उ. | सामवेदे उत्तरप्रपाठकः |
| शी. ; शीक्षा. | शीक्षावल्ली | सार. | वेदान्तसारः |
| श्री. | श्रीसूक्तम् | सां. का. | सांख्यकारिका |
| श्रीगु. | श्रीगुणरत्नकोशः | सां. कौ. | सांख्यतत्त्वकौमुदी |
| श्वे. | श्वेताश्वतरोपनिषत् | सु. | सुबालोपनिषत् |
| स. भा. | सहस्रनामभाष्यम् | स्तो. ; स्तो. र. | स्तोत्ररत्नम् |
| सं. सि. | संवित्सिद्धिः | ह. | हरिवंशः |
| सा ; सा. सं. | सात्त्वतसंहिता | ह. वि. | हरिवंशे विष्णुपर्व |
| साम. ; सा. वे. | सामवेदः | हस्ति. | हस्तिगिरिमाहात्म्यम् |

यद्यन्येऽप्युपलभ्येरन् वर्णास्साङ्केतिका इह । अनयैव दिशा तेषामर्थो ज्ञेयो बुधोत्तमैः ॥
अन्ये तु कतिचिद्ग्रन्था नामग्रहणपूर्वकम् । उदाहृता देशिकेन्द्रैरिति ते नात्र सूचिताः ॥

---

## ॥ श्रीमद्भगवद्गीतापादानुक्रमणिका ॥

पा.—पादादि. अ.—अध्यायसंख्या. श्लो.—श्लोकसंख्या.

## ॥ पुस्तकसूची - श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

Editor: P. B. Annangaracharya, Conjeeveram.

१. स्तोत्रावलीविभागः । हयग्रीवस्तोत्रादि पादुकासहस्रान्त सकल स्तोत्रजालसमलंकृतः । २ ० ०

२. वेदान्तविभाग—प्रथमसंपुटम् । अधिकरणसारावली शतदूषणी च । ३ ० ०

३. „ द्वितीयसंपुटम् । मीमांसापादुका, सेश्वरमीमांसा, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनं च । ३ ० ०

४. „ तृतीयसंपुटम् । सर्वार्थसिद्धिसमेतः तत्त्वमुक्ताकलापः । ४ ० ०

५. काव्यनाटकविभागः । हंससंदेशः, सुभाषितनीवी, यादवाभ्युदयः, संकल्पसूर्योदयश्च । ३ ० ०

६. व्याख्यानविभाग—प्रथमसंपुटम् । ईशावास्योपनिषद्भाष्यम्, चतुःश्लोकीभाष्यम्, स्तोत्ररत्नभाष्यम्, गद्यभाष्यं च । २ ० ०

७. „ द्वितीयसंपुटम् । गीतार्थसंग्रहरक्षा, गीताभाष्यतात्पर्यचन्द्रिका च । ५ ० ०

८. „ तृतीयसंपुटम् । तत्त्वटीका, निक्षेपरक्षा सच्चरित्ररक्षा पाञ्चरात्ररक्षादिकं च । ३ ० ०

## శ్రీ విశిష్టాద్వైత సంప్రదాయగ్రన్థ సూచీ.

౧. శ్రీభగవద్రామానుజ గ్రన్థమాలా:— శ్రీభగవద్రామానుజ మునిభిరనుగృహీత శ్రీభాష్యాదిగ్రన్థసప్తకమేక సంపుటాత్మకమ్. మూల్యమ్. ౬-౦-౦

౨. శ్రీ మద్వరవరమునీన్ద్ర గ్రన్థమాలా:— శ్రీ మద్వరవర మునిభిరనుగృహీతమ్ శ్రీవచనభూషణవ్యాఖ్యానం తత్త్వత్రయవ్యాఖ్యానం ముముక్షుప్పడి వాఖ్యానం ఆచార్యహృదయ వ్యాఖ్యానమిత్యేతత్ గ్రన్థచతుష్టయమేకసంపుటాత్మకమ్. ౬-౦-౦

౩. శ్రీ మద్వేదాన్తదేశిక గ్రన్థమాలాయాం సంప్రదాయ విభాగః.— శ్రీమన్నిగమాన్తమహాదేశికై రనుగృహీతం సంప్రదాయ పరిశుద్ధ్యాది పరమతభఙ్గాన్త సకల రహస్యబృన్దమ్, దేశికప్రబన్ధ బృన్దం చ ఏక సంపుటాత్మకమ్. ౫-౦-౦

ప్రాప్తిస్థానమ్,
ప్రతివాదిభయఙ్కర అణ్ణఙ్గరాచార్యులవారు
గ్రన్థమాలా ఆఫీస్, కాఞ్చీపురం.

प्राप्तिस्थानम्,
प्रतिवादिभयङ्कर अण्णङ्गराचार्यः
ग्रन्थमाला आफीस, कञ्जीवरम्.

శ్రీరామానుజ పత్రిక:—ప్రతిమాస మవతరించుచున్న ఆంధ్రభాషా పత్రిక. చందా. ౨-౦-౦

మానేజరు, శ్రీరామానుజ పత్రిక కార్యాలయము,
24, అరణిగంగన్నవీధి, పాతచాకలపేట, మదరాసు.

॥ श्रीरस्तु ॥

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

[ व्याख्यानविभागे तृतीयसंपुटम् ]

# तत्त्वटीका—निक्षेपरक्षा—सच्चरित्ररक्षा—श्रीपाञ्चरात्ररक्षा—सव्याख्यान भूगोलनिर्णयादिकम् ॥


पर्यवेक्षकः परिष्कारकश्च

॥ श्रीकाञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥



प्रकाशनादिसर्वाधिकारी :

विद्वान् अ. संपत्कुमाराचार्यः, M. A.,

पुस्तकप्राप्तिस्थानम् :

ग्रन्थमालाकार्यालयः

३९, सन्निधिवीथी, कञ्जीवरम्.

श्रीरङ्गक्षेत्रे श्रीविलासमुद्रालये समसुद्यत.

1941

Price 4 Rs. ] ॥ मूल्यं रूप्यचतुष्टयमात्रम् ॥ [ Postage Extra.

## ॥ पुस्तकसूची ॥

श्रीमद्वेदान्तदेशिकग्रन्थमालायाम्—

| | | | |
|---|---|---|---|
| १. **स्तोत्रावलीविभागः** । हयग्रीवस्तोत्रादि पादुकासहस्रान्त सकलस्तोत्रजालसमलंकृतः । | २ | ० | ० |
| २. **वेदान्तविभागे**—प्रथमसंपुटम् । अधिकरणसारावली शतदूषणी च । | ३ | ० | ० |
| ३. ,, द्वितीयसंपुटम् । मीमांसापादुका, सेश्वरमीमांसा, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनं च । | ३ | ० | ० |
| ४. ,, तृतीयसंपुटम् । सर्वार्थसिद्धिसमेतः तत्त्वमुक्ताकलापः । | ४ | ० | ० |
| ५. **काव्यनाटकविभागः** । हंससंदेशः, सुभाषितनीवी, यादवाभ्युदयः, संकल्पसूर्योदयश्च । | ३ | ० | ० |
| ६. **व्याख्यानविभागे**—प्रथमसंपुटम् । ईशावास्योपनिषद्भाष्यम् , चतुःश्लोकीभाष्यम् , स्तोत्ररत्नभाष्यम् , गद्यभाष्यं च । | २ | ० | ० |
| ७. ,, द्वितीयसंपुटम् । गीतार्थसंग्रहरक्षा, गीताभाष्यतात्पर्यचन्द्रिका च । | ५ | ० | ० |
| ८. ,, तृतीयसंपुटम् । तत्त्वटीका, निक्षेपरक्षा, सच्चरित्ररक्षा, पाञ्चरात्ररक्षादिकं च । | ४ | ० | ० |
| सर्वपूर्वाचार्यप्रणीतसकलस्तोत्राणि | १ | ८ | ० |

## ॥ विशेषतोऽवधेयम् ॥

| | | | |
|---|---|---|---|
| श्रीमद्वेदान्तदेशिकप्रणीता द्वात्रिंशद्रहस्यग्रन्था द्राविडगाथाप्रबन्धाश्च संप्रदायविभागे अन्तर्गताः । ते च सुशोभनैरान्ध्राक्षरैस्सुष्ठु सम्मुद्रितास्सन्ति । मूल्यम् | ५ | ० | ० |
| आन्ध्राक्षरैरेव मुद्रितायाः श्रीभगवद्रामानुजग्रन्थमालायाः | ६ | ० | ० |
| तादृश्याः श्रीमद्वरवरमुनीन्द्रग्रन्थमालायाः रहस्यव्याख्यानविभागमात्रस्य | ६ | ० | ० |

प्राप्तिस्थानम् :—

'ग्रन्थमाला आफीस'

३९. सन्निधि वीथी,

**कञ्जीवरम्.**

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

[ व्याख्यानविभागे तृतीयसंपुटम् ]

॥ श्रीभगवद्रामानुजमुनिभिरनुगृहीतं श्रीभाष्यम् ॥

अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥



कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

श्रीभाष्यव्याख्या

# ॥ तत्त्वटीका ॥



श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥



स जयति यतिराजमुनिः करुणाजलधिः क्षमापरिष्कारः । करिशैलकृष्णमेघः काङ्क्षितवर्षी यदर्पितैस्तोयैः ॥ १

स्वतस्सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं हताशेषावद्यं हयवदनमीडीमहि महः ॥ २ ॥

प्रणम्य वरदाचार्यवादिहंसाम्बुदावपि । त्रय्यन्तसूत्रभाष्यार्थतत्त्वटीका विधीयते ॥ ३ ॥

असावनतिसङ्क्षेपादतिविस्तरवर्जनात् । सर्वन्यायानुकूलत्वाद्ग्राह्यतां सारवेदिभिः ॥ ४ ॥

शाखितः शतदूषण्यां शङ्करादिमृषाग्रहः । शारीरकशरीरं तु व्यक्तमत्र प्रदर्श्यते ॥ ५ ॥

विश्वामित्रकुलीनेन वेदान्ताचार्यसूरिणा । शश्वद्विधीयते विश्ववैतण्डिकविधूननम् ॥ ६ ॥

निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणी निपुणमनसामाशासौधस्थलीषु निबध्यते ।
यतिपतिभुवो भाष्यस्यासौ यथाश्रुत(ति)चिन्तितप्रवचनविधावष्टाविंशे जयध्वजपङ्क्तिका ॥ ७ ॥

तत्र तावत्—

**अखिलेत्यादिभाष्यस्य दशार्थानभिदध्महे । विषयादित्रिकस्योक्तिः प्रथमं प्रतिपाद्यते ॥ ८ ॥**
**तस्यार्थस्य च सौत्रत्वात्तद्विस्तारात्मकं पुनः । अनवद्यमिदं पद्यं भाष्यलक्षणलक्षितम् ॥ ९ ॥**

यद्यपि * अथातो ब्रह्मजिज्ञासेति सूत्रं ब्रह्म जिज्ञासोः तद्विचारस्य कर्तव्यत्वे प्रवृत्तम्; तथापि शारीरकविषयादिष्वप्यर्थतो वर्तते, यथा धर्मजिज्ञासासूत्रम् । आहुश्च— * अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् । धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ इति । एवमत्रापि,

**ब्रह्मेति तात्रद्विषयं प्राप्यत्वेन प्रयोजनम् । जिज्ञासाकर्मभावेन संबन्धमपि चाब्रवीत् ॥ १० ॥**

निरतिशयबृहत्त्वं हि ब्रह्मशब्दार्थः; बृहतिधातोः * बृंहेरम् च इति मनिन्प्रत्यये अमागमे च ब्रह्मेति व्युत्पत्तेः, * ब्रह्म परिवृढं सर्वतः इति यास्कोक्तेश्च । यत्तु आथर्वणिकी निरुक्तिः बृंहणत्वमप्याह— * बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति, पौराणिकी च प्रसिद्धिः, * बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत इति, तद्गोबलीवर्दन्यायादिति न विरोधः । (बृंहणत्वस्य बृहत्त्वविशेषत्वाच्च । तदयमर्थः—स्वतो बृहत् बृंहणत्वेनापि बृहदिति । प्रयुक्तपदान्तरपौनरुक्त्यपरिहाराय सामान्यशब्दसङ्कोचो गोबलीवर्दन्याय इति लक्षणानुसारेण बृहच्छब्दो बृंहणत्वात्मकबृहत्त्वादन्यत्र वर्तते । यथा * विष्णुनामा स वेदेषु वेदान्तेषु च गीयते इति ।) तेनानवधिकातिशयबृहत्त्वमेव ब्रह्मशब्दार्थ इत्येके । अपरे तु बृहत्त्ववत् बृंहणत्वमपि अनवधिकातिशयं ब्रह्मशब्दार्थः * बृहति बृंहयति इति पृथगभिधानस्वारस्यात्, * बृहत्त्वाद्बृंहणत्वाच्च इति समुच्चयोपादानस्वारस्याच्चेत्याचक्षते । वयं तु ब्रूमः— उभयत्रापि विरोधाभावादुभयथाऽप्याचक्ष्महे इति । अयमत्र संग्रहः—

**बृहत्त्वं ब्रह्मशब्दार्थो बृंहणत्वं तु तद्भिदा । यद्वाऽर्थो ब्रह्मशब्दस्य बृंहणत्वं बृहत्त्ववत् ॥ ११ ॥**

अथवा बृहत्त्वबृंहणत्वसमुच्चयो वा । एतत्सर्वमभिप्रेत्योक्तं जन्माद्यधिकरणभाष्ये * उपलक्ष्यं ह्यनवधिकातिशयबृहत् बृंहणं च, बृहतेर्धातोस्तदर्थत्वात् इति । अनयोश्च सर्वातिशायित्वमपरिच्छेदात् यास्कनिरुक्तिसामर्थ्याच्च सिध्यति ।

**अनुपाधिकनिर्देशे(शो) ह्यसंकोचो मनीषिभिः । सिद्धे शब्दार्थसंबन्ध इति न्यायेन कथ्यते ॥ १२ ॥**

ईदृशं ब्रह्म अस्य शास्त्रस्य प्रधानविषयः; प्राप्यतया परमं च प्रयोजनम्; निरुक्तिद्वयार्थस्य द्विकाभ्यां विवरणात् ।

**प्राप्यत्वं ब्रह्मणः सिध्येद्बृंहणत्वस्य कीर्तनात् । स्वप्राप्तेः साधनत्वं हि बृंहणत्वमिहोच्यते ॥ १३ ॥**

न च बृहतिधातौ बृंहयतीत्यभिधानस्य विरोध इति वाच्यम्, * बृह बृहि वृद्धाविति धातुद्वयसिद्धत्वान्निरुक्तिद्वयवाक्यस्य ।

**अर्थमात्रे च तात्पर्यादन्यधातोश्च संग्रहः । तस्य धातोरिदित्त्वाच्च नुमागमसमन्वयः ॥ १४ ॥**

प्रयोजनं चात्रावश्यं वक्तव्यम् । तदप्याहुः— * सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥ इति । * मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रया । न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम् ॥ इति च ।

संबन्धस्तु विषयभूतेन ब्रह्मणा निर्णायकत्वादिः, प्रयोजनभूतेन प्रापकत्वादिः, जिज्ञासापदविवक्षितविचारसाध्यदीक्षितन्मूलविनतितत्साध्यरक्षारूपैस्तु प्रयोजनैः यथार्हं साक्षात्परम्परया वा हेतुत्वबोधकत्वे ।

**शास्त्रारम्भेषु सर्वत्र संबन्धः कथ्यते बुधैः । असंबद्धप्रलापत्वे न प्रवर्तेत बुद्धिमान् ॥ १५ ॥**

तदेवं सौत्रमेव विषयादित्रिकं श्रोतृबुद्धिसमाधानार्थमुपादित्सार्थं च विशेषतः ख्यापयन् प्रारिप्सितप्रबन्धस्य अविघ्नेन परिपूर्त्यर्थं प्रचयार्थं च शङ्कितप्रत्यूहशान्त्यै शिष्टाचारादिसिद्धमिष्टदेवभक्त्याशीरूपं मङ्गलं स्वात्मनाऽनुष्ठितमपि शिष्यशिक्षार्थं स्वकृतानुकीर्तनेन तेषां महिष्ठमङ्गलार्थं चादौ निबध्नाति भगवान् भाष्यकारः— **अखिलेति ।**

**गुरोराचारमाश्रित्य वर्तन्ते मङ्गलार्थिनः । यान्यस्माकमिति श्रुत्या तदेतदभिधीयते ॥ १६ ॥**

नमस्क्रियावस्तुनिर्देशावप्यर्थसिद्धौ, सर्वोत्तुङ्गमङ्गलतमतत्त्वोक्तेः । उक्तं च— * नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मकः इति । अत्र सप्तम्यन्तैः सिद्धविषयप्रयोजनोक्तिः; **श्रुतिशिरसीत्यवान्तरविषयसंग्रहः ॥**

**यथा हि वेदवाक्यस्य विषयो ब्रह्म कथ्यते । तथैव सूत्रवाक्यस्य त्रय्यन्तः परिकीर्त्यते ॥ १७ ॥**

**विदीप्तिविनतरक्षाशब्दैः** साध्यप्रयोजनत्रयकीर्तनम्, अत्र विशिष्टा दीप्तिः विदीप्तिः—निर्णयः । स तु विचारतः । यथाहुः— * धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ इति । उक्तं च **न्यायसुदर्शने**— * ज्ञायमाने तु वेदान्तैः करणैः परमात्मनि । इमामुत्तरमीमांसामितिकर्तव्यतां विदुः ॥ इति; * वेदस्य निरपेक्षत्वलक्षणप्रामाण्ये सत्यपि प्रतिपत्तृमतिमान्द्यापराधनिमित्तसंशयविपर्ययापनोदनमनया क्रियत इति च ।

**प्रयोजनोक्तिराप्तत्वनिश्चये निश्चयं दिशेत् । तत्संदेहेऽप्युपादित्सां सिद्धां सन्धुक्षयेदसौ ॥ १८ ॥**

तत्र सामान्यतः प्रयोजनवत्त्वनिश्चयेऽपि स्वापेक्षितप्रयोजनविशेषवत्त्वनिश्चयस्तु वक्तृवाक्यादृते न सिध्यतीति प्रयोजनकथनमवश्यकर्तव्यमेव । तदिह संबन्धोऽपि सूचित एव, संबन्धाश्रयभूतशास्त्रप्रयोजनादीनामुपादाननान्तरीयकत्वात्संबन्धावगमस्य ।

**विचारत्वं विचार्यत्वं निर्धार्यत्वं तथेतरत् । प्राप्यत्वं प्रापकत्वं च संबन्ध इति कथ्यते ॥ १९ ॥**

तत्र तत्त्वत्रयमर्थपञ्चकमित्यादिकमध्यात्मविद्भिरत्यादरेण परिगृहीतमर्थजातं स्वयमेव सूरिभिः संप्रत्याय्यमिति न विविच्य लिख्यते ।

**विषयादिप्रधानत्वमाद्यपद्ये समीरितम् । अधुना मङ्गलाचारप्राधान्यमनुवर्ण्यते ॥ २० ॥**

स च मङ्गलाचारः केषुचिद्ग्रन्थेष्वदृष्टोऽपि निमित्तफलाभ्यामुन्नेयः । आहुश्च— * प्रारिप्सितं निमित्तं स्यादविघ्नेन समापनम् । प्रचयश्च फलं तस्मान्मङ्गलाचार इष्यते ॥ इति । अविघ्नसमाप्त्यादिसंवलितस्य प्रबन्धारम्भस्य तत्राधिकारिविशेषणत्वमित्यर्थः । उक्तं च विवरणकारैः— * संवलितमत्र विशेषणम्, जातेष्टिवत् । यथा जातेष्टौ पुत्रजन्मनो निमित्तत्वेऽप्यार्थवादिकानां पुत्रगतपूतत्वादीनां फलत्वकल्पनम् । न च गौरवम्, फलस्य विशेषणत्वे प्रवृत्तिसौकर्यात् । फलमात्रे तु गर्हानुपपत्तिः । न हि काम्याकरणे गर्हा इति । अथवा शबरशाङ्करग्रन्थयोरनीश्वरप्रतिपादकत्वात् ईश्वरनमस्कारादिमङ्गलं न कृतमिति व्याचक्षते । न च पक्षिलादयः परमास्तिका निमित्ते सत्यपि मङ्गलं नाचरन्तीति सिद्धं भवति, अपि तु कृतस्यापि नमस्कारादेः मङ्गलस्य ग्रन्थनिवेशमेव न कृतमिति व्याकुर्वते । केचित्तु ईश्वरवाचकस्य प्रमाणशब्दस्य प्रथमोपादानात् कृतमङ्गलाचार एव पक्षिलमुनिरिति व्याचख्युः । अननुष्ठितमङ्गलत्वे वा कथं फलसिद्धिः ? अनुष्ठितमङ्गलानां तु फलव्यभिचारः कर्मकर्तृसाधनवैगुण्यमवलम्बते । नन्वारब्धसमाप्तिकामो मङ्गलमाचरेदिति विध्यभावादकर्तव्यत्वं मङ्गलाचारस्य । अयं खल्व-

नधिगतवेदानामश्रुतमीमांसानामालापः, अविगीतशिष्टाचारस्यैव मूलप्रमाणकल्पकत्वात्। तत एव चोदनालक्षणत्वसिद्धिः। न च मङ्गलाचाराभावेऽपि फलं दृष्टमिति वाच्यम्, संसारस्यानिदंप्रथमतया तस्यापि भवान्तरीयसुकृतविशेषनिबन्धनत्वात्। न च किमनेन मङ्गलाचारेण? तदेव फलं प्रददातीति वाच्यम्। तत्सद्भावे निश्चयाभावात्, निमित्तानुबन्धिनो नैमित्तिकस्य शिष्टाचारप्राप्तत्वेनावश्यकत्वाच्च।

**किञ्चिदारभमाणस्य बुद्धिस्थं पूरणादिकम्। त्यक्त्वाऽन्यफलक्लप्तिस्तु नीतिमद्भ्यो न रोचते॥ २१॥**
**भक्तिराशास्यमानाऽपि पूरणप्रचयाविह। नोपरुध्य प्रवर्तेत सा च तौ च तदाशिषा॥ २२॥**
**भक्तिर्हि मङ्गलतमा तद्बोधादेश्च कारणम्। तस्मात्सर्वप्रधानत्वाद्भक्तेराशासनं वरम्॥ २३॥**
**अथवा भक्तिभेदत्वान्नमस्कारार्चनादिकम्। सर्वमेव हि मङ्गल्यमाशास्यमिह मन्महे॥ २४॥**

स्यादेतत्। अस्तु तावन्मङ्गलाचारः। मङ्गलनिबन्धस्तु तत्तद्ग्राप्येष्वदर्शनादयुक्त इति चेन्न, उपयोगादनिषेधात्।

**शिष्याणां शिक्षणं तावत्तेषां स्वकृतकीर्तनात्। महिष्ठमङ्गलावाप्तिस्तत्फलं प्रागुदीरितम्॥ २५॥**

द्रमिडभाष्यादिषु * नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलैकबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे, नमो जैमिनये वेदरहस्यसंपुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे, नमोऽस्त्वाचार्येभ्यः इत्यादिभ्यः तद्दृष्टेश्चावश्यकर्तव्य एवायमाचारः। ईश्वरापह्नोतॄणामाचारो नास्थेय इति प्रागेवोक्तम्। * स्मृत्याचारविरोधे तु स्मृतिरेव बलीयसीति न्यायाच्च सिद्धमेतत्। स्मर्यते च तत्र मङ्गलाचारः— * मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्। जपतां जुह्वतां चैव विनिपातो न विद्यते॥ इत्यादिभिः॥

**करणत्रयसारूप्यात् कथ्यते मङ्गलक्रिया। तस्माद्ग्रन्थनिवेशोऽपि मङ्गलस्य प्रमाणवान्॥ २६॥**
**पूर्वे पुलस्त्यमुख्याश्च क्रियासमभिहारतः। कार्यारम्भेषु सर्वेषु मङ्गलाशासनं विदुः॥ २७॥**

मङ्गलाचारः पुराणारम्भे दृष्टश्च * प्रणिपत्याभिवाद्य चेति गुरुप्रणिपातादिरूपः। अत एव * युष्मदस्मदित्यादौ कुग्रन्थत्वमाशङ्क्य प्रत्यक्तत्त्वानुसन्धानेन मङ्गलत्वमाचख्युर्व्याख्यातारः। तच्च मन्दम्, युष्मदर्थानुसन्धानस्यैव तत्रापि प्राथम्यात्, मध्यलघुत्वेन वह्निदेवत्यस्य रगणस्य निवेशाच्च।

**शन्नोमित्रादयो मन्त्राः शतं ते सूरिभिः स्मृताः। कर्मानुष्ठानकालेषु पठितव्या मनीषिभिः॥ २८॥**

एवमिह पद्यनिबन्धनचोद्यमप्यपास्तम्। दृष्टं च केषुचित् * प्रणम्य हेतुमीश्वरमित्यादि।

**अकारोपक्रमश्चास्मिन्मङ्गलत्वाभिसन्धितः। निःशेषत्वं तु सुगमं निखिलेत्यपि भाषिते॥ २९॥**
**अन्यार्थोऽप्यत्र वर्णोऽयं विष्णुनामस्वभावतः। यदृच्छाशङ्खशब्दादिन्यायाद्भवति मङ्गलम्॥ ३०॥**
**आदौ च पाणिनीयादेस्तथाऽन्यैरनुवर्णितः। सूत्रे चाथादिरन्यार्थस्तदर्थोऽप्यन्वमन्यत॥ ३१॥**
**अतोऽप्यत्र शुभत्वं स्याद्वैकल्यप्रतिषेधतः। निषेध्यभेदतो ह्यस्य शुभाशुभविकल्पना॥ ३२॥**
**अपहन्त्यदुःखोक्तिमप्यारम्भे शुभां विदुः। अपौष्कल्यनिषेधेऽस्मिन्नतः कैमुत्यमक्षतम्॥ ३३॥**
**आदावखिलशब्देऽस्मिन्नगणत्वनिवेशनम्। आयुःपूर्तिनिदानत्वादविघ्नायैव कल्पते॥ ३४॥**
**सर्वस्यापि गणस्यात्र नगणो हि विशिष्यते। तत्रादिमचतुष्ट्यामष्टार्थानपरान् विदुः॥ ३५॥**
**विशिष्टमङ्गलाचारप्रक्रियानान्तरीयकान्। व्याख्यानमाद्यसूत्रस्य ब्रह्मलक्षणसंग्रहः॥ ३६॥**

**चतुरध्याय्यनुक्रान्तिर्ध्येयसंशोधनं द्विधा । परपक्षप्रतिक्षेपः परारम्भनिवारणम् ॥ ३७ ॥**
**स्वेष्टारम्भविरुद्धानां निश्शेषोद्धार इत्यपि । पौरुषेयेषु वाक्येषु प्रयोजनविशेषतः ।**
**प्रकृतानुगुणानेकविवक्षा ह्याश्रिता बुधैः ॥ ३८ ॥**

प्राहुः किल वार्तिककाराः * लोक इत्यादिभाष्यार्थविवरणे— * लोक इत्यादि भाष्यस्य षडर्थान् संप्रचक्षते । सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथापरे ॥ परिसङ्ख्यास्तुती केचिदथशब्दस्य दूषणम् । इति । * लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्ववगन्तव्यानि । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा इति भाष्यम् । आपादचूडं सम्यग्व्याख्यानप्रक्रियायाः संग्रहेणोपवर्णनात् सर्वव्याख्या; भवदासादिव्याख्यायामुक्तप्रकारवैपरीत्यख्यापनादुपालम्भः; सूत्रस्य स्वरसार्थप्रतिपादनस्वाभाव्येन व्याख्यानानपेक्षत्वकथनेन सूत्रं न व्याख्यायते सूत्रेण श्रुतिरेव व्याख्यायत इति सूत्रव्याख्यानप्रतिक्षेपात्प्रत्याख्यानम्; श्रुतिसूत्रविसंवादे सूत्रस्य स्वारसिकार्थग्रहणेनाध्याहारादिभिः कथंचिन्नेयत्वेन यथाश्रुतपरिग्रहस्यापास्तत्वात्परिसंख्या; जैमिनिसूत्राणां स्वरसार्थप्रतिपादकत्वस्वाभाव्येनोपवर्णनात्सूत्रकारस्तुतिः; अथशब्दस्य प्रसिद्धार्थप्रतिपादकत्वावश्यंभावित्वेऽपि वृत्तादर्शनादिभिरानन्तर्यार्थत्वं न विद्यत इति पूर्वपक्षिणाक्षिप्यत इत्यथशब्ददूषणमिति भाष्यार्थविभागः ।

**एकस्मिन्नेव भाष्ये तैः षडर्था यद्वदीरिताः । तद्वदेव दशाप्यर्थानत्राप्याचक्ष्महे वयम् ॥ ३९ ॥**
**सर्वव्याख्यादिकं तावदर्थषट्कं निदर्शनम् । तथा पक्षिलभाष्यादौ तत्तदर्थाः प्रदर्शिताः ॥ ४० ॥**
**संजिघृक्षितनानार्थैः सूत्रकारादिभिस्तथा । तन्त्रावृत्त्यनुनिष्पाद्याः कल्पितास्तद्वदेव नः ॥ ४१ ॥**

दृश्यते हि * दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येकस्मिन्नेव सूत्रे प्रत्यभिज्ञाप्रामाण्यमात्मनित्यत्वमिन्द्रियनानात्वं विषयस्थैर्यं गुणगुणिभेद इत्याद्यर्थजातम् ।

तदिह सूत्रार्थोक्तौ ब्रह्मशब्देन व्याख्येयसंग्रहः । तन्निरुक्ती पादाभ्यां दर्शिते । श्रीनिवासत्वं तदुपपादकं लिङ्गम् । अथेत्युक्तमानन्तर्यं श्रुतिशिरसीतिव्याख्येयक्रमान्मुख्यक्रमतः स्थाप्यते । अतश्शब्दोक्तो विशिष्टारम्भहेतुर्विदीत इत्यनेनोद्गीतः । ममेत्यर्थसिद्धजिज्ञासाधिकार्युदाहृतिः । शिष्टेन सर्वोत्कृष्टवस्तुगोचरतया स्वयं च स्वादुतया आशीर्विषयोपायविशेषोक्त्या तद्विषयब्रह्मविचारस्य सम्प्रत्ययसूचितरागप्राप्त्युत्तम्भनादर्थादनारभ्यत्वभ्रमापोहः ।

**सूत्रार्थयोर्द्वयोरर्थः फलतः प्रतिपादितः । अत्र शब्दस्तु सूत्रार्थस्तस्मान्न पुनरुक्तता ॥ ४२ ॥**
**द्वितीयसूत्रभावस्थकृत्स्नलक्षणसंग्रहे । ब्रह्मेति लक्ष्यं शिष्टैस्तु तल्लक्षणसमाहृतिः ॥ ४३ ॥**
**नोद्देशमात्रात्प्रमितिः परीक्षा लक्षणाश्रया । प्राधान्याल्लक्षणस्यात्र प्रतिपत्तिर्हि युज्यते ॥ ४४ ॥**

अत्र हि सर्वकार्यस्रष्टृत्वादीनि मुमुक्षूपास्यत्वमोक्षप्रदत्वत्वत्यन्तप्रधानवेद्यत्वश्रीनिवासत्वपरमप्राप्यत्वानि च गृह्यन्ते, यैर्योगायोगाभ्यामपवर्गपरिपन्थ्यभक्त्युन्मूलनपारावर्यविवेकः ।

**असाधारणधर्मो हि लक्षणत्वेन लक्ष्यते । बहुत्वे तस्य धर्मस्य बुद्धेरुन्मेषकारणम् ॥ ४५ ॥**
**न लक्षणानां भिन्नत्वे लक्ष्यभेदः प्रसज्यते । विरुद्धलक्षणानां हि भेदकत्वं विदुर्बुधाः ॥ ४६ ॥**

चतुरध्याय्यर्थसंग्रहस्तु—* परस्मिन् ब्रह्मणीति काण्डान्तरवेद्यव्यावृत्तप्रधानार्थोक्तिः । पादाभ्यां सिद्धविषयरूपः साध्यविषयरूपश्च द्विकद्वयार्थः संगृह्यते । * श्रुतिशिरसि विदीते इत्यनेन प्रमाणविशेषायोगतदन्ययोगव्यवच्छे-

देनोगोद्धातरूपचतुस्सूत्र्यर्थोद्गृहः, श्रुतिशिरस्येव विदीप्ते इति सावधारणनिर्देशस्य विवक्षितत्वात् ।

**अयोगः श्रुतिभिर्योगोऽप्यन्यमानेन वार्यते । सूत्रैश्चतुर्भिः किं ना(नो)त्र वक्तव्यमवधारणम् ॥ ४७ ॥**

एकदेशिनस्तु आद्यसूत्रार्थोक्तिरिति व्याचख्युः ।

ननु कथमन्यप्रमाणव्यवच्छेदः ? स्मृत्यादिभिरपि तत्सिद्धेः ; मैवम्—तेषां तन्मूलतयैव प्रामाण्यस्य न्यायसिद्धत्वात् । एतेन स्मृतिविरोधात् श्रुतिबाधशङ्का निरस्ता । श्रुतेः स्मृतिद्वारत्वमपि साधनवद्बाधनेऽपि समानम् । तत्र श्रुतिमूलत्वे वा श्रुतिरेव शरणम् । तदुक्तम्—* विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति । वक्ष्यति च * स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् इति । श्रीनिवासभक्तिरूपपदाभ्यां प्राप्यप्रापकयाथार्थ्यनिष्कर्षः । परत्वं चोक्तप्रकारेण चतुर्धा चतुर्लक्षणीवेद्यम् । * मम इत्युपायाधिकार्युदाहृतिरिति ।

अत्र भुवनमात्रोक्तौ सकलेति विशेषणोपादानेऽपि वा प्रायिकत्वं शङ्क्येत, अतोऽत्र अखिलेति निश्शेषत्वोक्तेश्चतुर्मुखादिभ्यो व्यावृत्तिरिति ।

**व्यतिरेकमुखेणोक्तावर्थदार्ढ्यं प्रतीयते । तस्मादिष्टार्थसिद्धिः स्यादनिष्टविनिवारणम् ॥ ४८ ॥**

न हि चतुर्मुखादीनामखिलकारणत्वम् । न हि ते स्वेषां स्वपूर्वोत्तरेषामण्डान्तरस्थानां शुद्धसृष्ट्यादेर्वा हेतवः ; व्यष्टिसृष्ट्यादौ च नियताधिकाराः परप्रयोज्याश्च । कार्यसमुदायविशेषरूढोऽप्यत्र भुवनशब्द उपलक्षणात् भवतीति वा कार्यमात्रपरः, प्रकरणानुक्रान्तयोगस्य रूढितो बलीयस्त्वात् । जन्मादिषु बहुव्रीहिः तद्गुणसंविज्ञानः, * सर्वादीनि सर्वनामानीतिवत् ।

**द्रव्यस्य नित्यसिद्धस्य यथादृष्टयवधारणे । जन्मस्थित्याद्यवस्थाः स्युः सामग्रीभेदशक्तितः ॥ ४९ ॥**
**आकाशत्वादिधर्माणामागन्तुत्वविवक्षया । तत्तद्द्रव्यस्य नित्यत्वेऽप्युत्पत्त्यादिरपि श्रुतः ॥ ५० ॥**
**यथा पाकेन रूपाद्याः परेषां नित्यवस्तुषु । तथा नस्त्रिगुणद्रव्ये परसंकल्पतो दशाः ॥ ५१ ॥**

जन्माद्यवस्थाश्च नित्यनैमित्तिकादिभेदात् बहुधोक्ताः । प्रागसिद्धस्यात्मलाभ उत्पत्तिः जन्म । उत्पत्तिलब्धाकृतेरर्थस्याप्रणाशसामग्र्याः स्थितिरिह स्थेमा । ननु कथं स्थेमशब्दः ? कथं च स्थित्यर्थः ? न ह्यसौ स्थानादिवत्तिष्ठतेर्निष्पन्नः । न च * पृथ्वादिभ्य इमनिज्वा इत्यस्य विषयः । यद्यपि * प्रियस्थिरेत्यादिना स्थिरशब्दस्य स्थादेशः, तत्र च * तुरिष्ठेमेयस्सु इति प्रत्ययत्रयं प्रक्रान्तम् ; तथाऽप्यत्र प्रियोरुगुरुबहुलघुदीर्घाणामेवादेशेष्विमनिज् भवति, नान्येषाम् , पृथ्वादिष्वपाठात् । न चासावाकृतिगणः, अतः कथमयं प्रयोगः ? अत्र ब्रूमः—

**प्रयोगतः स्थितिः स्थेमा प्रत्ययाद्यूहशासनात् । अखण्डितो वा शब्दोऽयमधातूद्भवपक्षतः ॥ ५२ ॥**

अस्ति हि **न्यायतात्पर्यटीकायां** तत्प्रयोगः— * स्थेमा च भावानामुपपादयिष्यते इत्यादि । **तात्पर्यपरिशुद्धौ** च संशयपरीक्षायां * बौद्धादेर्निश्चितक्षणिकत्वादेरपि झटिति विघटितसाधनस्य प्रतिवादिसाधनात् परितो निरस्तविभ्रमाशङ्कात् संशयं विनैव स्थेमादिनिर्णयोत्पत्तेः इति । * निस्स्थेमानो दशाननकीर्तयः इत्यादयश्च महाकविप्रयोगाः । तदत्र प्रसिद्धबहुविद्वत्प्रयोगभूयस्तया साधुत्वं सिद्धम् । शक्या च व्युत्पत्तिः, यथोक्तम्—

* नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् । यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥

मा भूद्वा प्रकृत्यादिविभागः, मतभेदेन अखण्डितप्रातिपदिकभाषणात् । * नाम च इत्यादिना तत्सूच्यते ।

**ईदृशानां प्रयोगाणामवहिष्कारसिद्धये । बहुधा बहुलादीनामष्टाव्याख्यामुपक्रमः ॥ ५३ ॥**
**नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे । शब्दसाधुत्वमाहुर्ये शाब्दिकांस्तान्न मन्महे ॥ ५४ ॥**
**विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः । अविगीतप्रयोगेषु विगानं नैव सांप्रतम् ॥ ५५ ॥**

भङ्गशब्दो नात्यन्तिकलयग्राही, रक्षाशब्देन तदुक्तेः प्रयोजनस्यापि विषयवत्पृथग्वक्तव्यत्वाच्च । अतः * जगज्जन्मस्थितिध्वंसमहानन्दैकहेतवे इत्यादिष्विव ब्राह्मगपरित्राण्नीत्यात्र प्रथगुक्तिः । विनतेत्यादौ इन्द्रादिशरीरकतया बन्धरूपकाम्यफलप्रदत्वमात्रं वदतामपि स्थेमशब्दे रक्षाशब्दे च सङ्कोचः स्यादेव । अत एवात्रादिशब्दसमानाधिकरणजन्माद्यन्यपदार्थविशेषतयापि न मोक्षसंग्रह उचित इत्याहुराचार्याः, विशेषस्कौस्थ्याभावात् । अत्रैव पुराणार्थोक्तौ * जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलीलमिति स्तोके सति परोक्तस्य विप्रकृष्टस्योक्तस्य स्वप्रबन्धान्तरोक्तस्य वानुरोधायोगाज्जन्मादित्रयोपयुक्ततमतत्सहाम्नातानुप्रवेशादीनामपि तैः संग्रहणौचित्यात्तेषामार्थत्वादपि शाब्दत्वस्य परत्वाच्च । अस्वाधीनसहकारिनैरपेक्ष्यं चानेन भगवतः सिध्यति ।

**स्वकार्यस्थस्य जन्मादेः स्वलीलात्वोक्तिशक्तितः । स्यामित्याद्युक्तरीत्यैवोपादानत्वं च सूचितम् ॥ ५६**
**नृत्यन्तं पश्यतां नृत्तं न लीला किंतु तद्दृशिः । देहद्वाराऽत्र तन्निष्ठं लीला जन्मादिकं भवेत् ॥ ५७ ॥**
**अवस्थान्तरयोगित्वमुपादानत्वमूचिरे । आगन्तुकापृथक्सिद्धधर्मोऽवस्थेति कीर्त्यते ॥ ५८ ॥**
**अचिज्जीवस्वधीद्वारा स्वरूपेण च सर्वगे । अवस्थाः सन्त्यदोषास्ते निर्विकारोक्तिरन्यतः ॥ ५९ ॥**

एतदर्थं चावान्तःप्रवेशाद्युक्तिः । ततोऽन्यस्य तच्छरीरत्वव्यक्तेः प्रधानादिक्षेत्रज्ञशरीरकः स एव जन्मादिलील इत्युक्तं भवति ।

**सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम् । इति चैतदभिप्रायमाहुस्त्रय्यन्तपारगाः ॥ ६० ॥**

न चात्र विवक्षितनिष्कर्षभुवनशब्दवृत्तिविरोधः, * स्वतन्त्रभूतचेष्टालीलः इत्यादिवदुपपत्तेः । * भुवनानि विष्णुरित्यादिवदनिष्कर्षेण विशेष्यपर्यन्तत्वेऽप्यविरोधः । तथा च विवरणम्— * भुवनशब्दः सजीवात्मकाचिदभिप्रायः, कारणवाक्येषु तथैव कारणत्वप्रतीतेः । ब्रह्म तु पृथङ् निर्दिश्यते । यद्वा विशिष्टं ब्रह्मशब्दार्थः, तत एव— इति । ये चान्येऽप्यर्थाः **तात्पर्यतूलिकोक्ताः**— * कार्यत्वाज्जन्मादिषु लीलाशब्दोपचारः । जन्मादिकार्यत्वाज्जन्मादिभूता लीला यस्येति वा, भुवनजन्मादिषु लीला यस्येति व्यधिकरणबहुव्रीहिर्वा, जन्मस्थेमभङ्गानामादिभूता लीला यस्येति तत्पुरुषगर्भबहुव्रीहिर्वा इति, ते तु प्रधानार्थे प्रोक्तेऽप्यविरुद्धतया वैभवादुक्ताः ।

**एवं जन्मादिशब्देन तद्धेतुरुपलक्ष्यते । यद्वा जन्मादिका लीला यस्येत्यर्थद्वयं मतम् ॥ ६१ ॥**
**किंचिदिष्टमनुद्दिश्य न प्रवर्तेत चेतनः । तच्चाप्तार्थस्य नेत्येतल्लीलोक्त्याऽत्र निवार्यते ॥ ६२ ॥**
**यद्यदेष्टं तदा तस्य सिद्धिरस्याप्तकामता । नातः क्षेप्यो यथालोकं साध्यलीलान्वितः श्रुतः ॥ ६३ ॥**
**यत्पूर्णमद इत्यादि तदप्युक्तं न बाधते । प्रत्युतानुगुणं तस्य स्वतोऽन्येन च पूर्तितः ॥ ६४ ॥**

अस्यापि प्रयोजनान्तरनिरपेक्षस्वच्छन्दव्यापारव्यक्त्यै * बालः क्रीडनकैरिवेति दृष्टान्तः । तदभिप्रायं तु सूत्रम् * लोकवत्तु लीला इत्यादि । हेतुत्वोक्त्याऽपि समन्वयलक्षणार्थः सिध्येत् । लीलाशब्दस्तु स्थालीपुलाकन्यायादविरोधलक्षणार्थोपलक्षणः । अनेन स्वबुद्धिपूर्वकस्वप्रीत्यर्थव्यापारवाचिना कर्तृत्वं चोपादानत्वाविरुद्धं व्यञ्जितम् । सूक्ष्मप्रकृति-

विशिष्टतयोपादानम्, संकल्पतः कर्ता च स्यात्। एवं सहकारिकलापान्तर्यामितया सहकारित्वमपीति निर्वाह्यम्? विकारा-श्रयत्वव्यतिरिक्ताकारेण कार्योपयुक्तं हि निमित्तम्; न तूपादानादन्यदेव। उभयाभिप्रायेण हि कारणवाक्येष्वेकाद्वितीय-शब्दौ। * सोऽभिध्याय इत्यादिभिश्चैतदुपबृंहितम्। विनतादित्रातान्तं साधनलक्षणार्थपरम्। ततोऽत्र नतिर्मानसी यथाविधि प्रह्वता गुणोपसंहारपादोक्ततत्तद्विद्यारूपा। विशब्दस्तु नानार्थः, तद्वन्तो विनताः; पूर्वपादद्वयसिद्धवैराग्यादि-वैशिष्ट्यपरो वा विशब्दः। विनतानां वैविध्यं विद्याङ्गपादोक्ताश्रमादिभेदात्; * तदुपर्यपीत्याद्युक्तदेवादिभेदोऽप्यत्र द्रष्टव्यः। भूतशब्दस्तापत्रयहतेः तन्निवृत्त्युपायपाटवस्य च हेतुना देहविशेषेण योगमभिप्रयन्नर्थित्वादिकं व्यनक्ति। धात्वंशश्च * सन्तमेनं ततो विदुरित्याद्युक्तां शुद्धधीवैशिष्ट्यरूपां सत्तामाचष्टे; * अत्र ब्रह्म समश्नुते इत्यधीतां ब्रह्मनिर्वेशात्मिकां वा। भूतसंबन्धी व्रातोऽत्र तानि तदीयानि च, षष्ठ्या संबन्धसामान्योक्तेः; अन्यथा व्रातशब्द-नैरपेक्ष्यात्। न ह्यत्र सत्रवत्संहतानामेव प्रवृत्तिः फलवाप्तिर्वा। साकेतनिवासिवत्फललाभस्तु न सार्वत्रिकः। तदत्र * नास्यावरपुरुषाः क्षीयन्ते; * नास्याब्रह्मवित्कुले भवति; * पशुर्मनुष्यः पक्षी वा इत्यादि विख्याप्यम्। राजपरिष-दित्यादौ हि राजा चान्ये च विवक्ष्यन्ते। विविधशब्देन पशुपुत्राद्यस्वर्गस्वाराज्यादितत्तत्फलकामकर्तृवैविध्यम्, व्रातोक्त्या तत्तदुपायनिष्ठव्यक्तिभूयस्त्वं विवक्षितमिति केचित्। अयं च वैभववाद इत्यनुमन्यामहे। आहुश्च—

* सर्वव्याख्याविकल्पानां द्वयमिष्टं प्रयोजनम्। पूर्वत्रापरितोषो वा विषयव्याप्तिरेव वा॥ इति।

**फलाध्यायक्रमेणात्र परप्राप्तिविरोधिनाम्। शमनं निग्रहादीनां रक्षाशब्देन गृह्यते॥ ६५॥**

**प्रत्यूहात्यन्तभङ्गे तु स्वतः प्राप्तं सुखादिकम्। यावत्स्वरूपं तत्प्राप्तं तत्संसिद्धिरिहार्थतः॥ ६६॥**

**यद्वाऽभीष्टार्थदानं च रक्षेति परिगृह्यते। तदलाभनिमित्ताद्धि विषादात्त्रायते यतः॥ ६७॥**

**प्रयासानतिरेकेण फलाधिकृतिनीतितः। चतुर्विधानां भक्तानां रक्षोक्तिश्च न दुष्यति॥ ६८॥**

आनन्दयितृत्वश्रुतिसूत्रे चात्र भाव्ये। एकशब्द इह प्रधानार्थः। * अप्यहं जीवितं जह्यामित्यादिषु तद्वि-रोधे तद्विपर्यनाभीष्टतमक्त्त्त्यागोक्तेः। अनन्येषु प्रमाद्यत्स्वपि निरयादिप्रापकनिग्रहनिवृत्त्यर्थो वा, तेषां यमविषय-गमनादिनिषेधात्। दृश्यते हि— * न खलु भागवता यमविषयं गच्छन्तीति। * इहैवैषां केचिदुपप्लवा भवन्ति इति शिक्षामात्राम्नानाच्च। दीक्षा दृढसंकल्पः, * न त्यजेयम् * एतद्व्रतं मम इत्याद्युक्तेः। दीक्षोक्त्या स्वार्थत्वं च सूचितम्। राजार्थं खलु रथतुरगगजादिसंरक्षणम्। रक्षायामेका दीक्षा यस्येति व्यधिकरणबहुव्रीहिः; रक्षायां वा दीक्षाकार्यत्वात्तदुपचारः। रक्षायामेकदीक्ष इव वा योज्यम्।

**दृष्टमन्यापराधे हि दण्डनं खण्डनादिकम्। राजपुत्रापराधे हि दण्डनं लघु दृश्यते॥ ६९॥**

फलसाधनतया चोदितस्याप्यार्थं फलप्रदप्राधान्यं सिद्ध्यति।

**राजानः फलदा राजपरिचर्याविधायिनाम्। फलप्रदस्य प्राधान्यं फलात्तदवगम्यते॥ ७०॥**

विनतरक्षोक्त्या तत्सहगीतदुष्कृतिनिग्रहव्यञ्जनात्रिवर्त्यो बन्धहेतुः कर्मादिः ख्यापितः; अत एव वैषम्यनैर्घृण्य-परिहारश्च। श्रुतिशब्दो निरपेक्षसंप्रतिपत्तिन्यायान्नित्यं श्रूयमाणे वेदे रूढः। * सिद्धे शब्दार्थसंबन्धे इत्यादौ चैवं प्राहुरित्युक्तम्। तेन वक्तृदोषाभावसिद्धिः। साधितं च सर्वाद्यपादे वेदानां प्रामाण्यम्, कारणदोषबाधकप्रत्ययोरभावेन कर्तुश्च तेषामनुमातुमशक्यत्वात्, कल्पादिष्वपि यथापूर्वं प्रादुष्करणात्, काठकादिसमाख्यानां कर्तृविशेषोपस्थापक-

त्वाभावाच्च । **शिरः** ब्रह्मप्रधानतयोत्तमो भागः । **दीप्तिः** स्फूर्तिः । सा पुनराद्याधिकरणोक्तसिद्धार्थव्युत्पत्तेः । विशब्दोक्तं वैशिष्ट्यं त्वन्यदेवतोक्तिराहित्यम् । * तदेवाग्निः इत्यादिनान्यादिशब्दानां शरीरिणि पर्यवसानम्, जन्मादिसमन्वयसूत्रोक्तकारणत्वस्वतःपुरुषार्थत्वाभ्यां व्यावृत्तिश्चात्र विवक्ष्यते । मानविशेषोक्त्या विशेषनिषेधन्यायेन तृतीयसूत्रार्थः सिद्ध्यति । एवमिह न्यायसुदर्शने संग्रहः—

* व्युत्पत्त्यभावः प्रतिपत्तिदौःस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि ॥ इति न्यायसंग्रहे च तथैव सेनेश्वराचार्याः—

*व्युत्पत्त्यभावात्प्रतिपत्तिदौःस्थ्यादन्येन सिद्धेरफलत्वतश्च । अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्त्वम् ॥ इति ।

एतेन * को धर्मः इत्यादिवत् किं ब्रह्मेत्यादिविचारपर्यन्तफलरूपप्रमितिवैशिष्ट्यमुक्तम् । ननु यदि ब्रह्मशब्दोऽत्र सामान्यवाची, तदा श्रीनिवासशब्देन विशेष्येत । नैवममौ, * तस्मादन्यत्र औपचारिकः इत्यत्रैव स्थापनात्; जन्मादिसूत्रे * निरतिशयबृहद्बृंहणं च ब्रह्मेति निर्वचनोक्तेः; कारणत्वाधिकरणे च— * ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शनात् इत्यादि; वियदधिकरणे च सूत्रम्— * स्याच्चैकस्य ब्रह्मशब्दवत् इति; तत्र च भाष्यम्— * यथा ब्रह्मशब्दः 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इत्यत्र प्रधाने गौणतया प्रयुक्तस्तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति ब्रह्मणि मुख्यतया प्रयुज्यते तद्वत् इति । * परं जैमिनिर्मुख्यत्वात् इत्यत्र चैवं भाष्यम्— * ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् इति । नापि परशब्दवदौपचारिकप्रयोगव्यवच्छेदार्थोऽत्र विशेषकः श्रीनिवासशब्दः, परस्मिन्नित्यनेनैव पर्याप्तेः । नाप्येकत्र रूढत्वेऽप्यप्रसिद्धतया पर्यायेण बोधनम्, तदयोगात्; न ह्यत्र कोकिलः पिक इतिवदन्वयः, असामर्थ्याद्वाक्यभेदाच्च; न च तद्युक्तम्, * संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते इति न्यायात् । श्रीनिवास इति नाम, अन्यस्तु त्यक्तरूढिर्योगतो विशेषक इति चायुक्तम्; अखिलेत्यादिना गतार्थत्वात् । अथ च सामान्यवाची ब्रह्मशब्दः क्वचित् भाति, समन्वयसूत्रे तावत्सद्ब्रह्मादिशब्दानामुत्तरोत्तरविशेषकत्वाभिप्रायेण समभिव्याहारः । आकाशाधिकरणेऽपि— * सदादिशब्दाः साधारणाकाराः इत्युक्तम् । आरम्भणाधिकरणेऽपि— * सद्ब्रह्मादिशब्दास्तुल्यप्रकरणस्थास्तत्तुल्यप्रकरणस्थेन नारायणशब्देन विशेषितास्तमेव गमयन्ति इति । पाशुपताधिकरणेऽपि— * सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः सदेव सौम्येदमग्र आसीदित्यादिसद्ब्रह्मादिशब्दाः प्रतिपादयन्ति इति । अतः कथमेतत्? इत्थं—प्रत्ययितग्रन्थस्थे परस्परविरोधे तात्पर्यतस्तावद्विरोधो निवार्यः । या ब्रह्मशब्दस्य परमात्मन्येव रूढिरादावेव स्थापिता सैव सर्वत्रेष्टा; साधारण्यानूक्तिस्तु बहुश्रुत्यादिप्रयोगदृष्ट्या कुदृष्टिवादिविप्रतिपत्त्या चात्मादिशब्दवज्जातिशब्दत्वं योगमात्रमनेकरूढिं वा पश्यतामाभिमानिकं साधारण्यमन्वारुह्य तदिष्टान्यार्थत्वशङ्कानिरासाय स्यात् । तथा च— * ब्रह्मणि इति सामान्यशब्दः, * श्रीनिवासे इति विशेषशब्दः इति व्याख्यानेष्वप्येवं गतिः । तथाऽत्र साधारण्यान्वारोहेण श्रीनिवास इति विशेषनिष्कर्षः स्यात् । यद्वा— ब्रह्मशब्दस्यैकरूढिमनुरुध्यैव तदेव श्रीनिवासशब्देन विशेष्यते; या सर्वैराश्रीयते सा च तदाश्रयेति । अत एवात्र छागपशुन्यायोऽभिप्रेतः । अन्यथा चतुर्मुखादित्वमप्याशङ्क्येत । अत एव * ह्रीश्च ते लक्ष्मीश्च पत्न्यौ इति परतत्त्वासाधारणपुरुषशब्दार्थोऽपि श्रियः पतित्वेन विशेष्यते । तेन कारणत्वादिभिरिव परस्मिन्ब्रह्मशब्दरूढिः स्थापिता स्यात् । प्रसिद्धतमनामान्तरवाच्यत्व-

लक्षणान्वयः, श्रीनिवासशब्दार्थे ब्रह्मणीति। श्रीनिवासस्य वा परत्वसिद्ध्यै प्रकृताकारबृहत्त्वनिमित्तब्रह्मशब्दवाच्यत्वं विशेषणीकार्यमिति। सत्यत्वादिस्वरूपनिरूपकधर्मपञ्चकनिरूपितमपि परं ब्रह्म श्रीनिवासत्वेन विशेषितमेव ब्रह्मविद्यावेद्यमित्युक्तं भवति। श्रीसंश्रयणं नित्यं स्वरूपवन्मूर्त्याऽपि, * श्रीवत्सवक्षा नित्यश्रीः इत्यभिधानात्। अत्र * शान्तानन्त इत्यादिकमनुसन्धेयम्। एतेन पर्यङ्कविद्यादिप्रसिद्धविभूत्यन्तरवत्त्वं च। भवत्वित्याशिषा प्राप्यान्तरेभ्यः स्वादुतमोऽयमुपाय इति व्यज्यते। यथोक्तम्—

* क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्। क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्॥ इति।

**मम** * सोऽहं भगवः शोचामि इत्याद्युक्तावस्थस्येति भावः। **परस्मिन्** सर्वनियन्तृत्वनिरुपाधिकानन्दयितृत्वाभ्यां * सा काष्ठा सा परा गतिः इत्याम्नातवशीकार्यत्वप्राप्यत्वकाष्ठाभूते। प्राप्यत्वोक्त्या * रसँह्येवायं इत्यादिसिद्धमुक्तावस्थाशोधनं च; सृष्ट्याद्युपयुक्तसार्वज्ञ्यादिकृतस्वोत्कर्षपरमसीमत्वं वा परत्वम्। एवं परत्वसौलभ्याभ्यामभिगम्यं सिद्धप्राप्यादिरूपं भजनीयं विशोधितम्।

**परत्वं सुलभत्वेन रहितं नोपकारकम्। सुलभत्वं तथा तेन रहितं नोपकारकम्॥ ७१॥**

साध्योपायशोधने तु—

**भक्तेः पूजादिमात्रत्वं धियश्चिन्तादिरूपताम्। व्यवच्छेत्तुमिह न्यस्तं शेमुष्यादिपदद्वयम्॥ ७२॥**

वेदनादिशब्दानां पश्वादिनीत्या वक्ष्यमाणाया विशेषविश्रान्तेः संग्रहोऽयम्— **शेमुषीति;** शमाद्यङ्गिकां बुद्धिं दर्शयति, महनीयविषयप्रीतिः भक्तिः, प्रीतिश्च धीविशेषः; यादृश्या धिया सा साध्या परेष्टा, तादृश्या एव तत्त्वं युक्तम्; तदुक्तं भक्तिमेवाधिकृत्य वेदार्थसंग्रहे— * विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतम्; तद्विषयं ज्ञानमेव सुखम्; तदतिरेकि पदार्थान्तरं नोपलभ्यते। तेनैव सुखित्वव्यवहारोपपत्तेश्च इति। * स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते इति च।

**आपादचूडं शास्त्रार्थ इत्थमत्रानुवर्णितः। प्रसिद्धिरवधित्सायां यथास्थानं भविष्यसि॥ ७३॥**

एवं शास्त्रार्थोऽनुक्रान्तः। विशेषतश्चोभयलिङ्गपादगत्या ध्येयं शोध्यते— पूर्वद्विकसिद्धेऽपि ब्रह्मतत्त्वे पुनः तत्प्रभावविशेषस्थापनातिशयात्पादो ह्ययमुपयुक्ततमः, अनन्योपासिसिषातिशयहेतुत्वात्। अतत्यब्रह्मगुणविशेषाकारवादैरनन्तरपादे विद्यानानात्वोक्तेश्च। तदिहाखिलेत्यादिना स्वप्नप्रपञ्चादेरपि जन्मादिहेतुत्वेन परत्वातिशयोक्त्या, सन्ध्याद्यधिकरणचतुष्टयाभिप्रेतं क्षेत्रिणां स्वप्नसुषुप्त्यादेः कारणं परस्याकुण्ठितविचित्रशक्तित्वं व्यञ्जितम्। * विदीप्ते श्रीनिवासे इति पदाभ्यां मिथोऽनुपमर्दिव्यावृत्तिविधिरूपविशेषणवर्गोपलक्षणात् * न स्थानतोऽपि परस्य इत्युक्तपरशब्दोपादानाच्चोभयलिङ्गाधिक्रियार्थ उदाहृतः। चिदचिदनुप्रवेशादिसंग्राहकादिशब्दात् लीलाशब्दसामर्थ्याच्चांशतोऽपि स्वस्य स्वयमेवाज्ञत्वापादनशङ्काप्रतिक्षेपादहिकुण्डलाधिकरणोक्तं स्मारितम्। परस्मिन्निति कारणस्यैवात्र परत्वोक्त्या * परमतः इत्यधिकरणार्थोऽपि ख्यापितः। विनतेत्यादिना * फलमतः इत्युक्तं दर्शितम्। शेषेणार्थसिद्धोपासिसिषासूचनमिति। प्रकारान्तरेणापि ध्येयमिह शोध्यते—

**पूर्वं द्विलिङ्गपादस्य प्रक्रिया परिशोधिता। नारायणानुवाकादिनिर्णीतार्थस्त्विहोच्यते॥ ७४॥**

अत्र ह्यखिलेत्यादिना सर्वकारणत्वम्, विनतेत्यादिना मोक्षार्थसर्वविद्यावेद्यत्वम्, * श्रुतिशिरसि विदीप्ते इत्यनेन

निषदेकप्रतिपाद्यत्वं च परस्य ब्रह्मण उक्त्वा तस्य श्रीनिवासत्वं च वदतोऽयं भावः— * कारणं तु ध्येयः इत्या- सर्वकारणमेव मुमुक्षोर्ध्येयं श्रुतम्; तदेव सद्ब्रह्मादिशब्दैरुक्तम्; ते च न भिन्नविषयाः; सर्वत्र जगत्कारणस्यै- क्त्या विकल्पसमुच्चयायोगात्, कृत्स्नवेदप्रामाण्ये निश्चिते सर्वेषामन्यतमस्य त्यागायोगाच्च; अन्यथा विवधघट- येन इतरग्रहाणायोगाच्च; अत एकविषयत्वे सिद्धे ब्रह्मेशानादिनिषेधयुक्तसूपिष्ठावाधितार्थसात्त्विकब्रह्मपबृंहणानुगुण- नियतपठितानन्यसाधारणलक्ष्यस्पदनारायणशब्दोक्तश्रीपतिरेव सदादिशब्दार्थः। कारणविषयपरविद्योपास्यनिर्धारणं नारायणानुवाकविषयलिङ्गसूयस्त्वाधिकरणसिद्धम्; सर्वेषां च कारणवाक्यानां सर्ववेदपठितपुंसूक्तैकार्थ्यं युक्तम्; तिपाद्यश्च श्रीपतिरित्युत्तरानुवाकसिद्धम्; कारणविषयहिरण्यगर्भशब्दस्य * अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ इति यैव श्रीपतिविषयत्वं दर्शितम्। एवं पुंसूक्तशब्दार्थसंज्ञया श्वेताश्वतरोपनिषदादयोऽपि व्याख्याताः। अतः * सर्वे यत्रैकं भवन्ति, * वेदैश्च सर्वैरहमेव वेद्यः इत्यादिसिद्धमिह स्थापितम्। अत एव पुरुषनारायणोत्तरनारायण- रायणानुवाकानामैककण्ठ्येन श्रीनिवासे ब्रह्मणीति श्रीनिवास एव ब्रह्मशब्दार्थः।

**परपक्षनिरासश्च कृतश्शास्त्रैकदेशतः। व्यज्यतेऽस्मिन्पदैस्तैस्तैः पद्ये शास्त्रार्थसंग्रहे ॥ ७५ ॥**
**व्यनक्त्यखिलशब्दोऽत्र चिदचिद्भेदसत्यताम्। एकस्मिन्नपि तद्व्यक्तिर्भागभेदव्यपेक्षया ॥ ७६ ॥**
**अर्थेन्द्रियगतैस्तद्वदुभयानुभयाश्रितैः। विना दोषैरिहाध्यक्षं बाध्यमिच्छन्स्वधीहतः ॥ ७७ ॥**
**भेदसत्यत्वपक्षस्य भेदमिथ्यात्वपक्षतः। विभागो यदि मिथ्या स्याद्व्याहतिः सर्वतोमुखी ॥ ७८ ॥**
**अनन्यपरवाक्योक्तविभूतिगुणविग्रहान्। अबाधित्वैव नेतव्या नेति नेत्यादयः प्रभौ ॥ ७९ ॥**
**श्रुतिस्तु नित्यनिर्दोषा स्वतःप्रामाण्यशालिनी। अलौकिकेऽर्थे न क्षेप्या स्वेष्टदूराद्भुतोक्तिवत् ॥ ८० ॥**
**मिथोंऽशानां सशेषैश्च शेषस्यैक्यं निगूहती। अखिलोक्तिरनेकान्तवादानपि विलुम्पति ॥ ८१ ॥**
**विश्वमेतदनेकान्तं वदतो विहतिस्त्यजः। न साध्यदूष्यसिद्धान्तरागद्वेषादिसंभवः ॥ ८२ ॥**
**नञ्प्रयोगश्च सार्थोऽसौ यथाव्युत्पत्तिबोधकः। अभावस्यानुपाख्यत्वं हन्ति निर्बाधबोधतः ॥ ८३ ॥**
**भावान्तरमभावोऽसौ पदार्थान्तरमेव वा। द्विधापि निःस्वभावत्वं तत्स्वभावे कथं भवेत् ॥ ८४ ॥**
**चतुर्विधाणुमनसामाकाशादेश्च नित्यताम्। अस्यत्यखिलजन्मोक्त्या नित्यमन्यत्तु शाश्वतः ॥ ८५ ॥**
**सज्जायेतेति कण्ठोक्तकार्यसत्त्वापलापिनः। सत्तार्थधातुनिष्पन्नसुवनोक्त्या निराकृताः ॥ ८६ ॥**
**सदसत्कोटिनिर्मुक्तकल्पना हि निरर्थिका। सदसद्रूपपक्षोक्तविरोधस्याविशेषतः ॥ ८७ ॥**
**भावाभावविकल्पे तु कोट्यन्तरमसंभवि। व्यक्त्यध्यासविसृष्ट्यादि विकारेषु विवक्षताम्।**
**जन्मव्याहरणाद्बाधः कृतश्श्रुत्यादिदर्शितात् ॥ ८८ ॥ अभिव्यक्तेरनादित्वे कारकाणामनर्थता ॥ ८९ ॥**
**तदागन्तुकतामिच्छन् किं नान्यत्रैवमिच्छति। विसृष्टिः क्वचिदिष्टैव विकासोऽपि दशान्तरम् ॥ ९० ॥**
**विकासतद्वतोरैक्ये व्याघातस्सांख्यपक्षवत्। एक एव निमित्तं चोपादानं चेति सूचनात् ॥ ९१ ॥**
**योगवैशेषिकाद्युक्तं युक्त्याभासमभाषत। कर्ता स्वपरसंयोगे समवायी च विश्वकृत् ॥ ९२ ॥**
**न च कम्रेषु संयोगं नित्यं भौतेषु भावयेत्। जनयन्स्वसुखादीनि दृष्टो जीवोऽपि तत्र च ॥ ९३ ॥**
**कर्तृत्वसमवायित्वे काणादैरपि दुस्त्यजे।**

बहु स्यामिति मन्तुश्च विकारः परिकल्पितः । शरीरद्वारतस्सृष्टेस्सूचनात्प्रत्यरुध्यत ॥ ९४ ॥
क्रमाज्जन्मादि सर्वेषामेकतस्तद्विदीरणात् । क्षणभङ्गः प्रवाहेशपक्षश्चात्र पराकृतः ॥ ९५ ॥
स्थिरापेक्षा ह्यनुमितिस्स्थिराभावं न साधयेत् । न च प्रत्यक्षमक्षोभ्यप्रत्यक्षान्तरबाधतः ॥ ९६ ॥
सर्गप्रलयवादानामान्यपर्यान्मृषार्थता । अर्धलोकायतारूढैरुक्ताप्यत्र बहिष्कृता ॥ ९७ ॥
अनुप्रवेशादि वदन्निराचक्रे यथाश्रुति । सामानाधिकरण्यस्य बाधैक्यादिप्रयुक्तताम् ॥ ९८ ॥
विशिष्टविषयानेकसामानाधिकरण्यतः । निर्भेदैकार्थतां तस्य वदन्त इह वारिताः ॥ ९९ ॥
चार्वाकादिमतं चात्र हेत्वाद्युक्त्या निवर्तितम् । निरानन्दोक्तिपक्षश्च सलीलत्वेन खण्डितः ॥ १०० ॥
निरीश्वरजगत्सर्गस्शब्दादेश्च तदुद्भवः । निर्व्यापारेशपक्षश्च तत एव न्यषिध्यत ॥ १०१ ॥
बहुश्रुत्यादिसिद्धत्वाद्बाधलेशविमुक्तया । लीलोक्त्यैवैक्यपक्षेषु स्रष्टृत्वायोग उच्यते ॥ १०२ ॥
सङ्कल्पाध्यसनं तावन्न विकल्पं सहेदिह । अचेतनतया नित्यमविद्यावृत्तिमात्रयोः ॥ १०३ ॥
स्वंशसद्ब्रह्मवादे च सुषुप्तस्येशितुस्तदा । अचिज्जीवसमानस्य न लीलोद्यमसंभवः(भ्रमः) ॥ १०४ ॥
नित्यसर्वज्ञताश्रुत्या सुषुप्तिश्चास्य बाधिता । कालाधीनप्रबोधादेरनैश्वर्यं च दुस्त्यजम् ॥ १०५ ॥
सुषुप्तिश्च प्रबोधश्च प्राक्सङ्कल्पादिति त्वसत् । अनन्तानुभवानन्दजिहासानुपपत्तितः ॥ १०६ ॥
नाचित्सङ्कल्पयेन्नापि जीवोऽसिद्धेन्द्रियादिकः । ईश्वरश्शान्तनिद्रोऽपि कुर्यान्नानर्थमात्मनः ॥ १०७ ॥
नित्यप्रबुद्ध ईशांशोऽप्यतो नेदृग्विहारवान् । भोक्तॄणां स्वात्मतादात्म्यं न वेत्ति न हि सर्ववित् ॥१०८॥
विनतादिपदैरत्र जीवानामितरेतरम् । ईशित्रा च स्वरूपैक्यं तत्तन्मानैः परास्यते ॥ १०९ ॥
असर्वज्ञोऽहमित्यात्मा येनाध्यक्षेण गृह्यते । सर्वज्ञैक्यमतिस्तस्य न तच्छक्त्यापि संभवेत् ॥ ११० ॥
नानात्मानो व्यवस्थात इत्यन्यैरपि सूत्रितम् । विरुद्धधर्मसंसर्गं व्यनक्ति विविधोक्तितः ॥१११॥
वर्णाद्यैर्नन्तृवैविध्यादलेपकमतं हतम् । यावज्जीवं मुमुक्षोश्च तद्धर्मो निश्चलीकृतः ॥ ११२ ॥
अत्याश्रमिभ्य इत्येतत्प्रशस्ताश्रमयोगतः । अलेपश्च श्रुतः पापैः प्रमादात्तैरिति स्थितिः ॥ ११३ ॥
तदुपर्यादिसूत्रोक्ता सर्वदेवैकसेव्यता । व्यञ्जिता विविधोक्त्यैव तत्तत्पारम्यनुत्तये ॥ ११४ ॥
व्रातशब्देन जीवानामानन्त्यमपि सूचयन् । इतः प्राक्सर्वमुक्तिः स्यादिति चोद्यमवारयत् ॥ ११५ ॥
आत्मानन्त्यादमुक्तानां मुक्तानामप्यनन्तता । आनन्त्यतारतम्येन सद्व्यादिनयाद्भवेत् ॥ ११६ ॥
एको जीव इतः पूर्वममुक्तो हेत्वनागमात् । इति पश्यन्ननेकेषु तथात्वं किं न पश्यति ॥ ११७ ॥
मुक्तेर्नतिभवत्वोक्त्या नित्यमुक्तिर्निराकृता । स्वरूपस्य न मुक्तित्वं सिद्धसाध्यविरोधतः ॥ ११८ ॥
क्रियातच्छक्त्यपूर्वाद्यैः स्वर्गादीति परोदितम् । नन्तृरक्षणदीक्षोक्त्या निरस्तं निगमाप्तया ॥ ११९ ॥
विध्यपेक्षे तु वैधार्थद्वारे श्रुत्यैव दर्शिते । श्रुतहानादिरन्याय्यो रात्रिसत्रादिनीतितः ॥ १२० ॥
नतिरक्षादिजीवेशव्यापारप्रतिपादनात् । साक्षिमात्रत्वमनयोस्तत्तदुक्तमपास्यत ॥ १२१ ॥
वेदानित्यत्ववादश्च वेदोज्झितपथस्तथा । अनुमेयेशपक्षश्च श्रुत्याद्युक्त्या निवारितः ॥ १२२ ॥
ईशितुः सगुणत्वेन भङ्गुरत्वादि साधयन् । धर्मिग्राहकवेदान्तविदीप्तिध्वस्तदृष्टिकः ॥ १२३ ॥

अवेद्यत्वमवाच्यत्वमपि प्रोक्तं कुदृष्टिभिः । निगमान्तविदीमत्त्वनिर्देशेन निवर्तितम् ॥ १२४ ॥
उपासनाद्यनर्हं यत्तद्ब्रह्म श्रुतमित्युशन् । परस्य विद्युपास्यादिविषयत्वोक्तितो हतः ॥ १२५ ॥
न विश्वस्तीति वदतां तत्तन्मानैः प्रणुत्तये । बृहत्त्वमपरिच्छेद्यं ब्रह्मशब्देन दर्शितम् ॥ १२६ ॥
भागभेदाद्ययोगेन विभुतत्त्वस्य निह्नवे । अणुष्वपि सुदुर्वारः सर्वासत्त्वे स्ववाग्घतिः ॥ १२७ ॥
व्यतिरेकग्रहायोगाद्विभु कारणमुज्झतः । अबाध्यश्रुतिसिद्ध्यैव तत्सिद्धिं समदर्शयत् ॥ १२८ ॥
कारणत्वादिधर्माणां प्रतियोगिमतामपि । अकाल्पनिकतां प्राह तथा तन्मानबोधनात् ॥ १२९ ॥
स्वेष्टस्वपरनिर्वाहन्यायात्सम्बन्ध आश्रितः । नानवस्थितये नातिप्रसक्त्यै चेति भाव्यताम् ॥ १३० ॥
श्रीनिवासपदेनात्र निर्विशङ्कार्थवाचिना । त्रिमूर्तिसाम्यतादात्म्यव्यक्त्यन्तरजुषः क्षताः ॥ १३१ ॥
अन्योक्तिः परविद्यासु निरुक्त्यादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ १३२ ॥
बाह्यैः कुदृष्टिभिश्चोक्तास्त्रिमूर्त्युत्तीर्णकल्पयः । ब्रह्मणः श्रीनिवासस्य परत्वोक्त्या पराहताः ॥ १३३ ॥
आप्नोति परमित्येतत्सूचयन् परशब्दतः । स्वात्मप्राप्त्यादिमात्रस्य निराचक्रेऽपवर्गताम् ॥ १३४ ॥
परानुभूतेर्नाभावो न च ह्रासो निरंहसः । अनिश्शेषितकर्मा तु मुक्त इत्युपचर्यताम् ॥ १३५ ॥
परत्वमनवच्छिन्नं मुक्तादिभ्योऽपि हि श्रुतम् । ततः सर्वगुणात्यन्तसाम्यवादोऽप्यपोदितः ॥ १३६ ॥
एकीभावश्रुतिश्चात्र प्रकारैक्यविवक्षया । शुद्धाशुद्धाम्बुयोगे हि तादृक्त्वं श्रुतिदर्शितम् ॥ १३७ ॥
त्रय्यन्तदीक्षितामुक्त्वा भक्तेराशासनात्पुनः । शब्दतोऽध्यक्षसंवित्तेरसंभव उदाहृतः ॥ १३८ ॥
आत्मनोऽनहमर्थत्वं वदतामपनुत्तये । ममेतीरितमात्मानमहमर्थं न्यदर्शयत् ॥ १३९ ॥
शेमुष्यादिपदाभ्यां तु कर्मधीतद्विकल्पयोः । वाक्यार्थैक्यमतेश्चात्रानुपायत्वं प्रदर्शितम् ॥ १४० ॥
बोद्धृबुद्धिभिदामत्र ममकारेण दर्शयन् । विषयग्राहिणी बुद्धिरात्मेति मतमच्छिनत् ॥ १४१ ॥
मम स्वरूपमितिवद्भेदोक्तिरुपचारतः । इत्यसद्बाधविरहान्न चेद्देहेऽपि का गतिः ॥ १४२ ॥
बाधः स्वारसिको नास्ति संविदां बोद्धृबोध्ययोः । कुतर्कैर्यदि शेमुष्या प्रतिबन्दीमसूचयत् ॥ १४३ ॥
विषयेणाश्रयेणापि स्वधर्मेणापि शेमुषीम् । विशिंषंस्तन्निराकर्तॄन्निरास्थदिति मन्महे ॥ १४४ ॥
एवं तु जीवपरयोः स्वरूपैक्याभिमानिनाम् । अत्र शारीरकारम्भस्त्रयाणामुपरुध्यते ॥ १४५ ॥
मिथ्याभूतस्य बन्धस्य तत्त्वबुद्ध्यैव बाधनात् । तत्प्रधानमिदं शास्त्रमारभ्यमिति दुर्भणम् ॥ १४६ ॥
प्रमितस्यास्य सत्यस्य परभक्त्या विनाशनम् । प्रतिपादयतानेन परारम्भो निवारितः ॥ १४७ ॥
न जिज्ञासेत धीरत्र ज्ञातृत्वादिप्रहाणतः । ज्ञातृभूतोऽहमर्थश्चेन्नारभेत स्वनाशनम् ॥ १४८ ॥
स्वदुःखशान्तये कश्चित्स्वनाशं मूढ इच्छति । न तथात्र गतक्लेशस्वात्मस्थितिसमर्थनात् ॥ १४९ ॥
इत्थं ब्रह्मप्रतिच्छन्दजीवपक्षेऽपि दूषणम् । ईश्वरोऽपि न जिज्ञासुः सार्वज्ञ्याध्याससंमतेः ॥ १५० ॥
भावाभावात्मकाशेषविशेषोज्झितवर्ष्मणः । जिज्ञासाकर्मताप्यत्र विशिष्टोक्त्यैव बाधिता ॥ १५१ ॥
विषयत्वप्रहाणाच्च जिज्ञास्यत्वं विहन्यते । न ह्यत्रोपहिते चिन्ता न च सा भ्रान्तिशान्तिकृत् ॥१५२॥
अवेद्ये हि न जिज्ञासा सा चेत्कथमवेद्यता । न च कोटिद्वयोन्मुखं किञ्चित्स्याद्व्याहतत्वतः ॥१५३॥

ज्ञेयत्वे चात्मता न स्याद्घटादिवदिति त्वसत् । सहदृष्टेर्द्वयोर्वह्नेर्भास्वत्वोष्णत्वयोरिव ॥ १५४ ॥
कर्मकर्तृविरोधश्च स्वदृष्टौ भङ्गगुम्फितः । न हि दृष्टे विरुद्धत्वं न दृष्टिश्शक्यनिह्नवा ॥ १५५ ॥
अवेद्यमिति वेद्यत्वे वेद्यत्वं स्वीकृतं भवेत् । अवेद्यमित्यवेद्यत्वे वेद्यत्वमनपोदितम् ॥ १५६ ॥
अवाच्यमित्यवाच्यत्वे वाच्यत्वेऽपि च वस्तुनः । वाच्यतैव भवेत्तस्य वाच्यावाच्यवचोऽन्वयात् ॥१५७॥
प्रोवाचावचनेत्याद्या उक्तयश्च परात्मनः । अपरिच्छेद्यतार्थास्स्युर्न चेत्स्वोक्त्यादिभिः क्षतिः ॥ १५८ ॥
ज्ञानत्वाज्ज्ञेयता नास्ति ज्ञातृताप्यात्मनस्त्विति । दृष्टश्रुतिविनिर्धूतं ज्ञानत्वं तु स्वभासनात् ॥ १५९ ॥
किंच श्रुतिशिरस्येव विदीतिं वदता विभोः । परेषां व्यज्यतेऽर्थेषु त्रय्यन्तनिरपेक्षता ॥ १६० ॥
स्वप्रकाशा मतिर्धीत्वाद्दृश्यत्वाद्वियतं मृषा । इत्याद्यैरेव सिद्धेऽर्थे कृतं त्रय्यन्तचिन्तया ॥ १६१ ॥
सगुणोपासनादीनां सिद्ध्यै तच्चिन्तनं यदि । तच्चेदद्वैतधीसिद्ध्यै तद्वृथा तद्विरोधतः ॥ १६२ ॥
फलान्तरार्थं तच्चिन्ता यदीष्येत तथा सति । मोक्षप्रधानशास्त्रत्वं गतं शारीरकस्य ते ॥ १६३ ॥
श्रुतिवाक्यप्रसूता धीर्बाधिका नानुमानिकी । इति वक्तुं न ते शक्यमदृष्टस्यानपेक्षणात् ॥ १६४ ॥
अनुमानाच्च वाक्याच्च रज्जुसर्पादिविभ्रमे । अविशेषेण बाधो हि दृष्टस्तद्वदिहास्तु ते ॥ १६५ ॥
प्रत्यक्षं शब्दजन्यं च दुस्साधं निष्फलं च ते । परोक्षादपि शब्दार्थात् क्वचिद् बाधस्य सम्मतेः ॥१६६॥
न चानुमानाशक्तस्य वाक्यमित्यपि युज्यते । सर्वमानान्तरानर्हे शास्त्रमानत्वसाधनात् ॥ १६७ ॥
अनेकनियमोपेतवाक्यचिन्ताविधेर्वरम् । लोकदृष्ट्यनुसारेण श्रुतादेश्च क्षमानुमा ॥ १६८ ॥
ज्ञानेदृशानुमानानां भ्रान्तिर्न भ्रश्यतीति चेत् । ज्ञाततादृशवाक्यानां समं तत्संभ्रमादृते ॥ १६९ ॥
द्वैताद्वैतमतेऽप्येवमारम्भोऽनुपपत्तिमान् । न हि सर्वविदश्चिन्त्यं जीवस्य न तदैक्यतः ॥ १७० ॥
उपाधितः स्वतो वात्र भेदे सत्यपि किं भवेत् । रामादिभेदाद्वैषम्यं सर्वज्ञैक्यसमत्वतः ॥ १७१ ॥
सर्वेषु चावतारेषु नित्यं सर्वार्थवेदिनः । सुषुप्तिभ्रमदुःखाद्यं प्राहुश्शैलूषनीतितः ॥ १७२ ॥
इच्छया संसृतिश्चापि न शक्यमिति भाषितुम् । परेच्छा तत्र जीवेच्छा तन्मूलश्च भवो यतः ॥१७३॥
ज्ञातस्वजीवतादात्म्यः शक्तश्चेत्प्रसहेद्भवम् । अशक्तो यदि मोक्षार्थं जिज्ञासेत कथं परम् ॥ १७४ ॥
अतो जीवेशयोर्भेदमभेदस्पर्शवर्जितम् । वभाषे नन्तृनन्तव्यरक्ष्यरक्षकतादिभिः ॥ १७५ ॥
इत्थं निवारितो भेदाभेदवादविधायिनोः । द्वयोरपि च शास्त्रस्य प्रारम्भः प्रातिकूल्यतः ॥ १७६ ॥
स्वमते तु स्वरक्षार्थविशिष्टविषयोत्थितेः । निश्शेषमिह निर्धूताः शास्त्रानारम्भहेतवः ॥ १७७ ॥
ज्ञातमज्ञातमपि वा न जिज्ञास्यमिति त्वसत् । विदिताविदिताकारभेदेनैवोपवर्णनात् ॥ १७८ ॥
सिद्धं धर्मिणमुद्दिश्य साध्यधर्मविधानतः । इत्थमेवानुमानेऽपि वादिनोऽप्यनुमेनिरे ॥ १७९ ॥
व्युत्पत्तिद्वारसिद्धेऽपि तद्विशेषेऽपि शास्त्रतः । अलौकिकेऽर्थे समभिव्याहारात्सा हि सम्मता ॥ १८० ॥

नेदं शास्त्रं निर्विषयम्, *श्रोतव्यो मन्तव्य इतिश्रुत्यनूदितविषयोक्तेः । नाप्यसौ भ्रान्त्या मानान्तरेण वा सिद्धः, निर्बाधे श्रुतिशिरस्येव विदीतत्वात् । न च निरूपितः, पूर्वकाण्डयोरान्यपर्यात् शास्त्रान्तरे तु प्रसङ्गाभावाद्विरुद्धोक्तेश्च । न च ध्वाङ्क्षदन्तसंख्यावदनिरूप्यः, स्वगृहविनिक्षिप्तबृहन्निधिसाम्यात् तदधीनबृंहणत्वरूपरक्षोक्तेश्च ।

न च मुक्तिः सिद्धा, प्रत्यक्षादिविरोधात्। नाप्यन्येन साध्या, देहादिनिष्टध्या बन्धकस्यैव पुरुषस्य त्वनन्तमुक्ति-हेतुत्वात्। नाप्यन्येन निरोध्या, एतस्य स्वायत्ताखिलसत्ताकतया निस्समाभ्यधिकत्वात्। न ततोऽपि सा दुष्प्रापा, तस्य तदेकदीक्षितत्वात्। न स्वर्गादिवत्पुनरावृत्त्यादिभिर्दुरन्ता, निग्रहादेर्निश्शेषनिवृत्तत्वात्। न च समन्वयत्वत्वयफला, सुखोपायेन निरवधिकसुखलब्धेः। नाप्यत्राधिकार्यभावः, यथाश्रुति * विनतविविधभूत इति सामान्यतः, * मन इति विशेषतश्च व्यञ्जनादिति।

**प्रतितन्त्रविहीनत्वादनारभ्यत्वमित्यपि। असाधारणरूपेण भाषणेन निराकृतम्॥ १८१॥**

श्रूयते हि सर्वशरीरत्वं सर्वान्तर्यामित्वमित्याद्यर्थजातमत्रैव। अथवा,

**सर्वानिष्टमिहाप्युक्तं तावताऽपि किमागतम्। तस्मात्प्रामाणिकं चिन्त्यं परेष्टमथवान्यथा॥ १८२॥**

**आभिमानिकमानैश्च सिद्धान्ताः स्थापिताः परैः। साधारण्यं क्व वा न स्याद्वैपुल्याद्देशकालयोः॥१८३॥**

**प्रतिपदमिह युक्तिं भाष्यकाराशयस्थां कथयितुमुत मन्तुं कः प्रभुस्तां प्रभूताम्।**
**तदपि कतिचिदस्मद्दर्शितं किंचिदेतच्छ्रुतफलमवयन्तः स्वादयिष्यन्ति सन्तः॥ १८४॥**

अत्रैवं परगुरुस्तुत्यादिविशिष्टमङ्गलान्तर्णीतपरमविषयाद्युक्त्यास्य शास्त्रस्यानारभ्यत्वमप्यपास्तम्॥

**पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां**
**संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम्।**
**पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-**
**मानीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम्॥**

अथ * नमस्कृत्य हृषीकेशम्, * नमो भगवते तस्मै व्यासाय इत्याद्याचारक्रमेणावरगुरुकीर्तनादिरूपमङ्गलगर्भा-वान्तरविषयाद्युक्त्या विधित्सितस्य स्वप्रबन्धस्यानारभ्यतां निरस्यति— **पाराशर्य** इत्यादिना **व्याख्यास्यन्ते** इत्यन्तेन।

**कुहकोक्तं भ्रमोक्तं वा निष्फलं निष्परिग्रहम्। स्पष्टं दुर्निर्वहं बोद्धृहीनमन्योज्ज्वलं न हि॥ १८५॥**

यद्येतच्छास्त्रं लोकायतादिवत्प्रतारकप्रोक्तं भ्रान्तिमूलं निष्प्रयोजनमपरिगृहीतं स्पष्टार्थं विवक्षिते नेतुमशक्य-मनधिकारिकमन्यतश्चरितार्थं वा स्यात्, न तर्हि व्याख्येयमिति शङ्कात्र क्षिप्यते। पराशरः—परान्बाह्यकुदृष्टीन्प्रमाणतर्क-शरैराशृणातीति पराशरस्तस्यापत्यं पाराशर्यः; न तादृशापत्यमतादृक्स्यादिति व्यक्त्यै पाराशर्योक्तिः। श्रुतिश्च— *स होवाच व्यासः पाराशर्यः इति। अत्र स्वगुणः पितृगुणेन ख्याप्यते। नात्र सूत्रकृद्बादरायणनामान्य इति मन्तव्यम्, * द्वीपे बदरिकामिश्रे बादरायणमच्युतम्। पराशरात्सत्यवती पुत्रं लेभे परन्तपम्॥ इत्यादिप्रसिद्धेः।

तस्य च ब्रह्मसूत्रकृत्त्वं च स्कान्दोक्तम्— * अवतीर्णो महायोगी सत्यवत्यां पराशरात्। उत्सन्नान्भगवा-न्वेदानुज्जहार हरिः स्वयम्॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः। शतधा चैकधा चैव तथैव च सहस्रधा॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये। चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा॥ इति। * ब्रह्मसूत्रपदैश्चैव इति भाविदर्शिभगवद्वाक्यं सूत्रपश्चाद्भावि वा स्वयमेव भारते न्यबध्नात्। सूत्रविषयतया च तद्वाक्यरूपा प्राक्तनी भाविनी वा

कृतिरुदाह्रियत इति न पौर्वापर्यविरोधः।

**अथ वानादिसिद्धत्वात्स्मृतिसूत्रप्रवाहयोः। परस्परगृहीतिस्तु न विरोधाय कल्पते ॥ १८६ ॥**

आह च परभाष्यव्याख्याता— * ब्रह्मसूत्रकृते वेदव्यासायापरवेधसे। ज्ञानशक्त्यवताराय नमो भगवतो(ते) हरेः ॥ इति।

सुधाशब्देनास्यार्थस्य भोग्यत्वं दर्शयतीति विवरणम्। अत्र च— वचसः सुधेति विग्रहे सुधाशब्दस्य गौणी वृत्तिः। रूपकप्रकरणानुरूप्येण वा वचश्शब्दलक्षितस्तदर्थस्सुधात्वेन रूप्यते। यद्वा— सूत्रमेव वा सुधेति रूपितम्। उपनिषद्विमर्शोत्थन्यायरूपार्थद्वारा तूद्धृतत्वाद्युक्तिः।

ननु श्लेषोपस्कृतनिजाक्षरानीतत्वादिसामान्यप्रयोगे कथमिह * उपमितम् इत्यादिना समासः; इत्थम्— समाससूच्यं स्वादुत्वसामान्यमिहाप्रयुक्तम्; तदन्यस्य प्रयोगेऽपि न दोषः; * भाप्याब्धिः कातिगम्भीरः इत्यादिवत्। वैधर्म्यरूपत्वं वा विशेषणेष्विह सर्वेषु योज्यम्। सुधा हि अमृताक्षरोपचरितैरन्यस्य छन्दसोऽक्षरैरानीता, इयं तु स्वाक्षरैरेव। सुधा किल केवलदुग्धाब्धिमध्योद्धृता, इयं तु उपनिषद्दुग्धाब्धिमध्योद्धृता। इत्थं शेषमपि योज्यम्।

**साधर्म्यात्स्वादुतासिद्धिस्तथा स्वादुतमत्वधीः। वैधर्म्यादिति वैषम्यं भाव्यमत्र मनीषिभिः ॥ १८७ ॥**
**यद् विवक्षितसामान्यं तत्प्रयोगो निषिध्यते। उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥ १८८ ॥**
**विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते। तत्पुनर्नोच्यते साक्षात्समासस्तेन सिध्यति ॥ १८९ ॥**
**अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः। दृश्यते बहुशस्तस्मान्न समासोऽत्र दुष्यति ॥ १९० ॥**

*ओषधीभ्यो यथामृतम् इतिवच्छिरश्शब्दाभिप्रायव्यक्त्यर्थं उपनिषच्छब्दः। उप निषीदति अव्यवधानेन नेत्यं समन्वेति इत्यनन्यपरांशोक्तिः। तथा च वाक्यम्— उपनिषण्णत्वाद्वा उपनिषद् इति। तत्र द्रमिडभाष्यम्— *गहने ह्ययं विद्या सन्निविष्टा इति। तस्य च वामनटीका— * गहने ब्रह्मणि उपनिषण्णा इति। भाष्यस्य सूत्राणि, तेषामुपनिषदः, तासां ब्रह्मेति विषयक्रमः। प्रयोजनानि च यथार्हाणि। *आरण्यकं च वेदेभ्यः इति श्रुतिधेनुसार-भूतस्वादुतमरसतया आनन्त्यगाम्भीर्यादिभिश्च दुग्धाब्धित्वोक्तिः। मध्यस्य अशेषपर्यन्तासत्तिसाम्यात्तदुक्त्या सर्वश्रुत्यानु-गुण्यव्यक्तिः। उद्धृतत्वोक्त्यार्थस्याकल्पितत्वमामूलं ग्रहणं च ख्याप्यम्। संसारेत्यादिकमपेक्षिततमावान्तरप्रयोजनकथनम्, *अस्ति ब्रह्मेति चेद्वेद इत्यादिश्रुतेः वाक्यार्थनिर्धारणे च सूत्राणां विश्रमात्। अचिद्भिरेकीकृत्य जन्मादिप्रवाह-प्राप्तिः संसारः। यद्वा संसरत्यनेनेति संसारः कर्म; स तु स्वर्गादेरपि तापत्रयमयत्वादग्नितयोक्तः। दीपनं क्लेशकर्मा-देर्ज्वालोद्गतिः; सा चापवर्गप्रतिकूलतया स्वसंसृष्टनाशकावस्था; तद्वैविध्यमविद्यादिभेदात्पञ्चधा त्रिधा द्विधेत्यादि तत्र तत्र कथ्यते। अत्र शारीरादिविविधदुःखावहतया च वैशिष्ट्यं विशब्दार्थः। अत्र प्राणः प्राणिनां प्राणन-हेतुः परमात्मा, * न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ * प्राणस्य प्राणम्, * प्राणमेवाभिसंविशन्ति इत्यादिश्रुतेः। * प्राणस्तु प्रणवे जीवे जीविते परमात्मनि इति च पठ्यते। अपगतः अतिदूरस्थः शास्त्रेषु दर्शयत्स्वपि कुदृष्ट्युक्त्यादिभिरद्य यावदसद्ब्रह्मेति वेद्यतां प्राप्तः। विशब्दः श्रवणाद्यन्यतमेनाप्यनाघ्रातत्वपरः। विशेषतो वापगतः— स्वयमवतीर्य स्वात्मानं दर्शयत्यपि व्यावृत्ततया दुर्दर्शः। अत्र * प्राणो ज्ञानम् इति न्यायसुदर्शनम्। आत्मनां तद्गुणसारतया तदंशोक्तिः। तदा व्यपगतिरतिसङ्कोचः।

व्यपगतप्राणानां सञ्जीवनं नाम बाह्यकुदृष्ट्यनपहार्यप्राणस्थापनम्; तन्मुखेन रक्षोक्तिसंक्षिप्तपरमप्रयोजनविवरणं वैतत्। तदा तूपसर्गेण स्वात्मप्रापणादिमात्रव्युदासः। पूर्वाचार्याः बौद्धजैनगन्धिभ्योऽन्ये। औपदेशिकी रक्षा तदैव तत्रैव; ग्रान्थिकी तु कालान्तराद्यनुच्छेदात् सुरक्षोक्ता।

**रक्षितत्वं तु रामार्यै(र्ग्रै)स्त्रयन्तार्थे हि सूचितम्। आत्मसिद्ध्यादिभिः प्रोक्तं यामुनार्यनिबन्धनैः॥**

सुधासुरक्षितशब्दाभ्यां वक्तृस्तुतिरार्थी। सुधा तु सुरगुरुचक्रयन्त्रादिभिर्दुर्गमता। सुरक्षितत्वेऽपि त्यक्तसंवादार्थैः कुदृग्भिः क्षोभितत्वमाह—**बहु** इति। बह्वयः मिथो विरुद्धाः बहूनां वा मतयः, ताभिर्व्याघातः—विविधा अभिख्याता पीडा; स्वारसिकर्थविरोध इत्यर्थः। तेन दूरस्थितां बोद्धॄणां रजस्तमस्तारतम्यादबोधासनबोधान्यथाबोधाहा[?]मित्यर्थः।

**अबोधश्चाप्यथाबोधस्तत्त्वबोधविरोधिनौ। अनिश्चितावबोधेऽपि तथाबोधकता स्थिता॥ १९२॥**
**सद्भिर्यदि विगीयेत न संगृह्येत पश्चिमैः। न तन्मतानुसारश्च सत्यः स्याद्व्याजिह्मर्पतः॥ १९३॥**
**कुदृष्टिभिश्च बाह्यैश्च यदि वाऽभ्युपगम्यते। कः स्वपक्षतया रक्ष्यः परपक्षश्च को भवेत्॥ १९४॥**
**तदत्र चतुरध्याय्यां साधनाक्षेपभागयोः। निदानमभिसन्धाय निर्दिष्टं भेदतो द्वयम्॥ १९५॥**

सुधा तु विरुद्धमतिदैत्यादिव्याघातभयात् दूरस्थिता; यद्वा कद्रूविजितायाः सुपर्ण्यास्तथा बहुमतिव्याघातदशायामात्मनिष्क्रयणार्थमाहर्तव्यतया दूरे तृतीयस्यां दिवि स्थिता। स्वव्याख्यानस्याप्यन्यैर्व्याघातादसामर्थ्यापरिहार इत्यत्राह—**आनीताम्** इति। बुद्ध्यासन्ने स्वार्थे स्थापिताम्। एतेन व्याख्यातद्वतोरसम्बन्धः शोधितः। परेष्टव्यावहारिकसाधकव्यावृत्त्यै तद्व्यनक्ति— **निजाक्षरैः** इति। वचःप्रस्तावात्तदक्षराणि निजाक्षराणि, सूत्राक्षराणीति वक्ष्यमाणत्वात्। यथा विवरणम्— * सूत्राक्षराणि यमर्थं स्वरसतो बोधयन्ति स एव सांप्रदायिकः, वक्तुः स्वसमीहितार्थवाचकशब्दप्रयोगव्युत्पत्तेः, स्वरसतः परप्रत्यायनार्थत्वाच्छब्दप्रयोगस्य इति। बहूनां व्याख्यानानां मिथो व्याघाते व्याख्येयस्वारस्यं संप्रदायव्यवस्थापकमिति भावः। सुधा तु सोमाख्या सौपर्णाख्यानप्रसिद्धैर्गायत्र्यवयवैरमृताक्षरैः सहानीता। मदुक्तिभिरिति वार्थः। तत्त्वतः सुधासमाधिसिद्ध्यै तथानुक्तिः। सुधायाः सुमनसो देवा भोक्तारः। यद्वा गायत्र्यभिमानिसुपर्णानीतायास्सोमलतारूपेण परिणताया एकाहाद्युपयुक्ताया भौमास्सुमनसः प्रतिसमयं भोक्तारः। वचोरूपायास्तु * ब्राह्मणा विविदिषन्तीतिवत् चोदनानर्हव्यावृत्ताः * सारासारविवेकज्ञाः इत्यादिना स्वेनैवान्यत्रोक्ताः। एतेन ब्रह्मविद्यासंप्रदानमपि शिक्ष्यते। श्रुतं ह्येतच्छान्दोग्ये— * इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने। नान्यस्मै कस्मैचन। यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति। प्रणाय्यः प्रश्रितत्वानसूयत्वऋजुत्वादिभिर्योग्यः। न हि भौमास्सुमनस इति भूसुरमात्रोक्तिर्युक्ता, अधीतवेदवर्णतयार्हत्वान्मीमांसायाः। स्वतो विदुषां स्वर्गादिभुवां प्रायो न सूत्रव्याख्यानापेक्षा, सत्यामपि तस्यां विशालधीयोग्यैर्वृत्त्यादिभिस्ते चरितार्थाः, अतो न वृथाऽत्र भौमत्वोक्तिः। **पिबन्तु** अयत्नं सुखमनुभवन्तु। यत्नो हि सुधायां मन्थनत आनयनतश्च। **अन्वहम्** अतिगम्भीरत्वादत्यन्तहृद्यत्वाच्च।

**सुधेयं सूत्रकारेण हरिणेव समुद्धृता। आनीता भाष्यकारेण द्विजेन्द्रेणेति चाशयः॥ १९६॥**

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः ; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।

तथापि किमहर्दीपवदनुपकारकृतकरनिर्माणगौरवेण, अनुच्छिन्नाः शुद्धाः प्राचीनव्याख्याः प्रवर्त्यन्तां तत्राह— **भगवद्** इति । * उत्पत्तिं प्रलयं चैव इत्याद्युक्ताध्यात्मबोधातिशयपरोऽत्र भगवच्छब्दः ; तेन शबरशङ्करादिव्यावृत्तिः । विस्तीर्णत्वोक्तिरद्यतनैः दुस्तरत्वमभिप्रैति । अत्र पूर्वाचार्या ब्रह्मनन्द्यादयः । तन्निबन्धनानामतिसंक्षेपाद्गहनत्वं सूचयति— **संचिक्षिपुः** इति । सूत्रस्थापितार्थपरैः ग्रन्थैरित्याशयः । परोक्तेरनाप्तसंप्रदायत्वं व्यञ्जयितुमाह— **तन्मतानुसारेण** इति । * अल्पाक्षरमनल्पार्थम्, * लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च । इति सूत्राणां बह्वर्थसूचकाल्पाक्षरतया व्याख्यापेक्षत्वायाह— **सूत्राक्षराणी**ति । प्रकृतिप्रत्ययोरक्लेशमभिप्रेत्याक्षरशब्दः । तेन * सूत्राणि यथासंभवं द्रष्टव्यानीति परोक्तिरनास्थेया । उक्तं च भास्करैः— * सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवेशनात् । व्याख्यातं यैरिदं सूत्रं व्याख्येयं तन्निवृत्तये ॥ इति । अक्षरार्थमात्रं ब्रूमः, सूच्यं तु निश्शेषदुर्वचम् । अक्षरशक्त्यतिरिक्तः स्फोटो न कल्प्यः इत्यपि व्यङ्ग्यम् । व्याख्यास्यन्त इत्यत्रोपसर्गाभ्यां धातुना चाद्यतनवुद्ध्यनुगुणमनतिसंकोचविस्तरत्वं स्पष्टोक्तिश्च व्यज्यते । यद्वा वैशिष्ट्यं प्राबल्यं च निपातद्वयार्थः । * पदच्छेदः पदार्थोक्तिः इत्यादि च भाष्यम् । अखिलेत्यादेरेतदन्तस्य * सूत्रार्थो वर्ण्यते यत्र इत्याद्युक्तं भाष्यलक्षणं तदर्थसंग्रहात्तादर्थ्याच्च सिद्धम् ।

**अथातो ब्रह्मजिज्ञासा ।**

**अत्रायमथशब्द आनन्तर्ये भवति । अतश्शब्दो वृत्तस्य हेतुभावे ।**

व्याख्यापेक्षत्वव्यक्त्यै सूत्रमुद्गृह्णाति—**अथ** इति । नन्वत्र * अथातः इति पिण्डितं रूपमव्युत्पत्तेः पृथगर्थसंभवादंशान्तरनैरर्थक्याच्च न युक्तम् ? क्लिष्टगतिस्तु न गतिसद्भावे । अथशब्दस्यानन्तर्ये प्रसिद्धिः प्रकृष्टापि सोपयोगासाधारणवृत्तविशेषादृष्ट्यापोदिता । अत एव न प्रकृतादर्थान्तपरत्वं, कल्पद्वयादृष्टेश्च । प्रश्नस्त्वनर्थकोऽनुत्तरश्च । कार्त्स्न्यमनपेक्षितवचनम् ; एकदेशचिन्ता हि न शङ्कारूढा । तस्मादारम्भार्थकत्वं स्यात् । आरभते ह्यत्र सूत्रकारः । मङ्गलार्थकत्वं वा । स्मर्यते हि—* ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति ।

तत्राह—**अत्र** इति । भवतिना अथशब्दस्य स्वारस्यानुक्तिः । अत्रायंपदाभ्यामपवादापोहः । **अत्र** वेदोत्तरांशविचार्यत्वार्थे सूत्रे । तेन यतः कुतश्चिद्वा भागान्तरसाधारणाद्वा कुतश्चिदानन्तर्योक्तेरानर्थक्यात् कर्मविचाररूपं वृत्तं विविनक्ति । **अयम्**—* अथातो धर्मजिज्ञासा * अथातः क्रत्वर्थपुरुषार्थजिज्ञासा इत्यादिष्विवातश्शब्दोपेतः । एतच्छब्दो हि प्रस्तुते स्वरसः ; विभक्तिश्चास्मै हेतुत्वे । एवं सामान्यतः अत इत्यभिहिते ब्रह्मजिज्ञासया विशेषत आक्षिप्ते वृत्ते सत्यानन्तर्यस्वारस्यं नापोद्यते । * अथातः इति समुदितप्रयोगनिरपेक्षसामर्थ्यव्यक्त्यर्थः * अत्रायंशब्द इति केचित् । अत्रेत्यादिनैवार्थान्तराणामिहानन्वयः सूच्यते । तथाहि—मङ्गलार्थत्वं तावत्प्रतिक्षिपामः । तत् किमस्याविवक्षितार्थस्य सन्निधिमात्रेण, तद्वाचकतया वा ? नाद्यः—अबोधकस्य वाक्ये निबन्धायोगात् श्रुतिप्रयोजनमात्रस्य मङ्गलस्य पदान्तरार्थेऽनन्वयाच्च, विवक्षितार्थान्तरस्यापि सन्निध्युपजीवनोपपत्तेश्च । न द्वितीयः—द्योतकमात्रत्वात् * अथ

शब्दानुशासनम् इत्यादावर्थं वदद्भिरप्यधिकृतमित्यादिपदमध्याहारेणोक्तम् ; न त्वथशब्दवाच्यत्वमभिसन्धाय ; वाच्यत्वेऽप्यत्र मङ्गलस्य वक्तव्या सङ्गतिः । मङ्गलोक्तेः प्रकृतौपयिकमङ्गलत्वेऽप्यनुनिष्पत्त्यैव तत्सिद्धिर्युक्तेत्युक्तम् ।

**मृदङ्गध्वनिनीतिं तु वक्ति माङ्गलिकस्मृतिः । प्रयोक्तुश्श्रोतुरप्येतौ मङ्गलप्रापकाविति ॥ १९७ ॥**

अन्यथा ब्रह्मशब्देनान्यपरत्वं, भिन्नत्वं वाक्यस्य, भवत्वित्यध्याहारश्च स्युः । अकृतकसर्वोत्तुङ्गमङ्गलतमतत्त्ववाचकत्वाद्ब्रह्मशब्दस्य । न चात्र हेतोस्साध्यस्य वा मङ्गलत्वमनूद्यते, विधीयते वा, नैरर्थक्यात् ; न ह्यत्र तद्विरुद्धत्वाशङ्का, अनिषेधात् । न्यायसूत्राणि संशयनिरासार्थानि ।

ननु मङ्गलत्वं विचारस्य ख्याप्यताम्, अत एव तद्विधिरिति तत्सार्थता । तदपि मन्दम् , अत इति हेतुनैव नैराकाङ्क्ष्यात् , अधिकोक्तेरनुपयोगाच्च । आरम्भार्थत्वमप्ययुक्तम् , नारभ्यत इति शङ्कानुत्थानात् साध्यतया बुद्धस्यारम्भस्य कथनानर्थक्याच्च ; न च जिज्ञासाया आरम्भयोग्यत्वमथशब्दो वक्ति, द्योतयति वा, अव्युत्पत्तेः आरब्धुमिति क्रियान्तरार्थक्रियानुपस्थानात् । अन्यथा समुच्चयादिद्योतकेष्वपि समुच्चेतुमित्यादिविवक्षया योग्यपदान्वयप्रसङ्गात् । आरब्धव्येत्येव च पदमध्याहार्यम्; तदा किं तदर्थेनाथशब्देन ? न चात्राध्याहारार्थद्योतनम् , साकाङ्क्षयैव तत्सिद्धेः प्रसिद्धग्रहाणेन क्लिष्टग्रहणायोगाच्च । योगशब्दानुशासनयोरानन्तर्यमगत्या त्यक्तम् । अत्र तु न शास्त्रारम्भार्थतापि । अन्यो हि विचारः, अन्यदनुशासनम् । न च तस्यात्रोपादानम् । ननु ज्ञाप्यतया ब्रह्माधिक्रियताम् ; मैवम्—उपसर्जनश्रवणविलम्बात् व्याख्यानानुशासनशब्दाभावादेव जिज्ञासाशब्दस्य मीमांसापर्यायत्वाभावेन ज्ञाप्यतानुपस्थापनाच्च । अत एव विचारः कर्तव्यत्वेन बोध्यतयाधिक्रियत इत्यपि न वाच्यम् , विचारारम्भणीयत्वस्थापनेनैव सिद्धे पदान्तरवैयर्थ्यात् अपेक्षिते सत्यनपेक्षितायोगात् उभयोक्त्या गौरवाच्च । तस्मात्स्वारसिकमनपोदितमानन्तर्यमेवात्र स्थापितम् । अतश्शब्दस्य प्रकृतिर्धर्मिस्थे वर्तिष्यमाणेऽपि स्यात् ; प्रत्ययश्च सार्वविभक्तिकः । * अतोऽथ मौनम् इत्यादिष्वन्यार्थः । पञ्चम्यर्थोऽप्यनेकः । अतो नार्थविशेषसिद्धिरित्याह—**अतश्शब्द** इति । इहाप्यत्रार्थभवतीनामनुषङ्गः, स्वारस्यात् , उत्तरपदसमभिव्याहारश्च प्राग्वत् । विचारितकर्मणां ब्रह्मविचारहेतुतया वक्ष्यमाणहेतुरनुपलम्भनिरस्तः । ब्रह्मविचारापेक्षया वर्तिष्यमाणस्य तु न तद्धेतुत्वम् । प्रयोजनमपि न स्वरूपेण हेतुः, मिथस्संश्रयात् । तदिच्छा तु वृत्तैव । प्रत्ययस्य च विभक्त्यन्तरार्थकत्वमपादानत्वादि च प्रकृतानुपयुक्तम् । अयमिति पदस्य स्वरूपमात्रमनुषज्यते । तेनाथशब्दयुक्तत्वमिह विवक्षितम् । न चैवं मिथस्संश्रयः; शब्दस्वारस्ययोः स्वतस्सिद्धतया स्वरूपसिद्धौ मिथोऽनपेक्षणात् , सहकारित्वमात्रस्यैव मिथोऽपेक्ष्यत्वाच्च । अयमिति पदं वा नानुषञ्जनीयम् ।

नन्वथातःपदयोरन्यतरेणालम् ; सूत्रं ह्येतत् ; मैवम्— प्रयोजनाधिक्यात् ; कर्मविचारव्यवधायकशास्त्रान्तरनैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य । ब्रह्मविचारार्थत्वहेतोरनन्यलभ्यप्रयोजनवत्त्वेनापातधीस्थस्य विशेषणविशेष्यांशासिद्धिव्युदासार्थत्वादतश्शब्दस्य ।

**आनन्तर्येऽप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम् । दृष्टमिष्टं च तत्सार्थं द्वयं काण्डान्तरे यथा ॥ १९८ ॥**

**एकं जिहासतस्त्वत्र द्वितीयं हेयमापतेत् । स्वाधिकारं स्वहेतुं च विचारः स्वयमाक्षिपेत् ॥ १९९ ॥**

**तस्मादारम्भसूत्रेऽस्मिन् धर्मचिन्तादिसूत्रवत् । प्रायुङ्क्त प्रातिलोम्येन प्रतिज्ञादित्रिकं पृथक् ॥२००॥**

**अधीतसाङ्गसशिरस्कवेदस्य अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ।**

अत्र कीदृग्वृत्तम्, यन्नियमेनापेक्ष्यम्; कीदृक्च वर्तिष्यमाणम्, येन वृत्तविशेषाक्षेपः; तयोश्च पौर्वापर्येऽपि कथं कार्यकारणभावः, तत्सिद्धौ च तृणारणिमणिन्यायः स्यात्। नियमेऽपि तत्त्वधीमुक्त्योरिव मा भूदानन्तर्यमित्यत्राह—**अधीत** इति। कर्मब्रह्मविचारौ वृत्तवर्तिष्यमाणौ। तयोरल्पास्थिरफलानन्तस्थिरफलशब्दाभ्यां संजातेत्यादिना च हेतुहेतुमद्भावव्यञ्जनम्। स्थिरास्थिरशब्दाविह नाशराहित्यतद्वत्त्वपरौ। कर्मज्ञानमिह निर्णयरूपम्। तस्याधिगतिः प्राप्तिः; * परीक्ष्य लोकानित्यादिभिरल्पास्थिरफलतयावगमो वा। अनुष्ठानद्वारा कर्मज्ञानस्य फलसम्बन्धः। अल्पास्थिरफलत्वं कर्मविशेषणं वा। मोक्षविश्रान्तविद्याङ्गकर्मव्यावृत्त्यै केवलशब्दः। अनन्तस्थिरफलशब्दः कर्मधारयवृत्त्या ब्रह्मविशेषणम्। बहुव्रीहितया वा परंपरया मोक्षहेतुभूतां जिज्ञासां विशिनष्टि। समित्युपसर्गेण हेतुनिरपेक्षमानन्तर्यं च सूच्यते। सांख्यादिशीलनजन्या दुःखदृष्टिमात्रजन्या वा मुमुक्षा हि समीचीं ब्रह्मचिन्तां न सूते। कर्ममात्रेऽनन्तफलदुराशायां निरस्तायां निवृत्ततत्प्रतिबन्धतया व्युत्पत्तिभूयस्त्वोपनिपतितधीवृद्ध्या च तीव्रतमे मोक्षाभिलाषे सामग्रीदशापन्ने ब्रह्मविचारविलम्बो न स्यादित्याशयः।

**विघ्नान्तरविहीने तु स्यादानन्तर्यमत्र नः। अतो नातिप्रसक्तिः स्यात्तथान्यैरपि सम्मतेः ॥२०१॥**

अधीतेत्यादिना मुमुक्षोत्तम्भकमतान्तरशीलनानवसरज्ञापनम्। जिज्ञासोत्पादकफलापातधीवृद्ध्यै वेदमात्रनियतव्युत्पत्तिविशेषसिद्ध्यै वा * निष्कारणः षडङ्गो वेदोऽध्येयः इत्यादिसिद्धसाङ्गत्वोक्तिः। * अङ्गग्रहणं विचारप्रयोजकस्य प्रयोजनालोचनस्य सिद्ध्यर्थम् इति तूलिका। फलाधिक्याद्विशेषं गृह्णता सशिरस्कशब्देनाध्ययनविधौ स्वाध्यायशब्दस्य नियतक्रमभागद्वयविषयत्वम्, तद्विचारार्थायास्त्रिकाण्ड्या ऐकशास्त्र्यम्, क्रमश्च सूच्यते। न ह्यध्ययनविध्यनालीढं शिरः, येन न विचार्यं स्यादिति भावः। वेदशब्द इह पुरुषार्थतदुपायादिबोधनार्हत्वं व्यनक्ति। तत एव विचारेच्छाजनकापातधीसिद्धिः। षष्ठ्यन्तपदाभ्यामधिकारिनिष्कर्षः।

यदुक्तं कैश्चित् कर्मसूत्रव्याख्यारम्भे—* प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्णितः। प्रदर्शनार्थमित्येके केचिन्नानार्थवादिनः॥ समुदायादवच्छिद्य भवदासेन कल्पितात्। शक्तितोऽवयवस्यैव वर्णयन्त्यष्टमादिवत् इति। तदिह नातीव पेशलम्; प्रसिद्ध्यपवादशङ्कायां पदद्वयव्याख्यानस्यावतारितत्वात्॥

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी, * कर्तृकर्मणोः कृतीति विशेषविधानात्। यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः; तथाप्याक्षेपतः प्राप्तादभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते॥**

तृतीयपदेऽपि वृत्तेरनेकधा सम्भवे विशेषव्यक्त्यै विगृह्णाति—**ब्रह्मणो जिज्ञासा** इति। अत्र हि व्यासस्तावत् न घटते, जिज्ञासान्वयात्; अत एव न कर्मधारयः, सामानाधिकरण्यार्हत्वेऽपि विशेषणविशेष्यव्यत्यासात्, विवक्षितानुपयोगाच्च। द्वितीया तु कृद्योगापोदिता। ब्रह्मणस्सर्वहेतुतया तृतीयासमाससंभवेऽपि विषयायुक्तिर्वृत्तविशेषा-

श्लेषश्च न स्यात्। तादर्थ्ये चतुर्थ्यास्त्विह समासः प्रतिषिद्धः, *तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम् इति कात्यायनोक्तेः। आहुश्च—*प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते। तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता॥ इति। तथा न संप्रदानत्वमपि, ब्रह्मणः संप्रदानत्वाभावात्। सप्तमीसमासेऽपि विषयत्वमात्रं सिध्येदिति भावः। तदिह पञ्चमीम् अर्थान्तरशङ्कां च वारयति—**ब्रह्मण इति कर्मणि षष्ठी** इति। उक्तं ह्याचार्यैः—*अमूत्रस्यापि षष्ठीयं समासग्राह्यभावतः। विभक्त्यर्थस्य सान्निध्याद्व्याख्यातुमिह युज्यते॥ इति।

अपादानादिः पञ्चम्यर्थो वाक्यानन्वितः, अध्याहारसापेक्षश्च। प्राधान्येन कर्तृत्वानुपपत्तिः 'तद्विजिज्ञासस्व' इत्यादिकमनुसरता **ब्रह्मण** इत्यनेनैव सूचिता। न हि मुख्यं ब्रह्म स्वमन्यद्वा जिज्ञासेत, स्वतस्सर्वदर्शित्वात्। उक्तं च न्यायतत्त्वे—*यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः। इति। किंचिज्ज्ञस्तु कर्ता न वक्तव्यः, अधीतवेदस्य तदर्थं निर्णिनीषोरादितः प्रवृत्त्यनुवृत्तेः। कर्मत्वोक्त्यावीप्सिततमतया प्राधान्येन विषयत्वं प्रयोजनत्वं च सिध्येत्। अतः सदपि स्वस्वामिभावादि अत्र न वक्तव्यमिति भावः। तथाऽप्यस्तु सामान्यतः प्राप्ता शैषिकी षष्ठी; विशेषस्त्वौचित्यलभ्यैरवाच्य इत्यत्राह— **कर्तृकर्मणोः** इति। संबन्धविशेषेऽपि षष्ठीविधौ सिद्धे, साकाङ्क्षसूत्रोक्तात् निराकाङ्क्षासूत्रोक्तं युक्तम्। तत्र विशेषयोर्विधिसाम्येऽपि कर्तुः सकर्मकाकर्मकसाधारण्यात्, इह च कर्त्रर्थत्वायोगात् असाधारणाकाङ्क्षिततमकर्मोपस्थापनमुचितमिति भावः।

ननु किम् अर्थलभ्ये शब्दव्यापारेण? न चैवं प्रतिपदानुशासनवैयर्थ्यम्, तस्य कर्मादिविवक्षायामपि द्वितीयानिषेधेन षष्ठीसाधुत्वे तात्पर्यात्। अतो विशेषविधिर्न शैषिकषष्ठीमपवदेत्, तदूहे च व्यवहितसंबन्धस्यापि तदन्तःस्थितेर्ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञासासंबन्धात् तत्कर्मत्वस्य चार्थसिद्धेः कृत्स्नशारीरकार्थविचार्यत्वसूचनमधिकं प्रयोजनमित्यत्राह— **यद्यपीति**। **परिग्रहः**—परितो ग्रहः, सानुबन्धग्रहणम्। उत्तरग्रन्थे तु **गृह्यते** इत्युक्त्या अनुबन्धिसंबन्धस्याशाब्दत्वमात्रमभिप्रेतम्। **कर्मापेक्षत्वेन**— सकर्मकतया प्रथमं कर्माकाङ्क्षाजननस्वाभाव्यात्। कर्मार्थत्वसिद्धिर्नाम कर्तृत्वव्युदासेन षष्ठ्याः कर्माख्यविशेषेऽर्थतः पर्यवसानम्। परप्रत्यायनार्थे प्रयोगे विलम्बितधीहेतुर्न ग्राह्य इत्यभिप्रायेणाह— **तथापीति**। न ह्यत्र अर्थलभ्ये शक्तिक्लृप्तिः, किं तु आक्षेप्याद्वरं क्लृप्तशक्तिकशब्दोक्तमित्युच्यते। ननु 'आक्षेपतः'—इत्युक्तमयुक्तम्; आकृत्यधिकरणनीत्या सामान्यशक्तेः विशेषपर्यन्तत्वस्य वक्ष्यमाणत्वात्। मैवम्— सा हि विशेषमात्रमुपादत्ते, न कर्मत्वादिकम्; न हि गोशब्दशक्तिर्विशेषतः खण्डत्वादि गृह्णाति। न चात्र आभिधानिकग्रहे(ऽपि) अनुबन्धित्याग इति भ्रमितव्यम्; सामान्यतो धीस्थानुबन्धिविषयत्वात् सर्वत्र जिज्ञासायाः। एवमपि आक्षेपः स्वीकृत इति चेत्, सत्यम्—अन्यतरकर्मत्वस्यापि शाब्दत्वमुभयकर्मत्वाक्षेपात् वरम्, किमुत प्रधानांशकर्मत्वस्याक्षेपात्। एवकारः शीघ्रधीहेतोर्बलीयस्त्वं व्यनक्ति। कथं ब्रह्मणः कर्मत्वं शाब्दम्, 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति ज्ञानस्यैव कर्मत्वात्; मैवम्—सन्नन्तत्वेऽपि प्रकृत्यनुसारेण सकर्मकत्वाकर्मकत्वविभागः। अत एव हि प्रकृत्यर्थकर्मापेक्षया 'कर्तृकर्मणोः' इत्यनुशिष्टिः; "धर्मो जिज्ञासितव्यः" इत्यादौ च धर्मादेरभिहितकर्मत्वम्।

ननु तथापि नाभिधानिकत्वम्, उपपदविभक्तेरर्थाभावात्; प्रयोगमात्रात् तस्याः सार्थत्वे गाव्यादावपि प्रसक्तेः। न च तत्र शक्तिरस्ति।

**न शब्दशक्तिर्गाव्यादौ गोपदं सार्यते ततः। बुद्धिस्थेनैव तेनाथ गोजातिः प्रतिबुध्यते ॥ २०२ ॥**

आप्तप्रयोगस्तु अनर्थकत्वेऽपि साधुत्वात् स्यात्, अन्यत्रापि तथादृष्टेः, सम्मतेश्च। अनुशिष्टिश्च तावद्विशेषव्यक्त्यर्था। तत्तदर्थधियस्त्वन्यथा सिद्धेः, अन्यलभ्ये शक्तेरकल्प्यत्वात्, गत्यन्तराच्च बहुशक्तिकल्पनायोगात्, न शक्तिरौपयिकी; तत्र—यथा 'कर्तृकरणयोः' इत्यादिवशात् कारकविभक्तिः सार्था अनेकार्था च, तथा 'कर्तृकर्मणोः कृति' इत्यादिबलात् उपपदविभक्तिरपि; अन्यथातिप्रसङ्गात्। कारकविभक्तेरुपपदविभक्तिदौर्बल्यं तु पदान्तरविमर्शसापेक्षतामात्रात्। तथाऽपि न शक्तिभङ्गः। पदान्तरसंनिधिरत्र शक्तिं व्यनक्ति, न त्वाधत्ते; यथा नानार्थं गवादिशब्देषु। यद्वा अत्र अनाभिधानिकत्वेऽपि विशेषानुशासनानुमतवृत्तिविशेषवद्विभक्तिसिद्धस्य शाब्दसमत्वं व्यञ्जयितुम् आभिधानिकत्वोक्तिः। कर्मत्वस्य सूत्राभिधानसिद्धत्वमाभिधानिकशब्देन प्रतीयते; उपपदस्वरूपविमर्शस्य पदबोध्यविमर्शात् अविलम्बितत्वाच्च।

ननु न विग्रहवदिह समस्ते विभक्तिरस्ति, येनाभिदध्यालक्षयेद्वा। न चाप्रयुक्तापि स्मृताभिधत्ताम्, प्रयोगस्यापि तद्धीमात्रार्थत्वादिति वाच्यम्; समासतोऽर्थबुद्धौ विभक्तिस्मरणनियमे मानाभावात्, सर्वत्र च लक्षणाद्युच्छेदप्रसङ्गात्। षष्ठ्या चाभिधानमिति तद्विदा। तदेवमभिधायकाभावे कर्मत्वस्य कथमाभिधानिकत्वं तत्समत्वं वा?

**मैवं संबन्धसामान्ये कर्मत्वे वा समीहिते। विभक्तिलोपात्सोढव्या प्रकृत्यैव हि लक्षणा ॥ २०३ ॥**

अथानुशासनाधीननिरूढलक्षणाया अभिधानसमत्वाच्छाब्दत्वमिति मतम्, कर्मार्थत्वेऽपि समम्। एवं तु केचित्— व्यासे समासे च सविभक्तिकाविभक्तिकशब्दयोः दधिदध्यशब्दन्यायेन सैव शक्तिः; अतो लुप्तविभक्तिकयापि प्रकृत्या संबन्धो न लक्ष्यः, वाच्यसंबन्धिनि वस्त्वन्तरे वृत्तिर्हि लक्षणा, न च संबन्धस्संबन्धी। कर्मत्वादिश्च संबन्धरूपः। एवं स्वपरनिर्वाहकतया संबन्धफलसिद्धावपि तथा विवेकरहितानामप्यत्र प्रकृत्या विभक्त्यर्थधीर्दृष्टा; सन्नपि चाजानतः संबन्धो न लक्षणाहेतुः, अतिप्रसङ्गात्। अतः प्रयोगस्यानन्यथासिद्धेरन्यथासिद्धिशङ्कायाश्चानुशासनेनोपरोधाद्विभक्त्यर्थः समासेऽप्यभिधेयः। एवं विभक्तिव्यतिरिक्तलोपेष्वपि नीतिः। ननु निषादस्थपतिशब्दे विभक्त्यर्थलक्षणादोषापनुत्त्यै षष्ठीसमासस्त्यज्यते; तत्कथमाभिधानिकत्वम्। तन्मुख्यत्वे तु क्लृप्तकल्प्यविरोधे क्लृप्तस्यैव ग्राह्यत्वाच्चान्यत्राधिकारक्लृप्तिः; मैवम्— * सामानाधिकरण्यस्य प्राग्वैयधिकरण्यतः। अविलम्बितधीयोगात् प्राबल्यं प्रतिपादितम् ॥ इति न्यायेन शैघ्र्याच्छाब्दव्यवहारः। अथानुशासनस्वारस्यादर्थः; तर्हि यथानिर्णये तु नादरः, अर्थाविरोधादिति। उपपदविभक्तावुक्तमिदं समासेऽपि भाव्यम्।

**सोऽयं वैभववादो वा परमार्थोक्तिरेव वा। आभिधानिकतोक्तिस्तु युक्ता धीशैघ्र्यबोधनात् ॥ २०४ ॥**

न च ❀ प्रतिपदविधाना च षष्ठी न समस्यते इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः, ❀ कृद्योगा च षष्ठी समस्यते इति प्रतिप्रसवसद्भावात्।

एवं कर्मणि षष्ठ्यामनौचित्यं निरस्तम्। तत्र समासनिषेधशङ्कामपि निरस्यति—**न च** इति। कर्मणि षष्ठ्या इत्यनेन साधारणः प्रतिपदविधानाशब्दस्सङ्कोचार्ह इति सूच्यते। * ज्ञोऽविदर्थस्य करणे इत्यनुशिष्टायामेव समासापवादः; अवेदनार्थस्य जानातेः कृद्योगः कचित्सन्नपि तत्र करणषष्ठ्या अनपेक्ष्यः; * सर्पिषो जानीते इत्युदाहरणात्।

निषेधस्य सङ्कोचमाह—**क्वचिद्योगा** इति। प्रतिप्रसवोऽपवादनिरासः, तस्य सद्भावात्। न केवलं प्रयोगदृष्ट्येति भावः। एवमैकपद्यहेतुस्समासः प्रथमं व्याख्यातः।

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते।**

तद्वाच्यप्रकृत्यंशस्य यौगिकार्थनिमित्तत्वश्रुतेः अन्यत्रापि यथादृष्टि मुख्यत्वशङ्कान्, निर्विशेषचिन्मात्रसोक्तृभोग्यनियन्तृसमष्टितदंशिसन्मात्रादिपरेष्टार्थम्, स्वेष्टे चोपचारवृत्तिं क्षिपन् सर्वतः परिवृढत्वाय बृहत्त्वबृंहणत्वे चानवच्छिन्ने विवृणोति— **ब्रह्मशब्देन च** इति। चस्त्वर्थः शङ्कानिरासे। 'स्वभावतः' इत्यादिना परकल्पितैः सदोषत्वनिर्गुणत्वावाच्यत्वावेद्यत्वैरजिज्ञास्यत्वप्रसङ्गोऽपास्तः। निरस्तनिखिलदोषत्वं च बृंहणत्वोपयुक्तो बृहत्त्वविशेषः। गुणादिविधिनिषेधयोरुत्सर्गापवादादिनीतिविषयत्वं विशेषणद्वयेन व्यञ्जितम्।

**विशेषविधिबाधेन तदन्यार्थत्वकल्पनात्। सामान्यवृत्तिसङ्कोचं वरं नीतिविदो विदुः॥ २०५॥**

परपक्षे तु मिथ्यात्वसत्यत्वविवादेऽपि निरस्यत्वेनाभिमतानां दोषाणामारोपतः उपाध्यवच्छेदतः स्वाभाविकांशतो वा परब्रह्माश्रयत्वात् तत एव सार्वज्ञ्यादिभङ्गाच्च जिज्ञास्यत्वायोगः श्रुत्यादिकोपश्च स्यादिति भावः। स्वरूपतो नामान्तरभजनार्हावस्थावन्तोऽचित्पदार्थाः; तदभावेऽपि क्लेशादिमन्तो बद्धाः; कतिपयक्लेशादिरहिता मुमुक्षवः; तदत्यन्तोच्छेदवन्तो मुक्ताः; तदत्यन्ताभाववत्त्वेऽपि पराधीनतथात्वा नित्याश्च बुद्ध्यवतारक्रमेण निरस्तनिखिलदोष इत्यादिमुखेन प्रथमे विशेषणे व्यवच्छेद्याः। तत्र स्वभावत इति पदेनानादित्वविवक्षायां मुक्ताः, अनन्याधीनत्वविवक्षायां नित्याश्च व्यावर्त्यन्ते। द्वितीयेऽपि ते सर्वे। अन्यासंभाव्यगुणविधेः नित्या एव वा। तेषां ज्ञानादेर्ब्रह्मसाम्येऽपि हि पराधीनत्वं सिद्धम्, शक्तिस्तु ततो न्यूना। वक्ष्यति च सत्यादिवाक्ये अनन्तपदव्याख्याने— * सातिशयस्वरूपगुणा नित्या व्यावृत्ताः इति। न हि ते विश्वव्यापिनः; नापि सर्वशरीरिणः। अतिशयशब्देन धातूक्ता वृद्धिरतिशायनमिति व्यञ्जितम्। अनवधिकविशेषणेन शतगुणितोत्तरक्रमप्रदर्शितनिरतिशयदशाशिरस्कत्वोक्तिः, 'ईश्वरस्य ज्ञानानन्दादिगुणयोगः कादाचित्कः, तच्छक्तिस्तु नित्या' इति पक्षः स्वभावत इति पदानुषङ्गात् प्रतिक्षिप्तः। ज्ञानाद्येकैकगुणविततिरूपावान्तरगुणवर्गख्यापनाय गणशब्दः। उक्तं च **षाड्गुण्यविवेके**— * तवानन्तगुणस्यापि षडेव प्रथमे गुणाः। यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः॥ इति।

अनवधिकातिशयशब्दोऽत्र गणं विशिंषन् प्रत्येकमतिशयपरश्रुत्या 'विदुषी परिषद्' इति न्यायाच्चार्थतो गुणान् विशिनष्टि। अन्यथान्यपदार्थासिद्धिः। सत्यां गतौ व्यधिकरणबहुव्रीह्ययोगः। 'शैलजन्मा' इत्यादिषु अगत्या तत्स्वीकारः। एतत्सूत्रसंवादिन्या * परीक्ष्य इत्यादिश्रुत्या ब्रह्मपुरुषशब्दोक्तजिज्ञास्यनिष्कर्षम्, सर्वोपनिषदां पुंसूक्तैकार्थ्यम्, ईश्वरस्याव्यस्तब्रह्मांशत्वासम्भवम्, ईदृशस्य गीतानिरुक्त्या प्रकृत्यादेर्दैवतान्तरेभ्योऽपि विशेषव्यक्तिं चाभिप्रेत्याह—**पुरुषोत्तम** इति। अवधारणमिह ग्राह्यम्।

यद्यप्यत्र समानाधिकरणसमासे पौर्वापर्यव्यत्ययः; निर्धारणे तु षष्ठ्या न समासः। तथापि * द्वाविमौ पुरुषौ इत्यारभ्य * उत्तमः पुरुषस्त्वन्यः इत्यधमप्रतियोगित्वोक्त्या संबन्धिशब्दतया समासः स्यात्। * अक्षरादपि चोत्तमः

इत्यनेन पञ्चमीसमासो वा सूच्यते। योगविभागस्तु यथाप्रयोगमिष्टः। अत एव सप्तमी निर्धारणेऽपि समस्यते। नगोत्तमादिशब्दाश्चैवं शाब्दैः निर्व्यूढाः। * रूढ्या तु कामं पुरुषोत्तमोऽस्तु इति वदन् श्रुत्यादिबाह्यः, * अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः इति सर्वविदुक्तेः। **अभिधीयते**—मुख्यवृत्त्या विषयीक्रियते। एतेन तदेकनाम्नो ब्रह्मशब्दस्य तत्रैव लक्षणामिच्छन्तो निरस्ताः, रूढिविषये कचिल्लक्षणां वदन्तश्च निरस्ताः।

**सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः। स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात् भगवच्छब्दवत्।**

ननु गवादिशब्दवज्जातिद्वारा, पाचकादिवत् क्रियाद्वारा, डित्थादिवद्यदृच्छया वान्यत्रापि मुख्यता स्यादित्यत्राह—**सर्वत्र** इति। प्रकृत्यादिष्विव ब्रह्मशब्दस्थलेष्वित्यर्थः। तेषु मिथो विषमेषु तदन्यव्यावृत्ता जातिः क्रिया वा न दृष्टा। बृंहणत्वं तु बृहत्त्वापेक्षम्; अतस्तन्निमित्तत्वे गौरवम्। बृहत्त्वं च किञ्चित्तत्र तत्र प्रकृतं विवक्षितं च। ब्रह्मशब्दवृत्तिद्वारा तन्निरुपाधिकवृद्धिरूपधात्वर्थप्रसिद्धिश्च नोपेक्ष्या; अतस्सम्भवद्गत्यन्तरे न यदृच्छापीति भावः। हिः प्रसिद्धौ हेतौ वा। तर्हि बृहच्छब्दवदसौ बृहत्त्वमात्रनिमित्तः स्यात्, नेत्याह—**बृहत्त्वम्** इति। सर्वतः बृहत्त्वमसङ्कोचात् स्वरूपतो गुणतश्चेत्युच्यते। तेन परिच्छिन्नस्वरूपाणां गुणबृहत्त्वरहितस्य गुणादेश्च व्यवच्छेदः। अस्येत्यनेन बृहच्छब्दाद्व्यावृत्तिर्दर्शिता। न ह्यसौ 'इत इदं ब्रह्म' इत्यवधिनिर्देशं तरतमप्प्रयोगं सहते। * सर्वं खल्विदं ब्रह्म * सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्। * त्रयं यदा विन्दते ब्रह्ममेतत् इत्यादिष्वन्येषां तच्छरीरतया देवोऽहमित्यादिवत् सामानाधिकरण्यम्; न तु तत्तद्वस्तुषु ब्रह्मशब्दप्रयोगः। त्रैविध्योक्तिश्च प्रेरितृत्ववैशिष्ट्यं भोक्तृभोग्यवैशिष्ट्यं चापेक्ष्य। नारायण परं ब्रह्मेत्यत्र परमिति विशेषणं त्वौपचारिकव्यावृत्त्यर्थम्; अतो बृहत्त्वमात्रं नास्य निमित्तमिति भावः। प्रयोगनियत्या तत्र तत्र काष्ठाप्राप्तबृहत्त्वं स्यादित्यत्राह—**स च** इति। अपरिच्छिन्नबृहत्त्वाश्रय इति यावत्। सर्वेश्वर इति समाधिकदरिद्रत्वादिश्रुतिव्यञ्जनी समाख्या, * अजस्सर्वेश्वर इति तन्नामपाठात्। एकस्यैव सर्वनियमनादिरूपं निरतिशयबृहत्त्वं शास्त्रोक्तम्; तदन्येषां तु तादधीन्यात्तत्त्वं तादृक्त्वमपि नास्तीत्यवधारणाभिप्रायः। अन्यत्र निमित्तासम्भवान्नैमित्तिकासम्भवस्य फलितत्वमाह—**अत** इति। कथं तत्तद्वाचकत्वाभावे सम्बन्धगुणयोगयोश्च सर्वत्र सम्भवे क्वचित्प्रकृत्यादिषु नियतप्रयोग इत्याह—**तस्मात्** इति। अयं भावः—न ह्यत्र सम्बन्धमात्राल्लक्षणा; न च किञ्चित्साम्याद्गौणी वृत्तिः; किं तु तद्गुणो निरतिशयबृहत्त्वम्, तल्लेशोऽपि लोकोत्तरबृहत्त्वम्, तन्निबन्धनोपचारनियमान्नातिप्रसङ्गः। प्रयुञ्जते च यथेष्टं स्तुतिनिन्दाभिप्रायेण मुख्यासन्ने तद्गुणप्रकर्षयोगिनि च तच्छब्दं नामतयेति। ननु मुख्ये लभ्ये नोपचारः। न चावयवशक्तित्वाद्ब्रह्मशब्दस्यैकत्राप्यन्या शक्तिर्न कल्प्या, किमुतानेकत्रेति वाच्यम्; तादृशस्यापि प्रयोगनियत्यै रूढेः कल्प्यत्वात्। पङ्कजादिषु पद्मत्वादिवच्चैकं नियामकं न दृष्टम्। अतो यावत्प्रयोगं शक्तिर्भिद्येतेत्यत्राह—**अनेक** इति। क्लृप्तशक्तेश्शब्दस्य प्रयोगविमर्शे हि प्रथमं मुख्यानुसारः। शक्तिपरीक्षायां त्वेकविषये शक्त्या प्रयोगान्तरान्यथासिद्धौ न शक्त्यन्तरं कल्प्यम्, गौरवात्। अन्यथोपचार एव लुप्येत। अस्ति चासाविति गौणमुख्याधिकरणे स्थापितम्। क्वचित्तु अगत्या अनेकशक्तिक्लृप्तिरित्याशयः।

**नैघण्टुकैस्त्वनादृत्य शब्दनिष्कर्षणं गिराम् । प्रयोगप्रौढिशिक्षार्थं पठ्यतेऽनेकनामता ॥ २०६ ॥**

यद्वत्र नियामकतयोक्तं लोकोत्तरबृहत्त्वं, तेनैवैकेन निमित्तेनान्येष्वपि मुख्यत्वं स्यात्, अन्यथा निमित्तैः किं न स्यादित्यत्र दत्तोत्तरत्वमभिप्रयन्, * प्रत्यक्षेऽपि विसंवादो येषां कल्प्यवदनुगम् । तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥ इति न्यायात् पुराणोक्तीः निदर्शयति— **भगवच्छब्दश्च** इति । तत्र * शुद्धे महाविभूत्याख्ये इत्यादिना, * अन्यत्र ह्युपचारतः इत्यन्तेन भगवच्छब्दस्य यौगिकार्थैकत्ववत्त्वमेव मुख्यत्वमुक्तम् ।

पुराणान्तरेऽपि— * भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥ इति ॥

दार्ष्टान्तिकमपि गारुडे स्थापितम्— * वेदे रूढिवियोगाच्च गुणयोगाच्च शार्ङ्गिणि । नित्यमेव ब्रह्मशब्दो मुख्यवृत्तो महागुणे इत्यारभ्य, * यस्मिन्नमुख्यमाने तु गुणयोगस्तु मुख्यकः । तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥ इति ॥

**तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म । ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते ।**

अस्त्वेकत्वैवास्य शक्तिः; अस्मिन् सूत्रे भेदकाभावादमुख्यत्वं किं न स्यादित्यत्र, * नास्ति भेषजमन्यत्र नारायणरसायनात् , * वासुदेवं परित्यज्य योऽन्यं देवमुपासते । तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥ इत्यादिप्रमाणगत्या प्रत्याह— **ताप** इति । न ह्यत्र मुख्यस्य बाधः, भगवतः स्वतन्त्रत्वाभित्वात् । अस्वतन्त्रत्वादन्यस्य चायम् अर्थः सिद्धः, * जुष्टं यदा पश्यत्यन्यमीशमित्यादिभिस्सोपबृंहणैः परोनास्तीत्येव तापत्रयनिवर्तकत्वोक्तेः । स एव * मन्तव्योऽन्वेष्टव्य इति विचार्यत्वेन श्रुत इति भावः । * अनेकार्थत्वेऽपि ब्रह्मशब्दस्यास्मिन् प्रयोगे असावेवार्थ इत्याह इति विवरणं त्वन्वारोहेऽपि विशेषपदाद्यर्थपरम् । जातिगुणादिनिमित्तत्वबहुरूढत्वशक्तेष्वपि हि सन्निध्याहृतपदान्तरादेरर्थविशेषमभिसन्ध्येत् । यद्वा मुख्यामुख्ययोस्तन्त्रेणानेकार्थत्वानुक्तिः । अमृतशब्देनैवकारेण च * तमेवं विद्वानमृत इति, * तमेव विदित्वा इति च वाक्यद्वयसूचनात् द्वयोरविरोधः स्थापितः । ननु प्रत्यगात्मन्यपि * सोऽन्वेष्टव्य इत्यादिदर्शनात् , * नात्मा श्रुतेः इत्यादौ तस्यापि निरूपयिष्यमाणत्वाच्च स एवेत्यवधारणमिहाशक्यम् । तदिदं निगमनमुखेन व्युदस्यति— **अत** इति । शब्दशक्त्या प्रस्तुतार्थस्वाभाव्याच्चेत्यर्थः ॥ तदुभयं सर्वेश्वर इत्यादिपदद्वयाभिप्रेतम् । **जिज्ञासाकर्मभूतं** जिज्ञासया प्राप्तुमिष्टतममित्यर्थः । प्रधानतया ह्यत्र जिज्ञास्यः परः । तद्भक्त्यारोहायाहंग्रहोपास्तौ विशेषणतया बोद्धुं च स्वात्मापि चिन्त्यः । प्रजापतिवाक्यादिषु च प्रत्यगात्मज्ञानं प्रकृतपरविद्यार्थतयैवोच्यत इति वक्ष्यते ।

सन् इहानिच्छार्थः इच्छार्थो वा? नाद्यः— * गुप्तिज्किद्भ्यस्सन् इत्यादावपाठात् । न द्वितीयः— विचारे विवक्षिते तदिच्छाभिधानविरोधात् सूत्रलक्षणविरोधात् उपचारायोगाच्च इत्यत्राद्यमनभ्युपगत्यान्त्यं समर्थयितुं विगृह्णाति— **ज्ञातुमिति** । ननु प्रत्ययार्थप्रधाने जिज्ञासापदे ज्ञानस्य निमग्नत्वान्न विधेयत्वम् , इच्छा तु न पुरुषतन्त्रा, न च सा स्वज्ञानजन्या, विषयानुकूल्यधीनिघ्नतया तदभावे तदनुपपत्तेरप्रतीयमाणत्वाच्चेत्यत्राह— **इच्छाया** इति । स्वविषयसिद्ध्यर्थतया इच्छारूपक्रियायाः प्रोक्षणादेरिव स्वकर्मप्रधानत्वं सिद्धम् । * धातोः कर्मणः इत्यत्र च

धात्वर्थस्य प्राधान्यमार्थं ग्राह्यम्। अप्राप्तमेव विधेयम्। अत इच्छावाचिना तत्संबन्धिविवक्षाल न युक्तेति भावः। तर्हि ज्ञानमात्रं वाच्यम्, किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्र * अधिकमधिकमर्थं सूचयतीति नीत्या प्रत्युक्तिः— **इष्यमाणमिति**। सन्दिग्धसप्रयोजनविषयतया रागप्राप्तं विचाररूपं ज्ञानं नोपासनादिवद्वैधमिति सूचनात्सार्थकः सन्‌ इत्याशयः। ज्ञान शब्दश्चात्रौचित्यात्‌ उक्तविशेषपरः। रागविषयफलरूपज्ञानमुखेन विचाराक्षेपक्लृप्तिस्तु न युक्ता, धीविलम्बात्‌, विवक्षितस्य च साक्षाद्वक्तुं शक्यत्वात्‌।

इह मीमांसाख्यशास्त्रोत्तरभागारम्भे। एवमेव हि * अथातो धर्मजिज्ञासा इत्यादिष्वपीति भावः। ननु रागप्राप्ते विचारे 'कथं विधीयते' इत्युक्तिः, नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः; न्यायानुपयोगात्‌, तादृशनियमनिषेधेन पूर्वपक्षानुत्थानाच्च। मैवम्‌—रागप्राप्तस्याप्यनारम्भ्यत्वभ्रमे तन्निषेधपरत्वादत्र विधिशब्दस्य,

**ज्ञातापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः। सीदन्त्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया॥ २०७॥**

मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्‌, उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः— ❀ वृत्तात्‌ कर्माधिगमादनन्तरं ब्रह्मविविदिषा इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्‌— ❀ संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः इति।

अत्र 'तापत्रय' इडि ग्रन्थे यादवप्रकाशोक्तं पूर्ववृत्तान्तरं साङ्ख्यादिविचारस्यानारम्भ्यतास्थापनं च विवक्षितमिव प्रतिभाति; तद्वृद्यदस्यन्‌ वाक्यार्थमाह—**मीमांसा** इति। 'माङ् माने' इत्यत्र नातत्वं निपात्य वा, 'मान पूजायाम्' इत्यत्र वा 'मान्वध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। "मानेर्जिज्ञासायाम्" इडि वैयाकरणोक्तिस्त्वदूरविप्रकर्षात्‌; जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः। आहुश्च— * मीमांसासंज्ञितस्तर्कस्सर्वो वेदसमुद्भवः इत्यादि। तादृशन्यायनिबन्धात्मनि तु शास्त्रे भाक्तो मीमांसाशब्दः।

अतः पूर्वापरभागविभागेन ज्ञातत्वावसेयत्वोक्तिरविरुद्धा। अत्र पूर्ववृत्तादित्यादिना वाक्ययोजना। शिष्टं तत्रत्यहेत्वंशसमर्थनम्‌।

**विचारक्रमनिर्देशः सौत्रस्तद्व्यक्तये त्विह। शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसंहितौ॥ २०८॥**

पूर्वभागोपरितनभागशब्दाभ्यां नियतक्रमव्याख्यानरूपप्रबन्धैक्यं व्यज्यते। तन्निदानं व्याख्येयस्य वेदस्य क्रमवत्त्वं पदयोजनायां सशिरस्कशब्देन दर्शितम्‌। पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः। **ज्ञातस्य** निर्णीतस्य। **अवसेयस्य** अबाधितापातधीस्थतया निर्णेतव्यस्य। **ब्रह्मज्ञानस्य** ब्रह्मोपासनस्य। ब्रह्मस्वरूपमात्रविवक्षायामत्र ज्ञानशब्दाधिक्यात्‌, 'ज्ञातस्य कर्मणः' इत्येतत्समशीर्षतया साध्यविशेषग्रहणौचित्यात्‌, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्य अवसेयत्वोक्त्ययोगात्‌, निर्दिश्यमानफलं प्रत्यचोदितत्वाच्च। तदिह समन्वयनीत्या स्वयमनन्ताक्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्यानन्ताक्षयफलसाधनत्वेन तद्विषयतयापि ज्ञातव्यमिति तदुपसर्जनतयोक्तिरपि

नुसङ्गः । ब्रह्म ज्ञातव्यमित्यनेन तु तत्प्राधान्यं व्यज्यते । अत्र प्रयोजनवत्त्वापातप्रतीतत्वं विचार्यत्वे हेतुः । कर्म-विचारात् पश्चाद्भावित्वस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वेनानन्तर्यस्य च तादृगपेक्षणीयान्तराभावः । अतः श्रुत्युक्त-निर्वेदपूर्तिपर्यन्तविचारविशेषाभिप्रायेण तत एव इत्युक्तम् । अथशब्देनेह हेतुवैकल्यनिवृत्त्यर्थेन, तदथशब्देन हेतुनि-षेधायोगात् । केचित्तु * हेत्वन्तराद्ब्रह्मविचारेऽनवस्थकत्वमुक्ताधिकारस्यैव प्रसङ्गात् कर्तव्यतानिवृत्तिहेत्वन्तरादरोऽतदे-शोऽयम् इत्याहुः । अत्र प्रधानप्रतिज्ञा तद्धेतुः प्रतिज्ञान्तरहेतुश्च नोक्तः स्यादिति वक्तृत्वेनाचिन्त्यम् । आकाङ्क्षितहेतुपूर्वक-साध्यविशेषायोगव्यवच्छित्त्यैवार्थतः हेत्वन्तरादिनिरासस्तु युक्तः । **ज्ञातव्यम्** विचार्यमित्यर्थः । ' विचारः कर्तव्यः ' इति भाषिष्यते । अत्राहार्थे कृत्यप्रत्ययः । कर्मज्ञानादित्यत्रापि ज्ञानं विचारः ।

ब्रह्म ज्ञातव्यमित्युक्तं भवतीत्यनेन स्वारस्यं युक्तिं च सूचयता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं वदन्तः प्रत्युक्ताः । इदं हि सूत्रस्याविचार्यत्वनिरासार्थम् । ब्रह्मणो ज्ञातव्यत्वस्य इतः पूर्वमसिद्धतया तदेव ज्ञातव्यमिति नियमो नेदेति । कथं च शब्दानां सिद्धपरत्वसम्भवमसाधयित्वा सिद्धविशेषस्य विचार्यत्वोक्तिः ; समन्वयसूत्रात् तत्साधनम् , साकाङ्क्ष-योजना च न युक्ता । अत्र चोदनासूत्रवच्छब्दतोऽर्थतश्चायोगान्ययोगव्यवच्छेदौ वाक्यभेदाभावश्चेत्यप्ययुक्तम् , अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः । ब्रह्मश्रद्धावर्धकतया अन्यनिषेधः प्रस्तुतोपयोगी इति च मन्दम् ; तत्प्रतिज्ञानेऽपि हेतुश्चात्रोच्यः ; तदूहे तु ईक्षित्यधिकरणाद्यैस्तर्कपादान्तैस्साधनप्रासैः कृतकरत्वं च स्यात् । किं च शारीरकेऽनुक्तांशस्य साङ्ख्ययोगावगम्यत्वं वदद्भिः कथमिह तन्निषेधः प्रतिज्ञायते ? वेदविरुद्धांशानादरणीयत्वं तु विरोधाधिकरणतः प्रागेव सिद्धम् । अतो ब्रह्म ज्ञातव्यमेवेति योजना युक्ता इति वृद्धाः । अनेन श्रोतव्यादिश्रुतिरनुसृता भवति । अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्यापि द्रढयन् तन्मतानुसारे तत्कृतिसंवादं दर्शयति— **तदाह** इति । अनन्यथासिद्धपूर्वत्व-विवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतम् । अधिगम्यतेऽनेनेति अधिगमोऽत्र विचारः । विविदिषोक्तिः जिज्ञा-सोक्तिवद्वेद्या ।

स्वोक्तसूत्रार्थसिद्ध्यै सूचितं शास्त्रैक्यमपि संवादयति— **वक्ष्यति** इति । व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः । ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम् ; किं तु ऐकप्रबन्ध्यमपीत्यभिप्रायेण संहितत्वोक्तिः । अधीतकृत्स्नवेदार्थरूपविचार्यैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वात् नष्टाश्वदग्धरथन्यायेन सङ्घटितमित्यर्थः । इयं च वृत्तिः शास्त्रभेदभ्रमहेतून् तत्परिहारांश्च सूचयति—सर्वशरीरिगोचरत्वं दर्शयता शारीरक-शब्देन विषयभेदज्ञापनात् , 'एतत्' इति प्रयोजनाधिकारिभेदयोरर्थविरोधस्फुरणस्य चाङ्गुल्यैव निर्देशात् । 'जैमिनीयेन' इति भेदशङ्काद्योतनम् । परिहारस्तु 'षोडशलक्षणेन' इति, द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन । अत्र * कर्म-देवताब्रह्मगोचरा सा त्रिधोद्भभौ सूत्रकारतः । जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात् ॥ इति तत्त्वरत्ना-करोक्तेश्च वृत्तेश्च क्वचिदुपचारेणाविरोधो ग्राह्यः । षोडशलक्षणेनेति प्रतिबन्दीमभिप्रयतावान्तरविषयादिभेदानां न प्रब-न्धैक्यविरोधित्वमिति दर्शितम् । 'जैमिनीयेन' इत्यनेनैवार्थविरोधशङ्का सूत्रतात्पर्यानभिज्ञतयेति सूच्यते । सूत्रयिष्यति हि शारीरकार्थेषु बहुषु जैमिनेस्संवादम् । व्यामोहशान्त्यै * धर्मं जैमिनिरत एव इत्यादिषु क्वचिद्विसंवादोक्तिनिरासौ । 'परामर्शं जैमिनिः' इत्यादौ नैष्ठिकाद्याश्रमाभावो जैमिन्यसूत्रितोऽपि नूनं सकामानां गृहस्थधर्मवैमुख्यनिवार-णार्थं कदाचिदुक्तोऽनूद्यापास्तः । अन्यथा * तद्भूतस्य तु नातद्भावो जैमिनेरपि इत्यादौ नैष्ठिकाद्याश्रमप्रच्युतिनिषेधस्य

धात्वर्थस्य प्राधान्यमार्थं ग्राह्यम्। अप्राप्तमेव विधेयम्। अत इच्छावाचिना तत्संबन्धिविवक्षात न युक्तेति भावः। तर्हि ज्ञानमात्रं वाच्यम्, किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्र * अधिकमधिकमर्थं सूचयतीति नीत्या प्रत्युक्तिः— **इष्यमाण-मिति।** सन्दिग्धसप्रयोजनविषयतया रागप्राप्तं विचाररूपं ज्ञानं नोपासनादिवद्वैधमिति सूचनात्सार्थकः सन् इत्याशयः। ज्ञान शब्दश्चात्रौचित्यात् उक्तविशेषपरः। रागविषयफलरूपज्ञानमुखेन विचाराक्षेपक्लृप्तिस्तु न युक्ता, धीविलम्बात्, विवक्षितस्य च साक्षाद्वक्तुं शक्यत्वात्।

इह मीमांसाख्यशास्त्रोत्तरभागारम्भे। एवमेव हि * अथातो धर्मजिज्ञासा इत्यादिष्वपीति भावः। ननु रागप्राप्ते विचारे 'कथं विधीयते' इत्युक्तिः, नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः; न्यायानुपयोगात्, तादृश-नियमनिषेधेन पूर्वपक्षानुत्थानाच्च। मैवम्—रागप्राप्तस्याप्यनारम्भ्यत्वभ्रमे तन्निषेधपरत्वादत्र विधिशब्दस्य,

**जातापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः। सीदन्त्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया ॥ २०७ ॥**

मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्, उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्य मित्युक्तं भवति। तदाह वृत्तिकारः— ❀ वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्— ❀ संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः इति।

अत्र 'तापत्रय' इति ग्रन्थे यादवप्रकाशोक्तं पूर्ववृत्तान्तरं साङ्ख्यादिविचारस्यानारभ्यतास्थापनं च विवक्षित-मिव प्रतिभाति; तद्व्युदस्यन् वाक्यार्थमाह—**मीमांसा** इति। 'माङ् माने' इत्यत्र नातत्वं निपात्य वा, 'मान पूजायाम्' इत्यत्र वा 'मान्बध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। "मानेर्जिज्ञासायाम्" इति वैयाकरणोक्ति-स्त्वदूरविप्रकर्षात्; जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः। आहुश्च— * मीमांसासंज्ञितस्तर्कस्सर्वो वेदसमुद्भवः इत्यादि। तादृशन्यायनिबन्धात्मनि तु शास्त्रे भाक्तो मीमांसा-शब्दः।

अतः पूर्वापरभागविभागेन ज्ञातत्वावसेयत्वोक्तिरविरुद्धा। अत्र पूर्ववृत्तादित्यादिना वाक्ययोजना। शिष्टं तत्रत्यहेत्वंशसमर्थनम्।

**विचारक्रमनिर्देशः सौत्रस्तद्व्यक्तये त्विह। शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसंहितौ ॥ २०८ ॥**

पूर्वभागोपरितनभागशब्दाभ्यां नियतक्रमव्याख्यानरूपप्रबन्धैक्यं व्यज्यते। तन्निदानं व्याख्येयस्य वेदस्य क्रमवत्त्वं पदयोजनायां सशिरस्कशब्देन दर्शितम्। पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः। **ज्ञातस्य** निर्णीतस्य। **अवसेयस्य** अबाधितापातधीस्थतया निर्णेतव्यस्य। **ब्रह्मज्ञानस्य** ब्रह्मोपासनस्य। ब्रह्मस्वरूपमात्रविवक्षायामत्र ज्ञान-शब्दाधिक्यात्, 'ज्ञातस्य कर्मणः' इत्येतत्समशीर्षतया साध्यविशेषग्रहणौचित्यात्, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्य अवसेयत्वोक्त्ययोगात्, निर्दिश्यमानफलं प्रत्यचोदितत्वाच्च। तदिह समन्वयनीत्या स्वयमनन्ताक्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्यानन्ताक्षयफलसाधनत्वेन तद्विषयतयापि ज्ञातव्यमिति तदुपसर्जनतयोक्तिरपि

सुसङ्गता। ब्रह्म ज्ञातव्यमित्यनेन तु तत्प्राधान्यं व्यज्यते। अत्र प्रयोजनवत्तयापानर्थक्यस्य विचार्यत्वे हेतुः। कर्मविचारात् पश्चाद्भावितस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वमानन्तर्यस्य च तादृगपेक्षणीयान्तराभावः। अतः श्रुत्युक्तनिर्वेदपूर्तिपर्यन्तविचारविशेषाभिप्रायेण **तत एव** इत्युक्तम्। अवधारणमिह हेतुवैकल्यनिवृत्त्यर्थम्, सावधारणहेतुनिषेधायोगात्। केचित्तु * हेत्वन्तराद्ब्रह्मविचारेऽनावश्यकत्वशूद्राधिकारत्वयोः प्रसङ्गात् कर्मधीव्यतिरिक्तहेत्वनादरोपदेशोऽयम् इत्याहुः। अत्र प्रधानप्रतिज्ञा तद्धेतुः प्रतिज्ञान्तरहेतुश्च नोक्तः स्यादिति बहुनौचित्यम्। आकाङ्क्षितहेतुपूर्वकसाध्यविशेषायोगव्यवच्छित्त्यैवार्थतः हेत्वन्तरादिनिरासस्तु युक्तः। **ज्ञातव्यम्** विचार्यमित्यर्थः। 'विचारः कर्तव्यः' इति भाषिष्यते। अत्रार्हार्थे कृत्यप्रत्ययः। कर्मज्ञानादित्यत्रापि ज्ञानं विचारः।

ब्रह्म ज्ञातव्यमित्युक्तं भवतीत्यनेन स्वारस्यं युक्तिं च सूचयता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं वदन्तः प्रत्युक्ताः। इदं हि सूत्रमविचार्यत्वनिरासार्थम्। ब्रह्मणो ज्ञातव्यत्वस्य इतः पूर्वमसिद्धतया तदेव ज्ञातव्यमिति नियमो नोदेति। कथं च शब्दानां सिद्धपरत्वसम्भवमसाधयित्वा सिद्धविशेषस्य विचार्यत्वोक्तिः; समन्वयसूत्रात् तत्साधनम्, साकाङ्क्षयोजना च न युक्ता। अत्र चोदनासूत्रवच्छब्दतोऽर्थतश्चायोगान्ययोगव्यवच्छेदौ वाक्यभेदाभावश्चेत्यप्ययुक्तम्, अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः। ब्रह्मश्रद्धावर्धकतया अन्यनिषेधः प्रस्तुतोपयोगी इति च मन्दम्; तत्प्रतिज्ञानेऽपि हेतुश्चात्रोह्यः; तदूहे तु ईक्षित्यधिकरणाद्यैस्तर्कपादान्तैस्साधनप्राप्तेः कृतकरत्वं च स्यात्। किं च शारीरकेऽनुक्तांशस्य साङ्ख्ययोगावगम्यत्वं वदद्भिः कथमिह तन्निषेधः प्रतिज्ञायते? वेदविरुद्धांशानादरणीयत्वं तु विरोधाधिकरणतः प्रागेव सिद्धम्। अतो ब्रह्म ज्ञातव्यमेवेति योजना युक्ता इति वृद्धाः। अनेन श्रोतव्यादिश्रुतिरनुसृता भवति। अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्यापि द्रढयन् तन्मतानुसारे तत्कृतिसंवादं दर्शयति— **तदाह** इति। अनन्यथासिद्धपूर्वत्वविवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतम्। अधिगम्यतेऽनेनेति अधिगमोऽत्र विचारः। विविदिषोक्तिः जिज्ञासोक्तिवज्ज्ञेया।

स्वोक्तसूत्रार्थसिद्ध्यै सूचितं शास्त्रैक्यमपि संवादयति— **वक्ष्यति** इति। व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः। ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्; किं तु ऐकप्रबन्ध्यमपीत्यभिप्रायेण संहितत्वोक्तिः। अधीतकृत्स्नवेदार्थरूपविचार्थैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वात् नष्टाश्वदग्धरथन्यायेन सङ्घटितमित्यर्थः। इयं च वृत्तिः शास्त्रभेदभ्रमहेतून् तत्परिहारांश्च सूचयति—सर्वशरीरिगोचरत्वं दर्शयता शारीरकशब्देन विषयभेदज्ञापनात्, 'एतत्' इति प्रयोजनाधिकारिभेदयोरर्थविरोधस्फुरणस्य चाङ्गुल्यैव निर्देशात्। 'जैमिनीयेन' इति भेदशङ्काद्योतनम्। परिहारस्तु 'षोडशलक्षणेन' इति, द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन। अत्र * कर्मदेवताब्रह्मगोचरा सा त्रिधोद्बभौ सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्॥ इति तत्त्वरत्नाकरोक्तेश्च वृत्तेश्च कश्चिदुपचारेणाविरोधो ग्राह्यः। षोडशलक्षणेनेति प्रतिबन्दीमभिप्रयतावान्तरविषयादिभेदानां न प्रबन्धैक्यविरोधित्वमिति दर्शितम्। 'जैमिनीयेन' इत्यनेनैवार्थविरोधशङ्का सूत्रतात्पर्यानभिज्ञतयेति सूच्यते। सूत्रयिष्यति हि शारीरकार्थेषु बहुषु जैमिनेस्संवादम्। व्यामोहशान्त्यै * धर्मं जैमिनिरत एव इत्यादिषु क्वचिद्विसंवादोक्तितन्निरासौ। 'परामर्शं जैमिनिः' इत्यादौ नैष्ठिकाद्याश्रमाभावो जैमिन्यसूत्रितोऽपि नूनं सकामानां गृहस्थधर्मवैमुख्यनिवारणार्थं कदाचिदुक्तोऽनूद्यापास्तः। अन्यथा * तद्भूतस्य तु नातद्भावो जैमिनेरपि इत्यादौ नैष्ठिकाद्याश्रमप्रच्युतिनिषेधस्य

जैमिनिसंवादोक्त्ययोगात्। * मध्वादिष्वसंभवादनधिकारं जैमिनिः, * भावं जैमिनिर्विकल्पामननादित्यादिष्वपि न शास्त्रैक्यविरुद्धानूक्तिः, स्वोक्तव्याख्याभेदवत्स्वल्पान्यथोक्तेस्तदविरोधात्। संहितत्वोक्त्या तु कर्तृभेदाभेदयोः यथादृष्टि प्रबन्धभेदाभेदानापादकत्वं ख्यापितम्। अर्थसङ्गतौ सत्यां ह्यन्यतराभिसन्धेरुभयाभिसन्धेर्वा सन्धायकत्वं युक्तम्।

**ब्रह्मसंवाददार्ढ्येन प्रधानार्थाविरोधतः। अप्रधानविरोधस्तु तात्पर्यादपनोद्यते ॥ २०९ ॥**
**परकल्पितसौधार्थविरुद्धांशव्यपोहतः। शेषपूरणवद्वात्र संहितत्वोक्तिसंभवः ॥ २१० ॥**

**अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः। मीमांसाशास्त्रम् * अथातो धर्मजिज्ञासेत्यारभ्य * अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्।**

कुतस्तर्हि तद्भेदप्रथा, सति वा भेदे कथं च प्रबन्धैक्यम् इत्यनवहितानुयोगे द्वितीयवृत्त्यभिप्रेतं व्यनक्ति— **अत** इति। सयुक्तिकसंप्रदायादित्यर्थः। प्रतिपिपादयिषितत्वोक्त्या कर्मकाण्डदेवताधिकरणादेर्दैवतातत्त्वनिश्चयरहितानामपि कर्मप्राशस्त्यादिप्रतिपादनपरत्वेन विग्रहादिनिराकरणादौ तात्पर्याभावस्सूच्यते। उक्तं ह्यागमप्रामाण्ये— * यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनायेति। विवृतं चैतद्वेदार्थसङ्ग्रहे— * अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृता इति। अतिवादा अन्यपरोक्तयः। तावताऽपि बाह्योक्तानित्यसंयोगादिनिमित्तश्रुत्यप्रामाण्यशङ्कानिरासात् तत एव स्वाभीष्टसिद्धेः इत्याशयः।

अपि चैवं नवमाद्यपादे— * फलदेवतयोश्च, * न चोदनातो हि ताद्गुण्यमिति प्रसक्तयोः फलदेवतयोर्मध्ये देवताविषयाणि * देवता वा प्रयोजयेदित्यादीनि सूत्राणि यानि, तानि व्याकुर्मः— देवतोद्देशेन देयं द्रव्यं देवता न प्रयोजयेत्; कुतः, कृष्यादिवत् फलसाधनभूतक्रियाया एव प्रयोजकत्वोपपत्तेः। तत्राह— * देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वादिति। वाशब्दश्शङ्कानिवर्तकः; हविरुद्देश्या देवता फलार्थिनं स्वाराधने प्रयोजयेत्। कुतः, भोजनस्य तदर्थत्वात्; भोजनस्य हविः तत्समर्पणस्य च तदर्थत्वात् तच्छेषत्वात्। सम्प्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते।

**क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता। तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी ॥ २११ ॥**

न च वाच्यं विग्रहादिपञ्चकायोगात् न प्रयोक्त्री देवतेति; स्मृत्युपचारान्यार्थदर्शनैरबाधितैस्तत्सिद्धेः। अतो यथा विग्रहादिमानतिथिराराध्यः स्वार्थं स्वाभीष्टमुपचरणं प्रयुङ्क्ते; तथा देवतापीति। * आर्थपत्याच्च— अर्यते प्राप्यत इत्यर्थः विभूतिः, अर्थ्यत इति वा। अतस्तदभावादनाराध्या अनीप्सितप्रदत्वादप्रयोजिकेति न शङ्कनीयम्; परा खलु देवता सर्वस्येष्टे; तन्नियुक्ता चापरा यथाधिकारं तत्तद्विभूतीनाम्। तथाऽपि निरपेक्षा देवता न कुतश्चित् प्रीयेत, न कञ्चन प्रीणाति; अतः कथं प्रयोजिकेत्यत्राह— * ततश्च तेन सम्बन्धः। ततः नैरपेक्ष्येऽपि नरदेवनीत्या दयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्या देवताया एव हेतोः परिचरतां स्वाभीष्टफलेन सम्बन्धः स्मृत्युपचारादिभिरेवं सिद्ध इति पूर्वः पक्षः। राद्धान्तस्तु— * अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात्। अत्र 'अपि वा' इति सार्धाङ्गीकारं पक्षव्यावर्तनम्। यद्यपि देवताया विग्रहादिपञ्चकं दुर्निषेधम्, द्रव्याद्यपेक्षया संप्रदानस्य प्राधान्यम्,

यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यं, सिद्धपरवाक्येषु च परावरदेवतयोः स्वरूपादिकमनन्यार्थमामनामः; तथाऽपि कर्तव्योपदेशेषु यज्ञादिरूपं कर्म स्वर्गादिफलसाधनतया चोदितत्वात् प्रधानं सत् साध्यतया बुद्ध्यारोहेण पुरुषं प्रवर्तयति, कृत्स्नं च देवतादि क्रियाशेषभूतम्।

ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोक्ष्यामहे, अत्राह— * गुणत्वे देवता श्रुतिः। हविःप्रदानं प्रति गुणीभूतां हि देवतामनुश्रृणुमः; मन्त्रार्थवादोपस्थापितं देवताप्रीतिकरमपूर्वं चोदितस्य कर्मणः क्षणिकस्य कालान्तरभाविफलद्वारतया उपादीयेत; अतो वास्तवप्राधान्यशालिन्यपि देवता फलकामप्रवर्तकशाब्दप्राधान्यवत्क्रियागुणीभूता न प्राधान्येन प्रयोजिकेति। अतिथिस्तर्हि कथं प्रयोजकत्वम् इत्थमित्याह— * अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्। आतिथ्यं प्रत्यतिथेः प्रधानत्वं प्राप्तम्; अन्यथा हि तदर्थे कर्मणि प्रयोजकाभावात् तदभावः स्यात्। तत्सपर्याविधिरेव तत्प्रयोजक इति चेत् तत्र प्रत्याह— * तस्य प्रतिविधानत्वात्। आतिथ्यकर्मणो हि अतिथ्यागमनप्रतिविधानतयैव चोदना।

**क्रियाप्रयुक्तपुरुषसमाहूता तु देवता। संनिधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता॥ २१२॥**
**अतिथिस्तु स्वयं प्राप्तः स्वाभीष्टं च प्रयोजयेत्। तदिष्टानुविधानेन तत्सपर्यार्थचोदना॥ २१३॥**

अतः प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिरिति। यथा चातिथेर्विग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित् क्षतिः, प्रत्युत स्वरूपलाभ एव; एवं देवतायास्तद्वत्त्वेऽपि। न चात्र तत्प्रतिक्षेपसाफल्यं पश्यामः। गुणीभावसाधनेऽपि किं फलमिति चेत्, अनिर्धारितवास्तवप्राधान्यानामपि कर्मश्रद्धासंवर्धनमिति।

**सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयोः। देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम्॥ २१४॥**
**शाबरे पूर्वपक्षोक्तदेवताविग्रहादिषु। स्वतः प्रामाण्यवेदिभ्यः स्वदते न निराकृतिः॥ २१५॥**
**स्मृत्योपचाराद्न्यार्थदर्शनैश्च स्वभापितम्। न वाङ्मात्रेण निर्होतुं शक्यते नास्तिकेतरैः॥ २१६॥**
**अदर्शनकुतर्काभ्यां श्रुतार्थानामपह्नवे। चार्वाकादिमतापत्त्या सर्वोपप्लवसम्भवः॥ २१७॥**
**श्रुतानां विग्रहादीनां कल्प्यतोक्तिश्च मोहजा। श्रुतशक्त्याद्यभावस्य कल्पने गौरवं तु वः॥ २१८॥**
**क्षणिकस्य फलद्वारं किं भवेदिति चिन्तने। द्वारकल्पनेवैरं ह्यत्र श्रुतद्वारपरिग्रहः॥ २१९॥**
**देवतानां क्रियार्थत्वं कर्मणां च तदर्थता। मुखभेदेन सिद्धत्वान्न मिथो बाधमर्हतः॥ २२०॥**
**आदित्यादिमतीरङ्गे स्थापयन्बादरायणः। देवतानां प्रधानत्वमर्थसिद्धमसूत्रयत्॥ २२१॥**
**नासिद्धदेवतारूपदृष्टिश्चान्यत्र युज्यते। न च सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रमः॥ २२२॥**
**देवतानां तपश्चर्याद्युक्तिश्च न विरुध्यते। स्वाधिकेश्वरतोपार्थप्रवृत्तेरुपपत्तितः॥ २२३॥**
**प्रशासितुश्च घृणया धर्मसंस्थापनार्थिनः। तत्तद्धर्मप्रवृत्तिस्स्यात्कर्मवश्यानुसारिणः॥ २२४॥**
**तिर्यक्स्थावरनिर्जीवतत्प्रतीकगुणक्रियाः। अभिमत्यनुबन्धेन देवतास्तदपि श्रुतम्॥ २२५॥**
**हविर्भेदानुसारेण फलभेदप्रदायिता। प्रतिषिद्धैः प्रकोपश्च राजादिन्यायतो भवेत्॥ २२६॥**
**यदि श्रुत्यनुसारेण स्वभावो हविरादिषु। तेनैव तत्तदाराध्यस्वभावस्वीक्रियोचिता॥ २२७॥**
**मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते। तन्मूला स्मृतिरप्यत्र न बाधार्हा स्वमूलवत्॥ २२८॥**

**पर्याये च विशिष्टे च देवताभेदकल्पनम् । तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ २२९ ॥**
**अविदित्वा स्वमन्दत्वं नास्तिकैरास्तिकैरिह । यैरजल्प्यत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभिः ॥२३०॥**
**द्रव्यदैवतसामान्ये बलीयो द्रव्यमित्यपि । प्रत्यक्षे च परोक्षे च प्रमाणप्रश्रितेर्वशात् ॥ २३१ ॥**
**द्रव्यस्याध्यक्षसिद्धस्य हविष्ट्वं शास्त्रगोचरः । देवतायास्स्वरूपं च धर्मत्वं चेति भेदतः ॥ २३२ ॥**
**प्रत्यक्षाद्युपजीवित्वाच्छास्त्रतो धीर्विलम्बिता । ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥ २३३ ॥**
**द्रव्यदैवतवैषम्यं न सत्यासत्यभावतः । दैवतं यदि मिथ्या स्यात्कथं भेदादिधर्मभाक् ॥ २३४ ॥**
**अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकापि वा । यथाश्रुतगृहीता वा सत्यैव खलु देवता ॥ २३५ ॥**
**मणिमन्त्रौषधाद्यैश्च सिद्धिरुक्ताभ्युपेयते । जन्मसिद्धापि साधीता किं न देवेषु गृह्यते ॥ २३६ ॥**
**न वस्तुदेशान्तरयोर्देवदृष्टिविधानवत् । इह कल्पयितुं युक्तं स्वरूपविधिसौस्थ्यतः ॥ २३७ ॥**
**रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारतः । फलदाः फलभूतत्वाद्दपि सिध्यन्ति देवताः ॥ २३८ ॥**
**इत्थं प्राचीनया गत्या क्षिप्तं निर्दैवतं मतम् । शेषं तदुपरीत्यादिसूत्रभाष्ये भविष्यति ॥ २३९ ॥**

द्रमिडभाष्यकारैरप्युक्तम्— * अञ्जसैव विश्वसृजो रूपमित्यारभ्य, * न ह्यरूपाया देवताया रूपमुपदिश्यते, यथाभूतवादि हि शास्त्रमिति । नन्वर्थवादानां विधिशेषत्वं पूर्वत्रोक्तम्; समन्वयाधिकरणे त्वन्यथा; तत्कथमविरोधः? इत्थम्— उत्सर्गापवादतः प्रवृत्तेः । दृष्टं चैतच्छास्त्रान्तरे काण्डान्तरे च । एवमन्यत्रापि कुदृष्टिकल्पितो विरोधः शमयितव्यः । **षट्कभेदवत्** इति कर्मकाण्डे प्रतिबन्दी, **अध्यायभेदवत्** इति तु काण्डत्रयेऽपि; चकारोऽत्रानुक्तपादादिसमुच्चये । देवताकाण्डाच्छारीरकस्य पृथक्करणं च तत्पृथक्करणप्रतिबन्द्या निरूढम् । अथ भिन्नक्रमत्वभिन्नप्रबन्धत्वव्युदासं वृत्तिसिद्धं व्यनक्ति— **मीमांसाशास्त्रम्** इति । **सङ्गतिविशेषेण** हेतुहेतुमद्भावादिना सम्बन्धेनेत्यर्थः । * स च विंशतिलक्षण्यामेकप्रयोजनसाधनत्वेनैकप्रयत्नसाध्यत्वमिति विवरणम् । इदं च ऐकप्रबन्ध्यव्यक्त्यर्थम् । **विशिष्टक्रमम्** = नियतक्रमम्; न हि शास्त्रान्तरवदवसरमात्रादिह क्वापि क्रम इत्याशयः । तत्र विशेषः—

**विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः । अतोऽनधीतवेदस्य विचारश्श्रुतिवारितः ॥ २४० ॥**
**क्रमो विंशतिलक्षण्या न वैधः किं तु यौक्तिकः । अतो व्युत्क्रमचिन्तायामनौचित्यं प्रकाश्यते ॥**

'आरभ्य' इत्यनेन धर्मजिज्ञासासूत्रे कृत्स्नवेदार्थविचारप्रतिज्ञा सूच्यते, धर्मशब्देन सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसंग्रहात् । कर्मभागमात्रप्रतिज्ञापि तत्रैव तन्त्रतः आवृत्त्या वा सिध्येत् । तावतैव सारे कर्मविचारार्थत्वोक्तिः। भागद्वयप्रतिज्ञाभ्यां सामान्यप्रतिज्ञा गम्या; न्यायसूत्रे साधर्म्यवैधर्म्यसमोक्त्या प्रतिधर्मसमोक्तीतिवत् । तदेतत्सर्व सङ्गतिमालायामुक्तम् । न च वाच्यम् आद्यप्रतिज्ञयैव कृत्स्नसिद्धौ किं भूयो विशेषप्रतिज्ञयेति; शङ्काविशेषोद्धारादिप्रयोजनवशात् प्राचीनाध्यायेष्विवात्रापि तदुपपत्तेः । न चायम् *अथातो धर्मजिज्ञासा इत्यादिरप्रस्तुतार्थः; यथान्यत्र सङ्गत्या क्रमनियतिस्तथात्रेति तात्पर्यात् । अत्र ह्यमानकस्यानिरूप्यतया प्रमाणलक्षणेन प्रथमेनाभावि । कार्त्स्न्येन वेदस्य प्रामाण्ये सिद्धे तदर्थेषु भेदाभावेऽङ्गत्वादेस्सर्वस्यायोगात् मानचिन्तानन्तरं शास्त्रार्थभेदचिन्ता प्रावर्तिष्ट; शास्त्रभेदचिन्तेत्येके । तत्र शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयैः सिद्धे भेदे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः शेषलक्षणं प्रवृत्तम् । शेषाणामेव शेषिभिः प्रयोज्यत्वाय चतुर्थे क्रत्वर्थपुरुषार्थजिज्ञासा, विध्यपेक्षारूपोपादानचिन्तेति केचित् ।

प्रयुक्तेषु श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डैः पञ्चमे क्रमोऽनुक्रान्तः । सक्रमे शास्त्रार्थे स्थापिते तत्प्रयोक्ता षष्ठे प्रोक्तः । एवमुपदिष्टप्रकृतिनिश्चये विकृतावतिदेशस्सामान्यतः सप्तमे स्थापितः । अष्टमेऽपि तदनुबन्धिविशेषः । अतिदिष्टमन्त्रादीनां नवमे बहुविध ऊहः । अतिदेशप्राप्तेषु कचित्प्रयोजनाभावादन्यतो वा तत्त्वाभावात्प्रतिषेधतो वा दशमे बाधः । उक्तेषु पृथक्प्रयुक्तिशक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये चैकादशे तन्त्रम् । द्वादशेऽपि कस्मिंश्चित्प्रयोगमध्यपातिन्यन्यस्मिंस्तत्प्रयोगोपजीविनि प्रसङ्ग इति । तदिदं सङ्जगृहुः— * धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः । सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥ इति । एवं तर्किते कर्मणि सङ्कर्षकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैः निरकृप्यत । तत्समाप्तौ च * अन्ते हरौ तद्दर्शनात् * स विष्णुराह हि * तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते इति विचारयिष्यमाणमुपचिक्षिपे इति तत्त्ववृद्धाः । ततोऽन्तिमे काण्डे सद्वारकमद्वारकं च यथार्हं द्वादशलक्षणीयुक्तसर्वधर्मसमाराध्यमनन्तरचतुर्लक्षण्यवधारितसर्वदेवताशरीरकं परं दैवतं परीचिक्षिषितम् । तत्र सर्वेषां कारणवाक्यानामयोगान्ययोगव्यवच्छेदेन ब्रह्मणि समन्वयः प्रथमेऽध्याये प्रतिपाद्यते । तदुक्तं न्यायसुदर्शने— * स्वान्याविषयत्वान्यविषयत्वे समन्वयः । वाक्यानां ब्रह्मणि प्राच्याध्यायेनेह प्रदर्श्यते ॥ इति । तत्र शङ्कितविरोधोद्धरणं द्वितीयेऽध्याये । ताभ्यां स्थापिते ब्रह्मण्युत्पत्तिक्रमात्तृतीयचतुर्थाभ्यां साधनफलशोधनमिति विभाव्यमाना विशिष्टक्रमता दिङ्मात्रम् । इत्थं चेदत्र कथं षोडशचतुष्कपौर्वापर्यम्? व्युत्क्रमेऽपि हि न विरोधः, वेदप्रामाण्यादिकं पूर्वसिद्धमपि यथास्थानं शारीरके निबन्द्धुं शक्यम्, तावन्मात्रं वा संश्रुत्य ब्रह्मचिन्ता स्यात्; मैवम्— अस्ति ह्यनादिप्रवृत्ते त्रिवर्गे कर्मकृत् प्रथमतो दोषदर्शनादभिनिविशत इत्यर्थक्रमः । उभयत्र परिमितापरिमितफलापातप्रतीत्यविशेषेऽपि * अर्के चेन्मधु विन्देत इति न्यायात् कर्मसापेक्षविद्याप्रयासतो वरं तन्निरपेक्ष्यनिर्धूतविकल्पतत्सन्नफलकर्मचिन्ता प्रथममिति च । यज्ञादिपदार्थसापेक्षश्च तदङ्गकवाक्यार्थधीबोधः । विद्याभेदेषु तत्र तत्र यज्ञतदवयवदृष्टिविधिविमर्शश्च दृष्टिविशेषणनिर्धारणापेक्षः । इष्टकाचितादिदृष्टान्तधियश्च दार्ष्टान्तिकोपजीव्याः । कर्मब्रह्मप्रचुरस्वाध्यायभागस्यानादिसम्प्रदायनियताध्ययनसंस्कारक्रमेण तद्विचारक्रमोऽपि युक्तः । स चात्र मुख्यक्रम एव, कर्मोपासनारूपाङ्गाङ्ग्युत्पत्तिक्रमाच्च । तथा चोक्तं न्यायसुदर्शने— * कर्मविज्ञानयोर्हेतुहेतुमद्भावसम्मतेः । प्राग्भावः कर्मणः सिध्येत् पश्चाद्भावोऽपरस्य च ॥ * तयोश्च क्रमवत्त्वेन तद्विचारौ च तादृशौ । मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥ यथा ‘सारस्वतौ भवत एतद्वै दैव्यं मिथुनम्’ इत्यत्र युगलोत्पन्ने यागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे तत्क्रमेण तदङ्गानामेव प्राथम्यमुक्तम्—‘मुख्यक्रमेण वाङ्गानां तदर्थत्वादिति ।

**पूर्वकाण्डप्रसिद्धानां न्यायानामिह संग्रहात् । ब्रह्मकाण्डो वृथेत्येतत्प्राच्याध्यायेष्वपि स्मर ॥ २४२ ॥**
**व्युत्पादनमपूर्वाणामाक्षिप्य स्थापनं तथा । अपवादः कचिच्चेति सार्थत्वमिह च स्थितम् ॥ २४३ ॥**

ननु यदि * अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात् इत्यन्ता मीमांसा; तदा शारीरकस्य विरक्ताधिकारत्वस्वीकारात्, तत्र निर्दोषानन्तफलनिश्चयाच्च न स्वर्गादिफलसाधनानुष्ठाता कश्चित्स्यात्, ततश्च काम्यविधीनामननुष्ठानलक्षणमप्रामाण्यं स्यात्; मैवम्—मोहाद्द्विषाद्वा यः कर्ममात्रं विचार्य विश्रान्तः, यश्च ख्यातिलाभपूजाप्रवचनादिमात्रकामस्त्वय्यन्तार्थं चिन्तयेत्, यो वा पश्चान्नियतिवशान्निवृत्तवैराग्यः, ते श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युः ॥

**पण्डितोऽप्यातुरः कश्चिदपथ्येषु प्रवर्तते । निषिद्धेष्वपि किं नैवं काम्यं प्राज्ञेऽपि सम्भवेत् ॥ २४४ ॥**

**कथ्यन्ते च महान्तोऽपि कामादुभयभाजनाः । क्रममुक्तिश्च केषांचित् तत एवाभिधीयते ॥ २४३ ॥**

तथाहि—प्रथमं तावत् ❀ स्वाध्यायोऽध्येतव्यः इत्यध्ययनेनैव स्वाध्यायशब्द-वाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ।

**प्रकृतस्यैकशास्त्र्यस्य ब्रह्मचिन्तोद्यमस्य च । क्रमादेश्चोपपत्त्यर्थं तथाहीत्यादि भाष्यते ॥ २४६ ॥**

अत्र कर्मविचारात्प्रागपि ब्रह्मविचारस्स्यादिति पश्यन् किमध्ययनादपि तस्य पूर्वत्वमिच्छति, उताधीतवेदस्य कर्मनिरूपणात् प्राच्यत्वमिति विकल्पं हृदि निधाय आद्यं निषेधति—**प्रथमम्** इति । * तावच्छब्दोऽध्ययनानन्तर्यस्य सर्वसम्मतिं दर्शयति इति विवरणम् । एतेन विचारस्याध्ययनानन्तरभावित्ववद्व्याख्येयस्यैकविधिसिद्धाध्ययनसंस्कार-गोचरनियतक्रमैकप्रबन्धत्वम्, अध्ययनस्य विधिबलात्कृत्स्नस्वाध्यायविषयत्वम्, तत एव तद्विचारस्य तथात्वं च यथावत्कर्म-ब्रह्मचिन्तकैस्सर्वैः दुस्त्यजमिति व्यज्यते । अवधारणार्थो वा तावच्छब्दः । तेन चाष्टवर्षादुपनीतस्यानन्तरं शौचा-चारशिक्षणपूर्वकेण नियतेनाध्ययनेन शास्त्रान्तरावसरनिरोधात् तन्मूलत्वेन सम्भावनीयसाधनचतुष्टयादिपूर्ववृत्तान्तरनिरासः । * **स्वाध्यायोऽध्येतव्यः** इति स्वविधिं गृह्णता तत्प्रयुक्तिरभिप्रेता । **अध्ययनेनाक्षरराशिग्रहणम्** इत्यनेन संस्कार-लाभस्सूचितः । एवकार इह नियमस्य फलितत्वं द्योतयति । यद्यप्यकरणे प्रत्यवायान्निमित्तादृष्टेश्च नित्योऽयमध्ययनविधिः, तथापि दृष्टस्य फलस्यापरित्याज्यतया तत्स्वीकारार्थादध्ययनादक्षरराशिग्रहणे सत्यन्यस्य ग्रहणहेतोर्नात्रावकाशः । अध्य-यनस्य नियोगार्थत्वं वदतापि ह्यर्थात्पुस्तकपाठादि प्रतिषेध्यम्; अत एव हि लिखितपाठकनिन्दापि । **स्वाध्याय-शब्दवाच्य** इत्यादिभिस्त्रिभिः स्वशाखैकदेशमात्रं वा विचार्यो वेदार्थो वा न स्वाध्यायशब्दवाच्य इति व्यज्यते; यथा-क्रमाध्ययनं परम्पराप्राप्तं विध्यनुमतमिति च भावः । **ग्रहणं विधीयते** फलत्वेन बोध्यते, सम्भवदुपायान्तरं फलमिदमु-पायविशेषतो नियम्यत इत्यर्थः; यत एवकारस्ततोऽन्यत्र हि नियमः । यद्यप्यक्षरग्रहणस्यान्यतोऽपि शक्यत्वान्न स्व-रूपतो नियमः, तथापि जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमोपपत्तिः । अर्थज्ञाने नियमं वदतामप्येवमेव निस्तारः ।

तच्चाध्ययनं किंरूपम्? कथं च कर्तव्यमित्यपेक्षायाम् ❀ अष्टवर्षं ब्राह्मणमुप-नयीत तमध्यापयेत् इत्यनेन, ❀ श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्त-श्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षि-तानि विधीयन्ते ।

नन्वध्ययनविधिना स्वाध्यायस्याध्येतव्यत्वमात्रं प्रतीयते । न तावता साधनचतुष्टयसंपत्त्यादिहेतुभूतशास्त्रान्तरा-वसरनिरोधः; ततः पश्चादप्यध्ययनोपपत्तेः । निरङ्गं वा सकृदधीत्य वा शास्त्रान्तरमभ्यस्यतामित्यत्राध्ययनस्वरूपकाला-धिकार्यादिकं व्यनक्ति— **तदिति;** सर्वसंमतनित्यविधिसिद्धमाद्याध्ययनमित्यर्थः । **किंरूपं**— किं जपादिवत्स्वत-न्त्रोच्चारणम्, उतानूच्चारणम्, किं वापन्यायमूलं गौडाध्ययनवत्, पारायणवच्चानावृत्तम्, उतावघातवच्चावृत्तमि-त्यर्थः । * रूपशब्देन फलग्रहणम् इति तूलिकाया अपि यावद्ग्रहणमावृत्तरूपत्वे तात्पर्यम् । **कथम्** इति इति-कर्तव्यतापरम् । अध्यापनार्थशङ्काहस्योपबृंहणीयस्य अध्ययनार्थतया सम्प्रतिपन्नानामुपबृंहणानां च विशेषमैकरस्यावश्यं-भावं चाभिप्रेत्य * **अनेन उपदेशैश्च** इति विभज्य निर्देशः । 'उपाकृत्याधीयीत' इत्येतत्, 'उपनीतोऽधीयीत'

इति श्रुतितात्पर्यैकरूपैः स्थापकम् । उपनीतस्य ह्यध्ययनार्थतयोपाकर्मादि निर्दिश्यते । **युक्तः**— अवहितः, व्रतादि-युक्तो वा । अर्धं पञ्चमं येषां ते **अर्धपञ्चमाः** । आदिशब्देन * अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् ॥ इत्यादीनि प्रागुक्तसाङ्गाध्ययनानुगुणवचनानि गृह्यन्ते । **व्रतविशेषाः** सोमाहुतयः प्राजापत्यसौम्यादयः । **नियमविशेषाः** शुक्लकृष्णपक्षार्धपञ्चममासादिविभक्ता[ङ्गा]ध्ययनकालभेदविषयाः, शूद्रसमीपे नाध्येतव्यमित्याद्युक्तदेशादिविषयाश्च ।

**एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेष-युक्तस्य आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ॥**

ननु * उपनयीत तमध्यापयेत् इति श्रुत्या आचार्यकर्तव्यताश्रुतौ कथमध्ययनापेक्षितविधिः, कथं चार्थोपात्त-श्रुत्यादेरपि शास्त्रान्तरावसरनिरोधादिसिद्धिरित्यत्राह— **एवम्** इति । प्रदर्शितश्रुतिस्मृतिसहकृतत्वविधिसिद्धसाङ्गाध्ययन-विधानप्रकारेणेत्यर्थः । * अभिजनविद्यासमुदेतमित्यादिभिराचार्यगुणग्रहणादध्यापनविधिपरत्वं शङ्क्यम्, ऋत्विग्गु-णोक्तिन्यायादित्यभिप्रायेण **सत्सन्तान**इत्याद्युक्तिः । अत्र आचारात्मगुणौ समाहितशब्दाभिप्रेतौ । **वेदवित्** इति विद्यासमुदेतत्वविशदीकरणम् । निषिध्यते च अयोग्यादध्ययनम्; तद्गुणहानौ प्रतिसमाधीयते च । तथा च * तमसो वा एष तमः प्रविशतीत्यादिभिः शिष्यस्य हानिरुक्ता । * संस्कर्तारमीप्सेत्, तस्मिंश्चैव विद्याकर्मान्तमित्यादिना च तद्गुणानां माणवकार्थत्वं व्यक्तम् । यथा अध्यापनविधिवादिनामष्टवर्षत्वादिमाणवकविशेषणमाचार्यार्थम्, तद्वत् आचा-र्यविशेषणं माणवकार्थमिति प्रतिवन्दीसूचनाय **व्रतनियमविशेषयुक्तस्य** इत्याद्युदाहृतम्; षष्ठ्यन्तपदाभ्यामधिकारि-स्वरूपेतिकर्तव्यतयोः सिद्धिः । तेन अध्ययनस्याङ्गाध्ययनसाहित्यं शास्त्रान्तरावसरनिरोधकत्वं च सिद्धम्; अङ्गाध्ययन-स्यापि नियमविशेषत्वादष्टवर्षाद्युपनीतस्याध्ययनविध्यवरुद्धत्वाच्च । **आचार्योच्चारणानूच्चारणम्** इत्यनेन स्वतन्त्रोच्चारणं विचारस्याध्ययनशास्त्रार्थानुप्रवेशशङ्का चापास्यते । उपनयनस्य यथा अध्यापनानुगुणशिष्यासत्तिदृष्टफलतयोपकारिका मतान्तरे, तथा अनूच्चारणानुगुणप्रत्यासत्तिरस्मिन्मते स्यादिति च भावः । अस्मिन्प्रथमाध्ययने अवघातन्यायात्सकृद्-सकृद्द्विस्त्रिरित्यादिविशेषानादरेण यावत्फलमावृत्तेरर्थसिद्धिमभिप्रेत्याह— **अक्षरराशिग्रहणफलम्** इति । अनेन अक्षर-ग्रहणकामत्वमधिकारिविशेषणमित्यपि व्यञ्जितम् ।

**फलत्वेनाश्रितस्यापि तथात्वं वितुपत्ववत् । उपयोगश्च यागादौ ग्रहणस्यापि दुस्त्यजः ॥ २४७ ॥**
**विधितोऽनुज्ञया वार्थज्ञानं फलमिहेच्छता । फलानुबन्धान्नित्यत्वं प्रहीयेतेति दुर्वचम् ॥ २४८ ॥**

ये तु पूर्वपक्षे नित्याध्ययनविधौ विश्वजिन्न्यायात्सर्वाविशिष्टं स्वर्गं फलमिति कल्पयन्ति, सिद्धान्ते चार्थज्ञानम्; तेऽप्यनेन प्रतिचिक्षिपिरे । अक्षरग्रहणस्य हि दृष्टस्य सुखादन्यस्याप्यर्थज्ञानादेरिव सुखादिपर्यवसानात्फलत्वं युक्तम् । तदेवम् * अनूच्चारणम्, * अक्षरराशिग्रहणफलम् इत्युभाभ्यां किंरूपमिति बुभुत्सितमाद्याध्ययनभावार्थस्वरूपं प्रद-र्शितम् । तथा च विवरणम्— * एकफलावच्छिन्नक्रियाक्षणनिचये हि धातोर्वृत्तिः, यथा ओदनं पचतीति; इतरथा वर्तमाननिर्देशभङ्गप्रसङ्गात् । प्रारब्धोऽपरिसमाप्तो हि वर्तमानशब्दार्थः । क्षणभङ्गिन्यास्तु क्रियाया धात्वर्थत्वे शब्दप्रयोगा-त्पूर्वमेव [ज्ञा]ज्ञातस्य क्रियाक्षणस्य नष्टत्वादुत्तरस्य च भविष्यत्त्वात्समकालस्याज्ञा[ज्ञा]ततया शब्दाविषयत्वाच्चाक्षुषत्वेऽपि

क्षणध्वंसादादिमध्यान्तानिरूपणाच्च न प्रारम्भापरिसमाप्त्योः सिद्धिरित्यतो ग्रहणफलावच्छिन्नक्रियाक्षणनिचयेऽध्ययनशब्दस्य वृत्तिरित्याहेति । अध्ययनस्याचार्योपनीतकर्तृकानूच्चारणत्वोक्तिः * उपनयीत, तमध्यापयेदित्युभाभ्यामाचार्यकर्तृकोपनयनादिपूर्वकत्वं विधीयत इति व्यनक्ति ।

ननु * अध्यापयेदिति वृत्त्युपायनियमार्थत्वं स्यात् । मैवम्— अनुपनेतुरपि तदर्थाध्यापनदृष्टेरुपनयनविधाननैरर्थक्यात् । नाप्युपनीतमेवाध्यापयेदिति क्रमनियमोऽपि, तथाऽष्टवर्षं ब्राह्मणमित्यादेरनपेक्षितवचनत्वप्रसङ्गात् । अन्यार्थमिह तदुपदेशस्त्वसङ्गत एव । न चात्र उपनीतौ नियमः शङ्क्यः, तत्प्रापकान्तरादृष्टेः । स्मृतिर्दृश्यत इति चेन्न, अष्टवर्षाद्युक्तेरनुपयोगादेव । न चात्र वृत्त्युपायद्वयोक्तिः ; उपनयनस्य तदुपायत्वेनापरिसंख्यानात् । तथात्वेऽपि प्रापकाभावेन नियमानुपपत्तिरुक्तैव ; दत्तोत्तरत्वाच्च । अतोऽध्ययनापेक्षितविधिरेवायम् । प्रयोजके चात्र विधिः * याजयेत् इतिवत्स्यात् । अध्यापनमपि हि याजनवद्वृत्त्यर्थतया प्राप्तत्वान्न विधेयम् । तदत्र अष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकाम उक्तप्रकाराचार्योपनीतस्तदुपगत्या यथोक्तव्रतनियमवानधीयीत इति सोपबृंहणाद्याध्ययनशास्त्रार्थस्थापना । अत एव अध्ययनविधौ नियोज्याश्रवणादन्यप्रयुक्तानुष्ठानत्वक्लृप्तिरयुक्ता ; अध्यापनविधावप्यश्रवणाच्च क्लृप्तेश्चोभयत्राविशेषात् । न चेह तत्क्लृप्तिः ; ब्राह्मणमित्यादेः प्रजाकामादिमद्विभक्तिविपरिणाममात्रेण तत्सिद्धेः * विप्रोऽधीयीतेति स्मृत्यनुग्रहाच्च । बालस्य स्वाधिकाराज्ञानान्न स्वविधिप्रयुक्तिरिति चेन्न, निषादस्थपतिन्यायादन्यैस्तदभिज्ञैरनुष्ठानोपपत्तेः । हितैषिण एव हि बालादीनामविदितस्वाधिकाराणां जातकर्मादिसंस्कारानपि स्वयंविदितोपयोगाः कुर्वन्ति । अध्ययने तु बालस्याप्याप्तप्रेरणादिभिः साफल्यानुमानात्प्रवृत्तिर्युक्ता ।

**नित्यमध्ययनं काम्यप्रयुक्तमितिवादिनाम् । कथं तत्र नियोगस्य कृत्युद्देश्यत्वलक्षणम् ॥ २४९ ॥**
**प्रबुद्धानां स्वविधिनाऽबुद्धानामन्यतस्त्विति । प्रयुक्तिभेदक्लृप्तौ च स्यादर्धजरतीयता ॥ २५० ॥**

यच्च निस्तीर्णाध्ययनदुःखे माणवके विचारात्पूर्वमध्ययनविधेरधिकारपर्यवसानाय दृष्टमर्थज्ञानं विषयसाध्यप्रयोजनतया स्वीक्रियते इति; तदपि मन्दम् , अध्ययनस्यान्यतः सिद्धौ तदप्रयोजकेन सिध्यता कार्येण तस्य प्रयोजनान्तरक्लृप्तेरयोगात् ; नित्यान्तरवदस्यापि ते नियोगमात्रप्रयोजनत्वोपपत्तेः । दृष्टत्वादन्यदप्यनुज्ञातमिति चेन्न, आनुषङ्गिकस्य लाभपूजादेरप्यत्र विध्यनुज्ञातत्वेन स्वीकारप्रसङ्गात् । न च धर्मानुष्ठानोपयुक्ततयाऽर्थज्ञानमेव विधिरनुजानाति, नान्यदिति वाच्यम् ; धनादेरपि तदुपयुक्तत्वेन तस्याप्यनुमतिप्राप्तेः ।

**सर्वविध्युपकारित्वमर्थज्ञानस्य संभवेत् । नैतावता विशेषेण दृष्टमन्यदुपेक्ष्यते ॥ २५१ ॥**
**धनादेरुपकर्तृत्वं स्वशक्त्यैवेति चेन्मतम् । अर्थज्ञानं च तद्वत्स्यान्न विधिभ्रूवशंवदम् ॥ २५२ ॥**
**अर्थतस्तदनुज्ञातं शब्दशक्त्यैव भावितम् । सापेक्षैर्यागदानादिनियोगैरुपजीव्यताम् ॥ २५३ ॥**
**अपि चैकस्य वैरूप्यं विध्यनुज्ञात्मकत्वतः । प्रधानगुणकर्मत्वविषये च प्रसज्यते ॥ २५४ ॥**

तस्मादध्ययनारम्भवेलायामेव माणवकस्य हितमाचार्यादयोऽभिसन्धाय परबुद्धैरुपदिश्य वा तत्र प्रवर्तका इति युष्मद्ग्रामेष्वपि वृत्तान्तः । न पुनरन्यस्याचार्यकं मया भावनीयमिति बुद्ध्या कश्चित्प्रवर्तमानो दृश्यते । शिक्षयन्तश्च हितैषिणो बालस्यैवागामि फलं व्यपदिशन्ति । छान्दोग्ये च—* ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तम् इति

जाबालो गौतममाह ; तेन च प्रत्युक्तम्—* समिधं सोम्याहर , उप त्वा नेष्ये इत्यादि । अतः शिष्यार्थमेवाचार्यः प्रवर्तते ; ततस्तु वरादिकं तेन प्राप्यमिति सिद्धम् । अत एव द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्ययनमिति यत्कैश्चिदुक्तम् ; तत्त्वविधिप्रयुक्त्यसंभवेऽप्यध्यापनविधिप्रयुक्तिस्तावदयुक्तेति स्थापयितुम् । न हि माणवकस्य प्रयोजनमबोधयित्वा तत्प्रवर्तनतन्मूलद्रव्यार्जनादिसंभवः ; अन्यथा हठात्प्रवृत्तिराचार्यस्य स्यात् । अतः साङ्गाध्ययनविधौ कण्ठोक्तो विप्रादिः स्वहिताभिसन्धिरधिकर्तेति नान्यतः प्रयुक्तिः । एतेन आचार्यकरणविधिप्रयुक्तघनङ्गीकारे क्रतुविधिप्रयुक्तेः अवश्याश्रयणीयतया तत्तत्फलकामशूद्रादेरप्यध्ययनाधिकारः स्यादिति कैश्चिदुक्तं निरस्तम् ; आधानवन्नियतकर्तृकेण स्वविधिनैव अध्ययनस्य प्रयुक्तेः । अध्ययनविधावधिकाराश्रवणचोद्यमपि वैतुष्यवद्दृष्टस्याक्षरग्रहणस्य फलत्वोक्त्या प्रत्युक्तम् । उपनीयेत्यादिस्मृतिरपि नाध्यापनं विधत्ते, नाप्याचार्यकं तत्फलत्वेनोपादत्ते ; अन्यतः प्राप्तविशिष्टाध्यापनानुवादेनाचार्यशब्दव्युत्पादनपरत्वात् उपाध्यायादिशब्दव्युत्पादनवत् ; न ह्यत्र तदतिरिक्ततात्पर्यक्लृप्तिहेतुः । न च आचार्यकमेकमन्यादृशम्, मानाभावात् । निमित्तान्तरादृष्ट्या तत्क्लृप्तिरिति चेन्न ; सनियमकोपनयनाध्यापनात्यन्तायोगव्यवच्छेदमेलकस्य निमित्तस्य दृष्टेः । अत एव उपनयनादेरुत्तरकालेऽप्युपाध्यायादिनयादाचार्यशब्दप्रयोगोपपत्तिः । पूर्वं त्वनागतावेक्षणस्य दुश्शकतया निमित्त[ा]ज्ञानसन्देहाभ्यामप्रयोगः । अपि च स्मृतेरत्र शब्दव्युत्पादनमात्रपरत्वे वृद्धव्यवहार एव मूलं दृष्टम् ; आचार्यकरणविध्यर्थत्वे तु अलौकिकार्थश्रुतिमूलत्वं कल्प्यम् ; क्लृप्तकल्प्ययोश्च विरोधे क्लृप्तमेव ग्राह्यम् । क्त्वादिश्रुतिश्चात्र * दर्शपूर्णमासाभ्यामिष्ट्वेत्यादिवदनङ्गत्वेऽपि सूत्रोक्तसमानकर्तृकत्वादिसाधर्म्यमात्रेणघटते ।

ननु समानकर्तृकत्वस्वारस्याद्बाधकाभावाच्चैकप्रयोगतयाऽङ्गाङ्गित्वसिद्धिः स्यात् ; तन्न ;

**क्त्वाश्रुतेः स्मृतिसंस्थत्वादनुवादतयाऽपि च । श्रुतिस्थं लिङ्गमेवात्र बलीयो ह्यविलम्बतः ॥ २५५ ॥**

ब्राह्मणमिति माणवकैकसंस्कारतया श्रुतमुपनयनं प्रयोज्यप्रयोजकव्यापारतयाऽध्ययनाध्यापनयोर्द्वयोः फलवतोः सन्निधावपि कर्मस्थतया अन्तरङ्गलिङ्गादुपनीतगताध्ययनाङ्गमेव ; अन्यार्थत्वे तु प्रणाड्या स्यात् । एवं श्रौतलिङ्गतोऽध्ययने विनियुक्तस्याध्यापनाङ्गत्वक्लृप्तौ विनियुक्तविनियोगविरोधः । न हि स्मृतिस्था क्त्वाश्रुतिः श्रौतं लिङ्गं बाधितुं क्षमा; स्मृतिः स्वमूलम्, अनूक्तिः पुरोक्तिमपेक्षत इति विलम्बद्वयेन प्रतिरोधात् ।

ननु * स्वरितेत्यादिविहितादात्मनेपदादुपनयनमुपनेतृगताध्यापनाङ्गं स्यात् । न स्यात्, सम्माननादिसूत्रविहितत्वात् । अकर्त्रभिप्रायार्थोऽयमारम्भ इति शाब्दाः । कर्तर्येव फलान्वयः कर्त्रभिप्रायत्वम्, अकर्त्रभिप्रायत्वं तु नियमाभाव इति चेन्न ; * आदधीतेत्यत्र स्वरितेत्यादिसूत्रोक्तात्मनेपदेऽपि फलस्योभयान्वयात् । न च क्रियाफलस्य चेतनद्वयेऽनन्वयस्तत् ; * जायापती अग्निमादधीयातामित्यत्रापि तद्दृष्टेः । कर्तृव्यतिरिक्तचेतनेऽनन्वयस्तदित्यपि निरस्तम् । प्रामाणिकदृष्ट्या सर्वेषु शास्त्रार्थेषु अकर्तर्याराध्ये प्रीतिरूपफलश्रुतेराधानादिष्वात्मनेपदलोपप्रसङ्गात्, * अभिचरन्यजेतेत्यादौ भ्रातृव्येऽपि तदुचितफलसंमतेश्च । * ऋत्विजो वृणीत इत्यत्र च वरणीयेष्वपि फलं सिद्धम् । अव्यवहितफलस्य क्रियाफलशब्देन विवक्षितत्वात्तस्य कर्त्रन्वयः कर्त्रभिप्रायत्वम् । सम्माननादिसूत्रं तु व्यवहितफलस्य कर्त्रन्वयार्थं स्यादित्येतदपि दत्तोत्तरम्, * आदधीत इत्यादावेव व्यभिचारात् । अस्ति हि अत्राग्निसंस्कारव्यवहितमाधातर्याहिताग्नित्वं फलम् । ननु आगामिनित्यकाम्यादियागोपजीव्यसंस्कृताग्निसिद्धिरेवाधातुः फलमिति न व्यवहित-

फलान्वयः। मैवम्; अत्राप्युपनयनसंस्कृताध्येतृसिद्धिरेवोपनेतुः फलमिति सम्माननादिसूत्रवैयर्थ्यप्रसङ्गात्। अव्यवहितफलस्य कर्त्रभिमतत्वानभिमतत्वाभ्यां सूत्रद्वयसाफल्यमिति चेन्न; आचार्यकार्थिनोऽप्युपनेतुरुपनेयसंस्कारानभिमत्ययोगात्। अतः कर्त्रन्वयसि[द्ध्यर्थ]द्धमेवात्रात्मनेपदम्। एवमध्यापयेदित्यनेनापि न फलस्य कर्तृगामित्वम्। तदेवं न विध्यन्तरप्रयुक्तमध्ययनम्।

विचारश्च किमध्ययनविधिना प्रयुज्यते, उत अध्यापनविधिना? न प्रथमः, विषयफलानुज्ञाया निरस्तत्वात्। न द्वितीयः, यावच्छ्रुतानतिक्रमणात्।

**स्वाध्यायं ग्राहयित्वा हि गुरुणाऽपि विरम्यताम्। दयादिप्रेरितत्वे तु प्रागप्येवमिति स्थितिः॥**
**अतो गुरुमते कृत्स्नमीमांसैव न सिध्यति। इति मत्वा विधूतं तत्प्रकृतस्थापनार्थिभिः॥ २५७॥**

**अध्ययनं च स्वाध्यायसंस्कारः; *स्वाध्यायोऽध्येतव्यः इति स्वाध्यायस्य कर्मत्वावगमात्।**

यद्यप्येवमक्षरग्रहणावधि शास्त्रान्तरावसरो निरुद्धः, तथाऽपि गृहीताक्षरस्यासौ स्यादिति शङ्कायामुत्तरत्रापि तन्निरोधार्थमध्ययनस्य नियोगविषयत्वपक्षप्रतिक्षेपेण प्राक्सूचितं स्वाध्यायसंस्कारत्वं व्यनक्ति— **अध्ययनम्** इति। चः शङ्कानिवृत्त्यर्थः; यद्वा भिन्नक्रमः, असकृदनूच्चारणत्वादिना सह संस्काररूपत्वस्य समुच्चयार्थः।

* संस्कारः पुंस एवेष्टो मन्त्रणप्रोक्षणादिभिरिति वदद्भिरध्ययनसंस्कारोऽपि कर्तुरेवेति स्वीकृतः। तेन विवक्षितासिद्धिरिति शङ्कां निवर्तयितुमाह— **स्वाध्याय** इति। उक्तं च **बृहट्टीकायाम्**— * संस्कारगणनायां च युक्तैवाक्षरसंस्क्रिया। स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते हि सः॥ इति।

**पुरुषातिशयाधानं प्रोक्षणाद्यैश्च ये विदुः। तेऽपि संस्कारकर्मत्वं तत्र तत्र न तत्यजुः॥ २५८॥**
**तत्तत्कर्मक्रियाजन्यः संस्कारः पुरुषाश्रयः। तत्तत्सहकृतं कार्यं करोतीत्यवधारणात्॥ २५९॥**

अत्राध्ययनस्य स्वाध्यायसंस्कारत्वे कर्मत्वं हेतुरिति न वैयधिकरण्यम्। अयं भावः—अत्र हि तव्यप्रत्ययस्यार्थान्तरं न घटते; ततश्च द्वितीयाश्रुतेस्तव्यादेर्वा कर्मार्थत्वे विशेषाभावात्कारकाणां क्रियार्थत्वेऽपि द्रव्यनिष्ठस्य भावार्थस्य द्रव्यार्थत्वादवहन्त्यादिनयोऽत्र युक्त इति। सिद्धं चावहन्त्यादेः तत्तद्द्रव्य[स्य]संस्कारत्वं भेदलक्षणे * तानि द्वैधं गुणप्रधानभूतानि इति। **स्वाध्यायस्य** इत्यनेन निर्वर्त्यत्वाद्यनुपपत्तिः सूचिता; न खल्वसौ निर्वर्त्यः, अनादिसिद्धक्रमत्वात्; यथापूर्वोच्चारणे वाक्यनिर्माणव्यवहाराभावाच्च। नापि विकार्यः, दुग्धदध्यादिवदन्यथाभावादृष्टेः। नापि प्राप्यत्वमात्ररूपः, उपयोगान्तरवत्त्वे तदयोगात्। अतः परिशेषसहकृतकर्मत्वावगतिः संस्कार्यत्वे हेतुरिति।

**संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च॥**

ननु कर्मत्वावगमेऽपि श्रुत्यादिभिरविनियुक्तस्याद्रव्यस्य स्वाध्यायस्य कथं संस्कार्यत्वमित्यत्राह—**संस्कार इति**। **हिः** प्रसिद्धौ। **नाम**शब्दः परसंमतिपर्यन्ते तत्प्रकर्षे। स्वाध्यायसंभावितभाव्युपयोगिसंस्काराभिप्रायेणात्र कार्यान्तर-

योग्यताकरणोक्तिः। यद्वा कस्यचित्सतोऽतिशयाधानं संस्कार इति लक्षणमत्र विवक्षितम्। ततश्च भूतोपयोगिन्यपि तदनुगुणोपयोगविवक्षया[अत्र]कार्यान्तरयोग्यताशब्दः कथंचिद्योज्यः। प्रहृता अपि परिधयः तेनैव रूपेण भूतोपकाररूपकार्यान्तरयोग्याः श्रूयन्ते। अयं भावः— न तावदविनियुक्तत्वादसंस्कार्यत्वम्; विनियोगाभावेऽप्युपयोगदृष्ट्यैव संस्कार्यत्वसंभवात्। अस्ति च * ऋग्वेदेन होता करोतीत्यादिभिः सामान्यतो विशेषतश्च विनियोगः। नाप्यद्रव्यत्वादसंस्कार्यत्वम्; यथोक्ताध्ययनगृहीतत्वे विरोधाभावात्। ग्रहणविषयत्वादेश्च गुणादावपि सर्वसम्मतेः। चोदितक्रियासाध्यस्येश्वरानुग्रहरूपस्यातिशयस्य स्वाध्यायाधारत्वाभावेऽप्यध्ययनप्राप्ततया आराध्यबुद्धिसंगृहीतेन तेनैव यथार्होत्तरक्रियायाः शास्त्रतो नियमान्नातिप्रसङ्गः। व्रीह्यादिष्वपि प्रोक्षणादिभिरतीन्द्रियातिशयो भवतु वा मा वा; उक्तन्यायः सार्वत्रिक इति। ननु, * सक्तून्जुहोति, * सुवर्णं भार्यमित्यादिषु निर्वर्त्यत्वादिरहितकर्मत्वावगमेऽपि भावार्थस्य न द्रव्यार्थता। तथा * स्वाध्यायोऽध्येतव्यः, * स्वाध्यायमधीयीतेत्यादिजपविधावपि कर्मत्वावगतिरविशिष्टा। अतस्तत्रानैकान्त्यम्; तत्रापि वा [अ]संस्कार्यत्वप्रसङ्ग इत्यत्राह— **संस्कार्यत्वम्** इति। अयं भावः— सक्त्वादीनां भूतभाव्युपयोगासंभवात्, जपादेश्च गृहीताक्षरविषयत्वावश्यंभावात्, अनेकसंस्कारक्लृप्तौ गौरवात्, जपादिसंस्कारसाध्योपयोगान्तरादर्शनात्, फलश्रवणाच्च तत्र संस्कारपरित्यागः; न त्विह तथा स्यात्, तथाऽपि अवगतकर्मत्वस्य निर्बाधत्वादिति। अत्रैव **न्यायसुदर्शनम्**— * आद्याध्ययनमिच्छामः संस्कारं कर्मतामितेः। स्वाध्यायस्योपयोगित्वात् फलाश्रवणतोऽपि च॥ जपादेरपि संस्कारकर्मतेष्येत चेत्तदा। आद्यन्तु सर्वस्वाध्यायानुपयोगादसंस्कृतिः॥ सर्वत्र कर्मताबाधः स्वाध्यायस्य प्रसज्यते। तेन संस्कार आद्यं स्यादपरे त्वर्थकर्मणि॥ आर्थवादिकमेवात्र फलं स्याद्रात्रिसत्रवत्॥ अत्रानीप्सितकर्मत्वं स्वाध्यायस्येष्यते बुधैः। आद्ये त्वीप्सितकर्मत्वं तदर्था च क्रिया मता॥ जपादेरपि संस्कारकर्मत्वे सर्वसंस्कारसंस्कार्यस्य स्वाध्यायस्यार्थावबोध एव भाव्युपयोगः स्यात्। तस्य च अनधिकृतकर्मभागे हुमादिषु च वैयर्थ्यात्सर्वाण्यध्ययनान्यर्थकर्माणि स्युः; तदा स्वाध्यायस्य कर्मताभङ्गः स्यात्; तस्मादाद्याध्ययनमेकमेव संस्कारः इति।

ननु अत्राप्युपयोगादर्शनादयुक्तिः सिद्धा; संस्कार्यत्वादेवोपयोगक्लृप्तावन्योन्याश्रयणात्। आहुश्च—* संस्कारविधिश्च न संस्कार्यं विनियुङ्क्ते; प्रमाणान्तरावसितोपयोगस्य संस्कारपर्यवसायी तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयतीति; तत्राह— **धर्मार्थ** इति। उपयोगादर्शनाद्धि सक्त्वादौ कर्मश्रुतिबाधः; स्वाध्यायस्य तु भाविदृष्टादृष्टविविधप्रयोजनदर्शनात्सक्त्वादिवन्नासंस्कार्यत्वं युक्तमिति भावः। अत्र पुरुषार्थचतुष्टयस्य वेदवेद्यत्ववचनं सर्वभागानुवृत्तप्रयोजनसामान्यदर्शनेन कृत्स्नस्य मीमांसितव्यत्वख्यापनार्थम्; बाह्यागमोक्तानां तेषामश्रद्धेयत्वार्थं च। अर्थकामतदुपायानां केषाञ्चिल्लोकसिद्धत्वेऽपि त्रैलोक्यविभवादिरूपयोरर्थकामयोस्तत्साधनानां च वेदवेद्यत्वं युक्तम्। लौकिकार्थकामयोरपि कारीर्यादिषूपायेषु शास्त्रव्यापारः सिद्धः। धर्मस्तु द्रव्याद्यात्मना प्रत्यक्षोऽपि धृतिसाधनत्वेन शास्त्रग्राह्यः। यथाहुः— * श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ इति।

मोक्षश्च नास्मदादिप्रत्यक्षः। आत्मा कदाचित्समस्तविशेषगुणशून्यः, अनित्यविशेषगुणवत्त्वाद्घटवदित्यादीनां तु विपक्षे बाधकाभावान्नानुमानत्वम्; मुक्तिपरशास्त्रोपजीवनेन विपक्षे बाधकोक्तौ च अनुमाननैष्फल्यम्। निरतिशयानन्दब्रह्मानुभवात्मनि तु मोक्षे हेतुप्रवृत्तेर्न प्रसङ्गः; तद्विपरीतसाधने त्वागमबाधः। अपि च, जीवः कदाचित्स-

मस्तविशेषगुणशून्यो न भवति; आत्मत्वादीश्वरवदित्यपि वक्तुं शक्यम्। अत्र अर्थस्येव धर्मस्यापि समीहितसाधनतया पुमर्थस्य सतो धर्मविशेषः साधनम्; अतः सोऽपि तत्साधनशब्दोक्तः। मन्त्रार्थवादयोरपि यथार्हं चतुर्वर्गबोधकत्वं तद्बोधकोपकारकत्वं च ग्राह्यम्।

**श्येनेषु वज्रप्रभृतिष्वपि नानर्थचोदना। इष्टस्यारातिभङ्गादेरुपायांशोपदेशतः॥ २६०॥**

**घोरोपायान्तरेभ्यश्च लभ्येतात्र निवारणम्। लघुनिष्कृतिनिस्तार्यं ह्यभिचारं प्रचक्षते॥ २६१॥**

**किं चानभिचरन्यट्सु पतेदित्यपि शिष्यते। तेन धर्मोपयुक्तत्वमाततायिवधे विदुः॥ २६२॥**

ननु अलौकिकपुरुषार्थादिबोधकत्वं स्मृत्यादावप्यस्ति, अतोऽन्यसाध्ये प्रयोजने किं वेदस्य संस्कारेण। अर्थबोधश्च हुमादौ नास्ति। पुरुषभेदेनानधिगताचिकीर्षितभागयोश्च सन्नप्यसावनुष्ठानपर्यन्तत्वाभावान्नोपयोगी स्यात्। तदिह स्वाध्यायस्यान्यलभ्योपयोगत्वादध्ययनस्य कृत्स्नस्वाध्यायसंस्कारत्वायोगादेकदेशसंस्कारस्याशाब्दत्वाच्च। * अध्येतव्यः इत्यस्य संस्कारविधित्वाभावे नियोगार्थत्वपक्ष एव प्राप्त इत्यत आह— **जपादिना** इति। आदिशब्देन धारणं गृह्यते। **स्वरूपेणापि**— न केवलमर्थज्ञानद्वारेणेत्यर्थः। यद्वा अध्यापनमादिशब्दग्राह्यम्। तदा स्वरूपेणापि— धृतस्वरूपमात्रेण चेति यावत्, * ऋग्वेदं धारयन्विप्रः इत्यादिस्मृतेः। अयं भावः— अध्ययनगृहीतस्वाध्यायसाध्यमेव ज्ञानं विधिभिरुपजीव्यम्; उपबृंहणानां तु न स्वातन्त्र्येण धर्मादिसाधनत्वम्; अस्ति च श्रुतिः। * वेदाभ्यासेन सततं सत्येन तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम्॥ इत्यादिप्रसिद्धमनन्यसाध्यं जपादिप्रयोजनम्। तेनैवानर्थकानधिकृताचिकीर्षितभागेष्वपि संस्कार्यत्वोपपत्तिः। जपविधिश्च निरर्थकोच्चारणविषयोऽपि स्वाध्यायस्यार्थपरतां न बाधते, सर्वविधिबाधेन स्वव्याघातप्रसक्तेरिति। न च उभयार्थत्वे विनियुक्तविनियोगविरोधः, एकेनैव रूपेणानेकार्थत्वाभावात्। तथा च **न्यायसुदर्शनम्**— * स्वरूपेण जपाद्यर्थः स्वशक्त्याऽर्थावबोधकः। रूपभेदाद्विरोधो न यथाग्नेर्दाहभासयोः॥ इति। तदिहाध्ययनसंस्कृताद्वेदादनन्तप्रयोजनसंभवे तद्विचारमन्तरेणान्यत्र शास्त्राभ्या[भा]से कः प्रयस्येदिति तात्पर्यम्।

**एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति।**

ननु एवं विदितोपयोगेनाध्येत्रा अर्थज्ञानमपि विधिफलतया स्वीकार्यम्; अविदितोपयोगेन तु अक्षरग्रहणमपि न फलत्वेन प्रतिपत्तुं शक्यम्; अतोऽनुष्ठानं प्रत्यव्यवहितोपयुक्तमर्थज्ञानमपि ग्रहणवदध्ययनविधेर्दृष्टं फलमस्त्विति शङ्कां प्रस्तुतोपसंहारव्याजेन प्रतिक्षिपति— **एवम्** इति। विधेयस्वरूपफलादिनिरूपणप्रकारेणेत्यर्थः। मन्त्रवत्त्वं नियमवत्त्वं च अनूच्चारणस्थं तत्फले गृहीतावुपचरितम्। **मन्त्राः**— काण्डव्रताद्यङ्गभूताः, अध्ययनदशाजप्याश्च * शं नो मित्रः इत्याद्याः। **नियमाः**— प्रागुक्ताः। * मन्त्रवदित्येतत् दृष्टान्तोक्तिरित्येके— यथा मन्त्रे चोद्यमानमध्ययनमक्षरग्रहणमात्रपर्यवसायीति स्वीक्रियते, तथेहापीति। अपरे तु— यथोपनयनदशोच्चारणीयेषूपनीतमात्रस्य समिदाधानादिमन्त्रेषु च, तथेहापीति वेदितव्यमिति। हुमादिवदित्यन्ये, विषहरणादिमन्त्रविशेषवदिति च। मात्रचा पर्यवसानशब्देन चाक्षरग्रहणात्पश्चात्पूर्वं च विधिविश्रान्तिर्निषिध्यते। अयं भावः— अध्ययनशब्दस्य न तावदर्थज्ञानवाचकत्वम्, अव्युत्पत्तेः, किञ्चिदधीत्य ब्राह्मण इत्यादौ च तस्यार्थपरत्वासंभवाच्च। विधिविषयमध्ययनं प्रत्यव्यवहितसाध्यमभिव्याप्त-

मवर्जनीयं च फलं दृश्यते। तदन्यस्यापि तत्फलत्वक्लृप्तौ गौरवं स्यात्, व्यवहितसाध्यस्यापि फलत्वक्लृप्तौ ज्ञानवत्तत्साध्यस्यानुष्ठानस्यापि तत्क्लृप्तिप्रसङ्गः। उत्तरविध्यव्यवहितापेक्षितत्वमपि ग्रहणज्ञानयोः समम्। यदि चार्थज्ञानं कर्मविषयतयाम्नातं, तदा तु अव्यापिनि व्यवहितेऽपि तस्मिन्संप्रत्ययः स्यात्, न त्वेतदस्ति। अतोऽर्थधिय उपयोगितयैव स्वीकार्या इति।

ननु समन्वयाधिकरणन्यायादर्थज्ञानस्यैव स्वतः प्रयोजनतया फलत्वक्लृप्तिर्युक्ता; मैवम्; निरतिशयानन्दब्रह्मप्रतिपादकभागमात्रे तदुक्तेः अत्र तु कृत्स्नाध्ययनफलविमर्शात् विरूपकल्प्ययोगाच्च। ननु 'वृद्धवाक्यानि शृणु' इत्यादौ वाक्यश्रवणविधेरर्थधीपर्यन्तत्वं लोकदृष्टमिति चेन्न, वृक्षादिवन्मार्गलक्षणभूतस्य कस्यचिद्वाक्यस्य श्रोतव्यत्वोपदेशे तात्पर्यात्तदभावस्यापि दृष्टेः। किं च क्वचिद्वाक्यश्रवणोपदेशस्यार्थपरत्वमगत्या; इह तु न तथा, यथाश्रुते बाधाभावात्। न च वाक्यश्रवणवत्तदनूच्चारणमर्थज्ञानार्थं युक्तम्। आहत्य स्वयंप्रयोगानुगुणाक्षरग्रहणार्थतैव लोके दृष्टा। ननु—* यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण इत्यादिश्रुतिभिः, * अविदित्वा ऋषिं छन्दः * यदधीतमविज्ञातमित्यादिभिः स्मृतिभिश्च विपर्यये दोषोक्त्याऽर्थज्ञानमवश्यसम्पाद्यत्वेन स्थापितम्; तदभावेऽध्ययनस्य नैष्फल्यं तत्सद्भावे सर्वपुरुषार्थावाप्तिश्चोच्यते—* स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते [स] नाकमेति ज्ञानविधूतपाप्मा॥ इति; तस्माद्वैधो वेदार्थविचारः। मैवम्; यथा रागप्राप्तस्य ऋतुगमनादेरकरणे दोषः, विधिवत्करणे सन्तत्यादिलाभश्च फलत्वेन स्मर्यते, एवमिहापि स्यात्। विधिवत्समाप्ताध्ययनानुवादेन चार्थज्ञानाभावे दोषं वदन्ति वाक्यानि नार्थधीपर्यन्तमध्ययनं विधातुं क्षमन्ते। * तस्मात् एतानि मन्त्रे मन्त्रे विद्यात् इत्येतत्तु प्रयोगकाले प्रतिमन्त्रं प्रज्ञातऋष्याद्यनुस्मरणपरम्। अत एव अविदितार्षेयत्वादिनिषेधश्च तावन्मात्रविषयः। अतः * यदधीतम् * स्थाणुरयम् * यश्च मीमांसतेऽध्वरम् इत्यादिभिरर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तम्यते। एतैश्च अर्थज्ञानस्यावश्यापेक्षितत्वेन विधावपि नाध्ययनविधेस्तत्पर्यन्तत्वं कल्प्यम्; नैरपेक्ष्यात्, अन्यतः प्राप्ते विधेरौदासीन्याच्च, तावत्पर्यन्तधावनेऽपि स्वतः पुरुषार्थापर्यवसानाच्च। यत्तु कैश्चित् प्रत्यवस्थीयते—अध्ययनविधेरर्थज्ञानपर्यन्तत्वात्, * आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत् इत्यादिभिः श्रुतिभिः, * अधीत्य स्नायात् इत्यादिभिः स्मृतिभिश्च आत्मरूपार्थज्ञानस्यापि कर्मार्थतया तत्कर्तृसंस्कारत्वेन विनियोगात् * द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, * सोऽन्वेष्टव्यः स विजिज्ञासितव्यः इति जिज्ञास्यतयोक्तस्यात्मनोऽवहन्तव्यव्रीहिवत्स्वरसावगतसंस्कार्यत्वाबाधेन कर्मशेषत्वसिद्ध्या * तत्त्वमसि * अयमात्मा ब्रह्म इत्यादिभिः कर्मवश्यस्यैव ब्रह्मत्वोक्तेः विश्वकर्तृत्वस्य च कर्मद्वारोपपत्तेः क्लृप्तकल्प्यविरोधे क्लृप्तगृहीतेर्न्याय्यत्वाज्जीवस्य कर्मसु कर्तृतया प्राप्तस्य तदर्थं संस्कारार्हत्वाच्च जीवपरे वेदान्ते सति तदतिरिक्तेश्वरविषयशास्त्रासम्भवात् कस्यैकशास्त्र्यं क्रमश्च कल्प्यत इति। तदपि अक्षरग्रहणमात्रपर्यवसानभाषणात्प्रत्युक्तम्। सूत्रकारोऽपि एतदेव चोद्यम् * तद्वतो विधानात् इत्यनूद्य * अध्ययनमात्रवतः इति परिहरिष्यति। अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि * अधीत्य, * अभिसमावृत्य इत्यादिभिर्नार्थज्ञानस्य कर्मशेषत्वेन विनियोगः; क्त्वाश्रुतेः समानकर्तृत्वादिमात्रे विश्रमात्। तथा विनियोगेऽपि कर्मानुष्ठानोपयुक्तार्थज्ञानादन्यदेवोपासनात्मकं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। उपास्यश्चात्मा जीवातिरिक्तः श्रुत्यैव सिद्धः, न तु कल्प्यः। जीवब्रह्मसामानाधिकरण्यं च अचिद्ब्रह्मसामानाधिकरण्यवदैक्यविरोधादन्यार्थम्।

तिष्ठतु च तथाविधज्ञानविधानम्, तथापि न विरोधः; कर्तुरिवाराध्यस्यापि कर्मार्थत्वेन विचार्यत्वात्तस्य च कर्मवश्यादन्यत्वेन श्रुतिसिद्धत्वात्तद्विचारार्थकाण्डान्तरादिसिद्धेः। यद्यपि अत्राप्यर्थज्ञानस्यानुष्ठानशेषत्वेऽपि यथांशं परब्रह्मोपासनशेषत्वमपि स्यादित्युत्तरं प्राप्तम्। तथापि अर्थज्ञानपर्यन्ततामूले चोद्ये प्रथमपर्वस्थोद्भटापराधोपेक्षायोगादन्वारुह्यवादमनादृत्य मूलच्छेद एवात्र कर्तव्य इत्यभिप्रायेण सूत्रभाष्ययोर्मात्रशब्दः।

**अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्, गृहीतात्स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः स्वयमेव प्रवर्तते। तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति।**

ननु अध्ययनविधावक्षरग्रहणपर्यवसितेऽन्यार्थतयैवाधीतस्य स्वाध्यायस्य प्रतीतोऽप्यर्थस्तात्पर्यविषयत्वायोगादविचार्यः; ततो निरर्थको वेदः; अध्ययनविधिश्च न पुरुषार्थपर्यन्तः, निर्विषयतया * अधीत्य स्नायात् इति स्मृतिनिरुद्धावसरतया च मीमांसापि नारभ्येत; कुतस्तदैक्यादि स्यात् इति शङ्कामपनुदन्नेकविषयतया वेदाख्यैकव्याख्येयव्याख्यानात्मकशास्त्रैक्यमपि दर्शयन्मीमांसारम्भसूत्रार्थं च सूचयति—**अध्ययन** इति। अत्र स्वाध्यायनिर्णयविचाररूपाधीतवेदशब्दैः मीमांसाया विषयफलस्वरूपाधिकार्यैक्यव्यञ्जनम्। * गृहीतस्य इत्यनेन विधिव्यापारस्य विश्रमोक्तिः। प्रयोजनवदर्थदर्शनोक्तिस्तु पुरुषार्थपर्यवसानज्ञापनार्था। **स्वभावत एव**—विधिव्यापारमनपेक्ष्येत्यर्थः; व्युत्पन्नपदपदार्थादेरिति शेषः। अयं भावः—

**ग्रहणार्थमुपात्तोऽपि स्वाध्यायो वह्निवत्स्वयम्। प्रकाशयति यत्तत्र स्वतो मानमबाधतः॥ २६३॥**
**जपाद[र्था]ध्ययनं श्रौततत्तत्फलसमन्वितम्। न रुन्धे शब्दसामर्थ्यं ग्रहणार्थं तु किं पुनः॥ २६४॥**
**विनियोगविशेषेण वेदेऽर्थपरतां क्षिपन्। विनियोगार्थधीबाधात् स्वव्याघातेन बाधितः॥ २६५॥**
**विवक्षितार्थैव न वा स्यादध्ययनचोदना। आद्ये व्याहतिरन्त्ये तु पूर्वपक्षस्य नोत्थितिः॥ २६६॥**
**अर्थज्ञानफलत्वेन मानत्वं चात्र दुर्भणम्। तत्फलत्वे हि तन्मानं तन्मानत्वे च तत्त्विति॥ २६७॥**
**स्वीकरोत्यर्थपरतां नियोगार्थोऽपि चेद्विधिः। संस्कारार्थोऽपि तद्वत्स्यात् स्वसिद्ध्यौत्सुक्यसामवत्॥**

**वेदः** निरपेक्षवेदकः; न तु पुंवाक्यवत् मू[ल]लीभूतमानान्तरमपेक्ष्येत्यर्थः। अत एव न मूलदोषविचारशङ्कया विचारस्तम्भनमिति भावः। प्रयोजनमत्र चतुर्वर्गः। तद्वन्तोऽर्थास्तदुपायाः कर्मोपासनारूपाः। **अवबोधित्वम्** इह निर्णयजननानुगुणत्वं दृष्टं दुरपह्नवम्। न च दृष्टे अनुपपन्नं नामेत्यभिप्रायेण **दर्शनात्** इत्युक्तम्।

स्वत एव बोधकत्वेऽपि साध्याभावान्न मीमांस्यमित्यत्राह—**गृहीतात्** इति। * अर्थानापाततोऽवगम्यमानान् **दृष्ट्वा** इति तत्कालविशेषणतयाऽन्वयः। आपातधीरेव **दृष्टा**; अतः संशयादिनिरासः साध्य इत्याशयः। पूर्वः प्रयोजन-

वदर्थशब्द: काकदन्तोक्तिव्यावृत्त्या श्रुतिप्रामाण्यार्थ: । उत्तरस्त्वापातधिय: स्वविषयविचाररागजननेन प्रेरकत्वज्ञापक: ।

**प्रतीतमप्रतीतं वा न मीमांस्येत किञ्चन । इति चोद्यमपि क्षिप्तमापातज्ञाततोक्तित: ॥ २६९ ॥**

ननु यदि शब्दस्वभावादापातधी:, तर्हि अव्युत्पन्नानामपि स्यात् ; न चात्र व्युत्पत्तिमतामेव तद्विधिरस्ति, [अत:]अङ्गेष्वप्यङ्गिवदक्षरग्रहणान्ते विधौ तदसंभवात् विध्यैक्यरूप्ये चाङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वे विशेषहेत्वभावात् । अत्र ब्रूम:—

**यस्य संस्कृतभाषैव बाल्यात्प्रभृति शीलिता । तदा तु तस्य सा तत्र स्यादापातमतिस्स्वयम् ॥ २७० ॥**
**निरङ्गाध्ययनेऽप्येवं साङ्गाधीतौ तु किं पुन: । वेदार्थापातधीवृद्धिमङ्गार्थापातधीर्दिशेत् ॥ २७१ ॥**
**हितैषिवाक्यजातां च केचिदापातसंविदम् । प्राप्नुवन्तो विचारे हि प्रवर्तन्ते मनीषिण: ॥ २७२ ॥**
**केचित्त्वङ्गयुपकारार्हरूपेणाङ्गाक्षरग्रहे । सार्थज्ञानत्वमाचख्युर्दृष्टार्थत्वं तु लब्धिति ॥ २७३ ॥**

अस्त्वेवमापातधी: ; तदरिक्तमपि ज्ञानं विद्यास्थानान्तरैरेव साध्यतामित्यत्रोत्तरम्—**तत्स्वरूपेत्यादि** । पूर्वपक्षोक्तात् व्यावृत्तरूपावधारणमिहान्यैरसाध्यं फलमिति भाव: । **वेदवाक्यविचाररूपेत्यनेन** विद्यास्थानान्तरव्यावृत्तमीमांसाशरीरव्यञ्जनम् । मीमांसाया विचाररूपत्वोक्तिस्तदभेदोपचारात् , विचारशब्दस्य करणव्युत्पत्त्या वा । विधिविषये कृत्यशेषं नास्तीत्यभिप्रायेणाधीतवेदत्वोक्ति: आपातधीमत्त्वादिति हेत्वभिप्राया च । **पुरुष** इति हेतुगर्भं प्रयोजनार्थित्वादिति । **स्वयमेव**—विधिनिरपेक्षस्वेच्छयेत्यर्थ: ।

**आपातस्त्वोपयुक्तार्थे भाते तन्निर्णयार्थिन: । तदुपाये प्रवृत्तस्य विधानं ह्यनपेक्षितम् ॥ २७४ ॥**
**स्वेष्टनिश्चयहेतुत्वमन्वयव्यतिरेकत: । सिद्धमेव विचारस्य तत्रापि ह्यफलो विधि: ॥ २७५ ॥**
**संप्रेक्ष्य निधिरत्नादींस्तद्यथार्थनिरूपणे । अपरप्रेरिता एव प्रवर्तन्ते तदर्थिन: ॥ २७६ ॥**
**अतो न विधिसिद्धोऽत्र विचारस्तत्क्रमोऽपि वा । अन्यथा दोषदृष्टैव द्वितीयस्योपपत्तित: ॥ २७७ ॥**

स्वयं प्रवृत्तावप्याचार्यनैरपेक्ष्यव्युदासाय श्रवणतदाश्रयणे प्रवृत्ति: । अकरणे तर्ह्यदोषस्स्यात् ; तन्न— तदधीननिश्चयतत्सापेक्षहितप्रवृत्त्यादीनामभावस्यैव दोषत्वात् । तदभिप्रायेण ह्येतदप्युच्यते—

* अधीत्य वेदान्साङ्गांस्तु यो विचारमुपेक्षते । स्वप्रयासं च विस्मृत्य प्रभ्रष्टस्स्यात्प्रयोजनात् ॥ इति ।

नन्वेवं विचारस्य अवैधत्वे * अधीत्य स्नायादित्यादिविधिनिरुद्धावसर: कथं मीमांसताम् ; दु:खात्मकगुरुकुलवासान्निवृत्ते: स्वत: प्राप्तत्वात् आनन्तर्यमेव ह्यत्र विधेयम् । मैवम् , सनियमकसमावृत्तियुक्तस्नानरूपसंस्कार एव ह्यत्र विधीयते, अन्यथा निवृत्त्यानन्तर्यस्यापि स्वत: प्राप्तत्वादविधेयत्वं स्यात् । किञ्च विचारस्य वैधत्वेऽपि कथमवसर: । श्रुत्या स्मृतेर्बाधादिति चेन्न; श्रुतावपि * अधीत्य, * अभिसमावृत्य इत्युक्ते: । तत्र समानकर्तृकत्वपूर्वकालत्वमात्रपरतयाऽऽनन्तर्ये तात्पर्यं नास्तीति चेत् , स्मृतावपि किं न तथा स्यात् । न च श्रुतावध्ययनशब्दोऽर्थज्ञानपर्यन्त:, । एव स्मृतावक्षरग्रहणपर्यन्त इति नियन्तुं शक्यम् । * यदधीतमित्यादिवत्स्यादिति चेन्न, विरोधाविरोधाभ्यां विशेषात् । अस्तु तर्हि श्रुतिस्मृत्योर्द्वयोरप्यर्थज्ञानपर्यन्ताध्ययनानुवाद:, तथा सति स्नानविधि: वैधस्य विचारस्यावसरं न विरुन्ध्यादिति चेत् ; तर्हि रागप्राप्तस्यापि स्वोपयुक्तद्रव्यार्जनादेरिव श्रवणस्यावसरं न विरुन्ध्यादेव ।

**ज्ञात्वाऽनुष्ठानमिच्छन्त: स्नानादिविधय: स्वत: । प्राचीमेव स्वविषयां मीमांसां परिगृह्णते ॥ २७८ ॥**

**किं चात्र मानभेदाङ्गक्रमकर्त्राद्यवेदिनः । न स्नानविधिमप्येकं यथावद्वेदितुं क्षमाः ॥ २७९ ॥**
**अगत्याऽध्ययनादौ प्रागविचार्य प्रवर्तते । स्नाने तु गतिसद्भावात् न स्यादगतिका गतिः ॥ २८० ॥**
**अनुज्ञातं च सर्वत्र न स्वाङ्गं व्यवधायकम् । अतो मीमांसया नात्र व्यवधानं विरोधकृत् ॥ २८१ ॥**

यद्वा अध्ययनस्नाननैरन्तर्येऽपि न विरोधः । अविचारितधर्माणामुत्तरानुष्ठानासिद्धिप्रसङ्गाद्विरोध इति चेन्न ; स्नातस्यापि यावद्विचारं हितकामैर्ब्रह्मचारिण इवानुष्ठापनोपपत्तेः । न च हितैषिवाक्यादनुष्ठानेऽपशूद्रनयविरोधः, तत्तदुचितधर्मेषु हितैषिभिः प्रवर्तनात् * न चास्योपदिशेद्धर्ममित्यादिनिषेधदृष्टेश्च । अन्यथाऽप्यनुष्ठानसिद्धौ मीमांसाश्रवणं निरर्थकं स्यादिति चेत्, तन्न— वैपरीत्यशङ्कायां मूलजिज्ञासया परनैरपेक्ष्यप्रवचनख्यात्यादिश्रद्धया च तदुपपत्तेः । एवमेव पूर्वेषामुत्तरेषामपीत्यविच्छेदसिद्धिः । कश्चिदालस्यात्पित्रादीनेव सर्वथा प्रमाणयेदिति चेत्, ततः किम्; अनलसैरन्यैश्शास्त्रश्रवणोपपत्तेः । स्नातस्य शृण्वतो गुर्वर्थव्यापारैः स्वधर्मोपरोधः स्यादिति चेत्, न ; अध्ययनविधिप्रयुक्तानां तेषां निवृत्तेः । यथोक्तं **न्यायसुदर्शने**—

* अक्षरग्रहणोपायनियमार्थो ह्ययं विधिः । तद्ग्रहावधिका धर्मस्थितिरित्यब्रवीत् स्मृतिः ॥
अधीताद्वेदतः पश्चादर्थज्ञानं स्वतो भवेत् । तत्तु नाध्ययनं नापि धर्माणां च प्रयोजकम् ॥ इति ।

किमर्थं तर्हि मीमांसामाचार्यः श्रावयेत् ? लाभाद्यर्थं धर्मार्थं वा । गृहस्थधर्मोपरुद्धस्य कः श्रोतुमवसरः ? को वाचार्यस्य प्रवक्तुम् ? तस्य वृत्त्यर्थिनोऽस्ति द्रव्यार्जनकाल इति चेत्, तर्हि विध्यनुज्ञातदृष्टार्थप्रवृत्त्यन्तरवच्छ्रवणस्यापि स्यात् । इतिहासाद्यर्थतया च गृहिणोऽप्यस्ति कश्चिद्विचारकालः । तदा च वेदोपबृंहणैस्तैः स्वसाध्यानुगुणत्वेन मीमांसाऽप्युपादीयेत । वेदाभ्यासं चैवं विभजन्ते—

* वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ इति ।

कुलक्रमागतधनादेर्दैवादागतधनादेः कस्यचित् तदार्जनकालोऽप्यपेक्षितश्रवणस्य कालः । गृहस्थादयश्चाविचारितवर्णादिधर्मास्तत्तद्धर्मश्रोतारः श्रुतिस्मृतिषु दृश्यन्ते । गृहस्थस्याप्यतिशयितविद्यार्थं प्रत्यब्दं द्वौ द्वौ मासौ गुरुकुलवासश्च केनचिदनुज्ञातः । यथानूद्यते— * निवेशे वृत्ते संवत्सरे संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयश्श्रुतिमिच्छन्निति श्वेतकेतुः * एतेन ह्यहं योगेन भूयः पूर्वस्मात् कालाच्छ्रुतमकुर्वि इति । नन्वत्र * तच्छास्त्रैर्विप्रतिषिद्धम् - निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते अग्निहोत्रमतिथयः इत्यादिनाऽऽपस्तम्बः स्वमतमाह ; सत्यम् ; तेनापि तदा मासद्वयं निरन्तरगुरुकुलवासमात्रं निषिध्यते ; न तु प्रवक्तृवच्छ्रोतुरसिध्यन् विचारावसरः क्षिप्यते ।

अस्त्वध्ययनानन्तरं विचारः, स च रागतः कृत्स्नविषयश्च ; तथाऽपि

**अवैधत्वे विचारस्य क्रमस्य च यथारुचि । अप्रवृत्तेः प्रवृत्तेश्च प्राप्तौ तत्रेति भाष्यते ॥ २८२ ॥**
**दुस्त्यजत्वाद्विचारस्य यौगपद्यविरोधतः । व्युत्क्रमे दोषदृष्ट्या च क्रमस्सौत्रो ह्यसाविति ॥ २८३ ॥**

**तत्र** वेदे मीमांसायां वा ; स्वेच्छातः प्रवृत्तौ सत्यामिति वाऽर्थः । कर्मविधिरिह काम्यकर्मचोदना काम्यानुष्ठानं वा ; अविशेषाद्वा नित्यादेरपि संग्रहः । स्वरूपशब्देन त्यक्तफलस्य परविद्याङ्गविनियोगो न चिन्तित इति सूच्यते । न हि साधनलक्षणे शोध्यः ; तन्निरूपणे हि अनन्तस्थिरफलपर्यन्तत्वं बुध्येत । यद्वा केवलकर्मणामल्पास्थिरफलत्वस्य क्वचिदमीमांसितत्वेऽपीति भावः । **निरूपिते** इत्यनेन कर्मनिरूपणस्य वृत्तत्वावश्यंभावोऽभिप्रेतः । प्रपञ्चितं चैतत्तात्पर्य-

तूलिकायाम्—

* तत्रेदं नियतं कर्म नैव शक्यमुपेक्षितुम् । तद्धि सर्वास्ववस्थासु पुमांसमनुवर्तते ॥
बुभुक्षुर्वा मुमुक्षुर्वा यो यो गृह्येत पूरुषः । तस्य सर्वस्य बहुना कर्मणानुगमोऽस्ति हि ॥
नित्यं नैमित्तिकं कर्म प्रतिषिद्धं च सर्वदा । सर्वैरपि परीक्ष्यं हि प्रत्यवायजिहासया ॥
न ये बिभ्यति दुःखेभ्यस्ते मा कार्षुर्विचारणाम् । इतरेषामियत्कर्म विचार्यमिति तु स्फुटम् ॥
काम्यं तु कर्म भोगाय विनापि ब्रह्मणा क्षमम् । न कर्मणा विना ब्रह्म मोक्षसामर्थ्यमश्नुते ॥
सर्वापेक्षा च यज्ञादिश्रुतेरिति हि वक्ष्यते । वेदैकदेशचिन्तापि प्रोक्ता कृत्स्नप्रयोजिका ॥
तस्मादवश्यचिन्त्यत्वे कर्मैवाग्रे विचार्यते ॥ इति ।

**कर्मणामल्पास्थिरफलत्वं दृष्ट्वा**— तत्तद्वाक्यैरेवार्थतो विशदं निश्चित्येत्यर्थः । ज्योतिष्टोमाग्निहोत्रादिस्वरूप-निरूपणे हि यथोपायं गुरुलघुस्वर्गभेदक्लृप्तिस्स्यात् । * ज्योतिष्टोमोऽग्निष्टोम इत्यनेन ज्योतिष्टोमस्याग्निष्टोमरूपत्वे निश्चिते च तत्साध्यस्य स्वर्गस्य * यावदग्निष्टोमेनोपाप्नोतीत्यादिना देशकालादिपरिच्छेदनिश्चयः । तत्रावृत्तिविधिरप्यना-वृत्तस्य फलाल्पत्वे लिङ्गम् । नित्यकर्मणामपि कस्मिंश्चिदधिकारिणि * प्राजापत्यं ब्राह्मणानामित्यादिभिर्वर्णाश्रमभेदेन फलतारतम्यं स्मर्यते । वैश्वदेववरुणप्रघासादीनां चातुर्मास्यानां स्वरूपेऽवगते हि * एषा वै वैश्वदेवस्य मात्रा, एतद्वा एतेषामवमम्, अतोऽतो वा उत्तराणि श्रेयांसि भवन्तीति वैश्वदेवादेर्मितफलत्वदर्शनात्, * अक्षय्यं ह वै चातु-र्मास्ययाजिनस्सुकृतमित्यत्र चिरोपभोग्यत्वमात्रे तात्पर्यग्रहः । यद्यप्यक्षयफलत्वमिदं विद्याङ्गत्वेन परंपरया नेतुं शक्यम्, तथाऽप्यत्र तद्विवक्षाविरहान्न तथा नीयते। एवं परिमितफलसोमहविष्कर्मस्वरूपनिश्चये सत्येव *अपाम सोममित्यादावमृ-तत्वस्य * आभूतसंप्लवं स्थानममृतत्वमित्यादिस्मृत्या नियमः । स्वर्गस्वाराज्यादिफलभेदसाधककर्मस्वरूपभेदसिद्धौ च तत्र स्वर्गशब्दोक्तस्याल्पत्वसिद्धिः । * यं यं क्रतुमधीत इत्यादिषु च फलतारतम्यक्लृप्तिः गुरुलघुकर्मस्वरूपनिश्च-यादेव । उत्पत्तिनाशवदाराध्यप्रीणनकर्मस्वरूपनिश्चयाच्च तत्साध्यस्य तत्सायुज्यादेरस्थिरत्वदृष्टिरिति ।

तदेवं निरस्तप्रतिबन्धब्रह्मविचारार्थस्य शारीरकस्य विद्यास्थानान्तरव्यावृत्तस्वरूपफलाभ्यां मीमांसैकदेशत्वव्यक्त्यर्थं निर्णेतव्यविशेषसिद्ध्यर्थं च पुनः * **अध्ययने**त्यादिकमुक्तम् । अत्रामृतत्वशब्देन लय्यन्तप्रधानवेद्यफलोक्तिः; तेना-र्वाचीनानामानुषङ्गिकाब्रवत्त्वादीनां सङ्गत्यन्तरघटितदृष्टिविध्यादिफलानां च व्यवच्छेदः । कर्मभागोक्तममृतत्वमापेक्षिकं साधितम् । इदं तु बाधादर्शनात् निर्णीतांशसंवादिवेदान्तैकदेशोपष्टम्भाच्च न प्राच्यवदिति प्रत्यायितप्रायमित्यभिप्रायेण ® अनन्तस्थिरफलापातप्रतीतेरित्युक्तम् । न ह्यत्र फलत्वाद्यनुमानैः अल्पास्थिरत्वादिक्लृप्तिः शक्या, अतिप्रसङ्गादिति। अनवच्छेदादिह सर्वशरीरः शारीरः, तमधिकृत्य प्रवृत्तं शास्त्रं **शारीरकम्** । वक्ष्यति हि आनन्दमयाधिकरणे— * स एव निरुपाधिकः शारीर आत्मा । अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयत इति। सैव मीमांसेति शारीकमीमांसा; तस्याम् । **अधिकरोति** स्वार्थबुद्ध्या तत्रोद्युक्तो भवति, न तु पूर्ववृत्तान्तरादधि-करोतीत्यर्थः । ब्रह्मविचारानन्तर्ये युक्तिसिद्धे तद्विषयशास्त्रानन्तर्यमपि सिध्येदिति भावः ।

**ग्रहणं च फलत्वं च सार्थता च स्वतः श्रुतेः । रागात्कृत्स्नविचारश्चेत्यपूर्वमिह भाषितम् ॥ २८४ ॥**

**तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं**

दर्शयन्ति । * तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते । * अन्तवदेवास्य तद्भवति । * न ह्यध्रुवैः प्राप्यते । * प्लवा ह्येते अदृढा यज्ञरूपाः । * परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । * ब्रह्मविदाप्नोति परम् , * न पुनर्मृत्यवे तदेकं पश्यति * न पश्यो मृत्युं पश्यति, * स स्वराड् भवति, * तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते, * पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति इत्यादीनि ।

ननु कर्मफलाल्पत्वादौ लिङ्गमात्रं दृष्टम्; यथाश्रुतविरुद्धप्रत्ययदार्ढ्याय प्राप्तिरपि वक्तव्या, कर्मस्वरूपनिरूपणं चात्र स्वयंप्रवृत्तेः प्रतिबन्धशान्त्यर्थम्; हेतुस्त्वनन्तस्थिरफलापातप्रतीतिरेव, सा कुतस्त्येत्राह— **तथा** इति । उक्तप्रकारेणास्य सूत्रस्याप्यैदमर्थ्यं यथा स्यात्तथेत्यर्थः । **च**: अवधारणे । अत्र क्षयित्वोक्तिरक्षयित्वोक्तिश्चाल्पत्वादेरुपलक्षिका । निश्चितसंवादेनानिश्चितेऽर्थान्तरेऽपि श्रद्धासंवृद्ध्यै पूर्वं * तद्यथेत्यादिवाक्योदाहृतिः । **लोको** लोक्यः, भोग्यः । देशपरत्वे त्विहामुत्रेत्याभ्यामनन्वयः । **कर्मचितः** लौकिककर्मलब्धः । **पुण्यचित** इत्यविशेषोक्त्या निवृत्तिधर्मसाध्यस्यापि क्षयित्वभ्रमं निवारयितुमाह — **अन्तवत्** इति । उपात्तवाक्यैकार्थ्यात् क्रियास्वरूपान्तवत्त्वस्यानपेक्षितवचनत्वाच्च फलद्वाराऽत्रान्तवत्त्वोक्तिः । * यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणीति पूर्ववाक्यात् * यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण इत्युत्तरवाक्याच्च; अन्तवदित्यस्य ब्रह्मवेदनरहितकर्मविषयत्वसिद्धौ पुण्यचितः इत्यत्रोत्तरेषु च तद्विषयत्वं सुगमम् । ज्ञानरहितकर्मसु स्वर्गस्वाराज्यादिफलभेदवत् केषुचिन्नित्यफलभेदसंभवात् * सर्वेभ्यः कामेभ्यो ज्योतिष्टोम इति श्रवणाच्चात्रोपात्तं वाक्यं प्रायिकविषयं स्यादित्यत्राह— **न हीति** । **अध्रुवैः** अध्रुवफलसाधनतया चोदितैरित्यर्थः । * ध्रुवं तदिति वाक्यखण्डान्वयात् नित्यफलार्थत्वाभावः ख्याप्यते । पुनरावृत्तिनियमवतः सर्वकर्मनिर्मूलनत्वायोगेन ध्रुवफलसाधनत्वाभावं द्रढयति— **प्लवा** इति । **अदृढाः** तमसः पारं गमयितुमक्षमाः । * अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापि यन्ति । इति ह्यत्र वाक्यशेषः ।

अथ सूत्रार्थानुगुणं कर्मणां नित्यफलसाधनत्वाभावनिश्चयस्य निर्वेदहेतुत्वं ब्रह्मज्ञानस्यानन्तफलत्वं च समुच्चित्य वदद्वाक्यमाह— **परीक्ष्येति** । इयं श्रुतिः सारे व्याख्याता— * **ब्राह्मणः**—वेदाभ्यासरतः, **कर्मचितान्**—कर्मणा संपादितान्, **लोकान्** आराध्यक्षयित्वेन क्षयस्वभावान्, कर्ममीमांसया **परीक्ष्य, अकृतः**— नित्यः परमपुरुषः, **कृतेन**—कर्मणा नास्ति न संपद्यत इति यो **निर्वेदमायात्**, स **तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं**—वेदान्तवेदिनम्, **ब्रह्मनिष्ठं** साक्षात्कृतपरमपुरुषस्वरूपम् । स च गुरुः सम्यगुपसन्नाय **तस्मै, येन** विद्याविशेषेण तम-

**क्षरं सत्यं** परमपुरुषं विद्यात्, **तां ब्रह्मविद्याम् प्रोवाच**— प्रब्रूयादित्यर्थः। स गुरुमेवाभिगच्छेत् तस्मै स विद्वान् प्रोवाचेत्यनन्वयात्, अप्राप्तत्वाच्च। विधावपि लिटो विधानात्; * छन्दसि लुङ्लङ्लिट इति, इति। अत्र न्यायसिद्धानुवादांशे जातिवाचिनोऽपि ब्राह्मणशब्दस्य प्रकृतकर्मपरीक्षणौपयिकसाङ्गाध्येतृसमर्पणेनाजहल्लक्षणया त्रैवर्णिकविषयत्वार्थं * वेदाभ्यासरतः इत्युक्तम्। ब्रह्म अणतीत्यपि ब्राह्मणशब्दं निर्ब्रुवन्ति। आराध्यक्षयित्वेनेति सुकृतविनाशोपलक्षणम्। कर्ममीमांसयेत्यर्थलभ्योक्तिः। अकृतशब्दस्य पुंलिङ्गतानुरोधात् वाक्यशेषशक्त्या च परमपुरुषो विशेष्यो दर्शितः। अत्र नास्तिशब्देनाकृतस्य स्वरूपनिषेधायोगात् कर्मणा इत्यनेन चानन्वयात् उत्पत्तिनिषेधस्यानपेक्षितत्वात् न संपद्यत इत्युक्तम्। कृतशब्दस्य भावार्थव्यक्त्यै कर्मणेति प्रतिपदम्। तद्विज्ञानार्थम्—आपातधीस्थस्याकृतस्य तस्य विशदबोधायेत्यर्थः। समित्पाणित्वमिह ब्रह्मविद्याश्रवणार्थोपनयनानन्तरव्यञ्जनार्थमिति केचित्। उक्तं हि छान्दोग्ये जाबालं प्रति गौतमेन— * नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वानेष्य इति। अन्ये त्वाहुः— अनुपनीते जाबाले युक्तमुपनयनम्; अन्यत्र तु समित्पाणित्वोक्तिररिक्तपाणित्वोपलक्षणार्था; दृश्यते हि वैश्वानरविद्यायाम्— * ते ह समित्पाणयः पूर्वाह्णे च प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच इति। प्रजापतिवाक्ये च एकस्यैवेन्द्रस्य बहुषु प्रश्नेषु * समित्पाणिः पुनरेयायेत्यावर्त्यते। न हि तत्र बहुवारमुपनयनं दृष्टमिष्टं वा। सूत्रकारश्च * संस्कारपरामर्शादित्येतावन्मात्रं वक्ष्यतीति। * एकां शाखामधीत्य श्रोत्रिय इत्युक्तस्याधीतस्वाध्यायमात्रस्य प्रकृतानुपकारकतया * वेदान्तवेदिनमिति श्रोत्रियशब्दस्यात्राकामहतश्रोत्रियपरत्वं दर्शितम्। स्फुटप्रवचनक्षमत्वमदृष्टत उपकारकतमत्वं च ब्रह्मनिष्ठशब्दाभिप्रेतमित्याह— * साक्षात्कृतपरमपुरुषस्वरूपमिति। * प्रशान्तचित्तायेत्युक्तत्वाच्छमोऽत्र बाह्यकरणव्यापारान्तरनिवृत्तिः। शमदमाविह श्रवणौपयिकावधानार्थौ। * तस्मादेवंविच्छान्तो दान्त इत्यादौ तु श्रवणतो विदितार्थस्य विद्यार्थौ। येनेत्यत्र लिङ्गव्यत्ययस्य क्लिष्टत्वात्सामान्योपक्रमत्वं द्योतयति— * विद्याविशेषणेति। तथा च प्रयुञ्जते * तत्र बाधकमभवत् क्षणभङ्गो वा बाह्यार्थभङ्गो वा इत्यादि। स्वरूपतः स्वभावतश्च विकारं निवर्तयद्भ्यामक्षरसत्यपदाभ्यां प्रधानक्षेत्रज्ञव्यवच्छेद इत्यभिप्रायेणाह— परमपुरुषमिति। संशयविपर्ययार्हवचनम्, अपूर्णवचनं च क्षेप्तुं तत्त्वतः इति विशेषणम्; * आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाण इति स्मरन्ति। वृत्तार्थकथनभ्रमनिरासायाह— *प्रब्रूयादिति। अभिगच्छेदित्युपक्रमप्रतीतविधिबाधेन व्यत्ययानुसरणं क्लिष्टम्; अतः प्रोवाचेत्यस्य भूतपरत्वेनानन्वय इत्यभिप्रायेणाह— स गुरुमेवेति। नियमविधित्वमवधारणेन व्यञ्जितम्। प्रोवाचेत्यस्य विधिपरत्वे हेत्वन्तरमाह— अप्राप्तत्वादिति। यद्यपि लाभाद्यपेक्षया कस्यचिद्रागतः प्रवृत्तिः; तथाऽपि तन्निरपेक्षस्य गुरोः सच्छिष्यविषये धर्मार्थमिदं विधीयत इति न विरोधः। लिटो लिङर्थत्वस्य विशेषतोऽनुशिष्टत्वमप्याह— विधावपीति।

ब्रह्मज्ञानस्य परशब्दनिर्दिष्टब्रह्मप्रापकतया प्राकरणिकनित्यनिरतिशयानन्दप्रापकत्वमभिप्रेत्याह— **ब्रह्मविदिति**। ब्रह्म प्राप्तस्यापि स्वर्गादिन्यायात् * इमान् लोकानित्यादिभिश्च पुनरावृत्त्यादिशङ्कां परिहर्तुमाह— **न पुनरिति**। मृत्युरिह मरणम्, * मोहो मृत्युस्संमतो यः कवीनामित्याद्युक्तं वा। पाप्मनां निश्शेषक्षये मृत्यूपलक्षितं सर्वमनिष्टं न स्यात्, लोकानुसरणं चैच्छमिति भावः। तदेकदर्शनमिहोपायः, फलं वा। * न प्रेत्य संज्ञास्तीति विद्याप्रकरणस्थवाक्येन मुक्तस्य ज्ञानलोपशङ्कां निवर्तयन् मृत्युतत्कार्यनिवृत्तिं च व्यनक्ति— **न पश्य** इति। मुक्तस्य तदातनपरदुःखप्राक्तनस्वदुःखदर्शनेऽपि तयोः स्वाश्रितत्ववर्तमानत्वाभावान्न तं प्रति प्रतिकूलत्वम्। एवं हि बन्धदशायामपि

दृष्टम्। तत्र तु परदुःखदुःखित्वं, गतानुशोचनं च कर्मोपाधिकमेव; * न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यती-त्यादिना विशेषेण दृश्यमानेष्वपि स्वप्रातिकूल्यदर्शनं नास्तीति हि स्थाप्यते। पश्योऽत्र * तदेकं पश्यतीति समान-प्रकरणात् ब्रह्मदर्शी जीवः। पश्यतीति व्युत्पत्त्या परमात्मन्यपि, * पश्यः पश्यति पश्यन्तमित्यादिप्रयोगदृष्टेः। ब्रह्मा-त्मकतया सर्वस्य दर्शनात्तदेकदर्शनसर्वदर्शनयोः न विरोधः। न केवलं निर्व्यापारसार्वज्ञ्यमात्रम्, * अन्यराजानस्ते क्षय्यलोका भवन्तीत्याम्नातकर्ममूलानीश्वरपारतन्त्र्यनिवृत्त्या स्वच्छन्दवृत्तिश्च स्यादित्यभिप्रेत्याह— स स्वराडिति। अत एवेश्वरपारतन्त्र्यस्थितावपि * स्वराट् स्वतन्त्र इति नैघण्टुकोक्तिर्न विरुध्यते। अमृतत्वस्योपायान्तरनिषेधश्रुत्या कर्मसाध्यामृतत्वोक्तेरन्यपरत्वं द्रढयति— तमेवमिति। अत्र च गुणविभूतिविशिष्टमहापुरुषपरामर्शाज्जीवस्यैव निर्वि-शेषस्वरूपधिया पुरुषान्तरधिया वा मुक्तिः स्यादिति परेष्टं निरस्तम्। ऐक्यभेदाभेदबुद्ध्योरमृतत्वहेतुत्वं श्रुत्यैव क्षिप्तमि-त्याह— **पृथगिति। ततः**—उपासनरूपात् पृथक्त्वमननादित्यर्थः। **तेन जुष्टः**—प्रेरकेण प्रीतिविषयीकृतः। अनेन स्थिरस्य परानुग्रहस्यैव फलद्वारतोक्तिः। * धातुः प्रसादादिति च श्रूयते। नन्वत्रात्मानं प्रेरितारं चेति समुच्चित्य-मननमुक्तम्; अतोऽन्यज्ञानस्यापि मोक्षहेतुत्वं भाति; सत्यम्, न तावता प्रेरकप्राधान्यमपह्नियते। *कश्चिद्धीरः प्रत्य-गात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्नित्यादावपि परविद्याङ्गजीवदर्शनपरम्। आदिशब्दः * भूयसां स्याद्बलीयस्त्व-मिति न्यायेन वाक्यान्तरैरप्युक्तदृढीकरणार्थः।

**ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ब्रह्मो-पासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुः ब्रह्मजिज्ञासायामेव प्रवर्त-ताम्। किमर्था धर्मविचारापेक्षा। एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्; आपातप्रतीतिर्विद्यत एव, तथाऽपि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नाति-वर्तते; अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्, तथैव धर्मविचा-रोऽपि कर्तव्य इति पश्यतु भवान्।**

अर्थैभिरेव वाक्यैरपेक्षितज्ञप्तिं यथारुचि विचारप्रवृत्तिसंभवं च मन्वानः कश्चिद्ब्रह्मविचारस्य कर्मविचारानपेक्षत्वं चोदयति— **नन्विति। चकार** उद्भूतैरपि प्रत्युक्तिव्यञ्जितैः पूर्वचोद्यैः समुच्चयार्थः। आद्य एवकारो विचारनैरपेक्ष्य-परः। द्वितीयस्तु ज्ञानानुत्पत्तिनिरासार्थः। **मुमुक्षुः**—प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिरित्याशयः। **किमर्था**—न दृष्टार्था, अन्यथाऽपि मुमुक्षुत्वस्य ब्रह्मविचारस्य च संभवात्। नाप्यदृष्टार्था, अवैधत्वादिति भावः। अत्र प्रतिबन्द्या प्रतिवक्ति— **एवं तर्हीति**। शीमांसतुष्टया त्यक्तकर्मविचारश्चेदित्यर्थः। एवं न प्रवर्ततामिति वाऽन्वयः। अपिशब्दा-भिप्रेतं हेतुं विवृणोति—**साङ्गेति**। त्वदुक्तादेवेत्यवधारणाभिप्रायः। **कृत्स्नस्य** ब्रह्मतदुपास्त्यादेः। अत्रापातधी-श्चेदिष्टप्रसङ्गः; न तया विचार्यत्वाभावः। निर्णयस्त्वमीमांसिते कथं स्यादिति मत्वा चोदकः पुनराह—**सत्यम्** इति। अङ्गीकृतमर्थं व्यनक्ति—**आपातेति**। तावताऽपि न्यायैरनिर्णीततया * अन्नमत्ति इत्यादिभिरल्पास्थिरफलधीर-

कृदव्याकृताकाशप्राणादिकारणत्वसंशयः, * तान्येवानुविनश्यति इत्यादिभिरात्मनाशभ्रमश्च न निवर्तेतेत्यभिप्रायेणाह—ग्नापि इति । अनिस्तीर्णा प्रतिबन्दिरिति पश्यन् तत्फलत्वेनोत्तरमाह—तथैवेति । भवान्—कचिदप्यापातधीमात्रातृप्तो वाक्यान्तराण्यपि निर्दिधारयिषुस्त्वमिति भावः । अत्र हि कर्मभागेऽपि * अनन्तं ह वा अपारमक्षय्यं लोकं यति, योऽग्निं नाचिकेतं चिनुते इत्यादिभिरापाततोऽनन्तस्थिरफलधीरस्ति । ब्रह्मज्ञानफलं चानुविनाशादिश्रुत्या आत्यन्तिकप्रलय[त्व]स्मृत्या चानर्थरूपमिव भाति । अतः स्वरसवृत्त्या प्रथमातिक्रमे कारणाभावात्कर्मविचारनैरपेक्ष्यहेतुर्नास्ति । दिदमभिप्रेत्योक्तं सारे—* अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वाद्वेदानां कर्मविचारः प्रथमं कर्तव्य इति * अथातो धर्मजिज्ञासा इत्युक्तमिति ।

## लघुपूर्वपक्षः ।

**ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः, अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः । कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि अत्रैव चिन्त्यन्ते, तदनधिगतकर्मणो न शक्यं कर्तुमिति चेत्; अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य । अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते ? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते । स तु न साक्षात्सङ्गतः । अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ।**

अथ विद्यापेक्षितमेव तत्त्वविवेकादिकं विचारापेक्षितमिति भ्राम्यन् कर्मणश्च विद्याविरुद्धतया तद्विचारवृत्तत्वायोगं मत्वानो गूढाभिप्रायः परश्चोदयति—**ननु** इति । **यदेवे**ति स्वाभिमतचतुष्कव्यतिरिक्तनैरपेक्ष्यपरम् । तस्य परंपरया उपयोगेऽपि विचारजन्मनि तन्नियमो नास्तीति व्यक्त्यै नियमशब्दः । नियतापेक्षितचतुष्कव्यतिरिक्तस्यापि न सूत्रसूच्यत्वमित्यभिप्रायेण **तदेवे**त्युक्तम् । तदिहानपेक्षितमेव त्वदुक्तमित्याह — **न धर्मे**ति । स्वेष्टमपेक्षितांशं सूचयितुमाह—**अधीतवेदान्तस्ये**ति । अवयुत्याध्ययने मानाभावेऽपि आपदि वेदान्तमात्राध्यायिन इत्यर्थः । तस्य हि न कर्मण्यापातधीः, नतरां बुभुत्सा, नतमां विचार इति नियमभङ्गः । यद्वा कृत्स्नाध्येतुरपि स्वापेक्षितांशस्याप्यधीततया सुकृतविशेषमृदितकषायतया च ब्रह्मविचारस्य शक्यत्वादधीतत्वमात्रेण हानार्थमपि न कर्मणश्चिन्त्यत्वमपीति भावः । एतेन * धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः इति ब्रह्माज्ञानवादिभाष्योक्तमनूदितं मन्तव्यम् । सिद्धान्तिसम्मतां प्रधानयुक्तिमप्रधानीकृत्य तत्तद्दृष्टिविधीनां साक्षाद्ब्रह्मविद्यापेक्षितत्वं प्रकल्प्य वा कर्मविचारवृत्तत्वं शङ्कते —**कर्मे**ति । **उद्गीथाद्युपासनानि** इति पक्षोक्तिः, अनधिगतकर्मणोऽशक्यचिन्तनत्वं साध्योऽर्थः, **कर्माङ्गाश्रयाणि** इति हेत्वंशपरम् । आश्रयशब्द इह विषयार्थः, प्रणयनाश्रयगोदोहनादिवदुद्गीथादिकमङ्गमाश्रित्य प्रविशत उपासनस्य फलान्त-

रार्थतया कर्मानङ्गत्वसूचनपरश्च । आदिशब्देन उद्गीथैकदेशभूतप्रणवस्य पञ्चविधसामादेश्च ग्रहणम् । **अत्रैव**—न तु कर्मकाण्डे चिन्तितानीति भावः । **अनधिगतकर्मण** इत्यनेन कर्मतदङ्गरूपपदार्थानवगमे वाक्यार्थस्य दुर्ग्रहत्वं सूच्यते । ननु * अव्युत्पन्नपदोपेतवाक्यार्थप्रत्यभिज्ञानमुपमानमिति कैश्चिदुक्तम् । अन्यैरनङ्गीकारात्तथा न । अथापि प्रकृताविरोधं ब्रूमः—न हि ते गोसदृशो गवयः इत्यादिवाक्ये गवयत्वादिविशिष्टः पिण्डः पदार्थतया अन्वेतीत्याहुः ; [किं तु] गोसादृश्यवान् गवयशब्दवाच्यः इत्येतावति तात्पर्यात् ; गवयशब्दादयस्तु पदेन बोधितास्तत्रान्वीयेरन् इति । ननु च आद्यव्युत्पत्तिदशायामविदितपदवाक्यभेदस्य वाक्यार्थधीरस्ति । ततः किम् ? तत्र हि प्रत्यक्षादिसिद्धे विशिष्टार्थेऽनुमानतो वाक्यस्य बोधकत्वग्रहः, न तु व्युत्पित्सोः तत्र वाक्यात् वाक्यार्थधीः । कर्मणि विचारिते तदन्तर्गतोद्गीथादिधीः, ततस्तद्विषयोपास्तिधीः स्यात् । न ह्यत्र कर्मानङ्गेषूद्गीथादिषूपास्तिर्विधीयते, गोदोहनादिवद्गुणफलाधिकारत्वादिति भावः । उक्तमशक्यत्वं दुष्परिहरं संछाद्य धाष्टर्यात् स्वकपोलकल्पितप्रकारेण समाधित्सुरुपालभते—**अनभिज्ञ** इति । शारीरकस्य खल्विदं शास्त्रम् ; अत आत्मविज्ञानप्रधानमिति भावः । * शरीरमेव शरीरकं, तत्र निवासी शारीरको जीवात्मा इति हि वाचस्पतिः । तद्विज्ञानप्राधान्यं विवृणोति—**अस्मिन्** इति । शुद्धस्य अविद्यान्वये हेत्वनुयोगमुपरोद्धुमनादिशब्दः । मतभेदादविद्यायाः स्वरूपतः प्रवाहतो वाऽनादित्वम् । प्रवाहपक्षेऽनवस्था बीजाङ्कुरादिनयनिरूढा इत्याकूतम् । **भेदः**— अहमिदं जानामि इति ज्ञात्रादिरूपः । स प्रत्येकमवान्तरभेदैर्विविधः । तस्य मिथ्यात्वं व्यङ्क्तुमविद्याकृतत्वोक्तिः ; तद्दर्शनं वा तत्कृतमित्युच्यते ; तदध्यस्तमित्यर्थः । **भेददर्शनं निमित्तं** येषामिति विग्रहः । निर्विकारस्य जन्मादिकमात्मभ्रान्तिविषयदेहधर्मारोपात् । **आदिशब्देन** निरयादिग्रहः । तैर्दुःखम् , सांख्यवन्मृषावादिनां तादृशोऽन्तःकरणविकारः । मिथ्यात्वेऽपि प्रतिकूलतया जिहासितव्यत्वाय जन्मादिषु वा दुःखत्वोक्तिः । तद्भ्रान्तिप्रवाहाविच्छेदव्यक्त्यै **सांसारिक**शब्दः । अनात्मभिरात्मानमेकीकृत्य पौनःपुन्येन [सं]सरणं हि संसारः । मोघप्रयत्नत्वपरो निमग्नत्वोपचारः, उन्मिमङ्क्षार्थश्च । मिथ्याज्ञानमिहात्मनि भेदग्रहः, अनिर्वाच्यरूपमज्ञानं वा । अज्ञानतत्प्रतिभासयोः तत्कार्यप्रतिभासप्रवाहस्य च मिथ्यार्थत्वात्तत्त्वधीमात्रेण बाध्यत्वे किमत्र कर्मणेति भावः । चन्द्रद्वित्वादिधीर्हि तदैक्यधीबाध्या । तद्वदिहेत्यभिप्रायेणात्मैकत्वविज्ञानत्वोक्तिः ।

**अशुद्धस्य प्रसिद्धत्वाच्छुद्धस्यावाच्यभावतः । अज्ञातं त्वं तदोरैक्यं ख्याप्यमित्यत्र मन्यते ॥ २८५ ॥**
**स्वाध्यायस्य हि कात्स्न्र्येन मानत्वे सत्यपि स्वतः । नावाद्ये नानुवाद्ये च नापवाद्ये च मानता ॥**

अविचारितबुद्ध्यादिव्युदासार्थो **विज्ञान**शब्दः । एवमिहाधिकारिप्रयोजनसाधनानि ज्ञापितानि । **प्रतिपिपादयिषितम्**—प्रदातुं प्रापयितुं वेष्टम् । शब्दजन्यज्ञानादेव ह्यपवर्गः । यद्वा आत्मैक्यज्ञानमवैधमपि मोक्षसाधनतया शारीरके प्रतिपाद्यम् । तस्य प्रधानतात्पर्यविषयत्वाय सम्प्रयोगः । ततः किं प्रकृतस्य ? तत्राह— **अस्येति** । हिशब्दोऽनुपयोगस्थैर्यार्थः । **भेदावलम्बी**ति विरोधपरम् । **कर्मज्ञानम्** इह विचाररूपं तत्फलरूपं वा । क्वेत्येतत् स्वरूपोत्पत्तौ कार्ये वेति विवरिष्यते । तच्च तत्साधनानुग्राहकस्याप्युपलक्षणम् । द्वैतवासनाहेतुतयाऽत्यन्तहेयत्वाय वैपरीत्यं प्रथयति—**प्रत्युते**ति । अंशतो वा, फलसङ्गादिगुणतो वा, निर्वैरत्वं दुर्वचमित्यभिप्रायेणाह— **विरुद्धमे**वेति । उक्तं च **नैष्कर्म्यसिद्धौ**—

* अयथावस्त्वविद्या स्याद्विद्या तस्या विरोधिनी । समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥ इति,

* तमोऽङ्गत्वं यथा भानोरग्नेः शीताङ्गता यथा। वारिणश्चोष्णता यद्वत् ज्ञानस्यैवं क्रियाङ्गता॥ इति च॥

यदि कर्म विरुद्धम्, तर्हि तदङ्गाश्रयोपासनचिन्ताऽप्यत्र विरुद्धत्वान्न सङ्गच्छेत; कर्मचिन्तायामेव तु निविशतामित्यत्राह— **उद्गीथादीति**। इहोद्गीथाद्युपासनं लक्ष्यते, तत्स्वरूपस्यात्र अमीमांस्यत्वात्। गुणफलसंबन्धमपह्नुत्य तद्विचारस्य कर्मशेषत्वोक्तिः, फलान्तरार्थत्वेऽपि न परविद्याङ्गत्वमिति च भावः। यद्वा शिष्यत इति **शेषः**। कर्मविचारैः परिशिष्ट इत्यर्थः। अत्र विचार्यमाणानाम् उद्गीथाद्युपासनानां ज्ञानरूपत्वं विवक्षितम्, न तु तद्विचारस्य, अतिप्रसङ्गात्। **इहैव**— विरुद्धशास्त्र एवेत्यर्थः। ननु साजात्याधीनप्रसक्त्याऽपि समुद्रध्यानवत् प्रधानस्यानुपयुक्तं विरुद्धं च न चिन्त्यम्। अतः परविद्याप्रकरणे पाठात् विचारणाच्चाश्रमादिवत् गत्यादिवच्च तदुपयुक्तत्वं कल्प्यमित्यत्राह— **स** इति। तुशब्दौ शङ्कानिवर्तकौ। यद्यपि साक्षात् प्रधानोपयुक्ततया वा न सङ्गतिः, तथाऽपि ज्ञानरूपत्वसाम्यात्तदन्वितस्य वीर्यवत्तरत्वोक्त्या चापरिच्छिन्नफलत्वशङ्कोदयमपाकृत्य धूमादिमार्गवजिहासादार्ढ्यमुत्पादयितुमिह तच्चिन्तेति भावः। तर्ह्यत्यन्तानुपयोगाभावात्तदुपयुक्तमपि पूर्ववृत्तमस्तु; तत्राह— **अत** इति। **यत्प्रधानम्**—यदुपपादनप्रधानम्। एवकारेण प्रासङ्गिकापेक्षितमपि प्रधानस्यानुपयुक्तं विरुद्धं च व्यावर्त्यते। प्रधानापेक्षितानुक्तिश्च न युक्ता। अप्रधानापेक्षितस्य च वृत्तत्वे वक्तव्ये दूष्यमतविचारादेरपि तथात्वप्रसङ्ग इति भावः। **किमपि**—त्वदुक्तात्कर्मविचाराद्विलक्षणम्।

**बाढम्— तदपेक्षितं च कर्मविज्ञानमेव; कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च— * सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्; अतस्तदेव पूर्ववृत्तम्।**

अत्र भास्करादिमतस्थो वा सिद्धान्ती वा सर्वावमर्शी पार्श्वस्थो वा परोक्तेस्तात्पर्यविषयांशानङ्गीकारेण प्रतिवक्ति— **बाढमिति**। भास्करोक्तमत्र हेतुग्रन्थतः, साध्यतश्च प्रत्यभिज्ञायते। अनङ्गीकृतमर्थं विशिंषन् अनिष्टं च क्षिपति— **तदिति**। एवकारोऽन्यनैरपेक्ष्यं प्रासङ्गिकापेक्षितस्यैव प्राधान्येनाप्यपेक्षितत्वं विरोधाभावं च व्यनक्ति। प्रधानोत्पत्त्यादावनुपयुक्तस्य विचारः कथं तद्विचारापेक्षित इत्यत्राह— **कर्मेति**। अयं भावः— अत्कमधुलाभशङ्कामतिक्रम्य यथाविधि कर्मसमुच्चिते ज्ञाने प्रवृत्तिः केवलकर्मणामनन्तफलसाधनत्वाभावनिश्चयपूर्विकेति। एतेन * अधीतवेदान्तस्येत्यादि प्रागुक्तं प्रत्युक्तम्। इह भास्करपक्षे * तमेतं वेदानुवचनेनेत्यादिः श्रुतिः। समुच्चितत्वं चात्र * सहयुक्तेऽप्रधान इति तृतीयाश्रुत्या गुणप्रधानतया संबन्धः। गुणत्वं च प्रयाजादिवत्। प्रकृतानुपयोगातिरोधानेन समुच्चयोक्तिः। यादवप्रकाशमते * सर्वापेक्षेति सूत्रमङ्गाङ्गिभावपरम्। * सहकारित्वेन चेति सूत्रं तु समुच्चयार्थम्। तत्र तु * विद्यां चाविद्यां चेत्यादिका श्रुतिः। समुच्चितत्वं तु विशदज्ञानोत्पत्तेः पूर्वं तदु[प]त्पादकतया कर्मणां ज्ञानाङ्गत्वेन, पश्चात्तु मृत्युतरणब्रह्मप्राप्तिरूपफलभेदात्समत्वेन। सिद्धान्ते तु सन्निपत्योपकारित्वविवक्षया समुच्चयशब्दः। स्वरूपेण कर्मणोऽपेक्षितत्वे सूत्रकृत्संमतिमप्याह— **वक्ष्यतीति**। न ह्यस्मिन्सूत्रे साध्यत्वेन विविदिषोपात्ता, येन तदर्थमपेक्षोक्तिः स्यात्; विद्या तु प्रकरणसिद्धा। अतः * विविदिषन्तीत्यत्र न विविदिषा विवक्षितेति भावः। चकारः क्वचिन्मते सिद्धान्ते च प्रतिपादकं समुच्चिनोति। मतान्तरे तु प्रतिपाद्यमप्रधानत्वं समत्वेन सह सङ्घटयति। अस्तु ज्ञानस्यानुष्ठाने यथामतं कर्मापेक्ष्यम्; तद्विचारे तु किं कर्मविचारेणेत्यत्र दत्तोत्तरत्वेऽपि युक्तिवैभवादुत्तरान्तरमाह— **अपेक्षिते चेति**।

यथानन्तं यथाधिकारमपेक्षितत्वम् । **केन समुच्चयः**—साधनलक्षणसमर्थयिष्यमाणस्वाधिकारानुगुणनित्यनैमित्तिकवर्गेण । **केन न**— निबन्धककाम्येन स्वाधिकारनिषिद्धेन चेत्यर्थः । अयं भावः—अनुष्ठानदशायां समुच्चेतव्यस्य तथा निर्णयाय विमर्शदशायामपि बुद्ध्यारोहः अवश्यंभावी । अतः पदार्थभूतकर्मविचारपूर्वकः तदन्वितविद्याविधिवाक्यार्थविचारः । ततश्च विषयविशेषावच्छिन्नब्रह्मोपासनचिन्तनस्य कर्मचिन्तासापेक्षतया कृत्स्नस्य शारीरकचतुरध्याय्यर्थविचारस्य कर्मविचारः प्राग्भावीति । तदिह कर्मनिरूपणस्य फलान्तरार्थकर्मपरिहारः फलं विद्यानुबन्धेन कर्मस्वरूपमात्रोपादानं चेति न मोघप्रवृत्तित्वम्, नापि विरोधः । यद्यपि विद्यापेक्षितो यज्ञादिपदार्थः साधनलक्षणे स्वयमिह सूत्रकृता चिन्तयितुं शक्यः; तथाऽपि कृत्स्नवेदार्थनिश्चायके मीमांसाशास्त्रे कामाधिकारस्यापि कचिच्चिन्त्यत्वादत्र प्राक् चिन्तिते कर्मस्वरूपे लाघवाद्विनियोगपृथक्त्वमात्रस्यापनं युक्तम् । तापत्रयपूर्ववृत्तत्वमतेऽपि विषमत्वेन समत्वेन च कर्मणः समुच्चेतव्यत्वार्थम् । ततः कर्मविचारपूर्ववृत्तत्वं दुस्त्यजमित्यभिप्रायेण मतचतुष्टयेऽपि फलितमाह—**अत** इति । कर्मपरामर्शी तच्छब्दस्तच्चिन्तनं लक्षयति; दूरस्थमपि कर्मविज्ञानं वा परामृशति । अवधारणं विरोधाभावद्योतकम् ।

**नैतद्युक्तम् — सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः । अविद्यानिवृत्तिरेव हि मोक्षः । वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत् । श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वम्, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति— * अन्तवदेवास्य तद्भवति * तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते * ब्रह्मविदाप्नोति परम्, * ब्रह्म वेद ब्रह्मैव भवति * तमेव विदित्वातिमृत्युमेतीत्याद्याः ।**

अत्रात्यन्तनैष्कर्म्यवादी प्रतिवक्ति—**नैतद्युक्त**मिति । श्रुतिप्रतीतमप्ययुक्तं त्याज्यम्; अन्यथाऽतिप्रसङ्गादिति भावः । कुत इत्यत्र समुच्चयवादिकल्पितं साधनद्वित्वं तावन्निरस्यति—**सकले**ति । भास्करसिद्धान्तिपक्षयोरिह संमतिद्वय ज्ञापनार्थं स्वकल्पितविकल्पकोटिनिष्कर्षणार्थं वा ब्रह्मेत्याद्युक्तम् । **विशेषाः**— भेदाः सजातीयविजातीयस्वगताः । स्वगतभेदो हि श्रुतोऽप्याविद्यैः उपासनविधिभिः कल्प्यत इत्यभिप्रायेण सकलशब्दः । **प्रत्यनीकत्वम्** इह शुक्त्यादिवदारोप्यात्यन्ताभावाश्रयत्वम्, तत्स्वरूपत्वं वा; स्वगोचरज्ञानेन स्वाध्यस्तनिवर्तकत्वं च ।

ईदृशस्य मानानर्हस्य शून्यत्वं परिहर्तुं चिच्छब्दः । चिद्रूपतया स्वप्रकाशस्य मानान्तरापेक्षया च द्वैतप्रसङ्गः । असद्व्यावृत्त्या च भ्रमाधिष्ठानत्वसिद्धिः । **मात्रचा** चिच्छब्दोत्थापितज्ञातृज्ञेयादिसंबन्धशङ्काव्युदासः । प्रत्यनीकत्वमप्यन्ततः कल्पितमनतिरिक्तं चेति च भावः । **ब्रह्मशब्देन** * ब्रह्म वेद इत्यादिसूचनम् । **विज्ञानात्**—श्रवणाद्यनुगृहीतवाक्यजन्यप्रत्यक्षात् । अवधारणेनाधिष्ठानयाथात्म्यज्ञानस्य असत्यनिवर्तने कर्मनैरपेक्ष्यं व्यज्यते । * तमेव विदित्वेत्यादिभिः प्रतिबन्धकमृत्युतरणस्यापि ज्ञानैकसाध्यत्वोक्तेः * अविद्यया मृत्युं तीर्त्वा इत्येतत्र मोक्षस्य कर्मसाध्य-

त्वार्थमिति । अत्राविद्यया मृत्युं प्राप्य स्थित इति तु योजना । साधनद्वित्वनिदानतयेष्टं साध्यद्वित्वमप्यत्र नास्तीत्याह — **अविद्यानिवृत्तिरिति** । **एवकारः** कण्ठचामीकरनयात् प्राप्तप्राप्तेरसाध्यत्वं व्यनक्ति । हिशब्दस्तु मुक्तेर्ज्ञानमात्रसाध्यतया श्रुतिस्मृतिसूत्रप्रसिद्धत्वं मोक्षशब्दस्वारस्यं च बोधयति । ज्ञानकार्ये कर्मणोऽनुपयोगं सर्वथा विरोधं च प्रागुक्तं विवृणोति— **वर्णेति** । आदिशब्देन निमित्तगुणादेर्वर्णाद्यवान्तरभेदस्य च संग्रहः । **अनन्तशब्दो** व्यक्त्यानन्त्यं, बाहुल्यं वा विवक्षति । **विकल्पो** भेदः तद्भ्रमो वा । भ्रमपक्षे तु **आस्पदशब्दो** विषयार्थः । निवृत्तेरात्यन्तिकत्वव्यक्त्यै **सकलशब्दः** । कारणनिवृत्तेः कार्यनिवृत्त्यभेदोपचारेण तद्रूपत्वोक्तिः, तन्निरूप्यत्वाद्वा । अविद्ययैव हि भेदधीः । अतस्तया तन्निवृत्त्या च तत्सदसद्भावौ निरूप्यौ । **कथमिव**— न कथंचित् । अत्यन्तासंभावितं कर्मणामविद्यानिवर्तकत्वम्, प्रत्युत तदनुवृत्त्या संसारप्रापकत्वमेव स्यादिति भावः ।

ननु कथं वचनविरुद्धे न्यायस्स्यात्, युक्तिविरोधाद्भीतस्य च ते श्रुतिविरोधापत्तिरित्यत्राह — **श्रुतय** इति । युक्तेरनुग्राह्यमप्यस्तीति चकाराभिप्रायः । स्वरूपतो विरुद्धत्वं यौक्तिकं प्रागुक्तम्, फलतस्तु श्रौतमिहोच्यते—अनित्यमेव हि कर्मफलम्, नित्यस्तु मोक्ष इति । **ज्ञानस्यैव** । न तु कर्मभिस्समुच्चितस्य, विकल्पितस्य अनुगृहीतस्य चेत्यर्थः, युक्त्यनुगुणस्यैवेति वा, **दर्शयन्तीत्युक्त्या** स्पष्टस्य तर्केणानुसन्धानमप्यधिकम्, अस्फुटार्थश्रुत्यन्तरं च दुर्बलमिति सूच्यते । * अविदित्वेत्यस्य वाक्यस्य मोक्षसाधनवित्तिरहितो हि कर्म करोतीति तात्पर्यं मत्वाह — **अन्तवत्** इति । बहूनां चिरकालानुष्ठितानामपि कर्मणामनित्यफलसाधनत्वमित्यवधारणाभिप्रायः । **तद्यथेत्यादौ** पुण्यशब्दो न सङ्कोचार्ह इत्याकूतम् । **ब्रह्मविदाप्नोति** इति वाक्येऽप्यवधिः, कर्मसमुच्चयश्च न श्रुत इति ज्ञानस्य नैरपेक्ष्यसिद्धिः । नन्वत्रापि वेद्यत्ववेदितृत्वप्राप्यत्वप्राप्तृत्वैर्भेदधीरस्तीत्यत्राह— **ब्रह्म वेद** इति । अनेन नित्यं ब्रह्मभूतस्य भ्रान्तिसिद्धाब्रह्मत्वनिवर्तके वाक्ये कर्मकर्तृव्यपदेशः काल्पनिक इति ख्याप्यते । न केवलं कर्मसमुच्चयस्याश्रुतत्वं, प्रतिबन्धनिवृत्तेर्ज्ञानमात्रनिवर्त्यत्वकण्ठोक्तेर्बाधश्चास्तीत्यभिप्रायेणाह— **तमेवेति** । वेद्यावधारणमप्यत्र वेदनस्य नैरपेक्ष्यमभिप्रैति । सनत्सुजातवाक्यान्मृत्युरिहाविद्या । आदिशब्देन * किमर्था वयं यक्ष्यामहे * न कर्मणा न प्रजयेत्यादिसंग्रहः ।

**एतास्सयुक्तिका बह्वयः स्फुटार्थाः प्रतिरुन्धते । अन्यामनुपपन्नार्थामव्यक्तविषयां श्रुतिम् ॥ २८७ ॥**

यदपि चेदमुक्तम्, यज्ञादिकर्मापेक्षा विद्येति । तत् वस्तुविरोधाच्छ्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ; ❀ विविदिषन्तीति श्रवणात् । विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह—❀ शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत् इति ।

विषमसमसमुच्चयद्वये सिद्धान्ते च श्रुतिसूत्राभ्यामुक्तमपेक्षितत्वमनुवक्ति— **यदिति** । अपिरत्र गर्हार्थः, यथाभिमानं पक्षत्रयपरिग्रहप्रयुक्तप्राधान्यपरो वा । चः प्रतिक्षिप्तश्रुत्यन्तरोक्तसमुच्चये । स्वेष्टश्रुत्यादेर्दुर्वारत्वात् अत्र तात्पर्यान्तरक्लृप्त्योत्तरमाह— **तदिति** । **यज्ञादिकर्मापेक्षा विद्येति** स्वरूपोत्पत्तौ फलोत्पत्तौ वा अपेक्षितत्वेन

यत्कर्मोक्तं तदित्यर्थः। उक्तिमात्रपरामर्शे तु न फलोत्पत्तौ कर्मोपयुज्यत इत्येवंप्रकारेण तत्परिहर्तव्यमिति योज्यम्। उक्तार्थगोचरश्रुतिसूत्रपरामर्शे तु * अविद्यया मृत्युं तीर्त्वेत्यादिवदर्थान्तरकल्पनानर्हमपीत्यपिशब्दार्थः। अध्याहारश्च प्राग्वत्। **वस्तुविरोधात्**— भेदवासनासंवर्धकतया अन्तवत्फलतया चाद्वैतज्ञानस्य तत्फलस्य च विरुद्धत्वादित्यर्थः। यद्वा द्वैताद्वैतवासनयोस्तत्फलभूतबन्धमोक्षयोश्च वस्तुनोर्मिथो मिथः प्रातिभट्यादिति। अधीतस्य सम्प्रत्ययस्य वैयर्थ्यमयुक्तमित्यभिप्रायेण **श्रुत्यक्षरपर्यालोचनयेत्युक्तम्। अन्तःकरणनैर्मल्यद्वारेणे**ति। इदं तावत् सिद्धान्तिनोऽप्यभिमतम्। तथोत्तरत्राप्युपयुज्यतामित्यत्राह— **न फले**ति। फलशब्द इह शास्त्रफलं ज्ञानं तत्साध्यमोक्षं च सामान्यतो ब्रूते। विद्याया अपि हि फलत्वं वदन्ति— * ब्रह्मावगतिर्हि पुरुषार्थः निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणादिति। वित्तिमोक्षयोः कर्मोपयोगे श्रुत्यक्षरविरोधं व्यनक्ति— **विविदिषन्ती**ति। न हि विदन्तीति श्रूयते, न चापवृज्यन्त इति। ननु यदि श्रुतत्वाद्विविदिषासाधनत्वम्, तर्हि * क्रियावानेष ब्रह्मविदां वरिष्ठः इत्यादिश्रुत्या विविदिषायाः पश्चात् वेदनसाधनत्वमपि स्यात्; तत्राह— **विविदिषाया**मिति। कर्मणां शमादीनां च विद्यार्थतया श्रुतत्वाविशेषेऽपि श्रुत्यैव व्यवहिताव्यवहितहेतुत्वेन व्यवस्थापनमित्यभिप्रायेण— **जाताया**मित्युक्तम्। **शमादीनामे**वेत्यवधारणेन तेषां कर्मनिवृत्तिरूपतया कर्मसमुच्चयानर्हत्वं व्यज्यते। उत्पत्तिशिष्टशमदमादिगुणावरोधे हि न कर्मणां ज्ञाने विनियोगश्शक्यः; किं पुनः विरुद्धगुणावरोधे; * क्रियावानित्यादि वाक्यं तु कर्मणां स्तावकं न विनियोजकम्। यद्वा * यज्ञेनेत्यादौ च वेदनसहयोगलक्षणतृतीयाक्लृप्तिर्न समीचीना। अतः कर्मणां वित्त्यर्थविनियोगासिद्धौ न तादर्थ्येन सत्त्वशुद्धिलक्षणद्वारक्लृप्तिः। विविदिषायां तु विनियोगात्तत्क्लृप्तिर्युक्तेति भावः। कर्मण इव शमादेर्न द्वारसापेक्षत्वमित्यभिप्रायेण **अन्तरङ्गोपायता**मित्युक्तिः। अतोऽपि शमादिभिः कर्मणः समुच्चयक्लृप्त्यनर्हतां श्रुतिरेवाह; न तु बहिष्ठयुक्त्या श्रुतेर्लिङ्गादिभिर्वा साध्यत इत्यर्थः। यद्वा श्रुत्या हि कर्मापेक्षत्वशङ्का, श्रुतिरेव तद्विरुद्धत्वं वक्ति; अविशिष्टं च श्रुतित्वमनयोः; युक्त्यनुग्रहात्तु बलीयस्त्वमस्याः। * विविदिषन्तीत्यत्र वेदनलक्षणा च पदान्तरविमर्शापेक्षिणी वाक्यकक्ष्यानिवेशाद्विप्रकृष्टा। श्रुतिस्तु प्रथमकक्ष्यायां स्थितेति भावः।

**समुच्चयवदेवात्र विकल्पोऽपि न कर्मणः। शमाद्यैरव्यवहितैरसाम्यादिति मन्यते** ॥ २८८ ॥

**भूत्वेति क्त्वाश्रुतेरेषां साक्षादङ्गत्वमीयते। हित्वा विविदिषादीनां कल्प्यमन्यत्तु कर्मणः** ॥ २८९ ॥

**दान्तः**—विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः। * मनसो दमनं दम इति दान्तिः स्मर्यते। * मनसो विजयश्शमः, विजितस्य तस्य तत्त्वविषयनियोगयोग्यता दम इति वाचस्पतिः। **उपरतः**—देहयात्रायामपि यदृच्छालाभसन्तुष्ट्या नातिप्रवृत्तः। **तितिक्षुः**—दुर्निवाराणि द्वन्द्वानीति शेषः। **समाहितः**—ब्रह्मण्येकाग्रधीः। **आत्मनि**—शरीरे। अवधारणमासक्त्यतिशयपरम्। * राहोश्शिरः इतिवद्वा भेदक्लृप्त्या * आत्मन्येवात्मानमित्युच्यते। न हि वस्तुतः स्वस्मादन्योऽन्यत्र वा मृग्य इति भावः। **पश्येदि**ति। अनेन प्रत्यक्षभ्रमस्य तादृशमेव बाधकमिति सूच्यते।

**तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम् ॐ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॐ सत्यं ज्ञानमनन्तं ब्रह्म**

* निष्कलं निष्क्रियं शान्तम् * अयमात्मा ब्रह्म * तत्वमसीत्यादिवाक्यज[न्य]न्म-ज्ञानादविद्या निवर्तते ।

यदि न कर्मणा धीः, केन तर्हि स्यात्; विद्योत्पत्तौ चानपेक्षितमपि कर्म * स खल्वेवं वर्तयन्नित्यादिश्रुतिबलाद्विद्यया विकल्पतः, समुच्चयतः, प्रधानतया, अनुग्राहकत्वेन वा मुक्तावपेक्ष्यतामित्यत्राह— तदिति । स्वरूपफलविरोधादित्यर्थः । एवम्— यज्ञादीनां तृतीयाश्रुत्या विविदिषायां विनियुक्तानां विद्यासाधनत्वासंभवप्रकारेणेति यावत् ।

जन्मान्तरशतेत्यादि क्वचित्तादृशसंभवे । अस्मिन् जन्मनि धर्माणामनाघ्राणाय भाषितम् ॥ २९० ॥

अतो विविदिषार्थत्वं नास्मिन् जन्मनि कर्मणः । विचारवृत्तता सूत्रे वक्तव्येत्यभिमन्यते ॥ २९१ ॥

ननु फलतो बन्धकं कर्म कथं विविदिषासाधनमपि स्यादित्यत्राह— अनभिसंहितफलेति ।

अनिष्टोऽपि भवेद्दण्डः प्रतिषिद्धेषु लोकवत् । काम्येषु तु फलं तत्तद्विनियोगानुसारतः ॥ २९२ ॥

चित्तशुद्ध्यादिव्यवच्छेदाय विशेषशब्दः * कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इत्यादिस्मृतिवाक्यं श्रौतविनियोगबाधाद्व्यवधानसहमित्यभिप्रायेणोक्तम्— मृदितकषायस्य विविदिषोत्पत्तौ सत्यामिति । कषायः— कल्मषम्, रागादिश्च । नात्र कर्मणामव्यवधानेन प्रमाजनकत्वम्, प्रमाणेष्वनन्तर्भावात् । अतो निर्विशेषब्रह्मात्मैक्यधीस्तत्त्वावेदकवाक्यजन्येत्यभिप्रायेण तादृशवाक्योपादानम् । तत्र कारणत्वेन लक्ष्यत्वाद्ब्रह्मणः प्रथमं कारणवाक्यमाह— सदेवेति । अवधारणाभ्याम् अद्वितीयपदेन च औचित्याद्विजातीयसजातीयस्वगतभेदनिरासः । षड्विधतात्पर्यलिङ्गोपेतसद्विद्याबलाद्गुणोक्तिमत्कारणवाक्यानि स्तुत्यादिपराणि वेति भावः । सद्विद्योक्तमीक्षणादिकमपि बाध्यमित्यभिप्रायेण शोधकैरपि निर्विशेषत्वमाह— सत्यमिति । अनृतजडपरिच्छिन्नत्वव्यावृत्तिरिहाभिप्रेता । सत्यादिवाक्यस्य व्यावृत्तिपरत्वव्यक्त्यै शाब्दं विशेषनिषेधमाह— निष्कलमिति । निरंशमिति यावत् । निष्क्रियम्— निस्पन्दम्, निर्व्यापारं वा । शान्तम्— वस्तुतः षड्भिः विकारैः ऊर्मिभिश्च त्यक्तम् । सर्वजीवोद्देशेन तद्व्यापकतया ब्रह्मैक्यविधिमाह— अयमिति । सद्विद्यायामप्याप्ततमेन पित्रा पुत्रं प्रति तात्पर्यभूम्ना तद्विधिं वक्ति— तत्त्वमिति । आदिशब्देन * आत्मा वा इदमेक एवाग्र आसीत्, * आनन्दो ब्रह्म, * यत्तदद्रेश्यमग्राह्यम्, * तद्योऽहं सोऽसावित्यादिग्रहः । वाक्यादेव जन्म यस्य तद्वाक्यजन्म, तस्मात् ज्ञानात्; प्रत्यक्षरूपादिति शेषः । तत एवाविद्या निवर्तते, राजत्वोपदेशेन व्याधत्वादिभ्रमनिवृत्तिवदिति भावः ।

ज्ञानादेवेति निर्धारः कर्मणो मुक्तिसाधने । समुच्चयविकल्पाङ्गप्रधानत्वापनुत्तये ॥ २९३ ॥

* स खल्वित्यादिकमन्यपरम् । ध्याननियोगजन्यज्ञानपक्षं तु दूषयिष्यति ।

वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम् । श्रवणादिभिः निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्या-

पेक्षितमेव पूर्ववृत्तं वक्तव्यम् । तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्र फलभोगविरागः, मुमुक्षुत्वं चेत्येतत् साधनचतुष्टयम्; अनेन विना जिज्ञासानुपपत्तेः । अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ।

नन्वदृष्टस्य सर्वकार्यहेतुतया कर्मणो वाक्यसहकारित्वादविधेयज्ञानान्मुक्तिरिति पक्षे श्रवणमननपूर्वकध्यानविधेः, त्रयाणां वा विधीनां वैयर्थ्यं च स्यादित्यत्राह— **वाक्यार्थ** इति । अदृष्टं हि दृष्टोपनायकम् । तत्सिद्धेः श्रवणादिभिः शमादिभिश्च वाक्यं चरितार्थम् । ततो विश्वबाधकज्ञानोत्पत्तौ दृष्टोपकारितया श्रवणादित्रयसाफल्यमित्याशयः। ननु नित्यनिर्विशेषस्वप्रकाशे शास्त्रवैयर्थ्यम्; * ब्रह्मविदित्यादिषु कर्मकर्त्रादिभेदोक्तिविरोधः; ऐक्यतत्त्वदर्शी च न शिष्यं पश्येत्; भेदभ्रमोपेतश्च कथं वाक्यं श्रावयेदित्यत्राह— **श्रवणमि**ति । अत्रेत्युपस्कार्यम् । **तत्त्वदर्शिन** इत्यपि स्वाभीष्टविशेषाभिप्रायम् । **प्रतिपादकानि**—प्रदायकानि, उत्पादकानीति वा । कर्ममीमांसा ह्यविद्वदर्थां कर्तव्यस्थापिका । ब्रह्ममीमांसा तु तत्त्वबोधोत्पादनेन सर्वकर्तव्यनिवर्तिकेति विशेषः । आपातधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय न्याययुक्तत्वोक्तिः । वस्तुतोऽत्र न्याययुक्तत्वं स्वरूपत एव ग्रहणमिति केचित् । भेदभ्रमनिवर्तकधीहेतुतया शास्त्रादेः सफलत्वम् । आविद्यभेदानुवादेन तन्निषेधे तात्पर्यादविरोधः । ऐक्यदर्शिनोऽपि बाधितानुवृत्तेराचार्यत्वाभिमानेन श्रावकत्वमिति भावः । न्याययुक्तग्रहणे किं पुनः मननेनेत्यत आह—**एवमि**ति । **स्वात्मनि**—स्वचित्ते; **हेतुतः प्रतिष्ठापनम्**—संशयादेरपुनरङ्कुरत्वाय युक्तिसंस्कारपटिम्ना दृढावस्थापनमित्यर्थः । ननु ताभ्यामेव विपरीतः विस्रम्भो निवर्तेत, अन्यथा तद्वैफल्यात्; किमत्र ध्यानेनेत्यत्राह— **एतदि**ति । एतदुपकृतवाक्यजन्याद्वैतसाक्षात्कारविरोधिनीनां भेदवासनानां निरासकतया ध्यानं सफलमिति भावः । श्रूयते च— * तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इति । स्यादेतत्— ध्यानपर्यन्तोपकारेण शास्त्रे कृतकृत्ये योगबलान्निवर्तकधीः । अन्यथा चक्रकं स्यादित्यत्राह— **श्रवणादिभिरि**ति । निवृत्ते हि प्रतिबन्धे हेतूनां यथावत्कार्यकरत्वम्, हेत्वन्तरान्वेषणे तु गौरवम्; अतो वाक्यत एव वैशद्यवती निवर्तकधीः; श्रवणात्पूर्वमिव श्रवणतोऽप्यविशदधीरेव; तदुपजीवनेन मननादिक्रमेण ज्ञानान्तरस्य साध्यत्वात्र चक्रकमिति भावः । **इति**र्हेतौ; एतेषु पर्वसु कथंचिदपि कर्मनैरपेक्ष्यादित्यर्थः । **एवंरूपस्य**— कर्मनिरपेक्षनिवर्तकज्ञानमूलकारणस्येति यावत् । साधारणानियतानुपयुक्तानां व्यावृत्त्यै **श्रवणस्यावश्यापेक्षितमि**ति पदत्रयम् । तादृशं त्वदिष्टं किमित्यत्र हार्दमुद्गिरति —**तदि**ति । * नास्त्यकृतः कृतेन, * शान्तो दान्तः, * येनाहं नामृता स्यां किमहं तेन कुर्याम्, * तं मा भगवान् शोकस्य पारं तारयत्वित्यादिभिरेतच्चतुष्टयसिद्धिः । अस्यावश्यापेक्षितत्वं कुतः? तत्राह— **अनेने**ति । अनित्यजिहासा, नित्योपादित्सा च तद्विवेकतः । तत्पूर्वको विचारस्तु स्वरूपफलयोः चित्तविक्षेपनिवर्तकशमाद्यपेक्षः । अन्यविरागश्च शमाद्यर्थः । एतेषां न कर्मविचारवद्व्यभिचारो व्यवधानं वा । एतदन्यतमवैकल्येऽपि त्याज्योपादेयजिहासोपादित्सयोरसिद्धेः उक्तप्रकारश्रवणं न सिध्येदिति भावः । कर्मविचारोऽपि विवेकोपयोगात् वृत्तत्वेन वक्तव्य इत्यत्राह— **अर्थे**ति । शमादेः कर्मनिवृत्तिरूपत्वम्, कर्मणोऽनुपयुक्तविरुद्धत्वे, तत्त्वज्ञानस्याध्यस्तनिवर्तनेऽन्यनिरपेक्षत्वं च अर्थस्वभावः । ज्ञानस्यैवापेक्षितत्वे, तत्साधनचतुष्कस्य वृत्तत्वे च यो हेतुस्तस्मादेवेत्याद्यवधारणम् । एवं वाक्यद्वयेन चतुष्कस्यायोगान्ययोगव्यवच्छेदावुक्तौ ।

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्य[स्य]ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणां नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्व[वि]वृद्ध्या भवतीति इममुपयोगमभिप्रेत्य ॐ ब्राह्मणा विविदिषन्तीत्युक्तमिति। अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्। इति लघुपूर्वपक्षः।

नन्वज्ञानादिप्रत्यनीकस्वमात्रप्रकाशे निर्विशेषे नित्यमुक्ते ब्रह्मणि कथमविद्यातिरोधानभेददर्शनबन्धतन्निवृत्तिनिवर्तकादीनां संभवः? कर्मकृतस्य बन्धस्य निष्कृतिनयात् कर्मविशेष एव निवर्तकः स्यात्। निवर्तकज्ञानं च * ततो ज्ञानं प्रवर्तत इति स्मरणात् कर्मसाध्यम्। कथं च बन्धकस्वभावस्य कर्मणः क्वचिन्मुमुक्षोपयोगः? अन्तःकरणस्य कुतः कीदृङ्मालिन्यम्? कुतश्च कीदृङ्नैर्मल्यम्? कर्मणश्च प्रमाणतन्त्रे ज्ञानं प्रतीव विषयानुकूल्यधीनिम्नां विविदिषां प्रत्यपि कारणत्वं न दृष्टम्। निवृत्तिधर्मस्य मोक्षहेतुत्वाभावे तद्वाक्यवैयर्थ्यप्रसङ्गः, इत्यादिशङ्काशङ्कूनुद्धरन् कण्ठोक्तमाभिप्रायिकं च संकलय्य दर्शयति— **एतदि**ति।

**प्रपञ्चितस्य संक्षेपः संक्षिप्तस्य प्रपञ्चनम्। एतदुक्तंभवतिना समाधिर्व्याकुलस्य च** ॥ २९४ ॥

आच्छादकत्वोक्त्या भावरूपत्वं सूच्यते। तत एव तदुपहितस्योपादानत्वसंभवः। अविद्यया मनागिव छन्नत्वाद्ब्रह्मण्यध्यासाद्युपपत्तिः। स्वप्नदृष्टपुरुषान्तरादिभेददर्शनसाम्यसूचनाय **अपारमार्थिक**शब्दः। **भेददर्शनमेवे**त्यत्र देहात्मैक्यबुद्धावपि कर्तृत्वभोक्तृत्वदेवत्वमनुष्यत्वादिभेददर्शनमन्तर्णीयते। तेन देहातिरिक्तत्वज्ञानमेवालं, किमकर्तृत्वादिविशेषितब्रह्मज्ञानेनेति च शङ्का निरस्ता। कर्मणोऽपि न स्वयं बन्धकत्वम्, दृष्टोपनायकसाधारणनिमित्तत्वात्। अतो भेदभ्रमसिद्धस्य कर्मणोऽप्यपारमार्थिकत्वात् भेदभ्रमद्वारेणैव बन्धकत्वाच्चात्र ज्ञानेतरनिवर्त्यं सत्यं किमपि न बन्धकमस्तीत्यवधारणाभिप्रायः। नन्वसत्यात्सत्यसिद्धिस्त्वन्मतेऽस्तीत्यत्राह— **बन्धश्चे**ति। बन्धस्य अबाधितत्वे हि सत्यत्वासत्यत्वशङ्का, ब्रह्मणो नित्यमुक्तत्वविरोधश्चेति भावः। निष्कृतिन्यायपरिहारायाह—**स चे**ति। सत्कर्मणा पापनिवृत्तिश्च भ्रान्तिसिद्धा। अतो मूलभूताविद्याप्रभृति बन्धपर्यन्तं कृत्स्नं मन्त्रनिरपेक्षरज्जुसर्पनयात् कर्मनिरपेक्षाद्वैतबुद्ध्यैव बाध्यमित्यभिप्रायेण **ज्ञानेनैवे**त्युक्तम्। मोक्षसाधनस्य कर्मसमुच्चयाभावेऽपि स्मृतिवशात्तदुत्पादकस्य स्यादित्यत्राह— **निवर्तकमि**ति। अयं भावः—विगीतं प्रमाणजन्यं निवर्तकज्ञानत्वात् अविगीतवत्; न कर्मजन्यमिति वा साध्यम्। स्मृतिस्त्वन्यपरा। परिशेषाद्वाक्यहेतुकत्वं स्वोक्तयुक्तिबलादिति। परोक्तः कर्मोपयोगः प्रमाणशून्य इत्यभिप्रायेणाह— **तस्यैतस्ये**ति। **तस्य**—अद्वैतगोचरस्य कर्मव्यतिरिक्तकरणतदनुग्राहकवतः। **एतस्य**—स्वविषयविरुद्धबाधे स्वयमेव समर्थस्य। अन्वयव्यतिरेकवतः कारणान्तरव्यपोहाय वाक्यजन्यत्वोक्तिः। * यज्ञेन विविदिषन्तीति श्रुतेर्यज्ञादीनां विनियोगपृथक्त्वेन पृथक्फलत्वोपपत्तिरिति ख्यापयति— **विविदिषायामि**ति। यथाश्रुतायामित्यवधारणाभिप्रायः। तत्राप्यव्यवहितहेतुत्वं तुशब्देन व्यावर्त्यते। असिना जिघांसतीत्यादिवत् क्लिष्टगतिर्बाधसिद्धौ। अथ मनोमालि-

न्यादिकं विवृणोति—स चेति । धर्मस्य पापनिवृत्त्यादि साध्यान्तरं विहितम् । श्रद्धायाः सत्त्वरूपसाध्यान्तरं च शास्त्रसिद्धम् । सत्त्वस्य ज्ञानसाधनत्वोक्तिश्च परंपरया स्यात् । पापमूलरजस्तमोविवृद्धिर्मनोमालिन्यम् । धर्मेण तद-पनुत्त्या सत्त्वशुद्धिर्नैर्मल्यम् ।

**कर्मभिः शुद्धचित्तस्य तत्त्वे स्यादनुकूलधीः । निर्णिनीषा ततस्तस्मिन् कर्मजैवं भवेदिति ॥**

अथ प्रथम इतिहेतौ ; सोपबृंहणश्रुतिविस्तारस्यानुगुणनिर्वाहादित्यर्थः । **इमम्**—विविदिषोत्पत्तावपि त्रिचतुरकक्ष्या-व्यवहितमिति यावत् । **अभिप्रेत्य**—शाब्दत्वाभावेऽपि श्रुत्यन्तरेण स्मृत्या च स्वीकृत्य । ईदृशोपयोगान्निवृत्तिधर्म-विधेश्च साफल्यमिति भावः । अत्रोपायशोधने वक्तव्यशेषं न किञ्चिदित्यभिप्रायेण निगमयति—**अत** इति । उपादातुं हातुं वा ज्ञानतद्विचाराभ्यां कर्मतद्विचारयोरनपेक्षणादित्यर्थः । अत्रायं संग्रहस्तू**लिकायाः**—

* विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् । ज्ञानमात्रस्य हेतु[त्वे]त्वश्रुतेः सामर्थ्यतोऽपि च ॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः । श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका ॥ इति ।

विरोधात्—स्वरूपतः फलतश्चेति शेषः । अप्रमाणत्वात्—कर्मणां ज्ञानतत्फलयोः साधनत्वे प्रमाणशून्य-त्वात् । यद्वा प्रमाणत्वाभावात् । सामर्थ्यतः—मिथ्याभूतबाधे ज्ञानस्यैव पर्याप्तत्वात् । धीकर्मसमुच्चयः—मत-त्रयोक्तप्रकारः । उन्निद्रत्वं प्रतिबन्धनिवृत्त्या पुष्कलत्वम् ।

## लघुसिद्धान्तः ।

**अत्रोच्यते—यदुक्तम्—अविद्यानिवृत्तिरेव मोक्षः ; सा च ब्रह्मविज्ञानादेव भव-तीति । तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् ; किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति । न तावत् वाक्यजन्यं ज्ञानम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः, तावन्मात्रेणा-विद्यानिवृत्त्यनुपलब्धेश्च ।**

**अवरोधविहीनत्वात् ख्यातत्वादुपपन्नवत् । पक्षेऽस्मिन् दूषणं वाच्यमत्रोच्यत इतीर्यते ॥ २९६ ॥**

इह तावत् साध्यसाधनद्वित्वनिरासं विरुद्धांशभङ्गाय * यदुक्तमित्यादिना सामान्यतोऽनुमन्यते । अविद्या-तन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकारविशेषतो विमतिरस्त्येव । स्वमते ह्यविद्यानिवृत्तिर्नाम स्वाभाविकधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः ; स च भावान्तररूपः ।

**प्रतिबन्धनिवृत्त्यंशोऽनिष्टभङ्ग इहोदितः । धीविकासः स्वतः सिध्यन्निष्टप्राप्तिर्विवेचकैः ॥ २९७ ॥**

अतो नावधारणविरोधः । ब्रह्मतद्विज्ञाने च परमार्थब्रह्माकारे । न वयं तद्विज्ञानस्य कारणत्वाभावं, कर्मसमु-च्चितत्वं, फले तत्सहकृतत्वं वाऽभ्युपगच्छाम इत्यभिप्रायेण **ब्रह्मविज्ञानादेवेत्युक्तम्** । अभ्युपगम्यते चेत् किं दूष्य-मित्यत्र निवर्तकज्ञानप्रकारे तावद्विगानमाह—**अविद्येति** । **विधित्सितम्**—स्वमते साधनतया चोदयितुमिष्टं, परमते तूत्पिपादयिषितम् । एवं तन्त्रोक्तं विभजते—**किंरूपमिति** । किं कर्मनिरपेक्षतया त्वदुक्तम्, उत कर्माङ्गतया

असदुक्तमित्यर्थः । **विवेचनीयम्**— अन्यतरकोटिनिरासेन कोट्यन्तरतया परिशोषणीयमिति यावत् । सङ्कलितं विविङ्क्ते—**किमिति** । वाक्यार्थगोचरस्मृतिरूपविधेयव्यावृत्त्यै **वाक्यादि**त्युक्तिः । इन्द्रियसंबन्धाद्वाक्यतः तत्स्वरूपधीः स्यात्, पुत्राद्यनुमा च; तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम् । ध्यानादिद्वारनैरपेक्ष्यं मात्रचोक्तम् । परस्य वाक्यार्थज्ञानं जीवपरयोरैक्यधीः; स्वस्य तु प्रकारप्रकारित्वबुद्धिः; अतः तन्मूलत्वोक्तिरविरुद्धा । मननादिव्यावृत्त्यर्थम् उपासनात्मकत्वोक्तिः । परेष्टं दूषयति—**न तावदि**ति । तिष्ठतु पक्षान्तरम्; इदं तु नैवेत्यर्थः । परकल्पितपश्चिमवाक्यार्थज्ञानस्यासंभवं वक्ष्यन् सर्वसंमतप्रथमवाक्यार्थज्ञानस्य उपायत्वे * द्रष्टव्य इत्यादिविधिवैयर्थ्यप्रसङ्गं विविदिषितपदसूचितमुद्घाटयति—**तस्ये**ति । विधेः शब्दजन्यज्ञाने निर्व्यापारत्वं परैरेवोक्तम्; * प्रमाण[ज]ज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्तुमकर्तुमन्यथाकर्तुं चाशक्यत्वादित्युक्तेरित्याशयः । **वाक्याद्**; स्वरूपपरवाक्यादिति यावत् । एवकारो विधिनैरपेक्ष्यं बाध्यवासनायाः प्रतिबन्धकत्वायोगं च व्यनक्ति । **सिद्धेः** उत्पत्तेः । न तावदिह वाक्यजन्यं ज्ञानं तत एव वाक्यात् बोध्यम्, संसर्गतया संसृष्टतया वा प्रवेशाभावात् । नापि * प्रज्ञां कुर्वीतेत्यादिवाक्यान्तरैः, सिद्धस्याविधेयत्वात् । साधनत्वेन बोधनं चानपेक्षितम्, अदृष्टार्थत्वानभ्युपगमात् कल्पितबाधे च सामर्थ्यतः साधनत्वावगतेः । अतो विधिवैयर्थ्यमित्याशयः । ननु विध्यनुसारित्वान्न [वैयर्थ्यं] विधित्वमिति चेत्; तथापि तादृशाम्नानवैयर्थ्यं दुरतिक्रमम् । विधिवैयर्थ्योक्तिः आ[प्राय]प्रयाणानुष्ठेयविधेयाकारवर्गवादिनां ब्रह्मनाडीनिष्क्रमणदेवयानगत्यादिवादिनां च शास्त्राणां वैयर्थ्यमप्युपलक्षयति ।

अत्र प्रत्यक्षविरोधमप्याह—**तावन्मात्रेणे**ति । न ह्युत्पन्नं ज्ञानमविद्यानिवर्तने अन्यदपेक्ष्य विलम्बेत, यतोऽनुपलब्धिरबाधिका स्यात् । सा च स्वपरयोः प्रत्यक्षानुमानसिद्धा । प्रत्यक्षविरुद्धं च न शास्त्रवेद्यम्; न च तादृशविज्ञानमात्रादविद्यानिवृत्तिः, अन्वयव्यतिरेकासिद्धेरिति भावः । अत्रैवमापस्तम्बेन शास्त्रविरोध उक्तः—* बुद्धे क्षेमप्रापणम्, तच्छास्त्रैर्विप्रतिषिद्धमिति । विरोषेण प्रतिषिद्धमित्यर्थः; न हि तुल्यबलविरोधोऽत्र घटते । प्रत्यक्षविरोधश्चोक्तः—* बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यातमिति ।

**न च वाच्यं भेदवासनायामनिरस्तायां वाक्यम् अविद्याया निवर्तकं ज्ञानं न जनयति; जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय, चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्; अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवतीति; सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् ।**

श्रुतिप्रत्यक्षविरोधयोर्द्विधोत्तरमनूद्य निषेधति—**न चे**ति । न्यायोपेतश्रवणे पश्चादिव प्रागपि कथं ज्ञानानुत्पत्तिः इत्यत्रोक्तम्—**भेदवासनायामि**ति । प्रतिबन्धकवासनानिरासे विधीनामुपयोगः । दिग्भ्रमादयो हि उपदेशलिङ्गाभ्यामनिवृत्ताः कदाचित् कुतश्चिद्वासनाविच्छेदे निव[र्ति]र्त्यन्ते; तद्वदिहेति भावः । दृश्यमानपरोक्षज्ञानव्यावृत्त्यर्थम् **अविद्याया निवर्तक**मित्युक्तम् । **न जनयती**त्यनेनाविद्यानिवृत्त्यनुपलब्धिविरोधोऽपि परिहृतः ।

अत्रैवमद्वैतसंप्रदायरहस्यम्—आपातिकं [तु] ज्ञानमविद्यां न निवर्तयति, अनिश्चयात्मकत्वात्। विचारजन्या तु धीः परोक्षाध्यवसायरूपभेदसत्यत्वभ्रमजनकमविद्यांशं निवर्तयति। तथाऽप्यपरोक्षानादिभेदभ्रमोपचिता तद्वासना तादृशं भ्रममाधत्ते। तदवष्टंभोऽविद्यांशस्तु अद्वैतसाक्षात्कारेण निवर्तते। निवृत्तेऽपि तस्मिन् प्रारब्धकार्यकर्मावष्टंभः कश्चिदविद्यांशोऽनुवर्तते; तां दशां जीवन्मुक्तिमाहुः। सोऽप्यंशोऽन्तिमाद्योगसंवेदनादात्मसंवेदनाद्वा निवर्तते। ईदृशाविद्यांशभेदाभिप्रायेण * इन्द्रो मायाभिः पुरुरूप ईयत इत्युच्यते। उक्तक्रमेण मायांशानां निवृत्तिमभिप्रेत्य * भूयश्चान्ते विश्वमायानिवृत्तिः * विमुक्तश्च विमुच्यत इति श्रुतिराहेति। तत्र द्वितीयांश इहाविद्याया इत्युक्तः। अथ परोक्षरूपस्यैव ज्ञानस्य निवर्तकत्वमन्वारुह्यापि प्रत्यक्षविरोधं परिहरति—**जातेऽपीति**। यद्वा सर्वविदां सनकादीनामनुत्पन्नसाक्षात्कारत्वमविद्यावत्त्वं च न युक्तम्; उत्पन्नसाक्षात्काराणां तु शिष्यादिप्रतिभासायोगादुपदेष्टृत्वादिकं न स्यात्। न हि परोक्षज्ञानमात्रवान् [अ]तत्रोपदेष्टा, * उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति विशेषणात्। अत उभयतस्पाशा रज्जुरित्यत्र तृतीयाविद्यांशस्थितिदशानुसारेण प्रतिवक्ति—**जातेऽपीति**। यस्यैकैव ब्रह्मविद्या, एक एव च जीवः; तस्यैकाविद्यानिवृत्तौ क्वापि जीवपदास्पदभेदभ्रमानुवृत्तिर्बन्धमुक्तिव्यवस्था च न स्यादिति चोद्यानुवादसूचनायान्तःकरणभेदोपाधिकाभिव्यक्तिविकल्पानुसारेण **सर्वस्येत्युक्तम्**। **सहसैवेत्येतन्निवृत्त्या** योज्यम्। अविद्यांशान्तरावष्टब्धप्रवृत्तफलकर्मावसाने हि सर्वभेद[धी]भ्रमनिवृत्तिरिति भावः। **न दोषाय**— अविद्यानिवृत्तौ भ्रमोऽपि निवर्तेत, अकारणकार्यायोगात्। अतो रागादिदृष्ट्या भ्रमानुवृत्तेरविद्याऽपि न निवृत्तेति ज्ञानस्य निवर्तकत्वाभावप्रसक्त्यै न स्यात्, बाधितस्याप्यनुवृत्तिसंभवादित्यभिप्रायः। स्वेष्टं लोकदृष्ट्या प्रत्याययति— **चन्द्रेति**। अङ्गुल्युपष्टंभादिमतः चन्द्रैकत्वे वाक्यतो ज्ञातेऽपीति भाव्यम्। इदं निदर्शनमन्वारुह्यवादे सुगमम्। अन्यत्र तु निवर्तकज्ञानस्य प्रत्यक्षत्वं निगु[गृ]ह्य नेतव्यम्; प्रत्यक्षतश्चन्द्रद्वित्वभ्रमे बाधिते पुनस्तदनुवृत्त्ययोगात्।

**यद्वा प्राच्यादुपष्टंभाद्भ्रमे प्रत्यक्षबाधिते। पुनरङ्गुल्युपष्टंभाद्भ्रमावृत्तिर्न दृश्यते ॥ २९८ ॥**

**अविद्याजनिता भ्रान्तिर्वाक्यजाध्यक्षबाधिता। युक्ता तदनुवृत्तिर्हि भूयस्संस्कारशेषतः ॥ २९९ ॥**

ननु तत्त्वदर्शनात्प्रागपि भेदज्ञानमेव बन्धमूलम्; पश्चादपि तदनुवृत्तौ रागाद्यनुवृत्त्या बन्धानिवृत्तिः स्यात्; न हि कारणनिवृत्त्या कार्यं सकार्याय घटते; मन्यसे चाविद्याशेषानुवृत्तिमित्यत्राह— **अनिवृत्तमिति**। अपिर्विरोधद्योतकः। मूलच्छेदात् खण्डितलतान्यायेन क्रमाद्विनश्येत्, न पुनः प्ररोहेत्। स्वविषयसत्यत्ववासनारूषितं हि भेदज्ञानं रागादिहेतुः, प्रतिमायोषिदादिषु तथाभावादित्यभिप्रायेण **छिन्नमूलत्वोक्तिः**। दग्धपटचक्रभ्रमादिन्यायोऽत्राभिप्रेतः। अत्र ज्ञानं न जनयतीत्युक्तं तावन्निरस्यति—**सत्यामिति**। व्युत्पन्नपदमाकाङ्क्षादिविमर्शोपेतं वाक्यमपेक्षणीयान्तररहितमित्यभिप्रायेण **सामग्रीशब्दः**; अन्यथाऽतिप्रसङ्ग इति भावः। नन्वप्रतिबन्धोऽपि सामग्रीति न्यायाद्भेदवासनैव स्वनिवृत्तिरूपकारणाभावात्मा सामग्रीवैकल्यं स्यात्। यद्वा पुष्कलाया अपि सामग्र्याः शक्त्यपहारेण प्रतिबन्धिकेत्यत्राह— **सत्यामपीति**। अयं भावः— यदि विपरीतवासनैव प्रतिबन्धः प्रतिबन्धिका वा स्यात्, तदा अनिरस्तसंस्कारे रज्जुसर्पादिभ्रमे कदाचिदपि बाधकधीर्नोदियात्; उदेति चासाविति प्रसङ्गतद्विपर्ययाभ्यां व्यतिरेकव्यभिचारदृष्टेः न विरुद्धवासनानिवृत्तिरत्र हेतुः। रज्जुसर्पवासनानुवृत्तावपि हि * नायं सर्पः इत्याप्तवाक्येन दण्डसङ्घट्टनादिनिरूपितेन निश्चेष्टत्वादिलिङ्गेन च परोक्षं बाधकज्ञानं जायते। चन्द्रभेदवासनानुस्यूतावपि अङ्गुल्युपष्टंभादि-

दोषापगमे चन्द्रैक्यप्रत्यक्षधीरपि भवति । न च वाक्यादपरोक्षबुद्ध्युत्पत्तौ विरुद्धवासनानिवृत्तिरपेक्षितेति वाच्यम्; अविशिष्टशक्तेर्वाक्यस्य परोक्षधीजननेऽपि तदपेक्षाप्रसङ्गात् । अभेदवासनया भेदवासनानिवृत्तिं वदतः चक्रकं च स्यात्— अभेदाध्यवसाये तद्भावना, तया भेदवासनानिवृत्तिः, तत एवाभेदाध्यवसाय इति । अध्यवसाये वासनानिवृत्तिरनपेक्षितेति चेत् साक्षात्कारेऽपि नापेक्ष्येत, अविशेषात् । दशमान्वेषिणश्च दशमाभाववासनास्थितावपि * दशमस्त्वमसीत्युपदेशेन प्रत्यक्षधीजननं च त्वयैवोक्तम् । * तत्त्वमसि * दशमस्त्वमसीत्यनयोर्वाक्ययोः अपरोक्षात्मविषयत्वं च समानं त्वमेवात्थेति ।

**सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् । ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात्कदाचिदपि नास्या वासनाया निवृत्तिः । वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तत इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानिवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते ।**

अथ प्रत्यक्षविरोधं परिजिहीर्षतो बाधितानुवृत्तेरसंभवमभिप्रेत्याह— **सत्यपीति** । **मात्रया—** न तु कार्त्स्न्येन; आत्मभेदसत्यत्वाध्यवसायादेर्निवृत्तत्वात्, बाह्येषु भेदधियः किंचिदिव स्थितत्वादिति भावः । **भवतेत्य**शक्यताहेतुगर्भम्; न हि ब्रह्मव्यतिरिक्तं किंचित्सत्यमिच्छसीति भावः । हेतुं विवृणोति— **भेदेति** । **सामग्री**शब्द इह प्रारब्धकर्मावष्टंभपौष्कल्यसूचकः । अविद्याविनाशे कर्मवासना च कथं तिष्ठेत्; न हि मृगतृष्णिकानिवृत्तौ तदीयतरङ्गाद्यनुवृत्तिः; अत उपदेष्टृत्वाद्यनुपपत्तिश्च स्यादिति भावः । ननु मिथ्यात्वाविशेषेऽपि एकाधिष्ठानेषु भिन्नाधिष्ठानेषु च भ्रमेषु किंचिदेव केनचित् बाध्यते, तद्वत्स्यादित्यत्रोक्तम्—**ज्ञानोत्पत्त्यैवेति** । सद्व्यतिरिक्तं सर्वं मिथ्येति बाधकधीः; ईदृशज्ञानोत्पत्तौ वासनास्थितिस्ते विरुद्धा । न च वासनावान्तरभेदाद्गतिः; मिथ्यात्वानपायात् । न हि * रज्जुरित्यवगते सर्पाद्यन्यतमधीः अनुवर्तेत । किं च निरस्तायामेव भेदवासनायां बाधकज्ञानोत्पत्तिं वदतस्ते तदुत्पत्तौ कथं सा तिष्ठेत्? स्थिता काचित् केन निवर्त्येत? यदि ज्ञानान्तरेण; तन्न, अविशेषात्; अथ भोगक्षयात्, तर्हि ज्ञानबाध्यत्वाभावात् सत्या स्यात्; एवं कर्मापि । अद्वैतसाक्षात्कारेऽपि वासनानुवृत्तावनिर्मोक्षप्रसङ्गमभिप्रेत्याह— **ज्ञानोत्पत्ताविति** । ज्ञानैकनिवर्त्यत्वाय **मिथ्यारूपत्वो**क्तिः; **निवर्तकान्तराभावात्** सत्यत्वप्रसङ्गभीतैः ज्ञानेतरबाध्यत्वस्यानभ्युपगमात् स्वकल्पितान्तिमभोगसंवेदनादिज्ञानशतागमेऽपि तेषां पूर्वज्ञानवन्निवर्तकत्वायोगादिति भावः । **अस्याः** मूलाविद्याबाधकप्रबलज्ञानेनापि दुर्बाधाया इत्यर्थः । अहेतुकविनाशस्तु न क्वापि नैगमिकैरिष्यते । तदभ्युपगमेऽपि तेषां पूर्वज्ञानवासनाविनाशादेः भ्रान्तिसिद्धत्वेन नित्यं भ्रमानुवृत्त्या पुनरपि वासनासन्ततेरनिवार्यत्वमभिप्रेत्य **कदाचिदपी**त्युक्तम् । न हि वासनानिवृत्तिः सतः स्वरूपम्, साध्यत्वात् । अतिरिक्ता च न सत्या, अद्वैतभङ्गात् ।

अभावसत्यत्वेऽपि सदद्वैतं सिद्धमिति चेन्न ; क्वचिद्भेदसत्यत्वे अन्यत्राप्यविशेषात् भावान्तरसत्यत्वेऽपि तद्वदेव ब्रह्माद्वैतानपायाच्चेति । अनिवृत्तमपीत्यादिनोक्तं सव्याघातेनोपालभते — **वासने**ति । स्वोक्तिविरोधानभिज्ञः किमन्यद्विप्यतीत्यभिप्रायेण **बालिशत्वो**क्तिः । अयं भावः— छिन्नमूलमित्यत्र किं मूलशब्देनाविद्या विवक्षिता ? उत भेदवासना ? आद्ये मूलभूताविद्याच्छेदे तत्समानबाधकस्य संस्कारस्यापि बाधाद्भेदभ्रमो दुर्वच इत्युक्तम् । द्वितीये कथं वासनोच्छेदे तत्कार्यं सन्तन्येत । यदि हेत्वभावेऽपि क्वचित्कार्यं स्यात्, तदा स्वपरमतसाधारणैः स्वाभिमतैश्चाविद्यादिभिर्विनापि तानि तानि कार्याणि स्युः । अतो नेदं यौक्तिकवाक्यमिति । बाधितानुवृत्तौ परोक्तो दृष्टान्तः छिन्नमूलत्वाभावादसमञ्जस इत्याह— **द्विचन्द्र** इति । तिमिरादिदोषस्य सत्यतया बाधकधीशतैरप्यबाध्यत्वात्त्वया तस्य व्यावहारिकसत्यत्वेनाभ्युपगमात् असत्यत्वेऽपि चन्द्रैकत्वज्ञानस्य तदधिष्ठानगोचरत्वाभावेन तद्बाधकत्वायोगाच्चेति भावः । यथा तत्र दृष्टान्ते भयादिनिवृत्त्या बाधकसाफल्यं, न तथा त्वदिष्टे स्यादिति सूचयन् न वन्ध्यायेत्युक्तं निरस्यति —**प्रबले**ति । प्रमितप्रामाण्यप्रमाणबाधितत्वादित्यर्थः । अत एवात्र कुहकोत्पादितभयादिव्यावृत्तिः । त्वत्पक्षे तु बाध्यबाधकधियोर्द्वयोरपि दोषोत्थत्वेन ज्ञातत्वान्न बाधफलसिद्धिः । लोके बाधितानुवृत्तेरन्यतरविसंभफलहीनस्य यथावन्निरूपणार्थप्रवृत्तिहेतुत्वं च बाधकस्य फलमित्याशयः । सर्पादिभ्रमापेक्षया भयादिकार्योक्तिः । आदिशब्देन विस्मयादिग्रहणम् । एवं भयाद्यनुत्पादकत्वमभिप्रेत्य न्यायतत्त्वे * बाधितानुवृत्तिदशाज्ञानमकिंचित्करत्वादुदासीनमित्युक्तम् । तुशब्देन परोक्ताद्वैषम्यं द्योत्यते— न खलु नाशकसामग्र्यां सत्यां नाश्यसद्भावः; न च हेत्वभावे कार्योदय इति । ननु भयाद्यपि क्षणिकत्वाद्भ्रमवन्न बाधकविनाश्यम्; उत्तरभयानुत्पत्तिश्च भ्रमान्तरानुत्पत्तिवत् प्राक् सिद्धैव ; तर्हि बाधतः कथं भयादिनिवृत्तिर्भाष्यते ? उच्यते— बाधके सति सामग्रीवैकल्याद्भयान्तरानुत्पत्त्यनुवृत्तिमपेक्ष्य भयादिनिवृत्तिभाषणमिति ।

अपि च, भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति, भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् । तथा च श्रुतयः—⊛ विज्ञाय प्रज्ञां कुर्वीत ⊛ अनुविद्य विजानाति ⊛ ओमित्येवात्मानं ध्यायथ, * निचाय्य तं मृत्युमुखात्प्रमुच्यते ⊛ आत्मानमेव लोकमुपासीत ⊛ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ⊛ सोऽन्वेष्टव्यः स विजिज्ञासितव्यः इत्येवमाद्याः ।

जातेऽपीति पक्षस्य मन्दत्वव्यक्त्यै सिंहावलोकितेन बहुव्याख्यातृसंमतायां ज्ञानानुत्पत्तौ दूषणान्तरमाह— **अपि चे**ति । **कदाचिदपि**—ध्यानात्प्रागिव पश्चादपीत्यर्थः; कल्पकोटिसहस्रध्यानेऽपीति भावः । ननु यज्ञादिभिः परिमितैरेवानाद्युपचितापरिमितकल्मषनिबर्हणेन ज्ञानोत्पत्तिमिच्छतामिव श्रवणादिभिर्वासनानिरासेन ज्ञानोत्पत्तिस्स्यादित्यत आह— **भेदवासनाया** इति । न खलु * सकृत्स्मृतोऽपीत्यादिन्यायः, अदृष्टद्वारा निवर्तकत्वे निवर्त्यसत्यत्वप्रसङ्गात् । न

व मन्त्रनिवर्त्यवत् व्यावहारिकसत्यत्वाददृष्टनिवर्त्यत्वोपपत्तिः, तद्वदेव प्रपञ्चस्यापि तदुपपत्तौ बाधकधीगवेषणवैयर्थ्यात्, स्वरूपत एव निवर्तकत्वे तु तादृशशक्तिवैचित्र्ये प्रमाणाभावेन भूयस्त्वादेर्बलाबलप्रयोजकत्वात् । न च भावना स्वरूपत एव वाक्यस्य सहकारिणी, परोक्षानुभव इवापरोक्षानुभवेऽपि तदन्वयव्यतिरेकादृष्टेः अदृष्टद्वारा सहकारित्वस्यानभ्युपगमात् । अभ्युपगमे तु वाक्यमनपेक्ष्य तस्यैव मनस्सहकारिणः साक्षात्कारजनकत्वोपपत्तेः । अतः कथंचिदपि न वाक्याद्बाधकप्रत्यक्षोदय इत्याशयः ।

किमित्यादिना प्राग्विकल्पिते मतद्वये दूषितस्य दूषणान्तराण्यवधारणेन सूचयन्स्वमतपरिशेषं तावदाह— **अत** इति । वाक्यजन्यज्ञानस्य विधेयत्वनिवर्तकत्वादेः युक्तिप्रत्यक्षादिविरुद्धत्वादित्यर्थः । **वाक्यार्थज्ञानादन्यदे**वेति । अयं भावः—वाक्यार्थबोधमात्रस्योपायत्वविधाने स्वतस्तत्प्रवृत्तौ दुस्तरं चक्रकम्—न हि ब्रह्मस्वरूपं तज्ज्ञानं चाविदित्वा तज्ज्ञानकामना स्यात् । तद्रहितस्य च न तदर्थोपायविधिप्रवृत्ती स्तः । न चोपायानुष्ठानमन्तरेण ब्रह्मधीसिद्धिरिति । ननु स्वाध्यायाध्ययनवद्धितैषिप्रेरणया प्रवृत्तिरस्तु; नैवम्; हितैषिभिरपि निर्विशेषचिन्मात्रब्रह्मज्ञानं संपादयेत्युपदेष्टव्यम्; तदा ह्येवंविधब्रह्मधीसदसद्भावयोस्तदुपायानुष्ठानं न स्यात् । अस्मत्पक्षे तु बह्वाकारविशिष्टे ब्रह्मण्यावृत्तिनैरन्तर्यादिविशिष्टकालान्तरभाव्यतिशयितज्ञानार्थप्रवृत्तौ यथालोकं न विरोधः । लोकसिद्धप्रक्रियानभ्युपगमे स्वप्रवृत्त्यादिविरोधः स्यात् । न च नित्यप्रत्यक्षनिर्विशेषवस्तुवादिनः तव वाक्यतोऽन्यतो वा तद्विषयातिशयितधीः शक्येति ।

ननु मोक्षोपाये विधित्सितत्वोक्तिरयुक्ता, विधिशब्दानामिह पुरुषार्थभूतवाक्यजन्यज्ञानानुवादनिष्ठत्वात् ध्यानादेस्तु तदर्थतया चोदनात् । न चान्यानुपपत्तिमात्रात्तदन्यत्सर्वमुपपद्यते । विविधानि च ज्ञानानि स्मृतिदर्शनादिशब्दैर्व्यपदिश्यन्त इत्यत्राह— **तथा चे**ति । यथा वाक्यजन्यज्ञानादन्यो मोक्षोपायः * द्रष्टव्य इत्यादिभिर्विधित्सितः, स च ध्यानाद्यनेकशब्दोपात्तोऽपि एकतया सिध्येत्तथैवेत्यर्थः । चः पारिशेष्येण सह समुच्चयार्थो वा । अत्र वेदनादिशब्दानां ध्यानादिशब्दोक्तविशेषपरताम्, उपसर्गभेदसन्निधिप्रत्ययसदसद्भावैरर्थभेदाभावं च व्यङ्क्तुमीदृशबहुवाक्योपादानम् । उपात्तवाक्यप्रकारवैचित्र्यपर **इति**शब्दः । तेषां विधिपरत्वसाम्यार्थ **एवं**शब्दः । अनुपात्तेष्वपि न्यायसंचारार्थम् **आद्यो**क्तिः ।

**अत्र * निदिध्यासितव्य इत्यादिनैकार्थ्यात् * अनुविद्य विजानाति * विज्ञाय प्रज्ञां कुर्वीतेत्येवमादिभिर्वाक्यार्थज्ञानं ध्यानोपकारकत्वात् * अनुविद्य, * विज्ञायेत्यनूद्य * प्रज्ञां कुर्वीत, * विजानाति इति ध्यानं विधीयते । * श्रोतव्यः इति चानुवादः; स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य * मन्तव्यः इति चानुवादः । तस्मात् ध्यानमेव विधीयते । वक्ष्यति च— * आवृत्तिरसकृदुपदेशादिति ।**

* प्रज्ञां कुर्वीत, * विजानातीत्यादौ न वाक्यार्थज्ञानादन्यत्वं भातीत्यत्र * छागो वा मन्त्रवर्णादिति न्याय-

मभिप्रेत्याह— **अत्रेति** । श्रुतेषु तेषु वाक्येष्वित्यर्थः ; निर्धारणे सप्तमी । ऐकार्थ्यमिहैकप्रयोजनत्वम्, एकविषयत्वं वा । तच्चात्र शाखान्तरनयपुरस्कारेण सामान्यविशेषन्यायसिद्धम् । प्रथमेन आदिशब्देन * ध्यायथेत्यादेः, द्वितीयेन * विजिज्ञासितव्य इत्यादेश्च ग्रहणम् । अनुवादे तात्पर्यसिद्ध्यर्थमनुवाद्यस्य विधेयान्वयार्थं च ध्यानोपकारकत्वोक्तिः । तच्च ध्येयोपस्थापकत्वम् । नन्वत्र * अनुविद्येत्यादौ * दध्नेत्यादिवद्गुणविधिरस्तु; सगुणकर्मश्रवणे हि वाक्यं गुणपरमिति नीतिविदः, विशिष्टविधौ गौरवात् कर्ममात्रविधौ गुणश्रुतिवैयर्थ्यात् ; कर्मपदं तु विधेयस्य गुणस्याश्र[यार्पणेन]यणार्पणे सार्थकं स्यादिति ; मैवम्— होमवदिह ज्ञानार्थस्य प्राप्तत्वे ह्यनूद्य गुणो विधीयेत ; तद्भङ्गत्या विशिष्टविधिरस्त्विति शङ्कानिरासार्थम् **अनूद्येत्युक्तम्** । अयं भावः— क्त्वान्तस्याख्यातान्तस्य चैकार्थ्ये पौर्वापर्यविरोधः । कस्य च केन वैशिष्ट्यम्? सजातीयाभ्यासे तु ज्ञानमभ्यस्येदित्येवालम् । उपसर्गभेदश्च विफलस्स्यात् । भिन्नार्थत्वे * विजानातीत्यादेरप्राप्तविषयस्य ध्यानवत्पश्चात्पठितस्य पश्चाद्भाविनि विधेये ध्याने विश्रान्तिर्न्याय्या । वाक्यार्थधीस्तु प्राप्तत्वान्न विधेयो गुणः । तत एव न तदर्थं श्रवणादि, तत्प्रधानध्यानविधानस्य युक्ततमत्वाच्च । न चान्यत्किमपि ज्ञानमिह गुणत्वेन विधेयतया शङ्कनीयम् । यदि तु * विजानातीत्यादेर्वाक्यार्थज्ञाने विश्रमः, तदा * अनुविद्येत्यादेर्न विधेयमनुवाद्यं वा ज्ञानान्तरं दृश्यते । न च ध्यानं तद्गुणतया विधेयम् । परोक्षं प्रत्यक्षं वा वाक्यार्थज्ञानं प्रति तत्साधनत्वासंभवस्य दर्शितत्वादिति । स्थानैक्याद्विधिप्रत्ययरहितेऽपि विधिपरत्वव्यक्त्यै बुद्धिस्थक्रमेण * प्रज्ञां कुर्वीतेत्यस्य पूर्वं पाठः । ध्यानस्य * निचाय्येत्याद्युक्तवैशद्यविशिष्टत्वादुपास्युक्तप्रकर्षविशिष्टत्वाच्चोपसर्गद्वयसाफल्यम् । अनुवादयोरप्युपसर्गद्वयमनुवाद्यस्याभ्यासं स्पष्टयं च व्यनक्ति । * [अविज्ञातं, विज्ञातमिति] अनुविद्य, विज्ञायेति विज्ञानशब्दस्य * निदिध्यासितव्य इत्यस्य स्थाने पाठाच्छ्रवणानन्तरभाविमननविषयान्वेषणशब्दानन्तरपाठाच्च * विजिज्ञासितव्य इत्येतन्निदिध्यासनस्थानापन्नम् । उपायविषयविज्ञानवेदनादिसामान्यशब्दानां तव्यप्रत्ययान्तोक्तश्रवणरूपज्ञानविशेषे विश्रमः किं न स्यादित्यत्राह—**श्रोतव्य** इति । कथमत्राहेतुकस्तव्यप्रत्ययबाध इत्यत्राह—**स्वाध्यायस्येति** । अयं भावः—श्रुतेरर्थपरत्वाभावाद्वा, विचारस्य प्रवर्तकाभावाद्वा, तदवसराभावाद्वा मीमांसा नारभ्येति शङ्का निरस्ता । श्रोतव्य इत्यस्य च गुर्वभिगमनादौ शब्दशक्तिर्नास्ति । अतो निर्णयार्थव्यापारपरत्वे प्राप्तार्थत्वमिति । नन्वस्ति विधेयमारंबणसंशीलनरूपं मननम् । तच्च * मन्तव्यः इति विवक्षितुं युक्तम् ; तत्र वेदनादीनां विश्रान्तिस्स्यादित्यत्राह—**श्रवणेति** । अप्रतिष्ठितस्य श्रवणस्य ध्यानानुपकारित्वात्तत्प्रतिष्ठापकतयाकाङ्क्षितं तदनन्तरपठितं यौक्तिकं मननम् । अतस्तदपि रागाद्यनुवृत्त्या प्राप्तत्वादनुवाद्यमेवेति भावः । एतेन श्रवणादित्रिकं दर्शनसाधनतया विधीयत इति कैश्चिदुक्तस्य युक्तिविरोधः [स्था]ख्यापितः । ननु * श्रोतव्यो मन्तव्य इत्येताभ्यामुपदेशकगम्यार्थश्रवणमात्रं विधेयमस्तु ; आहुश्च केचित्— * सांख्ययोगोपदेशश्रवणादिकमिति । अत्राह— **तस्मादिति** प्राप्ताप्राप्तविवेकात्तत्सिद्धाद्वा । परिशेषादित्यर्थः । एवकारः श्रवणमननयोः ज्ञानमात्रस्य सन्प्रत्ययवाच्येच्छायाश्च व्यवच्छेदार्थः । * द्रष्टव्य इत्यस्यापि ध्यानविशेषणवादितया पृथग्विधितात्पर्यव्युदासार्थो वा । अयं भावः— * श्रोतव्यो मन्तव्य इत्यनयोरवैधप्रसिद्धोपकारकत्वसंभवे तद्विपरीतक्लृप्तेरयुक्तत्वात् * श्रोतव्यः इत्यादेश्श्रवणादिचतुष्टयविधिपरत्वे वाक्यभेदापत्तेः, अत्र विकल्पस्याष्टदोषदुष्टतया गुरुलघुविषयतया चात्यन्तासंभवात्क्रमभाव्युपकारस्य श्रवणादेस्समाधिरूपाङ्गिना समुच्चयासंभवाद्विशिष्टविधेर्गत्यन्तराभावनियतत्वात्, ध्यानस्य दर्शनरूपतायाश्श्रुत्यन्तरानुसारेण साधयिष्यमाणत्वात्, अत एव निपूर्वस्यापि ध्यायतेरिह पदान्तरस्फुटोपात्त-

दर्शनरूपतावैशिष्ट्योक्तावुदासीनत्वात् , * द्रष्टव्य इत्यस्यानुवादसमभिव्याहारेऽपि स्वरसावगतविधिपरत्वप्रहाणेन फलानुवादपरत्वकल्पनानुपपत्तेः, * श्रोतव्यः श्रुतिवाक्येभ्य इत्यादिश्लोकेऽपि श्रवणादित्रिकस्य क्रमाद्दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधेयत्वे विरोधाभावाच्च रागप्राप्तश्रवणादिपूर्वकं विधिपदान्तरोपात्तदर्शनाकारविशेषितध्यानमेवात्र विधेयमिति । एवं वेदनादिशब्दानां स्वोक्तविशेषविधिविश्रमानभ्युपगमे सूत्रविरोधमपि सूचयति— **वक्ष्यति चेति** । चिन्तनार्थो हि ध्यायतिरेकविषयमसकृदावृत्तं ज्ञानं वक्ति । अतो ध्यानविषये उपदिष्टं वेदनं ध्यानमेवेति प्रकृतसिद्धिः । तथोपास्तिरपि * तस्मिन्यदन्तस्तदुपासितव्यमित्यादिभिरुपात्तः । अतो यज्ञादिसापेक्षत्वानुगुणम् * उपदेशादित्यनेनैव संगृहीतम् ।

**तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्— * मनो ब्रह्मेत्युपासीतेत्यत्र * भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद । * न स वेद, अकृत्स्नो ह्येष आत्मेत्येवोपासीत । * यस्तद्वेद यत्स वेद स मयैतदुक्तः इत्यत्र * अनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति । ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् , * ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् ।**

प्राक् प्रतिज्ञातमुपासनाख्यविशेषे वेदनादिसामान्यशब्दानां विश्रममाह— **तदिति** । **तत्**— तदुक्तावनिर्धारितविशेषम् । **इदम्**— गुरुतरध्यानादिसाध्यसाधनतया विधानाद्विशेषदृष्टौ तदेकतापत्त्यर्हम् । तद्धेतुं व्यनक्ति— **अपवर्गोपायतया विधित्सितमिति** । **उपासनमित्यवगम्यत** इति । तुल्यप्रकरणस्थोपासिसमानविषयवेदनादिशब्दनिर्दिष्टत्वादिति भावः । * उपदेशादिति सूत्रितमेकप्रकरणस्थविशेषमन्यमपि हेतुमाह— **विद्युपास्योरिति** । * मन इत्यादावुपासिरादौ, विदिरन्ते । * यस्तदित्यत्र तु तद्विपरीतम्; * न स वेदेत्यत्र तूभयत उपास्तिः, * [अथ योऽन्यां देवतामुपास्ते] स योऽत एकैकमुपास्त इत्युपक्रमात् । एवं मिथस्स्थानाक्रान्तिरिह व्यतिकरः । नन्वत्र * मनो ब्रह्मेति दृष्टिविधिः ; अन्यच्च वाक्यद्वयं विद्याविशेषस्थम् ।

**एकत्र शब्दवृत्तिर्या स्थिता साऽन्यत्र संचरेत् । तत्तुल्येऽपीत्यभिप्रेत्य दर्शनादिति भाष्यते ॥** ३०० ॥

* य एवं वेदेति न शास्त्रार्थवेदनामात्रोक्तिः; विहितस्य आकाङ्क्षितं फलमनिर्दिश्याविहितान्यानुवादेन तत्फलोक्तेरयुक्तेः । ननु भूमविद्योपक्रमे * स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवतीति फलविशेष उक्तः । तेनैव नैराकाङ्क्ष्यं स्यात्; मैवम्— तृतीयप्रपाठकस्थस्यास्य उपासनप्रकरणभेदात्, पुनश्श्रुतिवैयर्थ्याच्च, विधेयान्तरत्वे सिद्धे सन्निहितफलेनैव समन्वयोपपत्तेः । अतोऽस्मिन्नर्थवादे विदिनोपासनमनूद्य तत्फलविधियुक्तः । रात्रिसत्रन्यायश्चात्राभिप्रेतः । दानादिजन्या प्रथा कीर्तिः । पराक्रमादिजन्या तु यशः । कीर्त्या यशसा च भाति ; ब्रह्मवर्चसेन तपतीति योज्यम् । मध्यमवाक्येऽलेत्यनुक्तिरासन्नत्वात् । * यस्तदित्यादौ यस्तत् ब्रह्म वेद,

यच्च ब्रह्म स वेद स वेदिता रैक्वः तद्वेद्यमेतत् ब्रह्म चेति द्वितयं तवोक्तमित्यर्थः। * गामश्वं पुरुषं जगदित्यादिष्विव चकारानुक्तिः। नपुंसकसमभिव्याहारादुक्तमिति विपरिणमनीयम्। वेद्यं प्रति स वेदितृत्वेनोक्त इति वा नेयम्। अथ वा यत् स रैक्वो वेद, तदेवान्यो यो वेद, एनं सर्वं तदभिसमेति यत्किंचित्प्रजास्साधु कुर्वन्तीति पूर्वत्रान्वयः। * स मयैतदुक्त इत्यत्र एतदिति क्रियाविशेषणम्; स मयैवमुक्त इत्यर्थः। अस्यां व्याख्यायां प्रकरणानुगुण्यात् रैक्वशिष्येण भवितव्यमिति जानश्रुतेः सूच्यते। **अनुशाधि**—विविच्य ज्ञापयेति यावत्। एवं वेदनस्य प्रस्तुतध्यानोपासनशब्द-वाच्यत्वमित्युक्तम्, न तु ध्यानस्योपासनत्वमिहोच्यते; * वेदनमुपासनमित्यवगम्यते * विद्युपास्योः इत्यादिभाष-णात् * वेदनमुपासनं स्यात् इति प्रदर्शयिष्यमाणवाक्यसंवादाच्च। ध्यानोपासनशब्दयोरेकविषयत्वं ध्यानस्य प्रति-कूलध्यानाद्व्यावृत्तिश्चेह अर्थादेव सिध्यतः। यदि ध्यानमिहोपासनत्वेन शब्दतो विशेष्यते; तदा ध्यानस्य पुनराका-रान्तरोक्तौ शृङ्खला भज्येत।

ननु ध्यानशब्दः चिन्तामात्रवाची व्यवहितस्मृतिसन्तानेऽपि स्यात्, स्मृतिमात्रे च क्वचित्प्रयुज्यते; सूत्रे च ध्यानोपासनशब्दाभ्यामसकृदावृत्तिमात्रमुक्तमित्यत्र तदभिप्रेतं श्रौतं नैरन्तर्यरूपविशेषमाह—**ध्यानं चेति**। यावज्जी-वाग्निहोत्रन्यायाद्वा स्वरूपेण चिरकालस्थायितया वा ध्रुवत्वं स्यादिति शङ्कानिरासाय सदृष्टान्तः सन्तानशब्दः। एवं विच्छिन्नाविच्छिन्नवेदनसाधारणस्य ध्यानस्य विशेषे विश्रम उक्तः; अविच्छिन्नासाधारण्यं वा स्थापितम्। स्वस्थाने चैतत् सूत्रयिष्यति— * ध्यानाच्च, अचलत्वं चापेक्ष्येति। * उपासनशब्दस्याविच्छिन्नविषयत्ववत् ध्यानशब्दस्याप्य-विच्छिन्नविषयत्वमिह स्थाप्यत इति **तूलिका**। उक्तं श्रुत्योपपादयति—**ध्रुवेति**। स्मृतेर्ध्रुवत्वं विसदृशबुद्ध्यव्यव-धानरहितप्रवाहत्वम्, * तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा• इत्यादिना तथोक्तेः। यद्यपि * नाना शब्दादिभेदादि-त्यत्र फलसंयोगैक्यमात्रान्न विद्यैक्यमिति वक्ष्यते; ध्यानत्वोपासनत्वध्रुवत्वादयश्च विशेषा विद्यान्तरपठिताः; तथाऽपि साधारणानां वेदनादिशब्दानां विशेषविषयत्वाभावे फले च तारतम्यरहिते गुरुलघूपायभेदविधिदौस्थ्यम्। गुरुलघुविक-ल्पायोगलक्षणं च वस्तुसामर्थ्यं प्रकरणाद्बलीयः, अतस्स्मृतेर्ध्रुवत्वम्। इदमेकत्र श्रुतमपि सर्वासु विद्यासु योज्य-मित्यभिप्रायेण **अपवर्गोपायत्वश्रवणादित्युक्तम्**। **स्मृतिलम्भे**—आहारशुद्ध्यादिक्रमेण प्रस्तुतध्रुवानुस्मृतिसिद्धौ इत्यर्थः। ग्रथ्यत एभिः क्लेशीति **ग्रन्थयः**—धर्माधर्मरागद्वेषमोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः। ते च मायापाशग्रन्थितया आगमोक्ताः। **विप्रमोक्षः**— विभज्यात्यन्तिकमोचनम्। ननु भ्रान्त्या बन्धः सर्वेष्टः, तस्य कथमप्रमा स्मृतिर्बाधिका; भ्रान्त्यधीनकर्मजन्यस्य स्वयं भ्रान्तिविषयत्वासिद्धेः। भ्रमोत्थस्यापि भयशङ्काविषजन्यज्वरादेरिव बन्धस्य सत्यतया युक्तोऽयमीदृशः प्रतीकारविधिः। मिथ्यात्वपक्षेऽपि प्रायश्चित्तादिन्यायो दुस्त्यजः। अतो निवर्त्यस्य सत्यमिथ्यात्वे, निवर्तकस्य मानामानत्वे अनादृत्य चोदितत्वात् स्वफलसाधनत्वं ग्राह्यम्। भेदवासनायाश्च ध्यानरूपा स्मृतिर्नाशनी त्वयैवोक्ता। तदत्र शुक्तिरजतवन्न बन्धस्य बाधः। नाशस्तु यथाविधि स्मृत्या प्रमित्या वा स्यात्। न चेयं स्मृतिरप्रमाऽप्ययथार्था, स्वहेतुप्रमित्यनन्यविषयत्वात्। उक्तं च सामान्यतः **श्रीमद्गीताभाष्ये**—* स्मृतिर्नाम पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानमिति। पूर्वानुभूतविषयत्वं न लक्षणप्रविष्टम्; किं तु विषयसत्यत्वासत्यत्वयोः स्वहेतुधीसामान्यज्ञप्त्यर्थम्।

**निवृत्ततदवस्थस्य तदवस्थतया स्मृतौ। याथार्थ्यं न प्रतिक्षेप्यं भूतभाविप्रमाक्रमात् ॥ ३०१ ॥**

**स्मृतिप्रमोषे चार्थस्य तादवस्थ्यं न भासते । अयाथार्थ्यं कथं तत्र तत्तेदन्ताविवर्जिते ॥ ३०२ ॥**
**अतो मूलानुसारेण यथादर्शनमिष्यताम् । यथार्था चायथार्था च स्मृतिरप्यनुभूतिवत् ॥ ३०३ ॥**
**अन्यदृष्टिस्तथाऽन्यत्र क्ष्वेलध्वंसादिकृन्मता । परविद्यास्वपि ह्येषा क्वचिदंशेषु गृह्यते ॥ ३०४ ॥**
**अतः श्रुतिस्मृतिशतैश्चोदिता स्मृतिरूपिणी । भाष्यते परविद्येयं भवारंभस्य निष्कृतिः ॥ ३०५ ॥**

सा च स्मृतिर्दर्शनसमानाकारा; * भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इत्यनेनैकार्थ्यात् । एवं च सति * आत्मा वा अरे द्रष्टव्य इत्यनेन निदिध्यासनस्य दर्शन[समानाकारता]रूपता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता ।

ननु ध्यानमेवेत्याद्ययुक्तम्; तदपि धारणावत्समाध्यर्थतयोक्तम् । समाधिरेव तु दर्शनात्मकः * आत्मानं पश्येदित्यादिभिर्मुक्तिहेतुरुक्तः । न च योगिप्रत्यक्षमनभ्युपगतम्, तस्य बहुषु प्रदेशेषु भाषिष्यमाणत्वादित्यत्राह— **सा चेति** । ध्रुवत्वविशेषितेत्यर्थः । आकारान्तरेणापि सूत्रसूचितगत्या विशेष्यत इति व्यक्त्यै चकारः, एवार्थो वा । सैव हि स्मृतिर्वैशद्यातिशयात्समाध्याख्या; न तु ध्यानफलमन्यद्दर्शनं * पश्येदित्यादिषु च विधेयमित्यर्थः । स्मृतेर्दर्शनत्वव्याघातशमनाय समानत्वोक्तिः; परोक्षेऽप्यपरोक्षत्वोपचार इति भावः ।

**परोक्षा चापरोक्षा च स्मृतिर्द्वेधा स्वमूलवत् । कृत्स्ना वा स्यात्परोक्षैव द्विधाऽप्यत्रापरोक्षता ॥ ३०६ ॥**
**विधौ च परशब्दार्थो गत्यभावेऽनुमन्यते । लक्षणेष्टा हि दर्शादौ गौणी श्येनादिनामसु ॥ ३०७ ॥**
**अर्धमन्तर्वेदिर्वेदि मिनुयादिति च श्रुतौ । मध्यदेशस्य लक्ष्यत्वं सर्वत्रैवं यथायथम् ॥ ३०८ ॥**

नन्वत्र स्ववाक्ये ध्रुवत्वं न दर्शनरूपत्वं विशेषणतयोपात्तम्; यतः समाधेः पार्थक्यं परिह्रियेतेत्यत्राह— **भिद्यत इति** । अत्र **ग्रन्थि**शब्द उपात्तकर्मादिव्यतिरिक्तविषयः; हृदयस्य मनसः सम्यक् प्रवृत्तिप्रतिबन्धकतया ग्रन्थयो रागाद्याः । यद्वा हृच्छब्दोक्तं स्थानमयतीति हृदयो जीवः; तात्स्थ्याद्वा असौ तच्छब्देन लक्ष्यते; तस्य ग्रन्थिः पूर्वोक्तस्त्रिगुणविकारवर्गः । हृदयं वा ग्रन्थिः; उपलक्षणमिदम् । यत्तु निरुच्यते छान्दोग्ये—* स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेतीति; तदुपास्यब्रह्मपरम् । न च तदेवात्र हृदयशब्दवाच्यमिति भ्रमितव्यम्; ग्रन्थिसंशयादिविरुद्धधर्माध्यासात् । सर्वविषयास्संशयाः, सर्वे वा संशयाः; संशयशब्दोऽत्र विपर्ययस्याप्युपलक्षकः । ते **छिद्यन्ते** हेतूच्छेदान्न संतन्यन्त इत्यर्थः । **कर्माणि**— बन्धकसुकृतानि दुष्कृतानि च । प्राप्तिविरोधिक्षयस्यात्र विवक्षितत्वान्न विद्योत्पत्तिकर्मनिवृत्त्योरन्योन्याश्रयः । **परावरे**— परत्वं सर्वातिशायिता; अवरत्वम्—सौलभ्यार्थेन्द्रानुजत्वाद्यैः । यद्वा * सद्ब्रह्म * ब्रह्मदाशा इत्याद्युक्तपरावरजन्तुशरीरके । **अपरावरे** वा निम्नोन्नतविश्वविलक्षणे । अथ वा परा एवावरा भूत्वा यस्य स परावरः ।

इदमत्राकूतम्— * दृष्ट इत्यत्र दर्शनशब्दो न तावन्मुक्त्यवस्थाभाविदर्शनपरः, ध्रुवस्मृतिशब्दवत् ग्रन्थिमोक्षसाधनविषयत्वात् । न च साधनविषयत्वेऽपि स्मृतिदृष्ट्योरपवर्गं प्रति समुच्चयः, दर्शपूर्णमासादिवत् द्वन्द्वस्य

चकारस्य वाऽनुपलब्धेः । न चात्र समुच्चयश्शक्यः, प्रक्रान्तयोगेन ब्रह्मणस्साक्षात्कर्तुमशक्यत्वात्, शक्यत्वेऽपि यौगपद्यस्यासंभवात्, क्रमस्य च व्यवस्थापकाभावात् । न च प्राचीनं ध्रुवस्मरणं पश्चिमं च योगिप्रत्यक्षं करणतया समुच्चीयेत, धारणावत्तादर्थ्योपपत्तौ समुच्चयक्लृप्त्ययोगात्; अन्यथाऽतिप्रसङ्गात्, ध्रुवस्मृतेर्व्यवहितसाधनत्वक्लृप्तौ श्रुतहानादिप्रसङ्गाच्च । प्रमाणफलं च दर्शनं न स्वरूपेणोपादातुं शक्यम्; येन समुच्चित्य विधीयेत । ननु संस्कारोद्बोधफले स्मरणेऽपि समानमेतत्; अत आज्यावेक्षणन्यायात्तदुपायभूतशक्यव्यापारार्थो दर्शनविधिरिहास्त्विति चेत्, न, तथा सत्येकस्मिन्वाक्ये द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिप्रसङ्गात्, अन्ततो निदिध्यासनार्थचित्तप्रेरणस्यैव पुरुषतन्त्रस्य दर्शनोपायतया विधातव्यत्वात्, अन्यस्य चादृष्टेः । नन्वेक एव दर्शनोपायस्सामान्यतो विशेषतश्च पदद्वयोक्त इत्यपुनरुक्तिः स्यात्, हन्तैवं सति समुच्चयं त्यक्त्वा असत्पदवीमासीदसि; * द्रष्टव्यो निदिध्यासितव्य इत्युभाभ्यामेकस्यैव विधेयत्वात् । अस्मदुक्ते तु ध्यानं वैशद्यतो विशेष्यत इति वैषम्यम् । न च दर्शनसमानाकारध्यानान्तरेण ध्रुवस्मृतेस्समुच्चयः; तादृशस्यान्यस्यादृष्टेः, तत्क्लृप्तौ च गौरवात्, ध्रुवस्मृतेर्निरपेक्षसाधनत्वश्रुतिभङ्गप्रसङ्गाच्च । न च मोक्षे साध्ये साक्षात्कारस्मृत्योरनेकदोषदुष्टो विकल्पस्स्वीकार्यः ।

**विकल्पबुद्ध्यनुष्ठानापूर्वतत्फलबाधतः । कोटिभ्यामष्टदोषत्वं प्रयोगद्वितयेऽब्रुवन् ॥ ३०९ ॥**

**प्रामाण्यत्यागतोऽन्यस्य स्वीकृतेस्त्यक्तसंग्रहात् । स्वीकृतत्यागतश्चान्ये प्रयोगत्रितये विदुः ॥ ३१० ॥**

गुरुलघुवैषम्याच्चात्र न तत्संभवः; अन्यथाऽतिप्रसङ्गात्, विषमफलेष्वेव तद्धेतुत्वदृष्टेः । न चात्र द्वारद्वारिता, मानाभावात् । न हि श्रवणमननयोर्ध्यानोपकारकत्ववत् ध्यानस्य दर्शनोपकारकत्वं दृष्टम् । परोक्तं भावनाबलजप्रत्यक्षं तु शास्त्रयोन्यधिकरणे निरसिष्यते । न चात्र श्रुतम्, एवं क्रमाद्यनुक्तेः । * ततस्तु तं पश्यते निष्कलं ध्यायमानः * ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवदित्यादिकमस्तीति चेत्, सत्यम्, ध्यानफलं ह्येतद्दर्शनमणिमादिवत्सिद्ध्यन्तरमस्तु, न साधनम्; तथाऽनुक्तेः । परविद्याप्रकरणे क्वचित्तदुक्तिस्तु तत्तत्प्रभावप्रदर्शनार्था * तमक्रतुं पश्यति वीतशोकः * पुरिशयं पुरुषमीक्षत इतिवत् ध्यानसाध्यतयोक्तं दर्शनं मुक्तस्यास्तु; ध्यानसाध्यतयोक्तं दर्शनं मुमुक्षोश्चेत् विशदध्यानरूपं स्यात्; तथा हि—दर्शनशब्दस्य श्रावणज्ञानादिष्वप्रयुज्यमानस्य चाक्षुषज्ञानमेव हि मुख्यम्; तत्तु * न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेनेत्यादिभिरिह प्रतिक्षिप्तम्; अतो मनोजन्यज्ञानविशेषे दर्शनत्वोपचार इति वाच्यम्; तथा सति वरं मोक्षसाधनतया कण्ठोक्तस्यैव ध्रुवानुस्मरणस्य तादृशवैशद्यविवक्षया तदुपचार इति ।

ननु दर्शनशब्दः स्मृतिं साक्षात्काररूपत्वेन विशिनष्टु; मैवम्, तस्य स्मृतावसंभवात्, मूलभेदानुसारेण संभवाभिमानिनामपि परोक्षानुभवसाध्यस्मृतौ तदसिद्धेः । * मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयत इति समाधेर्ध्याननिष्पाद्यत्वोक्तिश्च विशदाविशदवैषम्यात् । उक्तं च समाधाववस्थाद्वयं तस्यैव योगाङ्गत्वमङ्गित्वं च निर्वहद्भिः । अस्त्वेवमिह स्मृतिदर्शनवाक्ययोरैकार्थ्यम्; तथाऽपि स्मृतिशब्देन दर्शनमुपचर्यताम्; तत्र—मुख्यार्थबाधाबाधाभ्यां विपरिवर्तस्यैव स्थापितत्वात् । किं च स्मृतिर्हि वैशद्योक्त्या स्तूयेत, दृष्टिस्तु स्मृतित्वोक्त्या निन्दिता स्यात् । परोक्षज्ञाने च वैशद्यविवक्षया * तमसः पारं दर्शयतीत्युच्यते । लोके च पारदर्शी, दूरदर्शी इत्यादि । नन्वपरोक्षस्य संसारस्य दर्शनसमानयाऽपि परोक्षया स्मृत्या कथं बाधः; न कथंचित्, मिथ्यात्वासिद्धेः । अपरोक्षस्यापि ज्वालैक्यदेहात्म-

चन्द्रद्वित्वादेरनुमानादिना बाधो दृष्टः, सर्वैश्चाभ्युपगतः । अतः * तस्मिन् दृष्ट इत्यनेनापवर्गोपायविषयेण स्मृते-र्वैशद्यलाभात्तादृशी सैव समाधिरिति नाष्टमलोपप्रसङ्गश्चेति । तथाऽपि * द्रष्टव्य इत्यादौ ध्यानसामर्थ्याक्षिप्तश्रवणमननयोः ध्यानार्थत्ववत् अग्रग्रायन्यायेन ध्यानस्यापि दर्शनार्थबुद्ध्यन्तरत्वोपपत्तेर्न दर्शनशब्दस्तद्विषयः स्यादिति शङ्कायां * ध्यानमेवेत्यत्राभिप्रेतं विवृणोति—**एवं च सतीति** । ध्रुवस्मृतित्वेनेव दर्शनसाम्येनापि निदिध्यासनस्य विशेषि-तत्वे श्रुत्यन्तरसिद्धे सतीत्यर्थः । चः शङ्कानिवृत्त्यै, स्वतः प्राप्तविधिपरत्वयुक्त्या सह स्फुटार्थश्रुत्यन्तरानुगुण्यसमुच्चयार्थो वा । अयं भावः——ध्यानस्यापि श्रवणादिवदविधेयत्वे यज्ञादिभिरेवादृष्टद्वारेण दर्शनसिद्धिः कल्प्येत ; तथा च मध्ये ध्यानं विफलं स्यात्, भावनाबलजप्रत्यक्षानुपपत्त्या तादृशदृष्टोपकारकाभावात् । विधेयत्वे त्वेकत्र निर्णीतश्शास्त्रार्थः सर्वत्र स्वतःप्राप्त इति न्यायात् ध्रुवानुस्मृतिवाक्यवदिहापि निदिध्यासनं दर्शनसमानतया विशेष्टव्यम् । * द्रष्टव्य इत्यत्र परोक्ते फलपरत्वे तु प्रत्ययवैयर्थ्यम् । पूर्वापरवाक्येषु च * येनाहं नामृता स्याम्, * अमृतत्वस्य तु नाशास्ति वित्तेन * एतावदेव खल्वरे अमृतत्वमिति फलस्योक्तत्वात्तदुक्तिरत्रानपेक्षिता ; वैशद्यं त्वन्यत्रोक्तमत्राप्याकाङ्क्षाबलायत्तम् । अत उपायपरतया * तस्मिन् दृष्ट इतिवद्विधेयविशेषकत्वे संभवति विकल्पसमुच्चयश्रुतहानादेरयोगादेकफलसिद्ध्यर्थ-विशिष्टैकसाधनविधितात्पर्यसंभवे पृथक् फलविधिभेदस्याश्राव्यत्वात् दर्शनेतिवदनूद्य विधाने विशिष्टविधेयैक्यसंभवाच्च वैशद्यविशेषितध्यानविधिपरमिदं * द्रष्टव्यः इत्यादिवाक्यमिति । अत एवास्य युगपदेकस्य विध्यनुवादशङ्काऽप्यपास्ता । स्वानन्दसाक्षात्काररूपस्यात्मदर्शनस्य स्वयमेवेप्सितस्य कथं विधेयत्वमिति चोद्यं विशदस्मृतिविधानोक्त्या प्रत्युक्तम् । एतेन * निचाय्य तं मृत्युमुखात्प्रमुच्यते, * यदा पश्यः पश्यते रुक्मवर्णम्, * तद्विज्ञानेन परिपश्यन्ति धीरा आनन्द-रूपममृतं यद्विभातीत्यद्यापि यथार्हं निरूढम् ।

नन्वेवं योगिप्रत्यक्षमेव लुप्येत, तत्तद्वाक्येषु दर्शनादिशब्दानां योगिप्रत्यक्षसद्भाववचनानामपि प्रत्यक्षसमानाकार-विषयतया नेतुं शक्यत्वात् । न च धर्मादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वादित्यादिभिस्तत्सिद्धिः, ईश्वरप्रत्यक्षेणार्थान्तरा-पत्तेः । इन्द्रियग्राह्या इति साध्यप्रयोगेऽपि शास्त्रवेद्यस्यापि मनोविषयत्वेन सिद्धसाधनात्, इन्द्रियसाक्षात्कर्तव्या इत्यत्रा-प्यतीन्द्रियाणामपि अनुव्यवसायवेद्यत्ववादिनामर्थान्तरत्वेन दत्तोत्तरत्वात्, सुखादिवदाहत्य साक्षात्कार्यत्वविवक्षायां विपक्षे बाधकासंभवेन प्रतिबन्धासिद्धेः ; अन्यथा बौद्धवद्धर्मादीनां चाक्षुषत्वस्यापि साधनप्रसङ्गात् । शक्यं हि * विगीतं कस्यचित् चाक्षुषं प्रमेयत्वादित्यादि प्रयोक्तुम् । किं च * योगीन्द्रियं न धर्मादिप्रत्यक्षजनकम्, इन्द्रियत्वात् ; अस्म-दादीन्द्रियवदिति प्रतिप्रयोगस्सुलभ इति ; मैवम्——

**मुक्त्युपाये हि कथिता दर्शनोक्तेरमुख्यता । अन्यत्र बाधकाभावाद्यथाश्रुतपरिग्रहः ॥ ३११ ॥**

संयमिनां ह्यतीतानागतातीन्द्रियादिवेदनं कण्ठोक्तम् । न च स्मरणमेतत्, अननुभूतविषयत्वात् । अत एव न तत्र वैशद्यमात्रेण प्रत्यक्षत्वोपचारसम्भवः । न च तत्रानुमानाद्यवकाशः, * तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यती-त्यादिभिस्तत्प्रतिक्षेपात् ; * पाणावामलकं यथेत्यादि च निर्दिश्यते ; धर्मोपचयभेदैरनधीतसूक्तकाण्डमन्त्रसाक्षात्कारश्च कीर्त्यते ; * दिव्यं ददामि ते चक्षुरित्यादि च प्रसिद्धम् ; अतो नासिद्धिः ; योगिप्रत्यक्षस्य बाह्येन्द्रियाणां मनसश्च सुकृतविशेषैर्यथार्हं लोकोत्तरातिशयाधानात् । न चातिप्रसङ्गः ; यथाश्रुतातिलङ्घने हेत्वभावात्, अनुमानस्य विपक्षे बाधकाभावाच्च । न चानुमानतः श्रुतभङ्गः, तस्यागमेनैव बाधात् ; अन्यथाऽतिप्रसङ्गात् । ननु शास्त्रं शक्ये शक्तं

विनियुङ्क्ते ; स्मृतेस्तु दर्शनसाम्यं न पुरुषतन्त्रम् ; न च तदपि तस्याः संभवि ; दर्शनत्ववदेवासंभावितं च न विधिराघ्रातुमर्हति । न दृष्टाधिकारो विधिरसंभावितदृष्टफले सति भवतीत्यत्राह— भवतीति । भावना— अनुभवजन्यसंस्कारश्चिन्तैव वा । सा च सादरं निरन्तरं च कर्तुं शक्या । ततः स्मृतिवैशद्यसिद्धिः । दर्शनस्य रूपमिव रूपं यस्यास्सा इत्युपमानबहुव्रीहिरत्र ग्राह्यः । भीतकामुकादिप्रतिभाश्च अत्र निदर्शयितव्याः । परैरप्युच्यते— * दृष्टं परोक्षमपि ध्यायमानं साक्षाद्भावमापन्नं कामाद्युपप्लव इति । * वृक्षे वृक्षे च पश्यामीत्यादिषु भ्रान्तिमिश्रत्वं दोषायत्तम् ; इह तु यथाश्रुतचिन्तनाच्च दोषबाधाविति भावः ।

**यदि स्याद्भावनामूला स्मृतेर्दर्शनतुल्यता । किमत्र कर्मणा मैवं मानसिद्धोभयग्रहात् ॥ ३१२ ॥**

वाक्यकारेणैतत्सर्वं प्रपञ्चितम् — ❀ वेदनमुपासनं स्यात्तद्विषये श्रवणादिति । सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । ❀ सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवदिति पूर्वपक्षं कृत्वा ❀ सिद्धं तूपासनशब्दादिति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । ❀ उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्चेति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् । सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः ।

उक्तस्य न्यायवर्गस्य दार्ढ्याय सूत्रे शब्दमार्थे च सर्वं मुखभेदेन तदभिप्रायविद्भिर्विमृश्य निर्धारितमित्याह— **वाक्यकारेणेति** । **तद्विषये श्रवणात्** ; उपासनशब्दस्थाने वेदनशब्दस्य एकत्र अन्यत्र च प्रकरणे प्रयोगादित्यर्थः । अत्रोक्तस्य प्रायिकत्वशङ्काव्युदासाय वाक्यं व्याचष्टे—**सर्वास्विति** । * मनो ब्रह्मेत्युपासीतेति दृष्टिविधावुक्तमपि न्यायसाम्यादन्यविद्यास्वपि योज्यम् , किं पुनस्तास्वेवैकत्र दृष्टमिति व्यक्त्यै **मोक्षसाधनतया विहितमित्युक्तम्** । एतेनापातप्रतीश्रवणमननिर्णयादेर्व्यवच्छेदः । वेदनमुपासनमित्युक्तस्य उत्तरवाक्यासत्त्या मन्दानां पूर्वपक्षत्वशङ्कां स्पष्टोक्त्या निवर्तयितुमाह—**सकृदिति** । विधिर्हि स्वतः प्रवृत्त्युन्मुखं पुरुषं प्रेरयन् स्वसिद्ध्यै प्रयाजादिशास्त्रेष्विवात्रापि सकृत् प्रवर्तयेत् ; विशेषवचने सति खलु आवृत्तिभारस्सोढव्य इत्यभिप्रायेणोक्तम्—**शब्दार्थस्य कृतत्वादिति** । विधिविषयस्य धात्वर्थस्य तावतैव पूर्णानुष्ठितत्वादित्यर्थः । उत्तरवाक्यस्थेन तुशब्देन सूचितमाह—**पूर्वपक्षं कृत्वेति** । तत्प्रतिक्षेपोक्तिं दर्शयति—**सिद्धमिति** । न्यायत उपासनं सिद्धमित्यर्थः । **सिद्धम्**— सिद्धान्त इति वा । **उपासनशब्दात्** । न हि सकृद्बुद्धावुपासनशब्दस्य प्रख्यातिरिति भावः । एतद्वाक्यं व्याचष्टे— **वेदनमित्यादिना** । * उपासनशब्दादित्यनेन **वेदनमुपासनमिति** वाक्यस्यापि शब्दप्रत्यभिज्ञया सिद्धान्तपरत्वं दर्शितं भवति । ध्यानस्य ध्रुवत्वं सूत्रानुक्तमपि न्यायसाम्यात्सूचितं प्राक् स्वेन विवृतम् । वाक्ये तु ध्यानादभिन्नस्य उपासनस्यापि तदुक्तमुपादत्ते —**उपासनमिति** । **दर्शनम्**—सारसिकी लोकदृष्टिः । **निर्वचनम्**—निर्णायकतया प्रागुक्तं श्रुतिवाक्यम् । यद्वा **दर्शनम्**— प्रत्यक्षश्रुतिः । **निर्वचनम्**—निष्कृष्य वचनमुपबृंहणम् । **तस्यैव**—मुक्तिसाधनतया विहितस्यैव, न तु परेष्टस्य मुक्तिसाधनहेतोरित्यर्थः । सकृदावृत्तावुपासेः प्रयोगाभावात् **उपासनरूपस्यासकृदावृत्तस्येति** वाक्यस्थोपासनशब्दविवक्षितत्वोक्तिः ।

ननु **एतत्सर्वं प्रपञ्चितमि**ति पूर्वोक्तम्; तत्र दर्शनरूपत्वं न दृष्टमित्यत्र तस्यानुक्तस्यापि तदुक्ताभ्यामावृत्तिरूपत्वध्रुवत्वाभ्यां तुल्यन्यायत्वव्यक्त्यर्थम् अन्यविधानार्थं चानुभाषते— **सेयमि**ति। ध्यानत्वोपासनत्वाभ्यामसकृदावृत्ता वाक्यान्तरेणोक्तध्रुवत्वविशिष्टा चेत्यर्थः। **प्रतिपादिता**— दर्शनरूपत्वमपि वाक्यकारेणार्थादुक्तमिति भावः। यद्वा—न्यायसाम्यादभिप्रेतमिदमस्माभिः प्रागुक्तमिति। ननु यद्यप्यन्यस्यान्यत्वं न विधातुं शक्यम्; स्मृतिदर्शनयोश्च सामग्रीनियमात् विरुद्धजातीययोरन्यत्रैक्यमसंभवि, तथाऽपि संस्कारमात्रजन्ये स्वप्नज्ञाने अदृष्टविशेषसहकारात्साक्षात्काररूपत्वमिवात्रापि चक्षुर्जन्यत्वासंभवेऽपि तदविनाभूतप्रत्यक्षत्वेऽपि ध्रुवानुस्मृतेर्धीत्वमात्रसाम्यात् दर्शनशब्दोपचारः कथं न स्यादित्यत्राह— **दर्शनरूपे**ति। **प्रत्यक्षतापत्तिः**; न तु साक्षात्प्रत्यक्षत्वम्, असंभवात्। अयं भावः—स्वप्नधीरपि न तावन्मुख्यदर्शनम्, चक्षुर्व्यापाराभावात्। किं तु तत्र बाह्यकरणवृत्तिनिरोधे सति अनन्यसंचारिणा मनसा संस्कारपटिम्ना प्रागनुभूतेषु विशदस्मृतिराधीयते, तदतिरिक्तधीकल्पने अनन्यथासिद्धहेत्वभावात्। तत्र चक्षुराद्यजन्येऽपि तज्जन्यत्वधीः असंसृष्टे संसृष्टधीश्च दोषवशान्मानसभ्रान्तिः। सन्ध्याधिकरणानुरोधे तु संस्कारमात्रजन्यत्वाभावादसङ्कीर्णं दर्शनत्वम्, अतो न स्वप्ननिदर्शनेन प्रस्तुते प्रत्यक्षत्वक्लृप्तिश्शक्या। धीत्वमात्रेण दर्शनसाम्यादुपचारश्च वाच्यासन्नतमस्तुल्यनुगुणविशेषसिद्धो न युक्त इति।

एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि— ❀ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वामिति। अनेन केवलश्रवणमननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते, तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति; यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवति; यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्— ❀ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति, ❀ प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणात्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति।

ननु * नायमात्मेत्यादौ श्रवणादित्रिकं प्रतिषिध्य अपर्यनुयोज्यस्वतन्त्रवरणमात्रेण तल्लाभ इत्युक्तम्। तस्मात् * दैवमेव वरं मन्ये पौरुषं तु निरर्थकमिति न्यायादुक्तं सर्वं वितथमित्यत्र सूत्रवाक्ययोर्ध्रुवत्वादिविशेषितायाः स्मृतेरुपासनशब्दार्थतयाऽभिप्रेतं भक्तिरूपत्वविशेषणमेव तत्र विवक्षितमित्याह— **एवमि**ति। सामान्यशब्दानां सूत्राद्युक्तेन विशेषविश्रमप्रकारेणेत्यर्थः। **प्रत्यक्षतापन्नामि**त्येतत् वक्ष्यमाणस्य भक्त्यात्मकत्वस्य न्यायसाम्यसूचनार्थम्। अहेतुकवरणमयुक्तम्, तस्यादिमत्त्वे निर्हेतुकत्वायोगात्। अनादित्वे मुक्तेरप्यनादित्वापातात्, मुक्त्युपायविधेश्च वैयर्थ्यप्रसङ्गात्, जीवव्यापाररूपभेदविशेषनिषेधपरस्य वैषम्यनैर्घृण्यनिषेधकसूत्रादेः विरोधापत्तेश्चेत्यभिप्रायेण **अपवर्गसाधनभूता**-

त्वमित्युक्तम्। फलान्तरार्थोपास्तिपरत्वशङ्का चानेन निरस्ता। परो ह्यात्माऽत्र लभ्य इष्यते। **विशिनष्टि**—न तु प्रमाणप्राप्तं निवर्तयतीत्यर्थः। अन्यथा उपायान्तरविधानवैयर्थ्यम्, * मत्वा धीरो न शोचति, * प्रज्ञानेनैनमाप्नुयादिति पूर्वापरविरोधश्च स्यात्। **नायमात्मे**त्यादौ श्रुतशब्देन श्रवणमुपात्तम्। मेधाशब्दश्च ध्यानार्थः स्यात्; * मेधामनीषे मा विशतां समीची भूतस्य भव्यस्यावरुद्ध्यै इति श्रुत्यनुसारात्। * धीर्धारणावती मेधेति च निघण्टुः। पारिशेष्यात्प्रवचनशब्दः श्रवणध्यानसहोक्तमननपरः; प्रोच्यतेऽनेनेति करणव्युत्पत्तेः। शिष्यमननार्थगुरुप्रवचनेन वा मननलक्षणा; प्रवचनहेतौ वा तत्कार्योपचारः। ननु स्वरूपनिषेधकस्य कथं तद्विधायकत्वम्; अत्र च क्वचिदङ्गाङ्गिप्रतिषेधाद्वैयर्थ्यम्, क्वचित्तु विहितप्रतिषेधाद्विरोध इति शङ्कायां श्रवणादिवैयर्थ्यप्रसङ्गं च परिहरन्वाक्यस्य ध्रुवानुस्मृतिविशेषकत्वं व्यनक्ति— **अनेने**ति। यथा * न पृथिव्यामग्निश्चेतव्यः इत्यत्र निषेधस्य हिरण्यवैकल्यपरिहारार्थतया हिरण्योपहितत्वविधौ तात्पर्यम्, तथाऽत्रापि पृथिव्या इव श्रवणादेर्यथार्हं प्रणाड्या साक्षाच्चावश्यंभावित्वात्प्रीतिवैकल्यनिषेधमुखेन त्रिष्वपि प्रीतिविशेषविधौ तात्पर्यमित्यभिप्रायवान् **केवल**शब्दः। यद्वा * नान्तरिक्षे न दिवीत्यभागिप्रतिषेधेन सह पठितः * न पृथिव्यामिति प्राप्तप्रतिषेधः यथा केवलपृथिव्या अन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधानत्ववैशिष्ट्यविधौ विश्राम्यति; तथाऽनुपायभूतश्रवणमननाभ्यां सहोपायभूतनिदिध्यासनस्य प्रतिषेधः केवलनिदिध्यासनस्य श्रवणादिवदनुपायत्वोक्तिमुखेन भक्त्यात्मकत्वविधौ पर्यवस्यतीति। अनियमेन यथेष्टं स्वतन्त्रवरणशङ्काव्युदासाय यद्वृत्तानूक्तिवलेन नियतविषयवरणव्यक्त्यर्थं **यमेवे**त्युपादानम्; वैषम्यादिदोषानाघ्रातसर्वसुहृद्वरणस्य नियतविषयत्वायोगात्। * यदाग्नेयः इति वाक्यस्थभवतिवत्, **वृणुत** इत्यस्य प्रयोजकव्यापारविधौ तात्पर्यं लप्स्यमानवरणप्रयोजकव्यापारवता भवितव्यमिति। ननु हिरण्योपधानस्य पृथिवीस्थत्वावश्यंभाववदेतद्वाक्यस्थयद्वृत्तव्यङ्ग्यवरणीयताहेतुगुणविशेषस्य ध्रुवानुस्मृतिसंबन्धनियमादृष्टेर्न तस्यास्तेन वैशिष्ट्यलाभ इत्यत्राह— **प्रियतम** इति। फलान्तरार्थभक्त्याभासव्यवच्छेदार्थं तमप्प्रयोगः। हिः शास्त्रतो लोकतश्च परावरपुरुषस्वभावप्रसिद्धौ। नन्वेतावताऽपि वरणीयस्य प्रियतमत्वापादकः कश्चिदन्यो व्यापारस्सिध्यतु; ध्रुवानुस्मृतेर्विशेषितत्वं तु न लब्धमित्यत्राह— **यस्ये**ति। **स एव**—न सुकृतान्तरवान्, न च केवलध्रुवानुस्मृतिमान्, नापि निर्व्याजप्रियः कश्चिदिति भावः। **अस्य**— * समोऽहं सर्वभूतेष्वित्यादिना स्वेनैवोक्तस्वभावस्येति यावत्। अयं भावः— अन्येषां स्वप्रीतिहेतुव्यापाराणां स्वलाभार्थवरणहेतुत्वाभावात् स्वविषयनियतात्यन्तिकप्रीतिमानेव परस्य प्रियतमो भवन् स्वप्रापणाय वरणीयस्स्यात्। इयं च निरतिशयप्रीतिरूपा बुद्ध्यवस्था मुक्तिसमुत्पादने विकल्पसमुच्चयविद्वेषिणी अनन्यगतिकप्रमाणवशान्मुक्तिसाधनतया स्थापितध्रुवानुस्मृतिमाश्रयन्ती तां विशिनष्टीति। ननु स्वशेषतया नित्योपात्तस्य किमद्य वरणम्; सर्वव्यापितया नित्यप्राप्तस्य किं वेदानीं लभ्यत्वम्; प्रियतम एवास्य वरणीय इति च कुतस्त्यमित्यत्र तत्सर्वमुपबृंहणेन स्पष्टयति— **यथे**ति। **अयम्**— भगवति निरुपाधिकभोग्यताविर्भावेन निरतिशयप्रीतिमान्। अत एव **प्रियतम आत्मानं प्राप्नोति**— रमते स्वात्मनि। प्रसेदुषस्तस्यापवर्गाव्यवहितहेतुभूतबुद्धियोगादिप्रदानेऽन्येषामिव परसापेक्षत्वं नास्तीति व्यक्त्यै **स्वयमेवे**त्युक्तम्। उपासितुरचिन्त्यमेव हितमाचरतीति वा सूच्यम्। **भगवतैव**— * यमेवैष वृणुत इति वरणकर्तृतया श्रुतेनैव। एतेन स्वतस्सर्वज्ञतया परमाप्तत्वमपि व्यज्यते। **सततयुक्तानाम्**— सततयोगमाशंसमानानाम्; * आशंसायां भूतवच्चेति क्तः। सततयुक्तानां भजतामित्यनेनैवोपासकबुद्धेः प्रीतिरूपत्वस्य सिद्धत्वात् प्रीतिपूर्वकं ददामीत्यन्वयः।

**उपचारापचाराभ्यां प्रीतिद्वेषौ परस्य न। निमित्तशक्त्या तु फलं तयोरिति नयोज्झितः ॥ ३१३**
**वरणं चोन्निनीषा चाधोनिनीषा च शासितुः। श्रुतत्वादनिषिद्धानि तत्तत्कर्मफलार्पणात् ॥ ३१४ ॥**

कस्यचिद्वरणीयतानिदाने प्रियतमत्वे श्रुत्यभिप्रेतः सततयुक्तशब्दोक्तश्च हेतुस्तत्रैव विवृत इत्याह—**प्रियो हीति**। अत्यर्थम्—अत्यभिधेयम्; मयाऽपि दुर्वचमिति भावः। अत्र वरणं मामयं प्राप्नुयादिति अमोघस्सङ्कल्पः। अत्र लभ्यत्वं चास्य * विवृणुते इत्यनेनाभिप्रेतम्; निवृत्तप्रतिबन्धनिरुपाधिकानुभवविषयत्वमित्यर्थादुक्तं भवति। अत्र सोपबृंहणयाऽपि श्रुत्या ध्रुवानुस्मृतेः प्रीत्यात्मकतया विशेषितत्वमनभिव्यक्तं व्यनक्ति—**अत** इति। लोकानुसारात्, उपात्तश्रुतिस्मृतितात्पर्यवृत्त्या चेत्यर्थः। **अत्यर्थप्रिया**—अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना अयुक्तदशायामपि * या प्रीतिरविवेकानामिति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता। विषयविशेषायत्तं हि सर्वत्र विषयिणो ज्ञानस्य प्रीतिरूपत्वं प्रीतिविषयत्वं चेत्यभिप्रायेण स्मर्यमाणात्यर्थप्रियत्वोक्तिः। वरणविवरणयोः कर्तुः तत्कर्मणो वरणीयात् आर्थी प्राकरणिकी व्यावृत्तिः **परेणे**ति दर्शिता।

**एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अत एव श्रुतिस्मृतिभिरेवमभिधीयते—* तमेव विदित्वाति मृत्युमेति * तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते। * नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥ भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन!। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप॥ * पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया। इति।**

ननु * शेमुषी भक्तिरूपेति पुराणादिप्रसिद्धं भक्तेरुपायत्वं प्रक्रान्तम्। * ध्यानोपासनादिशब्दवाच्यमित्यत्र आदिशब्देन भक्तिशब्दोऽपि विवक्षितः, उपात्तासु श्रुतिषु तु न तद्गीरस्ति; अतः कथमविरोधस्तत्राह—**एवंरूपे**ति। उक्तशृङ्खलाक्रमेण विशेषितेत्यर्थः। प्रतिज्ञामात्रमेतदित्यत्राह—**उपासने**ति। ध्रुवानुस्मृतेः प्रीतिरूपत्वेन उपासनशब्दवाच्यतया च विशेषणात्, * स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयत इति तल्लक्षणानुरोधात्, * सेवा भक्तिरुपास्तिरिति पर्यायपाठात् शब्दभेदेऽप्यैकार्थ्यसिद्धौ विधेयभेदाभावान्न विरोधप्रसङ्ग इति भावः। वेदनादिशब्दानां भक्तिपर्यवसायित्वमुपबृंहणोपबृंहणीययोः मिथः प्रतिक्षेपकत्वप्रसङ्गरूपयुक्त्यन्तरेण दृढीकृतमित्याह—**अत** इति। इदं फलरूपहेतुपरम्; वेदनोपासनादिशब्दैर्भक्तेरेवोक्तत्वादित्यर्थः। अन्यथा श्रुतीनामिव श्रुतिस्मृत्योरपि मिथो विरोधस्स्यादित्यभिप्रायवानेवकारः। **एवम्**—श्रुतौ वेदनव्यतिरिक्तः, स्मृतौ तु भक्तिव्यतिरिक्तश्चरमोपायो नास्तीत्युक्तप्रकारेणेति यावत्।

ननु, * तमेव विदित्वाति मृत्युमेतीति श्वेताश्वतरवाक्यं शिवादिशब्दसमभिव्याहाराद्रुद्रविषयम्; * तमेवं विद्वानिति तु महापुरुषविषयम्; तत्र चात्र च * नान्यः पन्था अयनायेत्याम्नातम्; अतो मिथो व्याघात इति मन्दशङ्कापनुत्त्यै तदुभयवाक्योपादानम्। अयं भावः—* वेदाहमेतं पुरुषं महान्तमित्याद्यैः पूर्ववाक्यैः * महान् प्रभुर्वै

पुरुषस्सत्त्वस्यैष प्रवर्तकः, * सहस्रशीर्षा पुरुषः इत्याद्यैरुत्तरवाक्यैश्च सत्त्वप्रवर्तकस्यानन्यपरपुरुषसूक्तोदितस्य महापुरुषस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञया शिवमहेश्वरादिशब्दानां तत्परत्वावश्यंभावेन ऐन्द्रीन्यायेन रूढिपरित्यागस्य न्याय्यत्वात्, * सर्वश्शर्वश्शिवः स्थाणुरिति भगवन्नामपाठात्, शिवशब्दस्य च मङ्गल्यादौ रूढत्वात्, प्रसिद्धिप्रकर्षस्यालोकरीत्या नैष्फल्यात्, अनन्यथासिद्धनारायणानुवाकसौबालमहोपनिषदादिप्राबल्यात् * शाश्वतं शिवमच्युतमितिवन्महापुरुषविषयत्वावश्यंभावात्, * तस्मात्सर्वगतश्शिवः इत्यस्यारम्भे * सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः इति सहस्रशीर्षत्वादिप्रत्यभिज्ञानात्, * सर्वव्यापी च भगवानिति भगवच्छब्दस्य महापुरुषरूढत्वस्थापनात्, निगमनस्य प्रस्तुतशेषतया तदविरोधेन नेयत्वाच्च विगीतं पुरुषसूक्तोक्तविषयमेवेति । अत्र *नाहमित्यादेः वेदतपःप्रभृतीनां साक्षादुपायत्वाभावे तात्पर्यमिति न तद्विरोधः । * भक्त्या त्वनन्यया इत्यादेश्च पर्वभेदवत्तैव भक्तिरूपज्ञानेन ज्ञानान्तरादेः साध्यत्वे तात्पर्यान्नात्माश्रयादिप्रसङ्गः । * पुरुषः स परः इत्याद्युपादानस्य न पूर्वेण कृतकरत्वम्; तदप्रतिपन्नख्यापनात् । अयं खल्विहाभिप्रायः——* तमेवं विद्वानित्यत्र * आदित्यवर्णं तमसः परस्तादिति यत्पूर्ववाक्ये श्रुतं तदेव * अणोरणीयांसमनुस्मरेद्यः इत्यारस्य अचिन्त्यरूपत्वादित्यवर्णत्वोक्तया प्रत्यभिज्ञापितम् । *धाता पुरस्तादित्युक्तं च * सर्वस्य धातारमिति दर्शितम् । तत्र श्रुतौ विदिनोक्तमिहानुस्मरतिना विवृतम् । * भक्त्या युक्त इति चानन्तरं विशेष्यते । अतो भक्तिरूपा ध्रुवानुस्मृतिः श्रुतौ विदिना विधीयत इति गम्यते । यद्यप्यत्र यद्वृत्तावृत्तिवशात् पुरुषार्थान्तरसाधनविषयत्वमेव युक्तम्; तथाऽपि समानन्यायतया मोक्षार्थविदेरपि भक्तिविश्रमसिद्धिस्स्वीकार्या। तत्रैव च * पुरुषस्स परः इत्यादिना मोक्षार्थश्रौतविदेरपि तद्विशेषपरत्वं व्यञ्जयति । * यमेवैष वृणुते तेन लभ्य इति श्रुतिसम्पुटनिगूढं चात्रोद्घाटितम् । अत्र हि ज्ञानिनां प्राप्यान्तरवत्प्रापकान्तरमपि सविशेषणोक्त्या व्युदस्तम् । श्रुत्युक्तप्रत्यभिज्ञया प्राप्यैक्यवत् उपायैक्यमपि हि युक्तम् । अतो विदिस्थाने ध्यायत्युपासिवद्भजतिरप्यत्र विशेषकतया प्रयुक्तः ।

**पुंसूक्तभगवद्गीते प्रमाणतमसंमते । न मिथो बाधमर्हेतां नैकार्थ्ये स्मृत्यनादरः ॥ ३१५ ॥**

ननु * भक्त्या मामभिजानातीत्यादौ भक्तिसाध्येन ज्ञानेन परप्राप्तिर्गीता; मैवम्, तत्रापि * ततो मां विशते इति भक्तेरेव प्राप्तिहेतुत्वेन परामर्शात्; अन्यथा * ततः इत्यस्य नैरर्थ्यात् । अतो * भक्त्या प्रवेष्टुमित्युक्त्यैकार्थ्यम् ॥

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादिकर्माणीति * यज्ञादिश्रुतेरश्ववदित्यभिधास्यते। यद्यपि * विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते; तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्य आप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च — * आप्रयाणात्तत्रापि हि दृष्टम्, * अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्, * सहकारित्वेन चेत्यादिषु ।

ननु उपात्तश्रुतिस्मृतिस्वारस्यात् वेदानुवचनयज्ञादिनिरपेक्षा भक्तिरेव मुक्तिसाधनमस्तु; ततश्च न कर्मविचारवृत्तत्वं सिध्येदित्यत्राह— **एवंरूपाया** इति । सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धाया

इत्यर्थः। श्रुतिसूत्रयोः विविदिषाविषयत्वं प्रकरणतोऽर्थतश्च प्रत्यूढमित्यभिप्रायेण **श्रुत्यनुस्मृतेः** इत्युक्तम्। **अभिधास्यते**—सूत्रकृता; अस्माभिश्च समर्थयिष्यत इति भावः। **विविदिषन्तीत्यस्य** सन्निधौ * मनसैवानुद्रष्टव्यमिति विशदवेदनं विहितम्; * एतमेव विदित्वा मुनिर्भवतीति स्तुतम्। अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्तराकाङ्क्षा; न तु तदुभयरहिताया विविदिषायाः। विविदिषासाधनत्वेन विधानं च दुर्वचम्। न हि * यागेन स्वर्गं जिगमिषतीत्युक्ते यागस्य जिगमिषासाधनत्वं स्यात्; इह च वेदनेच्छाविरहे विविदिषाकामत्वस्यासिद्धिः, तत्संभवे तदुपायानपेक्षणं, वेदनेच्छया च विविदिषाकामना, तया यज्ञाद्यनुष्ठानं, तेन विविदिषोत्पत्तिरिति चक्रकं स्यात्। अत्र पर्वसङ्कोचेन आत्माश्रयम्, अन्योन्याश्रयं च केचिदूचुः। न चात्राज्ञातसुकृतनीतिः; सावधानकृच्छ्रसाध्यत्वाद्यज्ञादेः। अतः * असिना जिघांसतीत्यादिष्विवानुपपत्त्या नेच्छासाधनत्वेनान्वयः।

**साध्येच्छया विना क्वापि साधनेच्छा न सिध्यति। अतो विविदिषार्थत्वायोगाद्विद्यर्थता त्विह ॥३१६॥**
**अपवर्गाभिलाषात्तत्साधनेच्छाऽपि सिध्यति। अतो वेदनकामस्य युक्तं तत्साधने विधिः ॥ ३१७ ॥**
**भक्तिरत्र फलत्वेन प्रकृत्या परिमृश्यते। अधिकारतया ख्याप्या तदिच्छा प्रत्ययेन तु ॥ ३१८ ॥**

ननु अदृष्टस्य सांसारिकसर्वकार्यहेतुत्वमेवैष्टव्यम्; अन्यथा विषमसुखदुःखादिहेतुभूतविचित्रेच्छोत्पत्तेः कदाचित्तदनुत्पत्तेश्चायोगात्। अत इच्छामात्रस्य साध्यत्वे वेदनेच्छाया अपि तथात्वात्तत्खण्डनं सर्वतन्त्रविरुद्धं स्यात्। अत्रैवं प्रत्युक्तं **श्रुतप्रकाशिकायाम्**— * भोगादृष्टोद्बोधितपूर्ववासनासचिवात् विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेरिति।

**भोगार्थेन ह्यदृष्टेन पुंभिरप्रार्थितान्यपि। अन्तरस्थानि कार्याणि स्युः फलप्रदबुद्धितः ॥ ३१९ ॥**

तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैः यज्ञादिभिः तद्भावयेदिति प्रयोगविधिः। ननु भक्त्यर्थोपायविधावपि त्वदुक्तचक्रकादिप्रसङ्गस्स्यात्। न स्यात्— भक्तेरुपचयम् अनुवृत्तिं चापेक्ष्य तद्विधानात्; **एवं** वेदनसाधनविधावपि **न विरोधः**; सामान्यतो विदितेऽपि विशेषतो बुभुत्सया प्रवृत्तेः। न च विशेषेऽपि विदिताविदितविकल्पानुपपत्तिरिति वाच्यम्; तत्रापि बुभुत्साप्रश्नादिघटिते वादादौ प्रवृत्तेः; अन्यथा पामरपरीक्षकविरोधात्। अथैवमुत्पन्नविविदिषस्य तदनुवृत्तिकामनया तदुपायविधिरित्युच्येत; तत्रापि फलवैषम्याभावात् तदन्वारोहात् परोक्तवेदनस्य प्रागेव निरस्तत्वात्। **स्वोक्तबह्वाकारविशिष्टवेदनेच्छानुवृत्त्यै** यावज्जीवं कर्मणोऽनुष्ठेयत्वमाह— **यद्यपीति**। परोक्तविविदिषामात्रसाधनत्वे त्वन्वारोह इति पक्षे तु विविदिषानुवृत्त्या प्रत्युत्तरं कथंचिन्नेयम्। **तस्यैव**— विविदिषागोचरस्यैव। न ह्येतद्वेदनं यागादिवत् अपूर्वादिवद्वा सकृदुत्पन्नं सान्तरं वा साधनमित्यभिप्रायेण **ध्यानरूपत्वो**क्तिः। **अहरहरित्यादिकं** निरन्तरस्याप्येकाहसाध्यत्वं दर्शपूर्णमासादिवद्दिवसान्तरितसाध्यत्वं च व्यवच्छिनत्ति। आप्रयाणादनुवृत्तिवचनं संवत्सराद्यवधिकप्रतिदिनकर्तव्यत्वव्युदासार्थम्। **अभ्यासाधेयातिशयस्येत्यनेन** दृष्टोपकारश्चास्तीति व्यज्यते। **तदुत्पत्तये**— अनुवृत्तेरिष्टतया यज्ञादिसाध्यत्वेनाभिमतविविदिषोत्पत्तय इत्यर्थः। **सर्वाणीत्येतद्यथार्हं** विभाज्यम्। **यावज्जीवमित्यनेन** जन्मान्तरशतेत्यादेः प्रागुक्तस्योपालम्भः। विविदिषायां जातायामपि मध्ये कर्मणां त्यागो न युक्तः; विविदिषाविच्छेदे वेदनविच्छेदप्रसङ्गात्। न हि सकृदुत्पन्नया विविदिषया वेदनानुवृत्तिः सिध्येत्; सकृद्बुभुक्षयेव भोजनानुवृत्तिः। प्राचीनसुकृतभूम्नाऽनुवृत्तिसंभवेऽपि पाक्षिकविघ्नशान्त्यै प्रवर्तितव्यमिति भावः। पूर्वं वेदनस्य ध्यानोपासनादिरूपत्वे सूत्र

दर्शितम्; अथ अहरहराप्रयाणादनुवर्तनीयत्वे तद्वदेव तदङ्गकर्मानुवृत्तौ च सूत्राणि सन्तीत्याह— **वक्ष्यति चेति**। सूत्रैरेव तत्तद्विषयवाक्यान्यपि सूच्यन्ते। एतेन स्वोक्तानभ्युपगमे सूत्रादिविरोधो दृढीकृतः। * आप्रयाणात्तत्रापि हि दृष्टमित्यनेनैव कर्मणो यावदायुरनुष्ठेयत्वं सिद्धम्; * स खल्वेवं वर्तयन् यावदायुषमिति वाक्यस्य दृष्टमित्यनेन विवक्षितत्वात् तत्र च * कुटुम्बे शुचौ देशे इत्याद्युक्तधर्मानुवृत्तेः * एवं वर्तयन्नित्यत्रानूदितत्वात्। * यावज्जीवमग्निहोत्रं जुहोतीति नियतस्यापि विद्याङ्गत्वज्ञापनाय * अग्निहोत्रादिसूत्रोपादानम्। * विहितत्वाच्चाश्रमकर्मापीत्याश्रमाङ्गतयोक्तस्य कथं विद्यार्थत्वमित्यत्र विनियोगपृथक्त्वव्यञ्जनाय * सहकारित्वेन चेति सूत्रग्रहणम्। आदिशब्देन * सर्वथाऽपि त एवोभयलिङ्गादिति कर्मणां विद्याश्रमाङ्गत्वे तन्त्रानुष्ठानसूचकसूत्रसंग्रहः।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह— * तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति। विवेकादीनां स्वरूपं चाह— * जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेक इति। अत्र निर्वचनम्— * आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति। * विमोकः कामानभिष्वङ्ग इति। * शान्त उपासीतेति निर्वचनम्। * आरंबणसंशीलनं पुनःपुनरभ्यास इति। निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण— * सदा तद्भावभावितः इति। * पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियेति; निर्वचनम्— * क्रियावानेष ब्रह्मविदां वरिष्ठः, * तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति च। * सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानीति। निर्वचनम्— * सत्येन लभ्यः, * तेषामेवैष विरजो ब्रह्मलोक इत्यादि। देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसाद इति। * तद्विपर्ययोऽनवसादः। निर्वचनम् — * नायमात्मा बलहीनेन लभ्य इति। * तद्विपर्ययजा तुष्टिरुद्धर्ष इति। ताद्विपर्ययोऽनुद्धर्षः; अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि * शान्तो दान्त इति। एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति।

अथ * विरोधादप्रमाणत्वात् इत्यादि पूर्वपक्षहेतून् सूत्रकाराभिप्रायविदां वचसाऽपि परिहरति—**वाक्येति**। एवकारेण शमादेः यज्ञादेश्च विरोधाभावः स्वोक्तसंवादश्च ख्याप्यते। अथ वा न साधनचतुष्टयेन, न च विवेकादिष्वन्यतमेन, कर्ममात्रेण, शमादिमात्रेण चेत्यर्थः।

**निषिद्धकाम्यव्यर्थेभ्यो निवृत्तस्य शमादिभिः। स्वाश्रमोचितविद्याङ्गप्रवृत्तिर्न विरुध्यते ॥ ३२० ॥**

अविरोधेन संभूय साधनत्वव्यक्त्यै वाक्यमुपादत्ते— **तल्लब्धिरिति**। अत्र तच्छब्दार्थो ध्रुवानुस्मृतेः इत्यनेन दर्शितः। * उपासनं स्यात् ध्रुवानुस्मृतिरिति तत्र प्रकृतं हि परामृश्यते। विवेकादीनां सप्तानामेकस्मिन्

कार्येऽन्योन्यसापेक्षत्वरूपेणेतरेतरयोगेन समप्रवृत्तिनिवृत्तिरूपाणामाश्रमभेदेन व्यवस्था शक्येत्यपि कतिपयशङ्का च व्युदस्ता। **संभवात्**—एकत्र योग्यतया विरोधप्रसङ्गाभावात्। **निर्वचनात्**—अतीन्द्रियेऽर्थे निश्चायकमानतया निष्कृष्टाद्वचनात्, युक्तिसहितादागमादिति यावत्। इह विद्यायाः कर्मजन्यत्वसिद्ध्यर्थत्वयोगात्ताः के विवेकादयः कथं च तेषामविरोध इत्यत्र वाक्यकारेणैव व्याख्यातत्वमाह— **विवेकादीनामिति**। **स्वरूपं च** उद्दिष्टानां मिथो व्यावर्तकरूपं चेत्यर्थः। **जातिदुष्टम्**—लशुनादि। **आश्रयदुष्टम्**—शूद्रान्नादि। **निमित्तदुष्टम्**—केशाद्युपहतम्। तादृशदोषराहित्येनाशुद्धेभ्यो विभक्तादन्नात् सेन्द्रियस्य देहस्य रजस्तमोभिभवरहितसत्त्वोन्मेषापादनेन शुद्धितः पृथक्करणं विवेक इति प्रदर्शकं वाक्यमाह— **जातीति**। **अत्र निर्वचनमिति** भाष्योक्तिः। **आहारशुद्धौ सत्त्वशुद्धिरिति** निर्वचने सत्त्वमन्तःकरणं सत्त्वगुणो वा। तस्य शोधनीयसर्वोपलक्षणतया वाक्ये कायोक्तिः; साऽपि करणवर्गोपलक्षिका। * आयुस्सत्त्व इत्यादिभिः शुद्धाशुद्धाहारश्च गीतः। विमोकशब्दस्यात्र * कामः क्रोधस्तथा लोभ इत्याद्युक्तत्याज्यवर्गानुपश्लेषपरतया **कामानभिष्वङ्ग** इति मूलघातोक्तिरित्यभिप्रायः। कामोऽत्र तीव्रतमसङ्गजन्यः; * सङ्गात् संजायते काम इत्युक्तेः। तेनाभिष्वङ्गोऽनुवृत्तदृढग्रहणम्; तदभावे * कामात् क्रोधोऽभिजायत इत्याद्युक्तपरंपरानिवृत्तिः। * शान्त उपासीतेत्यत्र शान्तशब्दः करणव्यापारनिवृत्तिमुखेन कामादिराहित्यपरः। **आरंबणम्**—योगमारुरुक्षोः चित्तालम्बनं शुभाश्रयरूपम्। विवरणे तु * ज्ञानालंबनमुपास्यमित्युक्तम्। तस्य संशीलनम् अनुकूलतया शीलनम्। पुनः पुनरित्येतदङ्गप्रकरणात् * व्यापृतेनापि मनसेत्यादिस्मृत्या चोत्थानकाले योज्यम्। अत एव नात्माश्रयशङ्का। इदं च योगानुगुणवासनाप्रचयार्थं कषायापाकरणार्थं च। * बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरिति श्रौतनिर्वचनस्यास्पष्टार्थतया तदुपबृंहणं दर्शितमित्यभिप्रायेण स्मार्तोक्तिः। अत्र **भाष्यकारो** ब्रह्मनन्दिवाक्यव्याख्याता **द्रमिडाचार्यः**। तेनान्येषु श्रुतिरुदाहृता, अत्र तु स्मृतिः। अथ वाऽन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता, अत्र तु भाष्यकारेणैव स्मृतिरिति। यद्यपि * यं यं वाऽपि स्मरन्निति प्रक्रमात् सदेत्यादिकं सामान्यम्; तथाऽपि * तस्मात्सर्वेषु कालेषु मामनुस्मर इत्युत्तरवाक्यानुसारेण प्रकृतार्थत्वात्तदूहः। पञ्चमहायज्ञोपादानं * गृहस्थोऽपि विमुच्यत इति स्मृतिसूचनार्थम्। आदिशब्देनाश्रमान्तरधर्माणामपि संग्रहः। यद्यपि काम्ये सकलाङ्गोपसंहारः प्राप्तः; तथाऽपि अत्र वचनाद्यथाशक्त्यनुष्ठानं पर्याप्तमित्यभिप्रायेण **शक्तित** इत्युक्तम्। * तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिमिति हि स्मर्यते। * क्रियावानेष ब्रह्मविदां वरिष्ठ इत्यत्र सन्प्रयोगाभावेन कर्मणां विद्यान्वयस्फौट्यात् * विविदिषन्तीत्येतदपि नियमितम्। इदं च वाक्यं क्रियाया अङ्गत्वेन विद्यापौष्कल्यहेतुत्वपरम्; न तु निष्क्रियब्रह्मवित्सद्भावसूचकम्, यावज्जीवं क्रियानुवृत्तेरुक्तत्वात्। मत्वर्थीयस्य भूमपरतया विधुरादिब्रह्मविद्यावृत्तिपरं वा। तेषां हि वर्णधर्ममात्रयोगित्वादवरत्वम् * अतस्त्वितरज्ज्यायो लिङ्गाच्चेति सूत्रसिद्धम्। अत्र * मन्त्रेषु कर्माणीत्यारभ्य * तान्याचरत नियतं सत्यकामा इति श्रुतिरप्यनुसन्धेया। क्रियाशब्दस्य चित्तसमाधानादिमात्रपरत्वव्यावृत्त्यै * तमेतमित्याद्युपात्तम्। **अनाशकेन—अनशनेन**। अत्र गोबलीवर्दनयात्तपश्शब्दसङ्कोचः। यद्वा नाशकादन्येनेति; यज्ञाद्यपि भोगार्थं चेत् संसारात्मकनाशप्रदमेव श्रुत्यादिसिद्धम्। भूतहितं यथार्थं च वाक्यं सत्यम्। आर्जवम्—करणत्रयस्यैकरूप्यम्। दया—स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा। दानम्—न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम्। तेन लोभनिवृत्तिर्व्यज्यते। * दैप् शोधने इति धातौ स्वपक्षादिशोधनं वा। * दो अवखण्डने इत्यत्र पराहङ्कारखण्डनं वा, * निगृह्णीयाद्यथाशक्ति देवतागुरु-

निन्दकानिति स्मृतेः * न विगृह्य कथां कुर्यादित्यस्य कामकारविषयत्वात् । अशास्त्रीयप्राणिपीडावर्जनमत्राहिंसा ; * अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति स्मापनात् । अभिध्या—परप्रतिकूलचिन्ता ; अभिचारादौ ह्यभिः प्रातिकूल्यार्थः, परकृतद्रोहे निरन्तरस्मृतिर्वा, वितथाभिनिवेशो वा, परस्वे ग्राह्यत्वधीर्वा ; तन्निवृत्तिरनभिध्या । एवं कतिपयोपादानमार्जवदयादिसहपठितानामन्येषामप्युपलक्षणम् । **इत्यादीत्यनेन** * अमानित्वमदम्भित्वं * दया सर्वेषु भूतेषु, क्षान्तिरनसूया इत्यादेः संग्रहः । अनवसादः अर्थात् सिध्येदिति कृत्वा सहेतुकं तत्प्रतियोगिस्वरूपविषयं वाक्यमुपादत्ते—**देश** इति । शोकनिमित्तं वस्तु **शोकवस्तु ;** शोचत्यनेनेति करणव्युत्पत्त्या वा शोकशब्दः । आदिशब्दो भीतिहेतुपरः , भूतभाव्यनिष्टगोचरधीरूपे दुःखे शोकभये । **वैगुण्यात् अनुस्मृतेश्चे**त्यनयोर्मनसोऽभास्वरत्वमित्यनेनान्वयः । अभास्वरत्वम्—भास्वरत्वाभावः तद्विरोधि वा । तज्जनितं तदभास्वरत्वम् । तत्स्वरूपाभिव्यक्त्यै तद्विवरणवाक्यस्याकाङ्क्षायां मध्ये * तज्जं दैन्यमिति वाक्यान्तरम् । तस्यां जातं तस्मिन्मनसि वा जातमभास्वरत्वं दैन्यम्, उपयुक्तप्रकाशनाशक्तत्वमित्यर्थः । यद्वा मनसो यदभास्वरत्वं, यच्च तज्जं दैन्यं तदुभयमवसाद इति योज्यम् । **तज्जम्**—तादृशदयाविशेषाज्जातमित्यर्थः । अस्ति हि पुंसां परदुःखदुःखित्वादि भास्वरत्वविरोधि मनसो दैन्यम्, तज्जं च शोकादिकमिति वा नेयम् । भास्वरत्वमिह प्रकाशकत्वम् ; तदभावः । * तज्जं च दैन्यमवसाद इत्यत्र * तद्विपर्ययोऽनवसाद इति वाक्यशेषो भाष्योक्तः, वाक्ये तु शिष्याणामूहशक्तिसंपत्त्यै तदनुक्तिः । **बलहीनेन**— * समदुःखसुखं धीरमित्युक्तमनोबलरहितेनेत्यर्थः । **तद्विपर्ययजा**— देशादिगुणैर्भूतभाविसुखहेतुधिया बन्धुसुखेन च जातेत्यर्थः । उद्धर्षोक्तावपि पूर्ववत्तद्विपर्ययोऽनुद्धर्ष इति उक्तत्वाद्वाक्यानुक्तं भाष्ये दर्शितम् । * यदृच्छालाभसंतुष्टः, * संतुष्टः सततं योगी, * स्वाध्यायशौचसंतोष इत्यादिविरोधमाशङ्क्याह— **अतिसन्तोष** इति । असंतोषवदतिसंतोषोऽपि विषयान्तरेष्वपि प्रवर्तकतया विरोधीत्यर्थः । इदं चोद्धर्ष इत्युपसर्गेण सूचितम् । * ऐश्वर्यमदमत्तो हीत्यादिषु तत्तद्दृष्टान्तेषु चास्य विरोधित्वं प्रसिद्धम् । **निर्वचनमपी**त्यत्रापिशब्दस्संभवसमुच्चयार्थः पूर्वनिर्वचनेष्वपि भाव्यः । प्रकृतं कर्मणामुपयोगं निवृत्त्यंशेन तेषामविरोधेन निवेशनं च सूत्रवाक्याभिप्रेतन्यायसमाहारसिद्धं निगमयति—**एवमिति** । एवकारेण परानिष्टत्वं बोध्यते । तत्त्वमस्यादिवाक्यानि वा व्यवच्छिद्यन्ते । तदिह कर्मणः अनुपयोगविरोधप्रमाणाभावा निरस्ताः ।

तथा च श्रुत्यन्तरम्— * विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया—कर्मणा, मृत्युं—ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म, तीर्त्वा—अपोह्य, विद्यया—ज्ञानेन, अमृतं—ब्रह्म, अश्नुते—प्राप्नोतीत्यर्थः ।

अथ मृषावादिना समुच्चयवादिभ्यां चान्यथा व्याख्याता श्रुतिरस्मदुक्तप्रकारमेव व्यनक्तीत्याह— **तथेति** । **चो**ऽवधारणे । श्रुत्यन्तरं च तथेति वाऽन्वयः । **अन्तर**शब्दः सम्प्रत्ययरहितत्वेन स्फुटार्थत्वादङ्गानामङ्गिनिष्पादने द्वारप्रदर्शनात् कर्मणां विध्यन्तानां कण्ठोक्तवेदनकरणकफलभावनानिष्ठतया परमपुरुषार्थविश्रान्तिबोधनाच्च प्रागुक्तवाक्याद्विशेषं व्यनक्ति । **विद्यां चे**त्यादेः परविद्यां तदङ्गभूतां कर्मरूपाविद्यां चानुष्ठेयत्वेन शास्त्रतो यो वेत्तीत्यर्थः । चकारा-

वत्रोक्तसमुच्चयार्थौ। तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेषयोरेव विद्याफलयोर्निवर्त्ययोश्च प्राप्त्युपायविरोधिनोर्ग्रहणम्। **उभयं सह**ेत्यत्राङ्गाङ्गितया तृतीयाध्याये साधयिष्यमाणयोरनुष्ठेययोर्बुद्ध्यारोहणे साहित्यमभिप्रेतम्; न तु समकालतयोपादेयत्वे। वेद्यत्वे हि सहभाव उच्यते; न तु सहिततया वेदनम्। न ह्युत्पत्तिदशायां विरोधिनिरासदशायां च विद्याकर्मणोः सहत्वसंभवः। अत्र * अन्धं तमः प्रविशन्तीत्यादिना * ततो भूय इव ते तमः इत्यादिना च प्रत्येकनिन्दापरत्वम्। चकारः सहशब्दश्च समसमुच्चयस्यापकाविति न भ्रमितव्यम्, तेषामन्यथासिद्धत्वात्। * य उ विद्यायां रता इति कर्मानादरेण विद्योत्पत्त्यर्थोत्साहवन्त इत्यर्थः। कर्मनिरतानां विद्यानिरपेक्षकर्मस्वरूपं तावन्निष्पद्यत एव; न तु तावन्मात्रेण मुक्तिः; विद्यानिरतानां हेत्वभावाद्विद्यैव न संभवति, कुतस्तरां मुक्तिरिति भूयश्शब्दाभिप्रायः। अविद्याशब्दस्यात्र कर्मविषयत्वं प्रकरणेन स्थापयति— **अत्रे**ति। न तु सर्वत्र; * अविद्यायामन्तरे वर्तमानाः, * क्षरं त्वविद्या, * अनात्मन्यात्मबुद्धिर्येत्यादिषु अर्थान्तरे प्रयोगात्। इह तु * आत्मन्येवानुपश्यति, * कुर्वन्नेवेह कर्माणीत्यादिना विद्या तदङ्गं कर्म च प्रकृतम्; तदेवात्राविद्याशब्देन विद्योपयोगज्ञापनार्थमनूदितम्। परव्याख्यायां व्याख्यातौ संशयविपर्ययौ छेत्तुं पदार्थवाक्यार्थौ स्पष्टयति— **अविद्यये**ति। पापस्यानर्थहेतुतया अवयवशक्त्या गौण्या वा मृत्युशब्दबोध्यत्वाय, यज्ञादेर्विविदिषोत्पत्तिविरोधिनिवर्तकत्वव्युदासाय, चोदितज्ञाननिवर्त्यतया श्रुतिस्मृतिशतसिद्धप्राप्तिविरोधिव्यावृत्त्यै च ज्ञानोत्पत्तिविरोधित्वोक्तिः। यादवप्रकाशीयनिर्वाहोऽप्येतेन निरस्तः। यद्यत्र मृत्युतरणं मुक्तिरेव, कथं विद्ययाऽन्यत्साध्यं स्यात्। क्त्वाश्रुतिश्च न घटते; स्वापेक्षया स्वस्य पूर्वत्वायोगात्।

**धीसङ्कोचनिवृत्तिश्चेदविद्याख्येन कर्मणा। धीविकासोऽपि सैवेति न साध्यान्तरसंभवः ॥ ३२१ ॥**
**प्रतिबन्धनिरासश्च साध्यते चेदविद्यया। अमृताप्तिः स्वतस्सिध्येन्नादृष्टान्तरकाङ्क्षिणी ॥ ३२२ ॥**
**स्वतः स्वानुभवाधानप्रवणः प्राणिनां प्रभुः। प्रशान्तप्रतिबन्धानां निरपेक्षं हि कारणम् ॥ ३२३ ॥**

मृत्युशब्दस्य साधारण्यसंभवेऽपि * तमेव विदित्वाति मृत्युमेतीत्यादिस्पष्टार्थबहुश्रुतिस्मृतिबलेन विद्यानिवर्त्यप्राप्तिविरोधिविषयत्वासंभवात्, तत्र च * नान्यः पन्था इति साधनान्तरप्रतिषेधेन कर्मणो विमुक्तिसाधनत्वेन समुच्चेतव्यत्वायोगात्, कर्मणः श्रुत्यादिभिरेव विद्यासाधनत्वस्थापनादिहोपायविरोधिनि कर्मण्येव वृत्तिः। विद्याया इव कर्मणः उत्तराघविरोधित्वाभावात् प्राचीनग्रहणम्। तीर्त्वेत्यस्य स्वरसार्थं त्यक्त्वा प्राप्य स्थित इति परोक्तं क्लिष्टत्वादध्याहाराच्चायुक्तम्। यज्ञादिसत्कर्मणां विविदिषाविरोधितया मृत्युशब्दवाच्यं कर्म तीर्त्वेति गमनिकाऽपि विविदिषार्थविनियोगप्रतिषेधात्प्रत्युक्ता। * एतं सेतुमित्यादिषु गत्यभावात्तरतेः प्राप्तिवचनत्वमित्यभिप्रायेण **अपोह्ये**त्युक्तम्। विद्याशब्दस्य शास्त्रादिष्वपि प्रयोगादिह प्रकृतब्रह्मवेदनविषयत्वं व्यनक्ति—**ज्ञानेने**ति। * एतदमृतम्, * एतदभयम्, * एतद्ब्रह्म, * ब्रह्मविदाप्नोति परमित्यादिश्रुत्यनुसारेणाह— **अमृतं ब्रह्मे**ति। ननु पूर्वम् * अविद्यानिवृत्तिरेव मोक्षः सा च ब्रह्मविज्ञानादेव भवतीति परोक्तमभ्युपगतम्; इह तु * ब्रह्मविदाप्नोतीत्युक्त्या अस्यां श्रुतौ साध्यान्तरं स्वीकृतमिति भाति; मैवम्, अविद्यानिवृत्तिशब्देन ज्ञानसङ्कोचनिवृत्तेः विवक्षितत्वेन भावान्तराभावनयेन सैव ब्रह्मप्राप्तिरिति समानार्थत्वात्। मोक्षशब्दस्वारस्यानुरोधात् * अविद्या कर्मसंज्ञेत्युक्तबन्धककर्मनिवृत्तिविवक्षायां तु तावन्मात्रमेवोपासनसाध्यम्। धीसङ्कोचहेतुनिवृत्तौ सेतुभङ्गस्रोतःप्रवृत्तिनीत्या तादृशेश्वरसंकल्पेन स्वतः प्राप्तो धीविकासः। अतः * विद्ययाऽमृतमश्नुत इत्यनेन प्रतिबन्धनिवृत्तौ विद्यातः सिद्धायां स्वतस्सेत्स्यन्ती ब्रह्मानुभूतिरुच्यत इति न पूर्वापरविरोधः। ब्रह्मप्राप्तेश्च परम-

पुरुषार्थतया काम्यमानत्वेऽपि तत्प्रतिबन्धकनिवृत्त्युपायस्य काम्यवर्गात्पृथगेव व्यपदेशः ।

**प्राप्तितत्साधनानां हि प्रतिबन्धनिवर्तकाः । निवृत्तिधर्माः सर्वेऽपि नैमित्तिकपदे स्थिताः ॥** ३२४

अत्र करणविभक्त्यन्तकर्मज्ञानशब्दाभ्यां * कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः, * कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इति स्पष्टार्थोपबृंहणार्थः सूच्यते । तेन च मृत्युशब्दस्यात्रोपायविरोधिविषयत्वं वेदानुवचनादीनां * विविदिषन्तीत्यत्र प्रकृत्यर्थेनान्वयः समुच्चयवादनिरासश्च सिध्येत् । कषायस्य पापस्य तज्जन्यरागादेर्वा । पक्तिः, पच्यतेऽनेनेति पाकनिमित्तम्, गम्यतेऽनेनेति गतिः । ततो ज्ञानम्—न तु विविदिषा, नापि मुक्तिः । प्रवर्तते—उचितविषये प्रकृष्टवृत्तिमद्भवतीत्यर्थः ।

मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरत् विहितं कर्मैव । यथोक्तम्— * इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ इति ।

आस्तां प्रकरणम् । अस्मिन्नेव **वाक्ये** कर्मणां विद्याङ्गत्वे साधारणानामविद्यादिशब्दानामस्मदुक्तपदार्थनियमे च निर्बाधः स्वारस्यप्राप्तो वस्तुसामर्थ्यरूपो हेतुर्लक्ष्य इत्यभिप्रायेणाह—**मृत्युतरणे**ति । **प्रतीते**ति हेतुगर्भम् । **विद्येतरदि**त्येतत् अत्रत्याविद्याशब्दनिरुक्तिः । अब्राह्मणादिशब्दनयात्तदन्यवृत्तौ प्रकरणस्यासन्नविषयत्वं युक्तमित्यभिप्रायेण **विहितं कर्मे**त्युक्तम् । न त्वविहितं कर्म, नापि ब्रह्मज्ञानादिकमिति पदद्वयान्वितावधारणाभिप्रायः । एतेन * कुर्वन्नेवेह कर्माणीत्यत्र कर्मशब्दः साधारणोऽपि उचितविषये नियमितः; न हि काम्यादिकं यावज्जीवमनुष्ठेयम् । उक्तश्रुतेरुपबृंहणेन स्वोक्तौ पदार्थवाक्यार्थौ स्थिरीकृतावित्याह—**यथोक्तमि**ति । **ज्ञानव्यपाश्रयः**—आगमोत्थज्ञाने प्रतिष्ठितः । **ब्रह्मविद्यामधिष्ठाय**—विवेकादिजन्यां परविद्यां भक्तिरूपापन्नां निष्पाद्यत्वेनाभिसंधायेत्यर्थः । * आगमोत्थं विवेकाच्चेति प्रस्तुतं ज्ञानद्वयमेव ह्यत्र स्पष्टीकृतम् । अत एव मृत्युशब्दस्यात्र विविदिषाविरोधित्वं चायुक्तम्; तस्याः साध्यत्वेनानुपादानात् । * ब्रह्मविद्यामधिष्ठायेत्यनेनैव विविदिषानिष्पत्तेरर्थसिद्धत्वाच्च । तर्तुं मृत्युमिति प्रयोजनवचनेन * तीर्त्वेत्यस्य प्राप्त्यर्थत्वशङ्का च निरस्ता । उपबृंहणीयश्रौतपदसूचकाविद्याशब्दोक्तमेव च यज्ञशब्देन व्यञ्जितम् । **यज्ञान् इयाज**—चकारेत्यर्थः ।

ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम् । अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदयविरोधित्वम् * एष एवासाधु कर्म कारयति तं यमधो निनीषतीति श्रुत्याऽवगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्वम्, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्— * सत्त्वात्संजायते ज्ञानमित्यादिना । अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च श्रुतिः— * धर्मेण पापमपनुदतीति ।

ननु धर्मेण पापस्यैवापनोद्यत्वं श्रुतम्, अत्रतु प्राचीनं कर्मेत्यविशेषेण पुण्यस्यापि तरणं कथं भाषितमित्यत्र वक्ष्यमाणश्रुतावपनोद्यतयोक्तं शोधयति—**ज्ञाने**ति। पुण्यस्य कथं धर्मापनोद्यत्वं, पापशब्दवाच्यत्वं चेत्यत्राह—**ब्रह्मे**ति। **उभयो**रिति विगीताविगीतसंवलितत्वोक्तिर्निदर्शनपरा। अत्र **अभिधेयत्वम्**— बोध्यत्वम्। * लक्ष्येदिति विवरणोक्तिर्वैभवात्। अयं भावः—* स एव धर्मस्सोऽधर्मस्तं तं प्रति नरं भवेदित्यादि स्मर्यते। अतः पुण्याभिसन्धिप्रसिद्धमपि मुमुक्षुदशायां पापायते।

**मुमुक्षुत्वामुमुक्षुत्वदशाभेदेन कर्मिणः। कर्मैकं पापपुण्यत्वे साध्यैक्येऽपि समश्नुते ॥ ३२५ ॥**

**श्येनादेश्चोदितस्यैव द्वैरूप्यं द्विविधश्रुतेः। एकस्यैवैकदैवास्ति कालभेदे तु किं पुनः ॥ ३२६ ॥**

प्रकृष्टसुखरूपस्वर्गैकसाधनं पुण्यमपि ह्यन्तरायनिरयशब्दनिन्दितस्वफलसङ्गार्थसिद्धयै निरुपाधिकसुखरूपब्रह्मज्ञानं प्रतिरुणद्धि; अतः प्रवृत्तिधर्मस्य निवृत्तिधर्मेणापनोद्यत्वं युज्यते। पापलक्षणं च कर्तुरनिष्टफलसाधनत्वेन शास्त्रवेद्यत्वम्; * नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्। सर्वे पाप्मानोऽतो निवर्तन्त इति श्रुतौ च निगमनस्थस्य पाप्मशब्दस्य शोकादिषु लाक्षणिकत्वेऽपि सुकृतदुष्कृतयोर्निमित्तसंभवान्मुख्यत्वमेव ग्राह्यम्। छत्रिन्यायेन सर्वत्र लक्षणावृत्त्यैक्यपक्षेऽपि तारतम्यमस्ति। न च सुकृतदुष्कृतशब्दयोरिव दुष्कृतपाप्मशब्दयोरिह गोबलीवर्दन्यायात् पाप्मशब्दस्य दुष्कृतविशेषपरत्वं शङ्क्यम्; उभयोरपि व्यापित्वेन हयतुरङ्गशब्दयोरिव तदयोगात्; सर्वशब्दविशेषणवैयर्थ्यं च। * अपहतपाप्मा ह्येष ब्रह्मलोक इत्यनन्तरवाक्यं च प्रकृतसर्वहेयनिवृत्तिप्रख्यापने स्वरसम्। तदिह पूर्वापरपाप्मशब्दयोरसङ्कोचेन समानार्थत्वमेव युक्तम्। एवं सति पुण्यविशेषे पापशब्दः प्रवृत्तिनिमित्तैक्यात् घटत इति। ननु रजस्तमसोर्ज्ञानविरोधित्वमिष्टम्; तत् किं पापेन सह समुच्चयतः, विकल्पतः, कारणान्तरेण वेति नियामकाभावात्पापस्य ज्ञानविरोधित्वं दुरवधारणम्; अतो दुःखसाधनत्वमेव तस्येत्यत्राह—**अस्ये**ति। शुद्धसत्त्वमिहाभिभूतरजस्तमस्कमुपयुक्तप्रकाशादिजनकं सत्त्वम्। ज्ञानोत्पत्तिदशायामपि पुंसां त्रैगुण्यानुवृत्त्या तदातनगुणान्तराभ्यां विशेषव्यक्त्यै विवृद्धिशब्दः। * कर्मवश्या गुणा इत्यादिभिः गुणानां तद्द्वारत्वसिद्धिः, पापस्य दुःखसाधनत्वं च नान्यव्यवच्छेदेनेति भावः। द्वयोरपि ज्ञानविरोधित्वे मानाभावे कथं द्वारद्वारित्वकल्पनमित्यत्र द्वारिणस्तावद्विरोधित्वे मानमाह—**पापस्ये**ति। * एष एवेत्यादिश्रुतौ न तावत् * अधो निनीषतीत्येतन्निरयादिनिनीषार्थम्; अत्रोन्निनीषायाः स्वर्गादिविषयत्वाभावात्। * यमेभ्यो लोकेभ्य उन्निनीषतीत्यत्र स्वर्गादिसर्वलोकेभ्यो ह्युन्नयनं स्वरसतः प्रतीयते। अतोऽपवर्गप्रापणप्रतिपक्षभूताधोनयनार्थमिहासाधुकर्म तत्साधनविरुद्धमेव स्यात्; तत्साधनं चात्र * मामुपास्स्वेत्यादिविहितम्। तस्य चोपक्रमे *यं त्वं मनुष्याय हिततमं मन्यस इति हिततमत्वमव्यवहितमोक्षोपायत्वं सिद्धम्। तदेवात्र सन्निधिबलात् साधारणेनापि साधुकर्मशब्देन गृह्यते। तत्कारयितृत्वं च * ददामि बुद्धियोगं तमित्यादिभिर्विशेषतोऽप्युक्तम्। * तस्य चोत्पत्तिप्रतिबन्धकत्वेन विरुद्धं कर्म भगवद्वैमुख्यापादनं कर्म; तत्सांमुख्येऽधोगतिप्रसङ्गाभावात्। असाधुकर्मणश्चाधोगतिनिदानत्वम् * तानहं द्विषतः क्रूरानित्यारभ्य * ततो यान्त्यधमां गतिमित्यन्तेन स्फुटीकृतम्। यद्वा साधुकर्मशब्द इह प्रस्तुतोपायाकाङ्क्षिताङ्गपरः। न चात्र कर्मण उन्नयनशब्दोदितमुक्त्युपायत्वम् अद्वारकम्; श्रुत्यादिभिस्सद्वारकत्वस्थापनात्। अतो विद्याङ्गकर्मप्रतिकोटिस्थमसाधुकर्मात्र विद्योत्पत्तिविरुद्धमेव। किं च साध्वसाधुकर्मकारयितृत्वमिह न प्राचीनजीवकर्मनिरपेक्षम्; वैषम्यनैर्घृण्यप्रसङ्गात्। न च वायूदकादिवत्

प्रेरकत्वम्; शास्त्रवैयर्थ्यादिप्रसङ्गात्, बुद्धिप्रदानादिवचनविरोधाच्च। अतः * यमधो निनीषतीति यद्वृत्तेन कस्यचिदनुवादोऽधोनिनीषाहेतुभूतपापकारित्वं व्यनक्ति। पूर्वपापे चोत्तरपापारंभे ज्ञानलोपः तन्मूलविपरीतज्ञानं च द्वारम्। तथा चोपबृंहितम्— * यस्मै देवाः प्रयच्छन्ति, * पापं प्रज्ञां नाशयतीत्यादिभिः। सर्वदेवेषु सर्वपापेषु च सामान्योक्तमपि प्रकृतेऽप्यकुण्ठितम्। विशेषतश्च गीयते— * क्षिपाम्यजस्रमित्यादि। अतः पापस्य ज्ञानोदयविरोधित्वं सिद्धम्। ननु श्रुतेन द्विविधेन पापेनैव ज्ञानं निरुध्यताम्, निवृत्तिधर्मेण चोत्पद्यताम्; अलमुभयत्र प्रकृतिगुणैर्द्वारीकृतैरित्यत्राह—**रज** इति। * **सत्त्वस्ये**त्युपादानमिह रजस्तमसोर्व्यतिरेकव्याप्त्या च ज्ञानहेतुत्वनिश्चयार्थं साधुकर्मद्वारप्रदर्शनार्थं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वेत्युक्तस्थापनार्थं च। श्रुतिस्मृतिप्रमितान्यतरत्यागस्य सति गत्यन्तरे विकल्पस्य चायोगात् द्वारद्वारित्वमेवात्र युक्तमिति भावः। ननु * रजसो लोभ इत्यनेनान्यथाधीहेतुत्वमपि सिद्धम्, अप्राप्तविषयलोभस्य भ्रान्तिहेतुत्वात्; * यया धर्ममधर्मं चेत्यादिना तद्व्यक्तम्। * नाभुक्तं क्षीयते कर्मेत्यादिस्मृत्या कर्मफलभोगावसाने ज्ञानं साध्यतां, धर्मस्य च धृतिशब्दार्थसुखसाधनत्वमेव प्राप्तमिति शङ्कापनुत्त्यै निष्कृतिशास्त्रविनियोगपृथक्त्वाभ्यां सिद्धं निरास्यनिरासकस्वभावं निर्धारयन्नुक्तमर्थद्वयं निगमयति— **अत** इति। **निरसनीयम्**— अनन्तेषु पापेषु संतन्यमानेषु न कदाचिदपि भोगेन निश्शेषशान्त्यवसरः; अतश्शास्त्रोक्तनिष्कृत्यैव तन्निरासः कार्य इति भावः। तथाऽप्यपरिमितानां निष्कृतिरप्यशक्येत्यत्राह— **तदि**ति। * स्वल्पमप्यस्य धर्मस्येत्यादिन्यायेन फलान्तरसङ्गरहितनिवृत्तिधर्ममाहात्म्यात्तन्निवर्तनं शक्यमित्याशयः। * य उ चैनमेवं वेदेत्यादिषु शास्त्रार्थवेदने फलश्रुतिः प्रशंसार्था, परंपरया वा स्यात्, अधिकारिभेदेन वा। अतः अनुष्ठानं प्रधानम्; तत्परित्यागिनां तु कारणाभावात् कार्याभाव इत्यभिप्रायेणोक्तम्— **अनुष्ठितेने**ति। उपात्तश्रुतिगतानामविद्यादिशब्दानां स्वेष्टार्थत्वं, पापस्य भोगेन विनाऽपि निवर्त्यत्वं च स्पष्टयन्तीं श्रुतिमुदाहरति— **तथे**ति। तत्र धर्मशब्दः प्रायश्चित्तमात्रविषयोऽप्यविशेषान्निवृत्तिधर्ममपि गृह्णाति, * विज्ञानादानन्दो ब्रह्मयोनिरित्यादिना ब्रह्मविद्यासन्निधानात्। सहपठितदानादिषु प्रतीतानि द्विषद्दूरीकरणफलान्तराण्यपि ब्रह्मविद्यानिष्पत्त्यनुगुणान्येव। अङ्गिफलं चात्र * भूयो न मृत्युमुपयाहि विद्वानिति प्रस्फुटम्। अतोऽत्र निवृत्तिधर्मेण सांसारिकपुण्यपापयोः द्वयोरपि पापशब्दोक्तयोर्निवर्त्यत्वं सिध्येदिति।

**तदेवं ब्रह्मप्राप्तिसाध[नभूतं]नं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या।**

एतावता किमायातमित्यत्र तन्मूलमुपासनात्मकं ज्ञानमित्यनेनाभिप्रेतं कर्मसापेक्षत्वं निरूढमित्याह— **तदि**ति। **तत्**—उक्तश्रुतिस्मृतिसूत्रोपपत्तिसंप्रदायबलात्। **एवम्**— निष्कामकर्मणां ब्रह्मविद्याप्रतिबन्धनिरासकत्वप्रकारेण। अस्त्वेवं विचार्यस्योपासनस्य स्वाङ्गकर्मापेक्षा। तद्विचारस्य कृत्स्नकर्मविचारापेक्षा कथमित्यत्र स्थापितमर्थं निगमनेन स्थिरयति—**अत** इति। मुक्तिसाधनविद्याया निवृत्तिधर्मनैरपेक्ष्यायोगात् इत्यर्थः। **अपेक्षितकर्मस्वरूपज्ञानमित्यनेन** वृद्धव्यवहारेण व्रीह्यादिवत्कर्ममीमांसया यज्ञादिपदार्थानां सेतिकर्तव्यताकानां विशेषतो वेदितव्यतया विधिविनियोज्यस्वरूपापेक्षिणि विनियोगे नागृहीतविशेषणन्यायतः स्वाङ्गसाध्यस्य फलसाधनतया तत्स्वरूपान्वितस्यैव बुभुत्सितत्वम्,

अचिन्तितेऽप्युपासने कर्मणश्चिन्तयितुं शक्यत्वं च सूच्यते। विद्यानङ्गकर्मनिन्दया विद्याप्ररोचनं च तादृशकर्मज्ञानापेक्षमित्यभिप्रायेण **केवल** इत्यादिकमुक्तम्। **अवसेयम्**—साध्यमिति यावत्। **मीमांसा** अत्र विचारः। त्याज्योपादेयसहितोपासनशास्त्रार्थं विचारयतामवश्यंभाविनस्तदुभयस्वरूपनिश्चयस्य कर्ममीमांसासाध्यतया अत्र अपेक्षिता त्वदनिष्टावृत्तत्वेन वक्तुं युक्तेत्यभिप्रायेण **सैवे**त्युक्तम् । अन्ततः कर्मपरीक्षासापेक्षा तापत्रयवृत्ततोक्तिश्चानेन निरस्ता। साधनचतुष्टयस्य वा व्युदास एवकारेणोपक्षिप्यते।

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयम्, विनियोगश्च श्रुतिलिङ्गादिभ्यः, स च तार्तीयः।**

न केवलमस्मदुक्तस्य युक्तत्वमात्रम्; त्वदुक्तस्य दोषोऽप्यस्तीत्यभिप्रायेणाह— **अपि चेति**। तत्रान्योन्याश्रयमुद्घाटयति— **नित्येति**। चस्त्वर्थो वर्तिष्यमाणस्य वृत्ततावैपरीत्यद्योतकः। **मीमांसा**शब्दोऽत्र भागद्वयार्थः; आत्मनित्यताद्युपादानात्। **श्रवण**शब्दश्च विचारपर्यन्तः। अयं भावः— किमत्र विवेकशब्देन निश्चयो विवक्षितः, आपातधीर्वा? नाद्यः, कृत्स्नमीमांसासाध्यस्य ब्रह्मविचारापेक्षया पूर्ववृत्तत्वायोगात्; आत्मनित्यत्वादिकं ब्रह्मकाण्डे हि निरूपयिष्यते। न द्वितीयः, तस्याः कर्मब्रह्मकाण्डसाधारणत्वेन विशेषतोऽत्र वक्तुमयुक्तत्वात् प्रथमातिक्रमे कारणाभावस्य चोक्तत्वात्। न च सा फलान्तरवैराग्यादेर्हेतुः; उभयत्रामृतत्वाद्यापातधीसिद्धेः। न च कपिलकणादादितन्त्रैर्विवेकः; अध्ययनादिक्रमेण तदवसरनिरोधोक्तेः तेषु च बहुधा निःश्रेयसतत्साधनादौ विवेकवैपरीत्यस्य त्वयाऽपि संमतत्वात्। अत एव हि निरसिष्यन्ते। * नित्यं हि नास्ति जगतीत्याद्युपबृंहणं तु श्रुतिमनुरुध्यैव विवेकार्थं स्यात्। न तु स्वातन्त्र्येण; अन्यथा किं शारीरकेण? ततोऽन्यत्र संशयादिसंभवादिति चेत्, तर्हि तत्र न विवेकसिद्धिः। यत्त्वत्र वाचस्पतिनोक्तम्— * नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु तद्धर्माः, नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेक इत्यारभ्य, * नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं, तथा चास्थागोचरः। अनित्यत्वमसत्यत्वं, तद्यस्यास्ति तदनित्यमनृतम्; तथा चानास्थागोचर इति; यद्दृतं तन्नित्यं सुखं व्यवस्थाप्यते, तदास्थागोचरो भविष्यति, यत्त्वनित्यमनृतं भविष्यति, तापत्रयपरीतं तत्त्यक्ष्यत इति सोऽयं नित्यानित्यवस्तुविवेक इति च। एतदपि मन्दम्— अनित्यस्याप्यबाधितत्वेन सत्यत्वस्य स्थापयिष्यमाणत्वात्। न च नित्यं सुखमनुपादेयमिति धिया कर्मिणां कर्मविचारादौ प्रवृत्तिः; किं तु तस्य कर्मसाध्यत्वभ्रमाद्वा दौर्लभ्यबुद्ध्या वा। किं च नित्यत्वादिमात्रं नास्थागोचरत्वादिनिदानम्। पुरुषार्थतत्साधनत्वाभ्यामेव साऽऽस्था, तद्वैपरीत्याच्चानास्था। ते च नित्यानित्ये च यथार्हं स्याताम्। निरूपकस्यापि ह्यनित्यसुखत्यागः * अशक्यानि दुरन्तानि समव्ययफलानि चेति न्यायात्, अधिकसुखलाभतृष्ण्या वा स्यात्। तदभावे अत्यल्पमपि सुखमुपादीयते। नित्यमपि यदि दुःखात्मकमनुभयरूपं वा, कथमास्थार्हम्? प्रकृतस्य प्रकृष्टसुखत्वेन प्रतीतत्वादिति चेत्; तत्प्रतीतिस्तावन्न व्याप्त्या, अदृष्टेः। न च श्रुत्या, तन्मूलापातधियस्साधारण्यादिदौस्थ्यात् निश्चयस्य तु मिथस्संश्रयग्रस्तत्वात् तन्त्रान्तरस्मृत्योश्चा-

साधकत्वस्य दर्शितत्वात् । नित्यसुखसंभवमूलोपादित्सा च साधारणी । तन्त्रान्तरे तदसंभवश्च सुव्यक्तः । * आनन्दो ब्रह्मेत्यादिरमीमांसितकर्मब्रह्मभागैर्दुर्बोधः, प्रमाणाध्याये तर्कपादे च तन्निरासात् । तत एवालाद्यसूत्रेऽन्यत्र च नित्यफलासंभवः प्रकृतोपयोगात् प्रतिष्ठाप्यत इत्यपि दुर्वचम्, युष्माभिरेवं सूत्रवाक्यार्थानुक्तेश्च । अपि च नित्यसुखस्यात्र संभावनामात्रम् । स्वर्गादिसुखस्यानित्यत्वं च न शास्त्रान्तरेणानुमानेन वा सिध्येत्, ताभ्यामेव वैपरीत्यस्यापि सुवचत्वात्, स्वर्गसुखमनित्यं सुखत्वादित्यादेरमृतत्वादिश्रुतिबाधात् । तदान्यपर्यस्य तन्निरूपणसापेक्षत्वात्; अन्यथा मुक्तसुखमनित्यं सुखत्वादित्यादेरपि प्रसक्तेः । तदप्रसक्तिश्च त्रय्यन्तनिर्णयात्, स च तयेति मिथस्संश्रयः । अतः कर्मविचार एवात्रापेक्ष्यः । शमदमादीनां साधनत्वविवेकः तत्स्वरूपमात्रं वा वृत्तमित्युच्यते, न पूर्वः, तस्य * शमदमाद्युपेतः स्यादिति साधनलक्षणे निष्पाद्यत्वात् । नोत्तरः, तत्र श्रवणौपयिकावधानादिमात्ररूपाणां सर्वशास्त्रसाधारण्येन विशेषतोऽत्र वक्तुमयुक्तत्वात् । योगौपयिकानां तु बाह्यान्तःकरणनिरोधादिरूपाणां त्रय्यन्तार्थश्रवणात् पूर्वमयुक्तेः, * तस्मादेवंविच्छान्तो दान्त इति ब्रह्मधीपूर्वकत्वोक्तेश्च । किं च नित्यानित्यविवेकादयः किं हेतुसाध्यरूपेण स्थिताः, अन्यथा वा ? आद्ये कर्मविचारोऽपि * परीक्ष्य लोकानित्यादिप्रकारेण मुमुक्षायाः परंपरया हेतुहेतुमद्भावात्सह पाठ्यः; अन्यथा मुमुक्षुत्वमेकमेव हि पाठ्यम्; किं चतुष्कग्रहणेन ? द्वितीयेऽप्यभ्युगमविरोधात् * विवेकाद्वैराग्यमित्यादिक्रमस्य परैर्व्याख्यातत्वादिति । अत्र **मीमांसाश्रवणमन्तरेणे**त्युक्तं विवृणोति— **फले**ति । कर्मभागे स्वर्गादिर्यागादिः प्रयाजादिः बुभुक्षुश्च फलादयः; ब्रह्मभागे तु मुक्त्युपास्तिशमादिमुमुक्षवः । एषां विशेषः पूर्वपक्षोक्ताद्व्यावृत्तं रूपं मिथो भेदश्च । नात्र फलकरणादिनिश्चयेन कर्मस्वरूपादिबोधोक्तौ साध्याविशेषः; पदार्थवाक्यार्थनीत्या तेषु तेष्वधिकरणेषु तत्तदवान्तरवाक्यार्थनिश्चयेन पश्चान्मिथस्संसृष्टविशिष्टमहावाक्यार्थबोधोक्तेः वैराग्यादिमूलभूतस्य नित्यानित्यविवेकस्य फलकरणादिनिश्चयान्तर्गतबोधनपरत्वाच्च । कर्मग्रहणमिहोपास्तेरप्युपलक्षकम् क्रियत इति वोभयसंग्रहः । उपासनेऽपि कर्मशब्दस्सूत्रेऽप्युक्तः—* प्रकाशश्च कर्मण्यभ्यासादिति । तत्र च भाष्यम् * उपासनात्मके कर्मणीति । अन्यत्र च * यागादिकमुपासनात्मकं च कर्मेति । मानसकर्मोक्तिश्च स्मृत्यादिषु दृश्यते । कर्मशब्दस्यात्र ज्योतिष्टोमादिमात्रविषयत्वं मत्वा तत्स्थिरत्वास्थिरत्वेत्येतन्निरूपणप्रकारस्यानुकारः; न तु निश्चयप्रकारस्येति केचित् । अत्र वैधर्म्यव्यञ्जकेन व्यतिरेकेण भाष्यमाणस्यायं भावः— किं केन कथमित्याकाङ्क्षितफलाद्यंशत्रयनिश्चयमन्तरेण कथं त्र्यंशभावनात्मककर्मबोधः; कथं च जीवनादिविशेषिताधिकारान्वितस्वर्गादिपदार्थस्य देहान्तरदेशान्तरभोग्यत्वनिश्चयः ? तदभावे च कथं लोकायतसौगतगतिखण्डनगर्भपूर्वोत्तरदेहानुवृत्तात्माध्यवसायः ? आत्मनि च सुखतयोपलब्धेरन्यथासिद्ध्या वचनमन्तरेण कथं सुखत्वश्रुतिमुख्यत्वम् ? तादृशात्मनिश्चयाभावे देहमेवात्मानं मन्यमानस्य कथमैहिकफलविरक्तिः ? नित्यसुखरूपतया सिद्धस्याप्यधिकर्तुः प्रवृत्तिधर्मफलं कृत्स्नं परिमितविषयभोगरूपमनित्यं, निवृत्तिधर्मफलं परं नित्यमिति निश्चयालाभे कथं स्वर्गाद्यनित्यफलजिहासा, नैगमान्तिकनित्यफलधिया समाकर्षश्च ? अतस्साधनचतुष्कवृत्तवादे विवेकविशेषादेर्मूलतया भागद्वयविचार एष्टव्यः । ततश्च कर्मविचारसापेक्षत्वम् । परमन्योन्याश्रयस्त्वधिकः—इति । आदिशब्देन ज्ञानानन्दरूपत्वसंग्रहः । शमादिसाधनसंपत्तौ विशेषतश्च दोषमाह— **एषामि**ति । * शान्तो दान्त इत्यादिविनियोजकवाक्योक्तानामित्यर्थः । विनियोगोऽङ्गाङ्गित्वबोधनम् । संबन्धः इति तु **न्यायसुदर्शनम्** । शमादेरङ्गत्वे बोधिते ह्यत्र साधनत्वमनुक्तमप्यर्थात्सिध्येत् । ततः किमित्यत्र शेषलक्षणसिद्धप्रमाण-

लक्षणसापेक्षत्वमाह— **विनियोग** इति। एतैर्मन्त्रैर्ब्रह्मकाण्ड एव तद्विनियोगश्चिन्त्यतामित्यत्राह— **स** इति। स च तार्तीयः— प्रागुक्तसंगतिक्रमेण कर्मकाण्डतृतीयाध्यायोक्तः। इह पुनस्तृतीये लाघवानुसारात्पूर्वं व्युत्पादितैस्तैरेवाक्षेपसमाधानमात्रं करिष्यते। एवमेवाध्यायान्तरन्यायोपजीवनं चात्र द्रष्टव्यमिति भावः।

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पाद[नसाधना]कानीति तत्साद्गुण्यापादकान्येतानि सुतरामिहैव संगतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता॥**

अथ युक्त्यन्तरं दर्शयन्नुद्गीथाद्युपासनविचारस्य स्थानान्तरानर्हतयाऽत्रैव मुख्यसंगत्या कर्मब्रह्मचिन्ताक्रमं स्थापयति— **उद्गीथेति**। **कर्मसमृद्ध्यर्थान्यपीत्यनेन** पूर्वत्रोपयोगः, इह नेति शङ्कोद्धाट्यते। **कर्मसमृद्धिः**— * तदेव वीर्यवत्तरमिति श्रुत्युक्तेः प्रबलकर्मभिरप्रतिबन्धो गुणफलरूपः। **ब्रह्मदृष्टिरूपाणीति** हेतुगर्भम्। **ब्रह्मज्ञानापेक्षाणि**— न ह्यारोप्यस्वरूपमन्यत्राजानतः क्वचिदपि तदारोपः; अनिर्वचनीयादिदृष्टेर्दूषयिष्यमाणत्वात्। इह च ब्रह्मज्ञानं प्रथमद्विकसाध्यमित्याशयः। दृष्ट्युपासनानां प्रधानानुपयोगं प्रणाड्योपयोगात् परिहरति—**तानीति**। उद्गीथाद्युपासनपरिहार्यप्रत्यूहानीति यावत्। **अपि**रत्र परारोपितविरोधद्योतकः। यद्वा पूर्वग्रन्थेऽनुपयोगमन्वारुह्य सजातीयप्रयोगमात्रात्संगतिरनन्यगतिकाकाङ्क्षोक्त्या परिहृता। अत्र तूपयोगश्चास्तीति व्यज्यते। **अनभिसंहितफलानि**— बन्धकफलसंकल्परहितत्वादित्यर्थः। ब्रह्मविद्याऽत्र स्वाभीष्टा। **साद्गुण्यम्**— पूर्वोक्तैव समृद्धिः; न तु वैकल्यनिवृत्तिः। तदापादकानि कर्मसमृद्ध्युत्पादकानि।

**कर्मजात्कर्मसाद्गुण्यं विद्या साद्गुण्यतश्च सा। अतो विरोध इत्यल्पं व्यक्तिभेदाद्व्यवस्थितेः॥** ३२७॥

**सुतराम्**— स्वापेक्षया परविद्यापेक्षया चेति भावः। **इहैवेत्ययोगवदन्ययोगोऽपि** व्यवच्छिद्यते।

**अब्रह्मदृष्ट्यादिषु तु प्रधानैकार्थता भवेत्। विद्यौपयिकदृष्ट्यादि हेतुन्यायादिहेष्यते॥** ३२८॥

**नातिप्रसक्तिरेवं स्यादधीत्यासत्त्यनुद्रुतेः। कथंचित्संगतिश्चात्र परेष्टा न प्रणुद्यते॥** ३२९॥

अस्तु यथावदनवगतेऽधिष्ठाने मिथ्यादृष्टिः प्रसिद्धेत्यत्राह— **तेषामिति**। न ह्येतन्मिथ्यादृष्टिमात्रम्; अपि तु यथावदवगते वैधमारोपणम्। ततश्चाधिष्ठानभूतं कर्माङ्गं यथावदविजानता तत्रान्यदृष्टिविधिर्न चिन्तयितुं शक्यते। **सर्वसंमता**— विश्वापलापिनोऽपि निरूपकसन्निधौ दुरपह्नवा; आहत्य सन्मात्रे अवगतिविमतेरिति भावः। ननु काम्यकर्मणोऽप्यनङ्गैरपि स्ववीर्यवत्तरत्वापादकैरेतैरपेक्षाऽस्ति, तेषामपि विचारानुष्ठाने च कर्मज्ञानापेक्षा सिद्धा। अत उभयाकाङ्क्षया कर्मकाण्डे तच्चिन्ताऽस्तु; मैवम्; अविदितब्रह्मणस्तदयोगस्योक्तत्वात्। अत एव ह्युपनिषत्स्वेव तदधीतिः। यत्तु * अधीतवेदान्तस्येत्यादिना वेदान्तमात्राध्यायिनस्तावन्मात्रचिन्ता शक्येति पूर्वं चोदितम्; तदसत्; अध्ययनविधिर्हि यथाक्रमं कृत्स्नाध्ययनं प्रयुङ्क्ते। न च विध्यतिलङ्घनेन प्रवृत्तमापत्कृतं वा त्वय्यन्तमात्राध्ययनमपेक्ष्येदानीं तद्विचारस्य पूर्ववृत्तं मृग्यते। एतेन प्राचीनसुकृतविशेषनियतवैराग्यातिशयादेकदेशाध्ययनविचारौ स्यातामित्यपि निरस्तम्, तस्याप्यध्ययनविध्यतिलङ्घनायोगात्। अनधिगतकर्मणः कर्माङ्गविद्याधिगतिरशक्यविचार इति चोक्तम्। अविशदनिरू-

पणेन पश्चाच्छेषपूरणं च क्लिष्टम् । ब्रह्मचिन्तोद्यतस्य विद्याङ्गकर्मणां गुरूपदेशमात्रेण ज्ञप्तिरस्त्विति चेत्, तर्हि तेनैव न्यायेन ब्रह्मविचारोऽपि मा भूत् । तदिह यथाविधि कृत्स्नाध्यायिनः प्रागिव कृतावशिष्टे विचारपर्वणि वृत्तविशेषः स्थाप्यत इति शुद्धः पन्थाः ॥

श्रुतिकिरीटशरीरविकृष्टिकृन्मलिनवृत्तिमलिम्लुचवृत्तिभिः ।
विघटितामिव विंशतिलक्षणीं यतिपतेरिति नीतिरजीघटत् ॥ ३३० ॥

॥ इति लघुसिद्धान्तः ॥

---

## ॥ महापूर्वपक्षः ॥

---

यदप्याहुः— अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः । तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् ।

एवं * विरोधादप्रमाणत्वादित्याद्युक्तानां कर्मनैरपेक्ष्यहेतूनां साङ्गोपायविधिनिरूपणेन बाधासिद्धिसाधारण्यान्यथासिद्ध्यादिदोषाः प्रदर्शिताः । अथ साधनचतुष्टयस्य पूर्ववृत्तत्वे कर्मणो विरुद्धत्वे वाक्यार्थधियो मोक्षोपायत्वे च हेतुतया समाहारेण प्राक् प्रदर्शितं सामर्थ्यं प्राप्यनिवर्त्यगोचरश्रुतिसमीक्षया निराकर्तुं विस्तरेणानुभाषते— यदप्याहुरित्यादिना आरभ्यन्त इत्यन्तेन ।

साधितं त्विह निर्बाधं बाधितं निष्प्रतिक्रियम् । तथाऽपि पुनरारंभः शत्रुशेषविमर्दवत् ॥ ३३१ ॥
परपक्षप्रसिद्धत्वं गौरवं व्यक्तभाषणम् । बहूनामपि संवादो यदप्याहुरितीर्यते ॥ ३३२ ॥
अशेषेत्यादिना ब्रह्मपारमार्थ्यं प्रतिश्रुतम् । तदन्यमिथ्याभावस्तु तदित्यादिभिरुच्यते ॥ ३३३ ॥

**यच्छब्दः** परगोष्ठीप्रसिद्ध्यर्थः, **अपिः** दूषितादूषितसमुच्चयार्थः, परेष्टगौरवद्योतको वा । **आहुरि**त्यनेककण्ठोक्तिः। [तेन] बहुवचनं बहुव्याख्यातृसंमतिं तदुक्तकृत्स्नानुवादं च सूचयति । अशेषेत्यादिचिन्मात्रेत्यन्तं प्रागुक्तार्थम् ।

वाक्ययोः सत्यमिथ्यार्थप्रतिज्ञारूपयोरिह । यथार्हं हेतुसाध्यत्वं पदार्थेषु विभाव्यते ॥ ३३४ ॥

चिद्रूपतया सजातीयाद्यशेषभेदशून्यं परमार्थस्वप्रकाशं च, तत एव हि तुच्छव्यावृत्तिः । अवधारणेनान्यपरविधिवाक्यसिद्धस्य सगुणत्वस्य कल्पितत्वं मिथ्यात्वसाधकदृश्यत्वस्य व्यतिरेकव्याप्तिश्च व्यज्यते । प्रपंचोपलंभात् विरोधशान्त्यै धीमात्रनिवर्त्यत्वाय च अवधारणाथ व्यनक्ति— **तदतिरेकी**ति । स्वतः सिद्धे तस्मिंस्तु प्रकृतैतावत्त्वसूत्रोक्तन्यायेन * अथात आदेशो नेति नेति, * असदेवेदमग्र आसीदित्यादिभिर्न बाधः स्यादिति तच्छब्दाभिप्रायः । ब्रह्मान्यत्वाद्भिन्नत्वाज्ज्ञातृत्वाज्ज्ञेयत्वादित्यादयस्तदन्यमिथ्यात्वहेतवः । उक्तेषु वीतावीतेषु शुक्तिरूप्यादिर्घटादिश्च दृष्टान्तः । **नानाविधशब्देन** * नेह नानेत्यादीनां विषयो दर्शितः । स्वरूपज्ञानव्यावृत्त्यै वृत्तिज्ञानसंगृहीत्यै चन्द्रनीतित्यक्त्यै ज्ञातृत्वज्ञेयत्वज्ञानक्रियात्वतद्विशेषाणां करणभेदकृतस्मृतित्वानुभवत्वादीनां ब्रह्मण्यध्यस्तत्वसिद्ध्यै च **तत्कृतशब्दः** । कर्मकर्त्रवच्छिन्नं हि ज्ञानमहङ्कारविकारः क्रियास्वरूपः; न त्वात्मस्वरूपम्; न च तद्धर्मः । अन्तःकरण-

तद्वृत्तिस्फुरितचैतन्यभेदस्तु जलचन्द्रभेदकल्प इति भावः। यो विशेषः पूर्ववाक्योक्तस्तत्र भेदशब्दो योज्यः। तत्र एषु नानाविधत्वमवान्तरविशेषैः। आदिशब्देन गोबलीवर्दनीत्या सुखदुःखतद्धेतुजन्मजरादेः कर्मकर्त्रादिविकल्पान्तराणां च संग्रहः। एकस्मिन्नेव एकदैव मिथोविरुद्धानन्ताध्यासो गगनगन्धर्वनगरनीत्या युक्त इत्यभिप्रायेण * सर्वमात्मैवाभूदिति श्रुत्यनुसारात् सर्वं तस्मिन्नेवेत्युक्तम्। एतेन माध्यमिकयोगाचारोक्तमताभ्यां विशेषः ख्यापितः। एवकारेण निरधिष्ठानभ्रमायोगात्तुच्छव्यावृत्तस्य तस्यैवाधिष्ठानत्वं युक्तमिति व्यज्यते; निरधिष्ठानश्च भ्रमो न युक्तः। शुक्तिरजतादेरध्यस्तद्रव्यधर्माणां चान्ततस्तदेवाधिष्ठानमिति चात्र भावः। निष्कले ब्रह्मणि अविद्यादर्शितानन्तांशे कल्पनाव्याप्तिसूचनाय परिशब्दः; **कल्पितम्**— अविद्यमानत्वेऽप्यस्तीति प्रतीतम्; असत्यमित्यर्थः। स्वात्यन्ताभावनिष्ठतया प्रतिभातमिति यावत्। तत एव **मिथ्याभूतम्**— सर्वदैव सदसद्बुद्ध्या[सत्त्वेन]वृत्तमिति यावत्। कल्पितत्वे मिथ्यात्वं हेतुतयोच्यत इति केचित्।

* सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्, * अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः; * सत्यं ज्ञानमनन्तं ब्रह्म, * निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, * यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्॥, * न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः, * आनन्दो ब्रह्म, * इदं सर्वं यदयमात्मा, * नेह नानाऽस्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, * यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्, * वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, * यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते। अथ तस्य भयं भवति, * न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि, * मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्, * प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥ * ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। त[मे]देवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ * परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते। यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥ * ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्।

ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ * तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥ *यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ * वेणुरन्ध्रविभेदेन भेद-षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥ * सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् । इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥ * विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ * अहमात्मा गुडाकेश सर्वभूताशयास्थितः, * क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥ * न तदस्ति विना यत्स्यान्मया भूतं चराचरम् , इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैर्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्; अन्यत्सर्व मिथ्येत्यभिधानात् ।

एवं युक्तिसूचके प्रतिज्ञाद्वये श्रुतिसूत्रस्मृतीः प्रमाणयति— **सदेवेत्यादिना अभिधानादित्यन्तेन**। * शाखाग्रे चन्द्र इतिवत्कारणत्वेन ब्रह्मण उपलक्ष्यत्वमभिप्रेत्य आदौ शङ्कितदोषनिवर्तकेभ्यः शोधकेभ्यः पूर्वं कारणवाक्योपादानम् । तत्रापि षड्विधतात्पर्यलिङ्गवत्तया बलीयस्त्वात्प्रथमं सद्विद्योक्तिः । अत्र सत उत्पत्तिर्यस्य स्थाप्यते, तस्य सत्त्वेनानूदितस्यापि असत्यत्वसूचकाभ्यामग्र इत्युक्तेऽपि सर्वदा निषेधतत्पराभ्यामवधारणाभ्यामद्वितीयपदेन चाभिप्रेतेऽर्थे कण्ठोक्त्या शङ्कनीयविशेषनिषेधोपक्रमं कारणवाक्यान्तरमुपादत्ते— **अथेति** । **अद्रेश्यम्**— अदृश्यम्; ऐन्द्रियिकप्रत्यक्षानर्हमित्यर्थः । **अग्राह्यम्**—अनुमयाऽपि दुर्ग्रहम् । चक्षुश्श्रोत्रादेरगोचर इति वा पदद्वयार्थः। ज्ञानकर्मेन्द्रियानर्हत्वमिह विवक्षितमिति केचित् । **अगोत्रम्**— अव्यवधानेन देवादिनामभिरस्पृष्टम्; सद्ब्रह्मादिशब्दैरपि हि लक्षणयैव प्रदर्श्यते । **अवर्णम्**— सितरक्तादिशून्यम्, कुलं च ब्राह्मण्यादि च दूरापास्तम् । **अचक्षुःश्रोत्रं तदपाणिपादमिति** । इन्द्रियायत्तज्ञानक्रियारहितमिति भावः । **नित्यं विभुम्**— कालतो देशतश्चानवच्छिन्नम्; एतेन प्रतिज्ञास्थब्रह्मत्वप्रदर्शनम् । **सर्वगतम्**— स्वव्यतिरिक्तैः सर्वैरध्यस्तैरधिष्ठानतया श्रितम्; वस्त्वन्तराभावाद्वस्तुपरिच्छेदरहितमित्याशयः । **सुसूक्ष्मम्**— आकाशादिन्यायेन स्पर्शवत्सु प्रतिघातरहितम्, दृश्यत्वाद्यनुगुणस्थौल्यादिरहितमिति वा; तेन योग्यानुपलब्धिबाधशङ्कानिरासः । **तदव्ययम्**; तत्रैवं निरुक्तिः—

* सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ इति ।

एतदेव शब्दे योजितं तद्वक्तैः । **भूतयोनिम्**— अविद्याशबलितरूपेण भूतरूपविवर्तोपादानमित्यर्थः । अत्र * यथोर्णनाभिरित्यादिना तत्प्रपञ्चः । एवं तटस्थलक्षणलक्षितस्य चिन्मात्रप्रतिज्ञानिर्वाहाय प्रकृष्टप्रकाशश्चन्द्र इतिवत् अतद्व्यावृत्तितत्परेण स्वरूपलक्षणेन शोधनं व्यनक्ति— **सत्यमिति** । अत्र सामानाधिकरण्यादिबलादन्यव्यावृत्तिपरत्वं कल्प्यम् । विशेषतोऽन्यधर्मव्यावृत्तिकण्ठोक्तिमाह— **निष्कलमिति** । ब्रह्मणश्चिन्मात्रशब्दसूचितं ज्ञेयत्वनिषेधं

कस्यचित्स्तुत्या अन्यस्य निन्दया च स्थापयति— **यस्येति** । मननोपासनाद्यविषय इति भावः । ज्ञातृत्वनिषेधमप्याह— **न दृष्टेरिति** । दृष्ट्यादिशब्दोपलक्षितज्ञानव्यतिरिक्तज्ञाताऽपि नास्तीति भावः । परप्रेमास्पदत्वादानन्दरूपो जीवः, स्वप्रकाशत्वान्नित्यप्राप्तस्यापि प्राप्यत्वोपचारज्ञानशक्त्या स्वप्रकाशत्वात्सत्यः ; तेन ब्रह्मणः सद्वितीयत्वमिति शङ्कानिरासार्थं चासुखाद्व्यावृत्तिमाह— **आनन्देति** । जीवोऽपि ब्रह्मानतिरिक्ततयैवानन्दरूप इति भावः । न हि आनन्दस्यानन्दित्वम् ; अतश्च निर्गुणत्वसिद्धिः । * ब्रह्मण आनन्द इति श्रुतेश्चान्यपरत्वम् । सर्वं तस्मिन्नेव परिकल्पितमित्यत्र श्रुतिमाह— **इदं सर्वमिति** । इदंकारविषयं कृत्स्नमनूद्य तद्विरुद्धात्मत्वविधौ चोरः स्थाणुरितिवदनूदितं बाधार्थं सामानाधिकरण्यम् । * ब्रह्मैवेदं सर्वम् ; * आत्मैवेदं सर्वम्, * पुरुष एवेदं सर्वमित्यादिषु एतद्व्यक्तम् । अत्र बाधार्थत्वमन्यत्र कण्ठोक्त्या द्रढयति— **नेहेति** । इह—प्रपञ्चे, * यस्मिन्पञ्च पञ्चजना इति प्रस्तुते ब्रह्मणि वा ; यन्नानात्वेन भाति तन्न सत्यमित्यर्थः । भेदद्रष्टुः प्रत्यवायोक्त्या भेदनिषेधं द्रढयति— **मृत्योरिति** । * तमसो वा एष तमः प्रविशति इत्यादिवदविद्यागृहीतः पुनरविद्यां तत्फलं वा प्राप्नोतीत्यर्थः । यदि भेदो नास्ति, खपुष्पवन्न दृश्येत, नित्यमसतोऽपि भ्रान्त्या दृश्यत्वे खनैल्यवन्नित्यं किं न दृश्येतेत्यत्र स्वप्नजागरकल्पबद्धमुक्तदशया युक्तायुक्तावस्थया वा नियमोक्तिमाह— **यत्रेति** । कालानुक्तिरियम् । **नानेव, द्वैतमिव,** इति इवशब्दाभ्यां मिथ्यात्वस्य सिद्धवत्कारः । **तत्**— तदेत्यर्थः । इतरेणेति पूर्वस्मिन्वाक्येऽध्याहार्यम् ; परस्मिंस्तु कः इति । कर्तृकरणादिकल्पना निरस्ता । **पश्येत् विजानीयादिति** निषेध्यज्ञानावान्तरभेदपरम् । कार्यमिथ्यात्वं कारणसत्यत्वं च लोकदृष्ट्या निदर्शितमाह— **वाचेति** । अत्र दार्ष्टान्तिकमात्रे सत्यत्वस्थापनाय दृष्टान्ते व्यावहारिकसत्यत्वमात्रम् । अतो न विरोधः ।

अन्वयव्यतिरेकाभ्यां भेदबुद्धेर्भयहेतुत्वेन त्याज्यत्वं दर्शयितुमाह— **यदा हीति** । अभयहेतुरैक्यधीः पूर्ववाक्योक्ता । उ इत्यवधारणार्थम् । **उ दरमन्तरं कुरुते**— ईषद्भेदं मन्यते ईषदन्तरं भेदं कुरुते मन्यते। उदिति विभज्य उत्कुरुत इति केचित् ; उद्भवतीति चान्ये । **अरम्**—द्रुतम् । **अथ**—तदा; अनिरूप्येत्यर्थः । अस्य तु निर्विशेषत्वे सूत्रमादत्ते— **न स्थानत** इति । नोभयलिङ्गमित्यन्वयः । साकारत्वं साकारनिराकारत्वं च नास्ति ; किं तु निराकारत्वमेवेत्यर्थः । ब्रह्मान्यमिथ्यात्वे सूत्रमाह— **मायेति** । इदं सूत्रं स्वप्नविषयमपि तन्मुखेन दुर्निरूपत्वाविशेषाद्धीमात्रेतरकृत्स्नमिथ्यात्वपुरस्कारकमिति भावः । इदं पाराशर्योक्तमर्थद्वयं पराशरोक्तश्लोकाभ्यां संवादयति— **प्रत्यस्तमितभेदमिति** । सजातीयादिसर्वविशेषरहितमित्यर्थः । तर्हि शून्यं स्यात्; नेत्याह— **सत्तामात्रमिति** । सर्वत्र निर्बाधानुवृत्तं सत्तामात्रं हि न शून्यं स्यात् । गोबलीवर्दनयेन स्वगतो भेदो वा मात्रचा निषिध्यते । अथवा सत्ताशब्दस्य धर्मवाचितया धर्म्यपेक्षया भेदराहित्यं च धर्मं मात्रचा व्युदस्यति ; स्वाध्यस्तापेक्षया धर्मत्वं धर्मित्वं च कल्पितमिति भावः । तथाऽपि सत्तादिशब्दवाच्यत्वं दुस्त्यजमित्यत्राह— **अगोचरं वचसामिति** । निमित्तभूतधर्माभावे गोत्ववन्निमित्तत्वाभावे च कथं शब्दप्रवृत्तिरिति भावः । अनुपाख्यत्वे तुच्छत्वं स्यादित्यत्र स्वप्रकाशत्वमाह— **आत्मसंवेद्यमिति** । हेतुं व्यनक्ति— **ज्ञानमिति** । **ब्रह्मसंज्ञितम्**— ब्रह्मत्वाद्यभावेऽपि ब्रह्मशब्देनोपचरितमित्यर्थः । तर्हि ब्रह्मास्मीति विशिष्टधीः कथमित्यत्रोपसंहारोक्तमेतदुपक्रमानुगुणमित्यभिप्रायेणेमौ घटयति— **ज्ञानस्वरूपमिति** । अजडत्वेन ज्ञेयत्वज्ञातृत्वरहितमिति च भावः । **अत्यन्तनिर्मलम्**— नित्यास्पृष्टाविद्यादिसर्वदोषम् । तत्रापि हेतुर्ज्ञानस्वरूपत्वम् । **अर्थस्वरूपेण**— जडरूपदेवादिपिण्डात्मना कृत्स्नप्रपञ्चात्मना वा । अनेन अन्यमिथ्यात्वं सिद्धम् ।

**परमार्थत** इत्याद्युपादानं तु पुराणमध्येऽपि सत्यैकत्वसाधकाभ्यासलिङ्गस्फूर्त्यर्थम् । **नान्योऽस्तीत्युक्तं** विवृणोति— **यदे-तदिति** । उक्तमेव **ज्ञानस्वरूपमि**त्यादिना पुनरपि द्रढयति । **ये तु ज्ञानविदः** इत्याद्यपि केषुचिद्बाधप्रदर्शनेन व्यतिरेकेण स्थिरीकरणं भ्रमनिवृत्तेर्धीमात्रसाध्यत्वख्यापकं च । कर्मशास्त्रनिरूढकर्तृनानात्वोपलम्भविरोधशान्त्यै तत्रैवा-त्माद्वैतमपि स्थापितमित्याह— **तस्येति** । **एकमयमिति** । मयडिह स्वार्थिकः । आत्मपरशब्दाभ्यां भेदशङ्कां परि-हर्तुं **यदीति** श्लोकः । **वेणुरन्ध्रे**त्यादिना दृष्टान्तमुखेनात्मभेदस्योपाधिकल्पितत्वोक्तिः । निदर्शितस्यैव निर्धार्योपदेशं दर्शयति— **सोऽहमिति** । उक्तमर्थमविसंवादिना यथोक्तकरणेन द्रढयति— **तत्याज भेदमिति** । भेदमोहमित्यर्थः । जीवानां मिथो भेदधीनिवृत्तिरुक्ता । अथ जीवब्रह्मभेदबुद्धेरज्ञानमूलत्वं तदनुवृत्तौ हेत्वभावात्तन्निवृत्तिं चाह— **विभेदेति** । स्पष्टार्थतया पुराणोक्तिः पूर्वमुदाहृता । ऐतिहासिकं वाक्यमात्मनां परस्परं ब्रह्मणा चैक्ये तदन्यमिथ्यात्वे च दर्शयति— **अहमात्मेति** । अत्र सर्वभूतशब्दस्य जीवविषयत्वशङ्का सर्वक्षेत्रशब्देन प्रशमिता । **न तदस्तीत्यादौ** मया विना यत्स्यात्तन्नास्ति ; मद्व्यतिरिक्तं न परमार्थसदित्यर्थः । **इत्यादिभिरिति** । भूयसां बलीयस्त्वार्थम् । उपासनविधिपरेषू-क्तानां गुणविग्रहादीनां कल्पितत्वव्यक्त्यै **वस्तुस्वरूपोपदेशपरैरि**त्युक्तम् ।

**मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा रज्ज्वाद्य-धिष्ठानकसर्पादेः । दोषवशाद्धि तत्र तत्कल्पनम् ; एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोध-बाध्यं मिथ्यारूपम् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वच-नीया अनाद्यविद्या ।**

ननु एतेषु मिथ्याशब्दो न दृष्टः । नानात्वनिषेधादितात्पर्यतस्तत्सिद्धावपि किमिदं मिथ्यात्वम्? असत्त्वम्, अन्यथाधीगोचरत्वं, सदसदन्यत्वं, चतुष्कोटिमुक्तत्वं वा? आद्यान्त्यौ निवर्त्याभावे निवर्तकशास्त्रादिवैयर्थ्यप्रसङ्गान्निर्बाधा-स्तित्वबुद्ध्या च निरस्तौ, तव चानिष्टौ । अत एव न द्वितीयः, अधिष्ठानस्य मिथ्यात्वप्रसङ्गादारोप्यस्यान्यत्र सत्त्व-प्रसङ्गाच्च । न च तृतीयः, सदसद्विध्योरिव व्याघातादप्रसिद्धेश्च । अन्यच्च न युक्तं पश्याम इत्यत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाभिप्रायेण प्रतिवक्ति— **मिथ्यात्वमिति** । नामशब्दः शुक्तिरूप्यादिषु तत्प्रसिद्धिपरः ।

**ख्यातत्वादसदन्यत्वं बाध्यत्वेन सदन्यता । तेनानिर्वचनीयत्वं स्यादित्यत्राभिसंहितम् ॥ ३२५ ॥**

**प्रतीयमानत्वमिह** प्रकाशमानत्वम् । तेन वृत्तिविषयत्वमपि । साक्षिणः प्रकाशमानायामविद्यायामपि अनु-वृत्तेस्तदितरविवक्षयोक्तिरिति तु मन्दम् । प्रतीयमानत्वपूर्वकतया बाधकधीप्रागभावादिव्यावृत्तिरिति केचित् । नियम-श्चात्र विवक्षितः ।

**तत्त्वधीप्रागभावादिः प्रतिपन्नोऽन्यथाऽपि च । तत्त्वबुद्ध्या निव(र्ते)र्त्येत व्यावर्त्य इह तेन सः ॥३२६॥**
**असदत्र व्यवच्छेद्यं कैश्चिदिष्टं तदा पुनः । नास्तिधीगोचरत्वेन धीनिवर्त्यत्वकल्पनम् ॥ ३२७ ॥**

भ्रान्तिनिवर्त्यसत्यसर्पादिव्यावृत्त्यै लोकदृष्ट्यनुसारेण **यथावस्थितशब्दः** । सत्यस्य हि निषेधकालस्थितत्वेऽपि

तदानीं नास्तीति बुद्धया आभिमानिकं निवर्त्यत्वं स्यादिति भावः ।

**व्यवच्छेद्येषु सत्यत्वमन्त्रारुह्यात्र लक्षणम् । तन्मुखेन प्रबुद्धस्य तेषां बाधोऽपि सेत्स्यति ॥ २३८ ॥**

**लक्ष्यमेव व्यवच्छेद्यं लक्षणस्थपदैर्यदि । विपक्ष एव पक्षः स्यादस्तु पर्यवसानतः ॥ २३९ ॥**

**वस्तुज्ञाननिवर्त्यत्वमिति** । अत्र मात्रशब्दो योज्यः ; याथार्थ्यबुद्धयैव निवर्त्यमित्यर्थः । तेन मन्त्रादिशक्तिविशेषसहितधीनिवर्त्यविषादिव्युदासः । वेद्यगतविरुद्धाकारग्रहणाग्रहणयोर्बाधादिप्रयोजकत्वव्यक्त्यै सामानाधिकरण्यभ्रमजन्यातिप्रसङ्गशान्त्यै च समासविशेषव्यक्त्यर्थो **वस्तुशब्दः** । दण्डादिनिवर्त्यव्यावृत्त्यै ज्ञानोक्तिः । नाशबाधयोरविशेषाभिमानाद्वा निषेधबुद्धयर्हत्वसाम्याद्वा नाश्यबाध्ययोर्निवर्त्यशब्दानुवृत्तिः । **निवर्त्यत्वम्**— निवर्तनार्हत्वम् ; तेन मूरन्ध्रादिभ्रमनिवर्त्यरज्जुसर्पादिष्वव्याप्तिर्निरस्ता । न चात्र बाधकधीनिवर्त्यभयादावतिव्याप्तिः ; निवर्तमानदुःखस्य क्षणिकतया तन्निवृत्तौ बाधकधीवैफल्यात् , सामग्र्यभावादुत्तरदुःखानुत्पत्तेः । तदिह यन्निष्ठतया प्रतिपन्नं, तन्निष्ठात्यन्ताभावप्रतियोगितयाऽपि तत्त्वज्ञानेन विषयीकारार्हत्वमिति तु तात्पर्यविश्रमः । उक्तस्य सर्वसंमतत्वार्थमाह—**यथेति** । **ननु** सारूप्यतत्त्वाग्रहौ सर्वत्र भ्रान्तिनिदानम् , तौ च जडेष्वेव स्तो न ब्रह्मणि ; तस्य निर्विशेषत्वनित्यस्वप्रकाशत्वाभ्युपगमादित्यत्राह— **दोषेति** । अनिर्वचनीयदृष्टान्तस्थापनम् [इति] । अत्र हिः प्रसिद्धौ । दुःखाद्यभावेषु सुखादिभावारोपे सारूप्यतत्त्वाग्रहासंभवादिति च हेरभिप्रायः ; सारूप्यसद्भावेऽप्यतिरिक्तदोषाभावे भ्रान्त्यभावात्स एव न प्रयोजक इति भावः ।

**निदर्शितं** दोषकल्पितत्वं तत्कल्पितमिथ्यात्वलक्षणं च पक्षेऽतिदिशति— **एवमिति** । जडत्वसविशेषत्वपरिच्छिन्नत्वपराक्त्वादिकं नाध्यासाधिष्ठानत्वे प्रयोजकमित्यभिप्रायेण **चिन्मात्रत्वानूक्तिः** । तत्त्वाग्रहश्च ब्रह्मणि स्वरूपविषयविशदवृत्तिज्ञानानुदयात्सिद्धः । स्वतो वा परतो वा प्रकाशमानत्वं चाध्यासापेक्षितं भ्रमविरुद्धत्वेन न शङ्कनीयम् । सर्वज्ञत्वमपि परब्रह्मण्यध्यस्तमिति ज्ञप्त्यै सर्वाध्यासयोग्यत्वाय च **परब्रह्मशब्दः** । अत्र कल्पितत्वमिदन्त्वं च बाध्यत्वे हेतुतयाऽभिप्रेते । अध्यसनीयत्वे सादृश्यवैसादृश्याल्पत्वानन्तत्वादिकं न तन्त्रमिति ज्ञापनार्थं **देवेत्यादिना** कृत्स्नचिदचिद्वेदोक्तिः । न ह्यत्र मिथ्यात्वे साध्ये व्यभिचारस्थलम् ; न च प्रत्यनुमानेन सत्यत्वे साध्ये बाह्येषु दृष्टान्तः । ब्रह्मणि तु दृष्टान्तेऽनुवृत्तसत्यहेत्वसिद्धिः; कल्पितस्तु भासमानत्वादिः खपुष्पादावपि कथंचित्स्यादिति भावः ।

* यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥

इत्यादिपरामर्शेन **यथावस्थितेत्यादिकमुक्तम्** । **बाध्यम्**— नास्तीति वेद्यमित्यर्थः । एवं मिथ्यात्वलक्षणयोगात्— **मिथ्यारूपम्**— मिथ्याशब्दवाच्यमित्यर्थः । स्वाधिकरणधीविषयनिष्ठात्यन्ताभावप्रतियोगि वा । एवं भ्रान्तिबाधोक्त्या दोषतिरोधानयोः कल्प्यत्वादर्थापत्तिद्वयसिद्धं ज्ञानमिति सूच्यते ।

ननु अतिरोहिताकारे नाध्यासः, तिरोधौ स्वरूपतदतिरिक्तप्रकाशविकल्पेन स्वप्रकाशात्मस्वरूपनिवृत्तिः सविशेषत्वं वा स्यात् । अतस्तिरोधानार्थमविद्यान्तरं कल्प्यम् । सदसदादिविकल्पदुःस्था चासौ । तस्य च कल्पितत्वे दोषान्तरापेक्षया अनवस्था । अकल्पितस्तु ब्रह्मस्वरूपान्यत्वानन्यत्वादिविकल्पासहः । न च दोषत्वेन लोकवेददृष्टः कश्चिद्ब्रह्मणि संभाव्यते । एकश्च दोषो न सर्वाध्यासकृदित्याशङ्क्याह— **दोषश्चेति** । **स्वरूपतिरोधानेत्यादिभिः** क्रमाच्छङ्कोद्धारः । अहंत्वेदंत्वादिभिस्तदवान्तरैश्च **विक्षेपस्य विचित्रत्वम्** । स्वरूपतः स्वभावतश्चेति केचित् । आच्छा-

दिका विक्षेपिका चेति विभागश्चैकस्या एवाकारभेदादिति केचित् । **विक्षेपिका**—विशेषप्रतिभासिकेत्यर्थः । दुर्घटत्वभावाविद्यामाहात्म्यात्सर्वमिदं समाहितम् । युगपत्कोटिद्वयारोपात्मकसंशयविशेषहेतुदोषवत् विचित्राध्यासहेतुत्वोपपत्तिः । विरुद्धसमुच्चयभ्रमजनकानेकान्तवादवच्च तिरोधानमपि न वास्तवम् । परमार्थद्वित्वमर्थक्रियाविरहं च परिहर्तुं सदसद्वैलक्षण्योक्तिः ।

*** अनृतेन हि प्रत्यूढाः, * तेषां सत्यानां सतामनृतमपिधानम्, * नासदासीन्नो सदासीत्तदानीम्, तम आसीत्तमसा गूढमग्रे प्रकेतम्, * मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्, * इन्द्रो मायाभिः पुरुरूप ईयते, * मम माया दुरत्यया, * अनादिमायया सुप्तो यदा जीवः प्रबुध्यते इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते ।**

तस्याः स्वरूपं परब्रह्मदोषत्वं तत्फलं च श्रुत्यैव स्थापयति— **अनृतेने**ति । **प्रत्यूढाः**— प्रतीपं प्रापिताः; प्रतिरुद्धा इत्यर्थः । तरङ्गचन्द्रवत्कल्पितजीवभेदविवक्षया बहुवचनम्, पाशवदविवक्षितार्थं वा । * एतं ब्रह्मलोकं न विन्दन्तीत्यत्र प्रत्यूढत्वं हेतुः । इदं पूर्ववाक्योक्तेन विवृणोति— **तेषामि**ति । * त इमे सत्याः कामाः अनृतापिधानाः इत्युक्तानां तत्तत्कामोपाधिप्रतियोगिभूतकल्पितार्थव्यावृत्तिरूपाणां ब्रह्मस्वभावानां तदभिन्नतया प्रामाणिकानां सतां मिथ्याभूतमज्ञानमाच्छादकमित्यर्थः । व्यावर्त्यभेदेन व्यावृत्तिभेदकल्पनयाऽत्र बहुत्वोक्तिः; पूर्ववत्पाशन्यायेन वेति केचित् । अविद्याया अनिर्वाच्यत्वं दर्शयति— **नासदासीदि**ति । नात्र निषेधमात्रे पर्यवसानम्; उभयनिषेधेन **तम आसीदि**ति विहितमुभयविलक्षणमेव हि स्यादिति भावः । केचिदाहुः— * बन्धमूलमज्ञानं कर्मरूपं; प्रवाहानादि; भ्रान्तिज्ञानमूलं त्वज्ञानमिन्द्रियादिदोषेऽधिष्ठानयाथात्म्यज्ञानप्रागभावश्च एतत्सर्वं तत्कार्याणि च सदसद्विलक्षणानि । सर्वमूलाविद्यातु [अर्ध]पञ्चमाकारा; तन्निवृत्तिर्हि पञ्चमप्रकारेति । तमश्शब्देन ज्ञानविरोधित्वं तिरोधायकत्वं च व्यज्यते । **तमसा गूढम्**—अज्ञानेनावृतम् । अत्र **प्रकेतमि**ति विशेष्यं ब्रह्म । ननु सुबालश्रुतौ तमश्शब्देनातिसूक्ष्मा मूलप्रकृतिरुच्यते, न त्वविद्याऽविचेत्यत्र प्रकृतेर्मायात्वेन मिथ्यात्वमीश्वरस्यापि मायाकल्पितत्वं श्रुतमित्याह— **मायां त्वि**ति । प्रकृतिं मायां विद्यादिति विपर्यस्यान्वयः । एकस्य सतो मायामरीचिकावीचिकाभिर्विविधत्वेन भानमाह— **इन्द्रो मायाभिरि**ति । अत्र इन्द्रः सर्वदृगीश्वरः; * रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति पूर्ववाक्यस्वारस्यात् * स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति तस्मादिदन्द्रो नाम, इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणेत्युपनिषदैव तद्विषयत्वेन निरुक्तेश्चेति भावः । * ज्ञानवान्मां प्रपद्यते, वासुदेवः सर्वमिति—इत्युक्तैक्यज्ञानमन्तरेणास्या मायाया दुस्तरत्वं गीतमित्याह— **मम मये**ति । तदनादित्वं तया तिरोधानं कदाचित्तन्निवृत्तिश्च स्मर्यत इत्याह— **अनादी**ति । आदिशब्देन * अविद्यया मृत्युं तीर्त्वा, * भूयश्चान्ते विश्वमायानिवृत्तिः, * गुणमायासमावृतः, * यन्त्रारूढानि माययेत्यादिसंग्रहः । स्वरूपविधिवाक्यसिद्धशुद्धाकारानुरोधेन दोषविधिपरेषु महेश्वरादिशब्दा बहुवचनं च मायोपश्लिष्टविषयतया न [वि]विविधभेदसत्यत्वं स्थापयितुं क्षमन्त इत्यभिप्रायेणानुदाहृतानेकवाक्यसंकलितार्थस्य निर्विशेषत्वादेरनूक्तिः । * तदैक्षत बहु स्याम्

* एकधा बहुधा चैव दृश्यते जलचन्द्रवत्— इत्यादि प्रमाणं सर्वार्थानां च सच्चिदनुवेधेन भानं चानुसरन् शुक्तिरूप्यादिवद्भ्रमस्य विषयाश्रयभेदशङ्कां च व्युदस्यति— **स्वगतनानात्वमिति** । स्वाध्यस्तं चिदचिद्भेदं वृत्तिसंभेदेन स्मृतित्व अनुभवत्वादिधर्मभेदं चेत्यर्थः ।

**यथोक्तम्— * ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् । तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥ * तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित् कदाचिद् द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥ इति ।**

दोषविषयतयोदाहृतश्रुतीनां महेश्वरादिशब्दैरन्यपरत्वशङ्कां निवारयितुं श्रुतितदर्थापत्तिसिद्धमर्थं निर्विशेषवस्तुदोषविषयोपबृंहणेन व्यनक्ति—**यथोक्तमिति** । निर्विशेषेऽपि **भगवानित्युपचारः** । **अशेषमूर्तिः**—सर्वत्वेन भ्रान्तिसिद्ध इत्याशयः । **न तु वस्तुभूतः** * पुमान्न देवो न नरो न पशुर्न च पादपः, * चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः इत्यादिवादान्न देवादिजडवस्तुरूपः । यद्वा—न वक्ष्यमाणशैलादिकृत्स्नजगद्वस्तुरूपः । अत्र स्वरूपसाक्षिवृत्तिज्ञानानां प्रपञ्चरूपविकृतयोगात् **विज्ञानशब्दो** विविधं ज्ञायतेऽनेनेत्यविद्याविषयः । **विजृम्भितानि**—अध्यस्तानीत्यर्थः । भेदस्य दोषकल्पितत्वं व्यतिरेकेण द्रढयति— **यदेति** । **शुद्धम्**—अविद्यामुक्तम् । **निजरूपि**—तन्मूलभेददृष्टिशून्यम् । तत एव **सर्वकर्मक्षयेऽपास्तदोषम्**— कर्मसाध्यक्लेशादिरहितम् । **संकल्प** इहाविद्या । * अविद्यातरुसंभूतिस्थानतो दर्शनात्, * विज्ञानविजृम्भितानीत्युक्तस्यैव चात्र परामर्शात् समन्ताद्ब्रह्मणैकीकृत्य वा कल्प्यन्तेऽनेन भेदा इति व्युत्पत्तिसंभवाच्च । **वस्तुषु वस्तुभेदाः**— वस्तुत्वेन पृथग्भूतेषु देवादिपिण्डेषु कल्पितेषु जीवेषु वा तद्वद्भाता देवत्वादयो देवादिपिण्डाश्च न भवन्ति ; देवादिप्रतिभासो न स्यादित्याशयः । उक्तप्रदर्शनमात्रार्थतया वस्त्वस्तीत्यादिश्लोकद्वयमत्र नोपात्तम् । श्लोकचतुष्टयोक्तं विजातीयभेदाभावं निगमयति— **तस्मादिति** । ज्ञानमात्रात्मनि यथादर्शनं तत्तद्वादिभिरुक्तः सजातीयभेदोऽपि भ्रान्तिसिद्धतया मिथ्याभूत इत्याह—**विज्ञानमिति** । **विज्ञानशब्दाविह** स्वप्रकाशानन्दरूपविलक्षणज्ञानपरौ । तथाऽपि निरसनीयत्वेनाभिमताः स्वगता भेदा दुस्त्यजा इत्यत्राह—**ज्ञानमिति** । **विशुद्धम्**—अविद्योज्झितम् । अत एव **विमलम्**—भेददृष्टितन्मूलकर्मरहितम् । **विशोकम्**—कर्माभावादेव तत्फलभूतशोकमोहादिशून्यम् । **एकमिति** पूर्वोक्तात्मानुवादः । **सदैकम्**—सर्वदानाघ्रातविकारषट्कम् । ईदृशस्योत्पत्त्यादिकमपि अन्तःकरणवृत्तिसंभेदादध्यस्तम् । मिथ्यात्वादेवात्र वृद्धिह्रासादिकं निषिध्यते । स्फटिकरागकल्पस्याविद्यादेरवस्तुत्वेऽपि स्वाप्नसर्पादिनीत्या निराचिकीर्षादिकमपि न विरुद्धमिति भावः । **परमः परेश** इत्यादिना सामानाधिकरण्येन जीवेश्वरभेदस्यापि

कल्पितत्वोक्तिः। किमसौ दुरारोहः पूर्वपक्ष इत्यत्राह— **सद्भाव** इति। भेददृष्टेरविद्याजन्यत्वं सत्यत्वशङ्काया निःशेषोन्मूलनाय निगमयति— **एतदि**ति। **एतत्**—ज्ञानमात्रस्वरूपं ब्रह्म स्वाप्नप्रपंचकल्पेन भुवनेनाधिष्ठानतया आश्रितम्। **संव्यवहारभूतम्**—समन्तात् एकीकृत्य वा व्यवहारकर्मभूतमिति यावत्। तत्रापि कारणमविद्येति चोक्त-मित्यर्थः। **चकारः**— * सद्भाव उक्तः इत्यनेन भ्रमहेतूक्तेः समुच्चयार्थः। एवं वा योजना— संव्यवहारभूतं भुवनकोशादिकं तत्रापि एतदेवाध्यासतो भुवनाश्रितं * ज्योतींषि विष्णुरित्यादिना तथोक्तमिति। यद्वा एतत्तु भुवनगतं संव्यवहारभूतं संव्यवहारेण प्राप्तं व्यावहारिकं सत्यत्वं यत्, तत्राप्यध्यास एव कारणमुक्तमिति। तथा च परेष्टानुवादे भाषिष्यते— * तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमिति। **चः** त्वर्थः।

**अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति * न पुनर्मृत्यवे तदेकं पश्यति, * न पश्यो मृत्युं पश्यति, * यदा ह्येवैष एतस्मिन्नदृश्येऽना-त्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति, * भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ * ब्रह्म वेद ब्रह्मैव भवति, * तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः इत्यादयः श्रुतयः। अत्र मृत्युशब्देन अविद्याऽभिधीयते; यथा सनत्सुजातवचनम्— * प्रमादं वै मृत्युमहं ब्रवीमि सदाप्रमादममृतत्वं ब्रवीमीति।**

एतावता प्रकृते किमायातमित्यत्र मुक्त्युपायस्य कर्मनैरपेक्ष्यं सिद्धपरवाक्यानुविधायिमोक्षोपायपरवाक्यशक्त्या व्यनक्ति— **अस्या** इति। अनिर्वाच्यत्वादिविशिष्टाया इत्यर्थः। तत एव ज्ञानमात्रनिवर्त्यत्वं ब्रह्मात्मैकत्वं महा-वाक्यार्थः, ऐक्यदर्शनमविद्यानिवर्तकमित्याह— **न पुनरि**ति। एकं पश्यतीति यत् ततो न पुनर्मृत्यव इति योजना। य इति वाऽध्याहारः। **तदेकं पश्यती**त्यत्र कर्तृकर्मभेदव्युदासोऽप्यभिप्रेतः। शब्दजन्यप्रत्यक्षाभिप्रायेण पश्यती-त्याद्युक्तिः। दृगधीनसिद्धेरविद्यायास्तत्कार्याणां च [रा]रोगादीनामदर्शनमत्र साध्यमित्याह—**न पश्य** इति। निर्विशेषा-त्मैक्यबुद्धिदार्ढ्यानन्तरमेव भयनिवृत्त्या तत्कारणाविद्यानिवृत्तिसूचनमाह— **यदा ही**ति। **अदृश्ये**—दृक्कर्मत्वरहिते। **अनात्म्ये**—अशरीरे; आत्मना व्याप्यं हि शरीरमात्म्यम्। **अनिरुक्ते**—अशब्दगोचरे। **अनिलयने**—अनाधारे। यद्वा निलीयतेऽस्मिन्नध्यस्तैरिति निलयनमविद्या, तद्रहिते। **अभय**मिति प्रतिष्ठाविशेषणम्, लिङ्गव्यत्ययश्छान्दसः; क्रिया-विशेषणं वा, अव्ययीभावेन भयाभावायेति वा, **अथ सोऽभयं गतः** इति फलोक्तिसंवादात्। **प्रतिष्ठाम्**—ऐक्य-बुद्ध्या स्थितिमित्यर्थः। बन्धकतया सिद्धान्तीष्टानां कर्मपर्यन्तानामपि धीनिवर्त्यत्वेन मिथ्यात्वं दर्शयति— **भिद्यत** इति। **हृदयग्रन्थिः**— अविद्या; संशयादि तत्कार्यमिति सकार्याविद्यानिवृत्तिरिहोक्ता। ननु * तादृगेव भवति, * निरञ्जनः परमं साम्यमुपैति, * सोऽश्नुते सर्वान्कामान्सह, ब्रह्मणा विपश्चितेत्यादिषु फलदशायां तादृक्त्वसाम्य-भेदोक्तिस्वारस्यात् * पृथगात्मानमित्युक्तेश्च भेदज्ञानमेव मुक्तिहेतुः स्यादित्यत्राह— **ब्रह्म वेदे**ति। अत्राविद्याकृत-भेदनिवृत्तिरवधारणद्योत्या। न ह्यत्र तद्भूतस्यातद्भूतस्य वा तद्भावः साध्यः। कर्मसमुच्चयादिनिरासार्थमैक्यज्ञानेनाविद्या-

तरणव्यक्त्यर्थं चाह— **तमेवेति** । * वेदाहमेतं पुरुषं महान्तमिति सर्वलोकप्रत्यक्षसिद्धजीवैक्येन प्रकृतो ह्यत्र तमिति परामृश्यत इति भावः । इदं वाक्यद्वयं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वाय प्रागुपात्तम् । इह त्वविद्यानिवृत्त्यतिरिक्त-साध्यनिरासार्थम् । * नान्यः पन्थाः इति कर्मनिषेधपरम् । आदिशब्देन * ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वानित्यादिसंग्रहः । **श्रुतय** इति प्रकृत्या बहुवचनेन च श्रुतस्यैव ग्राह्यत्वं मिथस्संवादेन दार्ढ्यं च सूच्यते । उपात्तवाक्येष्वविद्यानिवृत्तिर्न भाति ; मृत्युशब्दस्तु अर्थान्तरेऽपि स्यादित्यत्राह— **अत्रेति** । मोक्षोपाय-वाक्येषु ज्ञाननिवर्त्यविषयत्वौचित्यादस्याविद्यात्वमिति भावः । प्रसिद्धिविरोधिशङ्कां निरस्यति— **यथेति** । **प्रमादः**— अनवधानता; अज्ञानम् ; कार्येण वा कारणलक्षणा । **अप्रमादम्**— अविद्यानिवृत्तिम् । यद्वा—अत्र अमृतत्वसाधन-तयोक्तः अप्रमादस्तत्त्वज्ञानम् ; तत्प्रतिपक्षः प्रमादोऽप्यत्राज्ञानमेव । **अहं ब्रवीमीति** तत्त्ववित्सिद्धान्तख्यापनपरम् ।

*** सत्यं ज्ञानमनन्तं ब्रह्म, * विज्ञानमानन्दं ब्रह्मेत्यादिशोधकवाक्यावसेयनिर्विशेष-स्वरूपब्रह्मात्मैकत्वविज्ञानं च * अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद, * अकृत्स्नो ह्येषः * आत्मेत्येवोपासीत, * तत्त्वमसि, * त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि [भगवो] देवते * तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यादि-वाक्यसिद्धम् । वक्ष्यति चैतदेव— * आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति । तथा च वाक्यकारः—* आत्मेत्येव तु गृह्णीयात्सर्वस्य तन्निष्पत्तेरिति । अनेन च ब्रह्मात्मै-कत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्यु[रु]क्ता ॥**

ब्रह्मणो निर्विशेषत्वं जीवतादात्म्यमैक्यज्ञानस्य मुक्तिहेतुत्वं च नैतेषु व्यक्तं भातीत्यत्र शोधकैर्निर्विशेषत्वमुपायपर वाक्यैस्तत्त्वनिर्देशैस्तदनुसन्धानपरैश्च वाक्यैर्जीवैक्यज्ञानसिद्धिं चाह— **सत्यमिति** । त्वं वेत्यादिना देवतां प्रति उक्तस्यैव तदर्थस्य, **तद्योऽहमित्यादिना** स्वस्मिन्ननुसन्धानं स्थापयति । उक्तस्य सूत्रकृदिष्टत्वमाह— **वक्ष्यतीति** । **एतदेव**—न त्वदिष्टमिति भावः । **आत्मेति**—स्वानन्यत्वेनेति यावत् । सूत्राभिप्रेतं तद्विदुक्त्या स्पष्टयति—**तथेति** । **सर्वस्य तन्निष्पत्तेः**— भातस्य सर्वस्य तस्मिन्नध्यस्तत्वादित्यर्थः ; बाधावस्थायामधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादिति भावः । अद्वैतधीकरणस्य वाक्यस्य सूत्रवाक्याभ्यां सूचितमनुग्राहकं वचः * सन्मूलाः इत्यादिना प्रागुक्तमेव । चोद्यो-त्थापनायाह—**अनेनेति** । असत्यभेदबाधस्वरसेनेति भावः । **चः** पूर्ववदुभयार्थः । * द्वितीयाद्वै भयं भवतीत्यादिसूचनाय **ब्रह्मात्मैकत्वोक्तिः** । मिथ्याभूतस्य ज्ञानेतरकर्मनिवर्त्यत्वे सत्यत्वं स्यात्, तच्च मानविरुद्धम् ; न च रज्जुसर्पादिनिवृत्तौ मन्त्रौषधदण्डघाताद्यपेक्षेति भावः । अपुनरङ्कुरत्वाय **सकारणत्वोक्तिः** ॥

**ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते ? कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ? तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत् ; तुल्ययो-**

**विरोधे वा कथं बाध्यबाधकभावः ? पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्; शास्त्रप्रत्यक्षयोरपि समानमेतत्। एतदुक्तं भवति— बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्; ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि तद्बाध्यम्, अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति। तस्मादनादिनिधनाविच्छिन्नसंप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धबुद्धमुक्तस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन संभाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। संभाव्यते च विविधविकल्पभेदप्रपंचग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः ॥**

आस्तामनुकूलस्तर्कः, प्रतिकूलस्तु सिद्ध इत्यभिप्रायेण चोदयति— **ननु चे**ति। बाधकतयेष्टयोः शास्त्रानुमानयोः शब्दार्थस्वरूपतद्व्युत्पत्तीनां व्याप्तिधर्मलिङ्गादीनां च सिद्ध्यर्थमुपजीव्यं प्रत्यक्षं न ताभ्यां बाध्येत। अन्यथा— आदित्यो यूपः, पावकोऽनुष्ण इत्यादेरपि प्रत्यक्षबाधकत्वं स्यात्। चन्द्रादिभेदबाधकस्य तु तन्नोपजीव्यमित्यभिप्रायेण सकलशब्दः। सकलभेदबाधे ह्युपजीव्यबाधोऽप्यन्तर्गतः। **कथमिव**—न कथंचित्; प्रत्यक्षविरुद्धं शास्त्रमेव बाधितमुख्यार्थं भाक्तं नेयमिति भावः।

अत्र किं प्रत्यक्षत्वान्न बाध्यम्, उत परोक्षत्वान्मूलित्वाच्च न बाधकमिति शङ्काद्वये प्रथमं परिहरति— **कथं वे**ति। प्रत्यक्षशब्द इहापरोक्षमात्रपरः; बाधात्पूर्वमनाभासत्वाभिमानो बाधश्च प्रपञ्चरज्जुसर्पभ्रमयोः सम इति भावः। मूलित्वादिना न शास्त्रं बाधकमिति शङ्कते— **तत्रे**ति। **प्रत्यक्षयोः**—अपरोक्षयोरित्यर्थः। इदं च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोरप्युपलक्षणम्। अत एवेह दूष्यं निष्कृष्यानुवक्ति— **इहे**ति। सकलभेदनिवृत्तावित्यर्थः। वैषम्यव्यक्त्यै तुशब्दः। प्रत्यक्षशब्दोऽत्र प्रत्यक्षप्रमाणविषयः। द्वयोः प्रत्यक्षयोरित्युक्तस्य तुल्यबलत्वस्य बाधं प्रत्यप्रयोजकत्वात्, अन्यथा प्रकरणसमेऽतिप्रसङ्गाद्विपरिवर्तप्रसङ्गाच्चान्यत्प्रयोजकं शिक्षयितुमाह— **तुल्ययोरि**ति। चोद्यत्रयनिवृत्त्यै सिद्धान्तीष्टं प्रयोजकं शङ्कते— **पूर्वे**ति। **पूर्वोत्तरयोरि**ति क्रमो न नियतः। उक्तं प्रयोजकमपि प्रस्तुते तावदस्तीत्याह— **शास्त्रे**ति। शास्त्रशब्द इह तज्जन्मधीलक्षकः। धीद्वयविवेकार्थं विशेषविवक्षया वा तत्कारणेऽन्वयोक्तिः। **एतत्**—वैषम्यमित्यर्थः। ननु दुष्टहेतुजत्वस्य बाध्यताहेतुत्वमुपजीव्यत्वाद्यभावेन तुल्यत्वे सति स्यात्, उपजीव्यबाधे चाधर्मत्वसाधकहिंसाद्यपि प्रमाणं स्यादित्यत्राह— **एतदुक्तमि**ति। तुल्यत्वोक्तिर्दृष्टान्तार्था। तद्विशिष्टं वा दुष्टहेतुजन्यत्वादिकं विवक्षितम्। आदिशब्देनोपक्रमापच्छेदाधिकरणोक्तनियतानियतपौर्वापर्यादेः परोक्षत्वादेश्च संग्रहः। **अकारणम्**— अप्रयोजकम्; अव्याप्तेरिति शेषः। उक्तमर्थमुदाहरणस्थेन तर्केण द्रढयति— **ज्वाले**ति। कारणं चेदित्यध्याहार्यम्। **अयोगादि**ति प्रसज्यमानोक्तिः। ननु प्रत्यक्षं वर्तमानग्राहितया ज्वालास्वरूपं गृह्णाति; भिन्न-

सन्ततावित्र सूक्ष्मदशामेकसन्ततावपि ज्वालाभेदः प्रत्यक्षसिद्ध इत्यत्राह— **तत्रे**ति । प्रत्यक्षशब्द इह प्रत्यभिज्ञाख्यविशेषविषयः । सा चात्र भ्रान्तिरूपा पटुतरदृष्टीनामपि पूर्वापरकालवर्त्यैक्यविषयात्यन्तसादृश्यसादेश्या[न्यादृश्या]दिभिर्जायत एव । अतो विरोधो बाधश्चात्र सिद्ध इति भावः । तर्हि प्रसिद्धस्याप्रयोजकत्वे प्रयोज्यं निष्कारणं स्यादित्यत्राह— **एवं च सती**ति । **चः** शङ्कानिवृत्त्यर्थः समुच्चयार्थो वा ; अव्याप्त्या च सह तर्कबाधे च सतीति यावत् । सजातीययोर्विजातीययोर्वेति न निर्बन्ध इत्यभिप्रायेण **द्वयोरि**त्युक्तम् । **प्रमाणयोः** बलविमर्शात्पूर्वं मानत्वेन भातयोरित्यर्थः । **विरोधे**—मिथो विषयापहाररूपे । **अन्यथासिद्धिः**—स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभः । तत्र हेतुत्वेन सावकाशत्वमाकृष्टव्यम् । तच्च द्विचन्द्रादिधीवदप्रमाणकोटिनिवेशार्हत्वाद्वा पदाहवनीयादिनयेन अविरुद्धविषयलाभाद्वा स्यात् । **अनन्यथासिद्धम्**—स्वविषयमिथ्यात्वेऽनुपपन्नस्वरूपं विरुद्धमबाधितोत्पत्तुम् अनर्हत्वाद्वा । तत्र हेतु**रनवकाशत्वम् ;** तच्च पूर्वोक्तावकाशद्वयाभावसमुच्चयरूपम् । **इतरत्** । अनादृतसाजात्यादिविशेषमिति भावः । **सर्वत्र**—तुल्यातुल्योदाहरणेषु तार्तीयबाधस्थलेषु चेत्यर्थः । **निर्णयः**—प्रमाणतर्कसिद्धोऽध्यवसायः । **इति**शब्दः पूर्वो हेतौ, उत्तरः समाप्तौ । समानमेतदित्यत्राभिप्रेतं शास्त्रप्राबल्यं विवृण्वन् एतदुक्तमिति प्रक्रान्तं निगमयति— **तस्मादि**ति । अस्मदुक्तस्यैव प्रयोजकत्वादित्यर्थः । यद्यपि— अविद्यानिवृत्तौ वेदोऽपि न स्यात् ; तथाऽपि सर्गप्रलयकालेषूत्पत्तिनाशाभावात् **अनादिनिधनत्वो**क्तिः । तद्विषयैव * अनादिनिधनाह्येषा वागुत्सृष्टा स्वयंभुवा इति स्मृतिरिति भावः । **अविच्छिन्नसंप्रदायत्वो**क्त्या मन्वन्तरादिष्वविच्छेदेन विप्लवासंभवः सूच्यते ।

* प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्येतदपि कालविशेषाद्यनुगुणशाखाविशेषप्रवर्तनपरम् ; अन्यथा * ब्रह्म स्वयंभ्वभ्यानर्षदित्यादिभिर्विरोधात् ; स्मर्तव्यत्वे सत्यस्मर्यमाणकर्तृकत्वादित्यपौरुषेयत्वसाधकं चात्र सूचितम् । अत एव वक्तृदोषासंभवः । मन्वाद्याप्तवाक्यानां श्रुतिविरोधे क्वचिद्बाध इष्टः, न तथेत्यभिप्रायेण **गन्ध**शब्दः । एवमप्रमाणकोटिनिवेशोऽपास्तः । विरुद्धविषयोऽपि नास्तीति व्यक्त्यै **निर्विशेष**त्वाद्युक्तिः । **नित्य**शब्दः शुद्धत्वादौ सर्वत्र योज्यः, अबाधपरो वा । **शुद्धम्**— अविद्यासाक्षित्वावस्थायामपि वस्तुतस्तद्रहितम् । तेन **बुद्धम्**— अतिरोहितनित्यप्रकाशम् । तत एव **मुक्तम्**— सर्वदा कर्मतत्फलवियुक्तम् । **स्वप्रकाशम्**— मिथ्यात्वप्रयोजकदृश्यत्वोज्झितम् । तत्र हेतुश्चिद्रूपत्वम् । अत्र निषेधकज्ञानाश्रयत्वस्यापि मिथ्यात्वव्यक्त्यै **मात्र**शब्दः । **ब्रह्मात्मभावः**— ब्रह्मण एव प्रत्यगात्मत्वम् । प्रत्यक्षस्य संभाव्यमानदोषत्वम् प्राचुर्येणाऽन्यत्र दोषदर्शनादन्यत्रापि दोषशङ्कार्हत्वम् । तत एवानुमानादेरपि शङ्कितदोषत्वाय **आदि**शब्दः । देवादिभेदैस्तदवान्तरैश्च बन्धस्य विविधविकल्परूपत्वम् । विशेषतः कल्प्यत इति **विकल्पः** । **एव**कारः प्रतिकूलतर्कासंभवपरः । ननु काचाद्यभावान्निर्दोषत्वेन प्रसिद्धे प्रत्यक्षे दोषो दुर्वचः ; तज्जातीये दोषदृष्ट्याऽन्यत्रापि तत्क्लृप्तौ वेदे वाक्यत्वादिभिस्तथा क्लृप्तिः स्यादित्यत्राह— **संभाव्यत** इति । **चः** शङ्कानिवृत्त्यर्थः, बाधकप्रत्ययेन सह कारणदोषनिश्चयस्य समुच्चयार्थो वा । **भेदप्रपञ्चः** निजकर्मभेदविभिन्नचित्तैरविद्याकल्पितश्चिदचिद्विस्तारः । **प्रत्यक्षस्ये**ति भेदग्राहकमात्रस्योपलक्षणम् । **आदिशब्देन** मूलाविद्यां भेददृष्टिं च संगृह्णाति । एतेषु यथार्हमन्योन्याश्रयादिनिरासाय **अनादि**शब्दः । एतेषां दोषत्वम् * वासनारेणुकुण्ठितः, * अविद्यासंचितं कर्मेत्यादिभिस्सिद्धम् ।

**ननु अनादिनिधनाविच्छिन्नसंप्रदायतया निर्दोषस्यापि शास्त्रस्य * ज्योतिष्टोमेन**

स्वर्गकामो यजेतेत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत ; सत्यम्— पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः ; निर्गुणत्वात्परस्य ब्रह्मणः । ननु च * यस्सर्वज्ञस्सर्ववित्, * पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, * सत्यकामस्सत्यसंकल्पः इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् ? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ।

भेदग्राहकप्रत्यक्षादीनामद्वैतश्रुतिविरोधाद्बाध्यत्वमुक्तम् ; तत्रातिप्रसक्त्या चोदयति— **नन्विति** । **अपिः** सदोष[निर्दोष]समुच्चयार्थः, विरोधार्थो वा । बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै **ज्योतिष्टोमाद्युक्तिः** । द्वितीयभेदावलम्बिनी तृतीयादिदशाध्यायी । आदिशब्देन कर्मविध्यन्तरसंग्रहः । बाध्यत्वोक्त्या प्रमाणलक्षणविरोधोऽपि सूचितः । तत्र धर्मप्रमाणस्य साकल्येनांशतोऽपि वा पादेन वा त्रिपाद्या वा ह्यप्रामाण्यमपाकृतम् । इष्टप्रसङ्गोऽयमित्याह—**सत्यमिति** । यद्वा बाध्यत्वमस्ति ; तावता सदोषत्वमप्रामाण्यं च न स्यादित्यर्धाङ्गीकारः ; मिथ्यात्वेऽपि दृष्टिविधिनयात् साध्यसाधनभावे व्यावहारिकं प्रामाण्यमिति भावः । अङ्गीकृतं निर्दोषस्य बाध्यत्वांशं पौर्वापर्यरूपविशेषेऽपि स्वोक्तबाधप्रयोजकव्याप्तिं च श्रौतदृष्टान्तेन विवृणोति— **पूर्व** इति । **मोक्षशास्त्रस्य**—बन्धरूपभेदनिवर्तकतत्त्वावेदकवाक्यस्येत्यर्थः । * पञ्च ऋत्विजः समन्वारब्धाः सर्पन्ति । अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमानः इत्यस्मिन् प्रयोगे * यदि बहिष्पवमानं सर्पतां प्रस्तोताऽपच्छिद्येत इत्यादिनाऽपच्छेदप्रायश्चित्तविधौ * यदि प्रतिहर्ता पशुभिर्यजमानो व्यृध्येत सर्ववेदसं दद्यात्, यद्युद्गाता यज्ञेन यजमानो व्यृध्येतादक्षिणः स यज्ञः संस्थाप्यः इत्युक्तम् । तदिदं नैमित्तिकद्वयमेकस्मिन्प्रयोगे विरुद्धम् । तत्र युगपदपच्छेदे उद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तं वा कार्यम् । पूर्वापरापच्छेदे यो जघन्योऽपच्छिद्येत तस्य प्रायश्चित्तमेवेति व्यवस्थापितम् । तदुक्तम्— * पूर्वापरापच्छेदे पूर्वदौर्बल्यं प्रकृतिवदिति । अत्रेवं पूर्वपक्षः— उपक्रमनयेनासंजातविरोधितयोदितत्वात्पूर्वस्य प्राबल्यम् । परस्य तूदितविपक्षसन्निधावेव प्रवृत्तेर्दौर्बल्यमिति । सिद्धान्तस्तु— परस्मिन्ननुत्पन्ने तदसन्निधानात्परमबाधित्वा पूर्वस्योदयः । इतरस्य तु पूर्वोदितविरोध्यबाधेनोदयायोगान्निमित्तोदये नैमित्तिकशास्त्रोदयावश्यंभावाच्च परप्राबल्यम् । उपक्रमोपसंहारयोस्तु विरुद्धस्य परस्यानुदय एवेति । इह तु कर्मिणां भुक्तौ पूर्वप्रावण्येनार्थक्रमात् तदनुगुणपाठक्रमाच्चापच्छेदवत्पूर्ववृत्तकर्मशास्त्रोपमर्देन भोगनिवृत्तिरूपमुक्तिशास्त्रोदयः । ईदृशोदाहरणेष्वेव * पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यतीत्युच्यते । एवमुत्सर्गापवादाद्युदाहरणान्तरेष्वपि निर्दोषवाक्यसिद्धस्य निरवकाशेन बाधो निदर्शनीयः । ननु वेदान्तेष्वपि सगुणोपास्तिविधीनां भेदावलम्बित्वं सिद्धम् । न च तेषां निर्गुणवाक्यापेक्षया पूर्वत्वनियमः ; अतस्तेषु नापच्छेदनीतिरित्यत्राह— **वेदान्तेति** । **सगुणब्रह्मोक्तिर्दृष्ट्यादेरुपलक्षणार्था** । **उपासनपराणामित्यनेन** सिद्धे तात्पर्यं नास्तीति व्यज्यते । पौर्वापर्याभावेऽपि तत्फलभूतबाधस्य तात्पर्यलब्धत्वदर्शनात् **अयमेव न्यायः** इत्युक्तम् । * संकल्पादेवास्य पितरः समुत्तिष्ठन्ति, * जक्षत्क्रीडन्नित्यादिसांसारिकफलोक्त्या तादृश-

विद्यानां मोक्षशास्त्रापेक्षया कर्मशास्त्रवत् आर्थं पूर्वत्वं च सिद्धम् । यद्वा, निर्दोषत्वेऽपि निरवकाशवाक्येन बाधः स्यादित्युक्त एव न्याय इत्यर्थः । गुणविधिरेवात्रालम्भविधिन्यायान्निरवकाश इत्यत्राह— **निर्गुणत्वादिति** । निर्विशेषस्वरूपपरतया निरवकाशैः वाक्यैर्गुणबाधादिति भावः । विधिपदानन्वयेन सिद्धविषयाणां सगुणवाक्यानां पूर्वत्वान्यपर्ययोरयोगात् न बाध्यत्वं स्यादित्यभिप्रायेण चोदयति— **ननु चेति** । **कथमिति** प्रतिक्षेपवचनं प्रश्नवद्भावयन् पौर्वापर्यमभिसन्धाय प्रतिवक्ति— **निर्गुणेति** ।

एतदुक्तं भवति— * अस्थूलमनण्वह्रस्वमदीर्घम्, * सत्यं ज्ञानमनन्तं ब्रह्म, * निर्गुणम्, * निरञ्जनम् इत्यादीनि वाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति, इतराणि च सगुणम् । उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम् ।

अनन्यपरसगुणवाक्यबाधसमर्थानि कानि वाक्यानि? तेषां च तद्बाधे कीदृशं सामर्थ्यमित्यत्राह— **एतदुक्तमिति** । **कूटस्थम्**—विश्वविकाराध्यासे तन्निवृत्तौ च स्वयं कूटवत् अविकृतम् । कूटे अध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन स्थितम् । **इतराणि**—उपात्तानि, * यस्सर्वज्ञः इत्यादीनि तादृशान्यपि । चस्त्वर्थः, विरुद्धवर्गद्वयसमुच्चयपरो वा । **तेनैव** मुक्तिमुक्तिशास्त्रयोरिह प्रदर्शितेनैवेत्यर्थः । निषेध्यप्रसञ्जकापेक्षया निषेधकस्य परत्वमर्थसिद्धमित्यभिप्रायेण **गुणापेक्षत्वेनेत्युक्तम्** । सगुणवाक्यानां निर्दोषत्वेऽप्यार्थेन पूर्वत्वेन बाध्यत्वम्, उपास्तिविधिशेषत्वक्लृप्त्या साफल्यात्कथंचित्प्रामाण्यं च स्यादित्यभिप्रायेणाह— **न किंचिदिति** ।

ननु च— * सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते । नेत्युच्यते; सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्— अनभिधानज्ञो देवानांप्रियः । एकार्थत्वं नाम सर्वपदानामर्थैक्यम् । विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः । ततश्च एकार्थत्वं न सिध्यति । एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात् । एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु—एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायिता च ।

अत्र सत्यत्वादिविशिष्टपरं वाक्यं कथं निर्गुणवाक्यतयोपात्तमिति चोदयति— **ननु चेति** । **सत्यज्ञानादयः**; * द्व्येकयोः इतिवद्भावप्रधानोक्तिः । आनन्त्यमपि व्याप्तिरूपो गुण इति बुद्ध्या बहुवचनम् । अयं भावः— अत्र

गुणप्रतीतिर्निपह्नोतुं शक्या ; तस्याश्च बाधाभावात् स्वतः प्रमात्वं सुस्थमिति । नेयं प्रमितिरिति युक्त्या स्थापयिष्यत इत्याह— **नेत्युच्यत** इति । एकार्थतात्पर्यार्हत्वरूपवृत्त्या गुणभेदधीर्बाध्येत्याह— **सामानाधिकरण्येने**ति । कारकभेदक्रियैकत्वबुद्ध्योरिव विशेषणभेदविशेष्यैक्यधियोरविरोधान्न बाध्यबाधकतेति चोदयति— **अनेके**ति । समानाधिकरणव्यधिकरणपदानां वृत्तिवैषम्यमेकार्थशब्देनान्ययोगव्यवच्छेदं च न जानासीत्युपालम्भमुखेन प्रतिवक्ति— **अनभिधाने**ति । **देवानांप्रिय** इति अज्ञातनाम्नामुपचारप्रयोगः ; इह त्वप्रख्यात इत्यर्थः । छाग इत्येके ; तदाऽप्यज्ञ इति यावत् । तदज्ञातं स्वाभिप्रेतं विवृणोति— **एकार्थत्वमि**ति । त्रेधा हि पदानामर्थैक्यम्— प्रकृतिप्रत्ययसमुदायबोध्यप्रातिस्विकविशेष्यैक्यम् , * अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादित्येतावता मिथोऽन्वितार्थपदजातबोध्यप्रधानैक्यम् , पदभेदेऽर्थभेदाभावश्चेति । तेष्वाद्यं पदमात्रे; द्वितीयं व्यधिकरणवाक्ये; [तत्र] तृतीयमिह मदुक्तम् । तच्च * भिन्नप्रवृत्तिनिमित्तानां शब्दानामित्यादिपतञ्जलिवाक्यप्रसिद्धमित्यभिप्रायेण **नाम**शब्दः । एवमप्यस्य प्रधानप्रतिपाद्यविशेष्यभेदाभावमात्रपरत्वे को विरोध इत्यत्राह— **विशिष्टे**ति । **विशेषणभेदेने**त्येतत् बहुधा योज्यम्— विशेषणानां मिथो विशेष्याच्च भेदेन, विशेषणभेदेनैव विशिष्टभेदाद्विशेष्यभेदप्रसङ्गेन चेति ।

**भेदकं हि स्वभावेन प्रत्यक्षाद्यनिराकृतम् । विशेषणान्तराधारात् स्वाधारं भेत्तुमर्हति ॥ ३४० ॥**

श्यामो युवेत्यादौ दृष्टत्वादेव विशेषणानां भेदकत्वस्वभावोऽपोदितः । इह तु भेदकं विशेषणं भेद्यं विशेष्यमिति व्यवस्थाया नित्यातीन्द्रिये शब्दोपस्थाप्ये कः प्रतिरोद्धा ? अनावृत्त एकवचनान्तो विशेष्यशब्द इति चेन्न ; जात्यैक्यविवक्षयाऽपि तदुपपत्तेः, यथा—खण्डो मुण्डो गौरिति । प्रत्यक्षबलात्तत्र भेद इति चेन्न; अप्रत्यक्षेऽपि तथोक्तौ व्यक्तिभेदबुद्धेः, तद्वद्ब्रह्मणि । किंच तेनतेन पदेनोद्दिष्टे विशिष्टे पदान्तरार्थविधौ विशेषणानां मिथः समवायः स्यात् , उपादेयस्य यावदुद्देश्यव्यापित्वात् ; तथा च तेषां विशेषणस्वरूपाद्भेदेन नानाविशिष्टापत्तिः । किंच,

**विशिष्टार्थाभिधायित्वे भेदकेष्वपि भेद्यवत् । अन्योन्यसमवायैक्यप्रसङ्गौ चात्र तन्त्रितौ ॥ ३४१ ॥**

तथा हि— विशेषणभेदेन विशेषणानां परस्परसमवायतादात्म्याभ्यामन्यथाभावेन पदानामव्युत्पन्नाप्रामाणिकार्थभेदः, विशिष्टविधावपि समानविभक्तिविशेष्यांशमिव विशेषणांशमप्येकीकुर्यात् ; प्रकृत्युपस्थापितैक्यपरत्वात् । तदाऽपि स्वान्यैक्याद्विशेषणानां स्वस्माद्भेदः स्यादित्यादयः प्रसङ्गा इहाभिप्रेताः । एतैः फलितं प्रसङ्गान्तरमाह— **तत** इति । विशिष्टस्यैवमनभिधेयत्वे विशेषणमात्रोक्तिर्दूरापास्तेति मत्वा विशेष्यमात्रपक्षे चोदयति— **एवं तर्ही**ति । उक्तप्रकारेण विशेष्यमात्रपरत्वे सतीत्यर्थः । भिन्ननिमित्तानामनुपपत्त्या निमित्तत्यागे कथं पर्यायत्वमित्यत्राह— **अविशिष्टे**ति । एकपदोक्तमात्राभिधायित्वादिति यावत् । अत एव पदान्तरवैय[र्थ्यं]र्थ्यात्पर्यायत्वं सामानाधिकरण्यभङ्गश्च स्यात् । आहुश्च—

* नातत्तन्मन्यसे तावन्न तत्तदपि मंस्यसे । सामानाधिकरण्यं हि रूपभेदमपेक्षते ॥ इति ।

विवक्षितस्य लोकोत्तीर्णत्वान्नैतत्त्वरमाणेन लभ्यमित्यवहितेन क्रमेणेदं बोद्धव्यमित्यभिप्रायेणाह— **एकार्थाभिधायित्वेऽपी**ति । उक्तप्रसङ्गकानुवादोऽयम् । तेन त्वदुक्तं न प्रसज्यत इत्याह— **एकत्वे**ति । अयं भावः—वाक्यतात्पर्यानुसारेण हि सर्वत्रोपचारः । अत्र च स्वरूपबुभुत्सया समानविभक्त्या चार्थैक्ये तात्पर्यं निश्चितम् । तेन विशे-

गाभिधानं त्यक्तम्; तत्फलभूतव्यावृत्तिपरत्वं तु स्थितम्। तदिह विरोधिव्यावृत्तिभेदैः प्रतिपदं प्रयोजनम् सामानाधि-करण्यलक्षणानुगुणमैकार्थ्यम् निमित्तभेदव्युत्पत्तिफलैः पर्यायत्वनिरासश्च स्यादिति। उक्तं च **सुरेश्वराचार्यैः**—

* प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः। पश्चादभावं जानाति वध्यघातकवत्पदात्॥

शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्मिणोः। मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः॥

तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्। स्वार्थार्पणप्रणाड्यैव परिशिष्टौ विशेषणम्॥ इति।

द्विरोध्यभेदिनश्चाहुः— * व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता। इति।

एतदुक्तं भवति— लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तब्रह्मपरम्। ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम्। अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावृत्तपरम्। न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः; अपि तु सकलेतरविरोधि ब्रह्मैव। यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिः तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम्। तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् इत्यादिभिरैकार्थ्यम्। * यतो वा इमानि भूतानि जायन्ते, * सदेव सोम्येदमग्र आसीत्, * आत्मा वा इदमेक एवाग्र आसीत् इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते— * सत्यं ज्ञानमनन्तं ब्रह्मेति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते; अन्यथा * निरञ्जनम्, * निर्गुणम् इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति॥

ननु एकत्वतात्पर्येऽपि तत्त्वमस्यादिवदुपलक्षणमुखेन स्वरूपैक्यपरत्वमस्तु; सर्वेभ्यश्च व्यावृत्तिर्विशेषतो दुर्वचा; अप्रयोजकत्वेन संग्रहेऽप्येकेनालम्; व्यावृत्तीनां धर्मत्वे ताभिः प्रतिपदोपस्थापितव्यावृत्तिभेदात्सविशेषणत्वम्; तद्बहुत्वा-

दैकार्थ्यभङ्गो विशेष्यभेदप्रसङ्गश्च ; स्वरूपत्वे तु प्रयोजनभेदाभाव इत्याशङ्क्याह— **एतदुक्तमिति** । * ब्रह्मविदाप्नोति परमिति प्रस्तुतं ब्रह्म किमिति बुभुत्सिते कारणत्वस्य तटस्थतया स्वरूपलक्षणतो ह्यत्र तत्स्वरूपं शोध्यते । तत्र विशेषणोक्तिराम्रप्रश्ने कोविदारप्रत्युक्तिवत्स्यात् , लक्षणं च सर्वत्र व्यावृत्त्यर्थमेवेत्यभिप्रायेणाह— **लक्षणत** इति । **रूप**मिह स्वरूपम् । निश्शेषव्यावृत्तिः प्रयोजकेन संग्रहात्सुवचेत्याह— **तद्विरोधीति** । अत्र रूपं स्वरूपं वाऽनृतत्वादिः, ब्रह्मेतरव्याप्तधर्मो वा । **अनेन**—प्रत्येकं कृत्स्नव्युदासक्षमेण । न हि पदान्तरमेवंविधमस्तीत्यभिप्रायेण **पदत्रयोक्तिः** । एकेन पर्याप्तेऽपि प्रयोजनकार्त्स्न्यार्थमेतावद्वक्तव्यम् । आनन्दपदस्य तूपलक्षणमेतत् । **फलतः** ; विरोधिव्युदासस्य फलत्वान्नात्र स्वरूपमात्रपरत्वं विरोध इति भावः । पदानां पृथक्प्रयोजनानि व्यनक्ति— **तत्रेति** ; तस्मिन्पदत्रय इत्यर्थः । प्राकरणिकेन कारणत्वेन तुच्छव्यावृत्तौ सिद्धायां शङ्कितं विकारित्वेनानृतत्वमत्र सत्यपदेन व्युदस्तम् । **वस्तु**शब्दोऽत्र व्यावहारिकसत्यार्थः । **अन्याधीनप्रकाशत्वं जड**शब्दार्थः । असङ्कोचात् **अनन्त**पदेन त्रिविधपरिच्छेदव्यावृत्तिरुक्ता । यदि व्यावृत्तयो भावरूपा धर्माः, तदा सत्यत्वादीन्येव स्युः; अभावरूपा अपि तत्तुल्यचोद्या इत्यत्राह— **न चेति** । तदाऽपि नैष्फल्यप्रसङ्गं परिजिहीर्षुराह— **अपि त्विति** । व्यावृत्तिर्हि यथा स्वत एव स्वेतरव्यावृत्तिः, तद्वद्ब्रह्मस्वरूपमेव सकलेतरविरोधित्वात्स्वयं सर्वव्यावृत्तिः; भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः । भावस्याभावत्वमेकस्यानेकत्वं च कथमित्यत्र भावान्तराभावपक्षे तिष्ठन्निदर्शयति—**यथेति** । अवधारणेन धर्मान्तरानुपलम्भं व्यनक्ति । अन्यथाऽनवस्थामभिप्रेत्याह— **न धर्मेति** । एवमेकस्यैव सर्वव्यावृत्तिरूपत्वे व्यावृत्तेरपि पदबोध्यत्वे पदान्तरवैयर्थ्यं स्यादित्यत्र दृष्टान्तोक्तं दार्ष्टान्तिकेऽतिदिशति— **एकस्येति** । **शौक्ल्यं कार्ष्ण्य**मित्यादिप्रतिबन्दिरिहाभिप्रेता । तत्र अनन्तपदे तावद्व्यावृत्तिबोधकत्वं सिद्धम् ; पदान्तरयोरपि तथात्वे को विरोध इति भावः । प्रतिबन्दिवाक्यमिह प्रत्यक्षानुवादित्वान्मन्दफलम् , इदं तु न तथा ; गुणपरत्वे चात्र निमित्तमात्रलाभः, तत्परित्यागे तु तात्पर्यार्थः सिद्धः । अतः **अर्थवत्तरम्** इत्युक्तम् । व्युत्पत्तिभेदं प्रयोजनभेदं चाभिसन्धाय **अपर्याय**त्वोक्तिः । **पर्याय**शब्दोऽत्र भावप्रधानः । पर्यायत्वं यस्य नास्ति तदपर्यायमिति गतिः, यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति, तदपर्यायमिति वा । * अपर्यायत्वम् इति केचित्पठन्ति । नात्र किञ्चिद्बाधकमित्यभिप्रायेणाखण्डपरत्वं सहेतुकं निगमयति— **तस्मादिति** । तात्पर्यप्राबल्यात् शङ्कितचोद्यनिस्ताराच्चेत्यर्थः । **एकमेव ब्रह्मे**त्यनेन विशेष्यभेदस्य प्रसङ्ग एवापास्त इत्यभिप्रेतम् । इदमपि वाक्यं नाबुद्धबोधार्थम् , किं तु स्वतस्सिद्धपरामर्शेन कल्पितविरोध्याकारनिषेधार्थमित्यभिप्रायेण **स्वयंज्योतिरि**त्याद्युक्तम् । सत्यत्वादीनामनृतत्वादीनां तद्व्याप्यस्थूलत्वादीनां तद्व्यावृत्तीनां च **निखिल**शब्देन संग्रहः । उक्तानभ्युपगमे कारणवाक्यविरोधः स्यादित्याह—**एवमिति** । ननु * यो वेद इत्युपास्त्यन्वयेन सगुणपरत्वान्नामूदैकार्थ्यम् ; तत्राह— **यतो वेति** । कारणत्वानुवादितटस्थलक्षणवाक्यमिदम् । * सदेवेत्यादि तु तत्प्राप्त्यै लक्ष्यस्य निर्विशेषत्वव्यक्त्यै च पुनर्गृहीतम् । **जगत्कारणतयोपलक्षितस्य** ; शाखयेव चन्द्रस्य दूरे स्थित्वा दर्शितस्ये यर्थः । कारणवाक्योक्तस्वरूपशोधकस्य तच्छेषतया तदेकार्थत्वं युक्तम् ; * यो वेदेत्येतच्च यच्छब्दान्वितवाक्यस्थतया नोपास्तिपरमिति भावः । * यः सर्वज्ञः सर्वविदित्यारभ्य * तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते इति कारणवाक्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यात् ; नेत्याह—**तत्रेति** । कारणशोधकवाक्ययोरैकार्थ्यं सिद्धम् ; मिथः कारणवाक्यानां किमुतेत्याशयः । **कर्तव्ये दर्शितः शाखान्तरनयः सिद्धेऽपि समः । तेनैव सर्वेषु गुणपरत्वं किं न**

स्यादित्यत्रोक्तं **सजातीये**त्यादि । अपच्छेदनीत्या हि निषेधप्राबल्यं स्थापितम् ; * पराऽस्य शक्तिरिति वाक्यविशेषवद्गुणपरतैव किं न स्यात् ; मा भूत्तस्य शोधकवाक्यत्वमित्यत्राह— **जगदि**ति । **अद्वितीये**त्यादि हेतुपरम् ; पूर्ववाक्ये सामान्यतः प्रस्तुतस्य व्यावृत्ततया प्रतिपिपित्सितस्य * तदेषाभ्युक्तेति प्रतिपिपादयिषितत्वात्तस्य चाद्वितीयत्वेन तदन्यस्य गुणस्यावक्तव्यत्वादिति कारणवाक्येषु निर्गुणत्वं न कण्ठोक्तम् ; अवधारणयोरन्यथाऽप्युपपत्तेः । अद्वितीयत्वोक्तिस्तु सम्राडद्वितीय इतिवत् समनिषेधार्थः स्यादित्यत्राह— **अद्वितीये**ति । अवधारणाभ्यां सजातीयादिनिरासौचित्यात्समनिषेधे सिद्धे परिशेषाद्बुभुत्साक्रमेणात्र गुणनिषेधः प्राप्त इति भावः । गुणपरत्वे शोधकान्तरं च विरुध्येतेत्याह— **अन्यथे**ति । निर्गुणशब्दो हि स्थूलत्वादिवत्सत्यत्वादिकमपि निषेधेदिति भावः । ननु सर्वत्र लक्षणवाक्यं स्वार्थं समर्प्यैवान्यद्व्यावर्तयति ; तद्वदिहापि स्यादित्यत्राह— **अत** इति । **च:** समुच्चये ; सामानाधिकरण्यसामर्थ्यात्कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्याच्चेत्यर्थः । **एतल्लक्षणवाक्य**मिति । अनेन धर्मसमर्पकलक्षणवाक्यान्तरेभ्यो व्यावृत्तिः सूच्यते । **अखण्डैकरसम्**— नित्यनिर्विशेषस्वप्रकाशस्वभावमित्यर्थः ।

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् ; नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसंमतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी; ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा । समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय । तथा च शास्त्रस्थैरभ्युपगम्यते— कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते । अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते । कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं [हि] लाक्षणिकमेव । अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ।

* ब्रह्मविदाप्नोति परम् इत्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया विशिष्टविधितात्पर्ये संभवति न लक्षणा न्याय्येत्यभिप्रायेण चोदयति— **ननु चे**ति । यद्यपि वाच्ये विशेष्यांशो न त्यक्तः, तथाऽपि द्वारत्यागात्तत्र तस्य शक्तिगोचरत्वमिति भावः । अत्र वाच्यबहिर्भूते वृत्तिस्तावत् नास्ति; वाच्यैकदेशे प्रधानभूते विशेष्ये वृत्तिस्तु न लक्षणा ; इह जहदजहल्लक्षणा वा स्यात् । सा चात्र न दोषः; प्रत्युत विध्यनर्हवाक्यार्थज्ञानानुवादितयाऽन्यथासिद्धे वाक्ये विधिक्लृप्त्ययोगात्तदर्थमुख्यासंभवे लक्षणानुगुणैवेति दर्शयितुमाह— **नैष दोष** इति । तात्पर्यविषये शब्दस्य प्राधान्यतः

प्रामाण्यात्तद्विरोधे सर्वत्र मुख्यवृत्तिदौर्बल्याल्लक्षणाप्राबल्यमाह— **अभिधाने**ति । स्वतस्सिद्धस्वरूपे कथं शब्दतात्पर्यम्; अतो गुणविवक्षा स्यादित्यत्र तद्विरुद्धं प्रागुक्तं तात्पर्यं व्यनक्ति— **सामानाधिकरण्यस्ये**ति । स्वप्रकाशस्यापि निमित्त-भेदवदनेकपदपरामृष्टस्यापि विशेष्यस्यान्यसंसर्गासहमैक्यमिह समानविभक्तिवेद्यम्; तच्च कल्पितभेदनिवृत्त्यर्थम्; प्रकृति-भिस्तु कल्पितान्याकारनिवृत्तिः प्राग्दर्शितेत्युक्तम् । **सर्वसंमतम्**; त्वयाऽपि दुस्त्यजमिति यावत् । त्वदुक्तप्रक्रिययाऽत्र तात्पर्यस्यापकाभावाल्लक्षणैव न स्यादित्यभिप्रायेण पुनश्चोदयति— **ननु चे**ति । मुख्येन केनचिदंशेन क्वचित्तात्पर्य-सिद्धावंशान्तरे ह्युपचारो दृष्ट इत्याशयः । अविरुद्धेऽन्यत्रादर्शनमकिंचित्करमित्यभिप्रायेण प्रतिवक्ति— **ततः किमि**ति । अभिप्रेतं विवृण्वन् प्रतिबन्दिं च सूचयति— **वाक्ये**ति । एकपदलक्षणाया अप्यन्यत्रादर्शनमस्ति; अतस्तस्या अपि त्यागप्रसङ्ग इति भावः । तात्पर्यमुख्यार्थबाधयोरेव प्रयोजकत्वं पदैकत्वद्वित्वादेरप्रयोजकत्वं द्वित्रादिपदप्रतिबन्दिं चाभि-प्रेत्याह— **समभिव्याहृत** इति । एकद्व्यादिपदलक्षणावत्सर्वपदलक्षणाऽपि * विषं भुङ्क्ष्वेत्यत्र दृष्टेत्यभिप्रायेण **सर्वेषां वे**त्युक्तम् । इदं हि पदद्वयं निषिद्धभोज्यं तद्भुक्तेरकर्तव्यत्वं च लक्षयति । तत्र प्रत्ययितोक्तौ युक्तायुक्तविमर्शात्तात्पर्य-निश्चयः । इह तु समानविभक्तिसामर्थ्यादबुभुत्सितबोधनानुपपत्त्या चेति विशेषः । स्वोक्तं सर्वपरीक्षकसंमतमित्याह— **तथा चे**ति । **चो**ऽवधारणे । यद्वा, ब्रह्मप्रतिपादनप्रद्वि[नाप्रवि]ष्टैरप्यभ्युपगतमित्युच्यते; तैरनुक्तमपि तदुक्तसामर्थ्या-दभ्युपगमनीयमिति भावः । कैरियं कुत्राभ्युपगता? इत्यत्राह— **कार्ये**ति । अत्र तदुक्तं विवक्षितस्य द्वारं तावदाह— **अपूर्वे**ति । वृद्धव्यवहारोपक्रान्ता वेदावसाना कार्यव्युत्पत्तिरेवंप्रकारेण तैः स्थापितेत्यर्थः । अपूर्वमेव कार्यम**पूर्वकार्यम्** । क्रियाकार्यमुखेनापूर्वकार्यव्युत्पत्तिः । एवं तदुक्तनयेन सर्वपदलक्षणायाः फलितत्वमाह— **कार्यान्वि**तेति । अयं भावः— गङ्गायां घोष इत्यादौ लक्ष्यस्य प्राधान्याभावात्तदन्विताभिधायिनां न लक्षणा । एवं कमलानि निमीलन्ती-त्यादिषु प्रधानेऽपि निमीलने सर्वशब्दानां तत्परत्वव्युत्पत्त्यभावात्पदान्तराणां तदनुसारो न युक्तः । यद्यपि गङ्गाद्य-प्रधानपदलाक्षणिकतया घोषादिपदेष्विव कमलानि निमीलन्तीत्यत्र निमीलन्तीत्यवान्तरप्रधानपदलक्षणयाऽपि पद्मादिपदेषु लक्षणा न स्यात्; तथाऽपि लोकोपक्रमवेदावसानकार्यप्रधानव्युत्पत्तिबलादन्यान्वितमात्रे, क्रियाकार्यान्विते, कार्यमात्रा-न्विते वा पदान्तराणां शक्तिकल्पनानभ्युपगमात्तेषामपूर्वकार्यान्वित एव शक्तेर्लौकिकवाक्येषु सर्वेषु तदभावात्सर्वपद-लक्षणा स्वीकर्तव्येति । न च अन्यान्वितमात्रे पदान्तरशक्तिः, कार्यपरतयैव व्युत्पत्त्यङ्गीकारात् । नापि कार्यमात्रान्विते शक्तिः स्यात्, तथा सति लिङादेरपि कार्यमात्रे मुख्यत्वप्रसङ्गात् । न च तद्युक्तम्, अपूर्वाख्यविशेषे लिङादिशक्ते-रसिद्धौ मानान्तराभावाच्च तस्याप्रामाणिकत्वापातात् । एवं कार्यमात्रान्विते शक्तानां पदान्तराणां वेदे कार्यविशेषा-न्वयोऽपि न सिध्येत् । स्वर्गकामपदसमभिव्याहारात्सिद्धावपूर्वमपि तथा सिध्येदिति न तद्वाच्यत्वादिक्लृप्तिः स्यात् । तस्माल्लौकिकवाक्येषु विशिष्टापूर्वस्थायिकार्यपरत्वाभावाल्लिङादेरमुख्यार्थत्वमित्युक्तोपपत्त्या सर्वपदलक्षणाया अदोषत्वं निर्बा-धत्वाभिप्रायेण निगमयति— **अत** इति; युक्तिबलात्परीक्षकैरभ्युपगतत्वाच्चेत्यर्थः । एवं प्रत्यक्षस्य संभावितदोषत्वात् शास्त्रस्य निर्दोषत्वात्तद्विरुद्धार्थत्वाच्च परमप्रकृतं शास्त्रप्राबल्यमुपसंहरति— **अत** इति । **इदमेव** प्रत्यक्षादिविरुद्धमेवे-त्यर्थः । भेदपरत्वेऽनुवादित्वं स्यादिति चाभिप्रेतम् । **इदमर्थजातम्**— प्रमाणागोचरस्वप्रकाशनिर्विशेषसत्यत्वतदन्य-मिथ्यात्वानिर्वचनीयाविद्यास्वरूपतन्मूलतिरोधानाध्यासधीनिवर्त्यत्वादिकम् ।

**प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्त-**

व्यम्, विरोध एव न दृश्यते; निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य।

पक्षान्तरमथादित्सुः शास्त्रप्राबल्यमीरितम्। प्रत्यक्षस्य विरुद्धत्वमन्वारुह्येति भाषते॥ ३४२॥

**प्रत्यक्षादी**ति। **चो**ऽप्यर्थः। तत्त्वविद्भ्यो विषयविरोधाभावाद्बलीयस्त्वं न वक्तव्यमित्यभिप्रायेणाह— **सती**ति। **चो**ऽवधारणे। अत्र बलाबलविचारस्य मूलमेव छिन्नमित्याह— **विरोध** इति। विरोधादर्शनं द्वयोरपि स्वारसिक्या परस्पराविरुद्धभेदविषयतया स्यादित्यत्राह— **निर्विशेष** इति। प्रत्यक्षसिद्धं सदेव निष्कृष्य शास्त्रे ब्रह्मेत्युच्यत इति भावः।

ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते? विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्; तथैवात्र विविच्यते; कथम्? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते। न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः।

असिद्धोऽयं हेतुः, सर्वलोकोपलम्भविरोधादिति शङ्कते— **ननु चे**ति। न हि क्वचिदपि अस्तिमात्रदर्शनमित्याशयः। **कथमिव**— दृष्टापह्नवमन्तरेण न कथंचिदित्यर्थः। **उच्यत** इति— अनेन घटादिविषयं प्रत्यक्षं सन्मात्रग्राहीति स्वोक्तिविरोधोऽपि सूचितः। विशिष्टविषयत्वं भ्रान्तिसिद्धमिति शङ्कां विपक्षे बाधकेन वारयति— **विलक्षणे**ति। लोकसिद्धं प्रसङ्गविपर्ययं भेदव्यवहारस्य प्रत्यक्षमूलत्वं चानिच्छन्प्रसक्तस्येष्टत्वमाह— **सत्यमि**ति। नानाव्यवहाराणां प्रत्यक्षमूलत्वं नापह्नोतव्यमित्यत्राह— **तथे**ति। यथा सत एकस्यैव व्यवहारः प्रत्यक्षमूलस्तथेति यावत्। **एव**कारस्त्वदुक्तमवधारणं स्थिरीकरोमीति सावष्टम्भत्वं व्यनक्ति। अत्र व्यवहारद्वये, तद्धेतौ बुद्धिद्वये वा। **विविच्यते**— सर्वेषु भ्रमेषु अधिष्ठानारोप्यव्यवहारांशयोर्यथा विभागस्तथाऽत्रेति भावः। बाधिते दृष्टस्य विभागस्यान्यत्रोक्तावविषयवृत्तित्वं मत्वा चोदयति— **कथमि**ति। अत्र नभःस्थलमलिनत्वादिवत्प्रत्यक्षबाधाभावेऽपि युक्त्या बाधयितुं प्रथमं मानानुपपत्तिः प्रस्तूयते। एवमत्र विकल्पा हार्दाः— किमस्तित्वघटत्वरूपयोः स्वरूपभेदयोरैक्यम्, उत भेदः? इति। भेदे च प्रत्यक्षमुभयम्, अन्यतरद्वा गृह्णातीति; आद्ये, युगपत्, क्रमाद्वेति; द्वितीये स्वरूपम्, भेदं वेति। तत्रैक्यं दूषयति— **घटोऽस्तीति**। **तद्भेदः**— तत्संबन्धितया ततोऽन्यत्वेनोल्लिख्यमानो भेदः। अयं भावः— अत्रोल्लिख्यमानभेदाभावे भिन्नशब्दः क्वापि न स्यात्; स्वेन स्वस्य विशिष्टत्वायोगात्। अस्तिघटशब्दयोश्चापर्यायतया व्युत्पत्तेस्तद्विषयौ भिन्नौ; अन्यथा प्रतियोगिसापेक्षानपेक्षव्यवहारभेदविरोधात् तत्त्वतः सिद्धयोर्व्यवहारभेदयोर्मूलभेदः चिन्त्य इति। उभयग्राहित्वं

निषेधति— **न चेति** । व्यवहारद्वयस्यैकमूलत्वासंभवे युगपद्ग्रहणासंभवहेतुमाह— **तयोरिति** । अधिकरणप्रतियोगिधी-सापेक्षस्य भेदग्रहणस्य स्वरूपग्रहणपश्चाद्भावित्वादित्यर्थः । क्रमेणोभयग्रहणं दूषयति— **प्रत्यक्षेति** । **चः** क्रमयौगपद्या-योगसमुच्चयार्थः ; न हि क्षणिकं चिरस्य व्याप्रियेतेति भावः । प्रत्यक्षशब्द इह अक्षजन्यत्वपरः । तेनात्मस्वरूपज्ञानात् साक्षिणश्च व्यवच्छेदः । पारिशेष्यादन्यतरग्राहित्वे तन्निर्धारणायार्थविकल्पं वक्ति— **तत्रेति** ; तथा सतीत्यर्थः, तयोर्मध्य इति वा । स्वेष्टं परिशेषयति— **भेदेति** । **स्मरणशब्दः** क्वचिद्ग्रहणस्याप्युपलक्षकः । **एवकारः** पूर्वमैक्ययौगपद्या-संभवोक्तौ प्रतियोगिसापेक्षत्वस्य गर्भितत्वं व्यनक्ति । शास्त्रविरोधासंभवमाह— **न भेद** इति । अयं भावः— एकेन प्रत्यक्षेण स्वरूपे गृहीते यदि प्रत्यक्षान्तरेण भेदग्रहणमित्युच्यते ; तदा निराधारभेदग्रहणायोगात्पूर्ववदुत्तरमपि स्वरूपं गृहीत्वा नश्येत् । अतो न कदाऽपि प्रत्यक्षजातीयेन भेदसिद्धिरिति । तदिदमनूदितं **संवित्सिद्धौ**—

* यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः । ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥ इति ।

* व्यवच्छेदविधानयोः— भेदग्रहस्वरूपग्रहयोरित्यर्थः । तथाऽपि दुरपह्नवव्यवहारान्यथानुपपत्त्या कथंचित् प्रत्यक्षेण भेदग्रहः कल्प्य इत्यत्राह— **अत** इति । उक्तयुक्तिबलादर्थापत्तिरियमन्यथैवोपपाद्या ; अनुपपन्नैकवेषायां भ्रान्तौ तु क्रमयौगपद्यादिविमर्शो न कार्य इति भावः ॥

किं च भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते । भेदस्तावन्न वस्तुस्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः । न च वाच्यं स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्तत्स्म-रणाभावेन तदानीमेव न भेदव्यवहार इति ; स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोः स्वरूपत्वाविशेषात् । यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात् । हस्तः करः इतिवत् घटो भिन्नः इति पर्यायत्वं च स्यात् । नापि धर्मः, धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः; अन्यथा स्वरूपमेव स्यात् । भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था । किं च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणम् ; भेदग्रहणे सति जात्यादिधर्मविशिष्ट-वस्तुग्रहणमित्यन्योन्याश्रयणम् । अतो भेदस्य दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ।

मेयानुपपत्तिमाह— **किं चेति** । प्रसिद्धेऽपि बाधकन्यायान्यायविवक्षया **न्यायविद्भिरित्युक्तम्** । भेदः स्वरूपं धर्मो वा इति हार्दे विकल्पे पूर्वं निरस्यति— **भेदस्तावदिति** । संशयाद्यनुपपत्तिगर्भं हेतुमाह— **वस्त्विति** । स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः ? तदभावे कथंतरां संशयविपर्ययौ ? तयोरभावे च सर्वेभ्यो भेदव्यवहार एव

स्यात्; तथा च न बाधकसाध्यं किंचित्स्यादिति भावः। प्रसंजितविपर्ययस्यान्यप्रयुक्तत्वमाशङ्क्याह— **न चेति**। **स्वरूपे गृहीतेऽपि**; स्वरूपभूते भेदे गृहीतेऽपीत्यर्थः। **भिन्नेत्यादि**। यथा वाच्यस्वरूपे गृहीतेऽपि वाचकप्रयोगः संबन्धग्रहणापेक्षः, तथा भिन्न इति व्यवहारोऽपि प्रतियोगिधीसापेक्षः; तत एवात्रासौ तदभावप्रयुक्तः स्वाभाव इत्याशयः। प्रतियोगिसापेक्षत्वादित्युक्तं दूषयति— **स्वरूपमात्रेति**। चः अवधारणे, आश्रयापेक्षासमुच्चये वा। यथा स्वरूपग्रहणे प्रतियोगिग्रहणनैरपेक्ष्यम्, तथा तद्व्यवहार इत्यभिप्रायेण **नोत्प्रेक्षितुं क्षमा**– इत्युक्तम्। **स्वरूपमात्रभेदवादिन** इत्यनेन सूचितं हेतुं विवृणोति— **स्वरूपभेदयोरिति**। उक्तं प्रतिबन्दिगर्भं व्यनक्ति— **यथेति**। सहप्रयोगभङ्गमभिप्रयन् प्रसङ्गान्तरमाह—**हस्त इति**। स्वरूपभेदशब्दयोः पर्यायता स्यादिति वक्तव्ये **घटो भिन्नः** इत्युक्तेरयं भावः— भेदत्वेन प्रस्तुतस्य घटस्य स्वरूपत्वं परे मन्यन्ते; तस्य च स्वरूपमेव भेदश्चेत् यस्य भेदोऽस्ति, स भिन्नः; अतो घटभिन्नशब्दौ पर्यायौ स्याताम्। एवं घटभेदशब्दावपीति। चकारोऽत्रानुक्तमपि समुच्चिनोति। स्वरूपस्यानुवृत्तत्वे भेदत्वं न स्यात्, व्यावृत्तत्वेऽन्येषां निस्स्वरूपत्वनिर्भेदत्वापत्तिरित्यादि। भेदस्य धर्मत्वे तद्वति क्वचिदप्यभेदो न सिध्येत्। तथा सति अभिन्नस्य भिन्नस्य वाऽभावे सर्वापह्नवः स्यादित्यभिप्रायेणाह—**नापीति**। अनवस्थां वक्तुं धर्मभूतो भेदः स्वरूपेणाभिन्नः भिन्नो वेति विकल्प्याद्यं निरस्यति— **धर्मत्व** इति। भेदाभावे धर्मधर्मिभावो न स्यात्, स्वरूपपक्षोक्तदोषाश्च स्युरित्यभिप्रायेणाह— **अन्यथेति**। द्वितीये मूलोच्छेदमाह— **भेदे चेति**। **तद्धर्मः**—तस्य भेदस्य धर्मः। ग्रहणद्वाराऽपि दोषमाह— **किं चेति**। तज्जातीयत्वातज्जातीयत्वतद्गुणकत्वातद्गुणकत्वविशेषणत्वविशेष्यत्वधर्मत्वप्रतियोगित्वादावपि भेदग्रहेऽपि अन्योन्याश्रयमभिप्रेत्य जात्याद्युक्तिः॥

**भेदकाग्रहणे भेदो न गृह्येत कथंचन। तस्य चाग्रहणे सोऽपि न गृह्येतेति संग्रहः॥ ३४३॥**

एवं ग्राह्यानुपपत्त्या ग्राहकानुपपत्तिं पूर्वमुक्तां द्रढयति— **अत इति**।

किं च घटोऽस्ति, पटोऽस्ति, घटोऽनुभूयते, पटोऽनुभूयते इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते; अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्; यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्थसती, व्यावर्तमानाः सर्पभूदलनाम्बुधारादयोऽपरमार्थाः। ननु च रज्जुसर्पादौ रज्जुरियं, न सर्पः इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यं, न व्यावर्तमानत्वात्; रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया; किं त्वबाधितत्वात्; अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते— घटादौ दृष्टा व्यावृत्तिः; सा किंरूपेति विवेचनीयम्; किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो

बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत्सन्मात्रमबाधितमनुवर्तते। तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—सत् परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्; घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवदिति।

न केवलं प्रमाणाभावः, प्रमाणबाधोऽप्यस्तीत्याह— **किं चे**ति। अत्र घटादिबाधे तत्सत्ताऽपि खपुष्पगन्धवत्स्यादिति शङ्कानिरासायानुवृत्तसत्त्वस्थापनम्। विवक्षितानुमानद्वयस्य पक्षसिद्धिं तावदाह— **घटोऽस्ती**ति। अनुभूत्यनुवृत्तिप्रदर्शनं सदनुभूत्यैक्याधानार्थम्; न हि व्यावृत्तस्यानुवृत्ततादात्म्यं स्यात्। स्वरूपासिद्धिं व्याप्यत्वासिद्धिं च व्युदस्यति— **अत्रे**ति। **रज्जुसर्पादी**त्युदाहरणे व्याप्तिद्वयार्थमादिशब्दः प्रत्येकं भाव्यः। व्याप्तिदृष्टान्तौ स्पष्टयति— **यथे**ति। **परमार्थसती**— व्यावहारिकव्यवस्थयेति शेषः। सर्पाद्युदाहरणमिहैकाधिष्ठानाध्यस्तविषयम्। द्वयोरपि व्याप्त्योः उपाधिं शङ्कते— **ननु चे**ति। अबाधितत्वोपाधिः पक्षव्यापक इति न वाच्यम्; माध्यमिकनयेन घटादितुल्यन्यायतया सतोऽपि बाधस्य सुवचत्वादिति भावः। बाधितत्वोपाधेः पक्षव्यावृत्तिमाह— **अत्र त्वि**ति। घटोऽस्ति इत्यादावित्यर्थः। द्वयोरपि साधनव्यापकत्वबुद्ध्या प्रतिवक्ति—**उच्यत** इति। बाधितत्वस्य तावदाह—**घटादावि**ति। **किंरूपा**— किं सत्यसर्पनिवृत्तिवद्भ्रान्तिसिद्धा? उत रज्जुसर्पनिवृत्तिवत्प्रमाणबाधसाध्या? इति विकल्पः। तत्र आद्यो घटपटतादात्म्यादिप्रसङ्गादयुक्त इत्यभिप्रायेणाह— **किमि**ति। घटोऽस्तीति प्रतीतेऽर्थे पटाभावो मिथ्या; अतः प्रमितयाऽन्यव्यावृत्त्याऽन्येषां बाधितत्वमर्थसिद्धमित्याह— **सिद्धमि**ति। **घटोऽस्ती**त्यनेन न रजतमिति निषेधाभावेऽपि यथा शुक्तिरित्यनेन रजतबाधस्तथेति भावः। एवं पटादिविधौ घटस्यापि निवृत्तिः सिद्धा स्यात्। उक्तप्रकारेणोपाधेः साधनव्यापकत्वमाह— **अत** इति। **बाधफलभूता**; नास्तीति धीस्थाप्येत्यर्थः। **विषयनिवृत्तिः**—घटादिधीवेद्यानामभावः, तेषामिह वेद्यत्वाभावो वा। एवं निरुपाधिकतया व्यावर्तमानत्वस्य साधकत्वमाह— **से**ति। अनुवर्तमानत्वहेतावप्यबाधितत्वोपाधिर्व्यापक इत्याह— **रज्जुवदि**ति। सतोऽपि माध्यमिकयुक्त्या बाधोक्तिर्निरधिष्ठानभ्रमासंभवादयुक्ता। हेतुद्वयफलितमाह—**तस्मादि**ति। मिथो विमर्देन सर्पादिनिवृत्तौ रज्ज्वनिवृत्तिवत् घटादिनिवृत्तौ * सदेवेति श्रुतं सत् परिशिष्येतेत्याशयः। भेदबाधकतर्काणामनुग्राह्यनिष्कर्षायाह— **प्रयोगश्चे**ति। चकार उपाधिविधूननादिसमुच्चयार्थः।

एवं सत्यनुवर्तमानानुभूतिरेव परमार्थः; सैव सती। ननु च सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्; नैवम्—भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात् सत् अनुभूतिरेव। सा च स्वतस्सिद्धा, अनुभूतित्वात्; अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किं च अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्;

सत्तयैव प्रकाशमानत्वात् । न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते; येन परायत्तप्रकाशाऽभ्युपगम्येत ।

चिन्मात्रसत्यत्वमिच्छतां किं बाह्यस्य सतः सत्यतयेत्यत्राह— **एवं सती**ति । हेत्वोः निरुपाधिकत्वे सिद्धे सतीत्यर्थः । **एव**कारः पूर्वोक्तरीत्याऽनुभाव्यानां मिथ्यात्वं व्यनक्ति । सत्यद्वित्वम् , भेदसत्यत्वस्वीकारः, मिथो व्यावृत्त्या द्वयोरपि बाधश्च स्यादित्यत्राह— **सैव सती**ति । अनुभूतिरेव सच्छब्दार्थ इत्यर्थः । अवधारणमयुक्तम्; सतः प्रत्यक्षविषयत्वसाधनेन भेदोक्तेरित्यभिप्रायेण चोदयति— **ननु चे**ति । मानतः स्वरूपतश्च भेदस्यानुपपन्नत्वोक्त्या धीसद्भेदोऽपि बाधित इति प्रतिवक्ति— **नैव**मिति । तर्हि स्वयमेव सामान्यतो विशेषतश्च विषयत्वादिभेदोक्त्या विरोध इत्यत्राह— **अत** इति । भ्रान्तिरूपलोकदृष्ट्या मयोक्तमित्यभिप्रायेण **प्रमाणपद**वीनिषेधः । एतेन दृग्दृश्यसंबन्धानुपपत्तिः सूचिता । यां ग्राह्यलक्षणो योगशब्द इति योगाचारा उपचरन्ति, सैवेत्यवधारितं निगमयति—**तस्मा**दिति; विषयविषयित्वरूपस्यापि भेदस्य बाधादित्यर्थः । **सदनुभूतिरेव**—सदिति भातं वस्तु **न** तद्बुद्धेर्भिन्नम् ।

सच्चिदात्मनो मेयत्वाभावे माध्यमिकोक्तसंवृत्तिसिद्धिवत्स्यादित्यत्राह—**से**ति । **स्वतस्सिद्धा**—स्वरूपप्रयुक्तस्वप्रकाशा; अवेद्यत्वे सति अपरोक्षव्यवहारार्हेत्यर्थः । अत्र,

* यानुभूतिरजानन्तामेयाद्यानन्दविग्रहा । महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥

इत्युक्तक्रमेण उपरितन उपन्यासः । * येति स्वतस्सिद्धतां सूचयतीति व्याख्यातम् । तत्रानुभूतिरिति हेतुगर्भमित्याह— **अनुभूतित्वा**दिति ; चित्त्वादित्यर्थः । असाधारणाभासत्वशङ्कां व्यतिरेकव्याप्त्या परिहरन् * अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्गः इति तत्रोक्तमाह—**अन्यत** इति । अनुमानान्तरमप्यस्तीत्याह—**किं चे**ति । **अनुभवे**त्यादिः प्रतिज्ञाग्रन्थः ; अनुभूतिर्नानुभवान्तरसापेक्षप्रकाशेत्यर्थः । भासमानत्वादिभिर्वेद्येति प्रत्यनुमानं चानेन निरस्यते । अत एव चकारः **कल्पयितु**मिति पदं च सफलं स्यात् । प्रतिज्ञायां हेतुं वदन् प्रत्यनुमाने चोपाधिं व्यनक्ति—**सत्तयैवे**ति । यावत्सत्तं प्रकाशमानत्वादिति यावत् । विद्यमानत्वेऽप्यविदितावस्थायोगित्वं घटादिषु वेद्यत्वस्योपाधिभूतम्; तन्नेति भावः । हेतोरसिद्धिमुपाधेस्साधनव्यापकत्वं च निरस्यति— **नही**ति ।

अथैवं मनुषे — उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते घटोऽनुभूयते इति; न हि कश्चिद् घटोऽयमिति जानंस्तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति । तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसंनिकर्षवदनुभूतेः सद्भाव एव हेतुः । तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते । एवं तर्हि अनुभूतेरजडाया अर्थवज्जडत्वमापद्यत इति चेत्; किमिदमजडत्वं नाम? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्संभवात् । न हि कदाचिदपि सुखादयः

सन्तो नोपलभ्यन्ते। अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति।

तदुभयं भाट्टमतेन शङ्कते—**अथेति**। **विषयमात्रम्** घटादिमात्रम्; न तु तद्धीरित्यर्थः। तदिदं व्यक्तमनूक्तं संवित्सिद्धौ—

* घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते। न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते॥ इति॥

विषयमात्रभाने हेतुमाह— **घट** इति। घटस्यानुभूतिकर्मत्वात् धियः सकर्मत्वविरोधात्तदानीं न भानमिति भावः। यद्वा प्रतिषेधार्थोऽयमनुवादः। **घटोऽनुभूयत** इति **न ह्यनुभवती**त्युत्तरत्रान्वेति; घटोऽयमिति ज्ञानं यदा जायते, न तदानीं घटः अनुभूयते इत्यनुभवः। घटानुभूतेर्घटशब्देदंशब्दार्थान्यत्वादित्यर्थः। घटोक्तेः प्रदर्शनार्थत्वज्ञापनाय **अविषयभूतामित्युक्तम्**। **अनिदंभावाम्**। घटस्य देशविशेषसान्निध्यमिह इदंभावः; तद्रहितामिति यावत्। ननु आलोकलिङ्गादीनामज्ञातानां न भासकत्वं दृष्टम्, तथाऽत्रापि स्यात्। अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गश्च। आह च **कीर्तिः**— * अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति इति; तत्राह— **तस्मादिति**; हेतुतयोपाधिनिवृत्तितया च विवक्षितस्य यावत्सत्त्वं प्रकाशमानत्वस्य निरस्तत्वादित्यर्थः। ज्ञापकानां ज्ञातृत्वमिन्द्रियादिषु न दृष्टम्; स्वस्य ज्ञानोत्पत्त्या स्वपरवेद्यवैषम्यमित्यवधारणाभिप्रायः। यदि वर्तमानदशायां धीः स्वयं नानुभूयेत, तदा अनुभूयत इति वर्तमानावभासः कथं स्यात्? उत्तरक्षणे च निवृत्ता कथं गृह्येत? ज्ञानग्राहकाभावे ज्ञेयस्यापि निष्प्रमाणकत्वात्सर्वासिद्धिरित्यत्राह—**तदनन्तरमिति**। अत्यन्तासन्नत्वादनुभूयत इति वर्तमानोक्तिः; व्याप्तिस्मरणादिकं च संस्कारभूम्ना शीघ्रं भवति; कालभेदाग्रहोऽपि पद्मपत्रशतवेधन्यायादविरुद्ध इति भावः। घटः प्रकाशते इति विषयसामानाधिकरण्याद**र्थगत**त्वोक्तिः। आत्मगता धीरितरविषयस्य प्रका[श इति]शिकेति शङ्का च तेन व्युदस्ता। वेद्यगतप्रकाशस्य **कादाचित्क**त्वोतया तत्कारणत्वेन धीरनुमेयेति बोध्यते। अर्थगतत्वे रूपादिवत्पुरुषविशेषविषयत्वं न स्यादिति शङ्कानिरासाय **प्रकाश**शब्दः। अर्थप्रकाशो हि पुरुषविशेषधीजन्यतया तत्प्रतियोगितयैव स्वतः परतो वा कुतश्चिद्वातत्वात्तद्गतज्ञानानुमापक इति भावः। अर्थगतप्रकाशो वायुरूपादिवत् योग्यानुपलब्धिनिरस्त इत्यत्र विषयस्वरूपात्तद्धर्मान्तरेभ्यश्च व्यावृत्ततयोपलब्धम् **अतिशयशब्देन** व्यनक्ति। अत्र अन्यतस्सिद्धौ इत्यादिभिः प्रागुक्तं स्मारयन्मृषावादी चोदयति—**एवं तर्हीति**; स्वेतराधीनसिद्धित्वे सतीत्यर्थः। स्वमतेन श्रुत्यनुमाभ्यां सिद्धवत्कारात् **अजडायाः** इत्युक्तम्। प्रसङ्गदोषान्विवक्षुः प्राकट्यवादिप्रसञ्जनीयविपर्ययं विकल्पयति—**किमिदमिति**। किं हेतुत्वेन उपाधिविपर्ययत्वेन चोक्तं यावत्सत्त्वं भासमानत्वम्? उत साध्यत्वेनोक्तं स्वतस्सिद्धत्वमिति विकल्पः। अत्राद्यं दूषयति— **न तावदिति**। वेद्यत्वे यावत्सत्त्वं प्रकाशमानत्वाभाव इति प्रसङ्गार्थः स्यात्; सोऽस्मदिष्टः; विपर्यये पर्यवसानं च न संभवतीति भावः। मूलशैथिल्यमप्याह—**सुखादिष्विति**। यद्यपि अस्माकं सुखादेरुत्पत्तिक्षणात्पश्चाज्ज्ञानान्तरेण ग्रहणम्; सिद्धान्तिनस्तु धीविशेषत्वेन स्वतस्सिद्धत्वम्; तथाऽपि त्वत्पक्षे चैतन्योपरञ्जितान्तःकरणविवर्ततयाऽध्यस्तत्वेन शुक्तिरूप्यवदप्रकाशमानक्षणकलस्यायोगात्सुखादौ व्याप्तिभङ्गः सिद्ध इत्यभिप्रायेण विवृणोति— **नहीति**। अन्तरतस्त्वन्मते प्रातिभासिकरजतादिः साक्षिचैतन्येन यावत्सत्त्वं प्रकाशमाना अविद्यादयश्चादिशब्दार्थः। बुद्धेर्यावत्सत्त्वं प्रकाशमानत्वमिच्छतः सुखादावपि तद्वत्स्वरसदृष्ट्या

तथा किं न स्यादिति कल्पयित्वा वा तदुक्तिः। द्वितीये त्ववेद्यत्वे स्वयंप्रकाशत्वाभावः स्यादिति प्रसङ्गार्थः। तथाऽपीष्ट-प्रसङ्गो विपर्ययापर्यवसानं चेत्याह—**अत** इति; आद्यकोटिनिरासादन्या शिष्यते; साऽपि नास्तीत्यर्थः; प्रकाशाव्यभि-चारस्य हेतोरसिद्धेरनैकान्त्याच्चेति वा। अनुभूतित्वहेतुना तत्सिद्धिः स्यादित्यत्राप्रसिद्धसाध्यतया व्याप्तिग्रहणाभावे केवल-व्यतिरेकिणोऽनुमानत्वमेव नास्तीत्यभिप्रायेण साध्यरूपे व्याहतिमाह— **अर्थान्तरमिति**। स्वयंप्रकाशत्वाभावः स्यादिति तर्केऽपि प्रतियोग्यसिद्धेस्तदभावप्रसङ्गोऽशक्यः।

**स्वप्रकाशत्वविषयाः श्रुतयः स्मृतयश्च नः। स्वधर्मभूतबुद्ध्यैव पुंसो भानं प्रचक्षते ॥ ३४४ ॥**

कर्मकर्तृविरोधादङ्गुल्यग्रस्य स्वात्मस्पर्शविरोधः, इह तु न तथेति चेत्; इहापि गमनगन्तव्यादिवत्क्रियाकर्मत्व-विरोधः सिद्धः। **इतिः** शङ्कासमाप्तौ।

## तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्, अनुभूतिव्यतिरेकिणो विषय-धर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः; उभयाभ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते, नापि ज्ञानान्तरसिद्धा; अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव सिध्यति। प्रयोगश्च— अनुभूतिरनन्याधीन-स्वधर्मव्यवहारा, स्वसंबन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्। यः स्वसंबन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः; यथा रूपादिश्चाक्षुषत्वादौ; रूपादिर्हि पृथिव्यादौ स्वसंबन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसंबन्धाधीन-श्चाक्षुषत्वादौ। अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः।

अवेद्यत्ववादी प्राकट्यवादिनमुपालभते—**तदिदमिति**; बुद्धेः स्वप्रकाशत्वे सिद्धे निराकारप्रकाशायोगादाकार-द्वयानुपलम्भाच्च ग्राह्यग्राहकयोर्ज्ञानाकारत्वं वदद्भ्यो भीतैः प्रकाशमानस्य नीलादेः अप्रकाशमानबुद्ध्याकारत्वायोगा-त्कल्पितमिदं दृष्टहानमदृष्टकल्पनं च सर्वं प्रत्यक्षविरुद्धमिति भावः। अनुभवस्य विभवालोकादिनीत्या परप्रकाशादिहेतोः स्वप्रकाशादौ सजातीयनैरपेक्ष्यम्। तत्र श्रुत्यनुमितिसूचनाय **स्वमतिविजृम्भितमित्युक्तम्**। किं प्राकट्यं रूपादिवद् दृष्टम्; उत गुरुत्वादिवत्कल्प्यम्? इति हार्दे विकल्पे पूर्वं दूषयति—**अनुभूतिरिति**। धीरेव विषयस्य प्रकाशः। सा चात्मनिष्ठाऽपि भ्रान्त्या विषयस्थेव भाति। वस्तुतः प्रकाशस्य विषयधर्मत्वे यद्यसावप्रत्यक्षः; तदा हि लिङ्गानुपलम्भात् नानुमितिः। अतः प्रत्यक्षत्वेऽङ्गीकृते तदुपलम्भः पुरुषविशेषनियतो न स्यादित्यभिप्रायेण **रूपादिवदित्युक्तम्**। द्वित्वादि-वद्धीजन्यतया तेनैव दृश्यत इति चेन्न; अपेक्षाबुद्धिवेद्याकारविशेषातिरिक्तद्वित्वादिक्लृप्तौ गौरवात्। यादृश्या बुद्ध्या द्वित्वाद्युत्पत्तिं मन्यसे, तादृश्या तद्व्यवहारः स्यात्; स चातीतादिष्वप्यस्ति; न च तत्र द्वित्वाद्युत्पत्तिः; निराधार-धर्मजननायोगात्। अतिरिक्तद्वित्वाद्युत्पत्तिपक्षेऽपि अनन्यथासिद्धप्रत्यक्षबलात्प्रकाशप्रतिनियमः। इह तु न तथा,

वेद्यगतस्य वित्त्यतिरिक्तस्यानुपलम्भादिति भावः । ये तु वर्तमानेष्वतीतादिषु च द्वित्वादिकमेकत्ववत्स्वत एव तत्तद्वस्तुनिष्ठमपेक्षाबुद्ध्या गृह्यते , न तु जन्यते । इदमेव प्रतिपुरुषमपेक्षाबुद्धिभिरनन्तद्वित्वादिकल्पनाद्वरमित्याहुः, तत्पक्षग्रहे च नेदं निदर्शनं शोभते । द्वितीयं निरस्यति— **उभये**ति । कल्पनागौरवभीतैः धियं त्यक्त्वा विषयस्थप्रकाश एव स्वीक्रियताम् , धीसामग्र्या च तत्सिद्धिः स्यादिति चोद्यं तु सर्वविरुद्धं चेत्यभिप्रायेण **उभयाभ्युपेत**त्वोक्तिः । **एव**कारेण क्लृप्त्युपपत्तीनामन्यथासिद्धिर्गौरवं च व्यज्यते । **अशेष**शब्दः कल्पकत्वेन शङ्कितानां कार्त्स्न्यमाह । तत्र सर्वत्र प्राकट्यजनकतया स्वीकृतैव धीरेका हेतुरिति चावधारणाभिप्रायः ।

**यदि कल्प्येत विषये प्राकट्यं** व्यवहारतः । **तद्धेतुत्वेन कल्प्या धीस्तत्फलार्थं प्रकल्प्यताम्** ॥ ३४५ ॥

**यथा तत्रैव तस्यैव प्राकट्यं ते धिया भवेत् । तथा** मानादयोऽपि **स्युः किमन्तर्गडुक्लृप्तितः** ॥ ३४६ ॥

**प्राकट्यं प्रकटं स्याद्वः परतः स्वत एव वा । आद्येऽनवस्थितिश्शेषे बुद्धिरेव तथा न किम्** ॥ ३४७ ॥

ज्ञातः इत्यादिव्यवहारस्तु इष्टद्विष्टादिनयात्कर्मप्रत्ययाधीनः । तद्रहितोऽपि प्रकटो घट इत्यादिधीकर्मत्वविषयतया तद्व्युत्पत्तः स्यात् । ज्ञानकर्मणो घटस्य * प्रकाशते इति कर्तृत्वेन व्यवहारोऽपि रोचते, स्वदते इत्यादिवद्धातुविशेषायत्तः । अतिरिक्तक्लृप्तौ च गुणक्रियादिषु प्राकट्ये च प्रकटादिव्यवहारो दुर्निर्वहः । एवं भूतभाविषु च । तदुक्तं **संवित्सिद्धौ—**

* अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः । न हि धर्मिण्यसत्येव धर्मस्संभवमृच्छति ॥ इति ।

अत्र परोक्तप्रतिवन्दिनिस्तारस्तु—

**नश्यद्दशाकसंयोगो नानाधारः प्रतीयते । प्रध्वंसस्तु निराधारोऽसदाधार** इतीरितः ॥ ३४८ ॥

एतेन अतीतादौ विषयत्वमात्रं न कर्मत्वम्, यत्र तु कर्मत्वं तत्र क्रियाजन्यफलभागित्वमवश्यापेक्षितमिति निरस्तम्; गुणादौ कर्मत्वेऽपि तदसंभवात् । ज्ञानं स्वकर्मणि किञ्चित्करोति क्रियात्वादित्यनुमितौ च धात्वर्थमात्रत्वे हेतौ न व्याप्तिः । स्पन्दत्वे त्वसिद्धिः । आहुः न्यायनिष्ठाः—

* अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया । तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ इति।

ननु धीस्वरूपातिरिक्तं तद्विषयत्वमर्थे भाति ; तदनभ्युपगमे विरोधः ; तदेव प्राकट्यमिति शङ्कायां निगमनव्याजेनोत्तरमाह— **अत** इति ; त्वदिष्टस्य लिङ्गस्य निष्प्रमाणत्वादित्यर्थः । विषयत्वं च विषयिणमन्तरेण न भायात् ; तद्भाने तु अनुमेयं नावशिष्यत इत्याशयः । मा भूदनुमेयत्वम् ; मानसप्रत्यक्षत्वं तु स्यात् क्षणिकात्मविशेषगुणत्वात्सुखादिवदिति, तत्राह— **नापी**ति । अनुपलब्धेः कल्पनायोगाच्चेत्युभयमनुषञ्जनीयम् । न हि स्वस्मिन्वर्तमानं ज्ञानं ज्ञानान्तरसिद्धमिति प्रत्यक्षयामः ; उक्तो हेतुरपि क्षणिकत्वात्मधर्मत्वगुणत्वानामस्माभिरनभ्युपगमान्निरस्तः । मानसप्रत्यक्षत्वे च सुखादिवदात्मगुणस्य सतोऽबुभुत्सितग्राह्यतया तद्ग्रहणस्यापि तथेत्यनवस्था स्यात् । अबुभुत्सितग्राह्यत्वे तु ज्ञाते बुभुत्सा, ततश्चापाततोऽपि तद्धीरित्यन्योन्याश्रयः । तत्रापि सुखादेरिव मानसप्रत्यक्षतयैव ज्ञानस्यापि ज्ञातत्वनियमे बुभुत्सातज्ज्ञानादिपरम्परानुच्छेदः । अनियमे तु क्षणिकात्मविशेषगुणत्वं मानसप्रत्यक्षत्वरहिते ज्ञाने वर्तत इत्यनैकान्त्यम् । तस्यापि पक्षीकारे बाधः । किं च ज्ञानगोचरज्ञानस्य प्रमितत्वे पूर्वज्ञानमपि निष्प्रमाणकं स्यात् ; ज्ञानस्या-

संभवे च ज्ञातृज्ञेयासंभवः। एतेन अवश्यवेद्यत्वानभ्युपगमादिति नैयायिकोक्तं निरस्तम्। कस्यचिज्ज्ञानस्य स्वप्रकाशत्वे तु लाघवात्पूर्वस्यापि तथात्वं ग्राह्यम्। क्वचित्सामान्यतः स्वपरनिर्वाहकत्वेऽस्मदुक्तं सोढव्यम्। एवं स्वज्ञानस्यानुमेयत्वमानसत्वप्रत्यक्षत्वयोरयोगात् तदग्रहे च परस्मिन्नपि तथैवेति व्युत्पत्त्याद्यसंभवेनागमस्यापि निर्मूलत्वादन्ततो माध्यमिकवादप्रसङ्गमनिच्छतामस्मत्पक्षः शिष्यत इत्याह— **अपि त्विति**। **सर्वं साधयन्तीति** हेतुपरम्। नित्यस्य स्वप्रकाशस्य स्वजन्यत्वायोगादन्यनिरपेक्षप्रकाशत्वमेव प्रक्रान्तमिह स्पष्टीकृतम्। अयं भावः—

**धियः स्वकर्मताभावान्न स्वेन स्वप्रकाशनम्। इत्यसत् स्वान्यनिर्वाहसमाधेर्दुस्त्यजत्वतः ॥ ३४९ ॥**
**धीरस्तीति मतौ शब्दशब्दे लक्षणलक्षणे। इष्टः स्वपरनिर्वाहः सर्वमित्यादिधीष्वपि ॥ ३५० ॥**
**कर्मकर्तृविरोधोऽपि स्वबुद्ध्यादौ न दृश्यते। क्रियाकर्मविरोधश्च वारणीयः क्रियोक्तिवत् ॥ ३५१ ॥**
**अङ्गुल्यग्रादिदृष्टान्तमात्रमप्यत्र निष्फलम्। दृष्टचदृष्टिविशेषेण सर्ववस्तुव्यवस्थितेः ॥ ३५२ ॥**
**अस्पृष्टिस्स्वात्मनस्तत्र संयोगद्विष्ठताबलात्। दृष्टान्तमात्रभक्तेन दीपादिः किं न दृश्यते ॥ ३५३ ॥**
**अन्तर्ज्योतिः स्वयंज्योतिरात्मज्योतिरिति श्रुतिः। स्वरसाद्वदति स्वान्यनिरपेक्षप्रकाशताम् ॥ ३५४ ॥**
**स्वान्यधीहेतवो दृष्टा मनोधर्मादयस्तथा। स्वयं भिद्यत इत्यादौ संमता कर्मकर्तृता ॥ ३५५ ॥**
**आत्मानं रक्षतीत्यादिष्वपि द्वैरूप्यमक्षतम्। प्रदीपादिनयस्थाप्या न मुधा बाधमर्हति ॥ ३५६ ॥**
**यदा विषयमात्रस्य व्याहारस्तत्र वेदितुः। अनुभूयत इत्युक्तिरविवक्षानिवर्तिता ॥ ३५७ ॥**
**व्यवहारनिवृत्त्या च न प्रकाशनिवर्तनम्। दृष्टेऽप्यव्यवहारस्य प्राचुर्येणोपलम्भतः ॥ ३५८ ॥** इति।

अत्र सूचितं साधनद्वयं वैशद्याय प्रयुज्यत इत्याह—**प्रयोगश्चेति**। यद्वा— उक्तप्रकारेण स्वप्रकाशत्वमगत्या ग्राह्यम्; तत्रानुमानान्तरं चास्तीति भावः। ग्रन्थलाघवाय प्रयोगद्वयमिह तन्त्रितम्। पिशाचानां तद्भाषयैवोत्तरं देयमिति न्यायात् परमतान्वारोहेण बुद्धेरपि प्राकट्यकल्पनयाऽत्र **धर्म**शब्दः, अन्यथाऽपसिद्धान्तात्; कल्पितधर्मान्तराभ्युपगमेन वा तदुक्तिः। इदं च हेतुद्वयं यदि परोक्तकर्मकर्तृविरोधशान्त्यै संभावनार्थं स्यात्, तदा नातीवात्र शोध्यमस्ति। साक्षादनुमानत्वमिच्छतां तु यथाश्रुतेऽनुभूतित्वादिभिः सिद्धसाध्यत्वात्तत्रतत्र कर्तृव्यभिचाराचाभिप्रायक्लृप्त्या पूर्वानुमितावेवं प्रयोगो द्रष्टव्यः— अनुभूतिः, परगतस्वजन्यधर्मात्यन्तसजातीयस्वावश्यम्भाविधर्मयोगे स्वात्यन्तसजातीयापेक्षानियमरहिता, स्वविजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितधर्महेतुत्वादिति। स्वस्मिन्स्वजन्यधर्मासिद्धेः परगतत्वोक्तिः स्थानप्रदर्शनार्था; एकत्वादिभिः सिद्धसाध्यतां वारयितुं जन्यशब्दः अत्यन्तशब्दश्च। अनुभूत्या परत्र जन्यो धर्मः प्राकट्यमेव। तस्य स्वान्यमात्रनिष्ठस्य स्वधर्मत्वायोगात् सजातीयोक्तिः। बुद्धिव्यतिरिक्ते बोद्धरि बुद्धिजन्यसुखादिसजातीयानां बुद्धावभावेन बाधं स्वाश्रयस्य रूपित्वाद्यापादके रूपादौ रूपित्वाद्यभावात् दृष्टान्तस्य साध्यशून्यतां च परिहर्तुं स्वावश्यम्भावित्वोक्तिः। यद्यपि नित्येऽनुभूतिप्राकट्येऽन्वारूढेऽन्यनैरपेक्ष्यमात्रोक्तिः पर्याप्ता; तथाऽपि रूपादौ दृष्टान्ते चाक्षुषत्वस्य स्थूलनिष्ठत्वादिसापेक्षतया साध्यवैकल्यं स्यादिति तन्निरासाय स्वात्यन्तसजातीयापेक्षारहितेत्युक्तम्।

* यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वाणि भूतानि इत्यादिश्रुत्या जीवतज्ज्ञानभेदकल्पनात् व्यावहारिकव्यवस्थया परमतनयेनानुमानादिगम्ये गुर्वादिज्ञाने बाधपरिहाराय नियमशब्दः। तद्धि गुरुमते सिद्धान्ते

च वर्तमानकाले स्वेन स्वाश्रयाय भाति। यद्वा, परत्र छिन्नत्वाद्यापादके कुठारादौ द्वैधीभावस्य कदाचिदत्यन्त[वि]सजातीयापेक्षत्वेऽपि नियमाभावेनातिचारनिरास इति नियमोक्तिसाफल्यम्। अत्यन्तसाजात्यं चात्र निर्दिष्टाकारेण साम्यम्। हेतौ तु सजातीये द्रव्यान्तरे संयुक्तत्वहेतोर्द्रव्यस्य स्वगतसंयुक्तत्वे द्रव्यान्तरापेक्षानियमात्तद्व्यावृत्त्यै स्वविजातीयोक्तिः। स्वानन्तरेत्यादिना परस्मिन्पुत्रत्वादिहेतौ पितरि स्वपुत्रत्वे पितृसापेक्षत्वदर्शनात्तस्मिन्ननैकान्त्यं निरस्तम्। पुत्रत्वादिकं हि पित्राद्यनन्तरकालादुत्तरत्राप्यनुवर्तते। एवं द्रव्यान्तरच्छिन्नत्वापादके द्रव्यान्तरेण छेद्येऽपि द्रव्ये न व्यभिचारः। द्वितीयानुमानेऽपि अनुभूतिरनन्याधीनव्यवहारा इत्युक्ते अन्यनिरपेक्षघटादिव्यवहारहेतुतया सिद्धसाध्यतां परिहर्तुं स्वशब्दः। तथापि विवक्षावागादिसापेक्षतया बाधो दृष्टान्ते च साध्यहानिः स्यात्; अतः स्वात्यन्तसजातीयानपेक्षत्वं विवक्षितम्। नियमग्रहणं च पूर्ववत्। तदिहानुभूतिः स्वात्यन्तसजातीयापेक्षानियमरहितस्वव्यवहारेति पक्षसाध्यस्थितिः, हेतुस्तु हेतुत्वादित्येवालम्; क्वचिदपि व्यभिचारादृष्टेः। **स्वसंबन्धात्**— इत्यादिविशेषणत्रयोक्तिस्तु तत्कृतविशेषवैशद्यार्था। एवं नामोक्त**मात्मसिद्धौ**—

* सजातीयस्वसाध्यार्थनिरपेक्षात्मसिद्धयः। सर्वे पदार्थास्तेनात्मा निरपेक्षात्मसिद्धिकः॥ इति।

अत्र सिद्धिः व्यवहारयोग्यतारूपः प्रकाशः; तदुक्तिर्व्यवहारमप्युपलक्षयति; उभयत्र पदार्थत्वादित्येव हेतुः। एवं पूर्वानुमानेऽपि पदार्थत्वाद्धेतुत्वादित्यादिमात्रमुपादाय * स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशेति साध्यप्रयोगोऽप्यूह्यः। तच्च निगमने सूचितम्—**अनुभूतिरात्मनः प्रकाशमानत्वे** इत्यादिना। सजातीयेत्यादौ आत्मनः श्रुतिसिद्धं ज्ञानत्वमवष्टभ्यात्मरूपं ज्ञानं स्वात्यन्तसजातीयापेक्षारहितस्वसिद्धिकमित्युच्यते। स्वसाध्यनिरपेक्षत्वोक्तिस्तु प्रयोगान्तरार्था। साध्यम् व्यवहारानुगुणीकार्यम्; बोध्यमित्यर्थः। आत्मा स्वबोध्यापेक्षारहितस्वप्रकाशः पदार्थत्वादिति। एतेन स्वबोध्यमन्तरेणापि भातीत्युक्तं भवति। दृष्टान्तानां त्वचेतनतया बोध्याभावादेव तत्प्रकाशः स्वबोध्यापेक्षारहितः। आस्तामेतत्; प्रकृते तु सामान्यतो व्याप्तिमाह— य इति। यद्यपि रूपवतामेव चाक्षुषत्वमिति नियमो नास्ति; तथाऽपि नीरूपं द्रव्यं सर्वमचाक्षुषमिति; तेन दृष्टान्तमाह— यथेति। अत्र प्रथमेन **आदि**शब्देन स्पर्शो गृह्यते। द्वितीयेन स्पार्शनत्व व्यवहारविशेषश्च। रूपादेर्व्यवहारविशेषहेतुत्वं तन्निमित्तचाक्षुषत्वाद्यापादनेन। एवंविधसामान्यव्याप्तौ केवलव्यतिरेकिविभ्रमं केचिदाहुः। एतद्वा पक्षधर्मतालब्धविशेषं वा सूचयन्निगमयति— अत इति। **स्वयमेव हेतुः**; बुद्ध्यन्तरनिरपेक्ष इत्यर्थः। अत्रापि तत्प्रयोगस्तु— अनुभूतिः अनन्याधीनस्वप्रकाशा, परप्रकाशासाधारणाभिव्यक्तिहेतुत्वात्; यत्रोक्तसाध्यं, तत्रोक्तहेतुकमिति। एवं व्यवहारेऽप्यूह्यम्।

सेयं स्वयंप्रकाशानुभूतिर्नित्या च, प्रागभावाद्यभावात्। तदभावश्च स्वतस्सिद्धत्वादेव। न ह्यनुभूतः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽवगन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती, सती तावन्नावगमयति; तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति? एवमसत्यपि नावगमयति; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूते-

**रनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत्प्रमाणम् अनुभूतिरियमिति विषयीकृत्य तदभावं साधयेत्। स्वतास्सिद्धत्वेन इयमिति विषयीकारानर्हत्वान्न तत्प्रागभावोऽन्यतः शक्यावगमः। अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रति[सं]बद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति।**

ननु ब्रह्म नित्यं श्रुतम्; धीस्तु अनित्या; सा कथं तत्स्यात्? योगाचारोक्ताच्च त्वदुक्तस्य को भेद इत्यत्राह— **सेयमिति**। शास्त्रप्रत्यक्षाभ्यां सच्चिद्रूपतयैव सिद्धेत्यर्थः। अत्र **स्वयंप्रकाश** इति नित्यत्वनिदानोक्तिः। सर्वदा सत्त्वमुभयान्तशून्यत्वं वा नित्यत्वम्? तच्च * न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते इत्यादिश्रुतिसिद्धम्; ज्ञानत्वं च ब्रह्मणः श्रुतम्; अतस्तदविरोध इति भावः। श्रुत्या अपि प्रत्यक्षविरुद्धं दुर्वचमित्यत्र विरोधाभावाभिप्रायेण हेतुमाह—**प्रागिति**; संवित्प्रागभावप्रध्वंसयोर्भ्रान्तिसिद्धतया स्वरूपतस्तदभावस्य स्थाप्यमानत्वादित्याशयः। अत एव न साध्याविशेषशङ्का। धीनित्यत्वश्रुतिरन्यपरा; न चान्यदिह मानम्, इत्यत्राह— **तदिति**। **एव**कार इह प्रागेव सूचितत्वं नैरपेक्ष्यं वा व्यनक्ति। ननु स्वयंप्रकाशत्वमिह न लिङ्गम्; सपक्षे सत्यपि तत्र क्वचिदप्यवृत्तेः। सन्ति हि प्रागभावरहितत्वे साध्ये प्रागभावाः सपक्षाः, प्रध्वंसरहितत्वे च प्रध्वंसाः, तदुभयराहित्ये च खपुष्पादिः। आहुश्च—

* यस्मिन्ननित्यता नास्ति कार्यताऽपि न विद्यते। तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम्॥ इति।

तत्राह— **नहीति**। स्वप्रकाशत्वस्य लिङ्गत्वाभावेऽपि विकल्पानुपपत्तिद्वारा विवक्षितनिदानत्वं स्यादिति भावः। अत्र **प्रागभावोक्तिः** प्रध्वंसस्याप्युपलक्षिका। स्वतःपक्षेऽपि धीः सत्यसती वा स्वाभावग्राहिणीति विकल्पं मत्वा आद्यं निरस्यति—**अनुभूतिरिति**। ननु स्वयं सती भावमभावं वा विषयान्तरमिव स्वाभावमपि किं न गृह्णीयादित्यत्र विषयस्याभावात्तस्य दुर्ग्रहत्वमाह— **तस्या** इति। यद्यपि अन्योन्याभावादेः स्वप्रतियोगिसमकालत्वमस्ति; तथाऽपि प्रागभावप्रध्वंसयोर्न तत् स्यादित्यभिप्रायेण **विरोधादेवे**त्युक्तम्। द्वितीयं विषयिणो ग्रहणस्यैवाभावादाक्षिपति—**एवमिति**; अन्यतराभावसाम्यप्रकारेणेत्यर्थः। विरोधं विवृणोति—**अनुभूतिरिति**। **स्वयमसती** वन्ध्यासुतधीवत्स्यादिति भावः। अन्यतःपक्षोऽपि विकल्पासह इत्याह—**नापीति**। अन्यत्प्रमाणमनुभूतिं विषयीकृत्य न वेति विकल्प्य पूर्वत्र प्राक् साधितेन विरोधमाह— **अनुभूतेरिति**। द्वितीये प्रतियोग्यग्रहे कथमभावग्रह इत्यभिप्रायेणाह—**अस्या** इति; न हि धीग्राह्यस्य घटादेरभाव इह साध्य इत्याशयः। विषयीकारपक्षपरिशेषेण तद्विरोधं निगमयति—**स्वत** इति। पराक्त्ववेद्यत्वयोरभावात् इयमिति विषयीकारानर्हत्वम्। एवमभावस्याग्रहेऽपि भावस्योत्पत्त्यादेः स्वतोऽन्यतो वा ग्रहः स्यादित्यत्राह—**अत** इति; उक्तविकल्पानुपपत्तेस्तस्याश्चात्रापि संभवादित्याशयः। न हि स्वतः स्वविकारग्रहः, तस्याः स्वरूपमात्रग्राहित्वात्। न चान्यतः, अवेद्यत्वात्। तद्धर्मतया ग्रहणे हि तद्विषयत्वं दुस्त्यजमेव। **प्रागभावाभावादि**ति। कारणं हि सर्वकार्याणां तत्तत्प्रागभावः। न च तद्रहितं खरशृङ्गमुत्पद्यत इति भावः। **उत्पत्तिप्रतिबद्धाः**; तद्व्याप्ता इत्यर्थः। **भावविकाराः** भावरूपा विकाराः, बाह्यानां भावानां संभवन्तो वा। धीर्निर्विकारा अनुत्पन्नत्वादिति व्यतिरेकी।

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः। न ह्यनुत्पन्नं नानाभूतं दृष्टम्। भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न संभवति। अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्या धर्मः। यतो निर्धूतनिखिलभेदा संवित्, अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा। अजडत्वाच्चानात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति।

एतेनैव सजातीयमपि निरस्यति— **अनुत्पन्नेति**। इयमित्यनेन प्राग्वत्स्वतोऽन्यतश्च नानात्वेनापि दुर्ग्रहेति सूच्यते। **आत्मनि**; अनुभूतिशब्दोपात्ते स्वात्मनीत्यर्थः; तत्र धीप्रतियोगिकभेदो नास्ति; स तु जडेष्वेवेति भावः। अनुत्पन्नशब्देन विवक्षितस्य हेतोर्व्याप्तिपक्षधर्मत्वे व्यनक्ति—**व्यापके**ति; नानात्वव्यापकमुत्पन्नत्वम्; तद्विरुद्धस्यानुत्पन्नत्वस्य पक्षे प्रमितत्वादित्यर्थः। यन्नाना तदुत्पन्नमिति व्यभिचारानुपलम्भेन द्रढयति— **नही**ति। नानाभूतं न ह्यनुत्पन्नं दृष्टमित्यन्वयः। धीः सजातीयरहिता, अजत्वात्; यन्नैवं तन्नैवं यथा घट इति प्रयोगः। परमाण्वादिसंज्ञास्तु केचिदर्थाः सजातीयवन्तोऽप्यनुत्पन्ना इति परेष्टं मानशून्यमिति भावः। उक्तव्यतिरेकिसाध्ययोरन्वयिनमप्याह— **भेदादीनामि**ति। आदिशब्देन विकारा गृह्यन्ते। भेदा विकाराश्च नानुभूतिधर्माः अनुभाव्यत्वाद्रूपादिवदिति। ननु अनुभूतेरसाधारणानि धीत्वस्वप्रकाशत्वनित्यत्वाजत्वनिर्विकारत्वनिर्भेदत्वानि त्वयैवाद्योक्तानि। अनृतादिव्यावृत्तयश्च प्रागुक्ताः। तत्पक्षीकारबहिष्कारयोर्बाधव्यभिचारौ स्यातामित्यत्राह— **अत** इति; भावाभावरूपाणां सर्वेषां धर्माणाम् आदिशब्देन संग्रहेण पक्षीकृतत्वादित्यर्थः। एवकारः साधकत्वदार्ढ्यपरः। **अन्योऽपि**; क्वचिच्छ्रुतिसिद्धोऽस्मदुक्तोऽपीति यावत्। कल्पितैस्तु धर्मैरत्र हेतुसाध्यव्यवहारः—

**ज्ञानभेदनिषेधे तु ज्ञानानामैक्यमत्र नः। जडाद्भेदनिषेधे तु तन्मिथ्यात्वान्न तद्भवेत्॥ ३५९॥**

जडादिव्यावृत्तयश्च स्वरूपानतिरिक्ता इत्युक्तम्। धीः निर्धर्मा, अनुभवस्वरूपत्वादिति व्यतिरेकी; विगीताः नानुभूतिधर्माः, अनुभाव्यत्वादिति पूर्वोक्तौ वीतावीताविह पदद्वयेन स्मारितौ। उक्तं च **खण्डने**— * प्रकाशात्मतामात्रस्यैव स्वतस्सिद्धत्वेन जडात्मनां केषांचिद्धर्माणां तदन्तर्भावानुपपत्तिरिति। अनुभूतेर्निर्विशेषत्वादिसाधनेऽपि जिज्ञासितस्यात्मनः किमायातम्? स हि बह्वीभिः श्रुतिभिर्ज्ञानादिधर्माश्रयत्वेन भातीत्यत्राह— **यत** इति। प्रागुक्तप्रकारेण निर्धूतनिखिलभेदत्वादाश्रयाख्यो विजातीयभेदोऽपि कल्पितः; अतः स नात्मा, संविदन्यत्वात् घटवदिति भावः। स्वप्रकाशत्वनिर्गुणत्वे च आत्मस्वभावतया भाते संविदि स्थापिते। अनेन श्रुतिसिद्ध आत्मा धीरूपत्वेन प्रत्यभिज्ञाप्यत इत्याशयवतोक्तम्— **सैवात्मे**ति। धीः आत्मा, निर्विशेषत्वाद्धीत्वाच्चेति व्यतिरेकिद्वयमिह विवक्षितम्। प्रकृतमजडत्वमपि तादृशं हेतुमाह— **अजडत्वाच्चे**ति। व्यतिरेकव्याप्तिं पक्षधर्मतां च व्यञ्जयन् व्यापकनिवृत्त्या व्याप्यनिवृत्तिमाह— **अनात्मत्वव्याप्तमि**ति; अनात्मत्वे व्याप्ये व्याप्तं व्यापकमित्यर्थः; कर्तरि क्तः। योऽनात्मा स जडः, यथा देहादिः, धीस्तु न तथा; तस्मादात्मा।

ननु च अहं जानामीति ज्ञातृता प्रतीतिसिद्धा; नैवम्—सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य; अनुभूतेः स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यन्तबहिर्भूतमनुष्यत्वादिविशिष्ट[देह]पिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति? दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्।

अत्र ज्ञानाश्रयोऽहमर्थस्त्वात्मेति सर्वलोकस्वानुभवप्रत्यक्षेण बाध इति चोदयति— **ननु चेति**। यथाहुः निरालम्बनानुमाने— * सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र ते ध्रुवमिति। स्वतःप्रमात्वमभिप्रेत्यात्र **प्रतीतिशब्दः**। स्वारसिकबाधाभावेऽपि यौक्तिकबाधात् स्वनैल्यादिकल्पत्वं मत्वा प्रतिवक्ति—**नैवमिति**। आत्मनोऽपि ज्ञातृत्वं देहादिज्ञातृत्ववद्बाधितत्वाद्भ्रान्तिसिद्धमित्याह— **सेति**। हेतुत्वपरोऽयं परामर्शः— विमतं ज्ञातृत्वं भ्रान्तिसिद्धं, ज्ञातृत्वस्वरूपत्वात्संमतवदिति। देहादेर्ज्ञातृत्वमिच्छतामपि अविगानार्थमन्यत्राप्येकधीविषये बाध्याबाध्यांशविवेकं व्यनक्ति— **रजततेति**। अन्यथाख्यात्यन्वारोहेणेदं निदर्शनम्। स्वपक्षे हि शुक्त्यवच्छिन्नमायांशकर्बुरस्य चैतन्यस्य रजततया विवर्तः। शुक्तौ रजतत्वबाधेऽपि प्रमाणसिद्धे रजते रजततेव देहादौ बाधिताऽप्यात्मनि ज्ञातृता स्यादित्यत्र आत्मस्वरूपभूतज्ञानाश्रयत्वं वा कर्मकर्त्रवच्छिन्नवृत्तिज्ञानाश्रयत्वं वा ज्ञातृत्वमिति विकल्पं मत्वा, आद्येऽपि स्वरूपज्ञानाश्रयत्वमिदं स्वरूपस्यैव, अन्यस्य वेति विकल्पे स्वरूपस्येति पक्षमात्माश्रयेण निरस्यति— **अनुभूतेरिति**। कर्तृत्वमिहाश्रयत्वम्; जनकत्वविवक्षायामप्यात्माश्रयस्सिद्धः। कथं तस्यात्मनः प्रत्यक्षादिभिर्ज्ञातृत्वप्रतीतिरित्यत्र तत्संभवम्, अन्यस्य वेति विकल्पितपक्षस्यासंभवं च ज्ञापयितुमाह— **अत** इति; स्वस्य स्वाश्रयत्वायोगादित्यर्थः। अन्तरङ्गाहमर्थधर्माध्यासेनैक्यव्यञ्जनाय विशिष्टदेहपिण्डेत्यन्तम्। **ज्ञातृत्वमिति**; यथा आत्मनि मनुष्यत्वादिविशिष्टपिण्डत्वमध्यस्तम्; तथा ज्ञातृभूताहमर्थाभिमानो ज्ञातृत्वमित्यर्थः। तत्रानुभूतिबहिर्भूतत्वमपि हेतुः। स तु ज्ञातृत्वं हीत्युत्तरवाक्ये स्पष्टः। ज्ञातृत्वमध्यस्तमित्यनेनैवात्मनो वृत्तिज्ञानाश्रयत्वपक्षोऽपि व्युदस्तः; तदुपपादनाय प्रतिक्षेप्यस्वरूपं निष्कर्षति— **ज्ञातृत्वं हीति**। हिर्हेतौ; यतो ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वम्, अत इत्यर्थः। प्रस्तुते को विरोधः? इत्यत्राह— **तच्चेति**। **चो** हेतौ, उक्तकारणाकारान्तरसमुच्चयार्थो वा। **विक्रियात्मकं जडमिति**। व्यवस्थाप्यम् आश्रयविशेषणं व्यनक्ति— **विकारिद्रव्याहङ्कारग्रन्थिस्थमिति**। स्वरूपानुबन्धित्वाभावादनात्मत्वव्यक्त्यै देहादिवद्ग्रन्थिस्थत्वोक्तिः। ईदृशस्य औचित्योपलम्भमाह— **अविक्रिय** इति। परेषु व्याप्रियमाणेषु निर्व्यापारो हि साक्षी; अतः * साक्षाद्द्रष्टरि संज्ञायामित्यनुशिष्ट्या * साक्षी चेता केवलो निर्गुणश्चेति श्रुतिरपि द्रष्टृत्वपरेति न भ्रमितव्यम्, किं तु अविद्यागोचरानुभवस्वरूपपरेत्यभिप्रेत्याह— **साक्षिणीति**। अनेन सूचितः श्रुतिविरोधोऽपि। तन्निर्धर्मत्वविरोधमप्याह— **चिन्मात्रात्मनीति**। * अनुभाव्यत्वादिति प्रागुक्तहेतुनैव कर्तृत्वादेरप्यनात्मधर्मत्वं साधितमिति स्थापयति— **दृश्यधीनेति**। कर्तृत्वादिः नात्मधर्मः, दृश्यधीनसिद्धित्वाद्रूपादिवदित्यनुमानमत्राभिप्रेतम्। **कर्तृत्वादीत्यादिशब्देनाहंप्रत्ययगोचरत्वग्रहः**।

सुषुप्तिमूर्च्छादौ अहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम् । कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः । अहंप्रत्ययगोचरात्कर्तृतया प्रसिद्धात् देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव । तथा अहमर्थाज्ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् । एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहङ्कारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति । तत्कृतोऽयं जानाम्यहमिति भ्रमः ।

ननु * अहमेवाहं मां जुहोमीत्यादिश्रुतिशतैः प्रत्यक्षानुगुणैरहमर्थ आत्मेति सिद्धेऽहंत्वसामानाधिकरण्यबलाज्ज्ञातृत्वादिकमात्मधर्मः स्यादित्यत्राह— **सुषुप्तिमूर्च्छादौ** इति । **आदि**शब्देन मरणमोक्षसंग्रहः । स्वात्मप्रकाशोऽपि तदा नास्तीति जडात्मवादिमतव्युदासाय **आत्मानुभवो**क्तिः । तास्वपि दशासु स्वप्रकाशत्वस्य श्रुतिप्रतिपन्नत्वादिति भावः । अहंबुद्धेरात्मविषयत्वे स्वरूपस्फुरणवत्सुषुप्तावपि साऽनुवर्तेत ; प्रयोगश्च—अहं कर्ता इत्यादिधीः नात्मगोचरा, सुषुप्त्यादावविद्यमानत्वात् । तथा च * अहम्मानोद्भवं दुःखमित्यादि, * अविद्याहम्मतिरिति च पठ्यते । अकर्तृत्वानहंत्वयोरुक्तस्य प्रमाणस्यानुग्राहकतर्कानाह—**कर्तृत्व** इति । प्रसङ्गविपर्ययाश्च अजडत्वादयः प्रकृतसाध्यद्वये व्यतिरेकिहेतवोऽभिप्रेताः । यदि जडस्याहंत्वं, तर्हि देहस्यैव तत्किं न स्यात् ? बाधाच्चेत्तर्हि श्रुत्यादिसिद्धस्य बाधायोगादात्मनि तदस्तु, अनात्मनः कर्तृत्वे कामित्वकर्तृत्वसामानाधिकरण्यात्तन्मूलं भोक्तृत्वमप्यात्मनो न सिध्येत् ; * शास्त्रफलं प्रयोक्तरीति नियमस्य जातेष्ट्यादौ अगत्या निवृत्तिः, अन्यत्र न तथा ; संसाराभावान्मुक्तिशास्त्रं नारभ्यमित्यत्राह— **अहंप्रत्यये**ति । **कर्तृतया प्रसिद्धाद्देहादि**ति । कथम् ? इत्थम्—प्रचुराणां विष्णुक्रमणसर्पणादीनां वैधक्रियाणां साक्षाद्देहाश्रयत्वाद्वाङ्मनसव्यापाराणां देहसापेक्षत्वादिति । **प्रामाणिकानाम्** ; श्रुत्याद्यनुसारिणामित्यर्थः । तदिहाकर्तुर्भोक्तृतासंभवेन तेन बाधायोगचोद्यं परास्तम् । अहंत्वकर्तृत्वादौ बाधश्च पूर्वोक्तः सुषुप्त्यादिविषयश्रुतिप्रसिद्धः । आत्मा श्रुतः, तस्य तत्तत्क्रियानाश्रयत्वेऽपि आत्मन ऐहिकामुष्मिकतत्तत्फलभोक्तृत्वं प्रामाणिकैः सर्वैरङ्गीकृतम् । तथाऽनात्मनोऽहमर्थस्य कर्तृत्वेऽपि गतिः । स्मर्यते च—* कार्यकारणकर्तृत्वे इत्यादि । तर्हि भोक्तृत्वादेव ज्ञातृत्वादिकं स्यादित्यत्र दत्तोत्तरत्वं मत्वाऽऽह—**तथेति** । अयं भावः— कर्तृत्वभोक्तृत्वविशिष्टोऽहमर्थः । नात्मा, अहंधीवेद्यत्वाद्देहवत् । अभोक्तृत्वेऽप्यात्मनो भोक्तृत्वाध्यासात्तदुक्तिः । मुक्तिशास्त्रं च तावन्मात्रनिवृत्त्यर्थमिति । न हि कर्ता साक्षी स्यादित्यभिप्रायेण **साक्षित्वो**क्तिः । **प्रतिपत्तव्यम्** ; उक्तैर्हेतुभिः * यस्य नाहंकृतो भावः इत्यादिशास्त्रैश्चेति शेषः । ननु अविद्याशबले चिद्रूपात्मनि अहमिति प्रथमोऽध्यासस्त्वदुक्तः ; तथा च शुक्तिस्थतया रूप्यवद्धीस्थतयाऽहमर्थो भासेत ; प्रत्युत तद्धर्मतया धीर्भाति । तथात्वे धियोऽहमर्थविकारत्वं जन्मादिविकाराश्रयत्वं च स्यादित्यत्राह—**एवमि**ति । **अभिव्यञ्जक** इति हेतुगर्भम् । **जडोऽपी**ति घटवद्व्यञ्जकत्वासंभवशङ्काव्युदासार्थम् । अहङ्कारस्थतयाभिव्यक्तिमात्रमेव ; न तु वास्तवी तत्र वृत्तिः ।

र्पणप्रतिहतभान्यायेन तु तद्धर्मत्वोक्तिः ; अतो न तद्विकारित्वादिप्रसङ्गः । इन्द्रियवद्व्यञ्जकत्वमस्तु, किमिति स्वनिष्ठतया ग्नकीर्त्य आह— आत्मस्थतयेति । यथादर्शनं स्वभावो दुरतिक्रमः इत्यभिप्रायेण स्वभावशब्दः । अभिव्यञ्ज- ानामीदृक्स्वभावत्वं बुद्धीनां प्रमात्ववदौत्सर्गिकं क्वचिदपवादेऽपि भूयोदृष्ट्या सिध्यतीत्याह— दर्पणेति । तत्तद्विशेष- ायुक्तत्वव्युदासाय बहूदाहृतिः । जातिव्यक्त्युदाहरणेन चक्षुष्प्रतिफलनोपाधिकत्वशङ्का चापास्ता । उक्तप्रकारेणाधिष्ठान- ापिरित्यादिचोद्यस्यापास्तत्वमाह— तत्कृत इति ; व्यञ्जकसामान्यस्वभावसिद्ध इत्यर्थः ।

स्वप्रकाशाया अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मा वोचः ; रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात् । जालकरन्ध्र- निष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः । यतः अहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः ; अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र हि अहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणात्मा- ऽवभासते । अत एव सुप्तोत्थितः कदाचित् मामप्यहं न ज्ञातवान् इति परामृशति । तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूपविविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति ।

ननु स्वप्रकाशस्य न व्यञ्जकापेक्षा, व्यञ्जकानां च न कश्चिदपि स्वव्यङ्ग्यैर्व्यञ्जनं दृष्टम् ; अनुभूतिश्च न व्यङ्क्त्री ; अक्षरवज्जडत्वप्रसङ्गात् । अहंकारोऽपि न व्यङ्क्ता, व्यङ्क्तृबुद्ध्यधीनसिद्धित्वाभावेन परमार्थसत्त्वप्रसङ्गात् । न च स्वयं व्यक्तः, अनिष्टत्वात् । अतो मिथो व्यङ्क्तृव्यङ्ग्यत्वेऽन्योन्याश्रयः स्यादिति चोद्यमनूद्य क्षिपति— स्व- प्रकाशाया इति । सजातीयनिरपेक्षतया स्वयंभातस्यापि परेण व्यङ्ग्यत्वं तदभिव्यञ्जकत्वं च निदर्शयति— रवीति । करतलस्य रविकरव्यञ्जकत्वमसिद्धमित्यत्राह— जालकेति । एतेन नित्यसिद्धायाः स्वरूपव्यक्तेरन्यैवाहंकारजन्याभि- व्यक्तिरित्यपि सूच्यते । पूर्वमहंबुद्धेः सुषुप्त्यादावभावात्सिद्धान्तिसंमतस्वरूपधीत्वयोगेनान्यगोचरत्वमुक्तम् । अत्र प्रत्येतुः प्रत्येतव्यादव्यतिरेकोऽहंत्वम् ; तच्चात्मनः कादाचित्कमपि सत्यमिति मन्यमानं प्रत्याह— यत इति । व्यापकाभावे व्याप्यं नेति व्यतिरेकव्याप्त्या साध्यस्यात्र साधकसद्भावार्थतया तद्धेतुत्वोक्तिः, न तु तद्बोधकतया । अहंकारस्य धर्मता- निषेधोऽहंत्वधर्मतानिषेधार्थः । ज्ञातृत्वादिकं वा भावप्रधानम् ; ज्ञातृत्वादिसहितमहंत्वमित्यर्थः । एवकारोऽन्यथासिद्ध्य- पोहार्थः । ज्ञातृत्वाहंत्वे मिथ्याभूते अनात्मधर्मौ च, सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवदिति प्रयोगः । स्वरूपा- सिद्धोऽयं हेतुरिति वादिनं प्रत्याह— तत्रेति । हिर्हेतौ, शास्त्रप्रसिद्धौ वा । * नह खल्वित्यादिभिः सुषुप्तावहंधी- निवृत्तिस्सिद्धा ; मुक्तौ च * अहङ्कारं बलं दर्पमित्यादिभिः । न केवलं शास्त्रेण, प्रबुद्धस्य सुषुप्तावस्थात्मपरामर्श- प्रकाराच्च तदानीमहंधीनिवृत्तिमाह— अत एवेति । अत्रापि अत इति साध्यपरम् । * यदप्याहुरित्यादिना प्रपंचि

वस्तुसामर्थ्यं परमप्रकृतकर्मनैरपेक्ष्यव्यक्त्यै निगमयति— **तस्मादिति**। प्रमाणैस्तदनुग्राहकैश्च स्थापनादित्यर्थः। अत्र **निर्विशेषं** प्राप्यम्। नित्यप्राप्ते तस्मिन्नोपासनादिसाध्या प्राप्तिः। निवर्त्यं मिथ्याभूतज्ञानम्; तन्निरासे च ज्ञानातिरिक्तं नापेक्ष्यम्। निवर्तकं वाक्यजन्यमैक्यज्ञानम्; तच्च स्वोत्पत्तौ स्वफले वा न कर्मापे[क्षित]क्षमिति वस्तुत्रयसामर्थ्यनिष्कर्षः। **निरस्तेत्यादिना** सजातीयविजातीयनिवृत्तिः। **भेदविकल्पः**; तद्वैचित्र्यम्, तद्भ्रमो वा। **निर्विशेषेति** स्वगतव्युदासाय। **चिन्मात्रैकरसशब्दः** प्राग्वत्। ज्ञातृज्ञेयादयो **विवर्ताः**। **भ्रान्त्या विवर्तते**; भ्रमगोचरमिथ्याभूतविकारवती भवतीत्यर्थः। **तच्छब्देन** भ्रान्तिः परामृश्यते। **शुद्धमुक्तशब्दौ** अविद्यातत्कार्यनिवृत्त्यर्थौ। **प्रतिपत्तये**; प्राप्तय इत्यर्थः। **सर्वे वेदान्ताः** — कारणपराः, तच्छोधकाः, तदैक्यबोधकाश्च। तेषामारभ्यत्वमिह विचारद्वारा। **इतिः** प्रकारे। इति **यदप्याहुः** इत्यन्वयः। सकारणस्य संसारस्य सत्यत्वेन ज्ञानबाध्यत्वाभावान्न तदर्थं शास्त्रमारभ्यमित्यत्र तस्य मिथ्यात्वेन धीबाध्यत्वात्तत्प्रधानं शास्त्रमारभ्यमिति परोपन्यस्तवस्तुसामर्थ्यमिह स्पष्टीकृतम्॥

तस्मादनुपयुक्तत्वाद्विरोधाच्चात्र कर्मणः। तच्चिन्तावृत्तता नेति वाक्यशेषो मनस्कृतः॥

इति महापूर्वपक्षः॥

---

## महासिद्धान्तः।

तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम्, अनादिपापवासनादूषिताशेषशेमुषीकाणाम्, अनधिगतपदवाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम्।

अथानूदितनानार्थदोषजालमहोदधेः। संक्षिप्तप्रतिपत्त्यर्थं तदित्यादि निबध्यते॥ ३६१॥
प्रकाशयति तत्कारः परैरुक्तमनेकधा। अनेकग्रन्थसन्दर्भसाधितं तदुदीर्यते॥ ३६२॥
दूष्यकात्स्न्र्यमिदं वक्ति प्रस्फुरद्दोषतामपि। आभासत्वमतो वक्तुमिदंशब्दः प्रयुज्यते॥ ३६३॥
किं चासारमिदं सर्वं; सति सारे हि कुत्रचित्। सारासारौ विवेक्तव्यौ मल्लिकादिसमैरपि॥ ३६४॥
यदि नोद्ध्रियते न्यायैः श्रुतिशल्यमिदं मतम्। उपप्लूयेत सन्मार्गस्तदाहुर्बाह्यदूषणे॥ ३६५॥

* प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम्। विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना॥
सर्वेषु लक्षणेष्वेव स्वप्रमाणगणैः स्थितिः। वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता॥
कर्मभ्यः फलसंबन्धः पारलौक्यैहलौकिकः। सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः। अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति॥ इति।

अत्र व्यावहारिकव्यवस्थया समाधिस्तु सांवृतव्यवस्थावदपाकरिष्यते । अत्र तदिदं परोक्तमुपायादित्रयमनादरणीयमिति साध्यम्; **औपनिषदे**त्यादिना तद्धेतूक्तिः । स्वपक्षे च प्राप्यादयस्त्रय इह परमपुरुषतद्भक्तितदपराधाः सूच्यन्ते । **औपनिषद**शब्देन * तं त्वौपनिषदं पुरुषमित्यादि वाक्यं स्मारयता स्वपरपक्षयोः साधनदूषणोक्तिः । परेषां तु ब्रह्मणो वेद्यत्वानभ्युपगमात्तदिष्टविपरीतसगुणत्वादिश्रुत्या च बाधप्रदर्शनम् । **परमपुरुष**त्वोक्तिरीश्वरोत्तीर्णताव्युदासाय । अर्थात्त्रिमूर्तिसाम्योत्तीर्णतादिपक्षापोहः । सम्यग्ज्ञानानुत्पत्त्यै भक्तिविरहाद्युक्तिः । भक्तिर्हि सम्यग्धीहेतुतया * यस्य देवे परा भक्तिः, * शुद्धभावं गतो भक्त्येत्यादिषु ख्याता । **पापस्य वासना**—तत्त्वज्ञाननिवृत्तिमिथ्याज्ञानादेः सजातीयारम्भस्योत्पादनशक्तिः । तस्यास्तत्त्वधीनाशकत्वं * पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनरित्यादिषु प्रसिद्धम् । बीजाङ्कुरन्यायसूचनाय **अनादि**शब्दः । **अशेष**शब्देन मानतर्कप्राप्योपायादिसर्वसंग्रहः । पापस्य भक्त्या निवर्त्यत्वं भक्त्यभावे यथार्हं हेतुसाध्यभावो भक्तिनिरोधद्वारं चात्र सूच्यम् । भक्त्यभावादिनोक्तार्थाभ्यां मानतदितिकर्तव्यतादौ सर्वत्र प्रमितिसामग्रीशैथिल्येन बहुविदामपि भ्रमादिसंभवमाह— **अनधिगते**ति । सम्यक् इत्युपस्कार्यम् । **पदस्वरूपम्**— प्रकृतिप्रत्ययसमुदायात्मकं, **वाक्यस्वरूपं** तु तादृशां संघातः । **तदर्थः**—मुख्यामुख्यरूपः पदार्थो वाक्यार्थश्च । **तद्याथात्म्यम्**— दुस्त्यजभेदगर्भत्वं, वाक्यार्थस्य यथार्हतात्पर्यगोचरत्वं च । भेदभूयस्तया, विरोधे सति प्रबलतया परेष्टत्वाच्च, प्रत्यक्षादेः पूर्वं वाक्यस्योक्तिः । **आदि**शब्देन स्वपराभ्युपेतग्रहः । **सकल**शब्दः सावान्तरभेदपरः, परेष्टमानान्तरपरो वा । **वृत्तम्**— स्वरसतः स्वार्थसाधनमुपजीव्यानुविधानं च । तच्छब्देन प्रमाणपरामर्शः । **न्यायः**— तर्कः । **समीचीन**त्वम्— साङ्गपञ्चकत्वम् । **मार्गः**—तत्तत्प्रतिपादकविद्यास्थानम् । यद्वा, विरुद्धजिज्ञासावारणरूपोऽनुग्रहः । संबन्धसामान्ये षष्ठी । कुतस्तर्हि मानशून्यस्योत्थानम्? इत्यत्र बाह्यमतवदित्यभिप्रायेणाह— **विकल्पे**ति । **विकल्पासह**त्वम्—विकल्पमात्रे स्पष्टदोषत्वम् । वेद्यत्वावेद्यत्वादिविरुद्धगोचरत्वाभिप्रायेण **विविध**शब्दः । तर्केषु सारो बाह्यैरात्तः; वेदप्रामाण्याद्यनादरेणोत्थानात् । इदं तु तदुजीवैः कल्पितम् । स्वमतस्य सत्तर्कान्वितमानसिद्धतां बोधायनटङ्कद्रमिडादिमहत्तरपरिग्रहप्राचुर्यं च सूचयति—**न्याये**ति । **अनादरणीयम्**— आदरानर्हम्; उन्मत्तजल्पितवत् उपेक्षणीयमित्यर्थः । एतेन दृष्टापह्नोतॄणां वादानधिकारः सूच्यते । उक्तं हि **वेदार्थसंग्रहे**— * सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षसाधकप्रमाणपारमार्थ्यानभ्युपगमात् अभियुक्तैर्वादानधिकार एव प्रतिपादितः— * अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः इतीति । तत्प्रतिक्षेपस्तु अन्वारोहेण; शिक्षणीयान् शिष्यादीन् प्रति वा ।

तथा हि—निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनि इदं प्रमाणमिति न शक्यते वक्तुम्; सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम् । यस्तु स्वानुभवसिद्ध[म्] इति स्वगोष्ठीनिष्ठः समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः; इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केनचिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्कष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः

**सविशेष एवावतिष्ठते । अतः कैश्चिद्विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न कचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वम् स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः ; स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषास्सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः ; वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात्, स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ।**

संक्षिप्तं परनिरसनं प्रपञ्चयितुमुपक्रमते— **तथा हीति** । तत्र प्राप्यस्य निर्विशेषत्वं मानशून्यतया क्षिपति— **निर्विशेषेति** । **निर्विशेषे वस्तुनी**ति विशेषणात्स्ववचनविरोधोऽप्यत्र सूच्यते । तस्मिन्मानमस्तीति सामान्योक्तिरयुक्ता । अतो लोकतः स्वमत्या वा सिद्धस्य विशेषतो वक्तव्यत्वाय **इदंशब्दः** । परैरुच्यमाने वक्तुं शक्यत्वं कथं क्षेप्यम् ? विशेषे च निर्विशेष इव त्वयाऽपि मानं वाच्यमित्यत्राह— **सविशेषेति** । कस्याप्यत्र प्रमाणीकर्तुं शक्यत्वं निषिध्यते; न तु तद्वचनमात्रम् । विशेषप्रमाणमपि न निर्विशेषविषयम् ; तत्तदाश्रयादिभिर्विशेषशब्दवाच्यत्वादिभिश्च तद्वैशिष्ट्यात् । अस्ति हि कचिदाश्रितैः कचिदाश्रयादिभिश्च भिन्नधीः । गुणादिरूपे च विशेषे स्वपरनिर्वाहकत्वं वक्ष्यत इति नानवस्था । स्वतस्सिद्धे माननैरपेक्ष्यवादमनूद्य क्षिपति—**यस्त्विति** । **स्वानुभवसिद्ध[म्]ः** स्वप्रकाशप्रत्यक्षसिद्ध[म्]इत्यर्थः । **स्वगोष्ठीनिष्ठः**—लौकिकपरीक्षसंनिधौ दुर्वच इत्यर्थः । **समयः**—परिभाषाप्राय इति भावः । सर्वहृदयाविसंवादाद्धाधानर्हत्वाभिप्रायेण **आत्मसाक्षित्वोक्तिः** । उक्तं व्यनक्ति— **इदमिति** । अत्र पदत्रयेण विषयाश्रयस्वगतविशेषप्रदर्शनम् । **केनचिदि**ति तदवान्तरविशेषप्रदर्शनार्थम् । **विशिष्टविषयत्वात्**— विशिष्टस्वरूपप्रकाशरूपत्वात् । यद्वा, अनुभवपरामर्शरूपाणां ज्ञानानां विशिष्टपूर्वानुभवगोचरत्वादित्यर्थः । तथा च अदर्शमित्यपि स्वरसम् । **सर्व**शब्दः पुरुषान् अनुभवान्वा ब्रूते । सर्वदृष्टेऽपि युक्तिबाधं क्षिपति—**सविशेष** इति । **अनुभूयमान** इति । अत्रापि प्रकाशमान इति वा परामृश्यमान इति वाऽर्थः । **केनचित्**—धीत्वादिना व्यतिरेकिणा । **युक्ति**शब्द इहानुमानार्थः । निश्चिततदोषप्रत्यक्षसिद्धज्वालैक्यबाधकाद्व्यावृत्त्यर्थं स्वनिष्कर्षेणाभासतोक्ता । **निष्कृष्यमाण** इत्यन्तोऽनुवादः । तदैव सविशेषत्वधीसूचनाय वर्तमाननिर्देशः । यदि पक्षस्वरूपमेव हेतुः, तदा दृष्टौ साध्यसंदेहः साधनाकाङ्क्षा च न स्यात् । न च स्वयं स्वधर्मः; नापीदं स्वपरनिर्वाहस्थानम्; तस्मादन्यत्वाभिप्रायेण **सत्तातिरेकित्वोक्तिः**, स्वरूपातिरिक्तं सत्तामात्रं भासमानत्वादिकं वा व्यभिचारान्न हेतुरिति भावः । अत एव **स्वासाधारण**त्वमुक्तम् । तेन स्वरूपासिद्धिव्यधिकरणासिद्धिविरोधानैकान्त्यानां भ्रमसहत्वस्य साध्यसंदेहार्हधर्मिस्वरूपैक्यस्य च निरासः । सत्तातिरेकित्वादेः पक्षे युक्त्या स्थापनाय पुनर्ग्रहणम् । **निष्कर्षहेतुभूतै**रिति हि तत्स्थापनम्; न हि धर्मिस्वरूपासाधारणं सत्तादिधर्ममात्रं वा सविशेषाद्व्यावृत्तिं साधयेदिति भावः । साधनकाले हेतुस्तिष्ठति, साध्यकाले तु स्वयमपि गलतीति धर्मवादवादिना त्वया न वक्तुं युक्तम् । अनुभूतित्वनिवृत्तौ च कथमनुभूतिस्स्यादित्यभिप्रायेण **सविशेष एवावतिष्ठते** इत्युक्तम्; अन्यथा स्वरूपासिद्धिस्स्यादि-

त्यभिप्रायेण **एवकारः**। सर्वविशेषनिषेधको हेतुः स्वपरनिर्वाहकनीत्या कनकरजोवत्स्वात्मनोऽपि निवर्तकः स्यादित्यत्राह— **अत** इति। स्वसिद्धिविषिद्धे सविशेषत्वव्यापकाननुभूतित्वनिवृत्त्ययोगात्साधकाभावेन साध्यासिद्धिप्रसङ्गादित्यर्थः। **कैश्चित्**— हेतुतया प्रमितैः तत्समानयोगक्षेमैश्च। यद्येतद्धेतुराहित्यमेतद्धेतुमत्त्वेन साध्यते, तदा प्रतिज्ञाहेत्वोर्विरोधश्च स्यादिति भावः। **अन्ये**—प्रमितिसिद्धस्वधर्मव्यतिरिक्ताः। **न क्वचित्**; न हि स्वानुभवे स्वस्य निर्विशेषत्वं सिध्यति। एवं तत्परामर्शेऽनुमानादौ चेत्यर्थः। हेतुरूपस्वगतविशेषः स्थापितः; अथ इदमहमित्युक्तविषयाश्रयाभ्यामपि वैशिष्ट्यं स्थापयति— **धिय** इति। हिः प्रसिद्धौ। **धीत्वम्** कस्यचित्प्रकाशात्मता; सैव स्वेनेति विशेषतः स्वप्रकाशता। * प्रकाशश्च कस्मैचिदिति वक्ष्यति। पूर्वं त्वदुक्तो हेतुस्तत्साध्यं चेत्यर्थः। निष्कृष्टा विषयधीरेव ब्रह्म इति वदन्तं प्रति अत्र **ज्ञातुरित्यादिकमुच्यते**। स हि स्वसंबन्धाभावादर्थान्तर इत्यादिकमप्याह। स्वमते त्वहमर्थस्यात्मनः प्रसिद्धधीव्यतिरिक्ततया विषयाश्रयावच्छिन्नप्रकाशत्वाभावेऽपि श्रुतिबलेन स्वप्रकाशत्वात्तद्गुणसारत्वाच्च ज्ञानत्वव्यपदेशः सूचितः। यथोपलम्भं वस्तुस्वभावः स्थाप्यः, अन्यथाऽतिप्रसङ्गादित्यभिप्रायेण **उपलब्धेरित्युक्तम्**। विषयरहितोऽप्युपलम्भः कदाचिदस्ति; अतो न तद्भासनस्वभावतेत्यत्राह— **स्वापेति**। **अनुभवः**— आत्मभावनम्। **स्वावसरे**— तदुपपादनोचिते अहमर्थात्मत्वस्थापनकाले। **निपुणतरम्**— उपपन्नतरमित्यर्थः; परोक्तयुक्त्यैव साधनाद्यैरपि संमन्तव्यमिति भावः। निर्विशेषत्वसाधकैर्विषयाश्रयाभ्यां च सविशेषत्वमुक्तम्। अथ परोक्तैः साध्यैश्च तदाह— **स्वाभ्युपगता** इति। तेषु मानसिद्धांशस्य स्वमतेऽपि सिद्धिद्योतनार्थं **एवकारः**। ते धियोऽनतिरिक्ता इत्यत्राह— **त** इति। संमतिविमतिभ्यां भेदमाह— **वस्त्विति**।

**धीस्वरूपस्य सत्यत्वं बौद्धादेरपि संमतम्। अतो धीमात्रसाध्यत्वे दुस्त्यजा सिद्धसाध्यता ॥ ३६६ ॥**

**तद्धर्मसाधने तु स्यात् स्वसिद्धान्तविरुद्धता। स्वसाध्यानां मृषात्वोक्तिः वृषलोद्वाहमन्त्रवत् ॥ ३६७ ॥**

विमतिमूलस्वेष्टसमर्थनेन च सिद्धात् साध्यानामन्यत्वमाह— **स्वाभिमतेति**। हेतुतया स्वाभिमतैः धीधर्मभेदैरित्यर्थः। तेन धीस्वरूपात्साध्येभ्यश्च व्यावृत्तैः साधकैरपि सविशेषत्वसिद्धिः। तेषां हेतूनां साध्यानां च कल्पितत्वपक्षोऽपि **स्वाभिमतशब्देन स्वमतोपपादनादित्यनेन** च निरस्तः। यदि क्षणिकत्वादिकमिव नित्यत्वादिकमपि कल्पितम्, कुतस्तदा ते क्वचित्पक्षपातः? तादृशनित्यत्वादिसाधने च न कथं परसिद्धसाध्यतां ब्रूयात्? रज्जुसर्पनयात्तद्विरुद्धं च सत्यं स्यात्। हेतूनां च तथात्वे बाष्पारोपितधूमवत् असाधकत्वम्। यदि ब्रूयात्—आरोपितधूमादेरसाधकत्वं न कल्पितत्वात्, किं तु व्याप्तिशून्यत्वात्; सत्यां तु तस्याम् असत्यस्यापि साधकत्वं दृष्टमिति। तदसत्, व्याप्तेरप्यत्र कल्पितत्वाङ्गीकारात्; तादृशी च बाष्पधूमे सिद्धेति। यथा च माध्यमिकोक्तबाधकप्रामाण्यमिथ्यात्वेन बाध्यस्य ब्रह्मणः सत्यत्वम्, एवं विशेषबाधकप्रामाण्यमिथ्यात्वेऽपि तत्सत्यत्वं दुस्त्यजम्।

**अत्र सत्यमसत्यं वा साधनं दूषणं च वः। सत्यत्वे सद्वितीयत्वमसत्यत्वे त्वनर्थता ॥ ३६८ ॥**

पारिशेष्याद्विशेषसत्यत्वपक्षमभ्युपगमयति— **अत** इति। वस्तुमात्रकल्पितत्वयोः दुर्वचत्वादित्यर्थः। **प्रामाणिकविशेषैः**— हेतुभिः साध्यैः सविशेषैर्विषयाश्रयैश्चेति यावत्। अन्यथा तुच्छत्वद्योतनार्थं **एवकारः**।

**सामान्यतो हि धीस्थेऽर्थे विशेषस्याग्रहे सति। स्यादध्यासस्त्वदिष्टे तु द्वयाभावाद्भवेन्न सः ॥ ३६९ ॥**

**शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः। प्रकृतिप्रत्यययोगेन हि पदत्वम्; प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः। पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यान्न निर्विशेषवस्तुनि शब्दः प्रमाणम्।**

एवं स्वानुभवसिद्धिप्रसक्तानुप्रसक्तमुपसंहृत्य प्रागुक्तं सर्वप्रमाणानां सविशेषविषयत्वं विवृण्वन् प्रत्यक्षात् प्रबलतया पराभिमतं शब्दं तावद्विशिष्टपरमाह— **शब्दस्येति**। तुशब्दो विशिष्टविषयप्रत्यक्षाद्युपजीवित्वं परकल्पितशास्त्रप्राबल्यं वा द्योतयति। वाक्यात्मना सविशेषबोधनेन प्रत्यक्षात् समधिकत्वव्यञ्जनाय **विशेषेणे**त्युक्तम्। **एव**कारेण यत्किञ्चिन्निमित्ताभावे शब्दस्य प्रवृत्तिरेव न स्यादिति व्यज्यते।

**सत्यनित्यत्ववेद्यत्ववाच्यत्वादौ तु साश्रये। तत्तच्छब्दप्रवृत्तिः स्यात् स्वान्यनिर्वाहकत्वतः॥ ३७०॥**

**अभिधानसामर्थ्यम्**— कयाचिद्वृत्त्या बोधनार्हत्वमित्यर्थः। विशिष्टार्थत्वातिरेके निदानमाह— **पदे**ति। तत्र पदेऽपि वाचकांशभेदमाह— **प्रकृती**ति। **हि**शब्दः *सुप्तिङन्तं पदम्, *विभक्त्यन्ताः पदमित्यादिशास्त्रान्तरप्रसिद्धिहेतुम् अवधारणं वा व्यनक्ति। ततः किमित्यत्राह— **प्रकृतिप्रत्यययो**रिति। यद्यपि स्वार्थे केचित्प्रत्यया विहिताः, तथाऽपि प्रत्ययान्तरेण संख्यादिवैशिष्ट्यं प्रायशस्तत्रापि स्यादिति भावः। एवं गोत्वादिपदेष्वपि द्रष्टव्यम्। **पदस्यैव**— वाक्यस्थस्य तदंशमात्रस्यापीत्यर्थः। **अवर्जनीय**मित्यनेनाभिहितान्वयवादिभिरपि पदांशयोरन्वितार्थत्वं स्वीकृतमिति सूच्यते। वाक्यस्यापि सर्वविशिष्टपरत्वं वक्तुं तदुपयुक्तमाह— **पदभेद** इति। प्रमाणभूतैकवाक्यस्थविषयमिदम्। वीप्सादौ च तात्पर्यभेदादर्थभेदोऽस्त्येव। उक्तार्थेन वाक्ये फलितमाह— **पदसंघाते**ति। अभिहितान्वयमतेन संसर्गोक्तिः। **विशेष**शब्दः अपूर्वार्थः; मतान्तरे तु संसर्गविशिष्टे तात्पर्यम्। यद्यपि *अर्थैकत्वादेकं वाक्यमिति न्यायादेक एव वाक्यार्थः; तथाऽपि लिङ्गसंख्याकारकाद्यनेकांशगर्भोऽसौ; न तु क्वचिदपि निर्धूतनिखिलांशं किञ्चित् शब्दबोध्यम्। अखण्डवाक्यार्थादिकल्पस्तु निरसिष्यते। निर्विशेषशब्दोऽप्याप्तप्रयुक्तश्चेद्विशिष्टतया प्रमितमन्यपदार्थं विवक्षितविशेषरहितं लिङ्गसंख्यादियुक्तमेव ब्रूते। न चैकं पदं प्रमाणम्; अध्याहारादिना पदान्तरयोगे तु नगरं निर्विशेषं, तन्मात्राण्यविशेषाणीतिवत्तात्पर्यवशेन सङ्कुचितवृत्तिः स्यात्। भ्रान्तोक्तश्चेन्न प्रमितिहेतुत्वम्।

**शब्दस्यातोऽनुमानत्वमप्रमाणत्वमेव वा। वदद्भिरपि दुर्वारं विशिष्टार्थावबोधनम्॥ ३७१॥**
**अविनाभावतोऽन्येन संबन्धेन विशिष्टधीः। शब्दात्स्यान्नानुमानत्वं ततोऽस्येत्यपि सुग्रहम्॥ ३७२॥**
**प्रत्यक्षवद्विशिष्टार्थे बुद्धेर्बाधाद्यभावतः। मानत्वादिह चार्वाकजल्पश्च विततोद्यमः॥ ३७३॥**
**मनोजन्यतयाऽत्रापि प्रत्यक्षत्वे विवक्षिते। न नः काचित्क्षतिः तत्तु न प्रत्यक्षस्य लक्षणम्॥ ३७४॥**

एतत्सर्वं मत्वोक्तम्— **न निर्विशेषवस्तुनि शब्दः प्रमाण**मिति।

**प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः।**

सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् ; निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसन्धानहेतुत्वात्। निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम् ; न सर्वविशेषरहितस्य। तथाभूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च। केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते, त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्।

**अथ प्रत्यक्षमन्यद्वा स्वेष्टमानं विवक्षितम्। भङ्ग्याध्यक्षमखिलं विशिष्टार्थं समर्थ्यते ॥ ३७५ ॥**

**प्रत्यक्षस्येति**— अपरोक्षबुद्धेरित्यर्थः। ग्रहणं ह्यनन्तरमुदाह्रियते। अविशिष्टप्रत्यक्षसद्भावकल्पनयाऽन्यतरप्रामाण्योक्तिरयुक्तेत्यभिप्रायेण **निर्विकल्पकसविकल्पकभेदभिन्नस्येत्युक्तम्**। एवं ह्याहुश्चार्वाकाः— * अज्ञातार्थपरिच्छित्तिः प्रमाणम्। तच्च प्रत्यक्षमेव। तत्रापि निर्विकल्पकमप्रमाणमनवधारणत्वादिति। अत्रानवधारणशब्देन संशयरूपत्वम् अविशिष्टविषयत्वं वा विवक्षितं चेदसिद्धिः। कतिपयविशेषग्रहात् संशयोत्थापकत्वं चेत्सविकल्पकेऽप्यस्ति, क्वचिदपि केनापि सर्वविशेषवैशिष्ट्यस्य अयोगिना दुर्ग्रहत्वात्। बौद्धास्तु * अविसंवादि विज्ञानं प्रमाणम्। तत्र—

* कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः ॥ इत्याहुः।

* तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः। व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः ॥ इति च।

तदप्यसत्, निर्दोषविकल्पानामपि संवादात्; तद्विषयस्य तद्वदेवैतैः संबन्धानुपपत्त्यादिकुतर्कैर्बाधे तुल्यन्यायतया योगाचारमतेन बाह्यार्थलोपप्रसङ्गात्। विगीता धीः भ्रान्तिः विकल्पत्वादिति त्वयोक्ते धीत्वादिति सामान्यतो ब्रूयात्। तथा चानुभाष्यते— * स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः। प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥ इति।

वैषम्यं चात्र त्वया दुर्वचम्। किञ्च— अस्तु तत्प्रयोगस्थहेत्वादिविकल्पानां पक्षीकारे बहुविधासिद्धिबाधयोः प्रसङ्गः। अन्यथा तु हेतोर्विपक्षवृत्तित्वादिप्रसङ्गात्। शब्दाध्यासात्सविकल्पकं भ्रान्तिरिति चेन्न; तदसिद्धेः। यथाऽऽहुः—

* संज्ञा हि स्मर्यमाणाऽपि प्रत्यक्षत्वं न बाधते। संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ इति।

अतः प्रामाणिकं प्रत्यक्षं द्विविधमपि प्रमाणम्, न तु निर्विशेषे। तत्र दृष्टान्तार्थं वक्ष्यमाणविशिष्टप्रतिसन्धानव्यक्त्यर्थं च दुरपह्नवांशं तावदाह— **सविकल्पकमिति**। **आदिशब्देन** गुणादिग्रहः— * यथा मनुष्यः शुक्लो वा दण्डी गच्छति निर्भयः इति। **शब्दविकल्पस्तु**—

* न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन [भासते] गृह्यते ॥ इति।

व्यापितया शाब्दैरुक्तोऽप्यव्युत्पन्नानां विकल्पेषु तदयोगात्संकोच्यः। **विशिष्टविषयत्वात्सविशेषविषयमित्यत्र** सामान्योक्तस्य जात्याद्युदाहरणैर्व्यञ्जनान्न साध्याविशेषः।

* अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

इति परैरन्यथोक्तं प्रथमज्ञानमपि विशिष्टविषयं प्रतिजानीते— **निर्विकल्पकमिति** । **अपिः** समुच्चयार्थः, परेष्टविरोधद्योतको वा । **अवधारणमु**पलम्भदार्ढ्यपरम् । धीत्वात् विशिष्टविषयमित्यनुमानं चात्र सूच्यम् । अविशिष्टविषयत्वस्य क्वचिदप्यभावेऽपि विशिष्टविषयत्वाभावस्य घटादौ दृष्टत्वात् व्यतिरेकसिद्धिः । विपक्षे बाधस्तु विशिष्टविषयत्वाभावे सविषयत्वादिकमपि न स्यादिति अविशेषात् । निर्विषया धीर्न दृष्टेति चेत्, सममेतत् । उपयोगात्कल्प्यत इति चेन्न; हेत्वसिद्धेः । अनुपयुक्तस्य च कल्पने किं नाम न कल्प्यम्? प्रतिज्ञाते हेतुमाह— **सविकल्पक** इति । स्वगोचरजात्यादिविशिष्टप्रतिसन्धानरूपविकल्पहेतुत्वादित्यर्थः । संप्रतिपन्नप्रत्यभिज्ञाहेतुभूताभिज्ञावदित्युदाहर्तव्यम् ।

ननु प्रथमं जात्यादिग्रहणाभावादसिद्धो हेतुः—

* ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया । बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन संमता ॥ इति ।

अन्यथा निर्विकल्पकसमाख्याविरोधश्च स्यात् । तत्राह— **निर्विकल्पकं नामेति** । अयं भावः—

**अस्ति हीति प्रतिज्ञाने नास्ति हीत्युत्तरं क्षमम् । प्रवृत्तिभिर्विशिष्टार्था बालमूकादिधीरपि ॥ ३७६ ॥**
**शब्दोपस्कारमात्रं तु नात्र व्युत्पत्त्यभावतः । व्युत्पत्तिश्च विशिष्टार्थबोधाभावे कथं भवेत् ॥ ३७७ ॥**
**न चावयवशक्त्यैव नामधेयव्यवस्थितिः । अतिप्रसङ्गाद्बाधाच्च महावृक्षादिनीतितः ॥ ३७८ ॥**
**अतो निरीहादिपदन्यायाद्दृष्टानुवर्तिनः । निर्विकल्पे निषेधस्य सङ्कोचोऽत्र भवेदिति ॥ ३७९ ॥**

तदिहाद्वैतिकल्पितस्य सर्वविशेषशून्यस्य द्वैताद्वैतिकथितस्य विद्यमानसर्वविशेषरहितस्य च ग्रहणं निषेधति— **न सर्वेति** । तादृशग्रहणं दृष्टं कल्पितं वेति विकल्पं मत्वा पूर्वं दूषयति— **तथेति** । प्रथममपि तथाभूतग्रहणं योग्यानुपलम्भनिरस्तमित्यर्थः । अपरं निषेधति—**अनुपपत्तेश्चेति** । उपपत्त्यभावादित्यर्थः । तत्कल्पकस्य अन्यथोपपत्तेरिति भावः । धीत्वप्रयुक्तव्याप्तिविरोधेनोपपत्तिविरुद्धत्वं चात्र बोध्यम् । अदर्शनं विवृण्वन् स्वमते दर्शनं च प्रमाणयति— **केनचिदिति** । पृथक्सिद्धेनापृथक्सिद्धेन वेत्यर्थः । गोत्वद्रव्यत्ववहिष्ठत्वादिना गगनादेर्ग्रहीतुश्च व्यावृत्ता हि सर्वत्र सर्वाऽपि धीरिति भावः । उपपत्तिविरोधमुखेन उपपत्त्यभावमपि व्यनक्ति— **त्रिकोणेति** । **अयोग** इह विशिष्टोल्लेखित्वाभावेऽधीत्वादिप्रसङ्गात्सिद्धः । **संस्थानशब्दो**ऽत्र तत्तदसाधारणाकारपरः । **कस्यचिदपीति**; निरवयवस्यापीत्यर्थः ।

**सजातीयविजातीयव्यावृत्तस्वस्वभावतः । इत्थमित्येव गृह्यन्ते शब्दगन्धादयोऽपि हि ॥ ३८० ॥**

एवं सविकल्पकनिर्विकल्पकयोर्विशिष्टबाह्यार्थविषयत्वोक्त्या प्रत्यक्षस्य ज्ञानग्राहिताम् तदाकारवैचित्र्यकारणतया बाह्यार्थस्यानुमेयत्वं च वदन्सौत्रान्तिकोऽपि प्रत्युक्तः ।

अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते । द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणावसेयमिति द्वितीयादि[पिण्ड]ग्रहणस्य सवि-

**कल्पकत्वम् । सास्नादिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्, न पुनः संस्थानरूपजात्यादेरग्रहणात्; संस्थानरूपजात्यादेरप्यैन्द्रियिकत्वाविशेषात्, संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च, प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते । अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत्संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव । अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ।**

द्वयोरपि विशिष्टविषयत्वे तद्विवेको दुश्शक इत्यत्र लक्षणतो विवेक्तुमुदाहरणं तावदाह— **अत** इति । विशिष्टगोचरत्वतदभावाभ्यां विभागोक्तेर्निरस्तत्वादित्यर्थः । किमियं प्रथमत्वादिना परिभाषा ? तथा सति विपरिवर्तोऽपि स्यादित्यत्र व्यवहारव्यवस्थापकं विषयभेदमाह— **तत्रे**ति । उक्तवैषम्याच्छब्दव्यवस्थां वाक्यद्वयेनाह— **प्रथमे**ति । विकल्पोऽत्र प्रतिसन्धानगोचरस्य केनचिदधिकेन विशेषणेन वैशिष्ट्यम् । तद्योगायोगाभ्यामेव व्यवस्थाऽत्र विपश्चित्संमता । जातेः सविकल्पकाभावरूपत्वापोहत्वादिमतव्युदासाय संस्थानत्वं, तद्व्यक्त्यै सास्नादिरूपत्वं चालोक्तम् । परेष्टस्य निर्विकल्पकशब्दनिमित्ततां निरस्यति— **न पुनरि**ति । अथ स्यात्, अनुवृत्तिरूपजातिस्तदग्रहे कथं गृह्येत ? गृह्यतां वा; तथाऽपि तद्विशिष्टतया प्रथमधीर्न युक्ता; विगीता धीर्विशेषणविशेष्यधीपूर्विका विशिष्टधीत्वात्सम्प्रतिपन्नवदित्यनुमानात् । अतो विशेषणविशेष्याणां मिथः संबन्धबोधेऽक्लृप्तव्याप्तिविशिष्टधीः सिद्धेति; तत्राह— **संस्थाने**ति । जातिशब्दस्यानुवृत्तिविशिष्टे व्युत्पन्नतया जातित्वेन बुद्धिरेवानुवृत्त्युल्लेखिनी । तत्स्वरूपं तु योग्यतया धर्मिवत्तत्संबन्धितयैव गृह्यते; तदर्थमिह **संस्थानरूप**त्वोक्तिः । अनुवृत्तिप्रकारस्तु वक्ष्यते । **ऐन्द्रियकत्वाविशेषात्**— आश्रयग्राहकेन्द्रियवेद्यत्वात्, दूरत्वाद्यभावाच्चेत्यर्थः । तेन गन्धादिव्युदासः । पिण्डग्रहणेऽपि गोत्वादेः ग्रहणदर्शनव्युदासश्च । **संस्थानेन विना**—अपृथक्सिद्धयत्किञ्चिद्धर्मेण विनेत्यर्थः । तेन दण्डादिव्यावृत्तिः; दूरादौ द्रव्यत्वादिमात्रेण सिद्धिश्च । विशिष्टधीत्वादिति हेतौ व्यवच्छेद्यस्याविशिष्टविषयज्ञानस्यासिद्धौ व्यर्थं विशेषणम् । अन्यतः सिद्धावनुमेयाभावः । अनेनैव तत्सिद्धावन्योन्याश्रयः; व्यवच्छेद्यसिद्धौ सविशेषणहेतूत्थानम्, तेनैव च तत्सिद्धिरिति । पृथग्धीपूर्वकत्वं तु विशिष्टबुद्धेर्भिन्नसामग्रीवेद्यविषयत्वोपाधिकम् । तच्च दण्डादीनामसन्निधानव्यवधानादेः । सामग्रीसद्भावे तु प्रथममेव तद्विशिष्टधीश्च स्यादेव । तेषां संस्थानत्वाभावात्पुरुषग्रहणाभावेऽपि तद्ग्रहणम् । दण्डादीनां तु पृथक्सिद्धत्वेऽपि दण्डादेः स्वाश्रयग्राहकेण घ्राणरसनश्रोत्राणां गुणमात्रग्राहित्वं तदाश्रयग्रहणानर्हत्वात् । सर्वमिदं यथादृष्टि व्यवतिष्ठते ।

**भिन्नाक्षग्राह्यगन्धादिविशिष्टप्रत्ययोदये । पृथग्गृहीतिनियमो यथादर्शनमिष्यते ॥ ३८१ ॥**

एवं संबन्धस्य सामग्र्यन्तरवेद्यत्वेऽपि । ननु संस्कारस्यानुद्बोधे द्वितीयादिपिण्डग्रहणेऽपि गोत्वादेरनुवृत्ति वैशिष्ट्यं दुर्ग्रहम्; कथं तत्र सविकल्पकत्वनियम इत्यत्र संभवद्विषयतया प्रतिवक्ति— **अत** इति । संस्थानविशिष्टविषयवासनाजनकप्रथमपिण्डग्रहणसामर्थ्यादित्यर्थः । **द्वितीयादिपिण्डग्रहणेषु**; द्वितीयत्वादिविशिष्टतया तत्तत्पिण्डग्रहणेष्विति यावत् । **सर्वदैवे**त्यनेन संस्कारपटिम्ना यत्किञ्चिद्धर्मानुवृत्तिग्रहणं नियतमित्युच्यते । यदा तज्जातीयग्रहणं स्यात्, तदा-

सविकल्पकत्वमेवेत्युक्तम्; तदाऽसौ नियम इत्यभिप्रायः ।

**द्वितीयादिषु पिण्डेषु निर्विकल्पकसंभवात् । अवधारणमत्र स्यात्प्राचुर्यादिति केचन ॥ ३८२ ॥**

एतेन प्रत्यक्षज्ञानेषु संस्कारसहकृतेन्द्रियजन्यत्वतद्विरहाभ्यां सविकल्पकनिर्विकल्पकयोः भेदो लक्षणतः स्थापितो भवति । तेनैव प्रथमपिण्डेऽपि प्रवुद्धसंस्काराणां, द्वितीयादिग्रहणेषु सविकल्पकत्वं च स्यादेव ।

**प्रत्यक्षं त्वीश्वरादीनां विशि[ष्टाशेष]ष्टोद्देशगोचरम् । अवसानोद्भवत्वेन निर्विकल्पकमस्तु नः ॥ ३८३ ॥**

**अनुवृत्तिग्रहात्तत्र सविकल्पकताऽस्तु वा । न भज्येत विशिष्टार्थविषयत्वं द्विधाऽपि नः ॥ ३८४ ॥**

**अनादाविह संसारे तस्मिन्नपि च जन्मनि । भाष्योक्तं प्रथमत्वादि त्वपूर्वत्वादिबुद्धितः ॥ ३८५ ॥**

एवं द्विविधस्यापि प्रत्यक्षस्य निर्विशेषविषयत्वाभावं निगमयति— अत इति । **कदाचिदपि** ; प्रथमाक्षसन्निपातेऽपीति यावत् ।

अत एव सर्वत्र भिन्नाभिन्नत्वममपि निरस्तम् । इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थंभावः सास्नादिसंस्थानविशेषः ; तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव । तथा हि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतयेत्थमिति प्रतीतेः । सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः । तत्र दण्डकुण्डलादयः पृथक्संस्थानसंस्थिताः स्वनिष्ठाश्च कदाचित्क्वचित् द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूताः सन्तो द्रव्यविशेषणतयाऽवस्थिताः । उभयत्र विशेषणविशेष्यभावः समानः । तत एव तयोर्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः—पृथक्स्थितिप्रतिपत्तियोग्या दण्डादयः; गोत्वादयस्तु नियमेन तदनर्हा इति । अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते । प्रतीतिप्रकारो हि इदमित्थमित्येव सर्वसंमतः । तदेतत्सूत्रकारेण ® नैकस्मिन्नसंभवादिति सुव्यक्तमुपपादितम् ।

**अथोक्तार्थबलादेव वक्ति भङ्गं प्रसङ्गतः । भेदाभेदमतस्यापि शास्त्रारम्भादिबाधिनः ॥ ३८६ ॥**

**अत एवेति** । निर्विकल्पकस्यापि विशिष्टार्थग्राहित्वादेवेत्यर्थः । एवकारः प्रच्छन्नजैनदूषणस्य प्रसक्तानुप्रसक्तिहेतोरन्यनैरपेक्ष्यं वा व्यनक्ति । सर्वत्र; अयुतसिद्धयोः , तत एव परोक्तप्रक्रियया सजातीयेष्वपीति यावत् ।

**दृष्टत्वादुपपत्तेर्वा भेदाभेदसमुच्चयः । इत्येतदिदमित्यादिग्रन्थाभ्यामथ दृष्यते ॥ ३८७ ॥**

प्रथमपिण्डग्रहे परोक्ता जातिव्यक्त्योरभेदेन गृहीतिरसिद्धा। युक्त्या तत्क्लृप्तिस्तु भेदग्रहेण बाधितेति भावः। द्वयमपि क्रमाद्विवृणोति—**तथा हीति**। **सकलेतरव्यावृत्तम्**। गृह्यमाणाकारानधिकरणात्सर्वस्माद्भिन्नतयेत्यर्थः। **सकल**-शब्देन गृह्यमाणोऽप्याकारः संगृहीतः। तेन तदानीं तदनन्यत्वबुद्धिरप्यस्तीति शङ्कानिरासार्थ **एवकारः**। सौगतमतवत्स्वरूपत एव व्यावृत्तिधीः स्यादित्यत्राह— **व्यावृत्तिरिति**। चः शङ्कानिवृत्तिपरः। स्वत एव व्यावृत्तिबुद्धौ संशयाद्यभावप्रसङ्गः। गोत्वादेर्गोत्वादिविशिष्टत्वाभावात् धर्मधर्मिभेदश्चात्र सिद्धः। अस्तु भेदधीः, अभेदोऽपि युक्त्या तत्र सिध्येदित्यत्राह— **सर्वत्रेति**। पृथक्सिद्धेष्विवापृथक्सिद्धेष्वपीत्यर्थः। यदि जातिव्यक्तिष्वभेदः साध्यते, तर्हि दण्डदण्ड्यादिष्वपि साध्यः स्यादित्याशयः। **अत्यन्तभेदः**— ऐक्यप्रतिभटस्वभावः। **प्रतीत्यैव सुव्यक्तः**— प्रत्यक्षेणैव स्पष्टावगतः। अतो निर्बाधो दुरपह्नवश्चेति भावः। **तयोरत्यन्तभेदः** इत्यनेनैव एको गौरित्येकशब्दानुविद्धप्रत्ययोऽप्येको दण्डीतिवत् विशेष्यद्वित्वादिनिवृत्तिविषय इति सूच्यते। **अनयोरैक्यमि**त्यादौपूर्वोक्तेऽप्येवमेव तात्पर्यम्। नन्वत्यन्तभिन्नेषु दण्डादिषु सामानाधिकरण्यं मत्वर्थीयसापेक्षं दृष्टम्; गोत्वादिषु तदभावादभेदोऽपि स्यादित्यत्राह — **तत्रेति**। अयं भावः— पृथक्सिद्धत्वापृथक्सिद्धत्वाभ्यामेव लाघवान्मत्वर्थीयापेक्षातदभावौ स्याताम्; न तु अत्यन्तभिन्नत्वतदभावाभ्याम्, अपृथक्सिद्धत्वेऽपि क्वचिन्मत्वर्थीयस्तु निष्कर्षकशब्दत्वादिति। विशेषणत्वमन्तरेणाप्युपलब्धिसिद्ध्यै **पृथक्संस्थानसंस्थित**त्वोक्तिः। **स्वनिष्ठाः**— देवदत्तादीन्प्रत्यपृथक्सिद्धिरहिता इत्यर्थः। **कदाचित्** आगन्तुकसंबन्धकाले। तावताऽलम्, तथाऽपि **क्वचिच्छब्दो** देशभेदमुखेनाऽपि पृथक्सिद्धिर्दर्शयितुं शक्येति ज्ञापनार्थः। व्यावृत्तिव्यक्त्यै **गोत्वादय** इत्याद्युक्तम्। अतन्निष्ठतया तत्सत्त्वैव नास्तीत्यवधारणाभिप्रायः। **अवस्थिताः**— यावत्सत्तमिति शेषः। ननु विशेषणत्वे समानेऽपि यदि अपृथक्सिद्ध्यादिवैषम्यम्; तर्हि तत एव तादात्म्यतदभावलक्षणमपि तत्स्यादित्यत्राह— **उभयत्रेति**। अभेदप्रतिकूलाकारः सः। ऐक्याभावव्याप्यो हि विशेषणविशेष्यभावः। तस्मादैक्यक्लृप्तिर्न शक्या। न हि अवान्तरविशेषेण क्वचिदपि सामान्यव्यापकविरुद्धं सिध्येदिति भावः। एवमप्यभेदक्लृप्तौ संप्रतिपन्नैक्यवस्तुनीव भेदधीस्तत्र न स्यादेवेत्यभिप्रायेणाह— **तत एवेति**। **तयोः**— पृथक्सिद्धापृथक्सिद्धयोरित्यर्थः; विशेषणविशेष्ययोरिति वा। **भेदप्रतिपत्तिश्चे**त्यत्र समानेति विपरिणतानुषङ्गः। ननु दण्डादिष्वदृष्टः सहधीनियमो गोत्वादिषु दृश्यते, तेनाभेदोऽस्तु; न चेदुभयत्र धीसाहित्यनियतिस्तदभावो वा स्यादित्यत्राह—**इयानिति**। अयं भावः—यथा भिन्नत्वाविशेषेऽपि क्वचिदेव तादात्म्यमिति ते स्वभावनियमः तथा तादृशेष्वपि केषुचिदेवापृथक्सिद्धिः। तेष्वपि न गुरुत्वगन्धादीनां धीसाहित्यनियमः; स तु गोत्वादीनाम्; दुस्त्यजस्वभावनिर्धूतादिप्रसक्तिर्नोभयसंमतभेदविरुद्धं साधयितुं शक्नोति। न च अपृथक्सिद्धत्वमेव ऐक्यम्, अविवादात्। तदा हि भेद एवाभेद इत्यपि संकेत्येत।

**तस्माद्भेदैकनियतः सहधीनियमस्त्वयम्। ऐक्यसिद्धिविरोध्येव भवेच्चातिप्रसङ्गकृत्॥ ३८८॥**

**इष्टः सिद्ध्यन्नभावादिः प्रतियोग्यादिभिस्सह। न चैक्यं युज्यते तत्र विशेषश्चात्र दुर्वचः॥ ३८९॥**

**किं च संप्रतिपन्नैक्ये पृथक्सिद्धेऽप्यसन्नसौ। स्यादसाधारणाभासो हेतुः पूर्वश्च तादृशः॥ ३९०॥**

**व्यक्तव्याहतिदुःस्थत्वाद्भिन्नाभिन्नत्वमप्यतः। दुःसाधमभ्युपेतेऽपि केवलव्यतिरेकिणि॥ ३९१॥**

**गर्दभागर्दभाभ्यां च गजत्वं विनिवृत्तिमत्। गर्दभागर्दभात्मत्वं गजस्य तव साधये॥ ३९२॥**

**धर्मधर्मिस्वरूपैक्ये स्यान्नान्यतरधीः क्वचित् । सहधीश्च क्वचिन्न स्यात्संमतैक्ये यथा घटे ॥ ३९३ ॥**
**अतः क्वापि द्वयोरैक्यं सहैवावगतौ न वा । दुःसाधमथवा भाक्तं रामसुग्रीवयोरिव ॥ ३९४ ॥**
**तदिहाभिन्नधीर्भिन्ने भ्रान्तिर्ज्वालैक्यबुद्धिवत् । अभिन्ने भेदधीश्चैव स्याच्चन्द्रद्वित्वबुद्धिवत् ॥ ३९५ ॥**
**प्रातिस्विकमनेकेषु यदैक्यं सर्वसंमतम् । न ततः प्रस्तुतं सिध्येत्तदुक्तेः सिद्धसाध्यता ॥ ३९६ ॥**
**सामानाधिकरण्येऽपि यथार्हं प्रतिपाद्यते । अनेकान्वित एकोऽर्थो नानेकैरेकतां गतः ॥ ३९७ ॥**
**यच्च व्यष्टिसमष्ट्यादौ नानात्वैकत्वदर्शनम् । न विरुद्धान्वयस्तत्र परिषत्पुरुषादिवत् ॥ ३९८ ॥**
**भेदाग्रहाद्विकारित्वाद्धर्मत्वादेशसाम्यतः । परिमाणैक्यतश्चेत्याद्यसारं जैनकल्पितम् ॥ ३९९ ॥**
**बाधासिद्ध्यन्यथासिद्धिव्यभिचारादिविप्लुताः । हेतवस्तद्विदामेते जुगुप्सामात्रहेतवः ॥ ४०० ॥**
**यच्चान्यदपि मुह्यद्भिर्भाषितं भास्करादिभिः । तत्तदर्थप्रसङ्गेषु तद्भङ्गश्च भवेदिति ॥ ४०१ ॥**

एवं धर्मधर्मितादात्म्यस्य दृष्टत्वे कल्प्यत्वे च निरस्ते, भेदाभेदवस्तुनोः विरोधः क्वचिदुपलम्भनिरस्त इति परोक्तं प्रतारणमात्रमित्युपालभते— **अत** इति । अत्र प्रतीतिपराहतिं वदत एव सा स्यादिति भावः । निह्नोतव्यानुक्त्या निह्नवप्रकारं विवृणोति—**प्रतीतिप्रकार** इति । ननु प्रथमाक्षसंनिपातनिर्विकल्पकदशायामिदमित्थमिति प्रतीतिं परे नेच्छन्ति; तत्कथमिह सर्वसंमतत्वोक्तिः ? इत्थम्—न ह्यत्र निष्कृष्टान्यतरधीसिद्धं प्रातिस्विकमैक्यं भातीति परैः साध्यते । किं तु धर्मधर्मिणोः । तथा सति इदमित्थंभावधीस्तत्र परैरपि संमन्तव्या । यद्वा सविकल्पकधीप्रकारस्य सर्वसंमतत्वोक्त्या तद्बलेन प्रथममपि तद्वदेव विरुद्धानुल्लेखः स्थाप्यते । ननु—* तदनन्यत्वमारम्भणशब्दादिभ्यः,* अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके, * आत्मेति तूपगच्छन्ति ग्राहयन्ति च, * अविभागेन दृष्टत्वादित्यादिवादिनः सूत्रकृतोऽत्यन्तभेदोऽनिष्ट इत्यत्र तदभिप्रायव्यक्त्यै स्पष्टार्थमनेकान्तवादाक्षेपसूत्रं दर्शयति— **तदेतदि**ति । प्रमाणादिसिद्धविरुद्धसंभेददूषणमित्यर्थः ।

**सुव्यक्तार्थेन सूत्रेण निश्चिते सूत्रकृन्मते । अव्यक्तार्थैस्तदुन्नेतुरपसिद्धान्तमाह च ॥ ४०२ ॥**

**अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसंबन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव । प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः । वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥**

अथ साक्षात्प्रक्रान्तस्य शेषं सिद्धेन साधयति— **अत** इति । सर्वविशेषरहितग्रहणासिद्धेरित्यर्थः । आदिशब्देन लौकिकवैदिकागमग्रहः । संभवति हि ततोऽपि व्याप्तिसिद्धा क्वचिदनुमा; यथा—स्वर्गमसौ यास्यति तत्कामनया सम्यगनुष्ठितज्योतिष्टोमत्वादिति । प्रत्यक्षादिना दृष्टलिङ्गसंबन्धं साध्यं तद्विशिष्टो धर्मिवदुक्तः । अतो न साध्याविशिष्टसविशेषविषयत्वमिह हेतुः ; दुरपह्नवधर्मिसाध्यादिविशेषभूयस्त्वप्रदर्शने तात्पर्यात् ।

* विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् । तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥

इत्यादि वदन् चार्वाकस्तु स्ववचनप्रवृत्त्यादिभिर्भग्नः । देशान्तरादौ व्यभिचारसंभवेन भ्रान्त्या वाऽनुमानिकी प्रवृत्तिः । यदृच्छया तु संवाद इत्यूहस्तु प्रत्यक्षेऽपि स्यात् । यच्चानुमानस्य प्रामाण्ये सति कथंचित्प्रत्यक्षान्तर्भाव इति; तत्तथा अन्यथा[वा;] च विशिष्टविषयत्वं तावद्दुरपह्नवम् । व्याप्तिग्राहकप्रमाणानधिकविषयमनुमानमिति वदतामपि विशिष्टविषयतायामविवाद इत्यवधारणाभिप्रायः । यद्वा, प्रागनूदितनिर्विशेषत्वानुमानानामुत्थानशङ्काऽपि नास्तीति द्योत्यते । ननु अर्थापत्त्यादि मानान्तरमस्ति, ततोऽस्मदिष्टं स्यादित्यत्राह— **प्रमाणे**ति । **अयमेव**—सविशेष एवेत्यर्थः । प्रत्यक्षादित्रिकं प्रदर्श्य **प्रमाणसङ्ख्याविवादे**ऽपीत्युक्त्या अन्वारुह्यवादोऽयमिति व्यक्तम् । तच्चदुक्तं तूपमानमागमादावन्तर्भवति; अर्थापत्तिसंशयावनुमाने; अनुपलब्धिश्च प्रत्यक्षादौ; ऐतिह्यं तु प्रायिकप्रामाण्यम् । * स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् इति श्रुतौ तु स्मृत्युपादानं प्रत्यक्षाद्यनुविधायितया तदभिन्नार्थत्वपरम् । ऐतिह्यमिहागमः । उपबृंहितं च मनुना— * प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यम्—इति । भारते त्वधिकोक्तिर्गोबलीवर्दनयादुदाहरणभेदव्यक्त्यर्था । न्यायसूत्रे तु उपमानवहिर्भावोक्तिरन्यपरतया भूषणेन निरूढा । एवं **सविशेषवस्तुविषयत्वादि**ति प्रागुक्तं हेतुसामर्थ्यम्, निर्विशेषप्रमाणस्य दुर्वचत्वं च निगमयति— **न केनापी**ति । संग्रहोक्ताविवास्मिन् विस्तरेऽपि अगत्या परः स्वानुभवमेव पुनः शरणयेत् । तस्य विशिष्टविषयत्वे स्थापिते तत्प्रयुक्तैरेव निष्कर्षहेतुभिः सविशेषत्वं प्रागुक्तमिति कृत्वा अनुक्तस्ववाग्विरोधं सिंहावलोकितकेनाह— **वस्त्वि**ति । सन्तु सविशेषविषयाण्येव प्रमाणानि, तानि निर्विशेषत्वयुक्त्या बाध्येरन्नित्यत्र दत्तोत्तरत्वमजानतो जडीकारोऽयम् । **तदेव**—स्वेष्टहेत्वादिरूपानेकविशेषास्पदमेवेत्यर्थः

यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद्दुर्निरूप इत्युक्तम्, तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव । अत एव च नानवस्था अन्योन्याश्रयणं च । एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात्क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति ॥

अथानूदितमादौ यत्तद्दूषयितुमुद्यतः । आरोहादवरोहाद्वा किं न हन्ति तदुच्यते ॥ ४०३ ॥
निर्विशेषपरं शास्त्रं प्रत्यक्षं तेन बाध्यते । न वा बाध्यं तदैकार्थ्यादित्यनूक्ते परोदिते ॥ ४०४ ॥
प्रत्यक्षोदन्तमुद्धाट्य ग्राध्यं प्रतिविवक्षता । क्षेपः स्कन्धत्रयस्यास्य क्रियते प्रातिलोम्यतः ॥ ४०५ ॥
अतः प्रथममक्षोत्थे भेदे कुमतिकल्पिताम् । मानमेयप्रतिक्षिप्तिमनुवक्त्यत्र यत्त्विति ॥ ४०६ ॥
अनूक्तं द्वितयं चात्र तदपीत्यादिनास्यति । उक्तवक्तव्यनिर्धार्यहेतुद्वितयशक्तितः ॥ ४०७ ॥

**जात्यादिविशिष्टस्यैव**—न तु जात्यादिभिरभिन्नस्यानवगतसंबन्धस्य तच्छून्यस्य चेति यावत् । **जात्यादेरेव**—प्रतियोग्यप्रतीतावपि स्वरूपतः प्रत्येतुं शक्यस्यैवेत्यर्थः । **वस्तुनः**— जात्याद्यधिकरणस्य । अत्राश्रयधर्म्यन्तरतद्धर्माः

स्वधर्माश्च प्रतियोगिनः; स्वस्य तु स्वाश्रयधर्मान्तरादीति विभागस्त्विह **प्रतियोग्यपेक्षया** इति संक्षिप्तः। **दूरोत्सारितम्**— धर्मिग्रहण एव भेदरूपस्य यत्किञ्चिद्धर्मस्य गृहीततया मानमेयानुपपत्तिशङ्काऽपि न स्यादिति भावः। **वस्तुनः स्वस्य चे**-त्युक्तं स्वपरनिर्वाहकत्वं परोक्तपक्षदृष्टान्तन्यायादङ्गीकारयति— **संवेदनवदि**ति। उक्तेनैव परोक्तदूषणनिरासश्च फलित इत्याह— **अत एवे**ति। तत्र जात्यादिधर्मस्यैव भेदतया धर्मिस्वरूपस्यास्माभिर्भेदत्वानभ्युपगमात् संशयाद्यनुपपत्ति-चोद्यमपास्तम्। स्वपरनिर्वाहकत्वेनानवस्था निरस्ता। विशिष्टग्रहणस्यैव भेदग्रहणत्वादन्योन्याश्रयप्रसङ्ग एव नास्ति। एवमाश्रयप्रतियोगित्वादिग्रहेऽपि। अत्र ग्राहकानुपपत्तौ परिहर्तव्यायां धर्मरूपस्य भेदस्य तद्विशिष्टस्य च विधौ व्यवच्छेद-विधानयोरैक्यं दर्शितम्। धर्म्यपेक्षया तु तयोर्भेदः स्थापितः। प्रत्यक्षस्य स्वरूपभेदयोरन्यतरग्राहित्वं क्रमेणोभयग्राहित्वं च त्यक्तम्। युगपद्ग्रहणमेव तु प्रतिष्ठितमित्याह— **एकक्षणे**ति। ननु यद्यपि धर्मिस्वरूपस्य भेदत्वं नास्ति, तथाऽपि धर्मस्वरूपस्य भेदत्वे तत्र गोत्वादिशब्दानां भेदशब्दस्य च पर्यायत्वं स्यात्। प्रतियोग्यनपेक्षत्वसापेक्षत्वादिविरोधोऽपि न परिहृतः। मैवम्—

**व्यावृत्तेषु स्वरूपेषु खण्डगोशब्दनीतितः। स्वरूपशब्दानुगतिर्निमित्तान्तरतो यथा ॥ ४०८ ॥**
**न व्यावृत्त्यनुवृत्त्यादिविकल्पश्चात्र बाधकः। व्यावृत्तेषु स्वरूपेषु स्वरूपत्वानुवृत्तितः ॥ ४०९ ॥**
**[ अस्वरूपत्वमन्येषामपि न स्यादगोत्ववत्। ]**
**निर्दिष्टे हि विशिष्टेऽर्थे निष्कृष्टाङ्गविशेष्यता। स्वरूपशब्दवृत्तेः स्यान्निमित्तं सर्ववस्तुषु ॥ ४१० ॥**
**विभक्तिभेदश्चैवं स्यात्समुदायांशभावतः। शिलापुत्रवपुर्न्यायो न चास्मिन्मुख्यसंभवे ॥ ४११ ॥**
**एवं गोत्वादिधर्मेषु भेदत्वाख्यनिमित्ततः। प्रवृत्तो भेदशब्दः स्यात् अपर्यायस्सहोक्तिमान् ॥ ४१२**
**प्रतियोग्यनपेक्षत्वप्रसङ्गोऽप्यत एव न। भाषिष्यते हि भेदस्य लक्षणं तदपेक्षया ॥ ४१३ ॥**
**यद्बुद्धौ यत्र यद्भ्रान्तिर्न स्यात्सा तस्य तद्भिदा। अतः सप्रतियोगित्वं भेदोक्तेरपि सेत्स्यति ॥४१४॥**
**भिन्नशब्दः क्वचिद्भेदेष्वाश्रयादिविशेषतः। स्वतश्च धर्मभेदश्च फलाप्तेरौपचारिकः ॥ ४१५ ॥**
**अभेदेऽपि स्वरूपादिविकल्पानुपपत्तयः। भेदे यथा तथैव स्युः समाधिश्च समोऽत्र नः ॥ ४१६ ॥**

अपि च, सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतीतिर्विरुध्यते; यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः; किमित्यश्वार्थी महिषदर्शनेन निवर्तते? सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्, तत्तत्प्रतिपत्तिविषयसहचारिणः सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते? किं च, अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्विशेषा-भावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थ-विषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायाम् एकेनैव संवेद-नेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत ॥

तदिह न तावद्भेदधीर्नास्तीति साधयितुं शक्यम्, सर्वलोकप्रसिद्ध्या स्ववागादिभिश्च व्याघातात्। तथा च का कथा शास्त्रारम्भादौ। न च तस्या निर्मूलत्वम्, अतत्त्याभावतस्तदयोगात्। सिद्धस्य च मूलाभावे स्वरूपानादित्व-प्रसक्तौ स्वेष्टभङ्गात्। न च तन्मूलस्य दुर्निरूपत्वम्, विशेषतो निरूपणाशक्यत्वेऽपि परिवेषादेरिव तादृशकार्योत्पाद-नानुगुणस्वरूपतया सामान्येन तन्निरूपणात्, विशेषतश्चान्वयव्यतिरेकनियतस्येन्द्रियादेरुक्तत्वात्, **न च चक्षुषे**त्यादिना स्थापयिष्यमाणत्वाच्च। न च निरूपितकारणाऽपि सा निर्विषया, स्वोक्त्यादिविरोधादेव; निर्विषयत्वसाधकधियोऽपि निर्विषयत्वे स्वेष्टासिद्धेः; सविषयत्वे स्वेष्टविरोधात्। निर्विषयख्यातिवादस्तु प्रतिक्षेप्स्यते। नापि द्विचन्द्रभेदधीवद्बा-धितविषया; मानमेयानुपपत्तिपरिहारात्। अनुमानादिभिर्बाधस्त्वपाकरिष्यते। सत्सदित्यनुवृत्तेऽपि हि तद्व्यावृत्तिधीर्दु-स्त्यजा। तस्मात्किं मुधाऽत्र चोद्यते। एवं स्थितेऽपि धाष्टर्यान्मिथ्याक्रियापूर्ववादन्यायेन [आयत्त]अयत्नत्वाचादिमं भेद-बुद्ध्यपह्नवमेव परः शरणयेदिति कृत्वा तत्रापि दोषान्विवक्षुराह— **अपि चेति**। यद्वा प्रत्यक्षस्य भेदग्राहित्वाभावेऽपि भ्रान्त्या भेदव्यवहार इति यत्परेणोक्तं तत्र प्रत्यक्षवद्भ्रान्तावपि क्रमयौगपद्यादिविकल्पानुपपत्त्यवतारात्तन्निवर्तकस्य वैषम्यस्य दुर्वचत्वाच्च शास्त्रनिवर्त्यत्वाभिमतभेदधीरेव लुप्येतेति मत्वा तत्रानिष्टानि प्रस्तूयन्ते। त्रिभिरिह वाक्यैर्धीप्रवृत्तिव्यवहार-विशेषभङ्गः प्रदर्श्यते। **सन्मात्रग्राहित्वे**—भेदग्राहित्वाभावे सतीत्यर्थः। अयमेव प्रसङ्गकांशो दूष्यश्चेति व्यक्त्यै त्रिष्वपि तदनुवादावृत्तिः। **जात्यादिलक्षणः**—जातिगुणादिस्वरूप इत्यर्थः। **किमिति**। अश्वाद्भेदस्य महिषत्वस्य दर्शनादेव हि ततो निवृत्तिरिति भावः। निवृत्त्युक्तिः प्रवृत्तेरप्युपलक्षिका। **तत्तत्प्रतिपत्तिविषयसहचारिण** इति लोकसंमतानुवादः। वाच्यविशेषो हि दृष्टो वाचकविशेषं स्मारयति। तेन च गृहीतसंबन्धः स एव व्यवह्रियते, सेयं व्यवस्था न स्यादि-त्यभिप्रायेण **सर्वे शब्दा** इत्याद्युक्तिः। अथ पूर्वोक्तेभ्यो विलक्षणं प्रतीतिस्वरूपेऽनिष्टं प्रसज्यत इति सूचयन्नाह—**किं चेति**। **संवेदनयोरेकविषयत्वेन**— सन्मात्रविषयत्वेनेति भावः। गृहीतग्राहित्वं प्रत्यभिज्ञादावप्यस्तीति तद्व्यावृत्त्यर्थ-माह— **विशेषभावाच्चेति**। यद्यपि संस्कारजन्यत्वाभावेन स्मृतित्वं नास्ति; तथाऽपि पूर्वानतिरिक्तव्यवहारहेतुत्वेन स्मृतिवैलक्षण्यं न स्यादित्युक्तम्। दृष्टं व्यवहारवैचित्र्यं हेत्वन्तरस्याप्यसंभवेन लुप्येतेति भावः। अनधिगततया भूतार्थ-निश्चायकं प्रमाणमिति मतमनुसरन्तं प्रति च प्रामाण्यभङ्गसंरम्भोऽयम्। विषयतो विशेषाभावेऽपि स्वरूपभेदत इव कालभेदतो वा वैषम्यं स्यादित्यत्राह— **प्रतिसंवेदनमिति**। स्वरूपकालभेदयोर्हि सद्भावमात्रं स्मृताविवाकिञ्चित्करम्; विषयभूतसत्पदार्थोपरञ्जकत्वे तु स्वारसिकं हस्त्यश्वत्वादिवैशिष्ट्यं दुस्त्यजमित्याशयः। एवं प्रतिपत्तिषु स्मृतिवैषम्याभावः प्रसञ्जितः। अथ प्रतिपत्तृष्वन्धानन्धादिवैषम्यं न स्यादित्याह— **सर्वेषामिति**। **संवेदनानाम्**— प्रत्यक्षधियामि-त्यर्थः। इन्द्रियविशेषवैकल्यादेव ह्यन्धादित्वम्; इन्द्रियजातिभेदश्च विषयभेदादेव। अतस्तदभावे तत्तन्नियतेन्द्रियभेदा-सिद्धेरेकैकवैकल्येऽपि काणन्यायादन्धाद्यभावः स्यादित्याकूतम्। **अशेषग्रहणात्**— इन्द्रियान्तरग्राह्यानुपलम्भादित्यर्थः।

न च चक्षुषा सन्मात्रं गृह्यते, तस्य रूपिरूपैकार्थसमवेतपदार्थग्राहित्वात्। नापि त्वचा, स्पर्शवद्वस्तुविषयत्वात्। श्रोत्रादीन्यपि न सन्मात्रविषयाणि; किं तु शब्दरस-गन्धलक्षणविशेषविषयाण्येव। अतः सन्मात्रस्य ग्राहकं न किञ्चिदिह दृश्यते। निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव

स्यात्, सन्मात्रब्रह्मणः प्रमेयभावश्च। ततो जडत्वनाशित्वादयस्त्वयैवोक्ताः। अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम् ॥

उक्तसिद्ध्यर्थं विषयभेदेन इन्द्रियव्यवस्थां प्रागुक्तप्रतीतिविरोधं च व्यनक्ति— **न चे**ति। **रूपैकार्थसमवेताः** संयोगादयः। समवेतशब्द इह स्वतो विशेषणत्वपरः। रूपस्य पृथगनुक्तिस्तद्विशिष्टग्रहणोक्तेः। **स्पर्शवद्वस्तुविषयत्वात्** इत्यत्रापि स्पर्शादयो ग्राह्या इति, निराधारा रूपस्पर्शादय एव इन्द्रियग्राह्या इति वदन् वैभाषिकोऽप्यत्र प्रत्युक्तः। अद्रव्यग्राहिषु कथं विशिष्टविषयत्वमित्यत्र त्वदिष्टं तावन्नेत्याह— **श्रोत्रे**ति। **अपि**र्विरोधशङ्काद्योतकः, समुच्चयार्थो वा। ननु श्रोत्रादेः सद्विषयत्वाभावे शब्दादीनामसत्त्वप्रसङ्गः। तदतिरिक्तविषयत्वाभावनिषेधस्तु कथमित्यत्राह— **किं**त्विति। शब्दत्वरसत्वगन्धत्वादीनि मतभेदाज्जातिरूपाण्युपाधिरूपाणि वा सर्वैर्दुरपह्नवानि लक्षणानि येषां ते **शब्दरसगन्धलक्षणाः**; त एव विशेषा अनुवृत्तसच्छब्दनिमित्तातिरिक्ता इत्यर्थः। अन्यथा श्रोत्रादिभेदासिद्धिः पूर्वोक्तप्रतीत्यादिविरोधश्च दुर्वार इत्यवधारणाभिप्रायः। एवं सर्वेन्द्रियाणां ग्राह्यतया त्वदुक्ते सन्मात्र एव ग्राहकानुपपत्तिरापततीत्यभिप्रायेणाह— **अत** इति। **इह**—संप्रतिपन्नेषु ग्राहकेषु। अन्यत्तु निर्विशेषग्राहकं न कल्पयितुं शक्यमिति भावः। परकल्पितप्रत्यक्षवृत्तान्तेन तदभिमतब्रह्मविषयस्य शास्त्रस्यानुत्थानप्रसङ्गमाह— **निर्विशेषे**ति। पूर्व एवकारः शास्त्रनैरपेक्ष्यार्थः, उत्तरस्तु विधेयान्तरानभ्युपगमादनुवादनैरर्थक्यपरः; अप्राप्ते हि शास्त्रमर्थवत्। सिद्धान्तविरोधमाह— **सन्मात्रे**ति। न खल्विन्द्रियवेद्यसन्मात्रादन्यत्ते ब्रह्म। तस्यानन्याधीनसिद्धित्वेनाभ्युपगतस्य अवृत्तिरूपस्य अन्यधीगोचरत्वप्रसङ्ग इत्यर्थः। तावन्मात्राभ्युपगमे को दोष इत्यत्राह— **तत** इति। **आदि**शब्देन मिथ्यात्वादिसंग्रहः। **त्वयैवे**ति। अनेन स्वोक्तमपि न जानासीति विरोधः सूच्यते। प्रत्यक्षस्य भेदग्राहित्वं तदुपन्यस्ताभिः कुतर्ककुहनाभिर्दुरपह्नवमित्यभिप्रायेण सावधारणं निगमयति— **अत** इति।

संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः।

संस्थानस्य जातित्वं जात्यादेर्भेदत्वं च प्रसक्तम्। तत्राद्यं स्थापयति— **संस्थाने**ति। ननु इह किमर्थं संस्थानजातिसाधनम्? प्रामाणिकतया।

*न याति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥

इति। सौगतोक्तवृत्तिविकल्पाद्यनवतारेण कथञ्चिदुपकारार्थत्वे गुणादिकमपि चिन्त्येत। मैवम्; व्यावृत्तानामेव निमित्तानां कुतश्चित्स्वभावादेकरूपबुद्ध्यादिहेतुत्वे सिद्धे, अस्ति सदित्यनुवृत्तसद्बुद्ध्यादेरपि तथैव निरूढेः घटादिधर्मतया लोकसिद्धसत्तायास्सर्वाधारब्रह्मरूपत्वं हि दूरापास्तं स्यात्, सत्ताश्रयस्य घटादेः घटत्वादेरिव च। अन्ये चैवमुपालेभिरे—

*महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते इति। सत्ताश्रयस्य घटादेस्त्वनुगतत्वं परेणापि दुर्वचमित्यभिसन्धाय सोऽयमुद्यमः। तदिहातिरिक्तजातेर्दृष्टिः क्लृप्तिश्चादर्शनादन्यथैवोपपत्त्या च दूष्यते। अयं भावः—यथा जातिव्यक्तिमुण्डदण्डिमूर्तपाचकादिष्वनुवृत्तबुद्ध्यादेरुपाधिरास्थितः, तथेहापि स्यात्। उपाधिश्चात्र अतिरिक्तमवयविनं जातिं च वदद्भिरपि

गवाद्यसमवायिकारणत्वेन गोत्वादिव्यञ्जकतया स्वीकृतमवयवसंयोगविशेषात्मकं संस्थानम्। तस्यैव हि अन्त्यतन्तुसंयोगजन्यावयविनिष्पत्तेः प्रागपि विद्यमानतया तदाऽपि पटधीव्यवहारो दृश्यते। तत्र भ्रान्तिकल्पनैर्वरमुभयत्र संस्थानसारूप्येणैवोपलब्धेन निर्वाह इति । अत एव संस्थानसमाख्या जातिरेवोच्यत इति न भ्रमितव्यमित्यभिप्रायेण **तावतैवे**त्यवधारितम्। जात्याश्रयघटादिहेतुतया तस्य ततो भेदेन तत्सम्मतेः, तस्मादतिरिक्तकल्पनं गौरवं व्यनक्ति–– **अतिरेक** इति। तर्हि जातिशब्दो निर्विषयः स्यात्। जातिगुणक्रियायदृच्छाशब्दव्यवस्था च भज्येतेत्यत्रोक्तम्–– **संस्थानमेव जातिरि**ति। उभयाभ्युपेतमेव जातिशब्दवाच्यमित्यर्थः ॥

**अभाषत च संस्थानजातिपक्षं पतञ्जलिः। जातिनित्यत्वपक्षोक्तिरन्वारुह्येति नीयताम् ॥ ४१७ ॥**

ननु संस्थानमनुवृत्तम् व्यावृत्तं वा? नाद्यः–– नित्यत्वप्रसक्तावसाध्यत्वापातात्; तथा च आरम्भणनयविरोधः। न द्वितीयः–– अनुवृत्तबुद्धिनिर्वाहकत्वयोगात्, अन्यथाऽतिप्रसङ्गात्। न च सादृश्यं व्यवस्थापकम्, गोगवयादिषु तदसिद्धेः। सौसादृश्यं तु विरूपेषु खण्डमुण्डादिषु दुर्वचम्; मैवम्––सास्नादिसादृश्यविशेषस्य निमित्ततयाऽतिप्रसङ्गाप्रसङ्गयोरभावात्। ननु च सादृश्यविशेषेऽप्यनुवृत्तादिविकल्पस्तदवस्थः। सामान्यत्यागे च किं नाम सादृश्यम्, समानं सदृशमित्यादेः पर्यायत्वात्। आहुश्च––

* सामान्यान्येव भूयांसि गुणावयवकर्मणाम्। भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते ॥ इति

तदपि न; जात्याद्युपलक्षकसंस्थानेऽपि व्यावृत्त्यादिविकल्पोत्थानात्। अतो यादृशं संस्थानं व्यावृत्तमपि साजात्यव्यवस्थापकं मन्यसे तादृशमेव तत्। यथादृष्टि नियतप्रतियोगिकं मिथः सादृश्यम्। न तु परेष्टं सामान्यं पदार्थान्तरं वा। सास्नादिसंस्थानेऽपि सदृशव्यवहारस्तदवयवसंस्थानोपाधिकः। एवमनुपलब्धावयवद्रव्यपर्यन्तं गतौ परिमाणादिविशेषाद्व्यवस्था।

**संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तुसंस्थानमनुसन्धेयम्।**

ननु तथाऽपि संस्थानं न तावद् द्रव्यस्वरूपम्, प्रत्यक्षस्य विशिष्टविषयत्वभङ्गप्रसङ्गात् सत्कार्यनीत्या च नित्यत्वागन्तुकत्वविरोधात् द्रव्यात्मनश्च व्यावृत्त्यनुवृत्तिविकल्पदौस्स्थ्यात् गुणादावनुवृत्तिधीनिमित्तत्वायोगाच्च। अत एव नावयवसंनिवेशविशेषः; आत्मादिषु तदयोगाच्च, अतोऽतिरिक्तसिद्धिरित्यत्राह–– **संस्थानमि**ति। **स्व**शब्दोऽत्र गवादिशब्दवाच्यतया धीस्थतत्तद्वर्गपरः। तदन्तर्गतसर्वसाधारणत्वेऽपि तदन्यतो व्यावृत्ततया अत्र **स्वासाधारण**त्वोक्तिः। **रूपम्**–– निरूपकमित्यर्थः। तदिह सावयवेषु निरवयवेषु चानन्तेष्वित्थमिति प्रकारतया निर्देश्यं तदन्यनिष्ठाभावप्रतियोगि च किञ्चिद् दृष्टमिष्टं च तदिति[तदनति]क्रमेण विविच्य बोद्धव्यमित्याह––**इति यथे**ति। सावयवेषु हि गवादिषु संनिवेशविशेषा दृष्टा एव। निरवयवेष्वात्मादिषु चेतनत्वादिकमेव संस्थानमित्युच्यते। अद्रव्येष्वपि तत्तल्लक्षणमेव। तदपि तत्तज्जात्युपलक्षणतया परसंमतम्। यदि सावयवेषु सन्निवेशविशेषो जातिः, तर्हि ब्रह्मक्षत्रादिषु मनुष्यत्वातिरिक्तसंनिवेशविशेषादृष्टेरागमसिद्धावान्तरजातिव्यवस्था भज्येत। संकेतलिङ्गसंव्यवहारैस्तत्सिद्धिरतिप्रसञ्जिका; ब्राह्मणादिशब्दानां जातिशब्दत्वं च व्याकरणादिस्मृतिसिद्धम्। * ब्राह्मोऽजातावित्यनेन जातौ ब्राह्मणशब्दस्थितेः। अत एव विशिष्टमातापितृजन्यत्वरूपोपाधिमात्रमेव ब्राह्मण्यादिकमिति कैश्चिदुक्तमयुक्तम्, अयोनिजब्राह्मणा-

दिषु तदयोगात्। अर्वाचीनेषु तु जात्युपलक्षणमात्रमेतत्। यत्तु बाह्यैरुक्तम्—* विरुद्धजातीयाभ्यां प्रजोत्पत्त्ययोगान्मनुष्यत्वावान्तरजातिभेदः साङ्केतिक इति, तदसत्, अश्वगर्दभादिषु विजातीयसंयोगादपि तत्तत्प्रजोत्पत्तिदृष्टेः। तत्र सङ्कीर्णोत्पत्तिरिति चेत्, तथाऽत्रापि। अतः संनिवेशातिरिक्ता जातिर्ग्राह्या। सत्यम्; एतदर्थमपि **स्वासाधारणं रूपमि**त्युक्तम्। आगमादिजनितानादिव्यवहारसिद्धेयं व्यवस्था संनिवेशमन्तरेणापि साधीयसी। इदं तु चिन्त्यम्— अधिकजातिवादेऽपि समानसंनिवेशानामवान्तरजात्यादिव्यञ्जकव्यक्तिविशेषनिष्पत्तिः कुत इति; अचिन्त्यविपाकादृष्टविशेषाधीनभूतपरिणतिविशेषादिति चेत्, एवं तर्हि तत् तच्छब्दनिमित्तं स्यात्। एतदेव * शमो दम इत्यादिषु क्रियाभेदाद्गुणभेदाद्वा वर्णादीन् व्यवस्थापयतामपि तात्पर्यम्, तावन्मात्रस्यातिप्रसञ्जित्वात्। तदयं संग्रहः—

**संनिवेशसमानत्वेऽप्यारणेयादिवह्निषु। क्षीरभेदादिकेऽप्यस्ति शक्तिभेदस्तथाऽस्ति नः॥ ४१८॥**
**उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा। यत्राश्रयस्वभावात्तु तत्राप्यस्तु स एव सा॥ ४१९॥**
**न चैवं सर्वधर्माणामपि शक्या निराकृतिः। आविर्भावतिरोभावप्रभृतेस्तद्विरोधतः॥ ४२०॥**
**अगृहीतो हि दूरादौ धर्मो भात्यन्तिकेऽधिकः। धर्मिग्रहेऽपि भेदस्य ह्यगृहीतौ भ्रमोदयः॥ ४२१॥**
**दर्शनस्पर्शनाभ्यामप्येकार्थग्रहणं स्फुटम्। रूपस्पर्शौ च धर्मी च भिन्नाः सिध्यन्त्यतो मिथः॥ ४२२॥**
**भेदः स्वरूपं धर्मो वेत्येवमादि च जल्पताम्। विकल्पोऽपि कथं सिध्येद्धर्मधर्मिभिदात्यजाम्[ः]॥४२३**
**संस्थानेष्वेव सामान्यसादृश्यादिगिरां पुनः। अन्यान्वयपुरस्कारात्प्रतिसंबन्ध्यपेक्षता॥ ४२४॥**
**घटस्यैव घटाभावाभावोऽयमिति भाषणे। प्रतियोगी पुरस्कार्यस्सर्वेष्टस्तद्वदत्र नः॥ ४२५॥**
**संस्थानेष्वनुवृत्तत्वव्याह[हृ]तिश्च पुरोदिता। मिथः सादृश्यरूपत्वे तात्पर्यान्न विरुध्यते॥ ४२६॥**
**सादृश्यादिस्वरूपत्वं यथादृष्टयत्र केषुचित्। स्वभावतो भवेद्यद्वन्मिथः संबन्धितादयः॥ ४२७॥**
**कथ्यते यैस्तु सादृश्यं संस्थानादिविलक्षणम्। गुरुत्वं जातिगुप्तौ च धृतं तैर्जातिस्लक्ष्मिवत्॥४२८॥**
**संमतादतिरिक्तं वा सादृश्यं परिकल्प्यताम्। आश्रयप्रतियोग्यादिव्यवस्थानस्वभावतः॥ ४२९॥**

किं च, कर्मणां तावन्न स्वरूपतोऽनेकानुवृत्तिः, कालतः परिच्छेदात्। एवं कार्याणां गुणानामपि। संयोगादेरपि कतिपयानुवृत्तिमात्रम्। नित्यानां च ततो वैषम्यक्लृप्तिरयुक्ता। अतस्तेषु कल्प्यमन्यसामान्यम्। तत्र किं गुणकर्मसु? जातिरुपलक्षणैर्व्यवस्थाप्या, व्यावृत्तव्यक्तिस्वभावत एव वा।

**उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा। यत्राश्रयस्वभावात्ते तत्राप्यस्तु स एव सा॥ ४३०॥**

अस्तु वा उपाध्यनुक्त्यैव यत्र क्वचित् काश्यपादिगणिता जातिः; तथाऽपि द्रव्यादिषु, चतुर्षु वाऽनुवृत्ता सत्ताजातिर्न कल्प्या; सत्तायास्तदभीष्टपदार्थान्तरेष्विव च सच्छब्दार्थे भावत्वप्रामाणिकत्वाद्युपाधितः संभवात्। अतो लोकदृष्टं सद्वा सत्ता वा शास्त्रवेद्यं सर्वाधारभूतं ब्रह्म न भवतीति सिद्धम्॥

जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात्, पदार्थान्तरादर्शनात्, अर्थान्तरवादिनाऽप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः॥

एवं संस्थानजातिपक्षे अतिरिक्तपक्षेऽप्याद्यप्रत्यक्षस्य तद्विशिष्टविषयतया भेदग्राहित्वं द्रढयितुं प्रसक्तयोः साधितशेषम् * असद्व्यपदेशसूत्राभिप्रेतयुक्त्या साधयति–**जातीति**। **जाति**शब्द इह प्रदर्शनार्थः, प्राक् पश्चाच्चादिशब्दोपादानात्। अत्र ह्यन्योन्याभावमतिरिक्तं कल्पयतामपि न जात्यदर्शने तद्धीः; अन्यथा कथमगृहीतगोत्वादेरश्वत्वादिभ्रमसन्देहौ। पृथक्त्वमपि न पृथक्कल्प्यम्, गुणादिष्वपि संभवतः पृथग्व्यवहारस्यान्योन्याभावेनैव चरितार्थत्वात्। अत एवात्यन्ताभावोऽपि नान्यः, गोत्वस्यैव गोरश्वाद्यन्योन्याभावतया, अश्वत्वाद्यत्यन्ताभावतया च तदन्यतदभावशब्दविषयत्वोपपत्तेः। तदिह भिन्न इति व्यवहारोऽन्यथासिद्ध इत्यवधारणाभिप्रायः। मा भूत्क्लृप्तिः; कथं दृष्टापह्नव इत्यत्राह— **पदार्थान्तरादर्शनादि**ति। अन्यथा गौरवमप्याह— **अर्थान्तरे**ति। एवं क्वचित्पृथक्त्वसंज्ञान्तरं विशेषाख्यपदार्थान्तरं च न कल्प्यमित्यभिप्रायेणाह— **गोत्वादिरेव भेद** इति। गौरवात् पृथग्व्यवहारस्य लक्षणरूपेणापि हेतुना व्यावृत्तिः साध्या इति वदन्तोऽप्यत्र लक्षणस्यैव भेदत्वोक्त्या निरस्ताः। कथं हि पक्षस्य व्यतिरेकदृष्टान्ताद्भेदाग्रहे केवलव्यतिरेकिप्रवृत्तिः? कथं च इतरेभ्यो भिद्यत इति साध्यप्रयोगः? व्युत्पत्तिस्तु वृद्धव्यवहारादिसाध्या; तत्र किं लक्षणेन? अन्यथा यथेष्टं यत्किञ्चिच्छब्दवाच्यत्वानुमित्यादिप्रसङ्गात्। इत इदं पृथक्, इत इदमन्यत्, इति व्यवहारयोरव्यतिरेकादर्थभेदो न कल्प्यः; अतः पृथक्त्वमपि गोत्वादिरेव। द्विपृथक्त्वादिक्लृप्तिस्तु दूरापास्ता। एवं नित्यद्रव्येषु विशेषोऽपि न कल्प्यः। मुक्तात्मादिषु गुणादिभिर्वैषम्यरहितेषु मिथोव्यावृत्तधीर्भेदकधर्ममन्तरेण कथं स्यादिति चेत्, प्रत्यक्षतोऽस्ति; शास्त्रादिनापि शुक्लत्वादिप्रसिद्धोपाधिभिरेव स्यात्। सा तावन्नास्मदीयादीनाम्। योगिप्रभृतीनामपि प्राचीनैरुपाधिभिरेव विविक्तैः प्रत्येकनिष्ठतया प्रत्यक्षितैर्भेददृष्टिः स्यादेव। अलं तदन्यक्लृप्त्या। अस्ति च अस्मन्मते प्रत्यात्मनियते मुक्तावस्थायामप्यात्मनां स्वतन्त्रेच्छाहेतुक इच्छादिभेदः श्रुतिसिद्धः। यत्तु पृथक्त्वैकजात्या समत्वाद्गुणादावपि समत्वाच्च पृथक्त्वं नैतेषु भेदकमित्याहुः; तदप्ययुक्तम्। अन्यत्रापि तस्याभेदकत्वप्रसङ्गात्। विशेषत्वोपाधिना समत्वेन कल्प्यानामप्यकिञ्चित्करत्वप्रसङ्गात्। वदन्ति हि विशेषलक्षणमनुवृत्तम्— जातिशून्यत्वे सत्येकवृत्तित्वमिति।

**ननु च जात्यादिरेव भेदश्चेत्तस्मिन् गृहीते तद्व्यवहारवद्भेदव्यवहारोऽपि स्यात्। सत्यम्; भेदश्च व्यवह्रियत एव, गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः, गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव हि अभेदनिवृत्तिः। अयमस्माद्भिन्न इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात्प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम्॥**

अथैवं जात्यादिधर्माणां भेदत्वेऽपि स्वरूपभेदपक्षे प्रागुक्तं चोद्यमवतारयति— **ननु चे**ति। अत्र **भेदव्यवहार**शब्देन वस्तुतो भेदशब्दवाच्यस्य व्यवहारो वा भेदत्वेन व्यवहारो वेति विकल्पं मत्वा पूर्वकोटिमिष्टतयाऽङ्गीकरोति— **सत्यमि**ति। तद्विवृणोति— **भेद** इति। वस्तुतः तत्तद्भेदरूपश्च जात्यादिर्व्यवह्रियत इत्यर्थः। कथमित्यत्राह— **गोत्वादी**ति। ततोऽपि कथं तत्सिद्धिरित्यत्राह— **गोत्वादिरेवे**ति। अत्र **सकलेतर**शब्दस्तत्तद्विरुद्धाकारविशिष्टपरः।

भेदलक्षणं गोत्वादौ दर्शयति— **गोत्वादाविति** । इतरैः सकलैर्विशेषतः सजातीयत्वबुद्ध्यादिनिवृत्तेरित्यर्थः । यदग्रहाद्यत्र यदध्यासः सर्वेष्टः, यद्ग्रहे चासौ न स्यात्, स हि तस्य तस्माद्भेदः; तदेवाभेदनिवृत्तिः । तद्धीनिवृत्तिं व्यनक्ति— **भेदग्रहणेनेति** । **एव**कारो विरोधव्यञ्जकः । **हिः** प्रसिद्धौ । ननु भावस्यैवाभावत्वमनेकस्यैकाभावत्वमेकस्यानेकाभावत्वं च कथम्? इत्थमेव— यथादृष्टि सर्वत्र विरोधाद्यभावात्, अभावाभावादौ परैरपि तथाऽङ्गीकाराच्च । एतेन निर्विशेषेऽपि अतद्व्यावृत्तिरूपधर्मसत्यत्वपक्षेऽपि तैरेवाभावरूपधर्मायमाणैस्तत्प्रतिबन्द्या वा अभावरूपधर्मवत्त्वे सिद्धे द्वितीयकोटौ दत्तोत्तरत्वमाह— **अयमिति** । **प्रतियोगिनिर्देशस्य—** प्रतियोगिना निर्देशस्य । **तदपेक्षत्वात्—** प्रतियोगिधीसापेक्षत्वादित्यर्थः । **तदपेक्ष्यत्वादि**ति पाठे तु प्रतियोगिनो निर्देशस्य भिन्न इति व्यवहारेणापेक्षणीयत्वादिति भाव्यम् । उक्तं भेददूषणनिस्तारोपक्रमे—

**भेदसाधकवर्गस्य भेदसिद्ध्युपजीविनः । तत्साधकत्वायुक्तिश्च दुर्भणा स्वोक्तभङ्गतः ॥ ४३१ ॥**

**भेदोऽस्तीति विधानं तु भवेत्स्वपररक्षकम् । स नास्तीति निषेधस्तु मूलघ्नः स्वात्मघातकः ॥४३२॥**इति ।

**यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम्; तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्तिविशेषस्य भ्रान्तिपरिकल्पितम् । द्वयोर्ज्ञानयोर्विरोधे हि बाध्यबाधकभावः, बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति । यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नः, तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेत्, तत्र विरोधाद्बलवतो बाधकत्वं बाधितस्य च निवृत्तिः । देशान्तरकालान्तरसंबन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः? अन्यत्र निवृत्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देशकालादिसंबन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः ।**

एवं भेदस्य मानाद्यनुपपत्तिर्निरस्ता । तथाऽनुमानबाधं दुदूषयिषुरनुवक्ति— **यत्पुनरिति** । हेतौ सोपाधिकत्वं विवक्षुः प्रयोजकानभिज्ञमुपालभते—**तदिति** । बाध्यबाधकभावः सर्वत्र विरोधगर्भः; व्यावृत्तिविशेष एव मिथ्यात्वसाधकः; अनुवृत्तिविशेष एव सत्यत्वसाधकः इत्यनालोचनात्तत्सामान्ये बाधकत्वभ्रान्त्या तदुक्तिरित्यर्थः । कथमत्र बाध्यबाधकभावस्यानालोचितत्वमित्यत्राह— **द्वयोरिति** । ज्ञानयोर्विरोधोऽत्र विषयविरोधायत्तः । अत्र व्यावर्तमानत्वमात्रमप्रयोजकम्, तद्विशेषस्त्वसिद्ध इत्यभिप्रायेणाह— **बाधितस्येति** । **व्यावृत्तिश**ब्देन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वलक्षणव्यावृत्तिर्विवक्षिता, अन्यथा अवधारणायोगात् **न व्यावर्तमानत्वमात्रमिति** वक्ष्यमाणत्वाच्च । तदिह

प्रयोजकस्यासिद्धत्वं सिद्धस्याप्रयोजकत्वं च हार्दम्। ननु सच्छब्दवाच्ये ब्रह्मणि घटादेः प्रतीतत्वात्तत्रैव निषेधाच्च शुक्तिरूप्यस्येव विधिनिषेधयोर्विरोधः सिद्ध इत्यत्राह— **अत्रेति**। घटादिषु अस्तिनास्तिबुद्ध्योरित्यर्थः। **एवंकारो** बाधस्य मूलाभावेन कैमुत्यनिरस्तत्वार्थः। अयं भावः— ब्रह्मरूपं सत्त्वास्मदादेरदृश्यम्; दृष्टं तु सत्त्वं घटादेराधारतया भाति तद्रूपत्वात्। तत्र च निषिद्धे तस्मिन्निति मध्ये तन्मिथ्यात्वायोगात्। घटत्वादिधर्मास्तु शुक्तौ रूप्यत्ववत् स्वाश्रयभूते घटादौ सच्छब्दोक्ते न निषिध्यन्ते। सत्ता च घटादिधर्मतया न तद्देशत्वशङ्कार्हा। संप्रतिपन्नौ घटादिविधिनिषेधदेशकालौ तु भिन्नाविति। बाधरूपस्योपाधेः साधनव्यापकत्वपरिहाराय देशकालैक्यतो विरोधबाधव्यावृत्तीः शिक्षयति— **यस्मिन्निति**। देशकालग्रहणमुपलक्षणम्, **देशकालादीति** वक्ष्यमाणत्वात्। तत्रादिशब्देन कालाद्यवच्छेदकः क्रियादिस्तत्तदधिष्ठानस्वरूपं च गृह्यते।

**देशकालौ विहायापि ह्यन्यत्वं क्वापि कल्प्यते।**
**तदेव तत्राधिष्ठानं प्रतीतोपाधिशब्दभाक्। देशकालान्तरत्वं च कल्प्यते देशकालयोः॥ ४३३॥**

अव्यवस्थितिपरिहाराय **बलवत** इत्युक्तम्। **चकारो** विरोधबाधाभ्यां सह निवृत्तेः समुच्चयार्थः, बाधितस्यैवेत्यवधारणार्थो वा। पूर्वोक्तव्यावृत्तिविशेष एवात्र निवृत्तिशब्देनाप्युक्तः। पक्षीकृते विरोधादिलिङ्गं नास्तीत्याह— **देशान्तरेति**। **अन्यत्रशब्दौ** विरोध्यभावतत्सद्भावस्थापनपरौ। स्वदेशादौ निवृत्तिवचनमप्रयनुष्णत्ववत्स्यात्। ततोऽन्यत्र साधने तु सिद्धसाध्यता साध्याविशेषश्चेत्यभिप्रायेण **कथमुच्यते** इत्युक्तम्। **बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिरिति** हि पूर्वपक्षोक्तम्। सपक्षे विरोधादीन् व्यनक्ति— **रज्जुसर्पादिष्विति**। देशकालविशेषसमुदायस्य प्रतिपन्नोपाधित्वात् तद्दृष्टप्रकारेण परोक्तहेतोर्व्याप्त्यभावं तत एवासाधकत्वं चाह— **इतीति**। पूर्व **इतिः** प्रकारे। उत्तरो हेतौ। मात्रया बाधफलत्वव्युदासः। अत्रेदमाकूतम्— व्यावर्तमानत्वं नाम किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं वा, कुतश्चिदन्यत्वं वा, कस्याश्चिद्बुद्धेरविषयत्वं वा, प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा, अन्यद्वा किञ्चित्? नाद्यः, उक्तस्य बाधितत्वस्योपाधित्वात्। असत्यस्य खनैल्यादेर्बाधादर्शनान्न साध्यव्यापकत्वमितिचेत्, न; ईश्वरादिबुध्या बाधसिद्धेः; त्वया च कुतश्चिदसत्यत्वं तस्य गृहीत्वा चोद्यते। न च तस्योपाधेः साध्याविशिष्टत्वम्; अपरमार्थशब्देन मिथ्यात्वस्य बाधार्हत्वसदसदन्यत्वादेर्वा विवक्षितत्वे तदयोगात्। पूर्वपक्षोक्तं मिथ्यात्वलक्षणमपि बाधार्हत्वमेव; बाधितत्वस्यैव साध्यत्वे योग्यानुपलब्ध्या कालात्ययापदेशात्। सर्वदा सर्वेषामबाधितत्वं दुर्ज्ञानमिति चेत्; ब्रह्मणि कः समाश्वासः?

**अनिर्वाच्येषु बाधश्च स्वकालासत्त्वमावहन्। जनिध्वंसाभ्युपगमात् दुर्वचो जनिबाधतः॥ ४३४॥**
**पश्चादभावः कार्येषु न साध्यः सिद्धसाधनात्। नित्येषु तु विरुद्धत्वान्न चेद्ब्रह्मणि का गतिः॥ ४३५॥**
**नित्यानित्यश्रुतिप्राप्तं ब्रह्मान्यत्कल्पना[स्]पदम्। ब्रह्मण्यपि तथात्वोक्तिरविशेषात्प्रसज्यते॥ ४३६॥**

ग्राहकाद्यनुपपत्त्या भेदबाधस्तु प्रागेवापास्तः। ब्रह्मणि च अनिर्वाच्यनिष्ठात्यन्ताभावप्रतियोगित्वेनानैकान्त्यम्। यदि तस्मिन्नयं धर्मो मिथ्या, तदा सत्यस्यानिर्वाच्यधर्मत्वप्रसक्तिः; अन्ततः स्वनिष्ठात्यन्ताभावप्रतियोगित्वं च सिद्धम्। अन्यथा आत्माश्रयापातात्। आत्माधारत्वोक्तिस्त्वन्यपरा। न द्वितीयः; ब्रह्मणि अनृतजडाद्यन्यत्वस्य त्वयैवोक्तेः। तन्मिथ्यात्वे च सत्यपरिशेषे व्यावर्त्यासिद्धेस्तत्प्रतियोगिकव्यावृत्तिविधिविरोधोऽद्वैतमतभङ्गश्च जायते। असत्यपरिशेषे

निरधिष्ठानभ्रमः। विरुद्धोभयैक्ये जैनादिप्रस्थितिः। व्यावर्तमानतादात्म्याच्च सतोऽपि तथात्वापत्तिः। मिथ्याभूतमेव च व्यावर्तमानत्वं घटादौ मिथ्यात्वसाधकं मन्यसे, ब्रह्मण्यपि स्यात्। न तृतीयः; सतोऽप्यसद्बुद्धेः अनिर्वाच्यतद्विषयत्वे च तद्व्यावृत्तिसाधनायोगात्; स्वप्रकाशस्य सर्वबुद्ध्यविषयत्वाद्वा। भ्रान्त्या तद्विषयत्वमपि स्यादिति चेत्; तद्वत्पक्षीकृतेऽपि सर्वधीवेद्यत्वभ्रमः स्यादिति हेत्वसिद्धिः। त्रिष्वपि कल्पेषु सत्यानुमानदृष्टान्ततया त्वयैवोक्ते सर्पाद्यधिष्ठानरज्ज्वादौ हेतुवृत्तिर्दुर्वारा। कथं कस्यचित्सत्यत्वसाधनेऽन्वयदृष्टान्तस्य तदन्यासत्यत्वसाधने पक्षीकारः? व्यावहारिकव्यवस्थया दृष्टान्तत्वेऽपि तयैव तत्रासत्यत्वसाधनं बाध्येत। परमार्थसत्यत्वनिषेधे तु तद्दृष्टान्तेन ब्रह्मण्यपि व्यावहारिकसत्यत्वं वा सत्यत्वमात्रं वा निदर्शितं स्यात्; तथा च न विवक्षितसिद्धिः। परमार्थसत्यमिति साधने कथञ्चिद् दृष्टान्तः सिध्येत्। चतुर्थस्तु देशान्तरेत्यादिना निरस्तः। पञ्चमोऽपि यदि सर्ववर्ति, तदाऽनैकान्त्यं स्थितम्। अथ न, तदा तस्यैव व्यावर्तमानतया मिथ्यात्वेन स्वरूपासिद्धेरसाधकत्वम्। असत्यात् सत्यसिद्धिस्तु दूषयिष्यते। साध्येऽपि सर्ववृत्तित्वकतिपयवृत्तित्वविकल्पेन ब्रह्ममिथ्यात्वादि स्यादेव।

**पक्षत्वे चास्य साध्यादेर्व्याघातो दुरतिक्रमः। अन्यथा सदसत्त्वादिविकल्पैरप्युपप्लवः॥ ४३७॥**

एवं ब्रह्मान्यत्वात्कल्पितत्वाद्भिन्नत्वादित्यादीनां प्रपञ्चमिथ्यात्वसाधकतया परोक्तानां सर्वेषामनुमानादीनां बाधोपाधिव्यभिचारव्याघातादयो दोषा यथायथं द्रष्टव्याः। यः प्रत्ययः स निरालम्बनः यथा स्वप्नादिप्रत्ययः, विमतं च तथेति योगाचारोक्ते तु, * वैधर्म्याच्च न स्वप्नादिवदिति सूत्रमुत्तरं भविष्यति। सर्वधियां च स्वेतरालंबनशून्यत्वं वदतः स्वेष्टं सन्तत्यन्तरं क्षणान्तरं च न सिध्येत्। माध्यमिकस्तु कार्याणां पूर्वापरकालयोरसत्त्वेन मध्येऽप्यसत्त्वं साधयन् व्यावर्तमानत्वानुमानदूषणनयेन बाधादिभिर्निष्कास्यः। तन्मतं च * सर्वथाऽनुपपत्तेश्चेति प्रतिक्षेप्स्यति। यत्तु विगीतं मिथ्या दृश्यत्वात् शुक्तिरूप्यवदिति ब्रूथ; तत्र वेद्यत्वमात्रमेव हि हेतुः स्यात्, दृष्टिगोचरत्वादेर्भागासिद्धेः। ततश्च ब्रह्मजिज्ञासेत्यादि स्थापयद्भिर्विपक्षे ब्रह्मण्यपि हेतुवृत्तिरेष्टव्या। अत एव, आत्मा न दृश्यः आत्मत्वात्, यन्नैवं तन्नैवं यथा घट इत्यपि न वाच्यम्; आत्मादिशब्दैस्तन्निर्देशेन स्ववाग्विरोधात्। *आत्मा वा अरे द्रष्टव्यः, * दृश्यते त्वग्र्यया बुद्ध्या * तमक्रतुं पश्यति वीतशोकः इत्यादिभिर्बाधाच्च। * गूढोत्मा न प्रकाशते * अद्रेश्यमग्राह्यमित्यादिनिषेधस्तु तत्तद्वाक्यशेषैः * न चक्षुषा गृह्यते इत्यादिविशेषनिषेधकवाक्यान्तरैश्च संकोच्यः। अन्यथा कथमद्वैतम्? कथं वा द्रष्टृदृश्यसंबन्धानुपपत्तिः? किं च विश्वाध्यासाधिष्ठानस्य यथादृष्टि तदेकधीविषयत्वं स्वीकार्यम्; अन्यथा निरधिष्ठानभ्रमापातात्। ब्रह्मणो धीविषयत्वं भ्रान्तिसिद्धमिति चेत्; अब्रह्मणोऽपि तथेति त्वमेव ब्रूषे। ब्रह्मणस्तु दृग्विषयत्वमात्रमिति चेन्न; तस्याभिलप्यमानत्वात्। घटादिवदनित्यस्वप्रकाशस्य प्रकाशरूपं फलं न साध्यमिति चेत्; कथं तर्हि ब्रह्मबुद्धेरध्यासनिवर्तकत्वम्? स्वरूपत इति चेत्; तद्वद्घटादिष्वपि तदतिरिक्तव्यक्त्यभिव्यक्तिरूपफलक्लृप्तिर्न स्यात्। प्राकट्यभङ्गन्यायाच्च। अतः साधारणे विषयत्वमात्रे हेतौ स्थितमनैकान्त्यम्। अपि च—

**दृश्यत्वाद्यदि मिथ्यात्वं भासमानत्वतो न किम्। तत्र दोषांस्त्वदुक्तांश्च तुल्ययेत्तुल्यसौगतः॥ ४३८॥**

**असिद्ध्युपाधिव्याघातबाधादिरुभयोः समः। अनैकान्त्यस्थलं तस्य नास्तीत्यतिशयो भवेत्॥ ४३९॥**

**असत्यात्सत्यनिष्पत्तिप्रतिपत्ती च दर्शयन्।**

**असत्यादप्यधिष्ठानादध्यासं किं न मन्यसे। विपक्षे बाधकादत्र वैषम्यमपि दुर्वचम्॥ ४४०॥**

दृग्दृश्ययोर्हि योगाचारोक्तवद्युक्तौ न हेतुर्दृश्यं भवेत्। साध्यं च तत्र मिथ्यात्वं सत्यं न वा ? आद्येऽपि धीस्वरूपमेव, अन्यद्वा? पूर्वत्र तत्प्रकाशनित्यतया जगदध्यास एव न स्यात्। स्याच्चेत्, सर्वत्र सर्वदा अध्यासः स्यात्। अन्यथा बाधेऽपि। बाधितानुवृत्तिश्च त्वन्मते प्रागेव निरस्ता। अन्यत्वे सद्वितीयतापत्तिः। कथं चासत्यस्य सत्यो धर्मः, खपुष्पे कोमलपरिमलशैत्यादेस्तथाऽनुपलब्धेः ? द्वितीये तु प्रपञ्चसत्यत्वापत्तिः। सत्यरजतादेर्ब्रह्मणश्च सर्वत्र सर्वदाऽध्यासः स्यात्, मिथ्यात्वे मिथ्याभूते तत्सत्यत्ववत्। न चेयं नित्यसमा ; युक्ताङ्गहान्यादेः स्वव्याघातस्य चाभावात्। न च सत्यत्वं सत्यमसत्यं वेत्यादिप्रतिबन्दिः। तस्यासत्यत्वानभ्युपगमात्। तत्सत्यत्वे च घटादिसत्यत्वाविरोधात्। मिथ्यात्वमिथ्यात्वे तु वैपरीत्यदृष्टेः। अत एव नेदं स्वपरनिर्वाहस्थानम्। सत्यत्वं तु तथा स्यात्; उदाहृतस्वप्रकाशादिसमानयोगक्षेमत्वात्। अनवस्थाऽपि तद्वन्निवर्त्या ; अन्यथा कथं ब्रह्मणोऽपि सत्यत्वम् ? स्वतश्चेत्, सममेतत्। सत्यासत्यविवेकाभावे च सामान्यतो विशेषतश्च माध्यमिकेतरसर्वराद्धान्तव्यवस्थोच्छेदः।

**महीमिव च मर्यादामनधिष्ठाय शाश्वतीम्। पदन्यासो न चोराणां प्रच्छन्नप्रकटात्मनाम् ॥ ४४१ ॥**
**मर्यादास्थापनार्थं यौ मानतर्कौ समुत्थितौ। सिंहारण्यवदन्योन्यं गुप्तौ तौ स्वान्यसाधकौ ॥ ४४२ ॥**
**परमर्यादया ब्रूमः परव्याहतिमित्यसत्। स्वव्याघातादिभङ्गानां परानङ्गीकृतेरिति ॥ ४४३ ॥**

**यत्तु अनुवर्तमानत्वात्सत्परमार्थ इति, तत्सिद्धमेवेति न साधनमर्हति। अतो न सन्मात्रमेव वस्तु। अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वाद्बाधितत्वाच्च अनुभूतिरेव सतीत्येतदपि निरस्तम् ॥**

अथ सत्पारमार्थ्यसाधने साध्यस्य सिद्धतया हेत्वंशो दूष्यः इत्यभिप्रयन् तत्पुरस्सरमनुवक्ति— **यत्तु** इति। तदेतन्माध्यमिकं प्रति दुर्वचम्; दृष्टान्ताद्यसिद्धेः। अस्मान्प्रति त्वत्परिभाषया व्यावहारिकस्य वा प्रातीतिकस्य वा सतः पक्षीकारे सिद्धसाध्यता, प्रातीतिकसतोऽपि स्वदेशादौ सिद्धत्वात्; तव तु प्रतिज्ञाविरोधः। परमार्थसतः पक्षीकारे तु सत्परमार्थ एवेति वा, सदेव परमार्थ इति वा विवक्षितम् ? पूर्वत्र सिद्धसाध्यता धर्मिसाध्यपदयोरैकार्थ्यं चेत्यभिप्रायेणाह— **तदिति**। उत्तरस्योत्तरमाह— **अत** इति। अयं भावः—साध्यस्यायोगव्यवच्छेदे तावत् तदन्यमिथ्यात्वं नोक्तं स्यात्। अन्ययोगव्यवच्छेदे अनुवर्तमानत्वादिति हेतुरपक्षस्थः। अन्यथाऽपि विरुद्धश्च। उभयसाधने तु अंशत उभयदोषापत्तिः। सत् स्वेतरपरमार्थशून्यमिति विवक्षायां रज्ज्वादिदृष्टान्तः साध्यविकलः, तदनारोपितपरमार्थसिद्धेः। अयं तु निगमनग्रन्थ इति केचित्। तदा सच्छब्दवाच्यांशवद्घटादिवाच्यांशोऽपि वस्त्वित्याशयः। अनुवर्तमानानुभूतिरेव परमार्थ इति प्रागुक्तमप्येतेन निरस्तं वेदितव्यम्।

**सत्सदित्यनुवृत्त्या च सतः सत्यत्वसाधने। नास्तित्वाद्यनुवृत्त्याऽपि तत्सत्यत्वं न किं भवेत् ॥४४४॥**
**घटो नास्तीति बोधेऽपि तन्नास्तित्वास्तिताऽस्ति चेत्। घटोऽस्तीति विधानेऽपि किं न नास्तित्वनास्तिता ॥**
**घटादिसत्ता सत्या चेद्घटादेः सत्यता न किम्। न त्वदिष्टानुवृत्तिः स्याद्यदि सा व्यावहारिकी ॥ ४४६**
**किं चानुमानसिद्धत्वं शास्त्रसिद्ध्यै निरस्यता। प्रत्यक्षातिप्रसिद्धत्वं शास्त्रेणैव निरस्यते ॥ ४४७ ॥**

सैव सतीत्युक्तमपि भेदसाधकनिस्तारं पूर्वम् निरस्यति— **अनुभूतीति**। अनुभूतेरपि सद्रूपतया तत्र सदनुभूत्योर्भेदायोगात् तद्व्यावृत्तघटादिव्यञ्जनाय **विशेषशब्दः**। यदाऽनुभूतिरनुभूत्यन्तरेण विषयीक्रियते तदाऽपि घट-तद्धीन्यायात् विषयविषयिणोः सतोर्भेदस्सिद्धः। परेष्टानुवर्तमानत्वासिद्धिव्यञ्जनार्थो वा **विशेषशब्दः** इति केचित्॥

यत्तु अनुभूतेः स्वयंप्रकाशत्वमुक्तम्, तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव; न तु सर्वेषां सर्वदा तथैवेति नियमोऽस्ति। परानुभवस्य हानोपादानादिलिङ्गकानुमान-ज्ञानविषयत्वात्, स्वानुभवस्याप्यतीतस्य अज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च। अतोऽनुभूतिश्चेत्स्वतःसिद्धेति वक्तुं न शक्यते।

तुच्छत्वपरिहाराय परोक्तं स्वतःसिद्धत्वम् तथात्वग्राहकाभावे स्वाश्रयेण सह तुच्छत्वं स्यादिति वक्तुमनुवक्ति— **यत्तु इति**। तुशब्दोऽत्र युक्तायुक्तांशविशेषव्यावृत्त्यर्थः। स्वयंप्रकाशत्वोक्त्याऽन्यनिरपेक्षप्रकाशत्वस्याश्रयतः कालतश्चा-त्यन्तायोगव्यवच्छेदो वा, अन्याधीनप्रकाशत्वात्यन्ताभावो वाऽभिप्रेत इति विकल्पं मत्वा प्रथमे सिद्धसाध्यतामाह—**तदिति**। **ज्ञातुः**—स्वाश्रयस्येत्यर्थः। द्वितीयं दूषयति—**न त्विति**। तुशब्दोऽवधारणपरः, स्वानभ्युपगतांशविवेके वा। **सर्वेषां सर्वदे**त्यनूदितस्य नियमद्वयस्य बाधं ग्रन्थद्वयेनाह— **परानुभवस्येति**। आदिशब्देन प्रेक्षण[भक्षण]पुलकादिसंग्रहः। अतीतोदाहृतिरागाम्युपलक्षणार्था। स्ववचनविरोधं सूचयन्नियमाभावं निगमयति— **अत** इति। **अनुभूतिश्चेदिति**। अनेनाश्रयकालरूपविशेषणद्वयरहितस्वरूपानुवादः॥

अनुभूतेरनुभाव्यत्वेऽननुभूतित्वमित्यपि दुरुक्तम्; स्वगतातीतानुभवानां परगतानु-भवानां चानुभाव्यत्वेन अननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्युपगमे च शब्दार्थसंबन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्व-मनुमाय तदुपसत्तिश्च क्रियते। सा च नोपपद्यते। न च अन्यविषयत्वेऽननुभूति-त्वम्। अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वं, स्व-सत्तयैव स्वविषयसाधनत्वं वा। ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे नाप-गच्छत इति नानुभूतित्वमपगच्छति। घटादेस्त्वननुभूतित्वमेतत्स्वभावविरहात्, नानुभाव्यत्वात्। तथाऽनुभूतेरननुभाव्यत्वेऽपि अननुभूतित्वप्रसङ्गो दुर्वारः; गगन-कुसुमादेरननुभाव्यस्याननुभूतित्वात्।

ननु व्यतिरेकिबलाद्वेद्यत्वमवच्छेदकवृत्तिमात्रस्य, न तु साक्षादनुभूतेरित्यत्र हेतुदूषणाय तदनुग्राहकतर्कं दूषयितु-मनुवक्ति— **अनुभूतेरिति**। व्याप्तिरूपाङ्गवैकल्यमाह— **स्वगतेति**। अनुभूतिशब्दार्थो हि लोकतोऽवसेयः। अतो न घटादिज्ञानेष्वनुभूतित्वं त्यक्तुं शक्यम्। तत्र च वेद्यत्वमनुभूतित्वं च सह दृष्टम्। वृत्तिपक्षेऽपि तदुपहित-

वित्स्वरूपग्रहणं सिद्धम् । अतोऽत्र तर्कस्यानुमानस्य च व्याप्तिर्दुर्ग्रहा । अवेद्यत्वसाधनं च कालात्ययापदिष्टम्, धर्मि- ाध्यहेत्वादिपदनैरर्थक्यप्रसङ्गहतं च । धाष्टर्याद्दृष्टापह्नवे लौकिकवैदिकसर्वव्यवहारभङ्गमाह— परेति । अयं भावः— ामानयेत्यादौ वा, पुत्रस्ते जात इत्यादौ वा वक्ष्यमाणभाष्यप्रकारेण चेष्टासहचरिताम्वादिशब्दप्रयोगे वा व्युत्पद्यमानानां खुद्धयनुमानसापेक्षत्वं सिद्धम् । तदभावे सर्वेषामव्युत्पन्नतया न मिथो भाषणम्, न च दृष्टादृष्टसर्वविद्यास्थानप्रवृत्ति ादिति । अदृष्टार्थप्रवृत्तौ विशेषतश्चोदाहरति— आचार्यस्येति । तदनुमानाभावेऽनिष्टं प्रसञ्जयति— सा चेति । वं वादिप्रतिवादिशिष्यादिबुद्धयनुमानं द्रष्टव्यम् । ननु वेद्यत्वप्रयुक्तमेवाननुभूतित्वं घटादौ दृष्टम्; इहापि तदभ्युपगमे ्प्रसङ्गो दुर्वार इत्यत्राह— न चेति । वेद्यत्वं नाननुभूतित्वव्याप्यमित्यर्थः । अननुभूतित्वप्रसङ्गं परिहर्तुं तत्प्रतियोगि- वरूपं लक्षणतः शिक्षयति— अनुभूतित्वमिति । अहमर्थात्मत्वस्य परेणानभ्युपगमादहमिदमर्थाभ्यामुपहितानुभूति- त्वावेद्यत्वेन साध्यते । तस्याश्च कस्यचित्प्रकाशरूपत्वमनुभूतित्वम्; स्वगोचरज्ञानमनपेक्ष्य स्वाश्रयाय प्रकाशमानत्वं च ल्लक्षणम् । वर्तमानदशा—विषयग्रहणकालः । तदुक्तिः पूर्वोत्तरदशयोर्वेद्यत्वदृष्टया स्वसत्तयैवेत्यवधारणव्युदासार्था । र्तमानदशायामप्यहमर्थान्तरेण वेद्यत्वदर्शनात् स्वाश्रयं प्रतीति विशेषितम् । तेनैव स्वप्रकाशात्मव्यावृत्तिश्च । स्वाश्रयं ति प्रकाशमानेभ्य आत्मधर्मान्तरेभ्यो व्यावृत्त्यर्थं स्वसत्तयैवेत्युक्तम् । परस्याप्यत्र काल्पनिक आश्रयाश्रयिभावः सिद्धः । स्वसत्तया च अनुभूतिः कल्पितस्वाश्रयाय प्रकाशते । उक्तं लक्षणम् अस्वयंप्रकाशवादिभिर्नाङ्गीक्रियते । अत- स्तैरपि स्मृतमनुभूतेर्लक्षणान्तरमाह—स्वसत्तयेति । कस्यचिदर्थस्य साक्षाद्व्यवहारानुगुण्यापादकमित्यर्थः । तेनेन्द्रियादि- व्यवच्छेदः । अत्र हि अवधारणं नैरपेक्ष्यपरम् ।

**सापेक्षहेतुभिः सिद्धं कारणं सहकारिभिः । एवं सर्वत्र सापेक्षे तदन्यैरनपेक्षता ॥ ४४८ ॥**

**वर्तमानदशायां, स्वाश्रयं प्रति** इत्युभयमिहापि योज्यम् । सिद्धान्ते त्वहमर्थस्यात्मनो ज्ञानरूपत्वे विषयाश्रयोपधाना- भावात्ततो व्यावृत्तिः । उभयसाधारणं लक्षणमनुक्त्वा प्रकृतोपयुक्तं लक्षणमिहोक्तम् । अनयोर्लक्षणयोरत्र निरर्थकं वचन- मिति शङ्कायां तयोः वेद्यत्वेन सहदृष्टया तदाश्रयेऽनुभूतित्वाभावस्य प्रसञ्जयितुमशक्यत्वमाह— ते चेति । स्वानुभव- सिद्धे इति हेतुगर्भं द्विवचनान्तम् । सप्तम्यन्तत्वे तु अनुभवो विशेष्योऽध्याहार्यः । यदि वेद्यत्वेऽप्यनुभूतित्वं स्यात्, अन्यत्रापि किं न स्यादित्यत्राह— घटादेरिति । तुः स्वभाववैचित्र्यपरः, शङ्काव्युदासार्थो वा । अननुभूतित्वं कस्य- चित्प्रकाशात्मत्वाभावः, अनुभूतिशब्दानभिलप्यत्वं वा । एतत्स्वभावविरहात्—उक्तलक्षणद्वयासंभवात् । घटादिष्वन्य- प्रयुक्तेऽननुभूतित्वे वेद्यत्वस्य तद्व्याप्यत्वाभावं व्यनक्ति— नानुभाव्यत्वादिति ॥ तर्कस्य व्याप्त्यभावः स्थापितः; प्रतितर्कप्रतिहतिमप्याह— तथेति ।

**गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्; एवं तर्हि घटादेरप्यननुभूतित्वनिबन्धनमज्ञानाविरोधित्वमेव नानुभाव्यत्वमित्यास्थीयताम् । अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वमपि तस्या घटादेरिव प्रसज्यत इति चेत्; अननुभाव्यत्वेऽपि गगनकुसुमादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव । अतोऽनुभाव्यत्वे- ऽननुभूतित्वमित्युपहास्यम् ॥**

घटादौ सर्वत्रानुभाव्यत्वाभावात् कुत्र व्याप्तिधीरित्यत्राह— **गगनकुसुमादेरिति** । तुच्छे कथं व्याप्तिग्रह इति चेत् , तदेतत् * नासत्त्वे ख्यातिबाधने इति वदन्तो यूयमेव प्रष्टव्याः । निषेधसाधने च पक्षत्वमप्यसतामिच्छतां * व्यवहारे भट्टनय इति वदद्भिर्युष्माभिरुपजीव्यश्चैवमाहुः—

* यस्मिन्ननित्यता नास्ति कार्यताऽपि न विद्यते। तस्मिन्यथा खपुष्पादाविति शक्यं हि भाषितुम् ॥ इति ।

**असत्यशुक्तिरजतं दृष्टान्तत्वेन कल्पयन् । खपुष्पस्य तथाभावं किं नाङ्गीकर्तुमर्हति ॥ ४४९ ॥**
**अयोग्यपदसंयोगात्कैश्चिद्दोषान्तरैरपि । अध्यासश्च खपुष्पादेर्दुस्त्यजः शुक्तिरूप्यवत् ॥ ४५० ॥**
**प्रत्यक्षेण प्रमित्या वा नासत् ख्यायेत किं ततः । घटादेः शुक्तिरूप्यस्याप्येवं तत्प्रतिपादनात् ॥ ४५१ ॥**
**एवं वेद्येऽप्यवेद्यत्वं परोक्तं परवर्त्मनः । अवेद्यत्वमधीत्वेन व्याप्तं भगवतोच्यते ॥ ४५२ ॥**
**सर्वथैवाप्रतीतं चेदसदित्यभिमन्यसे । कथं त्वया प्रतीतं तद्यत्त्वमेवं ब्रवीषि नः ॥ ४५३ ॥**
**शून्यं तुच्छमसच्चेति सदेवास्माभिरुच्यते । खरे शृङ्गं नरे गोत्वमित्यादेस्तादृशत्वतः ॥ ४५४ ॥**
**यत्र यन्न मितं मानैस्तत्तत्रासदिति स्थिते । अवेद्यमसदित्येषा व्याप्तिर्नस्तत्र सिध्यति ॥ ४५५ ॥**
**प्रतितर्काच्च तर्कस्य प्राबल्यमिह दुर्वचम् । युक्तो विपरिवर्तस्तु प्रत्यक्षाद्यनुसारतः ॥ ४५६ ॥**
**त्वदुक्तस्य प्रसङ्गस्य सिध्यन्नपि विपर्ययः । असाधकं त्वदिष्टस्य व्याप्तिभङ्गसमर्थनात् ॥ ४५७ ॥**
**प्रातिस्विकस्वभावाच्च सामान्यं यदि बाध्यते । सर्वस्यैवं घटत्वाद्यैरवेद्यत्वं न किं भवेत् ॥ ४५८ ॥**
**घटादेरपि वेद्यत्वे किं न स्यादघटादिता । सममेव समाधानं तत्र दोषप्रसञ्जने ॥ ४५९ ॥**

एवं वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वादित्यत्र बहुधा विकल्प्य स्ववाग्विरोधादि द्रष्टव्यम् । अधिकं तु खपुष्पादिभिरर्थान्तरत्वं, मतान्तरेण सिद्धसाधनत्वं वा । यदि खपुष्पादीनां वेद्यत्वाभावो न स्यात् , तदा प्रपञ्चस्य सत्त्वकोट्यां ख्यात्यनुपपत्तिं कथं वक्ष्यसि? अपरोक्षधीविषयत्वाभावादिति चेन्न ; दोषविशेषैस्तत्संभवस्योक्तत्वात् । तेषु वेद्यत्वात्यन्ताभावाधिकरणत्वं निराश्रयत्वात् मिथ्याभूतम् ; सत्यं तु साध्यत इति चेन्न ; तादृशस्य ब्रह्मण्यपि त्वया वक्तुमयुक्तत्वात् । किञ्चिच्छब्दार्थोऽनुभूतिरेव न घटादिरिति नियन्तुं च न शक्यम् ; सुलभश्च नियामको घटत्वादिरधीत्वहेतुः, वेद्यत्वस्य घटत्वादिनेवानुभूतित्वेन स्वप्रकाशत्वेन वा विरोधगन्धाभावादिति । ननु वेद्यत्वे स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुण्यरूपं स्वयंप्रकाशत्वं कथं स्यात्? इत्थम्— वर्तमानावर्तमानदशाभेदेन द्वयोर्व्यवस्थापनात् । स्वप्रकाशलक्षणे व्यवहारानुगुण्यं निवेशयता त्वयाऽपि व्यवहारार्हत्वबुद्धेर्व्यवजिहीर्षाया: तन्मूलव्यवहारजन्यधियश्च गोचरत्वमेष्टव्यम् । तथा सति का कथा विरोधस्य । एवं वेद्यत्वे नाशित्वादिप्रसङ्गो व्याप्त्यभावादिभिर्निर्धूतः । अथ प्रतितर्कस्योपाधिबलाद्दौर्बल्यं शङ्कते— **गगनेति** । असत्त्वभावत्वयोर्विरोधाद्भावविशेषरूपानुभूतित्वाभावस्तत्रासत्त्वप्रयुक्त इत्यर्थः । यद्यपि अननुभूतित्वस्यासत्त्वमव्यापकं घटादावदृष्टेः ; ततश्च न तस्योपाधिः ; तथाऽपि अनुभूतित्वस्य सत्त्वं व्यापकम् ; तावता च तस्य तदुपाधित्वं कैश्चित्संमतम् । अतः सत्त्वनिवृत्तिप्रयुक्तमननुभूतित्वमित्युच्यते । यद्वा शाकाद्याहारपरिणतिन्याय इहाभिप्रेतः । न ह्यसौ श्यामत्वव्यापिका । [अतस्तन्निबन्धनमतन्निवृत्तिः; ] अतो दोषविशेषनिष्ठश्यामत्वविशेषस्तन्निबन्धन इति वाच्यम्; तद्वदिहापि खपुष्पनिष्ठमननुभूतित्वमसत्त्वप्रयुक्तमिति नियम्यते । तदिदम्

**गगनकुसुमादेरननुभूतित्वमि**ति विशिष्टोक्त्या व्यज्यते । एवं सत्यनुभाव्यत्वनिबन्धनमननुभूतित्वमसत्त्वनिवृत्त्या न निवर्तते । परोक्ततर्केऽप्युपाधिमाह—**एवमि**ति । नात्र मतानुज्ञा, प्रतिबन्देर्दुस्तरत्वे तात्पर्यात् । **अज्ञानाविरोधित्वम्**— ज्ञानधर्मस्य स्ववेद्यविषयाज्ञाननिवर्तकत्वस्याभावः । अज्ञानस्य हि भावरूपस्याभावरूपस्य वा ज्ञानमेव निवर्तकम्; उक्तस्योपाधेः प्रसङ्गहेतुव्यापकतया प्रतिबन्दिनिस्तारं शङ्कते— **अनुभूतेरि**ति । * यत्रोभयोः समो दोषः इति न्यायेन अत्रापि प्रतिवक्ति—**अननुभाव्यत्वेऽपी**ति । अवेद्यखपुष्पादिव्यावृत्तं ज्ञानस्याज्ञानविरोधित्वं वेद्यत्वं साधयेदिति भावः । ननु अस्य घटादिसपक्षसद्भावे पक्षमात्रस्थस्य कथं हेतुत्वम्? कथं वा खपुष्पादिसपक्षसद्भावे तादृशस्य धीत्वस्येति पश्य । किमत्र प्रतितर्कस्यानुग्राह्यम्? किं वा त्वदुक्तस्य? श्रुत्यादिकमिति चेत्, तुल्यम् । यद्यप्यत्र प्रकृतानुरोधादसत्त्वमतिप्रसज्यत इति प्रतिवक्तव्यम्; तथाऽपि शिष्याणामूहशक्त्यर्थं तर्कवैभवात्प्रकारान्तरेण प्रत्युक्तम् । प्रसञ्जनीयमसत्त्वमत्र द्वितीयेन **अपि**शब्देन वा समुच्चीयते । अत एव खपुष्पादेः अज्ञानाविरोधित्वं चासत्त्वप्रयुक्तमित्याद्युक्तम् । असत्त्वस्य चाननुभूतित्वादिप्रयोजकत्वं स्वसद्भावे तत्सद्भावनियमाद्वा, स्वाभावे तदभावनियमाद्वा? आद्ये धूमालोकनयादवेद्यत्वमपि तत्प्रसञ्जकमस्तु, तद्व्याप्यत्वात् । द्वितीये घटादेः कथमधीत्वादि? तथा च तद्वदनुभूतावपि । असत्त्वाभावेऽप्यवेद्यत्वे श्रुत्यादिकमिति चेत्, तुल्यम् । अधीत्वादिप्रसङ्गः सुस्थः ।

**खपुष्पादिगताधीत्वाद्यसत्त्वनियतं यदि । स्यादन्यत्राप्यधीत्वादिमात्रं श्यामत्वमात्रवत् ॥** ४६० ॥

तदिह **दुरुक्तमि**ति प्रक्रान्तं दुस्तरोपलब्धिबलाविगमयन्द्रढयति— **अत** इति ।

**यावज्जीवमहं मौनी माता वन्ध्या ममेतिवत् । वित्तेरवेद्यतोक्तिः स्यादिति हास्यत्वभाषणम् ॥** ४६१ ॥

यत्तु संविदः स्वतस्सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते । प्रागभावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्; अनुभूत्यैव ग्रहणात् । कथमनुभूतिः सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्, न ह्यनुभूतिः स्वसमकालवर्तिनमेव विषयीकरोतीत्यस्ति नियमः; अतीतानागतयोरविषयत्वप्रसङ्गात् । अथ मन्यसे, अ‥तिप्रागभावादेः सिध्यतस्तत्समकालभावनियमोऽस्तीति । किं त्वया क्वचिदेवं दृष्टम्, येन नियमं ब्रवीषि? हन्त! तर्हि तत एव दर्शनात्प्रागभावादिः सिद्ध इति न तदपह्नवः । तत्प्रागभावं च तत्समकालवर्तिनमनुन्मत्तः को ब्रवीति? इन्द्रियजन्मनः प्रत्यक्षस्य ह्येष स्वभावनियमः, यत्स्वसमकालवर्तिनः पदार्थस्य ग्राहकत्वम्, न सर्वेषां ज्ञानानां प्रमाणानां च; स्मरणानुमानागमयोगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणदर्शनात् । अत एव च प्रमाणस्य प्रमेयाविनाभावः । न हि प्रमाणस्य स्वसमकालवर्तिना अविनाभावोऽर्थसंबन्धः; अपि तु

**यद्देशकालादिसंबन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता । अत इदमपि निरस्तम्— स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनादिति ॥**

अवेद्यत्वं ज्ञानस्य निरस्तम् । अथ प्रागुपन्यस्तं बौद्धोक्तादेैष्यम्यं दूषयितुमनुवक्ति— **यद्वि**ति । असिद्ध-मत्यन्तासिद्धेन दुस्साधमित्यभिप्रयन्प्रत्याह— **तदन्धस्ये**ति । **जात्यन्धे**नेति निदर्शितं विवृणोति— **प्रागभावस्ये**ति । ग्राह्यकालमात्रे ग्राहकाभावाद्ग्राह्यासत्त्वं न स्यादिति भावः । स्वतोऽन्यतो वा धियः प्रागभावग्रहणमिति प्रागुक्तविकल्पे स्वत इति पक्षं तावदाह— **अनुभूत्ये**ति । एवकारो विरोधशङ्कानिरासार्थः । सत्यसती वेति विकल्प्ये सतीति पक्षस्यै-वाङ्गीकारात्तत्र पूर्वोक्तं विरोधं शङ्कते— **कथ**मिति । अविद्यमानस्वाभावबोधने बुद्धेर्भ्रान्तित्वं स्यादिति भावः । स्वाभावस्य हि स्वकालवर्तित्वे विरोधः , तथाग्रहणेन च भ्रान्तित्वं स्यात् ; इह तूभयमपि नास्तीत्यभिप्रायेण प्रत्याह— **न ही**ति । समकालत्वनियमो हि संयोगादिसंबन्धे, अत्र न तथेति ज्ञापयितुं **विषयीकारोक्तिः** । तदेव स्थापयति— **अतीते**ति । यथा ग्राहकविशेषे प्रत्यक्षे * सत्संप्रयोगे इत्यादिना ग्राह्यसमकालत्वमुच्यते, तथा ग्राह्यविशेषधीप्रागभावे ग्राहकसमकालत्वमस्तीति सोपालम्भं शङ्कते— **अथे**ति । किमयं नियमस्त्वदन्यैरिव त्वयाऽपि क्वचिद्प्यदृष्ट एवोच्यते , उत दृष्ट इति विकल्पं मत्वा आद्यमाक्षिपति— **किमि**ति । **दृष्टम्**—प्रमितमित्यर्थः । अदर्शने तदुक्तिर्युक्ता न स्यात् । यथादृष्टार्थवादित्वं च न स्यादिति भावः । दृष्टत्वाभ्युपगमे दोषमाह— **हन्ते**ति । अनेन हर्षमनुकंपां वा द्योतयति । धीप्रागभावं निरस्यता तत्रैव प्रमाणमुपन्यस्तमिति परस्य जडीकारश्चायम् । स्वान्यप्रागभावसमकालत्वनयात्स्वप्रागभाव-समकालत्वदृष्टिर्भ्रान्तिरेव ; अतस्ते यथार्थदर्शित्वमपि न स्यादित्याह— **तत्प्रागभावमि**ति । अनादिब्रह्मस्वरूपमेव आगामिनी मुक्तिरित्युन्माद्यंस्त्वमेवैवं वक्तुमर्हसीति **किं**शब्दाभिप्रायः । ननु अविद्यमानग्रहे सर्वं सर्वत्र सर्वदा गृह्येत; प्रत्यक्षेऽपि भिन्नकालं ग्राह्यमिति वदद्भिः सौत्रान्तिकैश्च किमपराद्धमित्यत्राह— **इन्द्रिये**ति । अस्मदादीति विशेषणे तात्पर्यम् ; योगिज्ञानस्यानन्तरोक्तेः । क्वचिल्लिङ्गभूतेन्द्रियजन्यज्ञानव्यवच्छेदाय प्रत्यक्षोक्तिः । दीपादीनामपि स्थिति-क्षणेऽक्षसंप्रयोगान्नश्यत्क्षणे जायमाना धीस्तद्विषयैवेति समकालत्वं सिद्धम् । नश्यत्क्षणसंबन्धस्तु धियं जनयतीत्यत्र न प्रमाणम् ; तत्सद्भावेऽपि अगत्या तावन्मात्रे कालभेदः । तेन च भिन्नकालस्यापि ग्राह्यत्वं वदतामस्माकमभिमतसिद्धिः । यद्वा, वर्तमानस्येन्द्रियसंयोगस्यातीतानागतनिष्ठत्वायोगात्कारणभूतस्य संयोगस्य स्वसमकालवर्तिग्राहकत्वं तत्कार्ये प्रत्यक्षज्ञाने लक्षणयोक्तम् । अतोऽत्र नातिप्रसङ्गः । न च भ्रान्तितुल्यत्वम् ; यदा विषयः , तदा तथैव ग्रहणात् । ननु अनुमानागमजन्यज्ञानयोरपि क्वचित्स्वसमकालवर्तिविषयत्वं दृष्टम् ; यथा नित्यविषयेषु रसाद्रूपानुमानादिषु च , तस्मान्नोक्तनियमः ; ज्ञानत्वादिकमेव प्रयोजकं स्यादित्यत्राह— **न सर्वेषामि**ति । अयं भावः— नित्यप्रभृतिषु ज्ञानस्य समकालत्वं न धीत्वादिप्रयुक्तम् ; व्यभिचारात् । अस्मदादीन्द्रियजन्यप्रत्यक्षस्य तु नियतोऽयं स्वभाव इति । **ज्ञानाना**-मिति भ्रान्तिप्रमित्योः प्रत्यक्षपरोक्षयोश्च सामान्योपादानम् । **च**कारात्प्रत्यक्षाणां च । ज्ञानत्वादित्रिकस्याप्रयोजकत्वं व्यभिचारेण व्यनक्ति— **स्मरणे**ति । भ्रान्तिरपि स्मरणेनोपलक्ष्यते । अबाधितस्मृतेः प्रमाणत्वमिच्छतां पक्षेऽपि प्रमाणत्वाप्रयोजकत्वोक्तिरेवोत्तरम् । स्मरणशब्दश्च यथार्थायथार्थसाधारणः । **आदि**शब्देन मुक्तादिप्रत्यक्षसंग्रहः । **ग्रहणदर्शनात्**—ग्रहणस्य प्रमितत्वादित्यर्थः । ननु प्रमेयव्याप्यं हि प्रमाणम् ; अन्यथा क्वचिदर्थशून्यत्वेऽप्यविरोधात् , **तस्मात्प्रमितेः कथं स्वविषयभिन्नकालत्वम्** ? तत्राह— **अत** इति । समकालत्वनियमं हित्वा यथादर्शनं व्यवस्थापनादिति

वात् । एवकारः चोद्यनिरासस्यैव परिहारगम्यत्वार्थः । अयं भावः— यदि मानमेययोरविनाभावः समकालत्वेन, तदाऽतीतादिविषयप्रमितीनां प्रमात्वं न स्यात् । व्याप्तिश्च कार्यकारणादिभिः । तथाऽपि कारणाद्यनुमाने भिन्नकालतयाऽपि दृष्टेति । भिन्नकालत्वं तत्रतत्र दृष्टम् । तथाऽनुभूतिप्रागभावप्रमाणस्यापि स्यात् । अन्यथा कथं बुद्धेरर्थसंबन्धः । न च दीपोऽतीतं प्रकाशयतीति । अत्रात एवेत्यभिप्रेतं विवृणोति— न हीति । प्रमाणस्य अर्थसंबन्धः न हि स्वकालवर्तिनाऽविनाभाव इत्यन्वयः । किं तर्ह्यत्र विना न भवतीति विवक्षितमित्यत्राह— अपि त्विति । तथाविधाकारः— तद्देशत्वादिसंबन्धित्वप्रकारः । मिथ्यात्वप्रत्यनीकता—अनारोपितत्वम् । भ्रान्तिशङ्कोद्धारक्रमसूचनाय व्यतिरेकोक्तिः । अत्र प्रसङ्गात्परोक्तमर्थान्तरमपि निरस्यति— अत इति । भिन्नकालस्यापि विषयत्वस्थापनादित्यर्थः । नष्टेऽपीति वर्तमानत्वसंग्रहः । नष्टविषयस्मृतिन्यायाद्वर्तमानविषयस्मृतावपि बाह्यविषयत्वं त्याज्यमिति मन्यते । अत्रैवमुत्तरम्— स्मृतेर्बाह्यविषयत्वाभावे निर्विषयत्वं वा, स्वमात्रविषयत्वं वा, कल्पितस्वाकारविषयत्वं वा, आन्तरवस्त्वन्तरविषयत्वं वा स्यात् ? नाद्यः, अयुक्तत्वादनिष्टत्वाच्च । न द्वितीयः, अत एव, योगाचारविजयप्रसङ्गात्, स्वरूपप्रकाशातिरिक्तस्मृत्यसिद्धिप्रसङ्गाच्च । न तृतीयः, तुल्यन्यायतया । नापि चतुर्थः, तादृग्वस्त्वन्तरे मानाभावात् । अनुभूतिविषयस्वरूपान्तःकरणवृत्तिरेव स्मृतेर्विषय इति चेन्न ; स्मृतिरूपायास्तदतिरिक्ताया वा निष्प्रमाणकतया दत्तोत्तरत्वादिति । एतेन स्मृत्युदाहरणेन प्रत्यक्षेतरमानेषु सर्वेष्वपि बाह्यतुल्यान्तःकरणविकृतिरेव बाह्यवत् भातीति पक्षोऽपि निरस्तः ॥

**बाह्यत्वेन प्रतीतं चेत् यद्बाह्यं क्वापि कल्प्यते । अविशेषेण सर्वत्र तथा क्लृप्तिः प्रसज्यते ॥ ४६२ ॥**

**अथोच्येत— न तावत्संवित्प्रागभावः प्रत्यक्षावसेयः; अवर्तमानत्वात् । न च प्रमाणान्तरावसेयः; लिङ्गाद्यभावात् । न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते । नानुपपत्तिरपि कस्यचित् दृश्यते । न चागमस्तद्विषयो दृष्टचरः । अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यतीति । यद्येवं स्वतःसिद्धत्वविभवं परित्यज्य प्रमाणाभावेऽवरूढश्चेत्, योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान् ॥**

यदि तत्र स्वतः स्वप्रागभावं साधयता प्रत्यक्षविशेषे वर्तमानग्राहित्वनियमो नान्यत्रेति विभक्तम्, तत्र केन प्रमाणेन जनिता धीः स्वाभावग्राहिणीति विकल्पगर्भां प्रत्युक्तिं शङ्कते— अथेति । तत्र संप्रतिपन्नांशाभिप्रायेणाह— **न तावदिति** । **न प्रत्यक्षावसेयः**— प्रत्यक्षस्वरूपया स्वप्रतियोगिन्या धिया दुर्ग्रह इत्यर्थः । परोक्षग्राह्यत्वमपि निरस्यति— **न चेति** । लिङ्गाद्यभावं पृथग्व्यनक्ति— **न हीति** । अनुमानार्थापत्त्योरदूरविप्रकर्षात् अव्यवहितोक्तिः । स्वेष्टस्याप्यत्रोपमानस्यात्यन्तासंभवादनुक्तिः । फलितं स्वाभिमतषष्ठप्रमाणबाध्यत्वमाह—**अत इति** । **प्रमाणाभावात्**— प्रमाणपञ्चकनिवृत्तेरित्यर्थः । तथा च **शाबरम्**— * अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्येति । कारिका च—

* प्रमाणपञ्चकं यत्र वस्तुरूपे निवर्तते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ इति ।

परोक्तामनुपपन्नोक्तिं दूषयितुमाह— **यद्येवमिति** । प्रागस्मदुपक्षितयैवेत्येवकाराभिप्रायः । ग्रहणाभावात् संवित्प्रागभा-

वस्याभावं वदतो निषेध्यवस्त्वव्याघातः स्यादित्यभिप्रायेणानुक्तमेव विवृणोति— **स्वत** इति । **चे**दित्येतत् केषुचित्कोशेषु न दृश्यते । तदा **यदी**त्यादिकं **अवरूढ** इत्यन्तमेकं वाक्यम् । यथा त्वया स्वतःसिद्धत्वबलं त्यक्तम्, तथाऽहमपि स्वतः स्वाभावग्रहणमादृत्य त्वदुपक्षितं प्रतियोगिविषयप्रमाणाभावमेव संविदभावे प्रमाणयामीत्याह— **योग्ये**ति । प्रतिबन्दिमात्रशङ्काव्युदासाय **समर्थित**शब्दः । प्रत्यक्षसामग्रीप्रविष्टेन षष्ठप्रमाणेन ज्ञानस्याभावं साधयन् महाप्राज्ञोऽसीत्युपहासार्थ इह **भव**च्छब्दः ।

**स्वज्ञानाभावदृष्ट्या हि ज्ञानिनस्त्वं प्रपचसे । अज्ञातं पृच्छ्यमानश्च न जानामीति भाषसे ॥ ४६३ ॥**
**परधीजननार्थं च त्वया वाक्यं प्रयुज्यते । शृणोषि च स्वधीसिद्ध्यै कथं नित्यां ब्रवीषि ताम् ॥४६४॥**
**प्रत्यक्षाद्यैः सुषुप्त्यादौ न हि धीः क्वापि गम्यते । ग्राह्यग्राहकधीस...................... ॥ ४६५ ॥**
**पूर्वोत्तरसुषुप्त्यादिग्राहिणी च स्वयं मतिः । स्वाभावमपि गृह्णाति तत्तन्मानसमुद्भवा ॥ ४६६ ॥**
**अतो यथोचितैर्मानैः स्वस्यान्येषां च संविदः । विषयादिविशिष्टायाः प्रागभावः प्रसाध्यते ॥ ४६७ ॥**
**[ज्ञानद्रव्यस्य नित्यत्वं युक्तिभिः स्थाप्यते न तु । तत्तत्प्रसृतिभेदानामुत्पत्त्यादीति भाष्यते ॥ ४६८ ॥]**
**तत्र यद्यपि नित्यत्वं ज्ञानद्रव्यस्य वक्ष्यते । तथाऽपि प्रसृताकारे प्रागभावादिभाषणम् ॥ ४६९ ॥**
**मृद्घटादिनयाद्बुद्धेः स्थिरागन्तुकधर्मिणः । नित्यानित्यत्ववादानां यथाभागं प्रमाणता ॥ ४७० ॥**
**परस्तु सविकारत्वं श्रुतं ज्ञानस्य नेच्छति । असत्पक्षसमानत्वमतस्तैर्नात्र दुर्वचम् ॥ ४७१ ॥**

किं च, प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत् तस्य न सर्वदा सत्तामवगमयत् दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्, संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेतेति नित्यः स्यात् । नित्यं चेत्संवेदनं स्वतःसिद्धं नित्यमित्येव प्रतीयेत । न च तथा प्रतीयते ।

**उक्तसंविदनित्यत्वग्राहकानुग्रहक्षमम् । प्रसङ्गत्रितयं वक्तुमथ किञ्चेति भा[ष्य]षते ॥ ४७२ ॥**

किं सर्वलोकविदितं सविषयमेव ज्ञानं नित्यमिति त्वया साध्यते, उत निर्विषयमन्यदिति विकल्पं मत्वा प्रथमे बाधका उच्यन्ते । अत्रार्थापत्तिरेका, अस्या अनुग्राहकद्वयमिति केचित् । **प्रत्यक्षज्ञानम्**—अस्मदादीन्द्रियजन्यधीरित्यर्थः, योगिप्रत्यक्षं हि त्रैकालिकविषयमिति । **स्व**शब्दावत्र धीविषयौ । **साधयत्** व्यवहारानुगुणीकुर्वत् । **सर्वदा**—यावत्स्वविषयकालम् । **पूर्वोत्तरकालसत्ता**—प्रागभावप्रध्वंसकालावच्छिन्नसत्ता । **न प्रतीयते**-न व्यवहारानुगुणीभवतीत्यर्थः। तेन ज्ञाननित्यत्वस्य को विरोध इत्यत्राह— **तदि**ति । **कालपरिच्छिन्नतया** स्वविषयावच्छिन्नकालमध्ये अल्पतरकालवर्तितयेत्यर्थः । घटादेर्यावत्सत्त्वं प्रकाशमानत्वं प्रसञ्जितम्; न केवलं तावन्मात्रम्, नित्यत्वमपि प्रसक्तमित्याह— **घटादी**ति । अस्मदादीनां घटादिप्रत्यक्षमतीतानागतानालम्बनं यावत्स्वकालं स्वविषयसत्तां स्थापयतीति भावः ।

**प्रत्यक्षज्ञानमि**त्यादि **स्यादि**त्यन्तमेकतर्कविषयं वा । एवं वेद्यप्रकाशव्यवस्थया तदनित्यत्वाच्च विरोध उक्तः । वित्तिप्रकाशव्यवस्थयाऽप्याह— **नित्यमि**ति । **स्वतःसिद्धमि**ति हेतुगर्भम् । बुद्धेरनित्यत्वं बुद्ध्यन्तरं चानिच्छता त्वयाऽन्यतो धीनित्यत्वस्य वक्तुमयुक्तत्वादित्यर्थः । **एव**कारः संशयाद्यसंभवप्रसञ्जनार्थः ।

**वित्त्यन्तरेण [वित्तित्वेनैव] तु धियो नित्यत्वं यदि साध्यते । अभावप्रतियोगित्वमपि तद्वत् प्रसाध्यताम् ॥**
**विषयीकृत्यनर्हत्वात्प्रागभावादि निर्वदन् । अन्योन्याभावमप्येवं त्यक्त्वा मिथ्यैक्यमिच्छतु ॥ ४७४ ॥**

**एवमनुमानादिसंविदोऽपि कालानवच्छिन्नाः प्रतीताश्चेत्स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते च सर्वे कालानवच्छिन्ना नित्याः स्युः; संविदनुरूपस्वरूपत्वाद्विषयाणाम् । न च निर्विषया काचित्संविदस्ति; अनुपलब्धेः । विषयप्रकाशन[स्वभाव] तयैवोपलब्धेरेव हि संविदः स्वयंप्रकाशता समर्थिता । संविदो विषयप्रकाशतास्वभावविरहे सति स्वयंप्रकाशत्वासिद्धेः अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात् । न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरतीति वाच्यम्; योग्यानुपलब्धिपराहतत्वात् । तास्वपि दशास्वनुभूतिरनुभूता चेत् तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्; न च तदस्ति ॥**

प्रत्यक्षधियो नित्यत्वं पुरस्कृत्योपलम्भविरोधो विषयनित्यत्वं च प्रसञ्जितम्; परोक्षधियामपि नित्यत्वे तत्प्रसञ्जयति— **एवमि**ति । प्रत्यक्षोक्तप्रकारसाम्यादित्यर्थः । **संविद्** इति । ननु अनुमानादिधियां न स्वकालवर्तिप्रकाशननियमः । सत्यम्, अयंत्विह भावः— यत्र आसां वर्तमानप्रकाशकत्वं तत्र संविदवच्छिन्नकालवर्तित्वग्रहाद्विषयनित्यत्वप्रसक्तिः स्यादेव । अनागतादिप्रकाशनेऽपि धीनित्यत्वे तदवच्छिन्नकालप्रतियोगिकस्य विषयातीतत्वादेरसिद्धिः । यत्र लिङ्गस्य प्रत्यक्षत्वं तत्र तन्नित्यत्वं पूर्वोक्तप्रकारेण प्राप्तम् । तथा च तद्व्यापकस्यापि नित्यत्वप्रसक्तिरिति । ननु स्वयं नित्याऽपि घटादिसंवित्कदाचिदेव घटादीनुल्लिखतु; मैवम्—

**अर्थोल्लेखस्वभावा चेन्मितिस्तस्य विसर्जने । निःस्वभावा प्रसज्येत तथा वा परिणामिनी ॥ ४७५ ॥**
**अथ निर्विषयत्वं तत्स्वभावस्तादृशी कथम् । अर्थबोधस्वरूपा स्यादवस्थाद्वयवर्जनात् ॥ ४७६ ॥**

**कालानवच्छिन्न**शब्देन कालादिसर्वानुगतनित्यशब्दनिमित्तोक्तिः । अतो न पुनरुक्तिः । यद्वा त्वन्मतेऽपि देहिनां कालावच्छिन्नतया भातानामपि श्रुत्याद्यैस्तद्विपरीतत्वं सिद्धम्; तद्वत्संविदि तद्विषयेषु चापातप्रतीतविपरीतं नित्यत्वमनित्यत्वं च स्यादित्यत्राह— **संविदि**ति । **संविदनुरूपत्वं** तत्प्रकाशितप्रकारेणावस्थानम् । अयंत्विह भावः—संविदेव हि नीलपीतादिव्यवस्थायां शरणम्; स्वतःप्रमाबाधे त्वन्यथा; तव तु बाधकज्ञानस्याप्युक्तरीत्या स्वरूपतो विषयतश्च नित्यत्वप्रसक्त्या अध्यासानुदयप्रसङ्गः । ततश्च बाधकासंभवाद्यथाप्रकारं विषयनित्यत्वं सिध्येदिति । भवतु सविषयस्यान्तःकरणवृत्तिविशेषस्य तदवच्छिन्नचैतन्यस्य च उत्पत्त्याद्युपलब्धिः, विषयाश्रयशून्या तु संविन्नित्या

स्यादिति पूर्वोक्तविकल्पयोः कोऽन्यन्तरं निरस्यति— **न निर्विषयेति**। एतेन निराश्रयत्वमप्युपलक्ष्यते। यद्वा, विषिणोतीति विषयः, विशेषेण संबध्नातीत्यर्थः ; तेन संविदवच्छेदकं वेद्यं वेदिता च संगृह्यते। किमत्र घटादि-विषयसंविदोऽन्या काचिन्निर्विषयेत्युच्यते, उत वस्तुवृत्त्या सैवेति विकल्पे द्वयोरप्ययोगमभिप्रेत्याह— **काचिदिति**। तत्रैव दृष्टेस्तदभावे तदसिद्धिरित्युक्तम्। उभयत्र बाधकमाह— **अनुपलब्धेरिति**। योग्यत्वे सतीति विशेषणीयम्। परास्युपगतिविरोधमप्याह— **विषयेति**। प्रसिद्धायाः संविदो निर्विषयत्वं वा तादृशसंविदन्तरं वा युक्तिशास्त्राभ्यां साधयाम इत्यत्रानिष्टमाह—**संविद् इति**। **विषयप्रकाशतास्वभाव**शब्देन प्रागुक्तानुमानं सूच्यते। अयं भावः— विषयप्रकाशत्वं संविदः स्वरूपं धर्मो वा? आद्ये तन्निवृत्तिं वदतः कथं धर्मिसाध्ययोः सिद्धिस्तत्र? द्वितीये तस्य स्वप्रकाशत्वसमकालतयैव दृष्टेस्तदभावे तदसिद्धिरिति। स्वतः परतो वा अप्रकाशमानं तुच्छं मन्यसे; संविदि तु उभयासंभवात्तुच्छाद्व्यावृत्तिर्दुर्लभेत्यवधारणाभिप्रायः। यद्वा सत्त्वकोटिर्दूरनिरस्ता; अनिर्वचनीयकोटिरपि अलभ्येति भावः। अनुभूतित्वात्तत्सिद्धिरिति चेत्; अनुभूतित्वं नाम विषयप्रकाशत्वं चेत्, तद्दूषितमेव। स्वप्रकाशत्वं चेत् साध्याविशेष इति।

**स्वावच्छेदकनिर्मुक्तसंविन्नित्यत्वमिच्छता। संयोगच्छेदनादौ च किं न तादृक्त्वमिष्यते ॥ ४७७ ॥**
**घटाकाशादिनीतिश्च त्वया संविदि दुर्भणा। तत्तत्संयोगविश्लेषतुल्यागन्तुगुणोज्झनात् ॥ ४७८ ॥**

अनुपलब्धेरित्युक्तस्यावस्थान्तरेष्वसिद्धिशङ्कां परिहरति—**न च स्वापेति**। **आदि**शब्देन समाध्यवस्थासंग्रहः। **केवला**— अहङ्कारविगमान्निराश्रयेत्यर्थः। अत्र दत्तोत्तरत्वमभिप्रेत्याह— **योग्येति**। ननु स्वापादिदशावर्तिनी जागरवर्तिनी वा योग्यानुपलब्धिरिहोपलक्ष्यते? नाद्यः; तदानीमिदानीं वा तदित्यसत्, अध्यस्ताश्रययोगादेरत्राप्यनुपपादनात्, तात्त्विकानुपलम्भस्यानुपलम्भात्। न द्वितीयः; कालान्तरसंविदः कालान्तरे प्रत्यक्षयोग्यत्वायोगात्; तत्तदधीनव्यतिरिक्तहेतुसाकल्यं हि योग्यत्वम्। अतो योग्यानुपलब्धिपराहतत्वादिति हेतुरसिद्धः; तत्राह— **तास्विति**। अयं भावः— स्वापादिषु संविदासीदिति अद्यतनोपलब्धिस्तावत् योग्यानुपलब्ध्या निरस्ता। तदानीन्तनसंविदः तदातनोपलब्धिश्च व्यापकानुपलब्ध्या बाधितेति। स्मर्तव्यस्य स्मरणमुपलम्भव्यापकम्; तदभावात्तदभाव इत्यभिप्रायेणाह— **न च तदिति**।

ननु अनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः, अतः स्मरणाभावः कथमनुभवाभावं साधयेत्? उच्यते—निखिलसंस्कारतिरस्कृतिकरदेहविगमादिप्रबलहेतुविरहेऽप्यस्मरणनियमोऽनुभवाभावमेव साधयति। न केवलमस्मरणनियमादनुभवाभावः; सुप्तोत्थितस्य इयन्तं कालं न किञ्चिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः। न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहादहङ्कारविगमाद्वेति शक्यते वक्तुम्; अर्थान्तराननुभवस्यार्थान्तराभावस्य च अनुभूतार्थान्तरास्मरणहेतुत्वाभावात्। तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते ॥

स्मृतेरनुभवव्यापकत्वाभावात्तदभावस्य तदभावलिङ्गत्वं नास्तीति चोदयति— **नन्विति**। विशिष्टरूपेण व्याप्तिं स्थापयति— **उच्यत** इति। **निखिलशब्दः** प्राचुर्याभिप्रायः; अन्यथा जातमात्रस्य स्तन्याभिलाषायोगात्। **तिरस्कृतिः** इह नाशः प्रतिबन्धो वा। * प्रायणान्नरकक्लेशात्प्रसूतिव्यसनादपीत्यादिषु प्रसिद्धमाह— **देहविगमादीति**। प्रभूतं सुखमपि आदिशब्देन संगृहीतम्। जातिस्मरादीनां तादृशप्रबलप्रतिबन्धकसद्भावेऽपि स्मृतिरदृष्टातिशयाद्भवति; तदभावादन्येषु देहविगमादेः प्रबलत्वम्; दुर्बलव्याक्षेपादेर्विरोधित्वनियमो न स्यादिति भावः। न हि अन्यदेहविगमादिभिरन्यथासिद्धिरित्यवधारणाभिप्रायः। नात्र साधकस्य स्मरणस्याभावमात्रम्; किं तु साक्षान्निषेधबुद्ध्या बाध एवेत्याह— **न केवलमिति**। ननु सुषुप्तिकालः तदवच्छिन्नं सर्वविषयज्ञानं च तदानीमननुभूतं कथमिदानीं परामृश्यते? इत्थम्— सुषुप्तिकालस्तावदनुमानादिसिद्धः; तदानीं यदि किञ्चिन्मयाऽनुभूतं तदद्य मया स्मर्येत, न च स्मर्यत इत्यस्मरणनियमादेव तदानीमनुभवाभावसिद्धिरिति। * सुखमहमस्वाप्समित्यतीतकालावच्छिन्नं स्वापं परोऽप्युदाहरति। अत्रास्मर्यमाणस्यान्यथासिद्धिमनूद्य निरस्यति— **न चेति**। सुषुप्तौ बाह्यार्थाः सन्तोऽपि नोपलभ्यन्ते; तच्छरीरस्थोऽहङ्कारोऽपि लीयते; अज्ञानं सुखरूप आत्मा च साक्षिप्रत्यक्षेण गृह्यत इति पराभिमतप्रकारेणायमनुवादः। यदि विषयाश्रयविरहेण स्मृत्यसंभवः; तदा अनुभवस्वरूपमपि तद्विरहे न स्यात्; सर्वत्र तद्वत्तयैव तस्यापि दृष्टेरित्यभिप्रायेण अशक्यत्वोक्तिः। ननु सुषुप्तावाश्रयाभावात् वृत्त्यसिद्धेस्तस्यास्मरणम्; साक्षिस्फुरणं तु न संस्कारजनकम्; अतोऽस्मरणमेव स्यात्। मैवम्, त्वदभिमतपरामर्शस्याप्यसिद्धिप्रसङ्गादित्यभिप्रायेण **न शक्यते वक्तुमि**त्युक्तम्। अतिप्रसङ्गसूचकं हेतुमाह— **अर्थान्तरेति**। अत्राहङ्कारशब्देन त्रिगुणकार्यविवक्षायामाप्रलयात्तस्यावस्थानमस्ति; अहमर्थभूतप्रत्यगात्मविवक्षायां प्रलयेऽपि स्थायिनस्तस्य कथं सुषुप्तौ विच्छेद इत्यभिप्रायेणाह— **तास्वपीति**।

**ननु स्वापादिदशास्वपि सविशेषोऽनुभवोऽस्तीति पूर्वमुक्तम् सत्यमुक्तम्, स तु आत्मानुभवः। स च सविशेष एवेति स्थापयिष्यते। इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते। केवलैव संविदात्मानुभव इति चेन्न; सा च साश्रयेति हि उपपादयिष्यते। अतोऽनुभूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम्। अनुभूतेरनुभाव्यत्वसंभवोपपादनेनान्यतोऽप्यासिद्धिर्निरस्ता। तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती॥**

सुषुप्तावनुभवाभावं वदतः प्राक्तनस्ववचनविरोधः स्यादिति चोदयति— **नन्विति**। पूर्वोक्ततात्पर्यं न जानासीति प्रतिवक्ति—**सत्यमिति**। विरोधव्युदासाय विवक्षितं विशेषं व्यनक्ति— **स** इति। तुशब्दोऽनुभूत्यनुभवव्यवच्छेदार्थः। **आत्मानुभवः**— स्वयंप्रकाशस्याहमर्थस्य।

**यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनं, तदप्यनुपपन्नम्; प्रागभावे व्यभिचारात्। तस्य हि जन्माभावेऽपि विनाशो दृश्यते। भावत्वेसति विशेषणे तर्ककुशलताऽऽविष्कृता**

**भवति। तथा च भवदभिमता अविद्या अनुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम्। तद्विकाराः सर्वेऽपि मिथ्याभूता इति चेत्; किं भवतः परमार्थभूतोऽप्यस्ति विकारः? येनैतद्विशेषणमर्थवद्भवति, न ह्यसावभ्युपगम्यते॥**

स्वधर्मप्रमाणक्षणवैयर्थ्यमाह— **किमिति**। विशेषणसाफल्यार्थं क्वचित् सत्यविकाराभ्युपगमेऽपसिद्धान्तमभिप्रेत्याह— **न हीति**। यत् सत्यविकारवत् तदुत्पन्नमिति व्यतिरेकव्याप्तिश्च त्वया दुर्वचा; घटादेः सत्यविकाररहित्ये साध्याभाववद्व्यावृत्ततया न व्यतिरेकदृष्टान्तत्वम्; केवलान्वयिदृष्टान्तत्वविवक्षायां हेतोः अस्याभीष्टं व्यावृत्तिसाधकत्वं भज्येत, व्यर्थं च भावत्वविशेषणम्; प्रागभावस्यापि त्वन्मते परमार्थविकाररहितत्वात्।

**यदपि अनुभूतिरजत्वात् स्वस्मिन् विभागं न सहत इति, तदपि नोपपद्यते; अजस्यैवात्मनो देहेन्द्रियादिभ्यो विभक्तत्वात्। अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स विभागो मिथ्यारूप इति चेत्, जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया? अविद्याया आत्मनः परमार्थतो विभागाभावे स्वतुतो ह्यविद्यैव स्यादात्मा। अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव; छेद्यभेदाच्छेदनभेदवत्॥**

हेतुरयं साध्यान्तरेऽपि दुष्ट इति वक्तुमनुवक्ति— **यदपीति**। इहापि हेतोरसिद्धिर्विपक्षवृत्तिश्च समेत्यभिप्रायेणाह— **तदपीति**। अत्र यतः कुतश्चिद्वा विजातीयाद्वा सजातीयाद्वा भेदो निषिध्यत इति विकल्पे, त्रिष्वपि प्रागभावे व्यभिचारः स्पष्टः। प्रथमद्वितीययोः प्रामाणिकमतेन विपक्षवृत्तित्वमाह—**अजस्येति**। * न जायते म्रियते वा विपश्चित्, * पिण्डः पृथग्यतः इत्यादिकमिह सूच्यम्। यद्वा, बाधोऽत्र प्रदर्श्यते; तव खलु अनुभूतिरेवात्मा; स चानुत्पन्नो देहादिविलक्षणश्च, त्वयाऽपि श्रुत्याऽपि स्थाप्यत इति। परमतेन विपक्षवृत्तित्वमाह— **अनादित्वेनेति**। आत्मा ह्यविद्याव्यतिरिक्तः; तस्यास्तस्माद्भेदश्च त्वयैव साध्यत इति भावः। प्राग्वत् साध्यविशेषणं शङ्कते— **स इति**। **विभाग** इह भेदः। तथैव मिथ्यात्वविशेषणवैयर्थ्यव्याप्तिभङ्गादिकं च व्यनक्ति— **जन्मेति**। **प्रतिबद्धः**– व्याप्य इत्यर्थः। सर्वोपप्लावकमनिष्टान्तरमाह — **अविद्याया इति**। **हिः** प्रसङ्गस्य दुस्तरत्वप्रसिद्ध्यर्थः। **एवकारः** स्वपरप्रतिक्षिप्तचार्वाकादिमतोत्थानं व्यनक्ति।

**किं च धीस्ते खपुष्पादेर्भिन्नाऽभिन्नाऽथ वा भवेत्। भेदेऽसौ बाधितो हेतुरभेदे तुच्छतादयः॥ ४७९॥**

तृतीयमपि कल्पं निरस्यति— **अबाधितेति**। ननु दृश्यभेदेऽपि दर्शनैक्यं दृष्टमिष्टं च; **छेद्यभेदात्** इत्यादि चात्रासाधकमयुक्तं च; एकेन छेदनव्यापारेण अनेकेषु छिन्नत्वदर्शनात्। मैवम्; दृश्यभेदसमर्थनन्यायेनाबाधितप्रतिपत्तिसिद्धतया दर्शनभेदोऽपि सिध्यत्येवेति तात्पर्यात्, दृष्टान्तोक्तेश्च। घटाद्यवच्छिन्नाकाशैक्यदृष्टान्तवादिनां

विरुद्धदृष्टान्तसंभवख्यापनपरत्वादिति केचित्। **न्यायसुदर्शनोक्तं** तु ब्रूमः— * दृश्यभेदो दृशिकर्मत्वाकारेण भेदः; यदि सर्वत्र एकैव दृशिः तर्हि दृष्टादृष्टविभागो न स्यात्; सन्ति हि सर्वज्ञेतरदृशीनां प्रतिनियता दृश्यभेदाः। एवं छेद्यभेदोऽपि छिदिकर्मत्वाकारेण भेदः। एकेन छेदनेन यत्र छिन्नं तस्य पूर्वच्छिन्नाद्भिन्नत्वेन तद्विषयच्छेदनमपि पूर्वच्छेदनाद्भिन्नम्। तद्वदिहेति निदर्शनं ग्राह्यम्। प्रयोगश्च—विगीता दृशिः एतद्दृशिगोचरानालम्बिदृशेरन्या तद्गोचरानालम्बित्वात् घटवत्। व्यतिरेकतो वा यथा सैव दृशिरिति।

* अथ वाऽनुमितिर्मा भूत् प्रत्यक्षेणैव सिध्यति। दृष्टादृष्टतया सिद्धैर्विषयैर्भिन्नता धियाम्॥ [इति।]

यदपि नास्या दृशेर्दृशिस्वरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति, दृश्यत्वादेव तेषां न दृशिधर्मत्वमिति च; तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्; स्वरूपभेदात्। स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम्। स्वयंप्रकाशता तु स्वसत्तयैव स्वाश्रयाय प्रकाशमानता। प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम्। सर्वकालवर्तमानत्वं हि नित्यत्वम्। एकत्वमेकसङ्ख्यावच्छेद इति। तेषां जडत्वाद्यभावरूपतायामपि तथाभूतैरपि चैतन्यधर्मभूतैस्तैरनैकान्त्यमपरिहार्यम्। संविदि तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत् तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्॥

अथ स्वगतभेदनिरासाय पूर्वोक्तं केवलव्यतिरेकिणं केवलान्वयिनं च **यदपीत्यादिना**ऽनूद्य **तदपीत्यादिना** दूषयति। **दृशिस्वरूपाया** इति हेतुपरम्। नित्यत्वादिधर्मपरित्यागेऽपसिद्धान्तो बाधश्च स्यादित्यभिप्रायेण **स्वाभ्युपगतैः प्रमाणसिद्धैरि**त्युक्तम्। अत्र व्यतिरेकिणोऽसाधारणानैकान्तिकत्वमन्वयिनस्साधारणानैकान्तिकत्वं च विभजनीयम्। नित्यत्वादिधर्माणां च धर्मान्तराभ्युपगमेऽनवस्था स्यात्। परिहारार्थं च क्वचिन्निर्धर्मकत्वे ग्राह्ये वरं नित्यत्वादेरेव तथात्वस्वीकरणम्।

**मूलच्छेदोज्झितेऽप्यत्र सोढा चेदनवस्थितिः। सधर्मकत्वे सर्वेषां भातत्वाद्धीस्तथा न किम्॥ ४८०॥**
**निर्धर्मकत्वधर्मे च नित्यत्वादेर्विशेषणे। अनुभूतेः सधर्मत्वमयत्नादेव सेत्स्यति॥ ४८१॥**

अतो नित्यत्वादावन्यत्र वा क्वचिदाश्रयविशेषसद्भावेऽपि धर्मानाश्रयतया सपक्षे दृशित्वादिति हेतुरवर्तमानोऽसाधारणोऽनैकान्तिकः। अत्र हेतुसाध्यधर्मसदसद्भावयोः स्ववचनविरोधबाधादिकमपि द्रष्टव्यम्। बाधितस्यापि व्याप्तिभङ्गादनैकान्तिकोक्तिरिति केचित्। दृश्यत्वादित्यत्र तु, किं नित्यत्वादयो धर्माः पक्षीकृताः उत न? आद्ये स्वाभ्युपगमादिविरोधः। द्वितीये विपक्षेषु तेषु वृत्तिरिति। ननु संवित्स्वरूपमेव नित्यत्वादिशब्दैरभिलप्यते; अतो व्यतिरेकिणि सपक्षः अन्वयिनि विपक्षश्च नास्तीत्यत्राह— **न चेति**। अत्र विरोधगर्भं हेतुमाह— **स्वरूपेति**। धर्मिस्वरूपाद्धर्मान्तरस्वरूपाच्च

भेदादित्यर्थः ।

**स्वरूपे संमते यत्र विवादी प्रतिवर्तते । स्वरूपादधिको धर्मस्तत्र सर्वत्र दुस्त्यजः ॥ ४८२ ॥**

* **वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनादि**ति प्रागुक्तमिह प्रतिसन्धेयम् । हेतुव्यावृत्तिसिद्ध्यै धर्मिस्वरूपं तावदाह— **स्वसत्तये**ति । दीपादिवत्स्वजन्यज्ञानमनपेक्ष्येत्येवकारार्थः । धर्मेषु धर्मितादात्म्यशङ्कातिरेकात् स्वयंप्रकाशत्वम् पूर्वं विविङ्क्ते—**स्वय**मिति । एवकारः स्वगोचरज्ञाननैरपेक्ष्यार्थः । अतिप्रसङ्गनिरासाय **स्वाश्रय**ग्रहणम् । ननु प्राकट्यं पूर्वपक्षिणा निरस्तं, न वाऽस्माभिः क्वचित्प्रतिसमाहितम्, तदिह ग्रन्थद्वयोक्ते विषये विषयिणि च कः प्रकाशशब्दार्थः इत्यत्राह—**प्रकाशे**ति । अप्रकाशमानस्य कस्यापि सत्तैव न सिध्येदित्यभिप्रायेण **अशेषशब्दः**। **व्यवहारानुगुण्यम्**—इह व्यवजिहीर्षाव्यतिरिक्तो व्यवहारहेतुविशेषः, उत्पन्ने हि ज्ञाने विषयस्य विषयिणश्च ज्ञानानुत्पत्तिरूपमपि व्यवहारानर्हत्वं निवर्तते । अनेनैव ग्रन्थेन परोक्तं प्राकट्यमङ्गीकृतमिति केचित् ; प्रमेयान्तरविरोधाभावात् । ज्ञानस्य तदनुमेयत्वानङ्गीकारस्तु विशेषः । कालव्यतिरिक्तानुगतं संविदि नित्यत्वमाह—**सर्वे**ति । अशेषनित्यानुगतं कालानवच्छिन्नत्वं प्रागुक्तम् । एकं ब्रह्मेति साधयता परेण न हि मुख्यत्वान्यत्वादिकं साध्यते; अपि तु आत्मद्वित्वादिव्यावर्तकं किञ्चित् । तच्च मतभेदेन गुणपदार्थो वा अतिरिक्तपदार्थो वा, गुणैकत्वं नायनधीविशेषोपस्थाप्यतदितरसमुच्चयराहित्यं वा, अन्यद्वा किमपि स्वरूपातिरिक्तं नानात्वशङ्कानिरासकमेष्टव्यमित्यभिप्रायेणाह— **एकत्व**मिति । **एकसंख्यावच्छेदः**— एकसंख्यारूपो व्यावर्तकधर्म इत्यर्थः । एकमिति संख्याया द्व्यादिभ्यो व्यावृत्तिर्वा । प्रकारज्ञानत्वादिधर्मान्तरप्रदर्शनार्थं **इति**शब्दः । इति स्वरूपभेदादित्यन्वयः । भावाद्वैतपक्षेणातद्व्यावृत्तिरूपधर्मत्वमाशङ्क्याह—**तेषा**मिति । **तथाभूतैर**पीति । अभावरूपैरपीत्यर्थः । एतेन तेषां निर्धर्मकत्वं सूच्यते । ततश्च व्यतिरेकिणः स्ववृत्तिशून्यसपक्षवत्त्वादनैकान्त्यम् । **चैतन्यधर्मभूतै**रिति अन्वयिनोऽनैकान्त्याथम् । सर्वधर्मशून्यत्वपक्षे दोषमाह—**संविदी**ति । यथा शौक्ल्यादौ स्वरूपे कार्ष्ण्यादिसंशयानर्हतया ततो भेदः तथा संविदि दुर्वचमित्यभिप्रायवान् तुशब्दः । **किमपि नोक्तं भवेत्**— प्रतिवाद्यनभिमतं पदान्तरैरनुक्तं च किञ्चिन्नोक्तं स्यात् । ततश्च सिद्धसाधनत्वपौनरुक्त्यादिप्रसङ्ग इति भावः ।

अपि च संवित्सिध्यति वा न वा । सिध्यति चेत्, सधर्मता स्यात । न चेत् तुच्छता ; गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्, कस्य कं प्रतीति वक्तव्यम् । यदि न कस्यचित्कंचित्प्राति, सा तर्हि न सिद्धिः ; सिद्धिर्हि पुत्रत्वमिव कस्यचित्कंचित्प्रति भवति । आत्मन इति चेत्, कोऽयमात्मा । ननु संविदेवेत्युक्तम् ; सत्यमुक्तम् ; दुरुक्तं तु तत् । तथा हि— कस्याचित्पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया तत्संबन्धिनी सा संवित् स्वयं कथमिवात्मभावमनुभवेत् ॥

तिष्ठन्तु नित्यत्वस्वयंप्रकाशत्वादयः; स्वरूपप्रकाशमात्रेणापि सधर्मकत्वसिद्धिं वक्तुमाह— **अपिचे**ति । स्वतः परतो वेति विचारं त्यक्त्वा सिद्धिमात्रं विकल्पयति—**संविदि**ति । **सिध्यति**—प्रकाशत इत्यर्थः । पूर्वत्रेदमनुमानद्वयं

बाधितविषयमित्यभिप्रायेणाह—**सिध्यति चेदिति** । **सधर्मता**—सिद्धिरूपधर्मेण तत्साधकप्रमाणोपनीतैः प्रत्यक्षत्वादिभिरिति शेषः ।

**घटो घटत्वान्निर्धर्मा दृश्यत्वाच्च तत्र न । इत्यादिवदिमौ हेतू हास्याविति च सूच्यते ॥ ४८३ ॥**

उत्तरत्र व्यतिरेकिण आश्रयासिद्धिम् अन्वयिनः साध्यप्रतियोगिनिरूपणासिद्धिं चाभिप्रेत्याह— **न चेदिति** । स्वतोऽन्यतो वा भानाभावाद्धि खसूनादेस्तुच्छतां ब्रवीषीति निदर्शयति— **गगनेति** । अत्र गमनं गच्छति वा न वा, वचनं वक्ति वा न वेत्यादिवज्जात्युत्तरत्वं मन्वानेन सधर्मकत्वं तुच्छत्वं च परिजिहीर्षता परेणोक्तं शङ्कते—**सिद्धिरिति** । एवकारः सिद्धेः किं सिद्ध्यन्तरेणेति द्योतनार्थः । तथाऽपि सविशेषत्वं दुस्त्यजमित्यभिप्रायेण पृच्छति— **कस्येति** । साश्रयत्वं सविषयत्वं च धर्मिग्राहकसिद्धं नास्तीति वक्तुं न शक्यमिति भावः । उभयपरित्यागेन प्रत्युक्तिं शङ्कते— **यदीति** । तत्र स्वरूपस्यापि त्यागं प्रसञ्जयति— **सेति** । उक्तं निदर्शनेन स्थापयति— **सिद्धिर्हीति** । यथाव्युत्पत्ति सिद्धिशब्दार्थः संग्राह्यः, अन्यथाऽतिप्रसङ्गादित्याशयः । प्रत्यगात्मनः प्रत्यगात्मानं प्रति सिद्धिरियमिति परोक्तमनुवक्ति— **आत्मन** इति । आवृत्त्या षष्ठी चतुर्थी वाऽत्र योज्या ; षष्ठ्या एव वा सामान्यमुखेन संबन्धद्वयपरत्वम् । परपक्षे ब्रह्मणो बोद्धृत्वाभावात्संविन्मात्रस्य तस्य प्रकाशफलित्वाभावेन स्वस्मै भासमानत्वाभावाच्च **आत्मन** इत्युक्तिरयुक्तेत्याक्षिपति— **क** इति । **अयं**शब्देन सिद्धिप्रतिसंबन्धितया प्रत्यग्रूपत्वं सूच्यते । ईदृशात्मलक्षणमहमर्थस्यैव न तु त्वदिष्टस्य चिन्मात्रस्येति भावः । अज्ञाताभिप्रायः प्रश्नभ्रान्त्या पूर्वपक्षोक्तमुद्गृह्णाति—**नन्विति** । एवकारो भेदमिथ्यात्वाभिमानादाश्रयाश्रयिभावव्युदासार्थः । संविदात्मत्वं निराचिकीर्षुः तदुक्तिमात्रमभ्युपगच्छति— **सत्यमिति** । तत्प्रतिपाद्ये तु अर्धाङ्गीकारोऽपि नेत्याह— **दुरुक्तमिति** । **तुः** वचनदोषमात्रव्युदासार्थः । **कस्य कं प्रतीति** प्राक्सूचितेन विरोधेन दुरुक्ततां विवृणोति— **तथाहीति** । निर्विशेषस्यैकस्यैव निर्विकल्पकेऽप्यसिद्धेस्तत्रापि विशिष्टानेकस्फुरणव्यञ्जनाय **जात**शब्दः । **तत्संबन्धिनी**—विषयाश्रयवतीत्यर्थः । अहमर्थस्वरूपसंविद्व्यवच्छेदार्थं **सा** इत्युक्तम् । स्वस्य स्वाश्रयत्वविरोधव्यक्त्यै **स्वयं**शब्दः ॥

एतदुक्तं भवति—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः, घटमहं जानामि, इममर्थमवगच्छामि, पटमहं संवेद्मीति सर्वेषामात्मसाक्षिकः प्रसिद्धः । एतत्स्वभावतया हि तस्याः स्वयंप्रकाशता भवताऽप्युपपादिता । अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत्कर्तृत्वमपि दुर्घटमिति । तथा हि— अस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिव उत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते । कर्तृस्थैर्यं तावत् स एवायमर्थः पूर्वं मयाऽनुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम् । अहं जानामि, अहमज्ञासिषम्, ज्ञातुरेव ममेदानीं ज्ञानं नष्ट-

**मिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम्? एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमपरेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते; अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसंभवः ॥**

ननु आत्मनः स्वयंप्रकाशत्वमिच्छतां सर्वेषामात्मसंवित्त्वयोर्न विरोधः; **सिद्धिरूपतये**त्यत्र च उत्पत्तिरूपत्वविवक्षायामनन्वयः; ज्ञप्तिरूपत्वे विवक्षितेऽपि तस्याः किं विषयाश्रयसंबन्धनियमे प्रमाणम्? वृत्तिज्ञानस्य तन्नियमसद्भावेऽपि ततोऽन्यस्यां संविदि त्वदुक्तात्मस्वरूपवन्मा भूत्तद्योगः; आत्मधियोरैक्ये प्रतिक्षेप्ये विषयग्रहणं च व्यर्थमित्यत्राह— **एतदि**ति। अयं भावः— अस्मन्मते हि प्रसिद्धस्याहंशब्दार्थस्य प्रसिद्धज्ञानादन्यस्यैव स्वधर्मवत्स्वस्यापेक्षया प्रकाशत्वरूपं संवित्त्वं स्वयंज्योतिष्ट्वादिश्रुत्यनुसारात् स्वीकृतमिति न विरोधः। त्वया तु प्रसिद्धायाः संविदः प्रतीतिविरुद्धमात्मत्वं साध्यते।

* परागर्थप्रमेयेषु या फलत्वेन संमता। संवित्सैव हि नः सिद्धा वेदान्तोक्तिप्रमाणतः ॥

इति निष्कर्षात्। अत एवास्मन्मते धर्मधर्मिज्ञानभेदवत्त्वन्मते वृत्तिज्ञानस्वरूपसंविद्भेदक्लृप्तिश्चायुक्ता। लोके च ज्ञानसंविदादिशब्दाः पर्यायाः पठ्यन्ते। उपलम्भश्च तथैव। अतः सांख्यस्य पृथक्पाठोऽनादरणीयः। विषयवत्याः संविद आत्मधर्मत्वं च सर्वलोकप्रत्यक्षसिद्धम्। संविदः स्वयंप्रकाशत्वं च साधयता त्वयाऽपि विषयाश्रयसंबन्धिस्वभावतया हेतुरुक्तः। कर्मोपादानं च कर्त्रैक्यव्याहतेर्दृष्टान्तार्थं तन्मुखेन प्रतिबन्ध्यर्थं संबन्धिशब्दत्वव्यक्त्यै च सविषयत्वादेव निर्विषयादात्मस्वरूपाद्विवेकार्थं च। धर्मधर्मिभावसिद्ध्या संविदात्मनोरैक्यं दुर्घटमित्युक्तम्; तदेव धर्मान्तरैरपि व्यनक्ति— **तथा ही**ति। आत्मत्वादिनित्यधर्मव्यवच्छेदाय **संवेदनाख्यस्ये**त्युक्तम्। न ह्यसौ समाख्या पारिभाषिकीति भावः। **सुखदुःखादेरिवे**ति। अत्र स्वमते सुखादेर्धीविशेषतया प्रकाशरूपावस्थाया अस्थिरत्वे सुखाद्यवस्थादृष्टान्तः। परमते च अन्तःकरणधर्माः सुखदुःखादयः। उक्तयोः स्थिरत्वास्थिरत्वयोः प्रथमस्य वैनाशिकेतरसर्वसंमन्तव्यत्वमाह— **कर्तृस्थैर्यं ताव**दिति। **स एवाय**मिति दृष्टान्तार्थम्। **पूर्व**मित्यनेन सुषुप्तेः पूर्वमित्यपि भाव्यम्। वक्ष्यति च— * स एव तु कर्मानुस्मृतिशब्दविधिभ्यः इति। **मयाऽनुभूत** इति तु संवित्सन्ततेराधारत्वेन स्वात्मानुवृत्तिप्रत्यक्षोक्तिः। द्वितीयस्य च दुरपह्नवत्वमुदाहरणैर्विवृणोति— **अह**मिति। **जानामी**त्यनेन संविदुत्पत्तिस्थित्योः प्रदर्शनम्; पूर्वमेतज्ज्ञानरहितोऽहमिदानीमेतज्ज्ञानवानिति तात्पर्यम्। सोऽयमिति बाह्यार्थवत्सोऽहमित्यान्तरार्थेऽपि प्रत्यभिज्ञायामिह ज्ञानरूपातीताकारविशेषप्रत्यक्षविशेषविषय एवेत्याह— **अहमज्ञासिष**मिति। साक्षादेव धीप्रध्वंसप्रत्यक्षमाह— **ज्ञातु**रिति। ज्ञानस्य पूर्वकाले संप्रतिपत्त्यर्थ **एव**कारः; विरुद्धधर्माध्यास इत्यर्थः।

**आत्मा कर्ता च भोक्ता च स्थिरश्च स्थापयिष्यते। सुखादिवदनित्या तदन्या धीः स कथं भवेत् ॥** इति। कर्तृस्थैर्ये प्रत्यभिज्ञा प्रमाणीकृता; संविदस्तदैक्यं च दुर्घटमिति स्थापितम्। अथ संविदात्मत्वे नश्वरत्वानश्वरत्वविकल्पेन पूर्वत्र सौगतानामिव प्रत्यभिज्ञानविरोधमाह— **एव**मिति। यद्वा अर्थान्तरवत्प्रत्यभिज्ञाविषयत्वेन स्थैर्यमुक्तम्; अथ तदाधारतया चोच्यते। धीसन्ततेरात्मतायां बोध्ये बोद्धरि च भ्रान्तिरूपाऽपि प्रत्यभिज्ञा स्मृतिमात्रं च न स्यादिति

वक्ष्यामः। अत एव ज्वालाप्रत्यभिज्ञावदन्यथासिद्धिवचनमिहानर्थकमित्यभिप्रायेणाह— **दृष्टमिति**। अत्र प्रतीत्यध्याहार्यम्। पूर्वेद्युर्दृष्टमिदमपरेद्युरदर्शमिति वाऽन्वयः। व्याघातप्रसङ्गेन सह प्रसङ्गान्तरसमुच्चयार्थश्चकारः। अथ वा, मया पूर्वेद्युर्दृष्टमित्यत्र स्वप्रत्यभिज्ञार्थमेव पृथग्वाक्यम्। **न घटत** इत्युक्तम्; तदेव * अनुस्मृतेश्चेति सूत्रतात्पर्येण स्थापयति— **अन्येनेति**॥

**किं चानुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेऽपि प्रतिसन्धाना[भावः]संभवः तदवस्थः; प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम्; अहमेवेदं पूर्वमप्यन्वभूवमिति। भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम्। अनुभूतिरनुभूतिमात्रमेव। संविन्नाम काचिन्निराश्रया निर्विषया वाऽत्यन्तानुपलब्धेर्न संभवतीत्युक्तम्। उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम्। अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः॥**

मा भूदनित्यस्य घटादिप्रकाशस्य नित्यात्मतादात्म्यम्; निर्धूतनिखिलावच्छेदा तु संवित् आत्मा स्यादित्यत्र प्रमाणाभावात् प्रागेव दत्तोत्तरत्वेऽपि, आसन्नतरोक्तप्रसङ्गेनापि दोषसाम्यं विवक्षुराह— **किञ्चेति**। प्रतिसन्धानमिह प्रत्यभिज्ञामात्रम्; पूर्वापरज्ञानानामेकाश्रयधीर्वा। असंभवं विवृणोति— **प्रतिसन्धानमिति**। कालद्वयवृत्तेः प्रकाशस्य प्रतिसन्धातृत्वं युक्तमित्यत्राह— **नानुभूतिमात्रमिति**। ज्ञातृत्वाभावे प्रकाशस्यापि कालद्वयवृत्तिर्निष्फलेति भावः। ज्ञातुः स्थिरत्वसाधकं प्रतिसन्धानस्वरूपमाह— **अहमिति**। **एवकार** आश्रयभेदशङ्कानिरासार्थः। अविद्यावैभवाद्भ्रान्त्या प्रतिसन्धातृत्वं स्यादित्यत्राह— **भवत** इति। भ्रान्तिरपि ज्ञातुरेव स्यात्। यदि कश्चिदहमर्थं त्यक्त्वाऽनुभूतेरेवानुभवितृत्वमिच्छेत् तत्राप्याह— **अनुभूतिरिति**; न हि केनचित्स्वीकृतमित्येतावता सर्वलोकप्रत्यक्षविरुद्धं सिध्येदित्याकूतम्। एवं प्रसिद्धसंविदो विषयाश्रयशून्यत्वं तादृशसंविदन्तरं वा न स्वीकृत्य तत्र नित्ये निर्विशेषे ज्ञातृत्वकल्पनं निरस्तम्, तत्कल्पनाधिष्ठानं च निरस्तमित्याह— **संविदिति**। ननु त्वन्मते अहमर्थः आत्मा, स नित्यः स्वप्रकाशः, तद्धर्मभूता धीरपि तथा; ततो नित्यधीद्वयाङ्गीकारगौरवं स्यात्। अस्मदुक्ते हि लाघवमित्यत्राह— **उभयेति**। अयं भावः—क्लृप्तौ हि गौरवं दोषः; न तूपलम्भे; अन्यथा माध्यमिकमतेऽत्यन्तलाघवं स्यात्। संविद उपलब्धत्वादेव हि त्वयाऽपि तन्मतनिरासः। अत्र च स्थिरस्य ज्ञातुरहमर्थस्यात्मत्वमुपलम्भादिसिद्धं दुस्त्यजम्; तद्धर्मभूताया धियश्च नित्यत्वं न क्लृप्तम्; श्रुत्यादिसिद्धं तु न त्यक्तम्। न चात्रोपलम्भविरोधः, स्वरूपतोऽवस्थाभेदैश्च नित्यत्वानित्यत्वव्यवस्थापनात्। तदिहानहमर्थभूतां संविदमात्मतया निष्कृष्याहमर्थत्याग उपलब्धिविरुद्ध इति। अस्त्वेवम्, अस्मन्मतेऽपि शुद्धायामेवानुभूतौ तत्त्वतो भ्रान्त्या च निर्विषयत्वसविषयत्वादिविरोधशान्तिः; उपलब्धमपि नभस्थलमलिनत्वादिवद्युक्तिविरुद्धं त्याज्यमित्यत्राह—**अनुभूतिमात्रमिति**। मात्रचा विषयाश्रयवर्गस्य अवधारणेन स्वगतविशेषाणां च व्युदासः। **निष्कर्षकहेत्वाभासाः** दृशित्वदृश्यत्वादयः। **निराकृता** इति। अत्र सामान्यतो विशेषतश्चेति भाव्यम्। अत्र परेण विषयेषु घटत्वादिरहितं सन्मात्रम्। विषयिणि च कर्मकर्तृक्रियात्वरहितं प्रकाशमात्रमात्मेति यत्प्रलपितं तत्प्रत्युक्तम्॥

ननु चाहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसः चित्पदार्थः स आत्मा; तस्मिंस्तद्बलनिर्भासिततया युष्मदर्थलक्षणः अहं जानामीति सिध्यन्नहमर्थश्चिन्मात्रातिरेकी युष्मदर्थ एव। नैतदेवम्; अहं जानामीति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव। किं च—

अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्। अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराट्। भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति। अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः॥
मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति॥
स्वसंबन्धितया ह्यस्याः सत्ता विज्ञप्तितादि च। स्वसंबन्धवियोगे तु ज्ञप्तिरेव न सिध्यति॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्। अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम्॥
* विज्ञातारमरे केन * जानात्येवेति च श्रुतिः। * एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः॥
* नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति। * ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्॥

अथ तु ज्ञातरि प्रत्यगर्थे अहंत्वादिकं त्यक्त्वा तत्रत्यं प्रकाशमात्रमात्मेति प्रत्यवतिष्ठते— **ननु चेति**। **अस्मत्प्रत्यये**—अस्मदर्थस्वरूपस्फुरणे। **अनिदमंशः**—प्रत्यग्रूप इत्यर्थः। तत्र स्वयंप्रकाशत्वं हेतुमाह— **प्रकाशैकरस** इति। तत्रापि धीत्वं हेतुरुच्यते—**चित्पदार्थ** इति। **स आत्मा**—प्रत्यक्त्वादात्मेत्यर्थः। एवं प्रकाशांशस्य आत्मत्वे परमसाध्ये क्रमाद्व्यतिरेकित्रयं प्रत्युक्तम्। ज्ञातुरनात्मत्वे तथाऽन्वयित्रयमाह— **तस्मिन्निति**। चिन्मात्रातिरेकित्वाद्धीबलनिर्भासितत्वम्; तदेव युष्मदर्थलक्षणोपेतत्वम्; तत एव युष्मदर्थः प्रत्यक्त्वरहित इत्यर्थः। ततः सोऽनात्मेति वा वाक्यशेषः; अहंतया प्रत्यक्त्वं न शङ्कनीयमित्यवधारणाभिप्रायः। एवं वा — अहं जानामीत्यत्र **अस्मत्प्रत्यये**—उत्तमपुरुषोपात्तज्ञातृविषयायां धातूपात्तायां ज्ञप्तावित्यर्थः। शेषं प्राग्वत्। उभयमपि निरस्यति— **नैतदिति**। अहमर्थस्यैव प्रत्यक्त्वमात्मत्वं च, तद्धर्मतया सिध्यतः प्रकाशस्य तु परस्मा एव भासमानत्वान्नोभयमिति विपरीतप्रकारव्यवच्छेदार्थ **एवं**शब्दः। वैपरीत्यं विवृणोति— **जानामीति**। अहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते स तर्हि तद्धर्मः; धातूपात्तश्चेत्, इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः। **एव**कारो दत्तोत्तरत्वद्योतकः। **उपलब्धिपराहतमिति** ह्युक्तम्। अत्र धीत्वात्स्वप्रकाशत्वसाधने सिद्धसाध्यम्; आश्रयनियमादिविशेषस्तु प्रागेवोक्तः। स्वप्रकाशतया प्रत्यु[यु]क्तं साधनं बाधितम्; तत आत्मत्वं किं पुनः। अहमर्थे चित्पदार्थान्यत्वं सामान्यतश्चेदसिद्धमिति वक्ष्यते; विशेषतश्चेदप्रयोजकम्; चिदन्तरे चिद्विशेषान्यत्वात्। अतो जडत्व परात्त्वे चासिद्धे, साध्यरूपं च त्रयं बाधितम्;। संविद आत्मत्वं च प्रत्यक्त्वज्ञातृत्वप्रकाशत्वादिना विकल्प्य यथायथं बाधापसिद्धान्तसिद्धसाधनत्वादीनि वाच्यानि। एवमहमर्थस्य अनात्मत्वेऽपि विकल्पानुपपत्तिरिति भावः।

आत्मनोऽहमर्थादन्यत्वेऽहमर्थादन्यस्यात्मत्वे च साध्येऽनिष्टान्तराणि विवक्षुराह— **किंचेति**। **अहमर्थः**— अहंशब्दवाच्यः, अहंत्वविशिष्टो वा। प्रतीपमञ्चन्प्रत्यङ्, तस्य भावः **प्रत्यक्त्वम्**; स्वतोऽन्यतो वा स्वस्मै भासमानत्वमित्यर्थः। योऽसौ अहमिति व्यवह्रियते, तस्य सामान्यतः स्वपरात्मसाधारणतया परस्मै भासमानेऽप्यहंशब्दानुवृत्तिः। योऽसौ अहमिति व्यवह्रियते, स एव हि स्वस्मै भाति। तदन्यस्तु बोधोऽपि स्वयंप्रभोऽपि परस्मा एव भायादिति पराङेव; अतोऽहमर्थे पराक्त्वं तदन्यस्मिन्प्रत्यक्त्वं चासिद्धम्। यत्र तु ते स्तः तत्रैव ताभ्यां तत्साध्यं सिध्येदिति त्वदिष्टविरुद्धमापन्नमिति भावः। रक्तारक्तादिवदहंत्वपराक्त्वयोः विरोधं धीभेदेन व्यनक्ति— **अहंबुद्ध्येति**। **परागर्थात्**— परस्मा एव भासमानादित्यर्थः। आत्मभेदमते तु प्रत्यगर्थान्तरादपि प्रातिस्विकाहंबुद्ध्या भेदसिद्धिः। बद्धमुक्तावस्थयोरात्मनोरहंशब्देनाम्नानादागमबाधश्चात्र सिद्ध इति भावः। मुमुक्षुप्रवृत्त्यन्यथानुपपत्त्या स्वेष्टबाधं चाह— **निरस्तेति**। विशेषणत्रयेण तत्तच्छास्त्रार्थस्मारणम्, दुःखनिवृत्तिः, आनन्दावाप्तिः, अकर्मवश्यावस्था च स्वार्थाः स्वीक्रियन्ते। मुक्तौ तु स्वनाशं विदुषः तदुद्देशप्रवृत्त्ययोगान्मोक्षशास्त्रस्याधिकारिविरहेणाप्रमाण्यं स्यादित्यभिप्रायेणाह— **अहमर्थेति**। अन्यथाऽपि प्रवृत्त्युपपत्तिमाशङ्क्याह— **मयीति**। खादेरिव स्वान्यस्य स्थितिर्हि स्वनाशार्थप्रवृत्तिहेतुर्न स्यात्। स्ववधः कथम्? इत्थम्— स हि धर्मबुद्ध्या चेत्, अनश्वराहमर्थभोगार्थः। अविवेकिनां तु संसारमोचकानामहमर्थस्यैवासह्यदुःखनिवृत्तिमात्रार्थः। न चेह तथा; अहम आत्मत्वानभ्युपगमात्; आत्मानमधिकृत्यैव मोक्षोपदेशादिप्रवृत्तेः। यत्तु प्रागुक्तं कर्तुर्देहाद्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमिति, तदयुक्तम्; देहस्य क्रियावत्त्वेऽपि स्वधीपूर्वप्रवृत्तिलक्षणमिति कर्तृत्वायोगात् तदपेक्षया * शास्त्रफलं प्रयोक्तरीति स्थापनात्। इह त्वहङ्कारस्य कर्तृत्वे संसारोऽपि तस्यैव स्यात्, भोक्तृत्वं चात्मनस्त्वमेव प्रतिक्षिपसीत्यात्मनो बन्धमोक्षौ न स्याताम्; तथा च वृथा मुक्तिशास्त्रारम्भः। मुक्तावहमर्थनाशे धीस्थितिमन्वारुह्योक्तम्; सैव न स्यादित्याह— **स्वसंबन्धीति**। ननु धर्मो धीश्चेतनैकान्तत्वम्, एकायुष्कत्वं वा; अतः परमते जातिवत् घटादिसंयोगरूपधर्मनाशे खादिवच्च स्वाश्रयाहमर्थनाशे तिष्ठेदित्यत्राह— **छेत्तुरिति**। आस्तामन्यत्; सकर्मकस्य धात्वर्थस्य कर्मकर्तृविरहे कथं सत्तेति भावः। छेत्तुरित्यादि प्रदर्शनार्थम्। **आदि**शब्देन हि सकर्मकक्रियान्तरे व्याप्तिः प्रदर्श्यते। न ह्यत्र धर्म्यभावे धर्मसत्तायां किञ्चित्प्रमाणम्; ज्ञातुरभावे च कस्मै स्वात्मानमन्यद्वा प्रकाशयेत्? तदिहोक्तैः प्रमाणतर्कैः सिद्धं निगमनेन द्रढयति— **अतोऽहमिति**। एतदेव मिथोऽनुगुणश्रुतिस्मृतिसूत्रस्वारस्येन संवादयति **विज्ञातारमित्यादिना** श्लोकद्वयेन। **जानात्येवेत्यवधारणेन** मुक्तावपि ज्ञातृत्वं सूच्यते; अयोगव्यवच्छेदो ह्यत्र स्वरसः अन्यप्रकरणत्वशङ्कानिरासार्थमात्मस्वरूपानुबन्धित्वेन मुक्तावप्यनुवृत्तिसंभवार्थं च **नात्मेत्यादिकमुपात्तम्**। **अपिः** सूत्रोक्तातिक्रमेऽपसिद्धान्तं सूचयति। अहमर्थस्यात्मत्वं निगमितम्; ज्ञप्तेरनात्मत्वं तु निगम्यते— **अत** इति; प्रत्यक्षागमयुक्तिबलादित्यर्थः। ज्ञप्तिर्नात्मा, परस्मा एव भातत्वात् अनहंत्वात्, घटादिवत् इत्यादिप्रयोगाः प्रसङ्गाश्च द्रष्टव्याः॥

अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः। तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थं च। न चासौ ज्ञाताऽहमर्थोऽन्याधीनप्रकाशः; स्वयंप्रकाशत्वात्। चैतन्यस्वभावता हि स्वयंप्रकाशता।

**यः प्रकाशस्वभावः सोऽनन्याधी[न्य]नप्रकाशः, दीपवत् । न हि दीपादेः स्वप्रभाबल-निर्भासितत्वेन अप्रकाशत्वमन्याधीनप्रकाशत्वं च । किं तर्हि ? दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते, अन्यानपि प्रकाशयाति स्वप्रभया ॥**

यद्यपि स्वमते अस्मदर्थस्यैव युष्मदर्थत्वमात्मव्यक्तिभेदात्स्यात्; परमते च अहङ्कारभेदादहमर्थ एव त्वमर्थोऽपि; तथाऽपि घटादिवत्प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमिह व्याहतमित्यभिप्रायेण स्ववचनविरोधमाह— **अहंप्रत्यये-** त्यादिना वाक्यत्रयेण । अस्याप्रयोजकत्वं प्रत्येतुः प्रत्येतव्याद्व्यतिरेकेण प्रत्यक्त्वं च नैयायिकादयः प्राहुः । बाधितत्वं चात्र दर्शितम् ।

**किं च युष्मत्त्वमसत्त्वमप्यनात्मादिगोचरम् । परो बभाषे भग्नं तन्मानतः स्वमतादपि ॥ ४८४ ॥**
**प्रतियोगिविशेषाद्धि युष्मदसत्पदार्थता । चेतनस्यैव विख्याता न जन्यज्ञप्तिमात्रयोः ॥ ४८५ ॥**
**उन्मादादिव यद्युक्ता युष्मदुक्तिरचेतने । क्वचित्तत्तदधिष्ठातृपुंविशेषविवक्षया ॥ ४८६ ॥**
**ब्रह्मोपलक्षणत्वं च युष्मदर्थेऽपि मेनिरे । नातो विषयनिर्देशेऽप्यसदर्थविशेषवान् ॥ ४८७ ॥**

अथाहमर्थपरात्त्वसाधकतयोक्तस्यान्यत एव भातत्वस्यासिद्धिरप्यस्तीति साधयति— **न चेति** । न हि वेद्यत्व-मात्रादनात्मत्वं सुवचम्; वित्तावपि प्रसङ्गात् । धर्मभूतज्ञाने दृष्टव्याप्तिकं हेतुमाह— **स्वयमिति** । स्वधर्मवत्स्वय-मपि प्रकाशरूपत्वादित्यर्थः । यद्वा स्वयंज्योतिष्ट्वेन श्रुतत्वादिति यावत् । ज्ञानत्वे सिद्धे अनन्याधीनस्वप्रकाशत्वं नियत-मित्याह— **चैतन्येति** । अत्र धूमवत्त्वमेव ह्यग्निमत्त्वमितिवत्संबन्धदार्ढ्यादुपचारः । यद्वा अनन्याधीनस्वप्रकाशत्वे स्वयंप्रकाशत्वहेतुः साध्याविशिष्ट इति शङ्कायां स्वयंप्रकाशत्वशब्देन ज्ञानत्वं विवक्षितमित्युच्यते । ज्ञानत्वस्वप्रकाशत्व-योर्व्याप्तिं व्यनक्ति— **य इति** । धर्मभूतज्ञानवदिति दृष्टान्तोऽभिप्रेतः । अत्र दीपाद्युदाहरणं लोकबुद्ध्यनुसारेण संभा-वनामात्रस्थापनार्थम् । यद्वा, **स्वयंप्रकाशत्वात्**—स्वतस्सिद्धप्रकाशधर्मत्वात् । अत्र विशेष्यमेव हेतुः । हेत्वंशं पक्षस्थ-विशेषणं विवृणोति—**चैतन्येति** । नन्वेवं ज्ञातृत्वादित्येव हेतुरुक्तः स्यात् । तथा सत्यसाधारणानैकान्त्यम् । मैवम्; व्यति-रेकिणोऽनभिसंहितत्वात् । अन्वयी[त्वेवं भाव्यः]त्येव भाव्यम्—आत्मा स्वधर्मभूतज्ञाननिरपेक्षप्रकाशः स्वप्रकाशे स्वात्यन्त-सजातीयनिरपेक्षवस्तुधर्मत्वादिति । अत्र व्याप्तिदृष्टान्तावाह— **य इति** । दीपोऽपि घटवत्प्रभातमोऽन्यत्वे सति प्रभानुग्राह्य-चक्षुर्ग्राह्यत्वात् प्रभाधीनप्रकाशः स्यादित्यत्राह— **नहीति** । घटवद्दीपस्य यद्यभास्वररूपत्वं स्यात्, ततो भास्वरद्रव्य-संबन्धाधीनप्रकाशः स्यात् । न तदस्ति; अतो नोक्तशङ्केति भावः । ननु प्रभाश्रयस्यापि मण्यादेः प्रभाधीनप्रकाशत्ववद्-दीपादेरप्यस्त्वित्यभिप्रायेण कथं प्रकाशत इत्याकाङ्क्षां दर्शयति— **किं तर्हीति** । घटादेर्मण्यादिपार्थिवांशस्य च स्वयमभास्वरतया प्रभासापेक्षप्रकाशत्वम्; उद्भूतानभिभूतभास्वररूपस्य तु स्वभावातन्नैरपेक्ष्यं युक्तमित्याह— **दीप इति** । ननु भास्वरत्वं प्रभानैरपेक्ष्ये न प्रयोजकम्; किं तु प्रभात्वमेव । मैवम्; व्यभिचारादर्शनेऽप्यत्र व्याप्तिसङ्को-चेऽतिप्रसङ्गात्, प्रभात्वाभावेऽपि तमसि प्रभानैरपेक्ष्यदृष्टेश्च । ज्योतिष्ट्वाभावेऽपि तत्र तद्दृष्टिरस्तीति चेत्, सत्यम्; न हि वयं ज्योतिष्ट्वं व्यापकं ब्रूमः । प्रभात्वमप्येवमिति चेत्, तर्हि लिङ्गं भवतु । न तु स्वनिवृत्त्या प्रभानैरपेक्ष्यं

नेवर्तते । न च दीपादेः प्रभाधीनप्रकाशत्वं दृष्टम्; येन प्रभातमोन्यतरनिष्ठतया व्याप्तिः संकोच्येत । तर्हि स्वप्रभावद्दीपोऽपि घटादीन्स्वयमेव प्रकाशयेदित्यत्राह— **अन्यानिति** । असंबद्धं कथं प्रकाशयेत्? यथादर्शनं व्यवस्थायां धर्मद्वारा संबन्धः प्रकाशनं चेति भावः ॥

एतदुक्तं भवति— यथा एकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभा प्रभावद्द्रव्यगुणभूता, तथाऽपि तेजोद्रव्यमेव; न शौक्ल्यादिवद्गुणः, स्वाश्रयादन्यत्रापि वर्तमानत्वात् रूपवत्त्वाच्च शौक्ल्यादिवैधर्म्यात्, प्रकाशवत्त्वाच्च तेजोद्रव्यमेव नार्थान्तरम् । प्रकाशवत्त्वं च स्वस्वरूपस्यान्येषां च प्रकाशकत्वात् । अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्वनिबन्धनः । न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते । मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात् । दीपेऽप्यवयविप्रतिपत्तिः कदाचिदपि न स्यात् । न हि विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्च एकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम् । अतः सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति पुष्कलकारणक्रमोपनिपातात् तद्विनाशे विनाशाच्चावगम्यते । प्रभायाः स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादि उपलब्धिव्यवस्थाप्यम्, अग्न्यादीनामौष्ण्यादिवत् । एवमात्मा चिद्रूप एव चैतन्यगुणक इति । चिद्रूपता हि स्वयंप्रकाशता ॥

ननु आत्मनस्तद्धर्मस्य च सत्तावान्तरजात्या सजातीयत्वे कथं धर्मधर्मित्वम्? न च दीपप्रभा निदर्शनम्; विशीर्णपूर्वदीपावयवरूपायाः प्रभाया उत्तरदीपधर्मत्वप्रसङ्गाभावात्; अवयवविशरणाभावे च दीपादेराशुतरविनाशित्वं न सिध्येत्; रजःपटलादिन्यायेन मूलमध्याग्रवैषम्यं च विशीर्णावयवत्वलिङ्गमित्यत्राह— **एतदिति** । **यथा** इत्यस्योत्तरत्र **एवमिति** प्रतिनिर्देशः । अवान्तरवैषम्येऽपि तेजस्त्वेन सजातीयत्वं स्थितमित्यभिप्रायेण **एकमेवेत्युक्तम्** । ननु प्रभाप्रभावतोर्धर्मधर्मिभावो भ्रान्तः; यदि प्रभाया दीपादिगुणत्वम्, तर्हि द्रव्यत्वं साजात्यं च न स्यादित्यत्राह— **यद्यपीति** । द्रव्यत्वे कथं गुणत्वमित्यत्राह— **शौक्ल्यादिवदिति** । अद्रव्यत्वलक्षणं गुणत्वं मा भूत्; आश्रितस्वभावत्वं तदस्तीति भावः । तद्द्रव्यत्वे किं प्रमाणमित्यत्राह— **स्वेति** । द्रव्याणां दण्डादीनां केशनखादीनां च संयोगत आश्रितानां तावत्, स्वाश्रयरहितप्रदेशेऽपि वृत्तिर्दृष्टा । प्रभायास्त्वयुतसिद्धाया अपि धर्मिदेशातिवृत्तिर्दृश्यते; अद्रव्याणां तु न तथा । तदत्रायुतसिद्ध्या दण्डादिभ्यः, धर्मिदेशादिवृत्त्या शौक्ल्यादिभ्यश्च, विशेष इति भावः ॥

तथाऽप्यौष्ण्यवत्तेजोधर्मस्य द्रव्यत्वतेजस्त्वे न स्यातामित्यत्राह— **प्रकाशवत्त्वादिति**; तिमिरनिरासकस्वभावादित्यर्थः । प्रकाशौपाधिकभास्वररूपत्वादिति च हार्दो हेतुः । भ्रान्तिशङ्काव्युदासार्थमवधारणं विवृणोति— **नार्थान्तर-**

मिति । न हि प्रभाया मण्यादेरिवौपाधिकी भास्वरत्वधीरिति भावः । दीपधर्मस्य गुणान्तरस्येव प्रकाशवत्त्वं न स्यादित्यत्राह— **प्रकाशवत्त्वमि**ति । प्रकाशवत्त्वमिह तमोनिरासद्वारा मनुष्यादिचक्षुस्सहकारित्वम् । न चैतल्लिङ्गम्; दृश्यमानस्तु स्वभावविशेषः प्रदर्श्यते । उक्तं च **पञ्चपादिकाविवरणकृता** * ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्वं तमोविरोधित्वसिद्धमिति । अद्रव्यनियतो गुणव्यपदेशः कथमिह स्यादित्यत्राह— **अस्या** इति । चोदितनिमित्तव्यावृत्त्यर्थ**स्तु**शब्दः । अयं भावः— गुणशब्दो हि दासादिष्वपि प्रयुज्यते; कर्मणि क्रियान्तरशेषभूते, सन्धिविग्रहादिष्वपि विवक्षान्तरेण; तद्वदिहापि द्रव्यत्वाविरुद्धनिमित्तविवक्षया गुणोक्तिरविरुद्धेति । विशरणपक्षं प्रतिक्षिपति— **न चे**ति । तथाऽनुपलम्भादिति भावः । कल्पने निर्बाधलोकदृष्ट्याऽनिष्टप्रसङ्गमाह— **मणी**ति । दीपादिवत् प्रतिक्षणविनाशप्रसङ्गादित्यर्थः । स्थिरत्वेन सर्वलोकविदितानां पुष्कलकारणक्रमाद्यनुपलम्भेऽपि क्षणिकत्वक्लृप्तावतिप्रसङ्ग इति भावः । मण्यादौ प्रत्यभिज्ञाविरोधः उक्तः; दीपे त्वभिज्ञाऽपि न स्यादित्याह—**दीप** इति । **अपिः** पूर्वत्रात्र च प्रत्यक्षविरोधसाम्यद्योतकः । **अवयवि**शब्दः परमतेन; स्वमते तु सङ्घातविशेषपरः । **कदाचिदपि**—पूर्वोत्तरकालयोरिव मध्येऽपीत्यर्थः । योग्यस्य सत्यां सामग्र्यां कथमप्रतिपत्तिरित्यत्राह— **न ही**ति । संहतस्वभावत्वे विशरणस्य विशेषकारणमभिघातादिकं दृष्टम्; तदन्यक्लृप्तिश्च गुर्वी । विशरणस्य स्वभावत्वे तु पिण्डीभावादिहेतुरदृष्टः कल्प्यः । * अग्नेरूर्ध्वज्वलनमित्यादिभिरूर्ध्वगमनशीलतया प्रसिद्धानामेवाविशेषेण विष्वग्विशरणादिक्लृप्तिश्च गुरुतरेति भावः । तर्हि दीपस्य क्षणिकत्वे प्रमाणं न स्यादित्यत आह— **अत** इति । पक्षान्तरस्य गौरवहतत्वादित्यर्थः । पद्मकेसरादिविशिष्टवर्त्यादिसृष्टिप्रकारसाम्याभिप्रायेण **सप्रभाका एवे**त्युक्तम् । प्रतिक्षणमुत्पन्नाश्चेद्युगपदनेकदीपोपलम्भः स्यादित्यत्राह— **विनश्यन्ती**ति । अत्रापि प्रतिक्षणमिति योज्यम् । प्रतिक्षणोत्पत्तौ हेतुमाह— **पुष्कले**ति । उत्तरोत्तरक्षणेष्वपि दीपसामग्रीसम्पत्तेरित्यर्थः । विगीतः समुदायः दीपजनकः, विशिष्टवह्निवर्त्यादिसमुदायत्वात् आद्यवदिति प्रयोगः । प्रतिक्षणविनाशे लिङ्गमाह— **तद्विनाशे विनाशादि**ति । नात्र साध्याविशेषः; अयं ह्यत्र प्रयोगः— आद्यादिस्नेहवर्तिध्वंसः तज्जन्यदीपध्वंसशिरस्कः, विशिष्टस्नेहवर्तिध्वंसत्वात्; अन्तिमवत् इति । एवं दीपभेदानभ्युपगमे स्नेहनाशसन्धुक्षणादिभिः परिमाणभेदोऽपि दुश्शकनिर्वाहः, धारावाहिकधीभेदश्च । ध्वंसश्चात्र दीपतत्प्रभयोरनभिव्यक्तावस्थाविशेषः; सत्कार्यस्य द्रव्यस्य नित्यानुवृत्तेः । सा चावस्था अन्तिमदीपसामग्रीनाशपूर्विका दृष्टा; अतोऽभिघातादिव्यतिरिक्तविशरणहेतुक्लृप्ताविव नात्र गौरवम् । तत्समीकारं परिहरति— **प्रभाया** इति । आदिशब्देन बहुलत्वादिकं दूरे प्रकाशादिमत्त्वं च गृह्यते । उपलब्धानादरे अतिप्रसङ्गः; अथादृष्टासङ्कुचितप्रभोत्पत्तिः, एतदपि चोद्यमादिशब्दसङ्गृहीतम् **उपलब्धिव्यवस्थाप्य**मित्यनेनैव प्रत्युक्तम् । अथ वा **स्वयंप्रकाशत्वा**दित्यादेर्भाष्यस्य प्रयासबहुलानुमानपरत्वादपि वरं श्रुत्यर्थोपक्षेपपरत्वम् । दृष्टान्तादिभिर्लोकदृष्ट्या तत्संभावनाप्रदर्शनं च । तथा च प्रदीपिकानुमितिपरत्वादपि श्रुत्यनुग्राहकपरत्वं युक्तमिति । न ह्युत्तरत्रानुमानवच्छ्रुतिरपि तथा चेत्युदाह्रियते; किं तु **तथा ही**ति । अतः पूर्वोपक्षिप्तं श्रौतमेवार्थं लोकदृष्टिप्रदर्शितसंभावनयोपसंहरति— **एव**मिति । ननु संविदात्मनोर्भेदः पूर्वमुक्तः; तत्कथमिहात्मनः चिद्रूपत्वोक्तिरित्यत्राह— **चिद्रूपते**ति । न स्वधर्मतादात्म्यमिहोच्यते; किं तु तत्सजातीयत्वमिति ॥

**तथा हि श्रुतयः—*स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव । एवं वा**

अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव, ⊛ विज्ञानघन एव, * अत्रायं पुरुषः स्वयंज्योतिर्भवति, ⊛ न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, * अथ यो वेदेदं जिघ्राणीति स आत्मा, ⊛ कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, ⊛ एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः, ⊛ विज्ञातारमरे केन विजानीयात्, * जानात्येवायं पुरुषः, * न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्, ⊛ स उत्तमः पुरुषः, ⊛ नोपजनं स्मरन्निदं शरीरम्, ⊛ एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, ⊛ तस्माद्वा एतस्मान्मनोमयात्, अन्योऽन्तर आत्मा विज्ञानमयः इत्याद्याः। वक्ष्यति च— * ज्ञोऽत एवेति ॥

चिच्छब्दस्यात्मनि स्वप्रकाशत्वनिबन्धनत्वमात्मनो ज्ञानत्वं ज्ञातृत्वं च जडत्वनिर्गुणवादनिरासाय श्रुतिभिराह— **तथे**ति। शब्दप्रमाणकोऽर्थो यथाशब्दं व्यवस्थाप्य इत्यभिप्रायेण **श्रुति**शब्दः। ततश्च विमतं न ज्ञानाश्रय, ज्ञानत्वात् धर्मभूतज्ञानवदित्यत्र व्याप्तिसिद्धौ तद्ग्राहकश्रुत्यादिबाधः; अन्यथा त्वनुमितेरुत्थानम्। **प्रज्ञानघनः**। शास्त्रसिद्धेन सुखत्वप्रकर्षेण स्वरूपज्ञानस्य प्रकृष्टत्वम्। अतः प्रकृष्टसुखात्मकज्ञानैकरूप इत्यर्थः। सामान्योक्तेः मानोपनीतविशेषविश्रमादपेक्षितसंभवेऽनपेक्षितविधिदौर्बल्याच्च।

**अत्र सैन्धववदृष्टान्तस्सर्वांशेष्वैकरस्यतः। जडांशरहितत्वं तु बोध्यमात्मनि निष्कले ॥ ४८८ ॥**

**अस्तु वा सैन्धवन्यायाद्गुणवत्त्वोक्तिरात्मनः। वाक्यान्तरेण लभ्येत ज्ञानत्वमपि तादृशम् ॥ ४८९ ॥**

देहादिविशिष्टावस्थायामपि तद्विलक्षणत्वव्यक्त्यौ विज्ञानघनवाक्योपादानम्; विविधज्ञानवैशिष्ट्यार्थं वा। स्वयंप्रकाशत्वस्फोरव्यायाह— **अत्रे**ति। न हि **पुरुष**शब्दोऽन्तःकरणदेहादिपरः; न च **ज्योति**श्शब्दो भूततृतीयविषय इति भावः। आत्मनो ज्ञातृत्वं धर्मभूतज्ञानस्य नित्यत्वं च वदन्तीं श्रुतिमाह— **न विज्ञातु**रिति। ज्ञातुरनात्मत्वशङ्काव्युदासायाह— **अथ य** इति। आत्मन एव विज्ञानत्वस्वयंप्रकाशत्वे सहोक्ते इत्याह—**कतम** इति। शङ्कास्पदेषु क इत्यर्थः। **प्राणे**ष्विति सप्तमी निर्धारणार्था; कयाचिद्वृत्त्या प्राणशब्दगोचरसमुदायाद्विज्ञानमयत्वेन कथञ्चित्पृथक्कृत्य तस्यात्मत्वमुच्यते। अथ वा प्राणेषु हृदीत्युभयमपि स्थानविशेषव्यक्त्यर्थम्; **अन्तर्ज्योतिः**—स्वप्रकाशः; आत्मज्योतिरित्यपि हि श्रूयते। ज्ञातृत्वकर्तृत्वज्ञानत्वादेरात्मनि सहोक्तिं दर्शयति—**एष ही**ति। ज्ञातुरेव प्रत्यगात्मनोऽपि मुमुक्षुवेद्यत्वं सूचयति— **विज्ञातारमि**ति। मुक्तावपि ज्ञातृत्वसिद्ध्यै ज्ञातृत्वायोगव्यवच्छेदपरां श्रुतिमाह—**जानात्येवे**ति। विनाशश्रुतेः संज्ञानिषेधाद्युक्तेश्चान्यविषयत्वं स्थापयितुमाह—**न पश्य** इति। * सर्वं ह पश्यः पश्यतीति तत्रैवोक्तम्। * स उत्तमः पुरुष इत्यत्र वाक्यशेषान्मुक्तस्य जक्षणादिबुद्धिपूर्वव्यापारवत्त्वसिद्धिः। मुक्तस्य संस्कारजन्यधीनिषेधात् स्वतस्सिद्धसाक्षात्कारवत्त्वं व्यञ्जयति— **नोपजनमि**ति। संस्कारो ह्यौपाधिकत्वात्तदानीं निवर्तते; तत एव न स्मृतिः; स्वर्गनरकादिगतस्तु

प्रतिकूलमनुकूलं च प्राग्भुक्तं स्मरेत्; न तथा मुक्त इति भावः। तथाऽपि द्रष्टुरवस्थानं कारणादिमात्रनिवृत्तिं च श्रुत्यैव स्थापयति— **एवमिति**। **षोडशकलाः**— भूतेन्द्रियाणि; औपाधिकसमुदायैकदेशत्वात् कलात्वोक्तिः। **पुरुषः** अत्र परमात्मा; तत्प्राप्तिदशायामिन्द्रियादयो न जीवमनुबध्नन्तीत्यर्थः। देहादेरीश्वराच्च व्यावृत्तस्य जीवस्य ज्ञातृत्वे श्रुतिमाह— **तस्माद्वा** इति। यथाश्रुति सूत्रकृता निर्णीतत्वमाह— **वक्ष्यति चेति**। पूर्वं श्लोकतः संक्षिप्तमिह प्रपञ्चितमित्यपुनरुक्तिः। स्वपदवर्णनं च भाष्यकृत्यं पठन्ति ॥

**अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव, न प्रकाशमात्रम्। प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः, दीपादिप्रकाशवत्; तस्मान्नात्मा भवितुमर्हति संवित्। संविदनुभूतिज्ञानादिशब्दाः संबन्धिशब्दा इति च शब्दार्थविदः। न हि लोकवेदयोर्जानात्यादेः अकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः॥**

एवं श्रुत्यादिभिर्ज्ञातुरनात्मत्वं निरस्तमिति निगमयति— **अत** इति; अन्याधीनप्रकाशत्वस्याभावादित्यर्थः।

**आत्मनोऽहंत्वकर्तृत्वज्ञातृत्वादिविधूनने। वैफल्यं सर्वशास्त्राणां व्यञ्जयत्येवकारतः ॥ ४९० ॥**

ननु प्रज्ञानघन एवेत्यवधारणादन्ययोगव्यवच्छेदेन प्रकाशमात्रत्वं स्यादित्यत्राह— **नेति**। अयं भावः— यथा **रसघन एवे**त्यत्र रूपादेरनिषेधः, तथाऽत्रापि मानसिद्धस्य ज्ञातृत्वादेः। अतो जडत्वगन्धाभाव एवात्रावधारणस्याप्य इति। ज्ञातृत्वनिषेधे तदपेक्षं प्रकाशत्वमपि न स्यादित्यभिप्रायेणाह— **प्रकाशत्वादिति**; व्यवहारानुगुण्यप्रयोजकत्वादित्यर्थः। उक्तमर्थं परम्परया व्यवहारानुगुण्यापादके निदर्शयति— **दीपादीति**। न हि पुरुषमनपेक्ष्य दीपस्यार्थप्रकाशकत्वमिति भावः। संविद आत्मधर्मत्वं वदन्त्या श्रुत्यैव तस्या आत्मत्वं निषिद्धमित्यभिप्रायेणाह— **तस्मादिति**। तस्या विषयाश्रयवत्त्वे निरूपकसंमतिमाह— **संविदिति**। व्युत्पत्तेस्तथात्वेऽपि प्रयोगतोऽन्यथा व्यवस्था स्यादित्यत्राह— **न हीति**। न चात्र दारादिशब्देष्विव शब्दप्रतिपन्नमपि बाध्यम्; बाधकाभावस्योक्तत्वात्। आत्मस्वरूपविषयस्य ज्ञानशब्दस्य युष्मन्मते कथं संबन्धिशब्दत्वमिति चेत्, तन्न; धर्मभूतज्ञाने संबन्धिशब्दस्य सार्थत्वात्; स्वप्रकाशत्वेन निमित्तेन धर्मधर्मिणोरशब्दानुवृत्तेः। तव तु दृश्यमानविषयाश्रयसंबन्धापह्नवात् संबन्धिशब्दोपदेशवैफल्यमेव। ननु यथा **गच्छतीति** व्युत्पत्तावपि गोशब्दो जातिविशेषार्थः तद्वदत्रापि भ्रान्तिसिद्धकर्मकर्तृविशिष्टव्युत्पत्तावपि तद्रहितस्वरूपे शक्तिरिति चेत्, न; गतेरव्याप्त्यतिव्याप्तिभ्यां गोशब्दे गोत्वं निमित्तीकृतम्; इह तु न तथा। यद्यपि अव्याप्तिरात्मनि त्वयोक्ता, तथाऽपि ज्ञातारमात्मानमन्यम् अवस्थाद्वयं च सत्यमनादर्तुस्ते दृष्टातिक्रमनिमित्तं नास्ति; निर्विषयनिराश्रयसंवित्साधनं चाद्याप्याशामोदकमात्रमिति भावः॥

**यच्चोक्तम् अजडत्वात्संविदेव आत्मेति, तत्रेदं प्रष्टव्यम्। अजडत्वमिति किमभिप्रेतम्? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्, तथा सति दीपादिष्वनैकान्त्यं संविदतिरिक्तप्रकाशधर्मानभ्युपगमेन असिद्धिर्विरोधश्च। अव्यभिचरितप्रकाशसत्ताकत्वमपि**

सुखादिषु व्यभिचारान्निरस्तम् । यद्युच्येत सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिरिव जडत्वेनानात्मेति ; ज्ञानं वा किं स्वस्मै प्रकाशते ? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवत् जानाम्यहमिति । अतः स्वस्मै प्रकाशमानत्वरूपमजडत्वं संविद्य सिद्धम् । तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा । ज्ञानस्यापि प्रकाशता तत्संबन्धायत्ता । तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वम्, इतरं प्रत्यप्रकटत्वं च । अतो न ज्ञप्तिमात्रमात्मा ; अपि तु ज्ञातैवाहमर्थः ॥

अथ संविदात्मत्वानुमानं दूषयितुमनुवक्ति—**यच्चेति** । **एव**कारो विरोधं परमते लाघवाभावं च व्यनक्ति । उक्तहेतौ विकल्पमुपक्षिपति— **तत्रेति** । निराचिकीर्षितकोटिचतुष्कमभिसन्धाय पृच्छति—**अजडत्वमिति** । स्वप्रकाशे स्वसद्भावस्य प्रयोजकत्वमिति शङ्कते— **स्वसत्तेति** । अत्र स्वसत्तामात्रप्रयुक्तप्रकाशत्वस्यासिद्धत्वात्स्वसत्तायाः स्वप्रकाशसामग्र्येकदेशत्वं वाच्यम् ; तस्या अनात्मन्यपि वृत्तेः सपक्षवृत्त्यभावाच्च विरुद्धहेत्वाभासत्वमभिप्रेत्याह— **तथेति** । स्वमते ज्ञातुरात्मतया तस्मिन्सपक्षे हेतुवृत्तेः साधारणानैकान्तिकत्वमिहोच्यत इति केचित् । न चानुभूतेः सत्ताख्यो धर्मः ; सत्ताशब्देन स्वरूपविवक्षायामपि तत्प्रयुक्तप्रकाशधर्मानभ्युपगमात् । हेतोः स्वरूपासिद्धिं तदभ्युपगमे सिद्धान्तविरोधं चाभिप्रेत्याह— **संविदिति** । उत्तरकोटिष्वपि दूषणद्वयमिदं द्रष्टव्यम् । यावत्सत्त्वं प्रकाशमानत्वं हेतुरित्याशङ्क्याह— **अव्यभिचरितेति** । यद्यपि अस्मन्मते सुखादेर्ज्ञानविशेषत्वात्स्वप्रकाशत्वम् ; यद्यपि च काश्यपादिमते तेषामस्मदादिमानसप्रत्यक्षविषयत्वं विषयोत्पत्तिसापेक्षतया तदनन्तरभावि; तथाऽपि त्वन्मते अध्यस्तान्तःकरणधर्मभूतेषु सुखादिषु विपक्षेषु हेतुवृत्तिः सिद्धा । तद्व्यतिरिक्तत्वे सतीति विशेषणेऽपि न निस्तारः ।

**प्रकाशाव्यभिचारो हि घटादिष्वपि ते समः । भ्रान्तिसिद्धत्वसिद्धान्तान्न तेष्वात्मत्वमिच्छसि ॥ ४९१ ॥**
**अज्ञातत्वदशाऽस्तीति घटादिषु यदि भ्रमः । संविद्यपि तथाऽस्त्येव तज्जाड्यं हि परे विदुः ॥४९२॥**
**अज्ञातमपि ते पक्षे साक्षिणा ज्ञायते तथा । अतो ज्ञातवदज्ञातं ज्ञातमित्यभिमन्यसे ॥ ४९३ ॥**

**आदि**शब्देन परमते घटादेरपि सुखादितुल्यत्वं भाषितमेव । ननु सुखादिषु पुरुषभेदेन यावत्सत्त्वं प्रकाशमानत्वाभावान्न तत्रातिचार इति चेन्न; संविदोऽपि तथात्वात् । एकैव संवित्सर्वेषां प्रकाशत इति चेत् ; ए(व)कमेव सुखं सर्वेषामिति किं न स्यात् । भेदकबलादिति चेत् सममेतत् । अजडत्वं नाम स्वस्मै प्रकाशमानत्वमिति कोट्यन्तरे प्रस्तुतदोषातिक्रमशङ्कामनुवक्ति— **यदीति** । तत्रापि स्वरूपासिद्धिमाह— **ज्ञानमिति** । वाकारश्चार्थः । **किं** क्षेपे । तद्विवृणोति— **तदपीति** । तदभावशङ्कामुपलम्भेन परिहरति— **अहमिति** । दृढधीबलादसिद्धिं निगमयति— **अत** इति ।

**परेणैव घटाद्यर्थः परस्मा एव भासते । स्वान्याभ्यां पुरुषः स्वस्मै परस्मै परधर्मतः ॥ ४९४ ॥**
**धीः स्वान्याभ्यां स्वाश्रयाय तदन्यस्मै तु तद्धिया । परस्मा एव भातत्वात्पराची सा घटादिवत् ॥**

उक्तस्य कोटित्रयस्य संविद्यसिद्ध्यादिदुष्टत्वादहमर्थे संभवाच्च तस्यात्मत्वं दुस्त्यजमित्याह— **तस्मादि**ति । कोट्यन्तरनिरासात्स्वयंप्रकाशत्वमवशिष्यते । तच्च स्वगोचरज्ञाननिरपेक्षप्रकाशत्वम् । तस्य ज्ञातरि स्थापितत्वात्तस्याप्यात्मत्वं स्यादित्यपि सूच्यते ।

**अनिष्टे ज्ञातुरात्मत्वे तत्स्थो हेतुरसौ कथम् । इष्टे तु कथमात्मत्वं तद्धर्मस्य प्रसाध्यते ॥ ४९६ ॥**

किं च, अन्यनिरपेक्षत्वमात्रं वा ज्ञानमात्रनिरपेक्षत्वं वा हेतुश्चेत्, तयोः संविद्यसिद्धिमाह—**ज्ञानस्ये**ति । यद्वा ज्ञातृपरित्यागे ज्ञानस्य स्वयंप्रकाशत्वं न सिध्येदिति स्वरूपासिद्धिसूचनमिदम् । **प्रकाशता**—व्यवहारानुगुण्यापादकता । तत्संबन्धाभावे प्रकाशमानत्वमपि तस्या न सिध्येदित्यभिप्रायेणाह— **तत्कृतमि**ति । **प्रकटत्वम्**—स्वयमपि स्वव्यवहारानुगुण्यापादकत्वमिति यावत् । परोक्तनिरसनं स्वोक्तस्थापनं च निगमयति— **अत** इति ॥

**अथ यदुक्तम्—अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिः निरधिष्ठानभ्रमानुपपत्तेरिति, तदयुक्तम्; तथा सति अनुभवसामानाधिकरण्येन अनुभविताऽहमर्थः प्रतीयेत, अनुभूतिरहमिति, पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तम् । तथा हि अनुभवाम्यहमिति प्रतीतिः । तदेवमस्मदर्थमनुभूतिविशिष्टं प्रकाशयन् अनुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ॥**

अथ वक्ष्यमाणच्छायापत्तिसंसर्गव्यञ्जनस्वपक्षाणां साधारणं ज्ञातृत्वाध्यासं दूषयितुमनुवक्ति—**अथे**ति । सविषये वृत्तिज्ञाने ज्ञात्रपेक्षेत्यभिप्रायेण **निर्विषये**त्युक्तम् । अविद्यायामेव ज्ञातुरप्यध्यासः स्यात्; किमनुभूत्येत्यत्राह—**निरधिष्ठाने**ति । अविद्याऽपि ह्यसत्यत्वादधिष्ठानसापेक्षेति भावः । निर्विशेषायां ज्ञातृत्वाध्यासः तस्य त्वयाऽधिष्ठानापेक्षा च दुर्वचेत्यभिप्रायेणाह— **तदयुक्तमि**ति । मिथ्यादोषादध्यासं वदतां मिथ्याधिष्ठानादपि स्यादिति भावः । परोक्तेऽनिष्टं प्रसञ्जयति— **तथे**ति । यद्यपि रजतत्वमारोप्यम्, तथाऽपि तद्विशिष्टवाचिना रजतशब्देनाधिष्ठानवाचिन इदंशब्दस्य सामानाधिकरण्यं दृश्यते इदं रजतम् इति; तद्वदिहापि अधिष्ठानाध्यस्तयोस्सामानाधिकरण्येन प्रकाशः प्रसज्येतेत्यर्थः । तत्प्रकाशं दर्शयति— **अनुभूतिरहमिती**ति । भ्रान्तावपि शुक्तिरेव रजतमिति सामानाधिकरण्यं न दृष्टमित्यत्राह—**पुर** इति । अयं भावः— शुक्तिरजतादिभ्रमे प्रकाशमानेन सामान्याकारेण तत्सिद्धम्, शुक्तित्वाद्याकारस्तु न प्रकाशते; इह तु प्रकाशमानानुभूत्यतिरिक्ताकारानभ्युपगमादनुभूतित्वरूपशुक्तित्वसाम्येऽध्यासानुपपत्तेः । इदंत्वभास्वरत्वादिसमत्वे तेनैव रूपेण सामानाधिकरण्यप्रकाशो दुस्त्यज इति । इष्टप्रसङ्गोऽयमित्यत्र विपर्ययं दर्शयति— **अत्रे**ति । **तुः** भ्रमान्तरविषयाद्विशेषद्योतकः, शङ्कानिवृत्त्यर्थो वा । **पृथक्**, आरोप्यात्; अहंत्वविशिष्टवैयधिकरण्येनेत्यर्थः; न ह्यत्राधिष्ठानप्रकाशो दृष्ट इति भावः । अतद्रूपतया विशेषणतया च भानं विवृणोति— **तथा ही**ति । उक्तं विशिष्ट-

प्रतीतिविरोधं प्रसिद्धोदाहरणेन निदर्शयति— **तदेवमिति**। न हि स्वाध्यस्तदेवदत्तविशेषणतया भातीति भावः ॥

यदप्युक्तं स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनाज्ज्ञातृत्वमपि मिथ्येति, तदयुक्तम्; आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्; तद्वत एव प्रतीतेः। सकलेतरोपमर्दितत्त्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्; हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥

देहत्वादिवत् बोद्धृत्वादिकमपि भ्रान्तेरेव प्रतिपन्नत्वादध्यस्तम्; ततश्च मिथ्येति प्रागुक्तमनुवक्ति— **यदपीति**। अयं हेतुरतिप्रसञ्जक इति दर्शयितुमाह— **तदिति**। तत्र विश्वाध्यासाधिष्ठानस्य वैषम्यं शङ्कते— **सकलेति**। परोक्तहेतोः स्वेष्टेऽपि वृत्तेरविशेषमाह— **हन्तेति**। हर्षाद्यर्थको वा हन्तकारः ॥

यदप्युक्तम्— अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति, अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहंकारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः; अपि त्वन्तःकरणरूपस्याहङ्कारस्य। कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः; कर्तृत्वे अहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवानात्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति। नैतदुपपद्यते; देहस्येवाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादियोगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्य ॥

कर्तृत्वादेर्निर्विकारत्वादिभिर्विरोधं दृश्यत्वानात्मधर्मत्वमात्मनोऽकर्तृत्वादिहेतुतर्कवर्गं च दूषयितुमनुवदति— **यदपीति**। **कर्तृत्वादिरिति**; आदिशब्देन विकारित्वभोक्तृत्वयोः **जडत्वादीति** आदिशब्देन परिच्छिन्नत्वादेश्च संग्रहः। अत्र विरोधचोद्यमेव विरोधहतमित्यभिप्रायेणाह— **नैतदिति**। आत्मन्यकर्तृत्वादिसाधकानामन्तःकरणे कर्तृत्वादिसाधकानां च प्रमाणविरोधमभिसन्धायाह— **देहस्येति**। ननु अचेतनत्वहेतुर्ज्ञातृत्वनिषेधे साध्याविशिष्टः; मैवम् क्षेत्रवर्गान्तर्भूतत्वेन शास्त्रसिद्धत्वे तात्पर्यात्। दृश्यत्वमिह स्वगोचरबुद्ध्यैव प्रकाश्यत्वम्। यद्वा, द्रष्टुरन्यतया तदुपकरणत्वेन दृशिविषयत्वम्। आदिशब्देन परिणामित्वविनाशित्वसंग्रहः ॥

एतदुक्तं भवति — यथा देहादिर्दृश्यत्वपराक्त्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्विविच्यत, एवमन्तःकरणरूपाहङ्कारोऽपि तद्व्यत्वादेव तैरेव हेतुभिस्तस्माद्विविच्यत इति। अतो विरोधादेव न ज्ञातृत्वमहङ्कारस्य दृशित्ववत्। यथा दृशित्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्; ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्; ज्ञानं चास्य

नित्यस्य स्वाभाविकधर्मत्वेन नित्यम्; नित्यत्वं चात्मनः *नात्मा श्रुतेरित्यादिषु वक्ष्यति। *ज्ञोऽत एवेत्यत्र ज्ञ इति व्यपदेशेन ज्ञानाश्रयत्वं च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्ध-मित्युक्तम्। स्वयमपरिच्छिन्नमेव ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः। अतः क्षेत्र-ज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते। तच्चेन्द्रियद्वारा व्यवस्थितम्; तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रवर्तते। ज्ञान-प्रसरे तु कर्तृत्वमस्त्येव; तच्च न स्वाभाविकम्; अपि तु कर्मकृतमित्यविक्रियस्वरूप-एवात्मा। एवंरूपविक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदाचिदपि जड-स्याहङ्कारस्य ज्ञातृत्वसंभवः॥

ननु प्राकृतत्वेऽपि यथा क्वचिदेवेन्द्रियत्वतदाश्रयत्वादिकं तद्विकारशक्त्या अध्यासशक्त्या वा तथा क्वचिदेव ज्ञातृत्वं स्यात्। यत्तु **चेतनासाधारणस्वभावत्वाच्च ज्ञातृत्वस्येति**, एतदपि तद्विवक्षितं न साधयेत्; अन्तःकरणस्यैवा-साभिश्चेतनत्वाङ्गीकारादित्यत्राह— **एतदुक्तमिति**। अयं भावः— *पृथिव्यापस्तेजो वायुरिति तत्त्वानि; तेभ्यश्चै-तन्यं किण्वादिभ्यो मदशक्तिवदिति बृहस्पत्युक्तं प्रतिवदता त्वयाऽपि यैः स्वभावैर्देहादिर्द्रष्टृत्वप्रत्यक्त्वभोक्तृत्वादिरहितो-निष्कृष्टः, तैरेवाहङ्कारद्रव्यमपि तद्रहितं स्थाप्यत इति। कर्तृत्वादिस्वीकारे जडत्वादिप्रसङ्गस्तु श्रुत्या शिथिलमूलः। देहेऽहंप्रत्ययस्य भ्रान्तित्वात्तत्रानात्मत्वम्। न च जडत्वादिकमहंधीयुक्तम्, उपहिते ब्रह्मणि तद्विषयत्वेऽपि त्वयैव जडत्वादिस्वीकारात्। आत्मनि वा अहंत्वादिकं प्रत्यक्षादिसिद्धं निर्बाधम्। **चेतनासाधारणस्वभावत्वोक्तिश्चान्तःकरणा**तिरिक्तात्मस्वभावतया प्रमाणसिद्धत्वप्रकाशनार्था। अत्र शक्तिविशेषचोद्यं परिहरति— **अत** इति। यद्यात्मत्वमन्तःकरणस्य विरोधात्त्यज्यते, तथैव द्रष्टृत्वादिकमपि त्याज्यम्; अन्यथा देहस्यैव तत् दुस्त्यजमिति भावः। अविक्रियात्मकत्वहेतो-रात्मनि साक्षादन्वयविवक्षायामसिद्धिमप्याह— **न चेति**। व्यवहितसंबन्धं व्यञ्जयितुमाह— **ज्ञातृत्वमिति**। अपृ-थक्सिद्धविशेषणाभिप्रायेणात्र गुणशब्दः। ननु आगन्तुकज्ञानगुणाश्रयत्वे साक्षाद्विकारित्वं स्यादित्यत्राह— **ज्ञानमिति**। **चः** शङ्कानिवृत्त्यर्थः। धर्मिनाशाद्विरोधिगुणाद्वा गुणस्य नाशं परे वदन्ति; अत्र तु नोभयमित्यभिप्रायेण **नित्यस्य स्वाभाविकधर्मत्वेने**त्युक्तम्। द्वयोरपि नित्यत्वस्य श्रुतिसिद्धत्वेऽप्याप्रलयस्थायित्वादिपक्षाणामपसिद्धान्तत्वं दर्शयितुं श्रुतिस्वारस्यपुरस्कारकं सूत्रद्वयमाह— **नित्यत्वमि**त्यादिना वाक्यद्वयेन। आत्मस्वरूपस्य ज्ञानत्वं वदद्भिर्वाक्यैस्तस्य ज्ञानाश्रयत्वमर्थान्निषिद्धं स्यादित्यत्राह— **अस्येति**। ननु मणिः पार्थिवः, प्रभा तैजसी; अतो मणिप्रभयोः पर्वतोत्सङ्ग-प्रकारेण संबन्धः। मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गादिति प्रागुक्तमपि चिन्त्यम्; अतिकठिनस्य पार्थिवांशस्य विशरणानभ्युपगमात्, मणिस्थस्य तेजोंशस्य नाशप्रसक्तेरिष्टत्वाच्च। तस्माद्विषमो दृष्टान्तः। मैवम्; मणिर्हि नः **पञ्चभूतमयः पिण्डः**, तत्र पिण्डमध्यस्थस्य तेजोंशस्य सप्रभाकत्वात्तद्विशरणे च प्रतिक्षणमनुलब्धसंङ्घातशैथिल्यक्लृप्तौ

गौरवप्रसङ्गे तात्पर्याच्चेति। नन्ववयविवादपरित्यागिनां, प्रभाप्रभावद्रूपस्य ज्ञानतदाधाररूपस्य वा मिथोऽत्यन्तभिन्नस्य द्रव्य-द्वयस्य कथमपृथक्सिद्धिः? द्रव्याद्रव्ययोरपि वा कथम्? यथादर्शनं स्वभावनियमादिति चेत्तुल्यम्। अत एवेश्वरं प्रत्यपि चिदचिद्द्रव्याणामपृथक्सिद्धिरनपाया। यद्यात्मनां ज्ञानमीश्वरस्येव स्वाभाविकमनश्वरं च, तर्हि सर्वे सर्वदा सर्वज्ञाः स्युरित्यत्राह—**स्वयमि**ति; स्वभावत इत्यर्थः। एवं सति मुक्तावपि धीसङ्कोचः प्रलयमोक्षयोरिवेदानीमपि धीतारतम्यविरहः स्यादित्यत्राह—**अत** इति। करिष्यमाणोपपादनप्रकारादित्यर्थः। मुक्तौ कर्माभावादद्य कर्मतारतम्याच्च शङ्काद्वयनिरासः। ननु धियः स्वाभाविकत्वे कर्मणैव तस्यास्तारतम्ये च किमर्थेन्द्रियसृष्टिः? अतोऽपर्यनुयोज्याविद्यातारतम्याद्धीतारतम्याध्यासः इन्द्रियादिसृष्टिश्चेत्यत्राह—**तदि**ति। तरतमभावेन वर्तमानमित्यर्थः। **व्यवस्थितम्**—सद्वारकतयैव स्वतन्त्रेच्छासिद्धमिति यावत्। ज्ञानस्योत्पत्तिनाशौ प्राक् समर्थितौ; अत्र तु तन्नित्यत्वोक्तिः कथमित्यत्राह—**तदि**ति। श्रुतिप्रसिद्धं कर्म-तारतम्यं चेत्यर्थः। **प्रसर**शब्द इह संकोचमभिप्रैति। तथाऽपि जानात्यादिः पुरुषकर्तृक एव। अतः सविकारत्वं दुस्त्यजम्; ज्ञाननित्यत्वश्रुत्याऽपि अद्यतनसंकुचितप्रसर एव नित्यः स्यात्; तारतम्यं च केशलोमकपालादिवैचित्र्यवत् स्वभावात् स्यादिति चोद्यत्रये **ज्ञानप्रसर** इत्यादिवाक्यत्रयं प्रत्युक्तिः। अत्र देहविकारवत् व्यवहितविकारो नानिष्टः। श्रुतिश्च ज्ञानस्वरूपमात्रनित्यत्वमेव वक्ति। अतस्तारतम्यस्य न स्वाभाविकत्वम्। धीतारतम्यस्य कर्मतारतम्यहेतुकत्वं च * अविद्या कर्मसंज्ञेत्यादिशास्त्रसिद्धम्। तदनादरे लोकायतोत्थानप्रसङ्ग इति भावः। आत्मा स्वरूपतस्तावन्न मृदादिवद्विक्रियते; धर्मतोऽपि दोषरूपो विकार औपाधिक इत्यभिप्रायेण **अविक्रियस्वरूप एवे**त्युक्तम्। तथाऽपि निर्विकार-श्रुत्या व्यवहितविकारस्यापि निषेधे प्राप्ते ज्ञातृत्वमौचित्यादन्तःकरणस्येत्यत्राह—**एवंरूपे**ति। **रूप**शब्दोऽत्र निरूपक-धर्मपरः। यस्य ज्ञानवत्त्वं प्रमितं, तस्यैव हि तद्द्वारकविकारः संजायते; अतो निर्विकारश्रुतिरत्र सङ्कोच्येति भावः। यद्वा, त्वदुक्तयुक्त्यैवान्तःकरणस्य घटवदेवात्मत्ववत् ज्ञातृत्वमपि न स्यादिति॥

**जडस्वरूपस्याप्यहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्संभव इति चेत्; केयं चिच्छायापत्तिः? किमहङ्कारच्छायापत्तिः संविदः? उत संविच्छायापत्तिरहङ्कारस्य? न तावत्संविदः, संविदि ज्ञातृत्वानभ्युपगमात्। नाप्यहङ्कारस्य, उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्, द्वयोरप्यचाक्षुषत्वाच्च। न ह्यचाक्षुषाणां छाया दृष्टा॥**

अथ जलादिषु मणिप्रभावेधन्यायेन चान्द्रादिच्छायापत्तिन्यायेन वा ज्ञातृत्वाध्यासं शङ्कते—**जडे**ति। तत्र संविदहङ्कारयोर्मध्ये कीमीया छाया कुत्रापन्नेति विकल्पासहत्वमभिप्रेत्याह—**केयमि**ति। प्रकृतिपुरुषयोरनयोरितरेतर-स्वभावाध्यासो हि साङ्ख्यैरुक्तः; तदनुसारोऽत्र परस्य संभवतीति मत्वा **तच्छायापत्त्या** इत्यत्र विवक्षाभेदबुद्ध्या विकल्पयति—**किमि**ति। किमहङ्कारे संविदश्छायापत्तिः, उत स्वाधिष्ठानभूतायां संविदि तदध्यासितस्यैवाहङ्कारस्येत्यर्थः। आद्यं परसंमतप्रकारेणैव दूषयति—**न ताव**दिति। द्वितीये युक्तिविरोधमाह—**नापी**ति। **उक्तरीत्या** प्रकृतिपरिणामित्वादिनेत्यर्थः। यद्यपि अजडस्य ज्ञातृत्वमव्यापकम्, तथाऽपि जडस्याज्ञत्वं व्यापकमित्यभिप्रायेण तस्य ज्ञातृत्वायोग उक्तः। अत्र विकल्पकोट्योर्व्युत्क्रमेणोत्तरं दत्तमिति केचित्। तदा तु षष्ठीनिर्दिष्टयोर्दर्पणस्थानीयत्वम्। तत्र किमिह तद्धर्माध्यासमात्रं तच्छायापत्तिः, उत तत्प्रतिबिम्बापत्तिरिति विकल्पे प्रथमस्य दत्तोत्तरत्वं मत्वा द्वितीयेऽपि तेनैव

दूषिते दूषणान्तरमप्यस्तीत्याह— **द्वयोरिति**। अपिशब्द एकैकाचाक्षुषत्वेऽपि प्रतिबिम्बासंभवात् अत्र कैमुत्यार्थः। व्याप्तिं व्यनक्ति— **न हीति**। **अचाक्षुषाणामि**ति अधिष्ठानानामारोप्याणां च तन्त्रोक्तिः॥

**अथाग्निसंपर्कादयःपिण्डौष्ण्यवच्चित्संपर्काज्ज्ञातृत्वोपलब्धिरिति[चेत्]; नैतत्। संविदि वास्तवज्ञातृत्वानभ्युपगमादेव तत्संपर्कादहङ्कारे न ज्ञातृत्वं तदुपलब्धिर्वा। अहङ्कारस्य त्वचैतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात्संविदि ज्ञातृत्वं तदुपलब्धिर्वा॥**

* अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत्। तथा विश्वमिदं देवो व्यावृत्य परितिष्ठति॥

इत्यादिवाक्यानुसारी पक्षान्तरं शङ्कते— **अथेति**। किमत्र रुमाक्षिप्तपार्थिवान्तरवत्संसर्गस्वभावोत्पत्त्या तदुपलब्धिः, उत मञ्जिष्ठादिवत्तत्तदारोपादिति विकल्पं मत्वा द्विधाऽप्यसंभवमभिप्रेत्याह— **नैतदि**ति। तत्र संविदोऽहङ्कारस्य वा रुमास्थानीयत्वमिति विकल्पे पूर्वं निरस्यति— **संविदी**ति। आरोपितज्ञातृत्वेऽन्योन्याश्रयसूचनाय **वास्तव**शब्दः। परमपि प्रागुक्तयुक्त्यैव निरस्तमित्याह— **अहङ्कारस्ये**ति। तुशब्दोऽत्र चूर्णहरिद्रादिन्यायतोऽपि ज्ञातृत्वाभ्युपगमे स्वेष्टविरोधं द्योतयति। अत्र **अचेतनस्ये**ति प्रकृतिपरिणामित्वादिपरम्। असंभवसाम्येऽपि संविज्जडत्ववैषम्यं, तत्संपृक्ताहङ्कारे तद्विशिष्टभ्रमश्शङ्क्येतापि; अहङ्कारसंपृक्तायां तु संविदि तावदज्ञत्वजडत्वादिभ्रम एव स्यादित्यभिप्रायेण **सुतरामि**त्युक्तम्॥

**यदप्युक्तमुभयत्र न वस्तुतो ज्ञातृत्वमस्ति; अहङ्कारस्त्वनुभूतेरभिव्यञ्जकः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति आदर्शादिवदिति। तदयुक्तम्, आत्मनः स्वयंज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात्। तदुक्तम्— * शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः। स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्॥ इति। स्वयं प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः। तत्र तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति॥**

पक्षद्वयोक्तदोषातिक्रमाय * जलाधारेष्विवांशुमान् इत्याद्यनुगृहीतं प्रागुक्तव्यञ्जकस्वभावमनुवक्ति— **यदपीति**। न हि युक्तिविरुद्धं दृष्टान्तमात्रेण सिध्येदित्यभिप्रायेणाह— **तदि**ति। अयुक्तिं विवृणोति— **आत्मन** इति। स्वयंज्योतिषः नित्यस्वयंप्रकाशे स्वरूपे व्यञ्जकान्तरनिरपेक्षस्येत्यर्थः। संवित्तेरिव साक्षाद्व्यञ्जकत्वं न संभवतीत्यभिप्रायेण जडस्वरूपत्वेनोक्तिः। उक्तवैशिष्ट्यार्थमेतत्प्रकरणोक्तानां परमाचार्यसंप्रदायसिद्धत्वमाह— **तदुक्तमि**ति। श्लोकविवृतिमाह— **स्वयमि**ति। न ह्यविद्यातद्विकारेषु किञ्चित्त्वयाऽपि स्वप्रकाशतया स्वीकृतमिति भावः। अचिच्छब्दश्चिदायत्त[स्वरूपत्वे] प्रकाशत्वे हेतुपरः। नित्ये न कारणापेक्षेति दर्शयितुम् **अनुदितत्वादि**कथनम्॥

**किं च, अहङ्कारानुभवयोः स्वभावविरोधात् अनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्यभावः। यथोक्तम्— * व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं न च स्यात्प्राति-**

कूल्यतः। व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटे॥ इति। न च रविकर-निकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्ववत् संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदः साधीयः। तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्। करतलप्रति-हतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्त इति तद्बाहुल्यमात्र-हेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम्॥

**तदायत्तप्रकाशे**त्यनेन सूचितं विरोधं व्यञ्जयितुमाह— **किञ्चे**ति। स्वभावविरोधात्पूर्वोक्ताव्यञ्जकत्वा-योगाच्चेत्येके। तात्पर्यान्तरमपि ब्रूमः— यथा कार्यस्य स्वकारणकारणत्वे स्वप्रागभावकालवृत्तित्वप्रसङ्गाद्विरोधः, तथा-ऽत्रापीति। न ह्यहङ्कारः स्वयमव्यक्तो व्यञ्ज्यात्; संविन्निरपेक्षसत्ताकत्वेन स्वरूपसत्यत्वप्रसङ्गात्। अत एव न स्वयं व्यक्तः; तस्मात्संविदधीनसिद्धिव्यक्तिः; तदिदम् **अशेषार्थसिद्धिहेतुभूत**मित्यनेन सूचितम्। संविच्च नाव्यक्ता व्यञ्जयेत्; जडत्वप्रसङ्गात्। तदसौ स्वव्यक्तिसापेक्षाहङ्कारायत्तस्वव्यक्तिरित्यन्योन्याश्रय इति। एतदप्यात्मसिद्धौ श्लोकान्तरेण स्पष्टयति— **यथोक्त**मिति। प्रातिकूल्यमिह स्वभावविरोधशब्दोक्तम्। मिथो व्यङ्ग्यत्वसंभवे प्रागुक्तं दृष्टान्तं दूषयति— **न चे**ति। पक्षवद्दृष्टान्तेऽपि व्यञ्जकत्वासंभवमाह— **तत्रापी**ति। ननु स्फुटतरप्रकाशः करतलायत्तः प्राग्दर्शितः; तत्राह— **कर**ेति। बाहुल्यद्वारा व्यञ्जकत्वे कारणानां सर्वेषां व्यञ्जकत्वप्रसक्तिर्मालचा सूच्यते। न चाहङ्कारः संवित्स्रोतःप्रतिघाती; न च सा बहुलीकरणार्हा, यत इह करादिदृष्टान्तः स्यादिति च भावः॥

किंच, अस्य संविद्रूपस्यात्मनोऽहङ्कारनिर्वर्त्याभिव्यक्तिः किंरूपा? न ताव-दुत्पत्तिः, स्वतस्सिद्धतयाऽनन्योत्पाद्यत्वाभ्युपगमात्। नापि तत्प्रकाशनम्, तस्य अनुभवान्तराननुभाव्यत्वात्। तत एव च न तदनुभवसाधनानुग्रहः। स हि द्विधा— ज्ञेयस्येन्द्रियसंबन्धहेतुत्वेन वा, यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणा-दीनां नयनादीन्द्रियसंबन्धहेतुत्वेन; बोद्धृगतकल्मषापनयनेन वा, यथा परतत्त्वाव-बोधने साधनस्य शास्त्रस्य शमदमादिना। यथोक्तम्— * करणानामभूमित्वान्न तत्संबन्धहेतुतेति॥

व्यक्तिस्वरूपं निर्धार्य मिथो व्यञ्जकत्वं वाच्यम्; सैवात्र दुर्वचेति विवक्षुराह— **किंचे**ति। **अस्ये**त्यनेन स्वयं-प्रकाशतया स्थापितत्वं सूच्यते। तत्र हेतुः संविद्रूपत्वम्; वक्ष्यमाणकोटीनां यथायोगं मानविरोधमभ्युपगमविरोधं च व्यञ्जयितुम् **आत्मन** इत्युक्तम्। **किंरूपा**— न किञ्चिद्रूपेत्यर्थः। विकल्पकोटीः हृदि निधाय क्रमाद्दूषयति— **न तावदि**ति। उत्पत्तिरेवाभिव्यक्तिरिति साङ्ख्यैरुच्यते; परस्य चानिर्वचनीयोत्पत्तिर्बुद्धित एव सिध्यति; स्वमते च प्रत्यक्षधीहेतुभूतविषयोत्पादकमुत्पादनद्वारा व्यञ्जकतयैवोपचर्येत। उत्पत्तिकोटिरिहाशङ्क्य निरस्ता। **स्वतस्सिद्धतया-**

अनादितयेत्यर्थः। **अनन्योत्पाद्यत्वाभ्युपगमात्**— सौगतवदुत्पाद्यत्वस्यानङ्गीकारादिति यावत्। तदिष्टं कोट्यन्तरवन्निषेधति— **नापीति**। **तत्प्रकाशनम्**— आत्मगोचरप्रकाशजननम्। इदं च ज्ञापकत्वेन कारणत्वेन वा भाव्यम्। **अननुभाव्यत्वात्**। स्थापितं ह्येतत्त्वयैवेति भावः। कोट्यन्तरेऽप्युक्तदोषानतिवृत्तिमाह— **तत एवेति**। **चो**ऽत्र भिन्नक्रमः। अस्मिन्पक्षे दत्तोत्तरत्वमप्युत्तरं व्यञ्जयितुं विकल्पयति— **स हि द्विधेति**। अत्र पूर्वः कल्पो दृष्टोपकररूपकरणानुग्रहमुपलक्षयति, उत्तरस्त्वदृष्टमुखेन कर्तृसंस्कारद्वारकः। तत्र करणसंभाव्यानुग्रहान्तरं शङ्कते— **यथेति**। ग्राह्य इति शेषः। संयुक्तसमवायेन जातिग्रहणे व्यक्तिसंयोगोऽपेक्षित इत्येतावता व्यक्तिनिदर्शनम्। दर्पणादीनां तु नयनरश्मिपरिस्रोतःप्रवर्तनद्वारा; व्यक्तिदर्पणादीनां तु व्यञ्जकत्वमेव नास्तीति वक्ष्यति। **कल्मषशब्द** इह **कषायशब्दोक्तं** कृत्स्नमभिप्रैति। अनयोराद्यस्यात्मसिद्धौ दूषणमुक्तमित्याह— **यथोक्तमिति**। **अभूमित्वात्**— अविषयत्वादित्यर्थः। द्वितीये तु, शब्देन प्रत्यक्षे जनयितव्ये शमादिरनुग्राहक इति। निष्प्रमाणकारणकल्पनासिद्धेर्दूषणस्य दुष्टत्वात्तदुक्तिरिह नादृता। * अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यत इत्युत्तरार्धेन दूषणम्। अहमर्थस्येति काकाक्षिवत्। अहङ्कारातिरिक्तस्य बोद्धुरनभ्युपगमात्तस्य च स्वरूपेण स्वकल्मषविरोधित्वे कल्मषनिबर्हणार्थे कर्तव्यविधयो निरर्थकाः स्युरिति भावः॥

किंच, अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः। स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धनिरसनेन भवेत्, यथा रूपादिग्रहणोत्पत्तिनिरोधिसन्तमसनिरसनेन चक्षुषो दीपादिना। न चेह तथाविधं निरसनीयं संभाव्यते। न तावत्संविदात्मगतं तज्ज्ञानोत्पत्तिनिरोधि किंचिदप्यहङ्कारापनेयमस्ति। अस्ति ह्यज्ञानमिति चेन्न, अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात्। ज्ञानमेव हि अज्ञानस्य निवर्तकम्। न च संविदाश्रयत्वमज्ञानस्य संभवति; ज्ञानसमानाश्रयत्वात्तत्समानविषयत्वाच्च ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति। यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वम्, तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात्। संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतयाऽभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ। अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञानप्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः। अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः॥

अनुभूतिस्वभावात्तदनुग्रहप्रकारस्वभावाच्चाहङ्कारस्य व्यञ्जकत्वं निरस्तम्। अथानुभूतेरनुभाव्यत्वान्वारोहेऽप्यहङ्कार-स्वभावात्तस्य करणानुग्राहकत्वं दुर्वचमिति वक्तुमाह— **किं चेति**। अत्र कोट्यन्तराणां दूषितत्वात्परबुद्ध्यनुसारेण संभावितमनूद्य दूषयति—**स हीत्यादिभिस्त्रिभिः**। प्रतिबन्ध इह विवक्षितकार्योपयुक्तस्वनिवृत्तिपदार्थः। ततश्च तथाभूतं द्रव्यमिति परैरेवाङ्गीकृतम्। अत्र निरसनीयस्य संविद्गतत्वं, तत्तिरोधायकत्वम्, अहङ्कारापनोद्यत्वं च दूष्यतयोपक्षिपन्नु-द्भटदोषं चरमं दूषयति— **न तावदिति**। गतशब्दोऽत्र मणौ मालिन्यवदा[धेयतया]च्छादकतया प्राप्तं वक्ति। **किञ्चिदपि**— रजस्तमःकलुषादिकमित्यर्थः। परमतप्रसिद्ध्या शङ्कते— **अस्ति हीति**। तत्र स्वमतविरोधं प्रमाण-विरोधं चाभिप्रेत्याह—**नेति**। प्रथमं विवृणोति—**अज्ञानस्येति**। द्वितीयं विवृणोति—**ज्ञानमिति**। अज्ञानस्याहङ्कारेण निवृत्तौ किं पश्चान्निष्फलेन ज्ञानेन तदर्थप्रवृत्त्या चेति भावः। भावरूपे चाज्ञाने सममिदं दूषणम्। अथ संविदात्मगतमित्युक्तं दूषयति— **न चेति**। संवित् आश्रयो यस्य तत्संविदाश्रयम्। आश्रयशब्दः इह विषयतया, आधारतया च संबन्धि-त्वमाह। **ज्ञानसमानेत्यादिना** तदुभयनिषेधहेतुद्वयोक्तेः; विषयेऽप्याश्रयशब्दः * चेतसो ये व्यपाश्रयः, * आश्रयश्चेतसो ब्रह्म इति प्रयुज्यते। शुक्तिकाद्यज्ञानं हि यदाश्रितं यद्विषयं च तदाश्रितेन तद्विषयेण च बाधकज्ञानेनापोद्यते। इह चाज्ञानाश्रयत्वे तद्विषयत्वे च ज्ञातृत्वज्ञेयत्वे प्रसज्येयातामिति भावः। उक्तस्यासंभवस्य व्यापकाभावफलितत्वमाह— **ज्ञात्रिति**। स्वरूपतो धर्मतोऽपि, तिरोधेयत्वासंभवाय ज्ञानमात्रत्वोक्तिः। साक्षित्वोक्तिश्च स्वस्य परस्य वा तिरोधाने स्वपरसाक्षित्वं न स्यादिति सूचनार्था। अत्राज्ञानाधारत्वांशस्यासंभवं निदर्शनेन निर्धारयति— **यथेति**। यद्यपि ज्ञाना-त्यन्ताभावरूपमज्ञानं घटादौ ज्ञानमात्रे चास्ति, तथाऽपि तस्य तत्स्वरूपानुबन्धितया निवर्त्यत्वाभावादिह परेष्टाज्ञाना-धारत्वासंभव उच्यते। भ्रान्त्या तत्संभवाभ्युपगमेऽनिर्मोक्षप्रसङ्गमाह— **संविद इति**। ज्ञानविषयत्वे तु जडत्वादि-प्रसङ्गस्त्वय्यैवोक्त इति भावः। अज्ञानस्य स्वविरोधिनाऽनिवर्त्यत्वे किं संविदोऽवेद्यत्वेनेत्यत्राह— **ज्ञानमिति**। स्वविषये स्वविषयस्य छादकमेवेत्यर्थः। तन्निदर्शनेन व्यनक्ति— **यथेति**। मिथ्याभूतं रज्जुसर्पादिकं स्वविषय एव हि पूर्वभावं निवर्तयतीत्यव्याहतम्। एवं विषयतया आश्रयतया च अज्ञानसंबन्धित्वे मुक्त्यसंभवं निगमयति— **अत इति**। अत्र परेष्टभावरूपधर्मसिद्धौ हि तद्धर्मतयोक्तानां संभवासंभवौ चिन्त्यौ; साऽपि नास्तीत्याह— **अस्य चेति**। तिष्ठतु मदिष्टं भावरूपमज्ञानम्; ज्ञानप्रागभावरूपाज्ञाननिरासेनाहङ्कारः तज्ज्ञानसाधनमनुगृह्णात्वित्यत्र **ज्ञानमेव ह्यज्ञा-नस्य निवर्तकमित्यनेन** दत्तोत्तरत्वेऽपि दूषणान्तरं दर्शयितुमाह— **ज्ञानेति**। प्रागभावस्य प्रतियोगिना समानकालत्व-मेव हि विरुद्धम्; प्रतियोगिनं प्रति तु नियतपूर्वतया हेतुतैवेति भावः। अहङ्कारस्य व्यञ्जकत्वायुक्तिं विकल्पकोट्यन्त-रासंभवव्यक्त्यै निगमयति—**अत इति**। व्यङ्क्तृव्यङ्ग्यव्यक्त्यादिस्वभावसमीक्षया दर्शितानां दोषाणां दुस्तरत्वादित्यर्थः। **केनापि**— उत्पादनद्वारा ज्ञापकतया तत्कारणतया तदनुग्राहकतया चेत्यर्थः॥

न च स्वाश्रयतया अभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः; प्रदीपादिष्व-दर्शनात्; यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च। तच्च स्वतःप्रामाण्यन्यायसिद्धम्। न च दर्पणादिर्मुखादेरभिव्यञ्जकः। अपि तु चाक्षुषतेजःप्रतिफलनरूपदोषहेतुः। तद्दोषकृतश्च तत्रान्यथाऽवभासः। अभिव्यञ्जक-

स्त्वालोकादिरेव । न चेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषापादनं संभवति । व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः ; न तु व्यक्ति-व्यङ्ग्यत्वात् । अतोऽन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा । तस्मात्स्वत एव ज्ञातृ-तया सिध्यन्नहमर्थ एव प्रत्यगात्मा , न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि-न प्रत्यक्त्वसिद्धिरित्युक्तम् ॥

**स्वाश्रयतया अभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभाव** इति यत्प्रागुक्तम् , तत् प्रामाण्यं स्वत इति वदद्भ्योऽबाह्येभ्यो न रोचेतेत्यभिप्रायेण दूषयति— **न चेति** । स्वभावक्लृप्तिरियं व्यभिचारादयुक्तेत्याह— **प्रदीपा-दिष्विति** । **आदिशब्दः** इन्द्रियलिङ्गागमसंस्काराणां तदनुग्राहकाणां च सङ्ग्रहार्थः । संशयादिषु व्यभिचारेऽपि यथा धियां प्रमात्वं स्वभावः प्राचुर्याद्दृश्यते, तथेहापि स्यादिति शङ्कानिरासाय बहुवचनम् । स्वभावनिष्कर्षश्चात्र विपरीत इत्याह— **यथावस्थितेति** । **प्रतीतिशब्द** इह व्यवहारयोग्यतापादनपरः । **स्वाभाव्यं** स्वभाव एव । अयं भावः—

**मुक्तनित्येश्वरधियां प्रमात्वं ह्यनुपाधिकम् । क्षेत्रज्ञधीपरिच्छेदभ्रमत्वादि च दोषजम् ॥ ४९७ ॥**
**भ्रान्तावपि यथार्थत्वमधिष्ठानादिषु स्थितम् । अनुप्रविष्टबौद्धैरप्यवशादिदमीरितम् ॥ ४९८ ॥**
**अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ ४९९ ॥** इति ।

उक्तस्यार्थस्य जैमिन्यादिसंमतत्वेन मीमांसानिष्ठैः दुस्त्यजत्वं सूचयति— **तच्चेति** ॥

**मानत्वामानत्वे स्वत इति साङ्ख्याः कणाशनाः परतः । पूर्वं परतो बौद्धाः परं तु मीमांसका द्वयं केचित् ॥**
**सौगताश्चापि चार्वाकाः साङ्ख्यकाणादवर्त्मगाः । प्रामाण्यज्ञप्तिरप्येवं बहुधाऽऽद्विवादिभिः ॥ ५०१ ॥**

अत्र दृष्टान्तैकदेशे व्यञ्जकत्वमेव मृग्यम् ; कुतः स्वनिष्ठतया व्यञ्जनमित्यभिप्रायेणाह— **न चेति** । कुतस्तर्हि सर्वैस्तेषु व्यञ्जकतोक्तिरित्यत्राह— **अपि त्विति** । दृष्टावभासकरणभूतदृष्टिप्रसरहेतुतामात्रेण व्यञ्जकत्वोपचार इति भावः । अगृहीतग्रहणोपायस्य तदीयदोषत्वं व्यनक्ति— **तद्दोषेति** ।

**प्रतिबिम्बेऽल्पतादीनामाभिमुख्यस्थितेरतः ।**
**यथार्हं वासनानाञ्च दोषतैवं व्यवस्थिता । सव्यासव्यविपर्यासप्रभृतेरपि संभवः ॥ ५०२ ॥**

*          *          *          *

**एवं तर्हि   *   *   दोषदर्पणादेरपि धीहेतवोऽन्यथा स्युः ।**
**धीहेतवो यथा दोषाश्चक्षुरागामित्यसत् । अन्वयव्यतिरेकाद्यैः हेतुस्स इति निश्चयात् ॥ ५०३ ॥**
**तत्त्वधीरोधसङ्कोचे दोषास्स्युर्भ्रान्तिहेतवः । अन्वयव्यतिरेकाभ्यां दोषादिर्हि विविच्यते ॥ ५०४ ॥**

इत्याशयः । तत एव दर्पणादेरपि व्यञ्जकत्वं स्यादित्यत्राह—**अभिव्यञ्जक** इति । **आलोकादिरेवेति** । आलोकादि-

सहितं प्रतिफलितं चाक्षुषं तेज इत्यर्थः। शुक्तिरज्ज्वादिवदधिष्ठानमात्रेण व्यञ्जकत्वं न शक्यमित्यवधारणाभिप्रायः। अस्त्वविद्यादोषार्थस्य दोषान्तरकन्दस्याहङ्कारस्य आदर्शवद्दोषहेतुत्वमिति शङ्कां निरस्यति— **न चेहेति**। स्वरूपप्रकाशे तत्प्रकाशान्तरकरणे वा विकृत्यापादनमिह दुर्वचमिति भावः। दृष्टान्तान्तरेऽप्यन्यथासिद्धिमाह— **व्यक्तेरिति**। **तु-**शब्दो दोषापादकाद्वैषम्यार्थः। **आकारः**— तदाश्रितस्वभाव इति यावत्। **तदाश्रयतया प्रतीतिरित्यनेन** याथार्थ्यं व्यज्यते। ननु यथा दीपादयः स्वधर्मानपि प्रकाशयन्ति तथा व्यक्तिरपि जातिमित्यत्राह— **नन्विति**। व्यक्तिजात्यो-रत्रैकसामग्रीवेद्यत्वमेव; इन्द्रियसंबन्धस्तु व्यक्तिद्वा[रि]रैवेत्येतावताऽपि न सा व्यञ्जिका; व्यक्तिशब्दोऽत्र न व्यञ्जकत्वार्थ-इत्याशयः। अहङ्कारस्य स्वाश्रयतया संविद्व्यञ्जकत्वानुपपत्तिमुपसंहरति— **अत** इति। उपलम्भयुक्त्यागमैर्विरोधद्योतनाय **अन्तःकरणभूत**त्वोक्तिः। साङ्ख्यमृषावादिनोर्मतभेदं जातिमुखादेरिव धर्मत्वप्रतिफलनरूपहेतुद्वयं चाभिप्रेत्य **वस्तुतो दोषतो वे**त्युक्तम्। **ज्ञातृत्वं तथोपलब्धिरिति** च तत्फलितव्यञ्जनम्। ज्ञातुरहमर्थस्यात्मत्वं ज्ञानमात्रस्यानात्मत्वं च निगमयति— **तस्मादि**ति। ननु सुषुप्त्यादावहंबुद्धिविरहेऽप्यात्मस्वरूपसत्त्वं वाद्यन्तरैरुक्तम्। एवमात्मतया अस्म-दुक्तायां ज्ञप्तावपि स्यादित्यत्र * अहमर्थो न चेदात्मेत्यादिना दत्तोत्तरत्वमाह— **अहंभावेति**। **ज्ञप्तेरपीति**। स्वप्रकाशत्वे सत्यपीति भावः॥

**तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेऽप्या-प्रबोधादहमित्येकाकारेणात्मनस्स्फुरणात्सुषुप्तावपि नाहंभावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्। न हि सुप्तोत्थितः कश्चिदहंभाव-वियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहम् अज्ञानसाक्षितयाऽवतिष्ठ इत्येवंविधां स्वापसम-कालमनुभूतिं परामृशति। एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति। अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते। न च वाच्यं यथेदानीं सुखं भवति तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति; अतद्रूपत्वा-त्प्रतिपत्तेः॥**

ननु सुषुप्तावस्थायामहमर्थप्रकाशे जागरस्वप्नयोरिव तथा व्यवहारार्हत्वं स्यात्; न च तदस्तीत्यतो न तदा तत्प्रकाशः। तत्राह— **तमोगुणाभिभवादि**ति। स्वकर्मोपात्तत्रिगुणद्रव्यस्थेन तमोगुणेन सविकल्पादिरूपमनोवृत्तिनिरो-धादित्यर्थः। तत्फलितमाह— **परागर्थानुभवाभावादि**ति। परागर्थाः परस्मा एव भासमानाः; ते चात्रात्मधर्माः देहेन्द्रियविषयाश्च; तेषामान्तरबाह्यवर्गाणामननुभवात्। तत्तद्व्यावृत्ततया तत्तद्विशिष्टतया च स्फुरणाभावोऽपि **विविक्ते**त्यादिनाऽनूद्यते। एतेन **अयमहमित्यादि** वदन्त्याश्श्रुतेरभिप्रायो विवृतः। स्वप्नजागरयोर्नानाकारविशिष्टदृष्ट्या तदविरोधार्थम् **आप्रबोधा**दित्युक्तम्। विविक्तस्फुटावभासविरहे निर्विशेषभानं स्वीकृतं स्यादित्यत्रोक्तम्— **अहमि-त्येकाकारेणे**ति। सुखित्वदुःखित्वादिभिर्देवतमनुष्यत्वादिभिश्च विशेषणैर्विशिष्टस्फुरणविरहेऽपि अनुकूलप्रत्यक्स्वरूपत्वेन भानाद्विशिष्टस्फुरणसिद्धिरिति भावः। औपनिषदमानुमानिकं वा स्वप्रकाशत्वमात्मन इच्छद्भिः सर्वैः सुषुप्त्यादिषु

अवभासनात्स्वात्मस्फुरणमङ्गीकृतम् । अत्राहंभावशब्देनाऽहमर्थः प्रकाशश्चाभिप्रेतौ । नन्वेवमविशदस्फुरणं तदानीमिदानीं वा नोपलभ्यत इत्यत्र प्रतिबन्द्योत्तरमाह— **भवदभिमताया** इति । त्वदभिमतायां प्रमाणानुमतिर्नास्तीति च भावः । एवमविशिष्टार्थविषयनिर्विकल्पवादिनामपि प्रतिबन्दिर्वक्तव्या । **तथैव**— अस्पष्टतयेत्यर्थः । परोक्षेऽपि स्पष्टत्वाभावं मानाभावं च व्यनक्ति—**न हीति** । ननु **ज्ञप्तिरहमित्यनुवादो** न युक्तः । परमते तथात्वाभावात्, **अहंभावविमुक्ते**त्येतद्वाक्यस्थपदविरोधाच्च । मैवम्; प्रत्यगात्मनः प्रकाशाभ्युपगमेऽहंत्वेन स्फुरणं दुस्त्यजमिति सूचने तात्पर्यात् । **अवतिष्ठ** इति वर्तमानोक्तिस्तत्सामीप्यात् । ननु परामर्शः प्रमाणान्तरेण सेत्स्यतीत्यत्र विरुद्धपरामर्शबलात्तदसंभवं, **स्वावसरे निपुणतरमि**ति प्रागुपक्षिप्ते स्वपक्षे मानं च दर्शयति— **एवमिति** । **हिः** प्रसिद्धिं परैरप्युदाहृतत्वं च द्योतयति । प्रकाशरूपस्य प्रदीपस्य तथैव स्वप्रकाशत्वं श्रुत्यभीष्टम् इत्यभिप्रायेण **सुखमहमि**त्युक्तम् । तदेव विवृणोति— **अनेने**ति । नात्र विषयानुभवसुखं धर्मभूतधीप्रसरत्वं च विवक्षितम्, सुषुप्तिव्याघातात्, * पुंस्त्वादिवदिति सूत्रविरोधात्, पूर्वापरभाष्यैः प्रतिक्षिप्तत्वाच्च । अतः स्वस्यैवानुकूलतया स्वेनैव प्रकाशमानत्वे तात्पर्यम् । यद्धि यस्यानुकूलतया भाति स तेन सुखीति व्यवह्रियते । यस्य येन यद्भाति स तेन तस्य ज्ञातेति च । सुषुप्तावहमर्थस्याहंबुद्धेर्वा विनाशमिच्छतां चोद्यमनूद्य क्षिपति— **न चे**ति । मन्दमगच्छम्, * तत्र ते न्यवसन् सुखमित्यादिवत्क्रियाविशेषणस्य तात्कालिकत्वे स्वारस्यं प्रत्य[क्सुख]स्वरूपानादिसाक्षिप्रकाशे परसंमतिं चाभिप्रयन्हेतुमाह—**अतद्रूपत्वादि**ति । तदानीं सुखमस्वाप्सम्, इदानीं दुःख्यामीत्यपि क्वचित्परामृश्यत इति भावः । ननु सुखमहमस्वाप्समित्यंशत्रये स्वापांशस्य तदानीमनुभवे सुषुप्तिविरोधात् प्रातर्गजाभावादिति न्यायेन स्मर्तव्यस्य स्मरणाभावात्प्रबोधाभावक्लृप्त्या तथा व्यवहार इत्यास्थेयम् । तद्वद्दंशान्तरयोरपि गतिः स्यात् । मैवम् ।

अयुक्तिर्यस्य तत्रैव स्वारस्यदमनं क्षमम् । भवेदविषये वृत्तिरन्यथाऽतिप्रसङ्गकृत् ॥ ५०५ ॥

न चाहमर्थस्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः । यतः सुषुप्तिदशायाः प्रागनुभूतं वस्तु सुप्तोत्थितो मयेदं कृतम्, मयेदमनुभूतम्, अहमेतदवोचमिति परामृशति । एतावन्तं कालं न किञ्चिदहमज्ञासिषामिति च परामृशतीति चेत्, ततः किम्? न किञ्चिदिति कृत्स्नप्रतिषेध इति चेन्न; नाहमवेदिषमिति वेदितुरहमर्थस्यैवानुवृत्तेः; वेद्यविषयो हि स प्रतिषेधः । न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात् । सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य न किञ्चिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने तस्मिन्काले निषिध्यमानाया वित्तेः सिद्धिमनुवर्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव न किञ्चिदहमवेदिषमिति परामर्शेन साधयंस्तामिमर्थं देवानामेव साधयतु । मामप्यहं न ज्ञातवानिति अहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत

**इति चेत्, स्वानुभवस्ववचनयोर्विरोधमपि न जानन्ति भवन्तः। अहं मां न ज्ञातवानिति ह्यनुभववचने। मामिति किं निषिध्यत इति चेत्; साधु पृष्टं भवता; तदुच्यते— अहमर्थस्य ज्ञातुरनुवृत्तेः न स्वरूपं निषिध्यते; अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता। अहं मां न ज्ञातवानित्युक्ते विषयो विवेचनीयः। जागरितावस्थानुसंहितजात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः; स्वाप्ययावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यंशस्य विषयः। अत्र सुप्तोऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः॥**

अन्यत्राप्ययुक्तिस्समा, अहमर्थस्य तत्प्रकाशस्य वा सुषुप्तौ नाशादित्यत्राद्यमनूद्य क्षिपति— **न चेति**। अहमर्थस्य ह्यात्मत्वं स्थापितम्। अतोऽस्य न ध्वंस इति व्यञ्जनार्थ इह आत्मशब्दः। प्राच्यजागरस्थात्मीयकरणत्रयवृत्तिपरामर्शद्रढिम्ना परिहरति— **यत** इति। शुक्तिरूप्यवदध्यस्तस्याहमर्थस्य प्रकाशध्वंसतोऽपि स्वरूपध्वंसं शङ्कते— **एतावन्तमिति**। स्वेष्टविरुद्धं वदसीत्युपालम्भाभिप्रायेण पृच्छति— **ततः किमिति**। अज्ञातोपालम्भः पुनः शङ्कते— **न किञ्चिदिति**। अहमर्थप्रकाशस्यापि निषेधात्तत्स्वरूपनिषेधोऽपि फलित इति भावः। उक्तनिषेधार्थो **नकारो**ऽर्थात्प्रतीयत इति कृत्वा स्वाभिप्रेतं विवृणोति— **नाहमिति**। अहं नावेदिषमित्यत्र वेदनाभावाधिकरणभूतस्वात्मनिषेधस्तावदशक्यः; तत्प्रकाशनिषेधश्च स्वयंज्योतिष्ट्वश्रुतिविरुद्धः; बाह्यविषयेऽपि न स्वरूपं निषेध्यम्; सुषुप्तौ विश्वप्रलयस्यासंभवादसंमतेश्च। अतः स्वान्यप्रकाशनिषेध एव विवक्षित इत्यभिप्रायेण **वेद्यविषयो** हीत्युक्तम्। परेष्टार्थेऽनिष्टमाह— **न किञ्चिदिति। निषेधस्येति**। त्वत्पक्षेऽनुभूतेः प्रकाशनिषेध एव स्वरूपनिषेधोऽपि स्यादिति भावः। वेदननिषेधस्याकृत्स्नविषयत्वे स्वीकृते धीव्यतिरिक्तवेदननिषेधविवक्षया अस्मदिष्टं स्यादित्यत्राह— **सुषुप्तीति**। अहमर्थस्वरूपनिषेधः परामर्शबलविरुद्धः; अत एव तद्भाननिषेधस्त्वत्पक्षेऽप्ययुक्तः; इदमर्थवदहमर्थस्यापि प्रकाशाधीनस्वरूपत्वात्। सर्वत्र चाधेयनिषेधोक्तिर्हास्येति भावः।

**अभानं व्यवहार्यस्य सुषुप्तावहमः कथम्। इति चोद्यं समं वृत्तौ श्रुतिश्चात्रोत्तरप्रदा ॥ ५०६ ॥**

**अहंभानस्य संस्कारमनुत्पादयतोऽपि नः। तद्दिष्टधीभाननयात्स्यात्परामर्शहेतुता ॥ ५०७ ॥**

**सुषुप्तौ भानसङ्गे तु धीरेव तव लुप्यते। उपलब्धिपराहत्या न स्वरूपविपर्ययः ॥ ५०८ ॥**

**एवशब्दो** वैपरीत्यं विवृणोति। जानामीत्यहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते, स तर्हि तद्धर्मः। धातूपात्तश्चेत् इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः। **एवकारो** दत्तोत्तरत्वद्योतकः। **देवानामेवे**त्यनेन सर्वज्ञा हि त्वदुक्तिप्रतिपत्त्यर्हा इत्युपालभते। अप्रतिवादिनामिति वा तात्पर्यम्। ननु * विनाशमेवापीतो भवतीति श्रुत्यैवोच्यते विनाशः। मैवम्; प्रकरणाभिप्रेतपुरुषार्थविरहेणासत्कल्पत्वे तात्पर्यात्। अन्यथा, * न ह खल्वयमित्यादि पूर्ववाक्यविरोधात्।

*** स एव त्विति सूत्रे च सुषुप्तप्रतिबुद्धयोः। स्वयमेव च तादात्म्यं सूत्रकृत्स्थापयिष्यति ॥ ५०९ ॥**

**ततश्च स्वप्रकाशत्वजडत्वविमतावपि । सुषुप्तावहमर्थस्य ध्वंसो नास्तीति सुस्थितम् ॥ ५१० ॥**

पुनरपि तदानीमहमर्थवेदनस्यापि विशेषतो निषेधात्तत्स्वरूपनिषेधमपि शङ्कते— **मामपीति** । अहमर्थनिषेधं वदता स्ववाक्येन स्वपरामर्शेन चाभीष्टविरोधमाह— **स्वानुभवेति** । उभाभ्यामहमर्थनिषेधस्याशक्यत्वं व्यनक्ति— अहमिति । हिशब्दोऽत्र **अनुभववचने** इति शब्दस्य सप्तमीत्वेनोत्तरत्रान्वये ह्यनपेक्षितः स्यात् । स्वरूपप्रकाशनिषेधमुखेन स्वरूपस्यापि **निषेधमन्तरेण** का गतिरिति पृच्छति— **मामिति** । सोपालम्भं प्रतिवक्ति— **साध्विति** । असमीचीन-त्यागेन प्रश्नेऽवतारात् सानुकम्पं वा । **तदुच्यते**—तस्मादुत्तरमुच्यत इत्यर्थः । यद्वा, किमिति पृष्टनिषेध्यमुच्यत इत्यर्थः । स्वरूपतत्प्रकाशयोर्निषेधो न शक्य इत्यभिप्रायेणाह— **अहमर्थस्येति** । * सविशेषणे हि विधिनिषेधौ विशेषणमुप-सङ्क्रामतः सति विशेष्ये बाध इति न्यायात्, * अयमहमस्मीति श्रुतौ अयंशब्दाभिप्रेतविशेषमाह— **अपि त्विति** । **वर्णाश्रमादिविशिष्टता**— तदभिमान इत्यर्थः । ज्ञेयत्वेनेति वोपस्कार्यम् । आदिशब्द आन्तरं जडपण्डितत्वाद्यपि संगृह्णाति । ननु * नो एव इमानि भूतानीत्यत्र यथा बाह्यार्थानां स्वरूपवेदननिषेधपर इदंशब्दोऽपि स्वरूपमात्रपरः, तथा * अयमहमित्यत्रापि स्यादिति शङ्कां निरस्यति— **अहं मामिति** । अयं भावः— अहमर्थस्वरूपतत्प्रकाश-निषेधयोरशक्यत्वं ह्युक्तम् । **अतः** प्रकारभूतवर्णाश्रमादिवैशिष्ट्यमिह निषेध्यम् । तथा च श्रुत्यन्तरे तद्वैशिष्ट्यमपि निषिध्यते * तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति । सुषुप्तौ तत्तद्वैशिष्ट्येऽपि तत्तद्वेदनवैधुर्यप्रतिसन्धानस्य श्रुतेश्चानुगुणं विषयविवेकं विवृणोति— **जागरितेत्यादिना** ग्रन्थद्वयेन । निषेधवचन-तात्पर्यव्यञ्जकमनुभवप्रकारं निर्धारयति— **अत्रेति** । व्यवहारस्य वैवक्षिकत्वादीदृशोत्तयभावेऽप्यनुभवो दुर्निषेध इत्यवधारणाभिप्रायः ॥

**किञ्च—सुषुप्तावात्मा अज्ञानसाक्षित्वेनास्त इति हि भवदीया प्रक्रिया । साक्षित्वं च साक्षाज्ज्ञातृत्वमेव । न ह्यजानतः साक्षित्वम् । ज्ञातैव हि लोकवेदयोः साक्षीति व्यपदिश्यते, न ज्ञानमात्रम् । स्मरति च भगवान्पाणिनिः * साक्षाद्द्रष्टरि संज्ञाया-मिति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वयमवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम् ॥**

सुषुप्तौ ज्ञातुरविनष्टत्वं परोक्तप्रक्रिययाऽप्यभ्युपगमयति— **किञ्चेति** । अस्त्वज्ञानसाक्षित्वम्, तत्तु तत्प्रका-शात्मत्वमेवेत्यत्राह— **साक्षित्वमिति** । ननु किमत्र ज्ञातृत्वेन; साक्षात्काररूपत्वमेव साक्षित्वमस्त्वित्यत्राह— **न हीति** । उक्तमर्थं लौकिकवैदिकसर्वशब्दार्थनिर्णयनिदानभूतेनानन्यथासिद्धेन व्यवहारेण स्थापयति— **ज्ञातैवेति** । साक्षिशब्दस्यास्तु ज्ञानविशेषे शक्तिः, तदाश्रये तु लक्षणेत्यत्राह— **न ज्ञानमात्रमिति** । अयं भावः— न हि सर्वत्र विशिष्टगोचरे विशेषणमात्रे शक्तिस्त्वयाऽपि स्वीक्रियते । तथा सति विशिष्टवाचिषु सत्यादिपदेषु जहदजहल्लक्षणोक्तिरपि विरुध्येतेति । अन्यथा शब्दानुशासनविरोधमप्याह— **स्मरतीति** । अस्तु सुषुप्तौ साक्षिप्रकाशः; ततोऽपि अहमर्थ-

प्रकाशः कथमित्यत्राह—**स चायमिति** । व्यवहारव्याकरणाभ्यां ज्ञातृत्वेन प्रसिद्ध इत्यर्थः । अज्ञानसाक्षिणस्तथैव स्वप्रकाशत्वाभ्युपगमात् **जानामीति प्रतीयमान**त्वोक्तिः । ज्ञातुः स्वग्रहणं हि जानामीत्येव; तत्र * अस्मद्युत्तम इत्यनुशिष्टमित्यभिप्रायेण **अस्मदर्थ एवे**त्युक्तम् । उक्तानभ्युपगमे स्वेष्टं स्वस्मै भासमानत्वमपि न स्यादित्यभिप्रायेणाह— **आत्मन इति** । तत्र व्याप्तिपूर्वकं साध्यवचनेऽपि प्रसङ्गे तात्पर्यादुत्तरत्रानुमानोक्तेरपुनरुक्तिः । पूर्वं **इति**र्हेतौ । उत्तरस्तु प्रकारे ॥

यत्तु मोक्षदशायामहमर्थो नानुवर्तत इति, तदपेशलम्; तथा सत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम्, येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूपमेवाहमर्थ आत्मनः; ज्ञानं तु तस्य धर्मः । अहं जानामि, ज्ञानं मे जातमिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ॥

**सुषुप्तिमुक्त्योर्नान्वेतीति** पूर्वपक्षोक्ते दूषितावशिष्टं **यत्त्वि**त्यादिनाऽनूद्य दूषयति— **तदपेशलमिति**; असुन्दरम्, अयुक्तमित्यर्थः । अयुक्तिं विवृणोति— **तथा सतीति** । **प्रतिज्ञातः स्यादि**त्येतत् परोक्त्यैव सिद्धवत्करणं ज्ञातव्यशेषाभावप्रसञ्जनार्थम् । * आत्मभूतधीसन्ततिविनाशो मोक्ष इति वदन्तस्सन्ति केचित्सौगताः; तन्मते त्वदुक्तो दोषस्तवाप्यागत इति सूचयितुं **प्रकारान्तरेणे**त्युक्तम् । नन्वविद्या देहादिधर्मोऽप्यात्मनः उपाधिरेव; अतस्तन्निवृत्तौ कथमात्मनाश इत्यत्राह— **न चेति** । त्वदुक्तविपरीतं हि सिद्धमित्यभिप्रायेण **प्रत्युते**त्यादिवाक्यत्रयम् । एवकारेण **प्रागेव** स्थापितत्वं द्योत्यते ॥

अपि च यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदुःखैः दुःखितया [स्वा]आत्मानमनुसन्धत्तेऽहं दुःखीति, सर्वमेतद्दुःखजातमपुनर्भवमपोह्य कथमहमनाकुलस्स्वस्थो भवेयमित्युत्पन्नमोक्षरागः स एव तत्साधने प्रवर्तते । स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेत्, अपसर्पेद्देवासौ मोक्षकथाप्रस्तावात् । ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात् । अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्, किमनेन ? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते । अतोऽहमर्थस्यैव ज्ञातृतया सिध्यतः प्रत्यगात्मत्वम् । स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्; यो यः स्वस्मै प्रकाशते, स सर्वोऽहमित्येव प्रकाशते, यथा तथाऽवभासमानत्वेनोभयवादिसंमतः संसार्यात्मा; यः पुनरहमिति न चकास्ति नासौ स्वस्मै प्रकाशते, यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा । स तस्मादहमित्येव प्रकाशते । न चाह-

**मिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः; मोक्षविरोधात्, अज्ञत्वाद्यहेतुत्वाच्चाहं-प्रत्ययस्य । अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा । अहमित्येवात्मनः स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययो नाज्ञत्वमापादयति; कुतः संसारित्वम् ? अपि तु तद्विरोधित्वान्नाशयत्येव ॥**

पूर्वं ज्ञातुरेवात्मत्वे परमसाध्ये सङ्ग्रहेणोक्तां युक्तिं तस्य मुक्तिदशानुवृत्तिरूपावान्तरसाध्येऽपि हेतुतया विस्तृणीते— **अपि चेति** । स्वमतपरमतभेदेन **परमार्थतो भ्रान्त्या वेत्युक्तम्** । उत्तरत्र तद्गतस्य दुःखकारणस्य भ्रमकारणस्य वा निवृत्तिरित्यु[च्यते]च्येत, न तु दुःखभ्रमाश्रयस्वरूपस्येति भावः । अत्र **य** इत्यादिना **प्रवर्तत** इत्यन्तेन प्रागुक्तमेव विवृतमित्यपुनरुक्तिः ।

अर्थादामोक्षस्थायिपक्षनिरासश्च सिद्धः । उक्तयुक्तेः परमसाध्यपर्यन्ततां व्यनक्ति—**अत** इति । अवान्तरसाध्येऽपि प्राक्प्रसङ्गसूचितमनुमानं मूढबोधनाय, अन्वयव्यतिरेकिण एवानुमानत्वमिति वदतः सन्तोषाय च व्याप्तिद्वयोपेतं प्रयुङ्क्ते— **स चेति** । नात्र साध्याविशेषः; अहमिति व्यवहारविषयतया प्रकाशस्य साध्यत्वात् । नापि हेत्वसिद्धिः; अभानस्य, परस्मा एव भानस्य वा त्वयाऽनभ्युपगमात्; अकस्मैचिद्भासमानत्वस्य दुर्वचत्वाच्च । नापि पक्षस्य दृष्टान्ताविशेषः; एकस्मिन्नेव सम्मतविमतदशाभेदेन तद्विभागात् । तथा च लोकेऽपि दृष्टतया परीक्षकैः अनुमन्तव्यत्वाच्च । विपक्षे [बाधस्तु] दण्डस्तु प्रत्य[क्षा]क्त्वाभावप्रसङ्गः [इति] प्रागुक्त इह प्रतिसन्धेयः । अत्र पञ्चावयववाक्यप्रयोगात्कैश्चिन्मीमांसकैरुक्तःत्र्यवयवनिर्बन्ध उपेक्षितः । क्वचित् त्र्यवयवं च प्रयुङ्क्ते; अतः प्रतियोगिधीसिद्ध्यै यथाकामं त्रयो वा पञ्च वा प्रयोक्तव्याः । * पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषविदिति भारतोक्तिस्तु संभावितविषयतया नान्यनिषेधार्थेति भावः । विशेषविरोधप्रसङ्गमनूद्य निषेधति— **न चेति** । **संसारित्वम्**— कर्मकृतदेहादिसन्ततिमत्त्वम् । **आदिशब्देन** पुनरावृत्त्यादिग्रहणम् । मुक्त्यवस्थाविषयैः * सर्वं ह पश्यः पश्यति, * अहमन्नमित्यादिभिर्विहत्या तर्कस्य मूलशैथिल्यमाह— **मोक्षविरोधादिति** । अन्यथा प्रसञ्जनीयमेवोत्तरं प्रयुक्तं स्यात् । अज्ञत्वादेरुपाधित्वशङ्काऽप्यनेन निरस्ता । प्रसङ्गस्य सोपाधित्वमभिप्रेत्याह—**अज्ञत्वेति** । अयं भावः—कर्मोपाधिकमज्ञानादिकं सर्वकर्मक्षये न स्यात् ।

**पक्षात्साध्यमुपाधिर्हि स्वनिवृत्त्या निवर्तयेत् । स्वसाहचर्यादध्यस्तां व्याप्यतामपि साधनात् ॥ ५११ ॥**

तदिह तर्के व्याप्तिस्तावद्दुस्साधा; साहचर्यमात्रं त्वप्रयोजकमतिप्रसञ्जकं च । त्वत्पक्षेऽप्यनुभूतिमात्रस्यात्मनः प्रकाशमानत्वे बद्धदशायामिव सर्वे दोषाः स्युः; न च ते तदा सन्ति; अतो मुक्तौ प्रकाशमानत्वभङ्गात्स्वरूपोच्छेदप्रसङ्ग इति । अज्ञत्वादेरुपाधित्वव्यक्त्यै विकल्पव्याजेन स्वोक्तं विवृणोति— **अज्ञानमिति** । **स्वरूपाज्ञानं**— कर्मणा तिरोधानात्स्वरूपगोचरज्ञानप्रसराभावः; **अन्यथाज्ञानं विपरीतज्ञानं च** रजस्तमःकार्यतया गीतम् । तयोरज्ञानशब्दार्थतया विकल्पस्तु सम्यग्ज्ञानान्यतया, तद्विरुद्धतया वा । उदाहरणं तु स्वनिष्ठात्मभ्रमाद्येव । आत्मभ्रमादिषु त्रिष्वपि कल्पेष्वहंप्रत्ययस्य प्रयोजकत्वं नेत्याह— **अहमिति** । **इति**र्हेतौ । अयं भावः— न तावदहंप्रत्यय एवाज्ञानादिस्वरूपम्, तत्त्वधीरूपत्वात् । न तद्धेतुः, कर्मविरहे तदयोगात् । न च तेषां व्याप्यः; यतस्तेन तत्प्रसङ्गः स्यादिति । एवम्-

नप्रसङ्गाभावे तत्फलप्रसङ्गो दूरापास्त इत्याह—— कुत इति । आत्मतत्त्वज्ञानं ह्यज्ञत्वादिनिवर्तकतया शास्त्रप्रसिद्धम् । ोऽत्र प्रसञ्जकप्रसञ्जनीययोर्व्याघात इत्यभिप्रायेणाह——.अपि त्विति ॥

ब्रह्मात्मभावापरोक्ष्यनिर्धूतानिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि—— ❀ तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति, ❀ अहमेकः प्रथममासं च वर्तामि भविष्यामीत्यादि । सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव ❀हन्ताहमिमास्तिस्रो देवताः, ❀बहु स्यां प्रजायेय, ❀ स ईक्षत लोकान्नु सृजा इति । तथा, *यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ ❀ अहमात्मा गुडाकेश, ❀ न त्वेवाहं जातु नासम्, * अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा, ❀ अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते, * तेषामहं समुद्धर्ता मृत्युसंसारसागरात्, * अहं बीजप्रदः पिता, * वेदाहं समतीतानीत्यादिषु ॥

तत्त्वविदात्मापरोक्ष्येऽहमर्थप्रकाशं वदन्त्या श्रुत्या, तस्याज्ञत्वाद्यनापादकत्वमाह—— ब्रह्मात्मेत्यादि । दर्शना- त्युक्तं विवृणोति—— श्रूयत इति । ब्रह्मापरोक्ष्यमविद्यानाशस्य कारको ज्ञापकश्च हेतुः । आदिशब्देन प्रह्लादभरतादि- ः । तद्धैतत्पश्यन्—जगत्कारणं ब्रह्म स्वान्तरात्मत्वेन पश्यन्नित्यर्थः । अत एवात्राहमर्थसामानाधिकरण्यं स्वविशेष्यस्य त्मकत्वप्रकाशकम् । तदेतत्, * शास्त्रदृष्ट्या तूपदेशो वामदेववत् इति सूत्रे व्यक्तीभविष्यति । अथवशिरसोऽप्ये- मेव निर्वाहो वेदार्थसङ्ग्रहे स्थापितः । आदिशब्देन * स एवाहमवस्थितः, * अहं त्वं च तथान्ये चेत्युपबृंहणानि ह्यन्ते । स्वतः सर्वज्ञतया स्वयमज्ञानप्रसङ्गरहितस्य स्वाश्रिताज्ञानादिनिरासकतया स्वयमेव गीतस्य परब्रह्मणः ात्मन्यहंशब्दप्रयोगाच्चाज्ञत्वाद्यापादकत्वं निरस्यति—— सकलेति । सच्छब्दप्रत्ययमात्रभाजः—— सच्छब्दमात्रजन्य- ोविषयस्येत्यर्थः । अहङ्कारसृष्टेः प्रागेव सच्छब्दवाच्यं ब्रह्म बहु स्यामिति सङ्कल्पयतीति भावः । शाखान्तरेऽपि सिद्धिमाह—— स ईक्षतेति । हन्ताहमित्यत्राहंशब्दः कण्ठोक्तः; * बहु स्यां प्रजायेय, सृजै इत्यादिपूत्तमपुरुषा- क्षेपः । * पूर्वमेवाहमिहासम् इत्यादयश्च आम्नाः । स्मृतावप्यहंत्वेन व्यवहारमाह—— तथेति । क्षरान्तर्भूतस्याह- ारस्य क्षराक्षरान्यत्वम्, अचेतनस्य चिदचिदन्तरात्मत्वम्, उत्पत्तिनाशभाजस्तद्राहित्यं, महदादिजन्यस्य सर्वकारणत्वम्, वाश्रितबन्धकस्य तन्मोचकत्वम्, अनिद्धिकारस्य स्वसंकल्पेन सर्वत्र बीजाधानकर्तृत्वं, त्रैकालिकसर्ववस्तुवेदितृत्वादिकं च, वेरुद्धमित्यभिप्रायेण तत्तद्वाक्योपादानम् । न चैतेष्वहंशब्देन चिन्मात्रलक्षणेति वाच्यम् । मुख्यसंभवे तदयोगात् । आदिशब्देन * अहमज्ञानजं तमः * अहं त्वा सर्वपापेभ्यः इत्यादिसङ्ग्रहः ॥

यद्यहमित्येवात्मनः स्वरूपम्, कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते ❀ महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव चेति ? उच्यते——स्वरूपोपदेशेषु सर्वेष्वहमित्ये-

वोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्च अहमित्येव प्रत्यगात्मनः स्वरूपम् । अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते । स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेन अहङ्कार इत्युच्यते । अस्य तु अहङ्कारशब्दस्य अभूततद्भावे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कारः उत्कृष्टजनावमानहेतुर्गर्वापरनामा शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते । तस्माद्बाधकापेताऽहंबुद्धिः साक्षादात्मगोचरैव । शरीरगोचरा त्वहंबुद्धिरविद्यैव । यथोक्तं भगवता पराशरेण— * श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । अनात्मन्यात्मबुद्धिर्योति । यदि ज्ञप्तिमात्रमेवात्मा, तदा अनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्, न ज्ञातृप्रतिभासः । तस्माज्ज्ञाताऽहमर्थ एवात्मा । तदुक्तम्— * अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् । अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते ॥ इति । तथा च * देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नः स्वतः सुखी ॥ इति । अनन्यसाधनः—स्वप्रकाशः । व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ॥

उपात्तकृत्स्नवचनबाधेच्छया गीतायामेवोक्तमिति शङ्कते—**यदीति**। अत्र **कथं**शब्दस्य प्रतिषेधपरत्वायोगात्प्रश्नवत्कारेण प्रतिवक्ति— **उच्यत** इति । पृष्टस्य साक्षादुत्तरं दित्सुः तदर्थं स्वपक्षे भूयसां बलीयस्त्वं प्रत्यक्षानुगुण्यं च प्रथममाह— **स्वरूपेति** । रूढिविशेषानुसारेण गीताभिप्रेतमाह— **अव्यक्तेति** । न ह्यहङ्कारशब्दोऽहंशब्दपर्याय इति भावः । नन्वहंशब्द एवाहङ्कारशब्दावयवतया प्रत्यभिज्ञातः; न चोभयत्र शक्तिभेदक्लृप्तिर्न्याय्येत्यत्र यौगिकमप्याह—**स त्विति**। अहंभावोऽत्राहमित्यभिमानः । ननु भूमविद्यायां * अथातोऽहङ्कारादेश इति अहंबुद्धिकारणमेवाहङ्कार इत्युच्यते । तत्प्रत्यभिज्ञयाऽत्र स एवार्थः किं न स्यादित्यत्र * अनात्मनीत्यभिप्रेतया व्युत्पत्त्या वैषम्यमाह— **अस्य त्विति** । अनहमर्थस्याहमर्थभ्रमहेतुत्वमिह विवक्षितम् । भूमविद्यायां तु भूमविशिष्टस्य यथार्थमहङ्ग्रहोपसनमिति भावः । ननु * अहङ्कारं बलं दर्पमित्यादिभिस्त्याज्यतयोक्तस्य कथं मोक्षार्थविद्यायां, * अथात आदेश इतिवदुपादेयतोपदेश इत्यत्राह— **अयमिति** । अनात्मनि देहेऽहंभाव इति निर्दिष्ट इत्यर्थः । अन्यथा **गर्वापरनामेत्यनन्वयात्** । यद्वा, कार्ये गर्वे कारणभूताहङ्कारोपचारः । **एव**कारोऽहंग्रहोपास्तिव्यवच्छेदार्थः । **उत्कृष्टे**त्यादिना हेयत्वनिदानोक्तिः । ननु * अविद्याऽहंमतिरिति पठ्यते ; तत्कथमहंग्रहोपास्तिर्यथार्था विधीयत इत्यत्र विद्याविद्यात्मिकेऽहम्मती विभजन्निगमयति— **तस्मादिति** । **साक्षाच्छब्द** उपहितरूपव्यवच्छेदार्थः । अविद्यानिष्कर्षं पुराणोक्त्या संवादयति—**यथोक्तमिति** । एतच्चानन्याधीनत्वादिप्रमाणोपलक्षणम् । एवमविद्यादिरूपतया प्रसिद्धां देहाहंबुद्धिमपि परेष्टभञ्जिकामाह— **यदीति** । स्वेष्टेऽपि तामेव प्रमाणयन्परमप्रक्रान्तमुपसंहरति— **तस्मादिति** । आत्मनोऽहंत्वज्ञातृत्वादिसाधकवर्गस्य

संकलितबोधार्थमात्मसिद्धौ निगमितं दर्शयति— **तदुक्तमिति** । * **अविद्यायोगत** इत्येतत्परेष्टेऽनुपपत्तिं स्वेष्टे चोपपत्तिं तन्त्रत आवृत्त्या वा वक्ति । आत्मनो विषयग्राहिधियोऽन्यत्वे स्वप्रकाशत्वादौ च तत्प्रकरणारम्भे संगृहीतमाह— **तथा** चेति । अत्र साधनशब्दस्योत्पादनपरत्वे नित्यत्वोक्त्या पुनरुक्तिः स्यात् । तद्व्युदासाय **स्वप्रकाश** इत्युक्तम् । **व्यापि**शब्देन विभुत्वविवक्षायां * उत्क्रान्त्यादिसूत्रविरोधात् अर्थान्तरमाह— **अतिसूक्ष्मतये**ति । एतत्पदद्वयार्थः तत्रत्यविस्तरे व्यक्तः ॥

यदुक्तं दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति ; कोऽयं दोष इति वक्तव्यम् यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत्, भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम् ? अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेन्न ; अन्योन्याश्रयणात्—शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनायाः दोषत्वनिश्चयः ; भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति ॥

**एवं प्रत्यक्षवैघट्यं नास्तीत्युक्तं न्यषिध्यत । ततश्शास्त्रबलीयस्त्वं यदित्यन्वाह बाधितुम् ॥ ५१२ ॥**

**कोऽयमित्यादि** । यदुक्तं दोषरूपं मूलं, तत्र कोऽयं दोष इति पृष्टे विशेषतः प्रतिवक्तव्यमित्यर्थः । न हि कश्चिद्दोषोऽस्तीति सामान्योक्त्याऽन्यथासिद्धिः सुवचा ; त्वन्मतेऽपि प्रसङ्गात् ; विशेषतश्चात्र दोषो दुर्वचः । काचादेरव्यापित्वात् तावतैवान्यत्र शङ्कायामविषयवृत्तेश्चेति भावः । प्रागेव दोषविशेष उक्त इति शङ्कते—**अनादीति** । दोषत्वमस्या दुर्वचमित्याह— **भेदेति** । यदि द्विचन्द्रभ्रमादौ भेदवासनाया दोषत्वं दृष्टमित्युच्येत, तदा भिन्नेष्वभिन्नत्वबुद्धौ अभेदवासनाऽपि दोषत्वेन दृष्टा ; ततश्चैक्यधीरपि दुर्बला न बाधिका स्यात् । अन्यत्रादृष्टमपि अद्वैतश्रुत्यन्यथाऽनुपपत्त्या कल्प्यमिति शङ्कते— **अनेनेति** । कल्पकासंभवमभिप्रेत्याह— **नेति** ; **अन्योन्याश्रयणा**दित्यनेनान्वयः। भेदवासनामात्रस्य दोषत्वं निर्विशेषाद्वैतशास्त्रविरोधात्कल्प्यम्; सिद्धे च प्रत्यक्षमात्रस्य तादृशदोषमूलत्वे यूपादित्यैक्यन्यायातिक्रमेण शास्त्रस्य निर्विशेषपरत्वमिति मिथः संशयात्कृत्स्नप्रत्यक्षदौर्बल्यं दुर्वचमिति भावः । ज्वालैक्यप्रत्यक्षे हि,

व्युत्पत्तिव्याप्तिपूर्वेषु प्रत्यक्षमुपजीवतोः । कृत्स्नप्रत्यक्षवैरं न क्षमं शास्त्रानुमानयोः ॥ ५१३ ॥
अस्तु ते बाध्यतुल्यत्व.... .... .... ....नोब.... .... .... हुत्वमपि ॥ ५१४ ॥

किञ्च, यदि भेदवासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम् शास्त्रमपि तन्मूलत्वेन तथैव स्यात् । अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात् तत् प्रत्यक्षस्य बाधकमिति, तन्न; दोषमूलत्वे ज्ञाते सति परत्व-

मकिञ्चित्करम्; रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञातेन केनचिन्नायं सर्पो मा भैषीरित्युक्तेऽपि भयानिवृत्तिदर्शनात्। शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम्; श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः। अपि च, इदं शास्त्रम्; एतच्चासंभाव्यमानदोषम्; प्रत्यक्षं तु संभाव्यमानदोषमिति केनावगतं त्वया? न तावत्स्वतःसिद्धा निर्धूतनिखिलविशेषाऽनुभूतिरिममर्थमवगमयाति। तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च। नाप्यैन्द्रियिकं प्रत्यक्षम्; दोषमूलत्वेन विपरीतार्थत्वात्। तन्मूलत्वादेव नान्यान्यपि प्रमाणानि। अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः।

ज्वालाभेदानुमानाद्वैषम्यमाह—**किञ्चेति**। न हि ज्वालाभेदधीस्तदैक्यधीजनकदोषजन्येति भावः। ....दीपसादृश्यं तद्वर्तिकासाम्यं चाचिरनिर्वापितारोपितदीपैक्यभ्रमे दोषत्वेन निर्णीतम्। अतस्तत्र नान्योन्याश्रयः। न च तत्र भेदानुमानं स्वोपजीव्यप्रत्यक्षव्यक्तिविरोधीति भावः।

**नान्यपर्यादमानत्वं न च वाच्यं तदेव तत्। यूपादित्येतिवाक्यादौ बाधादेव समानता ॥ ५१५ ॥**
**अतोऽनन्यपरस्यापि बुद्धिर्निगमवद्भवेत्। त्वय्यन्तस्याप्रमाणत्वं दोषे बाधे च दुस्त्यजम् ॥ ५१६ ॥**

यथा निर्दोषत्वसाम्येऽपि पूर्वापरापच्छेदयोः परो बलीयान्, तथा सदोषत्वसाम्येऽपि परत्वादागमः प्रमाणमिति शङ्कते—**अथेति**। तत्र रज्जौ सर्पभूरन्ध्रबुद्ध्योरिव पौर्वापर्यमकिञ्चित्करमित्यभिप्रायेणाह— **तन्नेति**। तदेवोदाहरणेन व्यनक्ति—**रज्ज्विति**। तद्वदुत्तरस्य दोषमूलत्वं न ज्ञातमित्यत्राह— **शास्त्रस्येति**। अन्यथा मननादिकारणोच्छेदात्कार्यासिद्धिं सूचयति— **श्रवणेति**। निखिलशब्दः प्रमातृप्रमेयप्रमाणशास्त्रस्वरूपपदवाक्यतदर्थविकल्पादिसंग्रहार्थः। अथ परोक्ते तत्प्रक्रिययैव प्रमाण[त्व]भावमभ्युपगम्य परमतस्य निर्मूलत्वं वक्तुमाह— **अपि चेति**। **इदं शास्त्रम्**—अबोधकात्, प्रत्यक्षादेश्च, व्यावृत्तमित्याशयः। **असंभाव्यमानदोषम्**— प्रमाणाभासवर्गाद्विलक्षणमिति यावत्। बाह्यागमवैषम्यमप्यत्र दुर्वचमिति भावः।

**कल्पितं हि प्रमाणत्वं वेदे बाह्यागमेऽपि च। अव्यवस्था ततो बाधस्ताटस्थ्याच्छुद्धसंविदः ॥ ५१७ ॥**

**केन**— न केनापि प्रमाणेनेत्यर्थः। तत्र परेष्टशुद्धसंवित्स्वरूपं, तदन्यद्वा मानमिति विकल्पं मत्वा आद्यं निरस्यति—**न तावदिति**। न हि तस्याः कतिपयवैराग्यं त्वयाऽनुशिष्टमित्यभिप्रायेणाह— **तस्या** इति। एतादृशी तस्यास्सहसा विरक्तिर्जातेत्यत्राह— **शास्त्रेति**। अवच्छेदकं दुर्लभमिति भावः। **नान्यान्यपीति**। स्वरूपातिरिक्तज्ञानं तु भ्रान्तिरूपत्वान्नार्थव्यवस्थापकम्, अन्यथाऽतिप्रसङ्ग इति भावः। अत्र प्रत्यक्षस्य तन्मूलानुमानादेश्च निरासः। बहुवचनं त्विह तत्तद्वादिमतानुसारेण। एवं साधकाभावादभिमतं शास्त्रप्राबल्यं न सिध्यतीत्याह— **अत** इति ॥

**ज्वालाभेदानुमाने तु धर्मिलिङ्गादिबुद्धयः। न दोषमानबाध्याश्च नात्मनस्तन्निदर्शनम् ॥ ५१८ ॥**

स्वपक्षस्थापकादेव स्वव्याघातादिदोषतः। निर्मूलमखिलं शास्त्रमित्युक्तं भवति त्विह ॥५१९॥

ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव। कोऽयं व्यावहारिको नाम? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत्, किं तेन प्रयोजनम्? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात्। अथोच्येत—शास्त्रप्रत्यक्षयोः [द्वयोरपि]अविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते; शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति। तदयुक्तम्; अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्। एतदुक्तं भवति—यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजनस्याज्ञातस्व-तिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते। न तत्र बाधक-प्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतं द्विचन्द्रत्वमपि मिथ्यैव। दोषो ह्ययथार्थज्ञानहेतुः। तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैवेति। भवन्ति चात्र प्रयोगाः— विवादाध्यासितं ब्रह्म मिथ्या, अवि-द्यावत उत्पन्नज्ञानविषयत्वात्, प्रपञ्चवत्। ब्रह्म मिथ्या, ज्ञानविषयत्वात् प्रपञ्चवत्। ब्रह्म मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात् प्रपञ्चवदेव॥

अथ सौगतसर्वस्वे संवृत्त्याख्ये प्रलम्भने। परः शब्दान्तरं न्यस्यन्समाधित्सति नन्विति ॥५२०॥

अत्र व्यवहारसंबन्धादिमात्रमतिप्रसञ्जकमित्यभिप्रायेण प्रतिक्षिपति— **कोऽयमिति**। बहुधा विकल्पितेषु त्वदिष्टानु-गुणो न कश्चित्कल्प इत्याशयः। परेष्टं कोट्यन्तरं शङ्कते— **आपातेति**। एतत्स्वोक्त्यादिविरुद्धमिति सूचयति— **किं तेनेति**। लिङ्गविभ्रमबाध्यागमन्यायमुद्घाटयति— **प्रमाणतयेति**। **प्रमाणकार्याभावात्**—स्वपक्षसत्यत्वादेरलाभा-दिति भावः। शास्त्रस्य प्रत्यक्षं बाधित्वोदयात्तस्य बाधकान्तरानुदयाच्च प्रत्यक्षाद्बलीयस्त्वं, शास्त्रस्य स्वार्थसाधकत्वं च शङ्कते— **अथेति**। बाधकान्तरानुदयमन्वारुह्य प्रतिवक्ति— **तदिति**। अप्रामाण्यज्ञप्तौ बाधकवत्कारणदोषस्यापि पृथगेव हेतुत्वं प्रसिद्धमित्यभिप्रायेणाह— **अबाधितस्यापीति**।

* दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे। अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत्॥

इति चाहुः। अनुत्पन्नबाधकज्ञानस्यानवगतकारणदोषस्य कस्यचित् स्वज्ञाने कथं मिथ्यात्वसिद्धिरित्यत्राह— **एत-दुक्तमिति**। संभावनया कल्पितेनापि परसंमन्तव्येन निदर्शनेन बोधयति— **यथेति**। बाधानुदयार्थं **सकलेतरे-**त्यादिकमुपात्तम्; **अविशिष्टं जायत** इति च। अविदितदोषस्य कथमप्रामाण्यसिद्धिरित्यत्राह— **दोष** इति।

अप्रामाण्यस्वरूपस्य दोषस्वरूपं हेतुः, तद्बोधस्य च तद्बोध इति विभागोऽभिप्रेतः । एवं भ्राम्यतो दोषधीबाधयोरभावेऽपि तद्बुद्धेर्भ्रमत्वादिकं परीक्षकस्याप्य पक्षे योजयति— **तथेति** ।

**त्वदुक्तदोषसद्भावादप्रामाण्यसमुद्भवः । तज्ज्ञप्तेरप्रमाणत्वज्ञप्तिरप्यत्र सिध्यति ॥ ५२१ ॥**

ऐन्द्रियबोधावबोधमभिप्रेत्य **बाधकज्ञानरहितमपी**त्युक्तम् । तद्व्याप्तिप्रसङ्गपरान्प्रयोगानाह— **भवन्तीति** । सगुणब्रह्ममिथ्यात्वस्य परसंमतेस्तद्व्यवच्छेदाय **विवादाध्यासितमि**ति । यद्यप्यत्र परेष्टव्याप्त्या ज्ञानविषयत्वे मिथ्यात्वं स्यादित्येक एव प्रयोगः साधीयान्, तथाऽपि प्रथमतृतीयौ सविशेषणप्रयोगौ प्रसङ्गहेतोस्साधकत्वव्यत्त्यर्थौ । यद्वा, यथा प्रपञ्चस्य मिथ्यात्वं ज्ञानविषयत्वमात्रेण तद्विशेषविषयत्वेन वा त्वया साध्यते, तथैव ब्रह्मणोऽपि साधयित्वा माध्यमिकयूथमध्यमध्यास्स्व; ततश्चास्मत्प्रयोगानिमान्मत्त्वा आत्माश्रयासिद्धिविशेषणवैयर्थ्यव्याप्तिभङ्गादिदोषान् मोज्जीघट इति भावः । अथवा त्वत्सयूथ्यस्य तुर्यबौद्धस्य प्रयोगास्त्वया दुर्वाराः स्युरित्याशयः ॥

न च वाच्यं स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति। स्वाप्नज्ञानस्यासत्यत्वाभावात्। तत्र हि विषयाणामेव मिथ्यात्वम्, तेषामेव हि बाधो दृश्यते; न ज्ञानस्य। न हि मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायते। दर्शनं तु विद्यते; अर्था न सन्तीति हि बाधकप्रत्ययः। मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः; तत्रापि ज्ञानस्याबाधितत्वात्। विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः। सत्यैवादष्टेऽपि स्वात्मनि सर्पसन्निधानाद्दष्टबुद्धिः। सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता। वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः। एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते। हस्त्यादीनामभावे[ऽपि] कथं तद्बुद्धयः सत्या भवन्तीति चेत्; नैतत्; बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्। प्रतिभासमानता चास्त्येव दोषवशात्। स तु बाधितोऽसत्य इत्यवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ॥

एतावता तूष्णींभावे प्राप्तेऽपि प्रत्यक्षाच्छास्त्रप्राबल्यमसत्यात्सत्यसिद्धिनिदर्शनैः सिषाधयिषन्तं प्रत्याह —**नचेति** । दृष्टान्तं दूषयति— **स्वाप्नज्ञानस्येति** । अनेन दोषरूपसत्यहेतुजन्यत्वमपि सूच्यते । तर्हि तत्कथं मिथ्याज्ञान-

मित्यत्राह— **तत्रेति**। ज्ञाने मिथ्यात्वोक्तिर्लाक्षणिकीति भावः। अत्रापि सन्ध्याधिकरणे स्वप्नप्रपञ्चसत्यत्वे स्थापयिष्यमाणेऽपि परमतान्वारोहेणान्यथाख्यातिपक्षेण विषयबाधोक्तिः। ननु स्वप्नभुक्तिवत्कर्ममिथ्यात्वे सिद्धे ज्ञानक्रियाऽपि मिथ्यैव स्यात्; नेत्याह— **तेषामिति**। अन्ततो यथादर्शनं सर्वत्र व्यवस्थेत्याशयः। अत्र विषयविषयिणोर्बाधाबाधौ विवृणोति— **न हीति**। सर्वत्र.........

**ज्ञानस्यलिङ्ग[ज्ञा]भावेऽपि विषयोऽ[र्थो]त्र न बोधकृत्। अतीतागामिविषयैर्ज्ञानैरप्यनुमोदयात्॥**

एवं स्वाप्नादिभिरेवासत्यैर्लिङ्गैरसत्यात्सत्योत्पत्तिरपि दृष्टा, किमुत ज्ञप्तिरिति मन्यमानस्यान्यदप्युदाहरणमन्यथयति— **मायेति**। **मायामयं** आश्चर्यभूतं मिथ्यार्थगोचरमिति यावत्।

**नासत्यः कस्यचिद्धेतुर्नतरां ज्ञप्तिकारणम्। नतमां सत्यधीहेतुरित्युत्पत्तिरुदाहृता॥ ५२३॥**

**परप्रलापैरीदृग्भिर्मा भूद्बालप्रतारणम्। इत्यभिन्नसमाधानबहूदाहृतिखण्डनम्॥ ५२४॥**

**सत्यहेतूद्भवस्सत्यो धीहेतुस्तत्र तत्र नः। हेतुरित्यपि च ज्ञप्त्यै बहुभ्रान्तिनिवारणम्॥ ५२५॥**

यद्यपि धीमात्रस्य कार्यविशेषहेतुत्वेऽतिप्रसङ्गः। तथाऽपि विशेषणैरुपलक्षणैर्वा मिथ्याविषयैरवच्छेदे तु यथार्हमसत्यात्सत्योत्पत्तिज्ञप्ती दुस्त्यजे। अथाऽप्यपरोक्षसामग्रीशक्तिसिद्धेः स्वभावविशेषैरेव भयविस्मयादिप्रतिनियतव्यवहारकार्यसिद्धेः स्वप्रकाशवादे वादान्तरे च विषयविषयिणोः युगपदेकप्रकाशस्सिद्ध्यन् प्रत्ययान्तरेषु न विषयायत्तः। ईश्वरादीनां बुद्धिषु च व्यवहारानुगुण्यमनुपाधिकम्। क्षेत्रिणां तु तत्तद्विषयविशेषोल्लेखस्तत्तत्कर्मोपनीतहेतुभेदायत्तः प्रागेव स्थापितः॥

**अतो नः सत्यधीस्सत्यात् तवासत्यादसत्यधीः। सत्यादसत्यधीर्वेति त्वसत्यात्सत्यधीर्न च॥ ५२६॥**

**व्यावहारिकसत्यस्य त्वसत्यात्सिद्धिरित्यसत्। बुद्धीनामयथार्थत्वे व्यावहारिकसत्यता॥ ५२७॥**

**असत्यात्सत्यबुद्धिश्च यथादृष्टि यथेष्यते। तथैव ब्रह्मणोऽपि स्यात्सत्यत्वं व्यावहारिकम्॥ ५२८॥**

अत्र संस्कारमन्त्रौषधादिविशेषैस्सत्याः स्वप्नादिधियः सिद्धाः। ताभिश्च सत्याभिरेव तत्तत्सत्यसिद्धिर्दर्शिता। * दष्टबुद्धिरित्यत्रापि मरणहेतुभूतेति योज्यम्। शङ्काविषोदाहरणं तु निर्विषसर्पदष्टादौ छन्नकण्टकवेधादौ च भाव्यम्। जलादिर्मुखादिप्रतिभासहेतुरित्यस्य प्रागुक्तत्वादिह नोक्तिः। पूर्वं बाधकाभावाद्बुद्धीनां सत्यत्वं साधितम्। हेत्वन्तरतोऽपि तदाह—**एषामिति**। व्यावहारिकवादिनाऽपि बुद्धीनां कारणा[नाम]न्वयव्यतिरेकाभ्यामुत्पत्तिमत्त्वं, कार्याणां तदन्वव्यतिरेका(भ्याम)र्थक्रियाकारित्वं च दुरपह्नवम्। न चेदमुभयं रज्जुसर्पादौ दृष्टमिति भावः। गत्यभावात्स्वमतं प्रस्मृत्य बुद्धीनां सत्यालम्बनत्वं व्यापकं मन्वानः तन्निवृत्त्या तन्निवृत्तिं चोदयति— **हस्त्यादीनामिति**। आशामोदकभक्षणन्यायेन वा विषयमिथ्यात्वात् विषयिमिथ्यात्वं साधयत एव धियां सत्यालम्बनत्वनियमः प्रमाणतर्कविरुद्ध इत्यभिप्रायेण प्रत्याह— **नैतदिति**। तद्व्यनक्ति— **बुद्धीनामिति**। मात्रचा विषयसत्यत्वमनियतमिति व्यज्यते। अर्थाभावे कथमालम्बनत्वमित्यत्राह—**अर्थस्येति**। एवकारो विद्यमानस्यैवालम्बनत्वमिति व्यवच्छेदार्थः। खपुष्पस्येवालम्बनत्वम् असतः कथमित्यत्राह— **प्रतिभासमानतेति**। अवधारणेन दुरपह्नवत्वं द्योत्यते। .... एवालम्बनमर्थसत्यत्वञ्च न भासमानत्वे........त्यक्तेन्द्रियस्य....बन्ध....कारण....भावः। **दोषवशादिति**। वध....तर्हि कारणवि-

विशेषवैशि....दित्यत्राह— स त्विति। स इत्यर्थपरामर्शः। मिथ्याविषयिणोऽपि मिथ्यात्वशङ्कां निरस्यति— अबाधितेति ॥

रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः, रेखायाः सत्यत्वात्। ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः; वर्णात्मता त्वसत्या। नैवं; वर्णात्मताया असत्याया उपायत्वायोगात्। असतो निरुपाख्यस्य ह्युपायत्वं न दृष्टमनुपपन्नं च। अथ तस्यां वर्णबुद्धेरुपायत्वम्। एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्यात्, बुद्धेः सत्यत्वादेव। उपायोपेययोरेकत्वप्रसङ्गश्च, उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्यमानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्ववर्णप्रतिपत्तिः स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्दसङ्केतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केतवशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति। हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्यत्वात्। रेखागवयादपि सत्यगवयबुद्धिः सादृश्यनिबन्धना। सादृश्यं च सत्यमेव ॥

एवं सत्यसिद्धिहेतुतयोक्तानां धियामसत्यत्वमपास्तम्; अथासत्यात्सत्यसिद्ध्युदाहरणानि निरस्यन्ते। तत्र रेखानिदर्शने बह्वीर्विकल्पकोटीः हृदि निधाय रेखाया वर्णमालत्वपक्षेऽनिष्टमाह— रेखयेति। रेखायामेव कार्योपयुक्तकल्पितरूपस्य [सत्य....कल्पितस्य] हेतुत्वं नेत्याह— नैवमिति। असत्या वर्णात्मता वर्णधीहेतुत्वेन दुस्साधेत्याह— वर्णात्मताया इति। दोषवशात्तस्याः प्रतीतत्ववदुपायत्वमपि किं न स्यादित्यत्राह— असत इति। रेखायां हि वर्णात्मता नास्ति। .... करे च ग्रहम्। अतः संप्रतिपन्नतुच्छवदस्यापि हेतुत्वमयुक्तम्। किञ्च निरुपाख्यशब्देन प्रमाणशून्यत्वं विवक्षितम्; तेनासत्त्वे हेतूक्तिः। किञ्च असत्त्वादेव प्रख्याविषयत्वासंभवादुपाख्याविषयत्वमपि न स्यात्; ततस्तत्रोपायतोक्तिर्न क्रमेत। एतेन नियतपूर्वभावित्वरूपहेतुलक्षणाभावोऽपि दर्शितः।

* पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥

इति खण्डनोक्तिस्तु खपुष्पस्यापि हेतुत्वप्रसङ्गान्निरस्ता। ख्यातितदभावादिवैषम्यं चात्र दुर्वचमिति भावः। न दृष्टम्— न प्रत्यक्षम्। अनुपपन्नश्च—कल्पयितुमप्यशक्यमित्यर्थः। रेखायां वर्णधीर्मिथ्याविषयत्वान्मिथ्यार्था, सा हेतुरिति कोट्यन्तरमनुवक्ति— अथेति। तत्र दत्तोत्तरत्वमाह— एवं तर्हीति। एतेन वर्णधीविशिष्टरेखापक्षोऽपि निरस्तः। अधिकमपि दूषणमाह— उपायेति। ननु रेखायां वर्णधीरुपायः, पाठ्यवर्णधीस्साध्या, कथमनयोरैक्यं? तत्राह— उभयोरिति। अयं भावः— अभ्यस्तलिपिदर्शनोद्बुद्धसंस्कारजनितवर्णस्मृतिपूर्विका हि रेखायां वर्णधीः; तथा च न साध्यमवशिष्यत इति ॥

अथ रेखावर्णात्मतयोः सत्यानृतयोः संभेदात्सत्यवर्णधीसिद्धिरिति कोट्यन्तरस्य दत्तोत्तरत्वेऽपि दार्ढ्यायाति-

प्रसङ्गमाह— **रेखाया** इति। संकेतसहकृतरेखाहेतुत्वपक्षमनुवक्ति— **अथेति**। चक्षुर्ग्राह्यत्वादिकथनं रेखावर्णयोरैक्यभ्रमनिरासार्थम्। विशेषशब्दस्त्वतिप्रसङ्गनिवारकः। अत्रापि दत्तोत्तरत्वमाह— **हन्तेति**। एतेन सङ्केतमात्रपक्षोऽपि निरस्तः। रेखायामेव सङ्केतनिरपेक्षोदाहरणं दूषयति— **रेखागवयादिति**। **सादृश्यं चेति**। चकारेण रेखासत्यत्वं पूर्वोक्तमिति व्यज्यते। एवकारो जातिरूपं पदार्थान्तररूपं वा दृष्टं सादृश्यं दुरपह्नवमिति द्योतयति ॥

**न चैकरूपस्य शब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः, नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न साधीयः, गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्। अतोऽसत्याच्छास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ॥**

अथैवं दृष्टेष्वगत्या वैयाकरणोक्तपुरस्कारिणं प्रत्याह— **न चेति**। **एकरूपस्य**— कत्वखत्वादिभिरुदात्तादिक्रमेण चोज्जृम्भितस्येत्यर्थः। **शब्दस्य**— स्फोटाख्यस्य। **नादविशेषेण**— स्वरव्यञ्जनरूपवर्णभेदेनेति यावत्। **अपि**रन्वारोहद्योतकः। अत्र व्यङ्ग्यव्यञ्जकतयोक्तयोर्नादस्फोटयोस्तदर्थसंबन्धस्य तद्ग्रहणस्य चासत्यत्वं दुर्वचम्। नादधर्माणां कत्वादीनां शब्देऽध्यासश्च नास्ति। तदभावेऽपि तादृशनादाभिव्यक्ततयैव तत्तद्बोधक(त्व)सिद्धेरित्यभिप्रायेण प्रतिवक्ति— **नानेति**। वृत्तिकारोपज्ञं स्वमत[पद]माह— **शब्दस्येति**। **अपि**र्दूषणसमुच्चयार्थः। अत्र **शाबरम्** * गौरित्यत्र कश्शब्दः गकारौकारविसर्जनीया इति भगवानुपवर्ष इति। वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम यदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम्; तेषां बाह्यप्रतिक्षेपार्थे वैभवोक्ते[कि]रपि स्यात्। युक्तिविरोधाच्च स्फोटवादस्यानपेक्ष्य(क्ष)त्वमाह— **गकारादेरिति**। अयं भावः— किमत्र वर्णातिरिक्तमेकरूपं वाचकं दृष्टत्वादूह्यते, बोधकान्यथाऽनुपपत्त्या वा, शब्दश्शब्द इत्यनुवृत्तव्यवहारसिद्ध्यर्थं वा, शास्त्राद्वा? नाद्यः, वर्णानामेव श्रोत्रेण गृह्यमाणत्वात्। अतिरिक्तमपि श्रवणेन गृह्यत इति धाष्ट्र्यादलीकवादः। शब्दादर्थं प्रतीम इत्येकवचनोक्तिस्तु वर्णसमुदायेऽपि स्यात्। न द्वितीयः, यादृशां वर्णानां प्रतिनियतस्फोटव्यञ्जकत्वमिष्यते तादृग्भिरेव तैर्नियतार्थधीसिद्धेः किमन्तर्गडुना स्फोटेन। क्रमयौगपद्यविकल्पानुपपत्तिश्च स्वेष्टेऽपि स्यात्। न तृतीयः, श्रोत्रग्राह्यत्वोपाधिना वर्णावर्णात्मकेषु सर्वेषु शब्दव्यवहारोपपत्तेः। न चतुर्थः, * स्फोटस्त्वं वर्णसंश्रय इत्यत्र स्फुटीकरणशङ्कौ तात्पर्यादिति। एवं छायादृश्येनानुमानेऽपि न त्वदिष्टसिद्धिरित्यभिप्रायेण निगमयति— **अत** इति ॥

**ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्, प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात्। उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य। न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः। यदोपायस्तदाऽस्त्येव शास्त्रम्, अस्तीति बुद्धेः। नैवम्; असति शास्त्रे अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात्। किं ततः? इदं ततः— मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्। यथा धूमबुद्ध्या गृहीत-**

**बाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम् । पश्चात्तनबाधादर्शनं चासिद्धम् , शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत् , एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥**

अथ खपुष्पवन्नित्याप्रतीतत्वलक्षणमसत्यत्वं शास्त्रे नास्ति, अतस्सत्यधीहेतुत्वं स्यादिति शङ्कते— **नन्विति** । कादाचित्कधीविषयतया तुच्छधीव्यावृत्तिं व्यनक्ति— **प्रागिति** । असत्यस्य कथं सद्बुद्धिबोध्यत्वम् ? तत्सत्यत्वे वा कथं सदद्वैतमित्यत्राह— **उत्पन्न** इति । पूर्वं सद्बुद्ध्या सत्यत्वं, पश्चाद्बाधकादसत्यत्वं चेत्यविरोध इति भावः । तर्ह्यसत्यस्य कथं धीहेतुत्वमित्यत्र उत्तरावस्थायामिष्टप्रसङ्गत्वं तावदाह— **न तदेति** । पूर्वावस्थायां तु प्रसञ्जकासिद्धिमाह— **यदेति** । अत्रास्त्येवेत्युक्तौ स्वमतविरोधमाह— **नैवमिति** । अयं भावः—

**यदि पूर्वं सतः पश्चादसत्त्वमभिसंहितम् । अनि(स)त्यत्वमिहोक्तं स्यान्न मिथ्यात्वादिसंभवः ॥ ५२९ ॥**
**पूर्वधीमात्रतस्सत्त्वमसत्त्वं बाधकं हि चेत् । बाधात्पश्चादिव प्रागप्यसत्त्वात्कार्यकृन्न तत् ॥ ५३० ॥**
**कस्यचिद्बाधितं वस्तु यदान्येषामबाधितम् । सत्त्वासत्त्वविरोधोऽपि तदा ते संपतेदिति ॥ ५३१ ॥**

लिङ्गविभ्रमादिन्यायेनोपपादयति— **असतीति** । बुद्धेर्मिथ्यात्वमिह स्वमते विषयतः, परमते स्वरूपतोऽपि । इष्टोपन्यासोऽयमित्यभिप्रायेण चोदयति— **किं तत** इति । अनिष्टमेव प्रसञ्जितमित्याह— **इदमिति** । तदिष्टप्रक्रियया विवृणोति— **मिथ्येति** । लोकदृष्ट्याऽपि स्थापयति— **यथेति** । सन्मात्रस्य बाधादर्शनमन्वारुह्य प्रागुक्तम् । अथ तदपि नेत्याह— **पश्चात्तनेति** । असिद्धिं माध्यमिकोक्त्या व्यनक्ति— **शून्यमिति** । नन्विदं भ्रान्तिमूलं बुद्धवाक्यं नित्यनिर्दोषानन्यपरवेदोक्तस्य कथं बाधकमिति शङ्कते— **तत्त्विति** । त्वदुक्त्यैव वेदान्तोऽपि न कस्यचित्साधको बाधको वा स्यादिति प्रतिबन्द्यभिप्रायेणाह— **एतदपीति** ।

**भ्रान्तिमूलेन वाक्येन धीसत्यत्वं यदीष्यते । तन्मिथ्यात्वादिकं तद्वदिष्यतामिति चाशयः ॥ ५३२ ॥**

एवकारस्तु वक्तव्यनैरपेक्ष्यार्थः । अन्येऽप्याहुः—

वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धानृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः ॥

इति । त्वदुक्त्या न केवलं बाह्यसमीकारः, तस्याधिक्यमेव फलतीत्याह— **पाश्चात्येति** । सर्वं नास्तीत्येतदपि न सुवचमिति चेत् , तदा धीव्यतिरिक्तं नास्तीत्येतदपि नेति वक्तुं शक्यम् । अत्रानवस्थयाऽपि परमतमात्रस्य बाधकप्रयोजकत्ववद्........मेवो........मूल्येत्युपात्तेन चुलकमात्रेण दोग्धी........ब्दितं दर्शित इत्यभिप्रायेण विरमति— **इत्यलमिति** । स्ववचनविरोधादिभिरप्रतिष्ठितत्वम् , उपजीव्यविरोधात्कुतर्कत्वम् ॥

**यदुक्तम्— वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि**

*सदेव सोम्येदमग्र आसीत् इत्येवमादीनीति। तदयुक्तम्, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसंकल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमन-मित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य, एवंभूत-ब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते॥

विशिष्टविषयैरित्थं प्रत्यक्षाद्यैर्विरुद्धता। तद्विरोधे च शास्त्रस्य दौर्बल्यमपि दर्शितम्॥ ५३३॥

अथागमानां प्रत्येकमैदंपर्यसमीक्षया। प्रत्यक्षाद्यविरुद्धार्थे प्रामाण्यं प्रविवक्षति॥ ५३४॥

साधकं बाधकं वाऽपि यत्र नास्ति प्रमान्तरम्। तस्मिन्नेव हि तात्पर्यं शास्त्रस्येति प्रचक्षते॥ ५३५॥

अर्थवैशिष्ट्यमधिकं शब्दमात्रेऽपि दर्शितम्। विशेषवच्चा(तश्चा?)रम्भस्तु तद्व्यक्त्यै वाक्यतर्कतः॥५३६॥

यदिह दूष्यं कारणशोधकवाक्ययोः परोक्तं [दूषणम्] निर्विशेषपरत्वं तदनुवक्ति— **यदुक्तमिति**। अत्र वस्तुमात्रशब्देन सगुणवाक्यानां दृष्टिविधिवदन्यपरत्वं व्यज्यते। उपात्तवाक्यस्य परेष्टविरुद्धत्वद्योतकः **परशब्दः**। **एवं** शब्द ईदृशसर्वप्रकारसंग्रहार्थः। अत्र प्रत्यक्षादेः उपक्रमादेः श्रुतिलिङ्गादेश्च विरोधमभिप्रेत्याह— **तदयुक्तमिति**। सद्विद्यायां परोक्तैः तात्पर्यलिङ्गैरेव तदिष्टभङ्गं व्यनक्ति— **एकेति**। एकस्य कारणस्य विज्ञानेन तत्कार्यस्य सर्वस्य ज्ञानं सिध्यतीति प्रतिज्ञा। सा च * उत तमादेशमप्राक्ष्यः येनाश्रुतमित्यादिना बोध्यते। आदेशशब्दश्चात्र न क्रिया-वचनः, मृदादिदृष्टान्तैः एवं सोम्य स आदेश इत्यादेशेन च करणपरत्वव्यक्तेः। नाप्युपदेश्यपरः, तदनुक्तावपि तत्सिद्धेस्तदुक्तिनैष्फल्यात् आङ्पूर्वस्य दिशेरुपदेशवाचित्वाभावाच्च आदेशोपदेशयोः पृथगाम्नानात् मुख्ये सम्भवत्युपचारायोगात्। ......व्यः अप्राक्ष्य इत्यनेनार्थतः उपादानस्यैव निमित्तत्वोपयुक्तप्रतिज्ञासिद्ध्यर्थतया प्रेरण..............उपदेश्यत्वं सर्वप्रष्टव्यसाधारणम्। अपवर्गोपदेश्यकत्वं चोपास्यादावप्यस्ति। न चात्र **तमिति** विशेषणादसाधारण्यमिति वाच्यम्। ................गात्। अपेक्षितासाधारण्यविधेरनपेक्षितसाधारण्यविधिदौर्बल्याच्च। तस्मात् * एतस्य वाक्षरस्य प्रशासने गार्गीत्यादिप्रसिद्धविश्वप्रशासितृत्वविषयोऽत्रादेशशब्दः। नन्वादेशशब्दे तावन्न कर्तरि पचाद्यच्प्रत्ययश्शङ्क्यः, इगुपधेति कस्यापवादत्वात्। न चात्र कप्रत्ययः, क्ङिति च इति गुणनिषेधात्। नापि घञ्, * अकर्तरि च कारके संज्ञायामिति नियमात्। न च सर्वशासितुः शास्तिकर्मत्वम्। उपदेशकर्मत्वं तु युक्तमिति। मैवम्; विवक्षातः कारकप्रवृत्त्या कर्तुरेव करणत्वविवक्षया घञो व्युत्पत्त्युपपत्तेः। अकर्तरीति **नियमस्तु** करणत्वादिविवक्षाविरहे कर्त्रर्थसाधुत्वार्थः। अर्थतोऽपि हि प्रत्यय [मात्र] नियमनं वरम्। अतः तमादेशमित्यादौ सर्व-तत्त्वाधिष्ठातृत्वगुणविशिष्टं किं श्रुतवानसीति प्रश्नार्थः। * येनाश्रुतमित्यादौ यथा सोम्यैकेनेत्यादिदृष्टान्तवाक्येषु च, ज्ञातेनेति विशेषणीयम्, तत्सत्तामात्रेण तत्कार्याणां ज्ञातत्वायोगात्। तो...........सर्वं विदितम्। अत एव विज्ञातेने-त्युक्तम्। तथा च मुण्डकोपनिषदि * कस्मिन्नु भगवो विज्ञाते इदं सर्वं विज्ञातं भवतीति। बृहदारण्यके च * आत्मनि

खल्वरे श्रुते मते विज्ञाते इदं सर्वं विदितं भवतीति च। अत्र घटकुड्यादिना विज्ञातेन तदन्यस्य ज्ञातत्वमयुक्तमित्यभिप्रायेण * कथन्नु भगवस्स आदेश इति चोक्तम्। तत्रोत्तरं, यथा सोम्येत्यादि। बहुदृष्टान्तोक्तिस्संभवद्दाढ़्मार्था। मृदादिकारणात्मकं[हि]सर्वं मृन्मयम्। तत्तन्मृत्पिण्डदृष्टान्तेऽप्यसत्कार्योपादनचोद्यं निरस्यति— वाचेति। अत्र वाचालम्बनमिति व्याख्यायां श्रुत्यक्षरविप्लवः स्यात्। कार्यमि............त्यो............क्ष्याप्रसिद्धं नोदाहर्तव्यम्। त्वदिष्टे हि रज्जुसर्पादि दृष्टान्तयितव्यम्। * विज्ञातं स्यादित्यत्र च सत्यज्ञानेन मिथ्याभूतस्य ज्ञातत्वोक्तिर्विरुद्धा। ज्ञातं भवतीति किं तदा वाच्यम्? सति गत्यन्तरे मिथ्यात्वेन ज्ञातं भवतीत्यध्याहारश्च न युक्तः। मृत्तिकेत्यादिष्वितिकरणं च निरर्थकम्। मृत्तिकेत्येव प्रमाणसिद्धमिति प्रति[त्यभि]ज्ञा....................प्रति सात्वेति सार्थकं... ..............................तदिह घटेनोदकमाहरेत्यादिवाक्पूर्वकप्रवृत्तिनिवृत्तिरूपप्रयोजनाख्येन हेतुना, आरम्भणम्। विकारो नामधेयमित्युभयं मृदादिद्रव्येण। आरम्भणं आलम्भनं स्पर्शः। कृत्यल्युटो बहुलम् इति कर्मणि ल्युट्। रल्योरभेदः पक्षद्वयेऽपि समानः। बकारस्थाने भकारस्तु न काप्यस्ति। वर्णवैषम्यानादरेणारम्भणीयत्वविवक्षायामप्यसत्पक्षे न दोषः।

**असत्यं तव सिद्धान्ते घटादि च मृदादि च। लोकदृष्ट्योभयं सत्यं विभज्योदाहृतिः कथम्? ॥ ५३७ ॥**
**यदि वर्गद्वयस्यास्य मृषात्वं साधयिष्यते। यथेति सिद्धवत्कारस्समतोक्तिश्च भज्यते ॥ ५३८ ॥**
**किञ्चात्र कार्यसत्यत्वं सजातीय.................................................... ॥**

अपि चैवं............................................................... * एवं सोम्य स आदेश इत्युपदेश्यत्वाभ्युपगमात् * भगवांस्त्वेव मे तद्ब्रवीतु इति पूर्वमविदितस्य शुश्रूषितत्वात् पश्चादुपदेशात् * आचार्यवान्पुरुषो वेदेति निगमनाच्च शब्दगोचरत्वं ज्ञानगोचरत्वं च स्पष्टमुक्तम्। तदाऽपि त्वदिष्टविरुद्धमुपलक्षितं....... .......क्षन्यायेन बुद्धीनां शब्दानां च ब्रह्मणि कुण्ठीभाव इति तु डिम्भप्रलम्बनं, प्रलपनं वा। सत्कार्यवादादिसंभवेऽपि विचित्रकार्याणां यथादृष्टि विचित्रकारणापेक्षणादेकविज्ञानेन सर्वविज्ञानं कथमिति चात्र प्रश्नाभिप्रायः। तत्रोत्तरम्— सदेवेत्यादि। तत्राग्र आसीदिति काल............................ विशेषण द्वयञ्च सिद्धम्। .........................विशिष्टं तद्दृश्यते। अग्रेशब्दस्य निरर्थकत्वञ्च। अवाच्यस्य कथमुपदेश्यत्वमित्यभिप्रायेणोक्तम्— **सच्छब्दवाच्यस्येति**। गुणविशिष्टोक्तिः कल्पिताकारविषयेति शङ्काव्युदसनायाह— **परस्य ब्रह्मण** इति। अनेन सच्छब्दस्य शाखान्तरोक्तशब्दैरैकार्थ्यं सूचयता सत्तामात्रपरत्वञ्च निरस्तम्। निरूप्यमाणदशापरत्वञ्चायुक्तम्, वक्ष्यमाणापेक्षया कारणनिर्देशार्थत्वात्। न हि तदानीमित्यादिश्रुत्यन्तरनिर्देशसामरस्याच्च प्रलयकालपरत्वं युक्तम्। किं तदासीदित्यत्र * ऋषयो वाव तेऽग्रे सदासीदिति....... अत्र निर्दिश्यते। अतस्तत्काले त्रिविधभेदनिषेधपरत्वमिह न वाच्यम्, सृष्टिकालेऽपि वस्तुतस्तच्छून्यत्वात् प्रलयकालेऽपि वैषम्यनैर्घृण्याकृताभ्यागमकृतविप्रणाशपरिहाराय सूक्ष्माचिज्जीवादिभेदस्य त्वयाऽपि स्वीकृतत्वाच्च। अतो नाग्रशब्दस्य वैयर्थ्यं, विरोधो वा। दुस्त्यजस्वगतविशेषोऽपि तदानीं सत्त्वैकत्वाद्वितीयत्वैस्त्वयैवादृतः। तदिह प्रलयकालावच्छिन्नसत्ताविशिष्टं चिदचिच्छरीरकं ब्रह्म सदित्युक्तम्। सच्छब्दस्य ब्रह्मात्मादिशब्दवद्विशेष्यविषयत्वेऽपि स्वरूपविकारादिनिषेधाच्छ्रुत्यन्तरोपबृंहणप्रसिद्धिसामरस्याच्च प्रकृतिपुरुषकालाद्यपेक्षितविशेषणसिद्धिः। तदभावे निर्विकारस्य स(स्व)तः कारणत्वमेव न सिद्ध्येत्। ततश्च शाखान्तरनयेन कारणवाक्यान्तराणामपि निर्विशेष-

षरतया ब्रह्मकारणवादस्त्यक्तस्स्यात् । अध्यासोऽपि ह्यविद्यापेक्षस्त्वयैवोक्तः । * सदेवेत्यस्यासत्त्वनिषेधपरत्वं च दृष्टान्तानुगुणम् । * तद्धैक आहुरसदेवेदमित्यादिना मतान्तरोपन्यासनिरासाभ्यां च तद्व्यक्तम् । अत्र * एकमेवाद्वितीयमिति न त्वदुक्त्यंशोक्तिः। सिद्धानुस्मरणमात्रार्थत्वात् तच्छब्दोऽत्र पक्षान्तरोपक्रमार्थः। तदिदमिति वाऽन्वयः। अत्र च कार्यं द्रव्यं प्रागसदिति वैशेषिकाद्युक्तिनिरासे प्रतिज्ञानुगुण्यं स्यात् । शून्यवादनिरासपरत्वे त्वग्रशब्दस्य वैयर्थ्यम् । क्षणभङ्गनिरासस्तु द्रव्यानुवृत्तिसाधनेनैव सेत्स्यति।

**अतुच्छत्वे स्थिरत्वे तु प्रतिज्ञा नैव सेत्स्यति। कार्यकारणयोर्यावदनन्यत्वं न साध्यते ॥ १३९ ॥**

कुतस्त्वित्यादि प्रमाणतर्काभावपरम्। कथमित्यादि तदुभयविरोधपरम्। विद्यमानस्य हि द्रव्यस्यावस्थान्तरापत्तिस्तत्तदवस्थावत उत्पत्तिरिति प्रमाणसिद्धम्। तथा च द्रव्यस्य पूर्वमसत्त्वे तस्य सत्तावाच्यघटत्वाद्यवस्था उत्पत्तिरिति स्यात् । तदेतत्प्रमाणैस्तदनुग्राहकैश्च निर्धूतमिति भावः । अथ यथोक्तं निगम्यते— * सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति । इदमग्रे एकमद्वितीयं सदेवासीदित्येकमेवेदं वाक्यम् , संभवत्यैक्ये तद्भेदायोगात्। यत्तु भिन्नवाक्यवत्क्वचित्क्वचिद्भाष्यते, तदपि तात्पर्यव्यक्त्यर्थम् । अन्यथा वाक्यलयवद्वाक्यद्वयवच्च व्यपदेशो व्याहन्येत। तदिह सदासीदित्यवस्थाद्वयसाधारणाकारोक्तिः । एकमिति तु प्रतिज्ञाघटनार्थमविभक्तनामरूपावस्थोच्यते । अवधारणमिह जगदन्तर्भूतस्य वियदादेर्वैशेषिकाद्यभिमतनित्यत्वशङ्कानिरासार्थम् । अत्राभिप्रेतमाह— **जगदुपादानत्व**मिति ।

* तद्धेदं तर्ह्यव्याकृतमासीदित्यादिश्रुत्यन्तरानुगुण्यात्, * बहु स्यामित्युत्तरवाक्यादिभिश्चायमेवार्थ इति भावः । उदाहृतानां मृदाद्युपादानानां कुलालादिप्रेर्यत्वदर्शनादिहापि तथाऽन्यस्मिन्कर्तरि च आदेशशब्दार्थत्वेन ज्ञानात्तत्कार्यविश्वविज्ञानं न स्यात्। तत्सिद्ध्यर्थमद्वितीयपदेनाधिष्ठात्रन्तरं निरस्यते; तदिदमाह— **जगन्निमित्तत्व**मिति। * तत्तेजोऽसृजत तदात्मानं स्वयमकुरुतेत्यादिभिरेतद्दृष्टम्। * तदैक्षतेत्यादिसिद्धमाह—**सर्वज्ञ**ेति। * यस्सर्वज्ञ इति कारणवाक्यान्तरे चैतत्कण्ठोक्तम्। स्यामिति सङ्कल्पयतो निमित्तत्वानुगुणम्। एतदुभयानुगुणमाह— **सर्वशक्तियोग** इति। सर्वोपादानत्वसर्वनिमित्तत्वशक्त्येकाश्रयमित्यर्थः । अत्र असृजतेत्यादि फलितम् , अन्यत्र ब्रह्माध्यतिष्ठत् कर्तारमीशमित्यादिभिः कण्ठोक्तमाह— **सत्यसङ्कल्पत्व**मिति । हन्ताहमिमा इत्यादौ चिदचिदन्तरात्मत्वं व्यक्तम्; विशेषतोऽप्यनुप्रवेशनिबन्धनं सामानाधिकरण्यमिति * तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिभिः सिद्धम् । अत्र * सिंहेन भूत्वा बहवो मयात्ताः इतिवत् अनेन जीवेनेति विवक्षितं व्यनक्ति— **सर्वान्तरात्मत्व**मिति। सर्वाधारता सदायतनत्वोक्तिसिद्धा । सर्वनियमनं तु आत्मत्वोक्तिलब्धम् । अत्राधेयत्वविधेयत्वादिनियमैर्जगतश्शरीरत्वं सिद्धम् , शरीरवाचिनां शरीरिपर्यन्तत्वप्रतिज्ञाघटनाय प्रकाशितम् । आदिशब्दश्च खण्डान्तरोक्तांश्च कारणत्वाद्युपयुक्तान्विशेषान्संगृह्णाति । ऐतदात्म्यमित्यादेरर्थमाह— **कृत्स्नस्ये**ति । तत्सत्यमित्यत्र सर्वकारणस्य सतो ब्रह्मणः, इदं सर्वमित्युक्तस्य जगतो वा सत्यत्वमिह न विधेयम् , कृतकरत्वात्। अतो * मृत्तिकेत्येव सत्यमितिवत्कार्यस्य जगतः स्वनिष्ठत्वादिभ्रमनिवारणाय तदात्मकत्वं प्रामाणिकमित्युच्यते । * स आत्मेत्येतदप्यस्यैवार्थस्य तात्पर्यभूम्ना निर्देशवैषम्येण दृढीकरणं स त आत्मा अन्तर्याम्यमृत इतिवत्। अत्रापि सर्वान्तरात्मत्वेन प्रस्तुतश्रोतर्यपि विशेषत उक्तिरियमिति केचित्। अत एव तत्त्वमसीत्यप्यनुसन्धातर्युपसंहारमात्रम्। जीवस्य परेण स्वरूपैक्ये भेदे वा[बाधेऽपि पक्षे] पूर्वोक्तसर्वाकारविशिष्टपरामर्शितच्छब्दो विरोधी स्यादित्यभिप्रायेणाह— **एवंभूतब्रह्मात्मक** इति । अत्रोद्देश्योपादेयचिन्ता पश्चाद्भविष्यति ।

**श्वेतकेतुं प्रतीत्यनेन** स्वेष्टसाधकार्थवादलिङ्गसूचनम् । आत्माद्वैतपक्षे प्रबुद्धस्य गुरोर्भ्रान्तिसिद्धं शिष्यं प्रत्युपदेशानुपपत्तिं सूचयति— **उपदेशाय प्रवृत्तत्वादिति** ।

**यत्त्वष्टविधतात्पर्यलिङ्गवत्त्वमिहोदितम् । तत्त्वस्मिन्पक्ष एवेति ग्राह प्रकरणोक्तितः** ॥ ५४० ॥

अत्र ह्युपक्रमप्रभृति तत्त्वमसीत्युपसंहारपर्यन्तं निरुपाधिकं प्रशासनादिकं दर्शितम् । तच्च मानान्तरागोचरत्वादपूर्वम् । अभ्यस्तश्च बहुशः । फलं च तस्य तावदित्यादिना जीवस्य परप्राप्त्यनुरूपम् । आख्या........................ तं * तन्नि-ष्ठस्य मोक्षोपदेशादिति ॥ क्र....... चार्थवादसिद्धः । असत्कार्यवादनिरासेन विवर्तवादविरुद्धैर्दृष्टान्तैस्त्रिवृत्करणप्रदर्शनादिभिश्चोपपत्तिः स्थापिता । तत्तेजो सृजत........ सोपबृंहणैः श्रुत्यन्तरसङ्गतैरध्यासशङ्काऽप्यत्र प्रशमिता ।

**तथा च त्वत्पक्षं क्षिपति परिणामादिति वदन्विवर्तादध्यासादिति च नवदन्सूत्रकृदिह ।**
**तदन्याभावं न स्पृशति तदनन्यत्वफणितिर्न मायामात्रोक्त्याऽप्यनृतगतिराश्चर्यपरया** ॥ ५४१ ॥

अत्र किं प्रतिज्ञावाक्यं, कानि च तदुपपादकानि, कथं च तेषामेव तात्पर्यमित्यत्राह— **प्रपञ्चित** इति । ननु बुद्धिशब्दान्तरादिकं रज्जुसर्पादिष्वध्यासाद्दध्यादिषु द्रव्यान्तरसंयोगाच्च दृष्टम् । मृत्पिण्डघटादिष्वपि तथाभावाभावे कथं द्रव्यैक्योपपादनमित्यत्राह— **अत्रापीति** । **निपुणतरम्**— परोक्तप्रतीतिबलानुसारेण । अहिकुण्डलवदास्ते..... त.....धित इत्यादिवच कार्यस्य सत्यत्वे.......... ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु

श्रीभाष्यव्याख्या तत्त्वटीका समाप्ता ॥

(एतावत्येव उपलभ्यते)

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

# ॥ निक्षेपरक्षा ॥

**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

संसाराध्वगतागतश्रमहरः सर्वावगाह्यः स्वयं श्रीसंश्लेषसमुल्लसद्घनरसः शीतस्तटाको महान् ।
नेदिष्ठेन महापथेन सुगमो येषां प्रसादादभूत्तीर्थं तत्र शुभं प्रकाशयतु नस्तेभ्यो गुरुभ्यो नमः ॥

प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् । हस्तः श्रीरङ्गभर्तुर्मामव्यादभयमुद्रितः ॥

स्थितं तावत्—देहबाह्याभ्यन्तरकरणप्राणधिषणाविलक्षणः, पारलौकिकसुखदुःखोपभोगयोग्यः, परमपुरुषनित्येच्छातन्त्रितस्वातन्त्र्यः, परतन्त्रः, अनादिकर्मप्रवाहहेतुकचतुर्विधदेहप्रवेशजनिततत्तदात्माभिमानसंतन्यमानावर्जनीयदुःसहदुःखसंततिसहस्रसंततः, सांसिद्धिकसम्यगध्यक्षयुगपदध्यक्षितसमस्तवस्तुवास्तवेनापि स्वच्छन्दपञ्चकृत्यनित्यशक्तिसंपदाऽपि सर्वजननिरुपाधिकपरमसुहृदाऽपि अनुकम्पनीयानुकम्पावात्सल्यसौशील्यादिगुणगणप्रशमितपितृत्वोष्मणाऽपि यथावस्थितगुणविभूतिमण्डलपरिमण्डितस्वात्मविश्राणनमहावदान्येनापि पुरुषोत्तमेन परब्रह्मणा भगवता नारायणेन अनादिकर्मप्रवाहभेदविषमितविविधसंसारिमण्डलसमसमयसमुद्धरणप्रतिबन्धकप्रतिबद्ध[साम्यगुण]सम्यग्गुणगणसंरक्षणसंधुक्षितरणरणकेन अपुरुषार्थप्रदायित्वपरिजिहीर्षयाऽर्थितोऽनर्थमप्यर्थितं दिशता संसारतन्त्रवाहिनाऽप्यवसरप्रतीक्षेण श्रीमता पुण्डरीकाक्षेण समीक्ष्यमाणः, कदाचिदहेतुकसर्वसमभगवदनुकम्पावसरापदेशभूतेन अपर्यनुयोज्यानादिसामग्रीचक्रसामर्थ्यसमुद्भवेन सर्वसैद्धान्तिकसमालम्बनीयेन केनापि सुकृतविशेषेण संसारतरुसमूलोन्मूलनानुकूलजन्मविद्यावृत्तवैराग्यादिकमनुप्रपन्नः, तत्त्वोपदेशदेशिकमहत्तरजनचरणपरिचरणसमासादितप्रकृतिपुरुषेश्वरतत्त्वयाथात्म्यावबोधः, अनन्तशाखनिगमतरुशाखाविशेषसंभवासु विद्यात्मिकासु छायासु विश्राम्यन्, परमशेषिपरमपुरुषचरणारविन्दयुगलनिगलिताशेषमनोरथः, महता मनोरथगोचरेणार्चिरादिपथेन परमपदमधिरुह्य स्वेन रूपेणाभिनिष्पन्नः, भगवन्तमनुभवति प्रत्यगात्मेति । तत्र च ज्ञानकर्मसमुच्चयवाक्यार्थज्ञानादिपरपक्षप्रतिक्षेपेण कर्मज्ञानानुगृहीतः, वेदनध्यानोपासनादिशब्दवाच्यः, दर्शनसमानाकृतिः, निरतिशयप्रीतिरूपतया भक्तिशब्दाभिलप्यः असकृदावृत्तः, आप्रयाणानुवृत्तो निरन्तरस्मृतिसंतान एव निःश्रेयसनिःश्रेणिकेति निरणायि ॥

इदं त्वत्र चिन्त्यते—किं तथाभूतादुपासनवर्गात् [व्यतिरिक्तो] विमुक्तो मुक्त्युपायोऽस्ति, न वेति । नास्तीति पूर्वः पक्षः, अस्तीति राद्धान्तः ॥

नन्वेतच्चिन्तनमनर्थकम्, तदनिश्चयेऽपि भक्त्यैव मुक्तिसिद्धेरिति चेन्न, तन्निश्चयाभावे तदनुष्ठानरूपस्य प्रयोजनस्यासिद्धेः। तत्फलस्यान्यतः सिद्धौ तदनुष्ठानस्य प्रयोजनत्वमेव न सिध्यतीति चेन्न; अनेकविद्याविलयप्रसङ्गात्। सर्वासामेकफलसाधनत्वेऽपि विकल्पतो यथारुचि यथावगमं वा तत्तदनुष्ठानं सप्रयोजनमिति चेत्, तुल्यम्। यथाधिकारमिति विशेषो वक्ष्यते। तत एव विद्यान्तरविशेषचिन्तनादेतच्चिन्तनस्य महत्तरं प्रयोजनमिति स्थितम्॥ इत्युपोद्घातः॥

## ॥ अथ पूर्वपक्षः ॥

अत्रैवं पूर्वपक्षी मन्यते—नास्ति भक्त्यतिरिक्तं मोक्षसाधनमिति। कुतः?

**श्लो.** स्वरूपलक्ष्मानुष्ठानविध्यदृष्टेर्निषेधतः। ऐक्यादशक्तेरख्यातेः संप्रदायविरोधतः॥ १॥

**स्वरूपानुपपत्तिसमर्थनम्**॥ तथा हि—

* सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

इत्येतावन्मात्रबलेन हि सुप्रतिष्ठितसमस्तशास्त्रार्थसंक्षोभः सिषाधयिषितः। अस्य चायमर्थस्त्वन्मतरहस्यवेदिभिरादिश्यते—सर्वधर्मपरित्यागपूर्वकं तमेकमेव शरणं गतस्य स एव भगवान्मोक्षसाधनमिति। तत्र किमियं शरणागतिः सिद्धरूपा प्रतिपिपादयिषिता, उत साध्यरूपा वा? न तावत्सिद्धरूपा, अविधेयत्वप्रसङ्गात्। कर्तृव्यापारसाध्यमेव हि विधीयते। इष्टप्रसङ्गोऽयमिति चेन्न, अविहितत्वेनाशास्त्रीयत्वप्रसङ्गात्। [तत्तच्छा]शास्त्रोपात्तत्वमात्रेण शास्त्रीयत्वमिति चेन्न, निष्प्रयोजनोपादानस्यैवासंभवात्। ब्रह्म तु सिद्धमपि स्वतः प्रयोजनरूपत्वात्परंपरया प्रयोजनपर्यवसानाच्चोपादीयते। अधिकारिविशेषणतया तदुपादानमपि सप्रयोजनमङ्गीक्रियत इति चेन्न,

**श्लो.**—फलादिभ्यो विभिन्नत्वात्प्रपत्तिर्विध्यनन्वयात्। विधेयान्तरहानेश्च नाधिकारिविशेषणम्॥ २॥

अधिकारिविशेषणता हि फलकामनारूपतया, फलतया, निमित्ततामात्रेण वा स्यात्? न पूर्वः, असिद्धेः। न द्वितीयः, फलस्य स्वरूपेणाधिकारिविशेषणत्वाभावात्। यथोक्तम**आगमप्रामाण्ये**—

* सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम्। जीवनादि तथैवेह कामनैव विशेषणम्॥ इति।

काम्यमानतया विशेषणत्वेऽपि तदर्थसाधनविधानादर्शनात्, स्वर्गादिवत्स्वतो वा पश्वादिवत्फलान्तरसाधनतया वा फलत्वस्यासिद्धेश्च। न तृतीयः, हिंसादिवन्निमित्तत्वे निषिद्धानुष्ठानतया परिहरणीयत्वप्रसङ्गात्। जीवनपुत्रजन्मादिवत्केवलनिमित्तत्वकल्पने विधिप्रत्यययोगः परिपन्थी, विधेयान्तरासिद्धिश्च। तद्विशिष्टस्य ब्रह्मस्वरूपं मोक्षसाधनतया विधीयत इति चेत्, कोऽयं विधिः? किं कर्तव्यतया बोधनम्, उताज्ञातज्ञापनमात्रम्? नाद्यः, नित्यस्य ब्रह्मणः कृतिसाध्यत्वासिद्धेः। प्रसन्नत्वरूपेण साध्यत्वमस्तीति चेत्, तर्हि विशिष्टोपादानस्यात्र विशेषणार्थत्वात्प्रसाद एव साध्य इत्यायातम्। तथा सति स एव विधेयः स्यात्, न ब्रह्म। अस्त्विति चेन्न, कर्तृव्यापाररूपत्वाभावेन साक्षात्कृतिसाध्यत्वेन विधेयत्वासिद्धेः, देहादिव्यापाररूपत्वाभावेन पारंपर्येण साध्यत्वेऽप्यौचित्यात्स्वर्गादिवत्फलत्वस्य तद्धेतुभूतावान्तरव्यापारत्वस्य वा प्रसङ्गात्। न चेह तद्युक्तम्, नैमित्तिकतया कामनाधिकारत्वासिद्धेः, संवलिताधिकारत्वे ज्ञापकाभावात्, तदर्थविधेयान्तराभावे साध्यत्वस्यैवासिद्धिप्रसङ्गाच्च। नापि द्वितीयः, * अमृतस्यैष सेतुरित्यादिभिस्तदविशिष्टस्यापि तज्ज्ञानदर्शनेन तद्विशिष्टस्यैव तदधिकारित्वासिद्धेः? न च यथावस्थितशास्त्रश्रवणवेलायामेव प्रपन्नः श्रोता, प्रपत्तेः शास्त्राधिगम्यत्वेन श्रवणप्रपदनयोरन्योन्याश्रयात्। हितकारिवचनात्प्रपदनसंभवेऽपि निरर्थकं पुनरिदमज्ञातज्ञापनम्। यदि हि प्रपन्नस्य ब्रह्म मोक्षसाधनम्,

किमस्य पुनस्तथात्वज्ञानेन ? तदन्तरेणापि फलसिद्धेः । सिद्धप्रपदनेनैव साधनतया ज्ञायमानं ब्रह्मैव साधनमिति चेत्, तर्हि साधनतया ज्ञानमेव विधेयतया साधनमिति स्यात्; ततश्च गतं ब्रह्मणः साधनत्वम् । एवं चासाधने ब्रह्मणि साधनत्वदृष्टिरेवेति मिथ्याज्ञानान्मोक्षप्रसङ्गः । फलप्रदत्वाकारेण ब्रह्मणोऽपि साधनत्वमस्त्येवेति चेन्न, तावन्मात्रज्ञानस्य श्रवणमात्रसंपाद्यत्वेन विधिव्यापारविषयत्वायोगात्, अविधेयज्ञानस्यापि मोक्षसाधनत्वे कुदृष्टिमतोत्थानप्रसङ्गात् । समर्पण-पर्यन्तसाधनत्वबुद्धिविशेषस्यैव प्रपत्तित्वाभ्युपगमादधिकारिविशेषणविधेययोरैक्यप्रसङ्गश्च । तच्चायुक्तम्; सिद्धत्वसाध्यत्व-रूपविरुद्धधर्माध्यासात्, तत्सिद्ध्यैव तत्सिद्धिरित्यात्माश्रयप्रसङ्गाच्च । रक्षापेक्षा प्रपत्तिरिति नैक्यमिति चेत्, तथा सत्यन्योन्याश्रयणम्, रक्षकत्वबुद्धिपूर्वकत्वाद्रक्षापेक्षायाः रक्षापेक्षाविशिष्टमधिकारिणं प्रति रक्षकत्वोपदेशात् । रक्षकत्वाति-रिक्तं साधनत्वमुपदिश्यत इति चेत्, किमत्र साधनशब्देन कर्तृतदितरसाधारणं हेतुमात्रं विवक्षितम्, उत कर्तृव्यतिरिक्तं किमपि कारक[ान्तर]मिति ? पूर्वत्र स्थितमेवान्योन्याश्रयणादिकम्, विशेषप्रतिपत्तेः सामान्यप्रतिपत्तिमन्तरेणासिद्धेः । उत्तरत्र कर्तरि ब्रह्मणि कारकान्तरत्वोपचारमात्रं वा स्यात्, पूर्ववन्मिथ्याप्रत्ययादपवर्गप्रसङ्गो वा । स्वतन्त्रतयोत्कृष्टे कर्तरि ब्रह्मणि अस्वतन्त्रतया अपकृष्टकारकान्तरदृष्टेर्महापराधरूपत्वम् । ततो दृष्टिविधिनयस्याप्यत्रानवकाशः । कर्तरि ब्रह्मणि करणत्वादिबुद्धौ करणत्वादेश्च कर्तृनिरूपितस्वरूपत्वेन कर्त्रपेक्षायां परिशेषादौचित्याच्चाधिकार्येव कर्तेति प्रतीयेत । ततश्च आकर्मयोगमनुवर्तमानस्यात्मन्यकर्तृत्वानुसंधानस्य प्रपदनदशायां परित्याग इति सम्यक् संप्रदायः परिरक्षितः । अत्यन्त-पारतन्त्र्यानुसंधाननिष्ठां हि प्रपत्तिनिष्ठामातिष्ठन्ते । कर्तर्येव ब्रह्मणि सहकारिनैरपेक्ष्यमात्रं साधनशब्देन विवक्षितमिति चेन्न, तस्यापि शास्त्रश्रवणवेलायामेव ज्ञाततया तज्ज्ञानविधानानुपपत्तेः, निरपेक्षरक्षकत्वबुद्धिपूर्वकत्वाच्चात्र रक्षापेक्षायाः प्रागुक्तदोषानतिलङ्घनात् । प्रपत्तेरधिकारिविशेषणत्वे च *तेनतेनाप्यते तत्तन्न्यासेनैव महामुने इत्यादिमूलस्य प्रपत्तेः साधनत्वव्यपदेशस्यामुख्यत्वप्रसङ्गश्च । **अतो नास्याः सिद्धरूपता विवक्षिता ॥**

साध्यरूपत्वेऽपि, न प्रागुक्तनयेन फलरूपता । करणादिरूपायास्तु वाक्कायव्यापाररूपत्वे, स्तुत्यादिवदेव ज्ञानात्मकत्वाभावेन भक्त्यङ्गत्वादिप्रसङ्गः, ज्ञानादेव मोक्ष इति परित्यागप्रसङ्गो वा । अत एव भक्तिज्ञानव्यतिरिक्तं किमपि कर्मैतदिति कैश्चिदुक्तं निरस्तम् । मनोव्यापाररूपत्वेऽपि, दृष्टिवत्सा भ्रान्तिरूपा, तत्त्वज्ञानरूपा वा ? पूर्वत्र अपवर्गसाधन-त्वासिद्धिः । उत्तरत्र, किं शास्त्रमात्रजन्या, हेत्वन्तरजन्या वा ? आद्ये कुमतिमतोपनिपातादिप्रसङ्गः । हेत्वन्तरजन्यत्वे तु, स हेतुः किं योगाभ्यासादिरूपः, तदन्यो वा ? प्राच्ये गुरुतरभक्तितुल्यतया तद्वदेव सौकर्यासिद्धिः । पश्चिम-स्त्वनुपलम्भनिरस्तः, इन्द्रियलिङ्गादेस्तथाविधज्ञानोत्पादकत्वादर्शनात् ॥

सा किं शास्त्रजन्यज्ञानादधिकविषया, अनधिकविषया वा ? न तावदधिकविषया; अधिकप्रकाशकस्य योगादे-रभावात्, भावे वा भक्त्यविशेषत्वस्योक्तत्वात् । नाप्यनधिकविषया, शास्त्रजन्यज्ञानाविशेषेण स्वारसिकसकृत्स्मरणमात्रानति-रिक्तायास्तद्वदेवाविधेयत्वप्रसङ्गात् । तस्यैवावृत्तिवेषेण विधेयत्वोपपत्तिरिति चेन्न, ध्यानसमानरूपतया भक्त्यतिरेकासिद्धेः ॥

सा किमितिकर्तव्यतावती, न वा ? इतिकर्तव्यतावत्त्वे निरपेक्षोपायत्वविरोधः । इतिकर्तव्यतारहितत्वे कार्यकरत्व-हानिः । तदुक्तमभियुक्तैः—

*न हि तत्करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ इति ।

इतिकर्तव्यताविशेषवदेव इतिकर्तव्यतानैरपेक्ष्यमिति चेन्न, तत्रापि कथंताकाङ्क्षाया गत्यभावादेवोपशमात्, क्वचित् क्लिष्ट-गतिस्वीकारे सर्वत्र तथेति नि[यामका]यमाभावात्। सर्वधर्मपरित्याग एव इतिकर्तव्यतेति नैरपेक्ष्यवाचोयुक्तिः, करणत्वोप-पत्तिश्चेति चेन्न, विध्यनुवादविकल्पानुपपत्तेः। सर्वधर्मपरित्यागो ह्यत्र किं विधेयः, उतानुवाद्यः? न प्रथमः, सर्वस्य धर्मस्य परित्यक्तुमशक्यत्वेन सागरतरणोपदेशवदप्रमाणत्वप्रसङ्गात्। यदृच्छयाऽपि हि क्रियमाणानि कानिचित्कर्माणि धर्म एव भवन्ति। अत एव ह्यज्ञातसुकृतमवकाशं लभते। बुद्धिपूर्वकरणाभावोऽत्र विवक्षित इति चेन्न, नियामकाभावात्। तथा च सत्याचार्योपसदनभगवत्सेवादेरपि परित्याज्यत्वप्रसङ्गः; तदनुष्ठानेऽङ्गवैकल्येन प्रपत्तिवैकल्यप्रसङ्गात्। नात्र धर्मबुद्ध्या तदनुष्ठानमिति चेत्, कुतस्तर्हि? प्रपन्नेतरलोकसंग्रहार्थमिति चेत्, किं स्वाधिकारविरुद्धानुष्ठानेन लोकसंग्रहः, तथा सत्यूर्ध्वरेतसामपि गृहस्थाश्रमधर्मानुष्ठानप्रसङ्गात्। लोकसंग्रहणमपि किं धर्मबुद्ध्या, केवलदृष्टार्थं वा? आद्ये व्याघातः, तस्यैव बुद्धिपूर्वधर्मानुष्ठानात्मकत्वात्। द्वितीये लोकायतिकरहस्यावतारः, धर्मानुष्ठानस्य परवञ्चनामात्रप्रयोजनत्वात्। धर्म-बुद्ध्यभावेऽपि दृष्टप्रयोजनविरहेऽपि कारुण्यपरतन्त्रतया धर्मलोपमूलपरानर्थपरिजिहीर्षया तत्संग्राहकधर्मानुष्ठानमिति चेन्न, प्रपत्तिधर्मविपरीतानुष्ठानेन तन्निष्ठाकृत्स्नवैदिकवर्गसंग्रहासिद्ध्या संग्राह्यतमपरानर्थपरत्वेन परमनैर्घृण्यप्रसङ्गात्। स्वरूपतः पुरुषार्थतया रागवशात्तदनुष्ठानमिति चेन्न, तथाविधरागसंभवे भक्त्यधिकारितया * न भक्तिमांस्त्वच्चरणारविन्दे इत्युक्ताधि-कारविरोधप्रसङ्गात्, अल्पशो रागप्राप्तस्यापि निषिद्धस्यानुष्ठानायोगाच्च। ननु धर्मो हि धृतिसाधनम्—श्रेयःसाधनमित्यर्थः। ततश्च धर्माणां त्यागोऽत्र श्रेयःसाधनत्वत्याग इति चेन्न, अन्यस्वभावस्यान्येन त्यक्तुमशक्यत्वात्, नित्यत्यक्तत्वेन वा त्यागविध्यनुपपत्तेः। तद्बुद्धित्यागोऽत्राभिमत इति चेन्न, लक्षणाप्रसङ्गात्। * न विधौ परः शब्दार्थः इति न्यायविदः। यथावस्थितवस्तुवेदिनस्तद्बुद्धेरपि परित्यक्तुमशक्यत्वाच्च। स्वापेक्षया श्रेयःसाधनत्वबुद्धित्यागोऽत्र विवक्षित इति चेत्, किमसौ क्रियमाणेषु धर्मेषु, उत अक्रियमाणेषु? पूर्वत्र, सर्वप्रकारश्रेयःसाधनत्वबुद्धिनिषेधे भ्रान्तत्वप्रसङ्गः, तेषामेव धर्माणां स्वरूपेणानुष्ठेयत्वस्यावर्जनीयत्वेन यत्रकुत्रचित् श्रेयसि पर्यवसानात् तद्बुद्ध्यभावे चाननुष्ठेयत्वप्रसङ्गात्। आहुश्च— * प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति। ईश्वरप्रीत्यै तत्पारतन्त्र्यादिमात्रचिन्तने तु कर्मयोगाद्यनतिरेकः। उत्तरत्र, स्वरूपेऽपि परित्यक्ते प्रसङ्गाभावेन निष्प्रयोजनस्तदुपायताबुद्धिनिषेधः स्यात्॥

किंच, अत्र त्यागः प्रपदनं चेति द्वयविधानाद्वाक्यभेदः स्यात्। न चासौ युक्तः, * संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते इति न्यायात्। विशिष्टविधिरस्त्विति चेन्न, तस्यापि गत्यभावविषयत्वात्, अकिंचनतयाऽभिमते-ऽधिकारिणि त्यागविधिवैयर्थ्याच्च। न ह्यशक्तं प्रति निषेधापेक्षा। शक्तं प्रति[तु]निषेधे धर्माणामधर्मत्वप्रसङ्गः। नचाश्रम-भेदेन तत्तद्धर्मनिषेधवदिति वाच्यम्, तत्रान्यस्य निषिद्धानामन्यैरनुष्ठानसंभवात्; इह तु मोक्षोपायानां मुमुक्षोरेव निषेधे अधिकार्यन्तरासिद्धेः। नच मुमुक्षुविशेषमधिकृत्य निषेधः, तद्विशेषादृष्टेः। न च प्रपदनप्रतिपत्तिमात्रं विशेषः, तथा सति * विकल्पोऽविशिष्टफलत्वादिति न्यायेनैव विद्यान्तरत्यागसिद्धौ तद्विधिनैरपेक्ष्यात्। न च स्वरूपयाथात्म्यज्ञानवत्त्वं विशेषः, परोक्षस्य तस्य कर्मयोगादिनिष्ठेष्वपि सिद्धत्वात्, अपरोक्षस्य प्रपित्सावप्यसिद्धेः; सिद्धावपि वा * नचात्मवेदी-त्यादिकथितकार्पण्यविशेषणवैकल्यप्रसङ्गात्॥

अनुवादपक्षेऽपि प्रागुक्तनयेन निःशेषपरित्यागानुवादो न शक्यः। कतिपयविवक्षायां तु नियामकनिर्मुक्तः सर्व-शब्दः परिपन्थी। परित्यागोऽनूद्यमानश्चात्र गत्यन्तरासंभवात् लशुनभक्षणादिवन्निमित्ततां गाहेत, न पुनरङ्गताम्।

तथा सति प्रपत्तेर्धर्मपरित्यागरूपपापप्रायश्चित्तत्वमात्रसिद्धेर्मोक्षसाधनत्वासिद्धिः। नात्र त्यागमात्रमनूद्यते, अपि त्वशक्तिः। ततश्चावगाहनाद्यशक्तस्याग्नेयादिस्नानविधिवद्भक्तियोगाद्यशक्तस्य प्रपदनविधानमिति चेन्न, अशक्तेरशाब्दत्वेन लाक्षणिकत्वप्रसङ्गात्, अशक्तिलक्षणालिङ्गासिद्धेश्च। तथा च प्रपत्तेरमुख्योपायत्वप्रसङ्गः। त्यागश्च इतिकर्तव्यता न स्यात्॥

किंच, विधिपक्षे अनुवादपक्षेऽप्यभावरूपाणां केषांचिद्धर्माणां परित्यागस्यावश्यंभावात्, तत्त्यागस्य च प्रतियोगिभावानुष्ठानात्मकत्वेन निषिद्धानुष्ठानप्रसङ्गो दुष्परिहरः। अभावरूपाणामहिंसादीनां न धर्मत्वम्, अपि तु पापाभावमात्रत्वमिति चेन्न, तेषामेव नियमसहकृतानां धर्मत्वात्। अतो विहिताननुष्ठानं निषिद्धानुष्ठानं चावश्यंभावीति स्वैरदोषो दुष्परिहरः। ये पुनः सर्वशब्दधर्मशब्दयोः संकोचमनुमत्य धर्मशब्दः प्रस्तुतमोक्षोपायमात्रपर इति वर्णयन्ति, तन्मतेऽपि स्वैरदोषो दुष्परिहर एव, अङ्गिपरित्यागे अङ्गानुष्ठानस्य प्रयोजनाभावात्। स्वतन्त्राधिकारात्तदनुष्ठानमिति चेन्न, मोक्षाभिलाषिणि फलान्तरसाधनत्ववेषेण स्वातन्त्र्यासिद्धेः, नित्यनैमित्तिकत्वमात्रेण स्वातन्त्र्यसंभवेऽपि कर्मान्तराधिकारापादकत्वमात्रेण परित्यक्तधर्मान्तरस्य तदनुपयोगात्, प्रपत्तिस्वरूपस्य तु धर्मस्य सकृदेव निष्पन्नत्वेन तदुत्तरभाविनां तादर्थ्यायोगात्। न चारादुपकारकत्वम्, अनभ्युपगमात्। अभ्युपगमे च प्रपदनानन्तरं मुच्यमानशरीरस्य पुरुषस्य उपायवैकल्यप्रसङ्गात्। न च जीवति तत्सापेक्षम्, अन्यत्र नेति नियामकमस्ति। अत एव न प्रतिबन्धकनिवर्तकत्वम्, प्रपत्तिरूपपरमधर्मस्य सर्वप्रतिबन्धकनिवर्तकत्वेनाभिमतस्य प्रतिबन्धान्तरासंभवाच्च। एतेन प्रत्यवायपरिहारार्थत्वमपि गतम्। न च प्रपत्त्यङ्गभूतानुकूल्यसंकल्पप्रातिकूल्यवर्जनविधिबलात् स्वैरपरित्यागः, *आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता इत्यादिना तत्रैव तयोरर्थान्तरतया व्याख्यानात्। न च स्वेच्छामात्रेण नित्याद्यनुष्ठानम्, अव्यवस्थितिप्रसङ्गात्। नापि वासनावशात्, काम्यनिषिद्धयोरपि प्रसङ्गात्। न च ईश्वराज्ञानुवर्तनव्यसनेन, त्याज्यतयोक्ते तदाज्ञाया एवासिद्धेः॥

अस्तु स्वैरप्रसङ्गः। तथाऽपि प्रामाणिकानां यथाश्रुतस्वीकारे सर्वधर्मपरित्यागपूर्वकप्रपदनविधिरपरिहार्यः। कति कति दृश्यन्ते कर्मब्रह्मकाण्डयोः अन्यत्रात्यन्तनिषिद्धानामप्यनुप्रवेशमनुमन्यमानाः शास्त्रार्थभेदा इति चेन्न, तद्वदङ्गत्वेन विधानाभावात्, *सर्वधर्मान्परित्यज्येत्यस्याद्यापि संदिग्धार्थकतया सर्वोपप्लावकार्थपरत्वनिर्णयसाहसायोगात्, सर्वाविरुद्धस्य चार्थस्य वक्ष्यमाणत्वात्। *अपि चेत्सुदुराचारः इत्यादिकमप्यस्तीति चेन्न, अनन्यभजनप्राशस्त्यपरत्वात्, *क्षिप्रं भवति धर्मात्मा इत्यनन्तरमेवाभिहितत्वाच्च।

*दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा। समाश्रयेदादिदेवं श्रद्धया शरणं यदि॥
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः॥

इति स्मर्यत इति चेन्न, पुराकृतविषयत्वकण्ठोक्तेः। राजकुमारापराधवत्, वानरगणमधुवनभङ्गवत्, तपनसुतताराभोगादिवच्च प्रपन्नापराधानां क्षन्तव्यत्वमिति चेन्न; प्रतिदृष्टान्तसमजातित्वप्रसङ्गात्, हेतुसद्भावाभिमानेऽपि वचनविरोधे न्यायानवतारात्। श्रूयते च—*नाविरतो दुश्चरितादित्यादि। इदं च **शतदूषण्याम**लेपकभङ्गे प्रपञ्चितमस्माभिः। उपासनविषयतया इयं श्रुतिर्व्यवस्थाप्येति चेन्न, *प्रज्ञानेनैनमाप्नुयादिति प्राप्तिहेतुभूतज्ञानमात्रस्य प्रज्ञानशब्देनोपादानात्। न च *नाशान्तो नासमाहितः इति शमादिसमभिव्याहाराद्विशेषविषयता, शमादिरहितस्य मोक्षोपायस्याप्यसिद्धेः। उक्तं च **यानसन्धौ** संजयेन—*अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिरिति। एतेन उत्पन्नज्ञानस्य किं ज्ञानार्थैः शमादिभिरित्यपि निरस्तम्। अत एव *तेषां तेजोविशेषेण प्रत्यवायो न विद्यते इति न्यायस्यात्रानवतारः। *दृष्टो धर्मव्यतिक्रमः,

साहसं च पूर्वेषाम्, तेषां तेजोविशेषेण प्रत्यवायो न विद्यते; तदन्वीक्ष्य प्रयुञ्जानः सीदत्यवरः—इति तत्रैवोच्यते। अतस्त्वदभिमतयोजनायां धर्मशब्दस्य धर्मसामान्यविषयत्वे भक्तियोगादिविशेषविषयत्वेऽपि स्वैरदोषो दुष्परिहरः ॥

किंच, प्रपदनरूपं ज्ञानं स्मृतिरूपम्, अनुभवरूपं वा? नाद्यः, सकृदसकृद्विकल्पानुपपत्तेः। सातिशयश्रवणमनन-समाहितसंस्कारसमुन्मेषसंभावितत्वेन सकृत्स्मृतेरविधेयत्वप्रसङ्गात्। अत एव न सारस्वतस्रोतःसमानच्छिदुरस्मृतिसंततेरपि विधेयत्वम्। तैलधारावदविच्छिन्नस्मृतिसंततिरूपत्वे तु ध्यानरूपतया भजनसीमानतिलङ्घनप्रसङ्गः। नापि द्वितीयः, अलौकिकार्थविषयत्वेनार्वाचीनप्रत्यक्षादिफलत्वायोगात्, शास्त्रफलत्वे तु अविधेयज्ञानवादप्रसङ्गात्, योगपरिकर्मितस्वान्त-जन्यत्वे भक्तिकुक्षिनिक्षेपात्, करणनिरपेक्षस्य स्वात्मस्वरूपमात्रातिरिक्तप्रकाशस्य संसारदशायामसिद्धेः ॥

अपि च, गुरुलघुविकल्पानुपपत्तेर्नात्र लघूपायसंभवः। यदि लघुतरेणोपायेनापवर्गः समासाद्येत, कः खलु दीर्घ-कालनैरन्तर्यादरसेवनीये निरन्तरान्तरायसंतते नितरां दुर्व्यसनशालिनि प्रवृत्तिलक्षणे धर्मे नयनाञ्चलं चालयेत्? ज्योतिष्टो-माग्निहोत्रादिषु गुरुलघुषु स्वर्गाद्येकफलसाधनेष्वपि साध्यस्वर्गाद्यवान्तरभेदोऽस्त्येव। लौकिककृषिवाणिज्यादिधनसाधन-विकल्पोऽपि लोकसिद्धाधिका[रि]रभेदनियतः। अत्रापि लघूपायस्य अज्ञातत्वात्, तत्परिज्ञानेऽप्यविश्वासात्, विश्वासेऽपि दुर्निर्वहनिर्वहणगर्वेण वा गुरूपायपरिग्रह इति चेन्न; अज्ञतयाऽपि प्रपत्तिमभ्यस्यतां श्रुतसकलशास्त्राणामुपासकानां शास्त्र-काराणां च व्यासादीनां तदज्ञत्वासंभवात्। न च ज्ञातेऽपि तेषामविश्वासः संभवति, शास्त्रप्रामाण्यस्य सुदृढनिरूढत्वात्; अन्यथा भजनादावप्यनाश्वासप्रसङ्गात्। निर्णीतशास्त्रप्रामाण्यस्याप्यर्थविशेषेषु संशयो दृष्ट इति चेत्, सत्यम्; स तु यदा निर्णयपर्यन्तो भवति, तदा निरर्थकमेव गुरूपायविधानं स्यात्। निर्णयासमर्थं प्रत्यस्तु भजनशास्त्रमिति चेन्न, बहुतराङ्गोपाङ्गनिबिडभजनशास्त्रनिरूपणसमर्थस्य कियदिदं प्रादेशमात्रपरिमितैकवाक्यनिरूपणम्। यदि चोपासकः प्रपत्तावनाश्वस्तः, स कथमङ्गप्रपत्तिमाददीत? स्वातन्त्र्यमात्रे तस्यानाश्वास इति चेन्न, तत्प्रभावस्याङ्गतावस्थायामेव विदितत्वात् सर्वधर्मस्थाननिवेशेन समस्ताभिमतसाधनत्वे निश्चिते विषयव्याप्तेरविरोधात्। गुरूपायनैरर्थक्यप्रसङ्गादेव लघुतरे तस्मिन्न विस्रम्भ इति चेत्, हन्त तर्हि त्वमेवास्मदभिमतं ब्रवीषि। एवं सर्वेषामप्यविस्रम्भ एवेति न स्वतन्त्र-प्रपत्तिसिद्धिः। तत्सिद्धौ वा गुरूपायान्तरविध्यनुपपत्तिरिति। न च तद्विश्वासेऽपि दुर्निर्वहनिर्वहणगर्वः शमदमादि-शालिनां मुमुक्षूणां संभवति। स्वरूपानुरूपत्ववेदिनां प्रपत्तिः, इतरेषां भजनमिति व्यवस्थेति चेन्न, व्यासादीनां तद-ज्ञानासंभवस्योक्तत्वात्, इतरेषां तदज्ञानेऽपि लघुत्वमात्रेण शीघ्रं तदेकपरिग्रहस्य दुर्वारत्वात् ॥

श्लो. प्रतिबुद्धस्वरूपस्य विरुद्धा भक्तिरित्यपि। व्यासादिगुरुविद्विष्टं श्रोतुं न वयमीश्महे ॥ ३ ॥
अधिकारविरोधाच्चेत्स्यात्स्वरूपविरुद्धता। तुल्यं भक्तिप्रपत्त्योस्तद्वैशिष्ट्यादधिकारयोः ॥ ४ ॥

अतो न भक्तेः स्वरूपानुरूपत्वाभावः; स्वरूपप्राप्तिहेतुतयैव तद्विधानात्, समस्तोपाधिविनिर्मोक्षदशायामपि स्वरूपवत्तदनु-वृत्तेः। तथा च पठ्यते काश्मीरपुरनिवासिभिः—

* मोक्षोपायस्य किं रूपं भक्तिरित्यक्षरद्वयम्। अथ मोक्षस्य किं रूपं भक्तिरित्यक्षरद्वयम् ॥ इति।

इतरथा प्रपत्त्या नित्यकैंकर्यप्रार्थनस्याप्ययोगात्। स्तनंधयवत्सलान्यायेन संबन्धादेव रक्षति भगवति स्तन्यार्थभृतिप्रदानवत् स्वरूपानुचितमुपायान्तरमिति चेन्न; प्रपत्त्यन्तर्गतगोप्तृत्ववरणादेरप्यनुचितत्वप्रसङ्गात्। संबन्धज्ञानरक्षकत्वविश्वासाति-रिक्तं तत्राप्यनुचितत्वादुपेक्षणीयमिति चेन्न,

श्लो. संबन्धादेव गोप्ता चेत्तज्ज्ञानाद्यनपेक्षणम् । तच्चेच्छास्त्रादपेक्ष्येत तुल्यं तत्प्रार्थनादिषु ॥ ५ ॥

अकर्तुः कर्तृत्वाभ्युपगमो विरुद्ध इति चेन्न, कैंकर्यकर्तृत्वस्याप्यभिमतस्य स्वरूपविरुद्धत्वप्रसङ्गात् । न च ईश्वरपरतन्त्रस्याप्यात्मनः सांख्यवदकर्तृत्वं स्वभावमिच्छामः, * कर्ता शास्त्रार्थवत्त्वादित्यादिभिस्सूत्रैस्तत्प्रतिक्षेपात् । भगवद्गीतायामपि चरमाध्याय एव शोधितमकर्तृत्वानुसंधानस्य स्वरूपम् * पञ्चैतानीत्यादिभिः श्लोकैः । अत्यन्ताकर्तृत्वाभ्युपगमे तु प्रपदनेऽपि कर्तृत्वं न स्यादिति तस्यापि स्वरूपविरुद्धत्वप्रसङ्गः । एतेन तत्त्वज्ञानवतोऽध्यवसायमात्रेण विशेषितस्य नित्यदयाविशिष्टो भगवानुपाय इति कर्तृत्वापह्नवप्रत्याशा निरस्ता, तत्रापि तत्त्वज्ञानाध्यवसायकर्तृत्वस्य दुर्वारत्वादिति ॥ तदयं संग्रहः—श्लो. संबन्धज्ञानविश्वासकैंकर्यादिषु कर्तृता । स्वरूपस्याविरुद्धा चेद्भक्त्यादौ कोऽयमाग्रहः ॥ ६ ॥ इति ॥

अस्तु तर्हि शक्ताशक्ताधिकारभेदेन विषयव्यवस्था, अवगाहनस्नानाशक्तस्याग्नेयस्नानादिवदिति चेन्न, अमुख्यत्वप्रसङ्गस्य प्रागेवोक्तत्वात् । कीदृशीं चाशक्तिमालम्ब्येयं व्यवस्था, किमुपासनस्वरूपासामर्थ्यात्मिकाम्, उत साक्षात्परंपरया वा तन्निर्वर्तककर्माद्यसामर्थ्यात्मिका[मि]मपीति? नाद्यः, कर्मयोगादिमरुकान्तारपान्थताप्रहाणप्रसङ्गात् । न द्वितीयः, तादृशाशक्तेस्तिर्यक्स्थावरादिव्यतिरिक्तेषु सर्वेष्वपि पुरुषेष्वसंभावितत्वात् । सन्ति हि स्मृतिसंकीर्तनप्रणामादयो बहवः परमीषत्कराः सुकरतमाः परंपरया तद्धेतवः । यथाह भगवान्पराशरः—* आयासः स्मरणे कोऽस्येति । तथाह शौनकः—* कोऽतिभारो हरेर्नाम्नि इति । * अञ्जलिः परमा मुद्रा इत्यादिकं द्रष्टव्यम् । अन्यथा प्रपदनेऽप्यनधिकारापातः; अविशेषात्, तस्यापि * मामेव ये प्रपद्यन्ते इत्यादिना परंपरया तन्निर्वर्तकत्वस्यावश्याभ्युपगम्यत्वाच्च ।

प्रारब्धभोगोन्मुखो भक्तावधिकारी, तद्विमुखः प्रपत्ताविति चेन्न, प्रारब्धभोगौन्मुख्यस्य प्रपन्नानामपि संभवात्, अविरोधाच्च । प्रारब्धभोगेऽपि दुःखभावनया तत्रापि विमुखानां प्रपदनाधिकार इति चेन्न, प्रारब्धबलादेवात्यन्तवैमुख्यस्यासंभावितत्वात्, ईषद्वैमुख्यस्य उपासकेष्वपि विद्यमानत्वात् । अत एव प्रारब्धनिवृत्तिकाङ्क्षिणां प्रपत्त्यधिकार इत्यपि निरस्तम् । अन्यथा सर्वस्वारादिवत् सर्वेषां प्रपन्नानां तत्क्षणविनिपातप्रसङ्गात् । शरीरान्तरोत्पत्तिमनिच्छतां तदधिकार इति चेत्; किं तत्र दुःखैकरूपत्वनिर्णयात्, उत तत्संदेहेऽपि? नाद्यः, प्रमाणाभावात् । न द्वितीयः, वर्तमानशरीरानुवृत्तावप्यनिच्छाप्रसङ्गात् । अस्ति साऽपि केषांचिदार्तानामिति चेन्न, सर्वेषां प्रसङ्गात् । वर्तमानशरीरे दुःखैकान्त्यानिर्णयात् भ्रमाद्वा तदनुवृत्तिक्षमत्वमिति चेन्न, वर्तिष्यमाणेऽपि तत्संभवात् । अत एवार्तदृप्तविभागोऽपि प्रत्युक्तः । कर्मवैचित्र्यात्सर्वमप्युपपद्यत इति चेत्, किमिदमविचारितचित्रं कर्मवैचित्र्यम्? तथा सति किमपराद्धम् * दुर्घटत्वमविद्याया[म्] भूषणं न तु दूषणमित्यादिवादिभिः समन्तभद्रसमयसामन्तैः?

अस्तु तर्हि गौरवलाघवसाम्यात् तुल्यविकल्प इति चेन्न, प्रपदने ज्ञानकर्माङ्गकत्वावृत्तिरूपत्वाप्रयाणानुवर्तनीयत्वादिगौरवे भक्त्यनतिरेकात्, भक्तौ च तदभावलक्षणे लाघवे त्वदभिमतप्रपत्त्यनतिरेकात्, [द्वा]ताभ्यां तु साम्ये विरुद्धधर्माध्यासेन द्वयोरपि स्वरूपोच्छेदप्रसङ्गात् । मुखभेदेन उभयमप्यविरुद्धमिति चेत्, कथम्? विश्वासातिरेकात्प्रपदने गौरवम्, आयासाभावात्तु लाघवम्; भक्तौ तु आयासभूयस्तया गौरवम्, विश्वासमान्द्यात्तु लाघवमिति चेन्न, उक्तोत्तरत्वात् । न हि निर्णीततत्त्वानामविश्वासः ॥

श्लो. विश्वासायासभूम्ना च विकल्पं तुल्यमिच्छताम् । व्यवस्थितविकल्पोऽयं भवेत्सूक्ष्मनिरूपणे ॥ ७ ॥

स च दूषितः । अतो व्यवस्थितत्वेनाव्यवस्थितत्वेन वा विकल्पासंभवान्नैकफलसाधनत्वम् । त्वदुक्तप्रपत्तौ प्रारब्धस्यापि

भङ्गात्फलमधिकमिति च सा कथमेकस्मिन्नधिकारिणि प्रारब्धनिवर्तनाक्षमभजनसमानतया विकल्प्येत? ननु प्रारब्धनिवर्तनेन देहान्तरविघातित्वं भक्तियोगेऽप्यस्ति ; यथा—

* जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥

इति विहितावताररहस्यचिन्तनवत इति चेन्न, क्रतुवीर्यवत्तरत्वलक्षणफलान्तरसाधनोद्गीथोपासनवत्पृथगधिकारत्वादवताररहस्यचिन्तनस्य; अन्यथाऽङ्गत्वेन नियतत्वे सर्वेषामुपासकानां पुनर्भवाभावेन विलम्बिताविलम्बितफलत्वलक्षणवैषम्यं भक्तिप्रपत्त्योर्न स्यात्। अस्तु तर्हि प्रपत्तावपि न प्रारब्धभङ्गः। ततश्च फलानतिरेकाद्विकल्पसंभवः। अत एव * विकल्पोऽविशिष्टफलत्वादिति सूत्रमुपासनावान्तरभेदवन्न्यासोपासनभेदमपि विषयीकरोतीति चेत्, अस्त्वेवं फलवैषम्याभावः। तथाऽपि स्वरूपे तस्यानिवार्यत्वाद्विकल्पासंभव एव। तदेवं स्वरूपानुपपत्तेर्नास्ति भक्तिव्यतिरिक्तो मोक्षोपाय इति ॥

**लक्षणानुपपत्तिसमर्थनम्** ॥ लक्षणानुपपत्तेश्च। तथा हि—* अनन्यसाध्ये इत्यादिना प्रपत्तिः शरणागतिरित्यनर्थान्तरमिष्यते। तथा च पठ्यते—

* निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः। संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥ इति।

ततश्च प्रपत्तिलक्षणं शरणागतिशब्दप्रयोगविषयसर्वोदाहरणनिष्ठमनितरनिष्ठं च प्रतिष्ठाप्यम्। तथा च दृश्यते—

* अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः ॥

इति सामान्यलक्षणमिति चेन्न, अव्याप्तेः, कपोतोपाख्याने तदभावात्। * श्रूयते हि कपोतेन शत्रुः शरणमागतः इत्यादिभिः शरणशब्दवाच्यगृहोपलक्षितसमीपागमनमात्रमेव प्रतीयते। न तत्र मुख्या शरणागतिरिति चेन्न, शरणागतसंरक्षणनिदर्शनतया शरण्यादिभिर्निर्दिश्यमानप्रसिद्धोदाहरणस्याप्यमुख्यत्वे मुख्यस्यैवासिद्धिप्रसङ्गात्। गृहागतो न परित्याज्य इति स्फुटोक्तिनिदर्शनाच्छरणागतिस्तत्रापि कल्प्यत इति चेन्न, तत्र तथाविधलिङ्गाभावात्। समीपागतस्य परिक्लिष्टस्य परिक्लेशादेव रक्षोपायसाकाङ्क्षत्वं कल्प्यत इति चेत्, किं रक्षणेच्छामात्रं शरणागतिः? हन्त तर्हि तापत्रयाभिहताः संसारिणस्तन्निवृत्तिसाकाङ्क्षाः संनिहिताश्च रक्षितुर्व्याप्तस्य सर्वेश्वरस्येति सर्वेऽपि जन्तवः शरणागता इति सर्वेषां सर्वदुःखोच्छेदप्रसङ्गः। महाविश्वासोपायत्वप्रार्थनादिनैरर्थक्यप्रसङ्गश्च। कपोतं प्रत्यश्रुताऽपि बाधकाभावात्किरातस्याप्यपेक्षापर्याययाच्ञा कल्प्यत इति चेन्न, तिर्यङ्मात्रतया प्रतिपन्ने कपोतेऽनुन्मत्तस्य तथाविधप्रतिकूलतमस्वरक्षणज्ञानशक्तीच्छासंभावनासंभवेन प्रार्थनारूपबुद्धिविशेषकल्पनस्य बाधितत्वात्।

एवं गोप्तृत्ववरणेऽप्यव्याप्तिः—* राघवं शरणं गतः इत्यादिषु गोप्तृत्ववरणमेव ह्यौचित्यादवसीयते—

* अभियाचाम वैदेहीमेतद्धि मम रोचते। अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥

इत्यादिभिश्चेदमवगम्यते। तदर्थतत्त्ववेदिभिश्चोक्तम्—* मातर्मैथिलि राक्षसीस्त्वयि तथैवार्द्रापराधास्त्वया रक्षन्त्या इत्यादि। दूरगतद्रौपदीप्रपदनमपि * रक्ष मां शरणागतामित्येवंरूपमेव प्रसिद्धम्।

अस्तु तर्हि गोप्तृत्ववरणमेवोपायतायाच्ञाशब्देन विवक्षितमिति चेन्न,

* उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम्। वर्तते सांप्रतं त्वेष उपायार्थैकवाचकः ॥

इति वचनविरोधात्। तर्हि तदविरोधाय सर्वत्रोपायार्थत्वमात्रं निष्कृष्यत इति चेन्न,

* आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा ॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥

इति स्फुटप्रतिपन्नरक्षितृत्ववरणस्य दुरपह्नवत्वात् । यदि च विरोधभयादैकार्थ्यं कल्प्यते, तदा विशदार्थगोप्तृत्ववचनविरोधाद्भगवति च गोप्तृत्वातिरिक्तोपायत्वस्य दुर्निरूपत्वादुपायप्रार्थनाशब्दोऽपि रक्षापेक्षापरपर्याय एव कल्पयितुं युक्तः । अस्त्वेवमिति चेन्न, रक्षितृत्वुदासेन * सांप्रतं त्वेष उपायार्थैकवाचकः इति निष्कर्षविरोधादेव । अत्यन्तव्याहतावन्यतरपरित्यागेनार्थव्यवस्थाऽस्त्विति चेन्न; किं परित्याज्यम्, किं वा परिग्राह्यमिति नियामकाभावेनोभयपरित्यागप्रसङ्गात् । तथा च सति कृतं व्यसनेन ॥

नन्वनिष्टनिवर्तकत्वापेक्षया गोप्तृत्ववरणम्, इष्टप्रापकत्वापेक्षयोपायत्ववाचोयुक्तिः । उभयसाधारणं तु स्वरूपमपेक्षितप्रदातृत्वमात्रम्, इष्टप्राप्तेरनिष्टनिवृत्तेश्चापेक्षितत्वाविशेषात् । तथा च शिष्यानुयुक्तस्य भगवतो भाष्यकारस्यानुशासनमिति संप्रदाया[नु]गतम्—* प्रपत्तिः—विश्वासः, सकृत्प्रार्थनामात्रेणापेक्षितं दास्यतीति विश्वासपूर्वकं प्रार्थनमिति यावदिति । तथा च स्तुतिव्याजेनानुसंदधे—* नित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिंकरतां प्रार्थये इति; अतो न विरोध इति; तदपि न, *सांप्रतं त्वेष उपायार्थैकवाचकः इति प्रागुक्तविरोधादेव । इष्टप्रापकत्वलक्षणोदाहरणविशेषापेक्षयेदं वचनमिति चेन्न; मोक्षार्थप्रकरणादनिष्टनिवृत्तेरपि तत्रावश्यंभावित्वात् * उपायार्थैकवाचकः इति निष्कर्षायुक्तेः ॥

किं च, * आनुकूल्यस्य संकल्पः इत्यादिकं किं प्रपत्तिविभागोद्देशपरम्, उत लक्षणपरम्, यद्वा प्रकारमात्रप्रतिपादनपरमिति? न प्रथमः, षण्णां साधारणस्य लक्षणस्यादृष्टेः । न द्वितीयः, एकानेकविकल्पानुपपत्तेः । न ह्येतदेकं लक्षणम्, प्रतिपदं व्यवच्छेद्यासिद्धेः; अन्यथा * अनन्यसाध्ये इत्यादेरपूर्णत्वप्रसङ्गात् । अस्त्विदमपूर्ण[त्व]मिति चेन्न; तस्मिन् प्रकरणे—

* अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥
शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम् ॥

इति तस्यै[क]व लक्षणत्वेन निर्देशात् । तदप्येकदेशतयाऽशेषोपलक्षणमिति चेन्न; नियामकाभावात् । प्रत्युत विशेषणान्तरव्यवच्छेद्यासिद्धिश्च प्रागेवोक्ता । नाप्यनेकं लक्षणम्, सर्वेषां यथायथमव्याप्त्यादिदोषात् । नापि तृतीयः, तथा हि—किमिदं प्रकारप्रतिपादनं प्रयाजादिवदङ्गतया व्यापकत्वेन, यद्वा आग्नेयादिषट्कवत्करणभूतसमुदायैकदेशनिष्कर्षात्मना, उत व्यापकत्वपरस्परव्यभिचारित्वाभ्यां संभावनामात्रेणेति? आद्ये नैरपेक्ष्यवादविरोधः, प्रातिकूल्यवर्जनादिना भक्तेरिव दुष्करत्वम्, षडतिरिक्ताङ्ग्यसिद्धिश्च । अङ्गपञ्चकेन अङ्गिना च षाड्विध्यमिदमिति चेत्, किमत्र प्रमाणम्? उक्तानुपपत्तिरिति चेन्न; कस्याङ्गित्वम्, केषामङ्गत्वमिति विवेचकाभावात् ॥

* निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥

इति वचनमेवास्तीति चेन्न, प्रार्थनायाः शरणागतित्वं वदद्भिरनेकैर्विरोधात् । अङ्गभूतायामपि तस्यामङ्गित्वव्यपदेश औपचारिक एवेति चेन्न, न्यासेऽपि तथा प्रसङ्गात् । अन्यतरस्य तर्हि अङ्गित्वमस्त्विति चेत्, तत्किमेकस्यात्यन्तप्रतिक्षेपेण, उत * उदिते जुहोति, * अनुदिते जुहोती[तिवत् व्यवस्थितविकल्पा]ति व्यवस्थितविकल्पवदुभयोर्व्यवस्थापनया? यद्वा * व्रीहिभिर्यजेत, *यवैर्वा यजेतेतिवद्यथारुचि प्राधान्यकल्पनेनेति? नाद्यः, कस्य प्रतिक्षेप इति नियामकाभावेनानिर्णयात् ।

न द्वितीयः, व्यवस्थापकाभावात् । न तृतीयः, वाकाराद्यभावे गत्यन्तरे च सति प्रयोगद्वयफलितप्रतिपत्त्यनुष्ठानापूर्वफलबाधयुगलेन वा, प्रयोगत्रयफलितप्रामाण्यत्यागाप्रामाण्यस्वीकारत्यक्तप्रामाण्यस्वीकारस्वीकृताप्रामाण्यपरित्यागयुगलेन वा प्रसिद्धाष्टदोषविकल्पस्वीकारानुपपत्तेः । समुदायैकदेशनिष्कर्षपक्षस्त्वङ्गाङ्गिभाववचनान्तरविरुद्धः । यस्तु संभावनामात्रपक्षः, सोऽपि निष्प्रयोजनोपदेशतयाऽतिमन्दः; *षड्विधा शरणागतिः, *न्यासः पञ्चाङ्गसंयुतः इति वचनाक्षरवैघट्याच्च । तदयं संग्रहः—श्लो. अतिप्रसङ्गादङ्गाङ्गिनियमात्षड्विधोक्तितः । संभावितत्वं नैतेषां तर्कमात्राव्यवस्थितेः ॥ ८ ॥

ननु किमनेन लक्षणक्षो[देन]भेण ? श्रुतिस्मृतिलोकेषु बहुशः प्रयुज्यमानः प्रपत्तिशब्दस्तावन्न निरर्थको भवितुमर्हतीति चेत्, सत्यम्, वक्ष्यमाणप्रकारेणानन्यभजनमात्रेण चरितार्थोऽसौ न त्वदभिमतार्थपर इत्येतावदेवाभिदध्महे ॥

तदेवं त्वदुक्तप्रपत्तेर्लक्षणाभावेन प्रतिपत्तुमशक्यत्वात्, अप्रतिपन्नस्य दुरनुष्ठानत्वाच्च न तद्विधेरपि संभवः ॥

**अनुष्ठानानुपपत्तिः** ॥ अनुष्ठानदर्शनाभावाच्च । तथा हि—यद्यपि ये केचिदर्वाचीना विमन्यमानमप्यनुतिष्ठन्तो दृश्यन्ते, तथाऽपि प्राचीनेषु महत्तरजनेषु न कश्चित्प्रपत्तिमात्रेण मुक्त इति श्रुतिस्मृतीतिहासादिषु श्रूयते । भक्तियोगादिभिस्तु लब्धसिद्धयः कतिकति कथ्यन्ते । सन्ति हि विभीषणद्रौपदीप्रभृतय इति चेन्न, तेषामपि सांसारिकफलविशेषमात्रसिद्धेः ।

*धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्ताः संसिद्धिं श्रमणी यथा ॥

इति भक्तियोगानधिकारिणामपि मुक्तिः श्रूयत इति चेन्न; *पूर्वाभ्यासादिति तेषामप्युपासकत्वश्रवणात् । क्षत्रबन्धुमुचुकुन्दादिषु का वार्तेति चेत्, भक्तियोगाधिरूढेषु तत्प्रकरणपठितार्तिविशेषशरणागतिशब्दादयो भक्तिनिष्ठत्वेऽपि न विरुध्यन्ते । भक्तिनिष्ठत्वानुक्त्या तदभावसिद्धिरिति चेन्न, तदभावानुक्त्या तत्सिद्धेरेव प्रसङ्गात् । तथाऽपि किमनन्तेषु शास्त्रार्थेषु प्रतिशास्त्रार्थमनुष्ठातारः कथ्यन्त इति चेन्न, प्रभूतफलोपायेषु प्रायशो दर्शनात् । किमत्र प्रायिकानुष्ठानदर्शनाग्रहेण, विधेरेवानुष्ठेयत्वे प्रमाणत्वादिति चेन्न, शिष्टानुष्ठानबहिष्कृतेषु शास्त्रार्थेषु तेष्वनाश्वासदर्शनात् । स्मरन्ति च—*अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु, इति ॥

**विध्यनुपपत्तिः** ॥ विध्यदृष्टेश्च । न हि प्रपद्येतेति [का]काऽपि चोदना दरीदृश्यते । प्रपत्तिस्वरूपं तु प्रति[दैवतं]वेदं शतशः श्रुतमिति चेत्, तथाऽपि विध्यभावस्यापरिहृतत्वात् । *यो ब्रह्माणमित्यारभ्य *शरणमहं प्रपद्ये इत्यन्तेन मोक्षसाधनतया प्रपत्तिः प्रतीयत इति चेन्न, तत्रापि विध्यभावादेव । ततो विधिकल्पनमस्त्विति चेन्न, मन्त्राणां विधिपरत्वे प्रमाणाभावात् । एतेन गर्भोपनिषदादिवाक्यान्यपि निरस्तानि । *तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीति विधिपरमेवेदं वाक्यमिति चेन्न, पालीवतक्रियाविशेषादिप्रतिपादनपरत्वात् । *विधिस्तु धारणेऽपूर्वत्वादिति न्यायेनात्रापि विधिरङ्गीकार्य इति चेन्न; तथाऽप्यत्र विधेः प्रपदनविषयत्वासिद्धेः; अपि तु प्रपन्नं न परित्यजेदिति प्रपन्नपरित्यागनिषेध एव सिध्यति । तत एवार्थात्प्रपत्तेरिष्टसाधनत्वसिद्धिरिति चेन्न; अतिथिं नावमन्येतेत्युक्तेऽप्यतिथित्वस्येष्टसाधनत्वनियमाभाववदत्रापि तन्नियमाभावात् । अनियमश्च, निषिद्धकारिषु प्रयुक्तायास्तस्यास्तदभावात् । ईश्वरस्तु रागद्वेषादिरहितत्वान्निषिद्धं न करोतीति चेन्न; ईश्वरत्वादेवास्य निषेधविधिकिंकरत्वाभावात्, सर्वेषां विधिनिषेधशास्त्राणां तदाज्ञारूपत्वात्, स्वस्य च स्वाज्ञावशंवदत्वायुक्तेः । शास्त्रवश्यत्वे च स्वस्ति सर्वेश्वरत्वाय । *ओमित्यात्मानं युञ्जीतेति साक्षाद्विधीयत इति

चेन्न; * युज समाधौ इति, * युजिर् योगे इति वा धातोर्निष्पन्नस्य युञ्जीतेत्यस्य पदस्य प्रपत्तिविधायकत्वासंभवात्। प्रकरणवशाद्विधेयस्य भावार्थस्य न्यासरूपत्वं सिद्धमिति चेत्, किमतः प्रस्तुतस्यायातम्?

* निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः। संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥

इति न्यासनिक्षेपसंन्यासत्यागशरणागतिशब्दाः पर्याया अहिर्बुध्न्यादिभिः स्मर्यन्त इति चेन्न; तत्रत्यपरिभाषयाऽप्येतत्प्रकरणस्थन्यासशब्दस्य प्रपदनवाचित्वे नियामकाभावात्। न ह्ययमेकान्ततस्तद्विषयः शब्दः,

* काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥

इत्यादिष्वर्थान्तरेष्वपि प्रयोगदर्शनात्। तथाऽपि युञ्जीतेति विहितयोगार्थवादरूपसमनन्तरानुवाकतात्पर्यावसितनैरपेक्ष्यापुनर्भवाभ्यां न्यासस्य प्रपदनरूपत्वं सिद्धमिति चेन्न, तथाविधं प्रपदनमित्यत्रैवार्थे प्रमाणाभावात्, भक्तावप्यवताररहस्यचिन्तनादिसहकारिवशादपुनर्भवदृष्टेः, समनन्तरानुवाकस्य च पुरुषविद्यापरत्वमात्रं स्वीकृत्यैव छान्दोग्यपुरषविद्यातो विद्याभेदस्य सूत्रितत्वात् * पुरुषविद्यायामपि चेतरेषामनाम्नानादिति। तत्र प्रस्तुतब्रह्मविद्याङ्गभूतपुरुषविद्यापरत्वं हि भाष्येऽप्युक्तम्। * वसुरण्यः इत्यादिको मन्त्रविशेषश्च तत्रत्यन्यासकरणतयोच्यते। गतिविशेषश्च चिन्तनार्थस्तत्रोपदिश्यते। तेनापि चात्र न्यासस्य साङ्गता। ततश्च अनङ्गतयाऽभ्युपेतात्प्रपदनात्साङ्गोऽयं न्यासापरनामधेयो योगोऽर्थान्तरमिति प्रकरणमेव परिकरतयोपात्तं प्रत्यनीकमायुष्मतः। अनङ्गतां तर्हि परित्यजाम इति चेत्, किं तर्हि न परित्यक्तम्? उपासनव्यतिरिक्तस्य न्यासस्य फलप्रदत्वमिति चेन्न, व्यतिरेकस्याद्यापि मनोरथमात्रप्रमाणकत्वात्; न तत्र द्वैरथं बध्नीमः। अस्तु तर्हि।

* सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

इति सर्वलोकशरण्यस्य भगवत एव वाक्यात्प्रपदनविधानसिद्धिरिति चेन्न, तत्रापि विधेरनुपलम्भात्—अभयप्राप्तिकामो मां प्रपद्येतेति। वाक्यतात्पर्यावसितमिदमिति चेन्न, रामगुणविशेषप्रतिपादनमात्रपरत्वाद्वाक्यस्य। तस्य तात्पर्यार्थभूतगुणविशेषपरत्वे तदुक्तेश्च श्रोतॄणां कर्तव्यविशेषोपदेशार्थत्वे श्रुतार्थापत्त्या प्रपत्तिसंपत्तिरिति चेन्न; तथाऽपि प्रपन्नो रामेण न परित्याज्यः, अतस्तद्वद्वर्तितव्यमित्येतावत एव सिद्धत्वेन प्रपदनस्य धर्मतया कर्तव्यत्वे प्रमाणाभावात्। प्रपन्नमसौ न परित्यजतीत्यपि सिद्धेरर्थात्सिद्धैव तत्प्रपत्तिकर्तव्यतेति चेत्, एवमपि परिगृहीतमानुषसंस्थानस्य क्षत्रधर्माभिनयव्यसनिनो भगवतस्तथाविधस्वभावनिर्णये तदातनानां तदीश्वरत्वमविदुषां तत्प्रपदनं सिध्येत्। ईश्वरयाथात्म्यविदां तु मुमुक्षूणामपवर्गाव्यवहितसाधनतया तत्प्रपदनकर्तव्यत्वे न किंचित्प्रमाणं सिद्धम्। तर्हि रामाद्यवतारेषु याथात्म्यवेदनरहितानामिदानीमपि समीहितसिद्धये तत्प्रपदनं स्यादिति चेन्न; मानुषभावनायामिदानीं तत्प्रपदनासंभवात्, यथाकथंचिद्देवतात्वभावनायामप्युक्तदोषानतिलङ्घनात्।

* स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥

स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः। अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥

इति गुणवत्तरत्वोपपादकतया भगवदवतारत्ववर्णनादीश्वरत्वाकारे[णा]ऽपि तथाविधगुणस्य परमार्थत्वात्तत्सिद्धिरिति चेत्, अस्त्वेवम्, दुर्बलस्य प्रबलावष्टम्भवदयमर्थः सिध्येत्, न च तावता भक्तिनिरपेक्षः सिध्यति, तद्द्वाराऽपि मोक्षप्रदाने भगवद्गुणानामक्षतत्वात्।

*मामेव ये प्रपद्यन्ते इत्याद्युक्तमायातरणार्थप्रपदनमपि भक्त्यर्थतयैव भाष्यकारैर्निर्णीतम्; अनुज्ञातं च भवद्भिः। अत एव *सर्वधर्मान् परित्यज्येत्यादिकमपि दत्तोत्तरम्। विध्यनुवादविकल्पानुपपत्त्यादयश्च प्रागेवोक्ताः। इदं च वाक्यं सात्त्विकराजसतामसभेदेन त्यागस्वरूपविवेचकाध्यायोपक्रमानुसारे [तु] कर्मयोगाद्यङ्गभूतबुद्धिविशेषविधिपरम्। *सर्वपापेभ्यो मोक्षयिष्यामीत्येतत्स्वारस्यानुसारे तु तत्तत्प्रतिपदोक्तप्रायश्चित्तप्रत्याम्नायतया तदशक्तानां प्रायश्चित्तविशेषविधिपरमिति भाष्यस्थयोजनाद्वयविदः। एवं हि तत्र भाष्यम्—*कर्मयोगज्ञानयोगभक्तियोगरूपान् सर्वान् धर्मान् परमनिःश्रेयससाधनभूतान्मदाराधनत्वेनातिमात्रप्रीत्या यथाधिकारं कुर्वाण एवोक्तरीत्या फलकर्मकर्तृत्वादिपरित्यागेन परित्यज्य, मामेकमेव कर्तारमाराध्यं प्राप्यमुपायं चानुसंधत्स्व। एष एव धर्माणां शास्त्रीयः परित्याग इति,

*निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥ इत्यारभ्य,

*सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥

इत्यध्यायादौ सुदृढमुपपादितम्। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि—एवं वर्तमानं त्वां मत्प्राप्तिविरोधिभ्योऽनादिकालसंचितानन्ताकृत्यकरणकृत्याकरणरूपेभ्यः सर्वपापेभ्यो मोक्षयिष्यामि। मा शुचः—शोकं मा कृथाः। अथवा, सर्वपापविनिर्मुक्तात्यन्तभगवत्प्रियपुरुषनिर्वर्त्यत्वाद्भक्तियोगस्य, तदारम्भविरोधिपापानामानन्त्यात्तत्प्रायश्चित्तरूपैर्धर्मैः परिमितकालकृतैस्तेषां दुस्तरतया आत्मनो भक्तियोगारम्भानर्हतामालोच्य शोचतोऽर्जुनस्य शोकमपनुदन् भगवानुवाच—*सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति। भक्तियोगारम्भविरोध्यनादिकालसंचितनानाविधानन्तपापानुगुणान् तत्प्रायश्चित्तरूपान् कृच्छ्रचान्द्रायणकूश्माण्डवैश्वानरव्रातपतिपवित्रेष्टित्रिवृदग्निष्टोमादिकान्नानाविधाननन्तांस्त्वया परिमितकालवर्तिना दुरनुष्ठानानान्सर्वान्धर्मान्परित्यज्य, भक्तियोगारम्भसिद्धये मामेकं परमकारुणिकमनालोचितविशेषाशेषलोकशरण्यमाश्रितवात्सल्यजलधिं शरणं प्रपद्यस्व। अहं त्वा सर्वपापेभ्यो यथोदितस्वरूपभक्त्यारम्भविरोधिभ्यः सर्वेभ्यः पापेभ्यो मोक्षयिष्यामि, मा शुचः। इति॥

एवमनेनैव भाष्येण शंकरादिकुमतिबालिशभाषितान्यपि निरस्तानि, निपीडितसकलशब्दार्थत्वादाकुमारमभिलक्ष्यदोषाणि चेति न तत्रेदानीं प्रयस्यामः। ननु कर्मज्ञानभक्तीर्गुह्यगुह्यतरगुह्यतमरूपाः प्रपञ्चेनोपदिश्य, अन्ते *इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मयेति तदखिलमुपसंहृत्य, *सर्वगुह्यतमं भूयः शृणु मे परमं वचः इत्यादिनोपक्रम्य विधीयमानं सर्वगुह्यतममुपायान्तरमेव भवितुमर्हतीति चेन्न; भूयःशब्दास्वारस्यात्, अनन्तरम् *मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु इति नवमाध्यायोक्तसंदर्भेण तस्यैव भक्तियोगस्य विधीयमानत्वाच्च। यदि *सर्वगुह्यतमं भूयः इत्यादिश्लोकस्य समनन्तरमेव *सर्वधर्मान्परित्यज्य इत्यादिकमुक्तं स्यात्, तदा आशङ्क्येताप्युपायान्तरत्वम्। अत्र तु भक्तियोगमुपदिश्यैवानन्तरं प्रपत्तेरुपदेशात् [प्राक्प्रायश्चित्ततया]प्राक्प्रपञ्चिता तदङ्गभूतेयं प्रपत्तिस्तदुपसंहारानन्तरमुपसंह्रियत इति प्रतीयते। निष्प्रयोजनादुपसंहारादपूर्वविधायकत्वमुचितमिति चेत्, तर्हि *मन्मना भवेत्यादिनापि उपायान्तरविधानं किं न स्यात्? प्रत्यभिज्ञाबलादिति चेत्, तुल्यम्। भूयःशब्दस्वारस्यादिति चेत्, तदपि तुल्यम्। न हि तदेकश्लोकावधिकमित्यत्र नियामकं पश्यामः।

ननु *मन्मना भवेत्यादिरूपो भक्तिविधिः; *सर्वधर्मान्परित्यज्येति त[त्त]न्निषेधः। अतो विरोधादेव अर्थान्तरपरत्वम्। भूयःशब्दस्य चैकश्लोकार्थावधिकत्वं सिद्धमिति चेन्न; विरोधादेव उत्सर्गापवादनयेन निषेधस्यान्य-

षयतया व्यवस्थापयितुं युक्तत्वात्, सामान्यविशेषशब्दरूपतया तस्य शक्यत्वात्, भाष्योक्तच्छायया च त्यागस्यान्यार्थत्व-थापनात्, त्याज्ये चैवमभिसंरम्भस्यायुक्तत्वाच्च ।

तर्हि वक्ष्यमाणप्रपत्त्यङ्गतयैव भक्तिरपि * मन्मना भवेत्यादिना विधीयत इति चेन्न; नियामकाभावात्। वैप-रीत्यस्य तु नियामकमस्ति, भूयःशब्दबलात्, * मन्मना भवेत्यादिनवमाध्यायोक्तप्रत्यभिज्ञानात्, क्लृप्तकल्प्यविरोधे क्लृप्तपरिग्रहस्यैव युक्तत्वात्, त्वदभिमतपरित्यागस्याप्यसिद्धिप्रसङ्गात्, त्याज्यान्तरविवक्षायामस्मदिष्टस्यैव युक्तत्वात्, प्रथमप्रतीतिप्राबल्यात्, फलवादेऽप्यनिष्टनिवृत्तेरिष्टप्राप्तिशेषत्वस्थिताविष्टप्राप्तिसाधनतया निर्दिष्टस्यैव प्राधान्योपपत्तेश्च ।

एतेन * यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ इति न्यायेन प्रपत्त्यर्थमाचार्योपसदनम् * मन्मना भवेत्या-दिना विधीयत इत्यपि निरस्तम्, मच्छब्दस्योपदेष्टृविवक्षालिङ्गाभावात्; अन्यथा प्रागुक्तसमस्तस्वात्मभजनस्यापि गुरु-भजनत्वक्लृप्तिप्रसङ्गात्, * मद्याजी मामेवैष्यसीत्यनयोरस्वारस्याच्च । * पादमूलं गमिष्यामि यानहं पर्यचारिषमिति न्यायेन गुरुपरिचरणतत्प्राप्त्योरिहोक्तिरविरुद्धेति चेन्न, दत्तोत्तरत्वात्। न हि तद्वदत्र गुरुविषयत्वे प्रमाणमस्ति । न चास्वारस्यं परिहृतम् । एवं प्रपत्त्यन्तर्भूतमात्मसमर्पणं प्रथमश्लोके विधीयत इत्यपि निरस्तम्, * मद्याजी इत्यादेरनपे-क्षणाच्च । ततश्चास्मदुक्तमेव श्लोकयोरैकरस्यमुचितम् ॥

अस्तु तर्हि * सर्वधर्मान्परित्यज्येति त्यागविध्यर्थोऽयम् * मन्मना भवेत्यादिरनुवाद इति चेन्न, भूयःशब्दा-स्वारस्यादिदोषादेव । न चैवं त्यागविध्यर्थानुवादेऽत्यादरो युक्तः, * सर्वधर्मानित्येतावतैव चरितार्थत्वात् । न च * मन्मना भवेत्यत्रानुवादलिङ्गं किमपि दृश्यते; प्रत्युत अत्यादरलब्धप्रतिष्ठोऽङ्गिस्वरूपनिष्कर्षात्मा विधिरेव प्रतीयते । ततश्च तदर्थैव प्रागुक्ता प्रपत्तिरत्राप्यङ्गेषु सारनिष्कर्षार्थमुपसंहारात्मना विधीयत इति सिद्धम् । न च * सर्वधर्मान्परित्यज्येत्यत्र प्रस्तुतकर्मज्ञानभक्तिपरित्यागविधानात् तदङ्गत्वमनुपपन्नमिति वाच्यम्; उदाहृतभाष्यातिलङ्घनेनार्थान्तरगवेषणेऽपि सर्व-धर्मशब्दस्य समानाधिकरणवृत्त्या व्यधिकरणवृत्त्या वा देवतान्तरभजनरूपधर्माणामेव प्राङ्निन्दितानामत्रापि परित्याग-वचनोपपत्तेः । तथा च सति मामेकमित्याद्युक्तं तदेकप्रपदनं प्रति दृष्टोपकाराल्लिङ्गानुसारः । ततश्च कर्मयोगज्ञानयोग-भक्तियोगरूपाणां त्रयाणामपि साधारणं भगवदैकान्त्यमेव * मामेकं शरणं व्रजेति संगृहीतं भवति । अत एव ह्युक्तं **भगवद्यामुनाचार्यपादैः**—* ऐकान्त्यं भगवत्येषां समानमधिकारिणामिति । अधिकारिशब्देन तत्रैश्वर्यकैवल्यभगवदर्थि-भक्तियोगनिष्ठविवक्षायामपि तुल्यन्यायतया कर्मज्ञाननिष्ठयोरप्यैकान्त्यं दर्शितमेव । एतेनैतदपि व्याख्यातम्—

* तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥ इति ।

यत्तु, * शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥

इति **ब्राह्मवचनम्**, तदपि शरणागत्यर्थवादमात्रपरमिति अपिशब्दादिलिङ्गैरवसीयते । न च क्रमेण मृत्युतरणादावप्यस्य वाक्यस्य विरोधः । यथा—

* अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥

इत्यादिषु; अन्यथा तादृशेषु बहुष्वव्यवहितसाधनत्वप्रसङ्गात् । यत्पुनः,

*त्यज धर्ममधर्मं च त्यज सत्यानृते अपि । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥

इति **महाभारत**वचनम्, तत्र न तावदापाततः प्रपत्तिप्रतीतिः । निपुणनिरूपणे तु तत्रैव तदर्थव्याख्यानान्न वक्तव्यमस्ति ।

तथा हि—*त्यज धर्ममसंकल्पादधर्मं चाप्यहिंसया । उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ इति । न चात्र प्रपदनविधिसंभवः । एवमीदृशानि वाक्यान्तराण्यपि नेतव्यानीति ।

**निषेधसमर्थनम्** ॥ निषेधतश्च । तथा हि—*तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते इति भक्तिव्यतिरिक्तमोक्षोपायप्रतिषेधो हि दृश्यते । भक्तिप्रपत्तिव्यतिरिक्त इति तु स्यात्, वेदनशब्दस्योभयविषयत्वाविरोधादिति चेन्न; एवं विद्वानिति प्रकृताखिलाकारविशिष्टब्रह्मगोचरवेदनस्य प्रतीतेः, प्रपत्तेश्च स्वापेक्षितज्ञानशक्तिकरुणादिगुणविशिष्टमात्रगोचरत्वस्वीकारात् । साऽपि तत्रत्यसमस्ताकारविशिष्टगोचरा अस्तु; तथा च **गद्ये** स्वरूपरूपगुणविभवचेष्टितादिसमस्ताकारविशिष्टमनुसंधाय प्रापद्यत भगवान् भाष्यकार इति चेन्न; अन्योन्याश्रयणात्, तस्यास्तथाविधाकारविशिष्टगोचरत्वसिद्धौ वेदनशब्दस्य उभयविषयत्वसिद्धिः, तत्सिद्धौ च तस्यास्तत्सिद्धिरिति । तर्हि विद्यान्तरेष्वपि का वार्ता ? विधिरेव । हन्त तर्हि विधिनिषेधाभ्यां व्याघात इति चेन्न; विधिबलादेव हिंसानिषेधवद्विहितव्यतिरिक्तविषयत्वान्निषेधस्य । अत्रापि तथाऽस्त्विति चेन्न, विधेरेव निरस्तत्वात् । किं च,

*नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥

इति समाधिरहितस्य ब्रह्मप्राप्तिर्निषिध्यते । न च समाधिः प्रपन्नानामिष्यते; तदभ्युपगमे च भक्त्यनतिरेकः । न च प्रज्ञानशब्दस्तत्र भक्तिमात्रविषयोऽस्त्विति वाच्यम्, संकोचकाभावात् । विधिस्तु निरस्त एवेति न ततस्तत्संकोचः । यच्चात्र दुश्चरितविरतिबाह्यान्तरकरणोपरमरहितस्य ब्रह्मप्राप्तिर्नास्तीत्युच्यते, तदप्यशक्ताधिकारतयाऽभिमतस्य प्रपदनमात्रस्य मोक्षोपायतां प्रतिरुणद्धि । यो हि दुश्चरितेभ्य उपरतः, उपशान्तनिखिलकरणग्रामश्च स्यात्; का तस्याशक्तिर्भजने ?

किं च, *नाहं वेदैरित्यारभ्य *प्रवेष्टुं च परंतपेत्यन्तेन हेत्वन्तरनिषेधपूर्वकमनन्यया भक्त्या प्राप्तिरुच्यते । न चाधिकारिविशेषमाश्रित्यैते निषेधा इति वक्तुं शक्यम्; अधिकारिनियमस्य प्रागेव दूषितत्वात्, तथा च सति कर्मयोगादेरप्यधिकारिविशेषमाश्रित्य पृथगुपायत्वप्रसङ्गाच्च । न चैवमस्त्विति वाच्यम्, भक्तियोगाङ्गभूतात्मावलोकनफलकत्वेन तयोर्भाष्ये निर्णीतत्वात् । एवम्,

*पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु । भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥

इत्यादिकमपि द्रष्टव्यम् । भगवत्पराशरशौनकादिभिश्च मोक्षोपदेशप्रकरणेषु स्पष्टमेवोच्यते । यथा सस्मार भगवान्**पराशरः** खाण्डिक्यं प्रति केशिध्वजवचनम्—*क्लेशानां च क्षयकरं योगादान्यन्न विद्यते इति । तत्र च योगशब्दोऽष्टाङ्गयोगविषय इति प्रकरणवशात्, तत्रत्ययोगशब्दार्थविवरणवशाच्च सिद्धम् । तथा हि—तत्रैवानन्तरं खाण्डिक्येन योगस्वरूपमनुयुक्तः केशिध्वजः प्रतिवक्ति—

*योगस्वरूपं खाण्डिक्य श्रूयतां गदतो मम । यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः ॥
विषयेभ्यः समाहृत्य विज्ञानं मानसं मुने । चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने । विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥

आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥
एवमत्यन्तवैशिष्ट्ययुक्तधर्मोपलक्षणः । यस्य योगः स वै योगी मुमुक्षुरभिधीयते ॥
योगयुक्प्रथमं योगी युञ्जमानोऽभिधीयते । विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् ॥
यद्यन्तरायदोषेण दूष्यते चास्य मानसम् । जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि । प्राप्नोति योगनिर्दग्धपूर्वकर्मचयोऽचिरात् ॥ इति ।

ततश्च—*ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहानित्यारभ्य अष्टाङ्गयोगः प्रपञ्चितः । **श्रीविष्णुधर्मे** च—

*तदाचक्ष्व महाभाग प्रसादसुमुखो यदि । संक्षयो येन भवति मूलोद्वर्तेन कर्मणाम् ॥

इति शतानीकेन पृष्टो भगवान् शौनकः प्राह—

*न कर्मणां क्षयो भूप जन्मनामयुतैरपि । ऋते योगात्कर्मकक्षं योगाग्निः क्षपयेत्परम् ॥

इति । स च पुनः परमनिःश्रेयसार्थिभिर्देवादिभिरनुयुक्तस्य महर्षेः कपिलस्य वाक्यमुदाजहार—

*इत्युक्ते ऋषिभिः सर्वैर्देवैर्देवर्षिभिस्तथा । नास्ति योगात्परं श्रेयः किंचिदित्युक्तवान्पुरा ॥

इति । तमिमं योगं साधिकारि[विशेष]विषयं पुनः प्रपञ्चयन्, स्त्रीशूद्राणां जन्मान्तरप्रक्रान्तयोगप्रतिसंधानमात्रेण योगनिष्ठामुदाहृत्य निगमयति स्म—

*तस्माद्योगः परं श्रेयो विमुक्तिफलदो हि सः । विमुक्तौ सुखमत्यन्तं संमोहस्त्वितरत्सुखम् ॥
एतत्ते सर्वमाख्यातं मया मनुजकुञ्जर । श्रेयः परतरं योगात्किंचिदन्यन्न विद्यते ॥ इति ।

**मनुश्च**—*प्रशासितारं सर्वेषामणीयांसमणीयसाम् । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम् ॥

इति । अत्र स्वप्नधीगम्यमिति पदम्, विशदतमप्रत्यक्षतापन्नानुध्यानैकलभ्यमित्यर्थ इति भाष्यकारैर्व्याख्यातम् । एवमन्येषामपि महर्षीणामध्यात्मशास्त्रेषु योगातिरिक्तमोक्षोपायनिषेधो ग्राह्यः ॥

**ऐक्यसमर्थनम्** ॥ ऐक्याच्च । अपवर्गसाधनविधायिनां शास्त्राणां सर्वेषां भक्तिरूपैकोपायपर्यवसायित्वेनैक्यात्, प्रपत्तिविधायिनां च शास्त्राणामङ्गविषयतयाऽङ्गिविधायकभक्तिशास्त्रैक्यात्, क्वचित्तु भक्तिप्रपत्तिशब्दयोरर्थैक्याच्चेत्यर्थः । तथा हि—यदि प्रपदनाभिधानं सकृत्कृतं ज्ञानं मोक्षसाधनं स्यात्, तदा *ब्रह्म वेदेत्यादिविहितवेदनस्यासकृदावृत्तोपासनात्मकत्वमन्याय्यम्, * वेदेत्यत्रावृत्तेरश्रुतत्वात्, सकृत्कृतस्यैव च सर्वत्र शास्त्रार्थत्वात्, सामान्यवेदनशब्दस्य सकृत्कर्तव्यप्रपत्तिरूपज्ञानविशेषपर्यवसायित्वेनोपसंहारन्यायस्यापरित्यागाच्च । न चैवमस्त्विति वक्तव्यम्, *सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवदिति पूर्वपक्षं कृत्वा, *सिद्धं तूपासनशब्दादिति त्रय्यन्तधुरंधर**ब्रह्मनन्दि**वाक्यविरोधात् । तथा च *वेदनमुपासनं स्यात्तद्विषये श्रवणादिति, *उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्चेति (वाक्यकारः) । *आवृत्तिरसकृदुपदेशादिति भाष्ये च महता प्रयासेन कुदृष्टिनिरसनाय वेदनादिशब्दानामपि भक्तिविषयत्वमेव स्थापितम् । यद्यपि च प्रपत्तेरपि प्रीतिरूपतया भक्तिशब्दाभिलप्यत्वं संभवति, तथापि ध्यानरूपत्वाद्यभावात्तत्तदाकारैर्विशेषणं विरुद्धमेव । अत एव भगवत्पराशरादयो निखिलनिगमान्तोपबृंहणप्रवृत्ता निःश्रेयससाधनतया योगमेव विदधिरे, दधिरे च । न च प्रपदनस्य वेदनरूपत्वाभावात्तत्पर्यवसानाभाव इति वक्तुं शक्यम्, प्रार्थनात्मकन्यासादेर्मनोवृत्तिरूपत्वस्यैव व्यवस्थितत्वात् । अतः सिद्धं मोक्षशास्त्राणां सर्वेषामुपासनरूपैकार्थपरतयैक्यम् । तथा,

*त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः। अमन्त्रमधिकारस्तु चतुर्व्यूहक्रियाक्रमे ॥

इति प्रपन्नमधिकृत्य भक्तियोगाङ्कुरभगवदर्चाविधिर्भगवच्छास्त्रसंहिताप्रधानभूते **श्रीसात्वते** दृश्यते। एवमन्यत्रात्र च पूर्वं दर्शनादङ्गभूतप्रपदनविधायिनामङ्गिशास्त्रेणापृथग्भावः सिद्धः ॥

किंच, यस्य यदङ्गत्वं क्वचिन्निर्णीतम्, तस्य तत्समानफलतया तेन सह विकल्पो न दृष्टचरः। यत्र दृश्यते, तत्रापि गुणान्तरसंबन्धेनैव स्वातन्त्र्यम्, मात्रया च फलतारतम्यमस्ति। अत्र त्वङ्गतायां स्वतन्त्रतायां च न कश्चिद्गुणभेद इति अङ्गिना सह विकल्पासंभवाद्द्वयोरपि प्रयोगविधिना एकस्मिन्ननुष्ठातर्युपसंह्रियमाणयोरैक्यमेव। न च प्रपत्तेः स्वातन्त्र्यमिच्छद्भिरप्यङ्गत्वं परित्यक्तम्। त्यज्यतामिदानीमिति चेन्न, प्रपत्तेः सकलाभिमतसाधनत्वस्वीकारात्। ततश्च भक्तिनिष्पत्तिरपि फलं तस्या भवितुमर्हति। उक्तं **चाहिर्बुध्न्येन**—

*यद्येन कामकामेन न साध्यं साधनान्तरैः। मुमुक्षुणा यत्सांख्येन योगेन न च भक्तितः ॥
प्राप्यते परमं धाम यतो नावर्तते [यतिः] पुनः। तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ॥ इति।

अत एव तर्हि समीहितसिद्धिरिति चेन्न, पारंपर्येणापि तदुपपत्तेः प्रागेवोक्तत्वात्। अङ्गाङ्गिभावेन गत्यन्तरे च संभवति, अष्टदोषदुष्टो विकल्पो न न्याय्यः। एवमङ्गाङ्गिभावकृतपरस्परसौहार्दवशेन भजनप्रपदनशब्दौ स्थानतः समानार्थौ क्वचित्क्वचित्प्रयुज्येते—*चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन इत्यादेः प्रतिनिर्देशरूपेण

*न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥

इत्यत्र भजनशब्देन प्रक्रान्तं प्रपदनशब्देनाभ्यस्तम्। *कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः इत्यत्र प्रपदनम्, *योयो यांयां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति इत्यादिना भजनमिति दर्शितम्। एवमेव सर्वत्र द्रष्टव्यम्। *आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिमिति भक्तिनिष्ठमेव प्रपन्नमङ्गीकृत्य **नारायणार्यै**रेवं व्याख्यातम्—*भगवान्वासुदेवः परमप्राप्यः प्रापकश्च। नान्यत् फलं प्राप्यमस्ति। न चान्यस्तत्प्रापकः। तेन भगवानेव मे सकलः पुरुषार्थवर्ग इत्येवमास्थितः प्रपन्नः इति। *आनुकूल्यस्य संकल्पः इत्यादयश्च श्लोकाः *तमेव चाद्यं पुरुषं प्रपद्येत्यत्र तैरुदाहृताः। एवं बहुप्रकारैक्यक्रोडीकृता प्रपत्तिर्न स्वतन्त्रतामनुभवितुमर्हति ॥

**अशक्तिसमर्थनम्** ॥ अशक्तेश्च। अशक्यरूपत्वादित्यर्थः। तथा हि—*भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिरिति **श्रीराममिश्र**वाक्य[म]मित्यनुस्मरन्ति भवन्तः। तत्र कथं प्राकृतशरीरसंबन्धिसत्त्वरजस्तमोगुणवश्यः पुरुष उपरतसर्वव्यापारः स्यात्? अतः समुद्रमध्यपतितस्य प्रबलतरसमीरणवेगोल्ललदनन्तकल्लोललोलस्य निष्पन्दभावोपदेशवदशक्यविधानरूपत्वादप्रामाण्यं त्वदभिमतप्रपत्तिशास्त्रस्य स्यात्। यद्यपि मात्रया शक्य[त्वात्प्रामाण्यम्]त्वम्, तथाऽपि कर्मयोगादिवत्प्रवृत्तिरूपाद्भक्तियोगान्निवृत्तिरूपस्य प्रपदनस्य ज्ञानयोगस्येव दुष्करतमत्वादशक्तं प्रत्यशक्यतमोपदेश इति निरर्थकं प्रपत्तिशास्त्रमिति ॥

**अख्यातिसमर्थनम्** ॥ अख्यातेश्च। अप्रसिद्धेरित्यर्थः। न हि अष्टादशस्वपि विद्यास्थानेषु सांख्ययोगादिषु वा चतुर्षु तन्त्रेषु शिल्पशास्त्रेषु क[ल्प]ग्रन्थेषु वा केषु चित्प्रपदनमिति कमप्युपायं पृथक्परिगण्यमानमुपलभामहे। न चैतेषु सर्वेषु प्रतिपक्षेषु केनचित् श्लोकशकलादिना प्रत्यवस्थातुं शक्यम्। अतः कथंभूतं प्रपदनमिति शङ्का तावदुर्निवारा। अत एव च महाविश्वासासिद्धेस्तत्स्वरूपासिद्धिरिति ॥

**संप्रदायविरोधसमर्थनम् ॥** संप्रदायविरोधतश्च । तीर्थकरसंप्रदायसहकृततयैव ह्युपपत्त्याऽर्वाचीनानामकृत्स्न-वेदिनामर्थनिर्णयः, सिद्धान्तापसिद्धान्तव्यवस्था च । न च प्रपदनस्य पृथगुपायतायां प्राक्तनाचार्यसंप्रदायो दृश्यते; प्रत्युत अङ्गतयैव शारीरकभाष्ये श्रीमद्गीताभाष्ये च भाषितम् । यानि चान्यानि भगवद्भाष्यकाराणां रहस्यस्तुति-निबन्धनानि, तानि प्रपदनपराण्यपि तन्मूलापादनपराण्यपि तन्मूलमायातरणापराधसहनज्ञानभक्तिप्राप्त्याद्यपेक्षाशिरस्कत्वादि-लिङ्गैरङ्गपराण्येव निश्चीयन्ते । अत एव हि *भगवदाराधनप्रयोगं वक्ष्ये इत्युपक्रम्य, *तमेव शरणमुपगच्छेत् अखिल-हेयेत्यादिना, इति प्रपत्तिपरा गद्यस्तुतिस्समाराधनाङ्गतया विनियुक्ता । तथा च श्रीमद्गीताभाष्यमपि संगच्छते ; अन्य-थैकस्मिन्नेव सिद्धान्ते कथमेकेनैव महात्मना एकस्यैव ग्रन्थस्यात्यन्तविरुद्धा व्याक्रियेति । ये च, उक्तिमात्रेणापि रक्षति भगवानिति तत्रतत्र वादाः, त एव तावदतिवादरूपतया कैमुत्येन पारंपर्यमावेदयन्ति । स्तुतिषु चाङ्गप्रधानासु तथा निर्देशो न दोषः, प्रत्युत गुण एव । एतेन भगवद्यामुनाचार्यप्रणीतस्तोत्रादयः, वकुलधरमहर्षिदृष्टविश्वजनीनोपनिषत्प्रभृत-यश्च ग्रन्था व्याख्याताः । तत्रापि हि *अकिञ्चनोऽनन्यगतिः शरण्य त्वत्पादमूलं शरणं प्रपद्ये इत्यादिकमुक्त्वा, पुन-रप्युपरि *भगवन् भक्तिमपि प्रयच्छ मे इत्यादि ।

ततश्चान्यपरेषु वाक्येषूपरिप्लवमानोऽयमद्यतनानामशिक्षितसिद्धान्तानामापातार्थः संप्रदायः । अतः सिद्धं प्रपत्त्यादि-क्रमपरिणता भक्तिरेवैको मोक्षोपाय इति ॥

**इति निक्षेपरक्षायां पू॰ः पक्षः ॥**

---

## ॥ अथ सिद्धान्तः ॥

**स्वरूपसमर्थनम् ॥** तत्र राद्धान्ती प्रक्रमते—

**श्लो.** अत्रानभिमतांशस्य दूषणं किं नु दूषणम् । तथाऽभ्युपगतांशस्य दूषणं किं नु दूषणम् ॥ ९ ॥

तथा हि—यत्तावच्छास्त्रमात्रजन्यत्वावधि दूषणम्, तन्निपुणानभ्युपगतविषयमिति नास्माभिः परिहरणीयम् । यत्तु तथा-विधज्ञानोत्पादकमिन्द्रियलिङ्गादिकं न दृश्यत इति ; तत्र पृच्छामः—आनुकूल्यसंकल्पाद्यात्मकज्ञानसमुदाये कस्यांशस्य त्वया हेतुर्न दृश्यते? न तावदानुकूल्यसंकल्पस्य, तस्य संकल्पान्तरवदेव सहकारिविशेषसहकृतमनःकरणकत्वोपपत्तेः । प्रातिकूल्यवर्जनमपि संकल्पपर्यवसितं चेत्, तदेकयोगक्षेमम् । अभिसंधिविराममात्ररूपत्वेऽपि निषेधशास्त्रवशंवदं तदेव करणम्, यथा राजविद्विष्टव्यवसायनिवृत्त्यादिषु । रक्षिष्यतीति विश्वासः शास्त्रप्रामाण्यव्यवसायवतां प्रथमं तद्धेतुकः, पश्चात्तु तदनुस्मरणमात्रं संस्कारसहकृतमनःकरणकम् । तत्र [तु] क्रियाविशेषान्तर्गतसमन्त्रकदेवतास्मरणादिवत्तन्नियमे विधिव्यापार इति न वैयर्थ्यादिदोषः; अनध्यवसितशास्त्रप्रामाण्यानां तु नास्त्येवेति किं तत्करणगवेषणया । गोप्तृत्व-वरणमपि रक्षणाभ्यर्थनरूपम्, यतःकुतश्चिद्बिभ्यतो दुर्बलस्य गुणवत्प्रबलदर्शने संभवल्लोकेऽपि दृष्टमिति तद्वदेवात्रापि सुगमो हेतुः । आत्मनिक्षेपोऽपि,

*तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥

इति वचनात्तेन संरक्ष्यमाणस्य तदेकशेषभूतस्य स्वरक्षणनैर्भर्यतत्फलस्वाम्यवियुक्ततादिरूपः । स च लोके दास्याभ्युपग-मात्मा, गत्यन्तरशून्यस्य स्वेच्छाहेतुकः । भगवति तु, यथाचोदनं हविरन्तरसमर्पणसमानयोगक्षेमः सेतिकर्तव्यताक-

प्रामाणिकार्थपरिग्रहमात्ररूपः, तत्प्रत्याख्यानविनिवृत्तिरूपो वेति तत्रापि किमन्यत्करणं गवेषणीयम् ? इदं चात्र समर्पणतत्त्वम्—

श्लो. स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् । त्यक्तरक्षाफलस्वाम्यं रक्ष्यस्यात्मसमर्पणम् ॥ १० ॥ इति ।

कार्पण्यं तु यदि कृपाजनककृपणवृत्तिनिरतत्वम्, तत्रापि यथालोकं सुगमो हेतुः । अथ कथंचिदपि गत्यन्तराभावरूपम्; तदपि गत्यन्तरप्रागभावरूपं चेत्, न हेतुसाध्यम्, अनादित्वात् । भावान्तराभाववादेऽपि तत्तदवस्थाप्रवाहे सामग्रीप्रवाहोऽनादिः । प्रध्वंसरूपं चेत्, तत्तदन्वयव्यतिरेकशास्त्रादवगता बहवो हेतवः सन्ति । गत्यन्तराभावानुसंधानमपि तत्तद्गत्यन्तरग्राहकप्रमाणाभावहेतुकम् । स च प्रमाणाभावो योग्यानुपलम्भात्मा प्रत्यक्षसहकारी वा प्रमाणान्तरात्मा वेति यथाभिमानं परिगृह्यताम् । यत्तूक्तम्—शास्त्रजन्यज्ञानादधिकविषया, अनधिकविषया वेति; तत्राधिकविषयेति ब्रूमः; विषयविशेषविशिष्टबुद्धिर्हि प्रपत्तिः, तस्या एव निःश्रेयससाधनतया कर्तव्यत्वं शास्त्रवेद्यमिति विषयभे[दः]दात् । यद्यपि विषयविशेषविशिष्टं ज्ञानं विधीयत इति विषयविशेषोऽपि विधिवाक्यवेद्यः; तथाऽपि स विषयस्तद्विषयतयैव शास्त्रवेद्य इति न साक्षाद्विधिवाक्यार्थः, उपासनाविषयवत्, यागादिशब्दाभिलप्यद्रव्यत्यागात्मकबुद्धिविषयवच्च । नन्वेवमपि नाधिकविषयम्, अपि तु न्यूनविषयम्; अतः शास्त्रश्रवणवेलायामेव बुद्धिविशेषरूपं प्रपदनं सकृत्कृतमेव स्यादिति चेन्न; न हि यागरूपबुद्धिविशेषविषयविधिवाक्यार्थश्रवणमात्रेण यागः कृतः स्यात् । प्रपदनमपि ह्यत्र प्रार्थनापूर्वकं परस्मै देवतायै प्रत्यगात्मरूपस्य हविषस्त्यागः, इन्द्रायेदं न ममेत्यादिवत् भगवत एवाहमस्मि न ममेति ।

यत्तु इतिकर्तव्यतावत्त्वे निरपेक्षोपायत्वविरोध इति, तन्न, [प्रमाणासिद्धस्वेतिकर्तव्यतानैरपेक्ष्यस्य विवक्षितत्वात्;] प्रमाणसिद्धस्वेतिकर्तव्यताभिरपि नैरपेक्ष्यस्याविवक्षितत्वात्; भक्तियोगादित्रयेतिकर्तव्यताभूतगुरुतरकर्मनैरपेक्ष्यमात्रं ह्यत्र विवक्षितम्, न पुनः स्वप्रकरणसिद्धस्वेतिकर्तव्यतानैरपेक्ष्यमपीति । अत एव सर्वधर्मशब्दोऽपि न तद्विषयः । यच्चात्र दृष्टान्तितो ब्रह्मास्त्रबन्धः, सोऽपि न स्वेतिकर्तव्यतानिरपेक्षः, अपि तु *अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते इत्यन्यबन्धासहत्वमात्रमेव हि स्मर्यते । यत्पुनः, इतिकर्तव्यतारहितत्वे कार्यकरत्वहानिरिति, तदपि न, चरमेतिकर्तव्यतायां व्यभिचारात् । यद्यपि तत्र गत्यभावात्कथंताकाङ्क्षोपशमः, तथाऽपि प्रस्तुतेऽपि यदि इतिकर्तव्यताविधिर्न स्यात्, तदा गत्यभावादेवेतिकर्तव्यतानैरपेक्ष्यं कक्षीकार्यम् । तद्विधिसंभवे तु न शङ्काऽपीति । यत्तु सर्वधर्मपरित्यागे विध्यनुवादविकल्पानुपपत्तिरिति, तदप्यसत्; तत्र हि किमस्य वाक्यस्याप्रामाण्यमभिमतम्, अन्यपरत्वं वा? नाद्यः, अतिसाहसत्वात् । प्रत्यक्षश्रुत्याद्यनुसारान्न दोष इति चेन्न, तदविरोधेन नेतुं शक्यत्वात् । न च प्रपन्नस्य निःशेषधर्मलोपो निपुणैरभ्युपगतः, येन विरोधः स्यात् । नापि द्वितीयः, तत्रापि लक्षणासंकोचादेरवश्याभ्युपगन्तव्यत्वात् । तथा च सति अस्मदभिमतेऽपि न कश्चिद्विरोधः, सर्वधर्मशब्देन प्रस्तुतमोक्षोपायान्तराणां विवक्षितत्वात् । तेषां च नानात्वं तद्विधायकैरेव सिद्धम्, यथाधिकारं नानाप्रकारकर्मज्ञानभक्त्युपदेशात्, *नानाशब्दादिभेदादिति विद्याभेदस्य सूत्रितत्वाच्च । ततश्च सर्वशब्दोपपत्तिः, सर्वनामशब्दानां संनिहितग्राहित्वात् । अत एव सागरतरणवत् अशक्योपदेशचोद्यमप्यपास्तम्, यादृच्छिकानां केषांचिद्धर्मत्वे सत्यपि मोक्षोपायत्वासिद्धेः । पारंपर्येण तदुपकारसामर्थ्येऽपि तन्निरपेक्षसाधनान्तरसद्भावेन *इतरस्याप्येवमसंश्लेषः पाते तु इति न्यायेन तस्यासंश्लेषविषयत्वात् । यत्पुनः आचार्योपसदनभगवत्सेवादेरपि परित्याज्यत्वप्रसङ्गः, तदनुष्ठाने वा प्रपत्तेरङ्गवैकल्यमिति; तत्र तन्निष्ठस्य वक्ष्यमाणसेतिकर्तव्यताकविधिबलादेवावश्यंभाविना तद्वैकल्यमिति

महदिदमुपपादनम् । अत्र च तथाविधधर्मविषयत्वं सर्वशब्दस्य नास्तीति भावय । लोकसंग्रहाद्युक्तिरपि अवश्यकर्तव्यताभिप्रायैव ; अन्यथा तदसंग्रहेऽप्यदोषत्वप्रसङ्गात् । यत्तु, क्रियमाणेषु श्रेयस्साधनत्वबुद्धित्यागस्येश्वरपारतन्त्र्यादिमात्रानुसंधानरूपत्वे[न] कर्मयोगादिसमानयोगक्षेमत्वमिति, तन्न, प्रपन्नावश्यंभाविभ्यः शक्त्यनुरूपनित्यनैमित्तिकेभ्यश्चातिरिक्तदुष्करतपःप्रभृतिक्लेशाभावेन वैषम्यात् ; प्रपन्नधर्मेऽपि असमर्थं प्रति प्रपत्तेरनुपदेशात् । त्यागविषया अशक्तिस्तु परिहरिष्यते । विशिष्टविधिस्वीकारे च न वाक्यभेददोषः । यद्यपि चासौ गत्यभावविषयः ; तथाऽपि अत्रापि यदि गत्यन्तराभावः स्यात् तदाऽसौ स्वीकार्य एव, भक्तियोगशेषत्वपक्षेऽपि तथैव निर्वाह्यत्वात् । यत्तु शक्तं मुमुक्षुं प्रत्येव मोक्षोपायान्तराणां निषिद्धत्वादधिकारिविशेषासिद्धेश्चाधर्मत्वप्रसङ्ग इति, तदप्ययुक्तम्, एतस्मिन्नेवोपाये विचिकी[अवतिती]र्षतामेव तन्निषेधात् । * विकल्पोऽविशिष्टफलत्वादिति न्यायेन गतार्थत्वान्निरर्थकस्तन्निषेध इति चेत्, सत्यम् ; न्यायप्राप्तविकल्पसिद्धमर्थं ज्ञापयितुमेवायं निषेधः । तर्हि विद्यान्तरेष्विव अत्रापि न्यायसिद्धे तदितरविद्यात्यागे विधिरनपेक्षित इति चेन्न ; विद्यान्तरेषु तदितरविद्यात्यागो नैरपेक्ष्यात्, इह तु विरुद्धत्वादिति ज्ञापनेन सप्रयोजनत्वात् । तदेकशरणव्रज्या हि तदितरोपायपरिग्रहेण विरुध्येत । एवं च सर्वपापमोक्षणफलवत्याः शरणव्रज्यायाः संनिधावफलतया तदङ्गभूतस्य त्यागस्य दृष्टोपकारे संभवत्यदृष्टपरिग्रहायोगाल्लिङ्गानुसारोऽपि न बाधितः । इह च महताम् * अस्त्रबन्धः स चान्यं हि न बन्धमनुवर्तते इति ब्रह्मास्त्रबन्धोदाहरणमपि एतदभिप्रायेणैव । यद्वा प्रपदनाङ्गभूताकिञ्चन्यपुरस्कारविरुद्धोपायान्तराशाप्रहाणमेवात्र त्याग इति न विरोधः । संकोचोपचारादिरवर्जनीय इत्युक्तम् ; भवदभिमतपक्षेऽपि कथंचित्तदनुप्रवेशात् । दर्शितं च **सात्यकितन्त्रे** प्रपत्त्यध्याये प्रपित्सोरुपायान्तरनैराश्यं प्रश्नप्रतिवचनाभ्याम् । तथा हि—

* ब्रह्मोवाच—भगवन् हितमाख्यातमात्मनां पततामधः । त्वत्प्रापकं महत्कर्म कारुण्यविवशात्मना ॥
अधीता बहवो मन्त्राः श्रीमदष्टाक्षरादिकाः । एभिः कर्मभिरीजानस्तान्मन्त्रान् सततं जपन् ॥
त्वामाप्नोत्येव पुरुषः पुरुषं पुरुषोत्तमम् ॥
एतान्यालोच्यमानानि कर्माणि करुणाकर । दुर्विज्ञेयस्वरूपाणि दुष्कराणि विभागशः ॥
मन्त्रांश्चैकैकशस्तावज्जपमानस्य माधव । उक्तेनैव च मार्गेण गच्छत्यायुरपक्षयम् ॥
तस्मात्सकृत्कृतेनैव कर्मणा येन मानवः । सकृज्जप्तेन मन्त्रेण कृतकृत्यः सुखी भवेत् ॥
तद्ब्रूहि कर्म तन्मन्त्रं दयार्द्रहृदयो ह्यसि ॥
श्रीभगवानुवाच—सत्यमुक्तमशक्यानि कर्माणि कमलासन । मन्त्राणां च यथाशास्त्रमनुष्ठानं न शक्यते ॥
इज्यते येन तत्कर्म कृतमात्रेण कर्मणा । मामाप्नोति नरो ब्रह्मन् ममात्मा च भविष्यति ॥ इति ॥

एवं जितन्तास्तोत्रेऽपि स्पष्टमुपायान्तरनैराश्यम् । किंच,

**श्लो.** प्रपत्तौ भक्तिवन्नास्ति तत्तद्धर्मान्तरङ्गता । इति बोधयितुं तत्तत्त्यागोक्तिरिह युज्यते ॥ ११ ॥
न चान्यानङ्गतामात्रादननुष्ठानसंभवः । स्वतन्त्रविधिसिद्धत्वादन्यथाऽतिप्रसङ्गतः ॥ १२ ॥

अतः सर्वशब्दासंकोचेऽप्यविरोधः, वेदनचोदनालिङ्गकातिदेशप्राप्ताङ्गविशेषमात्रप्रतिषेधैकपरत्वात् त्यागोक्तेरिति ।

यत्तु अनुवादपक्षे अनुवाद्यार्थविशेषानिश्चय इति, तदपि न, अभिमतफलविशेषलाभे दुष्करसाधनान्तरनैराश्यनिमित्तशोकाविष्टस्यानूद्यमानत्वात् । एतच्च * सर्वधर्मान् परित्यज्य, * मा शुचः इत्यनयोः सामर्थ्यादवसीयते । संभवति

च दुष्करतरेषु चिरकालसाध्येषु प्रतिबन्धकशतनिरन्तरेषु अभिमतोपायेषु परिमितशक्तेर्विलम्बाक्षमस्य च तीव्रः शोकवेगः; तद्विशिष्टश्चात्राधिकारीति न किंचिदपहीनम् । सर्वशब्दोऽप्यत्र *सर्वत्वमाधिकारिकमिति न्यायेन संनिहितफलविशेषसाधनतयाऽभिमतप्रस्तुतधर्मसामस्त्यपरः । अत एव सङ्कोचोऽप्यत्र न दोषः । न च पश्चाच्छक्तिसंभवे सर्वधर्मशब्दार्थस्य पुनरनुष्ठानप्रसङ्गः, परिगृहीतेनोपायान्तरेण फलसिद्धौ पुनरितरानुष्ठानस्य निरर्थकत्वात्; अन्यथाऽन्यत्राप्यनुष्ठितानुकल्पस्यापि संजातशक्तेर्मुख्यकल्पानुष्ठानप्रसङ्गात् । न चात्र फलभूयस्त्वापेक्षया समुच्चयः संभवति, *विकल्पोऽविशिष्टफलत्वादिति सूत्रितत्वात् ।

यच्च अशक्तिलिङ्गासिद्धिरिति, तदपि न, *मा शुच इत्यनेनैव द्योत्यमानत्वात् । नच वाच्यमुपक्रमावगतबन्धुवधनिमित्तशोक एवात्र *मा शुचः इत्युपसंहारेऽपि निवार्यत इति; तस्यैव शोकस्य सर्वत्रानुवृत्तेर्नियामकाभावात् । अन्यथा

*दैवी संपद्विमोक्षाय निबन्धायासुरी मता । मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥

इत्यत्रापि तस्यैव शोकस्य प्रसङ्गात् । न च तद्युक्तम्; तत्र तत्प्रस्तावाभावात्, *संपदं दैवीमभिजातोऽसीत्यनेन तत्परिहारासंभवाच्च । *निबन्धायासुरी मतेति शोकहेतोरन्यस्य प्रस्तावेन तन्मूलशोकापनोदनं ह्यत्र क्रियते । तद्वदत्रापि *सर्वधर्मान् परित्यज्येति निर्दिष्टनिमित्तान्तरप्रभव इति युक्तम् । यत्तु अशक्ताधिकारत्वे प्रपत्तेरमुख्योपायत्वप्रसङ्ग इति; तत्र किं फलफल्गुत्वाभिप्रायेणामुख्यत्वोक्तिः, अकिंचनाधिकारत्वमात्रेण वा? नाद्यः, असिद्धेः । नापि द्वितीयः, इष्टप्रसङ्गरूपत्वात् । यत्तु अनुवादपक्षे त्यागस्येतिकर्तव्यतात्वासिद्धिरिति, तत् तस्मिन् पक्षे गुण एवेति नानिष्टप्रसङ्गावकाशः । इतिकर्तव्यतान्तरं तु यथाप्रमाणं स्यादेव । यत्पुनरुक्तम्, विधिपक्षे अनुवादपक्षे चाभावरूपधर्मपरित्यागावश्यंभावात्तद्विरोधिभावानुष्ठाने स्वैरदोष इति, तदपि मन्दम्, तत्तदभावमात्रस्य पापाभावमात्ररूपत्वात् । यद्यपि नियमसहकृतस्य तत्तदभावस्य धर्मत्वमपि, तथाऽपि तेनाकारेणानुवादो विधिर्वेति नियममात्रपरित्याग एव स्यात् । निषिद्धवर्जनं तु निषेधशास्त्रसिद्धं तावता नापैति । भवतु च निषिद्धाकरणमपि धर्मः । तथाऽपि सर्वधर्मशब्दस्य संनिहितमोक्षोपायविषयत्वान्न नित्यनैमित्तिकत्यागनिषिद्धानुष्ठानयोः प्रसङ्गः । अङ्गिपरित्यागेऽङ्गानुष्ठानस्य प्रयोजनाभाव उक्त इति चेत्सत्यमुक्तम्, दुरुक्तं तु तत्, *विहितत्वाच्चाश्रमकर्मापि, *सहकारित्वेन च, इति सूत्रकारेणैव कर्मणां विनियोगपृथक्त्वेनाश्रमाङ्गत्वविद्यासहकारित्वयोः पृथक्समर्थितत्वात् । ततो यद्यपि विद्याङ्गत्वेन नित्यनैमित्तिककर्माणि नोपादीयन्ते, तथाऽपि केवलाश्रमिणामिव वर्णाश्रमादिमात्रप्रयुक्तत्ववेषेणोपादेयान्येव । यद्यपि कर्मान्तराधिकारापादकत्वमेव तेषाम्, तथाऽपि शक्तस्याकरणे प्रत्यवायः श्रूयमाणो न परित्याज्यः । अतः शक्तस्य कर्मान्तराभावेऽपि यथार्हं प्रत्यवायपरिहारार्थं कैङ्कर्यरूपकर्मसद्भावेन शौचादिवद्योग्यतासिद्ध्यर्थं च यथाशक्त्यवश्यानुष्ठेयान्येव । अशक्ताधिकारत्वं तर्हि कथमिति चेत्, फलपर्यन्तमोक्षोपायान्तरासामर्थ्यादिति भाव्यताम् । सकलाङ्गोपसंहारे हि काम्यं कर्म फलति । यथाशक्त्यनुष्ठानमात्रेणापि नित्यनैमित्तिकशास्त्रं चरितार्थं भवति । प्रपत्तिबलादेव सर्वप्रत्यवायपरिहारे किमन्येनेति चेन्न; प्रपन्नस्यापि पुनर्मर्यादालङ्घनायोगस्य *दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा इत्यनेनैव समर्थितत्वात् । पूर्वाघस्येवोत्तराघस्यापि प्रपत्त्यन्तरमेव प्रायश्चित्तं भवतीति चेत्; किं कृतस्योत्तरस्य, करिष्यमाणस्य वा? आद्ये तु प्रायश्चित्तसाकाङ्क्षतया मर्यादालङ्घनं परित्याज्यमेवेति सिद्धम् । प्रायश्चित्तविशेषं तु यथाशास्त्रमङ्गीकुर्मः । द्वितीये तु निमित्तानुदयादेव प्रायश्चित्तानवकाशः । शङ्कितभविष्यन्निमित्तापेक्षया भवतु प्रायश्चित्तमिति चेन्न, एष्यन्महापातकादिशङ्कया तत्तत्प्रायश्चित्तानामेव नित्य-

मनुष्ठानप्रसङ्गात् । अतो निमित्तोदये सत्येव नैमित्तिकशास्त्रोदयः । भविष्यत्पापारम्भकपापान्तरप्रायश्चित्तं तु संभवत्येव ; अन्यथा *कृतान् क्रियमाणान् करिष्यमाणांश्च सर्वानशेषतः क्षमस्व, *वर्तिष्यमाणं च सर्वं क्षमस्वेति भगवद्भाष्यकारोक्तिः कथमिति चेत्, इत्थमेव—अबुद्धिपूर्वपापादिमात्रविषयतयाऽपि तदुपपत्तेः, तदारम्भकपापलक्षणया वा तन्निर्वाहात् । अन्यथा *नाविरतो दुश्चरितादिति शास्त्रविरोधादेव । तदुक्तं लक्ष्मीतन्त्रेऽपि प्रपत्त्यध्याये—*मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेदिति । अतः सर्वधर्मशब्दस्यासंकोचेऽपि न स्वैरदोषप्रसक्तिः । आनुकूल्यादिमति च प्रपत्तिरिति कुतः स्वैरावकाशः । यद्यपि च *आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता इति तत्रैव व्याख्यातम्; अथापि तदेव सर्वभूतानुकूल्यं शिष्टतया व्यपदेश्यानां स्वैरदोषमुन्मूलयति । अन्यथा *यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः इति लोकक्षोभप्रसङ्गात् । ततः सर्वभूतप्रातिकूल्यमेव हि कृतं भवति । अत एव हि *आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः इत्यनन्तरमेवाह । एतत्प्रकरणोपक्रमे चानन्यगतिकजनसंरक्षणोत्सुकया देव्या संचोदितो भगवानाह—

*उपायाश्चाप्यपायाश्च शास्त्रीया निर्मिता मया । विहिता य उपायास्ते निषिद्धाश्चेतरे मताः ॥
अधो नयन्त्यपायास्तं य एनाननुवर्तते । ऊर्ध्वं नयन्त्युपायास्तं य एनाननुवर्तते ॥
उपायापायसंत्यागी मध्यमां वृत्तिमास्थितः । मामेकं शरणं प्राप्य मामेवान्ते समश्नुते ॥
षडङ्गं तमुपायं च शृणु मे पद्मसंभवे । आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ॥
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः ॥
एवं मां शरणं प्राप्य वीतशोकभयक्लमः । निरारम्भो निराशीश्च निर्ममो निरहंकृतिः ॥
मामेव शरणं प्राप्य तरेत्संसारसागरम् । सत्कर्मनिरताः शुद्धाः सांख्ययोगविदस्तथा ॥
नार्हन्ति शरणस्थस्य कलां कोटितमीमपि ॥ इति ।

आनुकूल्यादिस्वरूपं च शक्रेणानुयुक्ता देवी स्वयमेव व्याचकार—

*आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता । अन्तः स्थिताऽहं सर्वेषां भावानामिति निश्चयात् ॥
मयीव सर्वभूतेषु ह्यानुकूल्यं समाचरेत् । तथैव प्रातिकूल्यं च भूतेषु परिवर्जयेत् ॥
त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः । अङ्गसामग्र्यसंपत्तेरशक्तेश्चापि कर्मणाम् ॥
अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् । उपाया नैव सिध्यन्ति ह्यपायबहुलास्तथा ॥
इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते । शक्तेः सूपसदत्वाच्च कृपायोगाच्च शार्ङ्गिणः ॥
ईशेशितव्यसंबन्धादनिदंप्रथमादपि । रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः ॥
स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः । करुणावानपि व्यक्तं शक्तः स्वाम्यपि देहिनाम् ॥
अप्रार्थितो न गोपायेदिति तत्प्रार्थनामतिः । गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ॥
तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥
निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः । स न्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥
उपायश्च चतुर्थस्ते प्रोक्तः शीघ्रफलप्रदः । अस्मिन्हि वर्तमानानां विधौ विप्रनिषेविते ॥
पूर्वे त्रय उपायास्ते भवेयुरमनोहराः । आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः ॥

कार्पण्येनाप्यपायानां विनिवृत्तिरिहोदिता । रक्षिष्यतीति विश्वासादभीष्टोपायकल्पनम् ॥
गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् । सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन् ॥
संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते । आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ॥
हिंसास्तेयादयः शास्त्रैरपायत्वेन दर्शिताः । अपायोपायसंत्यागी मध्यमां वृत्तिमास्थितः ॥
रक्षिष्यतीति निश्चित्य निक्षिप्तस्वस्वगोचरः । बुध्येत देवदेवं तं गोप्तारं पुरुषोत्तमम् ॥ इति ।

एवमुक्तो मध्यमस्थितिस्वरूपं पप्रच्छ—

* उपायापाययोर्मध्ये कीदृशी स्थितिरम्बिके । अपायोपायतामेव क्रिया सर्वाऽवलम्बते ॥
स्वीकारे व्यतिरेके वा निषेधविधिशास्त्रयोः । दृश्यते कर्मणो व्यक्तमपायोपायरूपता ॥ इति ।

तत्र पुनः प्रत्युक्तम्—

* त्रिविधां पश्य देवेश कर्मणो गहनां गतिम् । निषेधविधिशास्त्रेभ्यस्तां विधां च निबोध मे ॥
अनर्थसाधनं किंचित्किंचिच्चाप्यर्थसाधनम् । अनर्थपरिहाराय किंचित्कर्मोपदिश्यते ॥
त्रैराश्यं कर्मणामेवं विज्ञेयं शास्त्रचक्षुषा । अपायोपायसंज्ञौ तु पूर्वौ राशी परित्यजेत् ॥
तृतीयो द्विविधो राशिरनर्थपरिहारकः । प्रायश्चित्तात्मकः कश्चिदुत्पन्नानर्थनाशनः ॥
तमंशं नैव कुर्वीत मनीषी पूर्वराशिवत् । क्रियमाणं न कस्मैचिद्यदर्थाय प्रकल्पते ॥
अक्रियावदनर्थाय कर्म तत्तु समाचरेत् । एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा ॥
अस्यां स्थितो जगन्नाथं प्रपद्येत जनार्दनम् । सकृदेव हि शास्त्रार्थः कृतोऽयं तारयेन्नरम् ॥
उपायापायसंयोगे निष्ठया हीयतेऽनया । अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् ॥
प्रायश्चित्तिरियं साऽत्र यत्पुनः शरणं व्रजेत् । उपायानामुपायत्वस्वीकारेऽप्येतदेव हि ॥
अविप्लवाय धर्माणां पालनाय कुलस्य च । संग्रहाय च लोकस्य मर्यादास्थापनाय च ॥
प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः । मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेत् ॥
यथा हि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम् । लोकोपयोगिनीं रम्यां बहुसस्यविवर्धिनीम् ॥
लङ्घयन् शूलमारोहेदनपेक्षोऽपि तां प्रति । एवं विलङ्घयन्मर्त्यो मर्यादां वेदनिर्मिताम् ॥
प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात् । उपायत्वग्रहं तत्र वर्जयेन्मनसा सुधीः ॥
चतुर्थमाश्रयन्नेवमुपायं चरणाश्रयम् । अतीत्य सकलं क्लेशं संविशत्यमलं पदम् ॥
उपायापायनिर्मुक्ता मध्यमां स्थितिमास्थिता । शरणागतिरग्र्यैषा संसारार्णवतारिणी ॥
इदं शरणमज्ञानामिदमेव विजानताम् । इदं तितीर्षतां पारमिदमानन्त्यमिच्छताम् ॥
प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे । मामेकां देवदेवस्य महिषीं शरणं व्रजेत् ॥
अपायाद्विरतः शश्वन्मां चैव शरणं व्रजन् । तनूकृत्याखिलं पापं मां प्राप्नोति नरः शनैः ॥
अथोपायप्रसक्तोऽपि भुक्त्वा भोगाननामयान् । अन्ते विरक्तिमासाद्य विशते वैष्णवं पदम् ॥
उपायः सुकरः सोऽयं दुष्करश्च मतो मम । शिष्टैर्निषेव्यते सोऽयमकामहतचेतनैः ॥ इति ।

एवमध्यायान्तरेऽपि प्रपन्नस्यानुसंधानमधिकृत्योक्तम्—

*प्रातिकूल्यं परित्यक्तमानुकूल्यं च संश्रितम् । अपायेभ्यो निवृत्तोऽसि पातकेभ्यो भवोदधौ ॥
तथाऽप्यत्र प्रवृत्तिर्या त्वत्स्मृतेः सा विनश्यतु । अलसस्याल्पशक्तेश्च यथावच्चाविजानतः ॥
उपायाश्चोदिताः शास्त्रैर्न मे स्युस्तारकास्त्रयः । तथाऽप्यत्र प्रवृत्तिर्या त्वदाज्ञापालनं तु तत् ॥
अतोऽहमनुपायत्वात्कृपणोऽकिञ्चनोऽगतिः । छायामाश्रित्य वर्तेय त्वदीयां तापहारिणीम् ॥

इत्यादि ॥ अनन्तरं चोक्तम्—

*सकृदेवं प्रपन्नस्य कृत्यं नैवान्यदिष्यते । उपायापायमुक्तस्य वर्तमानस्य मध्यतः ॥
नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते इति ॥

तथाऽन्यत्राध्याये—*प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम् इत्युपक्रम्य * प्रातिकूल्यमित्यादि पूर्ववत् । समाप्तौ चोक्तमत्रिणा—

*भूयस्त्वं शृणु संक्षेपमनसूयेऽनसूयया । श्रुत्वा च कुरु[ते चित्ते] यत्नेन रक्षा चाप्यप्रमादिनी ॥
लक्ष्मीनारायणाकारा भवित्री ते मनस्स्थितिः । अपायान्संपरित्यज्य स्वीकृत्याप्यनुकूलताम् ॥
लक्ष्मीनारायणौ विश्वमिति भावे कृतस्थितिः । अपायान्संपरित्यज्य पातकान्भवसागरे ॥
दैवाद्वा यदि वा मोहादपायस्य परिप्लवे । भजमानाऽथ तावेव लक्ष्मीनारायणावुभौ ॥
शश्वच्चासुकरान्सर्वानुपायान् जहती स्वयम् । अलिप्ता करणे तेषां लोकसंग्रहचेतसा ॥
आकिञ्चन्यं समालम्ब्य बुद्ध्यैव दृढया स्वयम् । सर्वथा सर्वदेशेषु सर्वावस्थासु सर्वदा ॥
रक्षिष्यति हरिः श्रीमानाश्रितानिति निश्चयात् । आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे ॥
उपायं वृणु लक्ष्मीशं तमुपेयं विचिन्त्य च । इति ते सकलं भद्रे शास्त्रशास्त्रार्थतत्फलम् ॥
दर्शितं परमे तत्त्वं गोपाय स्वेन तेजसा ॥ इति ।

**अहिर्बुध्न्येन** नमश्शब्दव्याख्यानव्याजेनायमेव शास्त्रार्थः प्रपञ्चितः । तथा हि—

*प्रेक्षावतः प्रवृत्तिर्या प्रह्वीभावात्मिका स्वतः । उत्कृष्टं परमुद्दिश्य तन्नमः परिगीयते ॥
लोके चेतनवर्गस्तु द्विधैव परिकीर्त्यते । ज्यायांश्चैव तथाऽज्यायान्नैवाभ्यां विद्यते परः ॥
कालतो गुणतश्चैव प्रकर्षो यत्र तिष्ठति । शब्दस्तं मुख्यया वृत्त्या ज्यायानित्यवलम्बते ॥
अतश्चेतनवर्गोऽन्यः स्मृतः प्रत्यवरो बुधैः । अज्यायांश्चानयोर्योगः शेषशेषितयेष्यते ॥
अज्यायांसोऽपरे सर्वे ज्यायानेको मतः परः । नन्तृनन्तव्यभावेन तेषां तेन समन्वयः ॥
नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः । नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकः ॥
नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मकः । उपाधिरहितेनायं येन भावेन चेतनः ॥
नमति ज्यायसे तस्मै तद्वा नमनमुच्यते । भवान् मे हि परो नित्यमहं प्रत्यवरः सदा ॥
इति भावो नमः प्रोक्तो नमसः कारणं हि सः । नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् ॥
प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् । अतो वा नम उद्दिष्टं यत्तन्नामयति स्वयम् ॥

वाचा नम इति प्रोच्य मनसा वपुषा च यत् । तन्नमः पूर्णमुद्दिष्टमतोऽन्यन्न्यूनमुच्यते ॥
इयं करणपूर्तिः स्यादङ्गपूर्तिमिमां शृणु । शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् ॥
पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा । इत्यङ्गमुदितं श्रेष्ठं फलेप्सा तद्विरोधिनी ॥
अनादिवासनारोहादनैश्वर्यात्स्वभावजात् । मलावकुण्ठितत्वाच्च द्विक्रियाविहतिर्हि या ॥
तत्कार्पण्यं तदुद्बोधो द्वितीयं त्वङ्गमीदृशम् । स्वस्वातन्त्र्यावबोधश्च तद्विरोध उदीर्यते ॥
परत्वे सति देवोऽयं भूतानामनुकम्पनः । अनुग्रहैकधीर्नित्यमित्येतत्तु तृतीयकम् ॥
उपेक्षको यथाकर्म फलदायीति या मतिः । विश्वासात्मकमेतत्तु तृतीयं हन्ति वै सदा ॥
एवंभूतोऽपि शक्तः सन्मत्त्राणं भवितुं क्षमः । इति बुद्ध्याऽस्य देवस्य गोप्तृशक्तिनिरूपणम् ॥
चतुर्थमङ्गमुद्दिष्टममुष्य व्याहतिः स्वतः । उदासीनो गुणाभावादित्युत्प्रेक्षानिमित्तजा ॥
स्वस्य स्वामिनि वृत्तिर्या प्रातिकूल्यविवर्जनम् । तदङ्गं पञ्चमं प्रोक्तमाज्ञाव्याघातवर्जनम् ॥
अशास्त्रीयोपसेवा तु तद्व्याघात उदीर्यते । चराचराणि भूतानि सर्वाणि भगवद्वपुः ॥
अतस्तदानुकूल्यं मे कार्यमित्येव निश्चयः । षष्ठमङ्गं समुद्दिष्टं तद्विघातो निराकृतिः ॥
पूर्णमङ्गैरुपाङ्गैश्च नमनं ते प्रकीर्तितम् । स्थूलोऽयं नमसश्चार्थः सूक्ष्ममन्यं निशामय ॥
चेतनस्य यदा मम्यं स्वस्मिन्स्वीये च वस्तुनि । नम इत्यक्षरद्वन्द्वं तदा मम्यस्य वारकम् ॥
अनादिवासनारूढमिथ्याज्ञाननिबन्धना । आत्मात्मीयपदार्थस्था या स्वातन्त्र्यस्वतामतिः ॥
मे नेत्येवं समीचीनबुद्ध्या साऽत्र निवार्यते । नाहं मम स्वतन्त्रोऽहं नास्मीत्यस्यार्थ उच्यते ॥
न मे देहादिकं वस्तु स शेषः परमात्मनः । इति बुद्ध्या निवर्तन्ते तास्ताः स्वीया मनीषिकाः ॥
अनादिवासनाजातैर्बोधैस्तैस्तैर्विकल्पितैः । रूषितं यद्दृढं तत्तत्स्वातन्त्र्यस्वत्वधीमयम् ॥
तत्तद्वैष्णवसार्वात्म्यप्रतिबोधसमुत्थया । नम इत्यनया वाचा नन्त्रा स्वस्मादपोह्यते ॥
इति ते सूक्ष्म उद्दिष्टः परमन्यं निशामय । पन्था नकार उद्दिष्टो मः प्रधान उदीर्यते ॥
विसर्गः परमेशस्तु तत्रार्थोऽयं निरुच्यते । अनादिः परमेशो यः शक्तिमान्पुरुषोत्तमः ॥
तत्प्राप्तये प्रधानोऽयं पन्था नमननामवान् । इति ते त्रिविधः प्रोक्तो नमश्शब्दार्थ ईदृशः ॥ इति ।

अन्यत्राप्येवमनुसंधेयम् । एवं नानाविधेषु शास्त्रेषु प्रपञ्चितस्य शास्त्रार्थविशेषस्य संक्षेपोऽयम्—*सर्वधर्मान्परित्यज्येति । इत्थंभूतप्रपत्तिनिष्ठस्य न क्वचिदप्युपप्लवावकाश इति यथोक्त एव त्यागशब्दार्थः । किं च, सर्वो हि शास्त्रार्थः शिष्टानुष्ठानेनैवान्ततो व्यवस्थाप्यते । यथा स्मरन्ति—*अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्विति । ततश्च प्रपत्तिधर्मप्रतिष्ठापकानां प्राचामाचार्याणां च चर्यामविचार्येदमुपप्लवचोद्यम् । तथा हि—

$ श्लो. आत्यन्तिकी तथा भक्तिर्यथा देवे तथा गुरौ । तदुक्तिमन्त्रता तेन नित्यं स्वव्यपदेशनम् ॥ १३ ॥

$ **अत्र नृसिंहराजीयव्याख्या**—तथाहीत्यारभ्य रहस्यार्थसमर्पणमित्यन्तं प्राक्तनानां सतां कारिकाः ; इति शुश्रुमेत्यारभ्य सच्छिष्याचार्यलक्षणमित्यन्तं ग्रन्थकृद्वाक्यम् ; त्रिषु वर्णेष्वित्यादि तन्त्रवचनम् । अन्ये तु तथाहीत्यारभ्य सच्छिष्याचार्यलक्षणमित्यन्तं ग्रन्थकृद्वचनम् ; समर्पणमित्यन्तं प्राक्तनानां सांप्रदायिकार्थानुवादः ; श्लोकरचना तु ग्रन्थकृत्कर्तृकेत्याहुः । सांप्रदायिकास्तु तथाहीत्यारभ्य शिष्य इत्यभिधीयत इत्यन्तं प्राक्तनानां वचनम् ; तत्तद्वचनमपि पातितमिति वदन्ति ॥

भक्त्या तद्वस्तुतद्वास्तुप्रभृतिष्वपि मानना । गुरुवद्गुरुवर्गस्य नित्यमेवानुदर्शनम् ॥ १४ ॥
आरभ्य स्वगुरोरा च भगवत्तो यथागमम् । तत्तदाचार्यवंशस्यासावसाविति चिन्तनम् ॥ १५ ॥
अर्थस्वभावानुष्ठानलोकदृष्टिगुरूक्तिभिः । श्रुत्या स्मृत्या च संसिद्धं षट्कार्थावलम्बनम् ॥ १६ ॥
विशेषेणाविशेषेणाप्याकारत्रयशालिना । विशिष्टस्य परस्यैवोपायत्वेन परिग्रहः ॥ १७ ॥
निरुपाधिकशेषित्वतदभिव्याप्तभेदकैः । आजीवतत्त्वतद्दासत्रिविधात्माधिकत्वधीः ॥ १८ ॥
यदिच्छयैव यत्प्रीत्यै शासनं निग्रहादि च । तत्र निग्राह्यजातीयविसजातीयतामतिः ॥ १९ ॥
एकेतरसमस्तानां स्वनिष्ठैकार्थतास्थितेः । द्विष्ठे तदन्यशेषित्वे द्वैराज्यादिभयोज्झितिः ॥ २० ॥
प्रभादित्यप्रकारेण मिथोऽतिशयदायिनोः । तदन्यवस्त्वसंभाव्यस्वतोऽतिशयदर्शनम् ॥ २१ ॥
अनन्यदेवतानन्योपायतानन्यसाध्यता । शुद्धतत्परिवारेषु सपर्या भर्तृभृत्यवत् ॥ २२ ॥
आगुरोरन्यदेवत्वे वर्जनं निष्क्रियावधि । कृतप्रेषणनिर्देशन्यायेन फलचिन्तनम् ॥ २३ ॥
फलकोटिनिवेशेन परोपायप्रतिष्ठितैः । निजकर्मादि भक्त्यन्तं पराज्ञापरिपालनम् ॥ २४ ॥
न्यासविद्यानुरूपैस्तु व्याप्तैर्यदि वेतरैः । यदि वा स्तुतिगीताद्यैर्यथेष्टं चित्तरञ्जनम् ॥ २५ ॥
परप्रसादमात्रात्तत्साक्षात्कारादिसंभवे । प्राचीनोपायनिष्ठायामशैथिल्यं फलावधि ॥ २६ ॥
शुद्धेषु यद्वा मिश्रेषु संस्काराचारवर्त्मसु । अधिकारोपदेशादेरानुरूप्येण वर्तनम् ॥ २७ ॥
अन्तिमश्वासकालेऽपि शक्तितः सावधानता । अनुपप्लवपर्यन्तज्ञा[नि]नप्राधान्यसंग्रहः ॥ २८ ॥
अशेषजन्तुसौहार्दमात्ममाहात्म्यगोपनम् । अमानित्वादिसंपत्तिर्मानस्याप्यवधूननम् ॥ २९ ॥
चिरं शोधितपात्रेषु दीपवत्कृपया स्वया । आरुरुक्षुभिरध्वानं रहस्यार्थसमर्पणम् ॥ ३० ॥
इति शुश्रुम पूर्वेषां प्रपन्नानां महीयसाम् । अद्यापि क्वापि केषांचिदवन्ध्यं कालयापनम् ॥ ३१ ॥
तदेवमेतान्सत्त्वस्थानन्यानप्यनुपप्लवान् । प्रपन्नान्प्रतिसंधाय श्रद्धत्स्वोपायमीदृशम् ॥ ३२ ॥
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः । विभीषणोऽपि नन्वेवं तदाज्ञामन्ववर्तत ॥ ३३ ॥
त्रिवर्गकांक्षिणश्चान्ये स्वाभीष्टे साधनान्तरम् । त्यक्त्वा प्रपेदिरे नित्यं न तु वेलामलङ्घयन् ॥ ३४ ॥
तथा सात्यकितन्त्रे च प्रोक्तं भगवता स्वयम् । प्रपत्तिमधिकृत्यैव सच्छिष्याचार्यलक्षणम् ॥ ३५ ॥
त्रिषु वर्णेषु संभूतो मामेव शरणं गतः । नित्यनैमित्तिकपरो मदीयाराधने रतः ॥ ३६ ॥
आत्मीयपरकीयेषु समो देशिक उच्यते । आस्तिको धर्मशीलश्च शीलवान्वैष्णवार्चकः ॥ ३७ ॥
गंभीरश्चतुरो धीरश्शिष्य इत्यभिधीयते ॥ इति ।

यत्तु स्मृतिरूपमनुभवरूपं वेति विकल्प्य दूषितम्, तत्रापि वदामः—प्रार्थनाद्यात्मिका बुद्धिस्तद्विधिश्च लोके दृश्यमानौ तावद्दुरपह्नवौ । इमं महावदान्यं राजानमिष्टं प्रार्थयस्वेति हितकारिणो नियुञ्जते, तद्विधेयाश्च तथाऽनुतिष्ठन्ति, लभन्ते चाभिमतं फलम् । तद्वदिहापि मोक्षाख्यं फलमुद्दिश्य प्रार्थनादिरूपा बुद्धिस्तावद्विधीयत इति तदनुष्ठानं सुस्थितम् । अनुष्ठानानुपयुक्तं स्मृतित्वादिचिन्तनं तु गुणत्वद्रव्यत्वादिचिन्तनवदनादरणीयम् । तथाऽपि वदामः—तत्र हि स्मृतिपक्षे यद्यपि स्मृतिस्वरूपमात्रं स्वतः संभवं न विधेयम्; अविच्छिन्नसंततिरूपत्वे तूपासनसमाधिः; तथाऽप्यात्म-

समर्पणादिविशेषिता स्मृतिर्न स्वतः संभवतीति विधेयत्वमुपपद्यते । समर्पणादिकमपि शास्त्रावगतं स्मृतिमधिरोहेदिति चेत्; सत्यम्, न तु तत्कृतं भवति । यथा यागशब्दाभिलप्ये देवतोद्देशेन द्रव्यत्यागात्मके बुद्धिविशेषे कर्तव्यतया शास्त्रावगते स्मर्यमाणेऽपि न स बुद्धिविशेषः कृतो भवति; तथाऽत्रापीति न संकटं किंचित् । अत एवानुभवपक्षेऽपि न दोषः । यद्यपि साध्यसाधनभावांशस्यालौकिकत्वेन नास्मदादिप्रत्यक्षविषयत्वम्, तथाऽपि साधनस्वरूपस्य पुरोडाशादिवच्चास्मदादिकरणगोचरत्वेन तन्निष्पाद्यत्वं नानुपपन्नम् । असमर्थस्य समर्थमुद्दिश्य स्वाभिमतफलस्य तत्साध्यतयेष्टप्रकाशनं प्रार्थनमिति संक्षेपः । यत्पुनरुक्तम् गुरुलघुविकल्पानुपपत्तेश्चेति, तत्र व्यवस्थितविषयतया तदुपपत्तिरेव । अशक्ताधिकारत्वे त्वमुख्यत्वप्रसङ्ग इत्यपि प्रागेव दूषितम् । अशक्तिस्तु कीदृशीति विविच्य श्रूयताम्—इच्छावैचित्र्यं तावत् अन्ततः कर्मवैचित्र्यहेतुकमिति सार्वभौमोऽयं प्रवादः । ततश्च केनापि सुकृतवशेन मोक्षं तावदिच्छन्ति केचित् । तेऽपि तस्य फलस्य स्वरूपेणोपादातुमशक्यत्वात्तदुपायेषु शास्त्रचोदितेषु सदक्षरदहरादिविद्याविशेषेषु यदि शक्तिरसेत्स्यत्, ततस्तत्रैव प्रावर्तिष्यन्त । यदि पुनर्न सा समस्ति, तदा कश्चिदपरिस्खलितधैर्यः परंपरयोपकारिषु दीर्घकालनैरन्तर्यादरसेवनीयशास्त्रार्थस्रोतस्तीर्थेषु कर्मयोगादिषु यथाधिकारमवतरति । कश्चित्तु तन्द्रालुप्रकृतिः शोकेनैव महता सर्वप्रकारेण गृह्यते । लौकिकफलविशेषाभिलाषिषु चायं प्रकारो दृश्यते । स च तादृशमवसादमापन्नोऽपि फलेच्छातो न निवर्तते । तदवस्थस्य तस्य स्वावस्थाप्रकाशनपूर्वं वदान्यः समर्थः कश्चित् स्वाभिलषितमुपनाथनीय इति विदधाति शास्त्रमिति व्यवस्थितोऽयमधिकारो रोचते तत्त्वरुचिभ्यः । ईदृशस्य च प्रपन्नस्यैष्यति प्रारब्धकर्मफलसंसारखण्डे यावदनिष्टम् तावदपैति, शेषमनुवर्तते, पुरुषार्थमात्रप्रदायित्वात्पुरुषोत्तमस्य । ततश्च यावत्प्रारब्धं वा, यावत्तद्देहं वा, यावत्तत्क्षणं वा, इति प्रपन्नानां मोक्षावधिनियमे तदिच्छातीव्रत्वतारतम्यमेव सर्वज्ञसाक्षिकं प्रमाणमिति । अत एव आर्तदृप्तविभागोऽपि सिद्ध इति नानुपपन्नम् । प्रश्रयभयादिसदसद्भावाभ्यां वा आर्तदृप्तविभागः, प्रपत्तव्येन सर्वलोकशरण्येन दृप्तानामपि [फलाविनाभावाय] फलदायिना भयाभावायावश्यरक्षितव्यत्वाय च प्रपञ्चितः । देशकालावस्थाधिकार्यादिभेदेन गुरुलघुनोरेवाविशिष्टफलत्वं भगवत्पराशरादिभिरपि प्रपञ्च्यते । यथा—* शूद्रस्साधुः कलिः साधुः स्त्रियः साधुरित्यारभ्य

* ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥

इति । स्मरन्ति च गुरुतरद्वादशवार्षिकव्रततुल्यफलतां लघुतरस्याश्वमेधावभृथस्नानस्य । सम्राजो धर्मपुत्रस्य रत्नदानात् सक्तुप्रस्थस्य सक्तुदानमेव श्रेष्ठमिति होचुः । एवं लोकेऽपि दर्शनीयम् ॥

यत्तुल्यविकल्पपक्षे हेतुभूतगौरवसाम्यापादकविश्वासातिरेके प्रत्युक्तम्, तदयुक्तम्; निर्णीतशास्त्रप्रामाण्यस्य प्रत्यक्षितसमस्ततदर्थस्यापि क्वचिदर्थे वस्तुवैचित्र्यवशादघटितवदवभासमाने शास्त्रार्थान्यथाभावसंभावनायाः वासनाप्रवाहे मुहुर्मुहुः परिप्लवमानायाः संभवात्, केषाञ्चिदेवातिशयितपुण्यानां तदुच्छेदः, न तु सर्वेषाम्, तथैवान्यत्रापि दर्शनात् । एकोनसहस्रन्यायविदो हि पूर्वपक्षित्वं कक्षीकुर्वन्ति मीमांसकाः । निर्णयपर्यन्तत्वे निरर्थकत्वं गुरोः प्रसज्यत इत्युक्तमिति चेत्; सत्यम्; तथाऽपि विस्रम्भविशेषसदसद्भावावुपाधीकृत्यैव निर्णयः, *यस्य यावांश्च विश्वासस्तस्य सिद्धिश्च तावती इति नारदीयोक्तन्यायात् । एतदुक्तं भवति—येषां यावज्जीवं बृहस्पतिप्रभृतिभिरपि प्रतिवादिभिः [अ]संक्षोभ्यमाणानां प्रपत्तिशास्त्रार्थे शङ्काशङ्कुर्नाङ्कुरति, तेषां तदधिकारः । ईदृशस्य हि प्रपत्त्यधिकारिणो दुर्लभतमत्वमुक्तं सात्यकितन्त्रे—

* किं नु तस्य च मन्त्रस्य कर्मणः कमलासन । न लभ्यतेऽधिकारी वा श्रोतुकामोऽपि वा पुनः ॥ इति ।

ये पुनरुपायलाघवम्, तत एवानादिकालसंचितानन्तसमस्तदुःखहेतुजालोन्मूलनम्, क्षोदीयसामपि स्वात्मनां विधिशिवसनकादिदुरधिगमपदाधिरोहादिकं चानुचिन्त्य सततं संदिहते, तेषां तच्छङ्कादविष्ठगरिष्ठोपायानुप्रवेश इति। अतो यथाध्यवसायमधिकार इत्ययमप्यन्ततो व्यवस्थितविकल्पभेद एव। व्यासादीनां तु तथाविधशङ्काप्रसङ्गाभावादुपायान्तरशक्त्यशक्तिभ्यां विलम्बक्षमत्वविलम्बाक्षमत्वाभ्यामेव वा अधिकारव्यवस्थेति निर्बाधमेतत्। अतोऽविशिष्टफलत्वमप्युपपन्नम् ॥

यत्पुनरुक्तम्, प्रपत्तौ प्रारब्धस्यापि भङ्गाभ्युपगमात्फलाधिक्येन विकल्पासंभव इति, तदप्ययुक्तम्, तन्नियमाभावस्योक्तत्वात्। अस्तु वा प्रारब्धभङ्गोऽपि। मोक्षाख्यैकफलसाधनत्वे मिथो नैरपेक्ष्यात् विकल्पवाचोयुक्तिः। न ह्येकमेव फलं प्रति क्षिप्रकारिणो विलम्ब्यकारिणश्च समुच्चयः संभवति। निरपेक्षक्षिप्रकारिणि सिद्धे किं विलम्ब्यकारिणा। अतः परिगृहीतक्षिप्रकारिणः पश्चाद्विलम्ब्यकारिपरित्याग एव। एवं गृहीतविलम्ब्यकारिणोऽपि तच्छक्तस्य बुद्धिपूर्वोपक्रान्तपरित्यागायोगात् क्षिप्रकारी न परिग्रहयोग्यः। विलम्ब्यकारिण एव सहकारितया वचनबलात् कथंचिदुपादीयेतापि, उच्चावचसर्वाभीष्टसाधनतया तद्विधेः। क्षिप्रकारिणस्तु विलम्ब्यकारी न सहकारितयाऽप्युपादानमर्हति, नैरपेक्ष्यात्, ब्रह्मास्त्रबन्धन्यायात्, [मान]वचनविरोधाच्च। ईदृशविकल्पाधीननैरपेक्ष्यमपेक्ष्य सर्वधर्मपरित्यागोक्तिरिति ह्येके। तदेवं प्रपत्तिस्वरूपे न काचिदनुपपत्तिरिति सिद्धम् ॥

**लक्षणसमर्थनम्** ॥ यच्चान्यदुक्तं लक्षणानुपपत्तेश्चेति, तदपि बालिशभाषितम्; नहि लक्षणस्य दुर्वचतामात्रेण लक्ष्यमपह्नोतुं शक्यम्। तथा सति इक्षुक्षीरगुडादिमाधुर्यभेदस्य महदन्तरस्यापि दुर्वच[लक्षण]तामात्रेणापह्नवप्रसङ्गात्। न ह्येवंविधाः प्रतिवस्तुनियता विशेषास्त्वयाऽपि वक्तुं शक्यन्ते। तदुक्तं **दण्डिना**—

*इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्। तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥ इति।

सर्वलोकप्रसिद्ध्या तत्सिद्धिरिति चेत्तुल्यम्। भक्तिसाधारणानन्यतामात्रेणात्र प्रसिद्धेः पृथक्सिद्धिर्नास्तीति चेन्न; *यद्येन कामकामेनेत्यादिषु भक्तेः पृथगुपायत्वेनैव न्यासोपादानात्। ऐक्यप्रसङ्गपरिहारादौ चैतत् स्पष्टं भविष्यति। तथाऽपि लक्षणमन्तरेण लक्ष्यव्यवहारसिद्धिर्न स्यादिति चेन्न; व्युत्पत्तिवशादेव तदुपपत्तेः, बालादिव्यवहारवत्। व्युत्पत्तिरेव लक्षणमन्तरेणात्र न स्यात्, प्रत्यक्षादिमूलस्फुटप्रतीत्यभावादिति चेन्न; यत्किञ्चिदुपलक्षणमात्रेणापि प्रतीत्युपपत्तेः, वायसादिना देवदत्तगृहादिपरिज्ञानवत्। तच्च यद्यव्याप्तम्, इदमपि तच्छब्दार्थ इत्युदाहरणान्तरमपि पृथक् व्युत्पाद्यम्। यदि पुनरतिव्याप्तम्, इदं तु न तथेति स्वरूपतः प्रतिक्षेप्यम्, *वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः इति न्यायात्। अपिचाहुः—

*सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ इति।

अतो यत्रयत्रानन्यथासिद्धः प्रयोगः, तत्रतत्र मुख्यता; तत्रानुवृत्तनिमित्तसंभवे त्वेकार्थता, अन्यथाऽनेकार्थतेति विभागः। अनेकार्थेष्वपि एकशब्दसंग्रहवशाद्विधिनिषेधव्यवस्थासिद्धिः,

*शर्करां पादजिह्वाभ्यामक्षिरोगी विवर्जयेत्। स्नेहमाहारदारादौ प्रमेही परिवर्जयेत् ॥

इत्यादिवत्, तकारपूर्वे तकारोत्तरे च तपरसंकेतवच्च। इदं च तत्रतत्र तात्पर्यवशादवसीयते। ततश्च काककपोत-

वृत्तान्ताविरोधः, एकस्मिन्नेव वाचिकमानसिककायिकत्वाद्यविरोधश्च । नमस्कारेऽपि हि तथा त्रैविध्यं प्रसिद्धमेव। अत्र सौहार्दे स्वव्याप्त्यादिरहितं लक्षणं वदामः—अनन्यसाध्यस्वाभीष्टसाधनसमर्थवशीकरणं शरणागतिरिति ॥

यत्पुनर्गोप्तृत्वोपायत्वयोः क्षोदः, तत्र प्रपत्तव्येश्वरगतं गोप्तृत्वम् *रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथेत्यादिभिः प्रतिपाद्यते । *इदं शरणमज्ञानामित्यादिषु प्रपत्तिविषयश्च शरणशब्दः *उपायार्थैकवाचकः इति निष्कृष्यत इत्येके । प्रपत्तव्येश्वरविषय एवायं शरणशब्दो व्याक्रियते, तत्र गोप्तृत्वसमानार्थ एव, गोप्तृत्वबहिष्ठोपायत्वस्य भगवति दुर्निरूपत्वात् । कथं तर्हि रक्षितृत्वव्युदासेन *सांप्रतं त्वेष उपायार्थैकवाचकः इति निष्कर्ष इति चेत्, श्रूयतामवधानेन—उपायान्तरशून्यस्य हि प्रपदनाधिकारः । भगवतश्च रक्षितृत्वमुपायान्तरवति तद्रहिते च समानम् । प्रपद्यमानेन च स्वस्य निरुपायत्वं पुरस्कार्यम् । तदभिप्रायेण हि

*अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः । त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥

इत्यादिकमुच्यते । तदेवं गोप्तर्येव भगवति प्रपित्सोरुपायान्तरनिवृत्तिमभिसंधाय उपायत्ववाचोयुक्तिः । तेन निरपेक्षरक्षकत्वमनुसंहितं भवति। अतः *उपायार्थैकवाचकः इति च तत्परमेव । ततश्चाङ्गिप्रपत्तौ उपायभूताया भक्तेः स्थाने निवेश्य भगवानुपदिश्यते । भक्त्याऽपि हि भगवत्कृपैवोत्तम्भ्यते । सा चेदकिञ्चने प्रपन्ने स्वयमेवोत्तिष्ठेत, अतो भक्तिसाध्यां तामीश्वरस्वभाव एव निर्वर्तयतीति अनुपायानां स एवोपायः ॥

यत्तु *आनुकूल्यस्य संकल्पः इत्यादौ विकल्पितम्, तत्र विभागपरत्वं लक्षणपरत्वं च नाभ्युपगच्छामः । प्रकारप्रतिपादनपरत्वेऽङ्गतायां यदुक्तं नैरपेक्ष्यवादविरोध इति, तत् प्रागेव परिहृतप्रायम् । कर्मान्तराङ्गकत्वमात्रं हि प्रतिक्षिप्यते, न पुनः स्वाङ्गैरपि निराकाङ्क्षत्वमिष्यते । यत्तु प्रातिकूल्यवर्जनादिना भक्तेरपि दुष्करतमत्वमिति, किं तावता श्रूयमाण उपायः परित्यक्तुं शक्यः ? तथा सति अतिप्रसङ्गात् । तर्ह्यशक्ताधिकारत्वमस्य न स्यादिति चेन्न ; अन्यत्राशक्तस्यात्राधिकारात् । न पुनरस्मिन्नेवाशक्तस्याधिकार उच्यते । न ह्यनुकल्पेष्वाग्नेयादिस्नानेष्वप्यशक्तस्य तद्विधिः । *अवगाहनाद्यशक्तस्त्वाग्नेयादि समाचरेदिति हि स्मरन्ति ॥

यत्तु षडतिरिक्ताङ्ग्यसिद्धिरिति ; तत्तथैव, षट्स्वन्यतमस्य निक्षेपस्याङ्गित्वव्यपदेशात्, अङ्ग्यन्तरानुपलम्भाच्च । प्रार्थनायां शरणागतित्ववादस्तु प्रधानाङ्गभूतायास्तस्याश्शरणागत्यन्तर्भावमात्रादप्युपपद्यते । न हि तत्राङ्गित्वादिविभागोक्तिरस्ति । *न्यासः पञ्चाङ्गसंयुत इत्यत्र तु विभागः स्फुटतया नान्यथाकार्यः । **सात्यकितन्त्रे** च *कथं त्वां शरणं गच्छेत्कीदृशी शरणागतिरिति ब्रह्मणा पृष्टो भगवान् सकृज्जप्तव्यमन्त्रविशेषोपदेशपूर्वकं निक्षेपस्य प्राधान्यमदर्शयत्—*अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेदिति । अतो न न्यासेऽङ्गित्वव्यपदेश औपचारिक इति वक्तुं शक्यम् । तर्हि *अनन्यसाध्य इत्यादिलक्षणवाक्यं कथं संगच्छेतेति चेन्न; उपलक्षणपरतयाऽपि तदुपपत्तेः, पृथिवीत्वाद्युपलक्षणगन्धवत्त्वादिवत् । अभेदोपचारस्त्वन्तरङ्गतयाऽप्युपपद्यते । अन्यथा *षड्विधा शरणागतिरित्यनेनैवाङ्गान्तराणामपि पृथक् प्रपत्तित्वप्रसङ्गात् । अङ्गिनो न्यासस्य स्वरूपं तावद्दुर्ज्ञानमिति चेन्न, तत्स्वरूपव्याख्यानेनैव तद्व्यक्तेः ; यथा—

*तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता । केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥ इति ।

अयं तु मुमुक्षोरनुष्ठेयो निक्षेपः ; तत एव सामान्यस्वरूपं च प्रतिपन्नमिति न कश्चिद्दोषः । भवतु वा वचनान्तरवशात् प्रार्थनाया एवाङ्गित्वमन्येषां वा ; तन्निर्णयाभावेऽपि षण्णामनुष्ठानादेव शास्त्रार्थपौष्कल्यसिद्धिः । अत एव समुदा-

यस्य करणत्वेऽपि न दोषः। संभावितस्वभावपक्षे विभागवचनविरोधरूपभवदभिमतदोषवशादतिप्रसङ्गाच्च तन्नाद्रियामहे। तदेवं प्रपत्तेर्लक्षणतः प्रतिपत्तिसिद्धेरनुष्ठानसंभवान्न विधेयत्वहानिः।

**अनुष्ठानसमर्थनम्** ॥ यत्तूक्तमनुष्ठानदर्शनाभावादिति, तत्र किं प्रपत्तिमात्रस्यानुष्ठानं न दृश्यते? उत मोक्षार्थप्रपत्तेः? यद्वा साक्षान्मोक्षसाधनभूताया इति? न प्रथमः, विभीषणादिवृत्तान्तदर्शनात्। न द्वितीयः, क्षत्रबन्धुमुचुकुन्दादिकथाप्रसिद्धेः; * त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः इत्यादिसामान्यनिर्देशसामर्थ्यात्। न तृतीयः, संकीर्तनविशेषनिष्ठस्य क्षत्रबन्धोरनन्तरजन्मनि जातिस्मरत्वेऽपि भक्तियोगप्रकारप्रतिपादनादर्शनात्; प्रपदनस्य तु कण्ठोक्तेर्व्यवधानकल्पनस्य गुरुत्वात्, तद्विध्यनुसाराच्च। विधौ च सत्यनुष्ठानदर्शनाकाङ्क्षणमतिमन्दमेव। धर्मोऽपि लोकविद्विष्टश्चेत् परिहर्तव्यः; न चात्र कश्चिदपि लोकविद्वेष इत्यनुष्ठानदर्शननिरपेक्षो विधिरेवानुष्ठापयन् केन प्रतिबध्येतेति ॥

**विधिसमर्थनम्** ॥ यच्चोक्तं विधिरेव न दृश्यत इति, तत्किं विधिप्रत्ययाश्रवणात्? उत विधिपरत्वाभावात्? नाद्यः, अर्थवादादपि विधिकल्पनाभावप्रसङ्गात्। न द्वितीयः, * यो ब्रह्माणमित्यस्य विधिपरत्वात्। यत्तूक्तं मन्त्राणां विधिपरत्वे प्रमाणं नास्तीति; तदसत्, यच्छब्दाद्यनुपहतविधिशक्तीनां मन्त्राणामपि विधिपरत्वस्य स्थापनात्। प्रपञ्चितं चैतदस्माभिस्सच्चरित्ररक्षायां सुदर्शनादिधारणाधिकारे। यच्च * तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्यत्र प्रपत्तिविधिर्न दृश्यत इति; तत्रापि तात्पर्यतः प्रपन्नसंरक्षणं कारुणिकानां स्वभाव इत्येतत् सिध्यति। तावति सिद्धे कैमुतिकन्यायेन लब्धमपारकारुण्यजलधेरीश्वरस्य प्रपन्नसंरक्षणम्; ततश्च प्रपदनविधिवाक्यान्तरमप्यनुसृत्य तत्प्रपदनं रक्षणायैव भवति [इत्युक्तम्] ॥

यत्तूक्तम् * ओमित्यात्मानं युञ्जीतेत्यत्र युजेः प्रकरणगतन्यासार्थत्वेऽपि न्यासशब्दस्य प्रपदनैकान्त्याभावात् नाकरणिकानां गतिचिन्तनाद्यङ्गानां तत्रासंभवाच्च न प्रपदनपरत्वनिर्णय इति; तदप्यसत्; * तेषां तु तपसां न्यासमतिरेक्तं तपः श्रुतम्, * इदं महोपनिषदं देवानां गुह्यमुत्तमम् इत्यादिवचनैः न्यासविद्यागततत्तच्छब्दार्थशालिभिस्तामेव प्रत्यभिज्ञाप्य भगवच्छास्त्रसंहितासु स्पष्टतरमुपबृंहणात्।

ननु **अहिर्बुध्न्यसंहितायां** सर्वाधिकारतान्त्रिकमन्त्रान्तरविधानात् न्यासाङ्गतया श्रुतपुरुषाश्रययज्ञकल्पनस्य सुदर्शनात्मकभगवदाश्रयतया विपरिणामाच्च भेदसिद्धेः प्रत्यभिज्ञाभङ्गान्न तदुपबृंहकत्वमिति चेन्न; मन्त्रादिभेदेऽपि प्रपदनरूपत्वमात्रप्रत्यभिज्ञाभङ्गाभावेन तावन्मात्रोपबृंहणस्याविरोधात्, तत्तद्गुणविग्रहविभूत्यादिपरिकर्मितभगवदाकारानुरूपप्रपदनमन्त्रभेदस्याप्युपपत्तेः। विवाहोपनयनसीमन्तचौलादयोऽपि मात्रया भिन्नमन्त्रक्रियादयः कल्पसूत्रभेदेन दृश्यन्ते। नच तावता विवाहादिसंस्कारविशेषरूपत्वमपहाय कर्मान्तराणि भवन्ति। नचाधिकारिवैचित्र्यादन्यथा, यथा अर्चनादि तान्त्रिकसंज्ञिकविभवादिमन्त्रान्तरप्रभवं सर्वाधिकारं, तथा न्यासोऽप्यहिर्बुध्न्यसात्यकितन्त्रादिपठित[:]तान्त्रिकमन्त्रान्तरकरणकस्तद्योग्यस्सर्वाधिकार इत्यत्रापि न विरोधः। * वसुरण्यादिप्रणवपर्यन्तमन्त्रानुबन्धी तु न्यासो निषादस्थपत्यादिवद्विशेषवचनाभावादधीतवेदानां त्रैवर्णिकानामेवेति नापशूद्राधिकरणविरोधोऽपि। एवं वैदिकतान्त्रिकमन्त्रेष्वपि यथाविधानमधिकारात् तैरपि कैश्चित् स्वाधिकारानुरूपो न्यासो युक्तः। अमन्त्रकविधानेऽपि क्वचित्तथैव [तत्र] तन्त्रशास्त्रार्श इति। अत एव हि प्रपत्तिशास्त्रस्य वर्णचतुष्टयसाधारण्यमुक्तम् **श्रीसात्त्वततन्त्रे**—

* त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः। अमन्त्रमधिकारस्तु चतुर्व्यूहक्रियाक्रमे ॥ इति।

नच वचनविरोधे न्यायः। तथाऽपि प्रत्यक्षश्रुतिसिद्धन्यासविपरीताकारन्यासोपदेशो बाधित एव स्यादिति चेन्न तच्छायानुकारिणो न्यासान्तरस्य विधानोपपत्तेः तद्बाधायोगात्। श्रुतिशिरःशेखरेण स्वतः सर्वज्ञेन भगवता निखिलजगदुद्धरणाय प्रणीते विप्रकीर्णानन्तशाखनिगमसंग्रहात्मके पञ्चरात्रशास्त्रे प्रणीतानां श्रुतिद्वयविरोधवत् विकल्पतः स्थापनीयत्वात्। अत एव अङ्गभूतपुरुषविद्यायां यज्ञावयवादिकल्पनभेदोऽपि निर्व्यूढः। **भाष्ये** ब्रह्मविद्याङ्गभूतपुरुषविद्योक्तिरप्यविरुद्धा, प्रपदनस्यापि ब्रह्मविद्यात्वाविशेषात्। यदा तु *तस्यैवं विदुषो यज्ञस्येत्यादिकं न्यस्तात्मनो नैरपेक्ष्यप्रतिपादनार्थवादरूपमभिमतम्; तदा तु भगवत्सुदर्शनाश्रययज्ञादिकल्पनमपि नैरपेक्ष्यपरमिति फलतः समानार्थमेव। तथा च *पुरुषविद्यासूत्रस्य शाखान्तरगतपुरुषविद्यातस्तैत्तिरीयपुरुषविद्याया भेदमात्रे तात्पर्यम्, भाष्येऽप्यङ्गशब्दो विध्यङ्गार्थवादपरत्वेऽपि अविरुद्ध इति भाव्यम्। अत्यन्तानङ्गत्वाभ्युपगमादेव मन्त्रविशेषविधिश्चिन्तनीयगतिविशेषविधिश्चोपपन्न एव। तदावृत्त्यनावृत्ती तु तदङ्गकेन न्यासेन समानयोगक्षेमतया तन्निष्कर्षादेव निष्कर्षणीये। *सकृदेव प्रपन्नायेत्यत्रापि प्रपदनविध्यभावेऽपि, अभयप्राप्तिकामो मां प्रपद्येतेति वाक्यतात्पर्यस्य सिद्धत्वात्, रामगुणविशेषप्रतिपादनपरत्वेऽपि वाक्यस्य गुणविशेषश्रुत्यर्थापत्त्यैव प्रपदनीयत्वसिद्ध्या प्रपत्तिसिद्धेः, तस्यैव गुणस्य शास्त्रान्तरैः,

*स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः। अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः॥

इत्यादितत्रत्यवचनबलाच्च परव्यूहविभवादिसर्वावस्थासाधारणत्वात्, सर्वदा सर्वैः प्रपदनीयत्वस्यापि सिद्धौ सिद्धं भगवत्प्रपदनविधावेव *सकृदेवेत्यादिवाक्यतात्पर्यम्। आह च शरणागतपरित्राणस्य महापुरुषमात्रसाधारण्यम्—

*श्रूयते हि कपोतेन शत्रुश्शरणमागतः। अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः॥
स हि तं प्रतिजग्राह भार्याहर्तारमागतम्। कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः॥ इति।

एवं च *वेदोपबृंहणार्थाय तावग्राहयत प्रभुरिति वेदोपबृंहणतया प्रवृत्ते **श्रीरामायणे** वेदसारभूतोऽयमर्थश्चोपबृंहितो भवति। अत एव ह्याहुः भगवन्तं प्रति **यामुनाचार्याः**—

*ननु प्रपन्नस्सकृदेव नाथ तवाहमस्मीति च याचमानः। तवानुकम्प्यः स्मरतः प्रतिज्ञामिति।

ततश्च स्वातन्त्र्येण वा फलप्रदत्वं, धर्मान्तरानुबन्धेन वेत्येतावदवशिष्टम्; तत्र वक्तव्यमुक्तप्रायम्। वक्ष्यते चास्य श्लोकस्यायमर्थः—सकृदेवेत्यावृत्तिनैरपेक्ष्यमुच्यते। प्रपन्नायेति प्रार्थनांशो विवक्षितः। तवास्मीत्यात्मनिक्षेपः। यद्वा प्रपन्नायेत्यनेनैव साङ्गशास्त्रार्थस्संगृहीतः। तवास्मीत्यनेन त्वौचित्यात्तवाहं स्यामिति फलप्रार्थनमभिप्रेतम्। उपलक्षणं चैतदभिमतस्य फलान्तरस्य। अथवा प्रपन्नायेति मानसं, याचत इति वाचिकं प्रपदनमुच्यते। *अभयं सर्वभूतेभ्यो ददामि—सर्वभूतनिमित्तस्य भयस्य निवृत्तिं ददामीत्यर्थः॥ *सर्वपापेभ्यो मोक्षयिष्यामीतिवत्॥

केचित्तु सर्वभूतनिमित्तभयाभावं सकृदेव ददामीत्यन्वयमिच्छन्ति। तत्रावधारणसामञ्जस्येऽपि व्यवहितान्वयत्वमयुक्तम्। पक्षान्तरे चावधारणं प्रगुणमेव, *सकृदेव प्रपन्नस्येत्यादिशास्त्रप्रपञ्चितप्रपदनावृत्तिप्रतिषेधज्ञापनेन अधिकोपकारात्। सकृदेवाभयं ददामीत्युक्ते तु सहसा समस्तभयनिवृत्तिरुक्ता स्यात्; तच्च सर्वभूतेभ्योऽभयं ददामीत्येतावति निर्दिष्टेऽपि फलतीति मन्दप्रयोजनं तदभिधानम्। प्रस्तुताया विभीषणकृतायास्सकृत्प्रपत्तेः फलाविनाभावप्रतिपादनं चोचितम्। *ननु प्रपन्नस्सकृदेवेति भगवद्यामुनाचार्यवाक्ये च सकृदेवानुकम्प्य इत्यन्वयः प्रसज्येत; तच्चात्यन्तास्वरसम्; न चान्यथा

तैरनूदितमिति वक्तुं वाग्देवताऽपि क्षमते । अतो यथास्थानमेवान्वय इति अन्तर्वर्ती संवित् । *अभयं सर्वभूतेभ्य इत्यत्र प्रकृतानुपयोगमुपसर्जनान्वयमुपपदविभक्तिं च कारकविभक्तिसंभावनायाममृष्यमाणाः कतिचन सर्वभूतेभ्य इति चतुर्थीं व्याचक्षते । तत्र च पक्षे प्रपत्तेस्सर्वाधिकारत्वं फलिष्यति । वाक्यभेदस्तु विवरणकारप्रपञ्चितप्रक्रियया पञ्चमीपक्षेऽपि भवन् प्रकृतोपकारभूयस्त्वादिबलाच्चतुर्थीपक्षे सोढव्यः ; एकवचनबहुवचनयोस्सामानाधिकरण्यासंभवात् । संभवत्यां गतौ [अगत्या] वाक्यभेदाश्रयणं चायुक्तम् । नच सर्वभूतेभ्य इति गोबलीवर्दन्यायात् प्रपन्नेतरविषयम्, येनैकवाक्यता स्यात् ; प्रपन्नेतरेषामभयप्रदानं च प्रकृतानुपकारकं प्रमाणविरुद्धं च । अतो न विषयव्यवस्था शक्या । अतः प्रपन्नायाभयं ददामि, तच्च सर्वभूतेभ्य इति वाक्यभेद एव । प्रपन्नायाभयप्रदानं सिद्धं कृत्वा वा तदनुवादेन सर्वभूतेभ्य इति विधिः । यत् सकृदेव प्रपन्नाय तवास्मीति च याचते अभयं ददामीति, तत् सर्वभूतेभ्यः, न केवलमनपकारिभ्यः सुग्रीव-विभीषणादिभ्यः, अपि त्वाद्रापराधेभ्यो रावणवायसादिभ्योऽपीत्युक्तं भवति । तथाच स्वयमेवाह—

*विभीषणो वा सुग्रीव यदि वा रावणः स्वयम् । आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥ इति ।

भवतु वाऽत्र श्लोके या काचिद्योजना ; प्रपत्तिसंज्ञकः शीघ्रलाभहेतुर्निष्प्रमादः स्वाभिमतफलोपायस्तावदिह सिद्ध इत्यलमतिक्षोदेन ॥

*सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज,

*मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसि ह्यकुतोभयम् ॥

इत्यनयोस्तावद्विध्यभावचोद्यं बाधिर्यकृत्यम् ; प्रथमपुरुषवन्मध्यमपुरुषेऽपि विधिशक्तेरनपायात्, अर्जुनाद्युद्देशेन प्रपत्ता-वप्यर्थतस्सर्वसाधारण्यात् । अन्यथा एवंविधेषु सर्वेष्वप्यनाश्वासप्रसङ्गात् । परित्यागांशे तु विध्यनुवादविकल्पानुपपत्त्यादयः परिहृता एव । अङ्गप्रपत्तिविधिरित्यादि तु परिहरिष्यते—*सर्वगुह्यतममित्यादिना । पूर्वप्रस्तुतशास्त्रसारार्थविषयेण कथ-मस्य संगतिरिति चेत्तदवहितमनाः शृणु—

*इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतमं मया । विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥

इत्युक्तेऽर्जुनस्य विषादमालोक्य स भगवान् वासुदेवश्चिरकालसाध्यदुष्करापवर्गोपायश्रवणेन शोचतोऽस्याविलम्बितफलप्राप्ति-सापेक्षतत्साधनसमर्थपुरुषविषयमुपायान्तरम् *सर्वगुह्यतममित्यादिनोपदिशति । तत्र भूयश्शब्दः श्रवणावृत्तिमात्रपरः, तावत्येव तदुपपत्तेः, प्रयुक्तेश्च । अत एव नात्रास्वारस्यम् । *मन्मना भवेत्यादिना तु वक्ष्यमाणप्रपत्तिनिष्ठस्य मध्यमां वृत्तिमनुतिष्ठतः बुद्धिविशेष उच्यते । यावज्जीवमनुष्ठेयेषु सर्वेषु नित्यादिकर्मसु मन्मना भव—भगवानेव स्वशेषभूतेन मया स्वात्मानं प्रीतं कारयतीत्यनुसंधत्स्व । मद्भक्तः—सर्वशेषिणः सर्वभूतसुहृदः समाराधनमिदमिति प्रीतिपूर्वकमनुतिष्ठ । मद्याजी—नित्यकर्मस्वनुप्रविष्टान् देवानृषीन् पितॄन्मदात्मकान्यथावत्पश्यंस्तद्यजनेऽप्यनन्ययाजी भव । मां नमस्कुरु—मां प्रति वाङ्मनःकायैः प्रह्वीभव । एवंभूतो वक्ष्यमाणप्रपत्तिनिष्ठस्त्वं सर्वपापेभ्यो मया मोचितो मामेवैष्यसीति । एवं च नवमा-ध्यायोक्त एव शब्दः प्रकृतोपयुक्तं प्रमाणान्तरसिद्धमर्थं प्रतिपादयतीति न प्रत्यभिज्ञाविरोधः । स्पष्टश्चैवं प्रकृतोपयोगः ॥

यद्वा, *यथेच्छसि तथा कुर्वित्यस्यानन्तरमर्जुनस्य विषादमवलोकयन् स भगवान् पूर्वोक्तेष्वर्थेष्वेतदेव हिततमम्, अत इदमेव त्वया कर्तव्यमित्यनिर्धारणाद्वा प्रागुक्तानां दुष्करत्वादेर्वा शोकोऽस्य संवृत्त इति विवेक्तुं प्रथमं प्रागुक्तेष्वर्थेषु सारमंशं निष्कृष्य *सर्वगुह्यतममित्यादिना श्लोकद्वयेनाह । तावताऽप्यनुपशान्तशोकमर्जुनमाशुकारिसर्वाधिकारसर्वेष्ट-

साधनसर्वानिष्टनिवर्तनक्षमब्रह्मास्त्रतुल्यसकृत्कर्तव्यसुकरनिष्प्रतिबन्धोपायोपदेशेन *मा शुच इति पर्यवस्थापयतीति किं नोपपद्यते ? एवं सत्युपदिष्टे प्रपत्तिशास्त्रार्थेऽर्जुनस्य निष्ठा कथं न जायत इति चेत्; किं श्रुतं सर्वं श्रोतारोऽनुतिष्ठन्ति, प्रतिसंदधते वा ? विस्मृतार्थस्य ह्यर्जुनस्य पुनः प्रतिबोधनाय अनुगीतावतारः । तर्हि *स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तवेत्यादिकं कथं सङ्गच्छते ? इत्थम्—कर्मयोगज्ञानयोगभक्तियोगप्रपदनाख्येषु चतुर्ष्वपि पर्वसु वर्णाश्रमधर्माणामपरित्याज्यत्वं हि स्थापितम् । ततश्च युद्धाख्यस्य क्षत्रियधर्मस्यार्जुनाय सर्वावस्थायामवश्यानुष्ठेयत्वमुपदिष्टम् । तच्चैवं विजानताऽर्जुनेनाधिकारानुरूपे यत्र क्वचिन्मोक्षोपायपर्वणि स्थास्या[मः]मि, सर्वावस्थानुवृत्तः स्वधर्मस्तावत्परिपालनीय इति मन्वानेन युद्धे प्रोत्साहयन्तं भगवन्तं प्रति *करिष्ये वचनं तवेति स्वस्य युद्धायोद्योग आवेदित इति सर्वं पूर्वापरं सुसङ्गतम् । अतः स्वतन्त्रप्रपत्तिविधिपरोऽयं श्लोकः । भाष्यानुगुण्येनाप्यस्य योजनान्तरं वक्ष्यामः । अयमत्र सर्वविधिपरामर्शसिद्धोऽनुष्ठेयार्थः । अविलम्बिताभिमतफलसिद्धौ स्वस्योपायान्तरशून्यतामालोच्य महता शोकेनावसीदन् पुरुषस्तत्फलसिद्ध्यर्थमल्पशक्तेः स्वस्य दुष्कराण्युपायान्तराणि परित्यज्य तत्फलप्रदानोचितगुणगणविशिष्टे परस्मिन् सकृत्प्रार्थनामात्रेणापेक्षितं दास्यतीति संबन्धशीलसहकारिविशेषादिपरामर्शातिशयेन महान्तं तावत् फललाभमीश्वरेणाप्यक्षोभणीयं विश्वासमुपजनय्यानुकूल्यसंकल्पप्रातिकूल्यवर्जनाभ्यामपायजाते विरताभिसन्धिः आकिञ्चन्यानन्यगतित्वप्रकाशनपूर्वकं गोप्तारमेवोपाय[ान्तर]स्थाने निवेशयन्निष्टप्राप्तिपर्यन्तानिष्टनिवृत्तिलक्षणामात्मरक्षां सकृदपेक्ष्य स्वात्मानं द्रव्यान्तरवन्निश्शङ्कं निक्षिप्य मद्रक्षणे गुणादिप्रेरितस्समर्थो रक्षकः स्वावद्यनिवृत्त्याद्यर्थं स्वयमेव प्रवर्तत इति विस्रब्धः, स्वयं निर्भरस्सन् अन्तःपुरपुरन्ध्रीन्यायेनानन्यो वर्तेत । सचायं न्यायः श्रीमत्सुन्दरकाण्डहृदयवेदिनां सहृदयानां सुस्पष्टः ।

श्लो. अप्रातितः परिहरन् स्वपरैः स्वरक्षां तादर्थ्यधीपरिहृतस्वपरार्थभावः ।
अन्योपभोगविरहादनघः प्रपन्नः भुंक्ते स्वभोगमखिलं पतिभोगशेषम् ॥ ३८ ॥ इति ।

यत्तु *शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ इत्यत्र शरणागत्यर्थवादमात्रत्वमिति; तत्तथाऽस्तु मा वा; तथाऽपि फलकरणदर्शनात्तेनैव तद्विधिसिद्धिः । अन्यथा तदर्थवादस्यैवात्र निष्प्रयोजनत्वप्रसङ्गः । अविहिते शास्त्रार्थेऽर्थवादनैरपेक्ष्यात् वाक्यान्तरविहितप्रपत्त्यनुवादेन रात्रिसत्रार्थवादवत्फलविधिरयम् । नच *पर्णमय्यादिवत् फलवादमात्रम्, उपासनप्रयोगबहिर्भावस्य वक्ष्यमाणत्वात् । फलसिद्धेर्व्यवधानसहत्वं चात्र परिहरिष्यते । अत एव *तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणा इत्यादिप्रतिबन्दीनिस्तारसिद्धिः । **सात्यकितन्त्रे** प्रपत्त्यध्याये स्फुट एव सकृत्कर्तव्यसमन्त्रकनिक्षेपविधिः—

*अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति ॥ इति ।

तन्मूलश्रुतौ चान्यनिरपेक्षस्स्पष्ट एव विधिः—

*ग्रसेत् संहारसमये जगच्च बदराण्डवत् । लीलया यस्तु भगवान् तं गच्छ शरणं हरिम् ॥ इति ।

**निषेधभङ्गः** ॥ तदेवमीदृशैर्वचनशतैः स्फुटव्यवसितस्य प्राक्तनैर्विशिष्टाधिकारिभिरनुष्ठितचरस्य प्रत्यक्षिताभिमतफलस्य अद्ययावदतिप्रसिद्धधर्मभावानुष्ठानस्य निषेधोऽपि न संभवति । यश्चासौ निषेध उक्तः *नान्यः पन्था इति; सोऽप्युत्सर्गापवादनयेन विहितव्यतिरिक्तविषयत्वात्, विधेश्च अनुपदमेव समर्थितत्वात्, प्रकृतविद्या(न्य)व्यतिरिक्तविद्यादिवन्न्यासविद्यामपि न निषेद्धुमलम् ॥

यद्वा, *तमेवं विद्वानमृत इह भवतीत्येतदपि सर्वविद्यापूर्वरङ्गतत्त्वज्ञानमात्रपरत्वाभावेऽपि सर्वविद्यास्वरूपमेव ब्रह्मवेदनात्मत्वेनाविशेषादभिधायोत्तरपूर्वाघाश्लेषविनाशलक्षणमिहामृतत्वं वदतीति न कश्चिद्दोषः। एवंशब्दश्च प्रकृत-माहात्म्येन सह तत्तद्विद्यावेद्याकारं सर्वमुपस्थापयति। किंच *नान्यः पन्था इत्यत्र प्रकृतमपि वेदनमन्यत्वस्य प्रतियोगि-त्वेन नान्वेति; अपितु तमिति प्रकृतः परमपुरुष एव; तस्मात्परमपुरुषादन्यः पन्था न विद्यते, स एव तु पन्था इति वाक्यार्थस्तु प्रपत्तेरत्यन्तान्तरङ्गभूतः। श्वेताश्वतरास्तु *महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तक इति तमेव महापुरुषमधी-यानास्तस्यैवान्यत्वप्रतियोगित्वमवधारणनिर्देशेन स्पष्टमामनन्ति—*वेदाहमित्यारभ्य *तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनायेति। तस्मात् *अमृतस्यैष सेतुरिति न्यायेन परमपुरुषस्यैवामृतत्वोपायत्वमिह प्रतिपाद्यते। वेदनेतरनिषेधभाष्यं तु फलिताभिप्रायेणेति **अधिकरणदर्पणे** दर्शितमस्माभिः। अतो नैवंविधेषु विद्यान्तराणामिव प्रपदनस्यापि निषेधप्रसङ्गः॥

यत्तु *नाविरतो दुश्चरितादित्यादिना समाधिरहित[स्य]साधननिषेधसिद्धिरिति; तदपि न, प्रज्ञान शब्देन मोक्षोपायतया तत्तत्प्रकरणोदितसमस्तविद्यासंग्रहात्। ततश्च तत्तदनुरूपचित्तसमाधानादेरत्र विवक्षिततया प्रपदनविरोधा-भावात्। प्रपदनमपि स्वसिद्ध्यनुरूपं स्वविषयगोचरं चित्तसमाधानविशेषमपेक्षते, तत्सिद्ध्यनुरूपां च बाह्यान्तर-करणोपरतिम्। अन्यथा कारणाभावे कार्याभाव इति स्यात्। दुश्चरितविरतिस्तु भगवदाज्ञानुवर्तिषु सर्वेषु सामान्यतः प्राप्ता; प्रपन्ने तु सर्वपापपरिहाराशक्तिनिमित्तशोकाविष्टे परमैकान्तिनि कैमुतिकन्यायसिद्धा। अत एव प्रपन्न मधिकृत्यैवमादिष्टम्—*मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेदिति। देशकालादिदोषसंभवं तु दुश्चरितमुषस्ताविव चाक्रायणे सप्तर्षिविश्वामित्रादिष्विव च सर्वेष्वपि धार्मिकेषु संभवतीति न प्रपन्नस्य कश्चिद्विशेषः। अतोऽनया श्रुत्या न प्रपदननिषेधः फलति॥

यत्तु *नाहं वेदैरित्यादिना समस्तहेत्वन्तरनिषेधपूर्वकमनन्यया भक्त्यैव प्रातिरुच्यत इति; तत्रापि न तावत् वेदनतपोदानेज्यावत् प्रपदनमपि कण्ठोक्त्या प्रतिक्षिप्तम्। नचानन्ययेत्यनेन सामान्यतस्तस्यापि निषेधः, विधिबलादेव तत्संकोचस्योक्तत्वात्। अपिच नात्रानन्ययेत्युपायान्तरं व्यवच्छिद्यते; प्रयोजनान्तरादिनैरपेक्ष्यस्य विवक्षितत्वात्, *पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया, इत्यादिवत्। नच तत्रापि तथैवेति वाच्यम्। ऐश्वर्याद्यर्थिभक्तेरेव व्यव-च्छेद्यत्वेन प्रकरणादिसिद्धत्वात्। तथाऽपि च तत्र भाष्यम्—*अनन्यचेतास्सततमित्यनन्यया भक्त्या लभ्य इति। एतेन *नायमात्मा प्रवचनेन लभ्य इत्यादिश्रुतिरपि निर्व्यूढा। *भक्त्येकलभ्य इत्यादिषु तूपायान्तरमेव साक्षान्निषिध्यत इति चेत्; सत्यं तथाऽपि संकोचः पूर्वोक्तः। अपि चात्र प्रीतिमात्रलभ्यो भगवानिति तत्सौलभ्ये तात्पर्यम्। तच्च प्रपदनस्यापि साहाय्यमाचरति। एवं हि तत्रतत्रोच्यते—

*पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु।
भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः॥ इति।

किंच फलार्थित्वमन्तरेण[ापि] न सर्वत्रोपायाधिकारः, फलं चात्र परं ब्रह्मैवेति प्रपन्न[स्यैव]स्यापि परमात्मनि रागावश्यंभावात्, तावत एव भक्तिशब्दप्रवृत्तिनिमित्तत्वात्, समाधिरहितोऽपि प्रपन्नो भक्त एवेति को विरोधः? अतो न क्वचिदपि श्रुत्यादिसिद्धस्य न्यासाख्योपायस्य निषेधसं[भवा]भावनावकाश इति॥

**ऐक्यभङ्गः** ॥ ऐक्यान्यप्युक्तानि सात्यकितन्त्राहिर्बुध्न्यसंहितालक्ष्मीतन्त्रादिषु पृथक्त्वेन प्रपञ्चनेन निरस्तानि । किंच मोक्षोपायविधिवाक्यावगतवेदनं, प्रपदनोपासनरूपं सर्वं परविद्यावर्गं संग्रहीतुमलम्, तत्रान्यतरपरित्यागे हेतुं न पश्यामः । अनावृत्तविशेषे संभवति गौरवादावृत्तं विशेषं परित्यजेत्; अथ गौरवमनुमत्य तत्र न पर्यवस्येत्, तदा तद्वैयर्थ्यप्रसङ्गादनावृत्तं नासीदेदिति चेत्; तन्न, अधिकारिविशेषप्रतीतिनियमेन गुरुलघुव्यवस्थायाः स्थापितत्वात् । यथा स्नानादिसामान्यशब्दास्तत्तदधिकारिविशेषोचितं तं तं स्नानादिविशेषं गुरुं लघुं च संगृह्णन्ति, तथाऽत्रापि । यथा *वसन्ते वसन्ते ज्योतिषा यजेत, *ज्योतिष्टोमेन स्वर्गकामो यजेतेति विनियोगपृथक्त्वेनावृत्तानावृत्तज्योतिष्टोमयोः ज्योतिष्टोमशब्दः, तथाऽत्राप्यावृत्तानावृत्तयोः प्रपदनोपासनरूपयोः ब्रह्मविद्ययोः वेदनादिशब्दपर्यवसाने को विरोधः? अधिकारिभेदश्चात्रापि दर्शितः । ननु वेदनशब्दस्य तस्यामेव विद्यायां विहितैः विशेषैः विशेषितत्वात् न न्यासावलम्बनसामर्थ्यमस्तीति चेत्, तर्हि सिद्धं नस्समीहितम् । तत्र वचसां तदुपासनपर्यवसानान्न्यासस्य च विद्यान्तरवत् स्वशब्देनैव साङ्गस्य विधानात् । तथाच सति शब्दार्थपर्यालोचनादेव न्यासस्यापि वेदनरूपत्वं सिद्धमिति न कश्चिद्दोषः । एवं च सति *नाना शब्दादिभेदादिति सूत्रमत्रैव निरङ्कुशप्रसरम् । अतो नात्र सूत्रभाष्यादिविरोधः । नच कुमतिमतावतारः; सकृत्करणेऽपि वाक्यार्थज्ञानादतिरिक्तत्वात्, ईशेशितव्यादिविशेषजालगर्भत्वात्, कर्माद्यङ्गकत्वाभावेऽपि नित्यनैमित्तिकाद्यनुपरोधस्य दर्शितत्वात्, अधिकार्यन्तरसद्भावेनासकृदावृत्तानुसंधानप्रतिक्षेपाभावाच्च ॥

यत्तु भगवत्पराशरादयो योगमेव विदधिरे दधिरे चेति; तदपि तच्छक्तिमधिकृत्योक्तेः, स्वयमपि तच्छक्तत्वाच्चाविरुद्धम् । न चात्यन्तं भगवत्पराशरादिभिरपि प्रपत्तेरनुक्तिः; *परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्, *कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ *सोऽहं त्वां शरणमपारमप्रमेयमित्यादिषु प्रपत्तेरपि तैः बहुलमभिधानात् । अङ्गाङ्गिविषयतया भक्तिशास्त्रार्थैक्यं भक्त्यविशिष्टार्थत्वं वा तत्रतत्रास्त्विति चेन्न; सर्वत्र तथेति नियन्तुमशक्यत्वात् । अङ्गाङ्गिभावबलादेव एतत्सिद्धिरिति चेन्न, विनियोगपृथक्त्वेनाङ्गत्वस्वतन्त्रत्वयोर्यथाधिकारमुपपत्तेः । अतोऽङ्गस्याप्यधिकारिविशेषविषयतयाऽङ्गितुल्यफलत्वेन विकल्पोऽपि युक्त एव । यदि तत्र गुणान्तरमपेक्षितमिति मन्यसे, तच्चात्रापि भूयिष्ठमस्त्येव—विलम्बाक्षमत्वम्, उपायान्तरभीरुत्वं, भगवद्गुणवत्ताप्रकर्षानुसंधाननिमग्नत्वमित्यादि । अतः फलतारतम्यमत्राप्रयोजकमेव । अथवा तदप्यत्र विद्यते, प्रपत्तेरविलम्बितप्रापकत्वेन फलातिशयात् । अथ लघीयसः फलन्यूनत्वमपेक्षितमिति, तदप्यसत्; दयालोस्सार्वभौमस्य चिरसेवारहितेष्वपि आर्तेष्विवाकिंचनेष्वनन्यगतिषु प्रपन्नेषु भगवतोऽपि दयालोर्दयनीयत्वातिशयसंभवेन अविलम्बितफलत्वोपपत्तेः । यः खल्वीश्वरमेव तादृशमौपनिषदमभ्युपेयात्, स कथमस्मिन्नर्थे सहृदयो विमन्येत । तथा च स्मर्यते—

*सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते ॥ इति ।

*यद्येन कामकामेनेत्यादि च प्रतिसंधानीयम् । यत्पुनरुक्तम्, अङ्गाङ्गिभावे संभवत्यष्टदोषदुष्टो विकल्पो न न्याय्य इति, तदपि बालिशजल्पितम्, विनियोगपृथक्त्वस्य स्थापितत्वात् । अन्यथा विद्यान्तराणामपि परस्परमङ्गाङ्गिभावप्रसङ्गात् न कचिदङ्गमिति, सर्वत्र तथाऽतिप्रसङ्गात् । सूत्रितं च तेषामाश्रमकर्मणामङ्गत्वं स्वतन्त्रत्वं च—*विहितत्वाच्चाश्रमकर्मापि, *सहकारित्वेन चेति ।

यत्तूक्तं भजनप्रपदनशब्दौ स्थानतस्समानार्थतया क्वचित् प्रयुज्यमानौ दृश्येते इति, तदसिद्धम् ; प्रपदनशब्दस्य लक्षणतो भिन्नार्थस्याप्यङ्गिनाऽनतिदूरविप्रकर्षात् अजहल्लक्षणया तत्स्थाने प्रयोगोपपत्तेः। यथा राजकुलं गच्छति, राजानमभिगच्छति, राजानं सेवते, राज्ञि वर्तत इति। अत एवाश्वमेधिके श्रीवैष्णवधर्मशास्त्रे सहप्रयोगाद्भिन्नार्थत्वमवगम्यते—

*तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च भावतः। युष्मदीयान् परान् धर्मान् पुण्यान् कथय मेऽच्युत ॥

इति। यदि च स्थानबलादैक्यमवश्यमभ्युपगन्तव्यम्, तथाऽपि सुदृढनिरूढशब्दार्थभेदाबाधेन जहल्लक्षणयाऽप्युपचार एवाङ्गीकार्यः। अन्यथा क्वचिदपि उपचारवृत्तिर्न स्यात्। न क्वचिदङ्गाङ्गिभावेनोपचारवृत्त्या समानार्थत्वाश्रयणमात्रेण सर्वत्र तथेति नियमः, अतिप्रसङ्गात्। अतो नैकैरप्युक्तरूपैः स्वतन्त्रप्रपत्तिप्रतिक्षेप इति ॥

**अशक्तिभङ्गः** ॥ यत्तु सर्वव्यापारोपरमापेक्षणादशक्यरूपत्वमुक्तम्, तदसत्; तथाविधोपरमस्यानभ्युपगमात्। नहि यः कश्चिदपि प्रपन्नोऽत्यन्तनिर्व्यापारो दृष्टः श्रुतो वा। *सर्वधर्मान् परित्यज्येत्यादिकं तु प्रागेव निर्व्यूढम्। प्राञ्चोऽपि भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिरित्याहुः; नतु सर्वप्रवृत्तिनिवृत्तिरिति। भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिश्च स्वरक्षणार्थं स्वातन्त्र्येण स्वव्यापारो वा, पुरुषान्तराश्रयणं वा, दुस्सहब्रह्मविदपचारादि वेति तदखिलं परित्याज्यमेव, ब्रह्मास्त्रबन्धराजसेवाराजान्तरङ्गविरोधादिन्यायात्। यानि पुनः स्वभावप्राप्तानि निमीलनोन्मीलनादीनि, शरीरधारणमात्रहेतुकानि विहिताप्रतिषिद्धानि यानि लौकिकानि कर्माणि, यानि च यावच्छरीरं यथाशक्ति भगवत्समाराधनत्वबुद्ध्या तत्प्रीत्यर्थं सर्वैरप्यवश्यमनुष्ठेयानि नित्यनैमित्तिककर्माणि, न तेभ्योऽप्युपरमोऽपेक्षित इति नाशक्योपदेशत्वमवगच्छामः। निवृत्तिसापेक्षतयाऽत्र प्रपत्तौ निवृत्त्युपचारः ॥

यत्पुनः प्रवृत्तिरूपात् भक्तियोगान्निवृत्तिरूपस्य प्रपदनस्य दुष्कर[तम]त्वादशक्तं प्रत्यशक्यतमोपदेशेन प्रपत्तिशास्त्रनैरर्थक्यमुक्तम्, तदप्यविशेषज्ञतामभिव्यनक्ति, लोकसिद्धत्वात् तत्सौकर्यस्य। तथा हि—सार्वभौमेन राज्ञा जिघांसितः कश्चिदपराधी कण्ठावसक्तकर्पटखण्डो दैन्यमभिव्यञ्जयन् भयचकितस्सगद्गदं रक्षापेक्षी स्वात्मानं पादयोः समर्पयति। कश्चित्तु प्रभूतप्राभृताद्युपकरणस्तुतिनतिसेवाञ्जनादिभिरात्मानमनन्ययन्नाराधयति। तत्रोभयोरपि राज्ञः क्षमा निर्विशेषा दृश्यते; प्राक्तने वा समधिका। तद्वदत्रापि न्यासोपासनयोस्सौकर्यदौष्कर्ये भावयन् समाश्वसिहि। कथं तर्हि *उपायस्सुकरश्चायं दुष्करश्च मतो ममेत्यादि वचनमिति चेच्छ्रूयतामवधानेन—अनन्तापराधसन्ततो हि जन्तुरतिलघीयसा सकृत्कृतेन केनचिन्मानसेन कायिकेन वाचिकेन समुचितेन वा व्यापारेण कथमवधूतनिखिलापराधो विधिशिवसनकादीनामपि मनोरथपथातिलङ्घि पदमविलम्बितमधिरोक्ष्यामीति प्रवृद्धबुद्धिदौर्बल्यः सुदूरमपसृत्य गुरुतरोपायं मृगयमाणो विद्यते। कश्चित्तु महीयसा भागधेयेन भगवति कमलापतौ पुण्डरीकाक्षे सर्वातिशायिसौशील्यवात्सल्यादिगुणगणमनुसंदधानः किरातकपोतसुमुखक्षत्रबन्धुमुचुकुन्ददत्त्वष्टृशुनश्शेफद्रौपदीविभीषणवायससुग्रीवराक्षसीप्रभृतिशरणागतवृत्तान्तशीलनशिक्षितान्तःकरणो निश्शङ्कमभिजिगमिषति। अतस्तथाविधगुणाध्यवसायादेर्दुर्लभत्वात् तत्प्रशंसार्थमेवोक्तम् *उपायस्सुकरश्चायं दुष्करश्च मतो ममेत्यादिकम्। अत एव ह्युच्यते—

*सकृदेव हि शास्त्रार्थः कृतस्संसारतारकः। नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते ॥ इति।

अतः किंचित्प्रति दुष्करत्वोक्तिः, किंचित्प्रति च सुकरत्वोक्तिः; अतो नाशक्योपदेश इति संक्षेपः ॥

**अख्यातिभङ्गः** ॥ यत्पुनरख्यातिवशेन शङ्कासंभवान्महाविश्वासासिद्धेः प्रपत्तिस्वरूपासिद्धिरित्युक्तम्, तदपि तबैवाख्यातिमापादयति । तथा हि—किमख्यातिशब्देन प्रपदनस्वरूपस्यैवा[प्र]सिद्धिर्विवक्षिता ? उत पृथगुपायत्वस्य ? न प्रथमः, प्रागेव प्रतिक्षेपात् । न द्वितीयः, अहिर्बुध्न्यसंहितादिषु पृथक्त्वेनैव स्पष्टमुपदेशस्योक्तत्वात् । न चात्र भूयसां न्यायावतारः; भूयोभिरनुपदिष्टत्वमात्रेण कतिपयोपदिष्टप्रतिक्षेपायोगात्, अन्यथा अतिप्रसङ्गात्; प्रपत्तेः पृथगुपायत्वं नास्तीति तु भूयोभिरनुपदेशात् । इदं च विध्यभावचोद्यपरिहारेण दत्तोत्तरमिति किमत्र प्रयासेन ॥

यत्तु सांख्ययोगादिष्वस्यानुपादानम्, किं तेन, सर्वैः सर्वस्यानुपादानात् ? न हि कापिले कर्मयोगः, पातञ्जले वा ज्ञानयोग उपादीयते । नच तावता तयोः प्रतिक्षेपः । नचात्यन्तं वयं सांख्यादीननुवर्तामहे । ये तावदीश्वरमेवापह्नुवते, इच्छन्तोऽपि प्रतिफलनसमानं तस्यैश्वर्यमभिमन्यन्ते, कथं तान् यथावस्थितेश्वरप्रपदने प्रमाणीकुर्मः ? प्राचेतसपराशरपाराशर्यशुकशौनकादयस्तु परमर्षयो निबध्नन्त्येव भूयसा प्रबन्धेषु प्रपत्तिमिति किमन्यैः कार्तान्तिकप्रायैः मितंपचैर्मुनिभिः ? उक्तं च **श्रीविष्णुचित्तैः** श्येनकपोतीयकपोतोपाख्यानकाकविभीषणक्षत्रबन्धुमुचुकुन्दगजेन्द्रद्रौपदीतक्षकशतमखादिषु मोक्षार्थतया क्षणकालनिर्वर्त्यप्रपदनार्थदर्शनात् अबधिराणां तत्र मुख्यत्वमिति । ततश्चाब्रह्मतिर्यगतिप्रसिद्धमेव प्रपत्तिरूपमुपायमप्रसिद्धमभिमन्यमानः धर्ममेव नूनमपह्नोतुमीहते । आह च भगवान् व्यासः धर्माधर्मप्रसिद्धेर्दुरपह्नवताम्—

* इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये । आचण्डलं मनुष्याणामलं शास्त्रप्रयोजनम् ॥ इति ।

**संप्रदायविरोधभङ्गः** ॥ यत्तु संप्रदायविरोधत इति, तदपि गुरुजनवरिवस्यादवीयसे देवानांप्रियाय रोचते । प्रपदनस्य पृथगुपायत्वसंप्रदायो नास्तीति वदतां किं तत्र उपदेशानुष्ठानपारंपर्यं नास्तीति मतम्, उत निबन्धपारंपर्यं नास्तीति ? नाद्यः, असिद्धेः; श्रुतिस्मृत्याद्यनुसारेण यथोक्तार्थोपदेशानुष्ठानयोर्महात्मसु तथाविधैः परिदृश्यमानत्वात् । न द्वितीयः, निबन्धनाभावेऽप्युपदेशादिपारंपर्येणापि धर्मसंप्रदायस्यान्यत्रापि सिद्धेः; अन्यथा विशिष्टाचारविलोपप्रसङ्गात् । अविरोधात् परिग्रहाच्च तदङ्गीकार इति चेत्; तुल्यमत्रापि, तयोरुभयोरपि पूर्वमेव समर्थितत्वात् । विपरीतनिबन्धनात् विरोध उक्त इति चेन्न, वैपरीत्यासिद्धेः । तथा हि—न तावत् भाष्यादिष्वङ्गप्रपत्तिवचनमात्राद्वैपरीत्यम्, उभयाकारयोगित्वेन प्रकरणोपयुक्तान्यतराभिधानोपपत्तेः । नच स्वातन्त्र्यं नास्तीति क्वचिदुक्तम् ॥ **श्रीमद्गीताभाष्ये** तु * सर्वधर्मान् परित्यज्येत्यस्यानेकार्थाभिधानात् अन्यतरानादरस्सूच्यते । अर्थस्वभावाच्च योजनाद्वयपरामर्शिनाम् अतिरहस्यतया गोपितं प्रपत्तिस्वातन्त्र्यं स्वयमेवोन्मज्जतीत्याचार्यमुखादधिगच्छामः । द्वितीयायां तु योजनायां भक्तिसाधनैर्गुरुतरैर्मिथस्तारतम्यवद्भिः अनन्तैर्विकल्प्यमाना प्रपत्तिः कण्ठोक्तसमानन्यायतया मुक्तिसाधनभूतया भक्त्याऽपि विकल्प्येतेति अर्थतो गभीरमभाष्यत । सर्वपापेभ्य इति ह्युपायविरोधिवत् प्राप्तिविरोधिपापवर्गमपि संग्रहीतुमलम् । सर्वधर्मानित्यपि च साधनसाधनवत् साक्षात्साधनमपि संगृह्णीयादिति च । यच्च * तमुवाचेति श्लोके भाष्यम्—*आत्मपरमात्मयाथात्म्यतत्प्राप्त्युपायभूतकर्मयोगज्ञानयोगभक्तियोगगोचरम्, *न त्वेवाहं जातु नासमित्यारभ्य *अहं त्वा सर्वपापेभ्य इत्येवमन्तं वच उवाचेति; एतदपि चरमश्लोकस्य सामान्यतः स्वतन्त्रपरतन्त्रप्रपत्तिसाधारण्यादिति मन्तव्यम् ॥ * कृत्स्नस्य गीताशास्त्रस्य सारार्थौ भक्तियोग इत्येते अर्थाः प्रतिपाद्यन्त इत्यष्टादशाध्यायप्रारंभभाष्यमङ्गाधिकारे प्रपत्तिं प्रत्यपि भक्तेः प्राधान्यात् स्वतन्त्रप्रपत्तिशास्त्रार्थेऽपि मुख्यार्थामुख्यार्थभेदेन वैषम्याच्चेति न विरुद्धम् । अपिच वचनान्तरेषूपात्तेषु नान्यथासिद्धिश्शङ्कितुं शक्यते, अधिकारिविशेषविवेकपूर्वकमव्यवहितोपायत्वस्य व्यक्तमुक्तत्वात् । अतो यद्यपि भाष्यादिषु यथाधिकारं

गुरूपायप्रवर्तनाधिकृतेषु *न बुद्धिभेदं जनयेदिति न्यायेन न प्रपत्तिः स्वतन्त्रतयोक्ता ; तथाऽपि गद्यरूपायां स्तुतौ *शरीरपातसमये तु केवलं मदीययैव दययाऽतिप्रबुद्ध इत्यादिना व्यक्तमेव तस्याः पृथगुपायत्वमुक्तम् । तत्र गुणवश्यता-परिहरणरूपमायातरणपरभक्त्यादिप्रार्थनं तु फलोपायसाधारण्यान्नान्यतरपक्षपाति । एतेन *भक्तिमपि प्रयच्छ मे इत्यादिक-मपि निर्व्यूढम् ॥ भक्तेश्चात्र फलत्वं स्वरूपतस्सुखरूपत्वात् ; तच्च विषयवैशिष्ट्यात् । नचोपायकोटिनिविष्टभक्तिरूपफलान्तर-प्रार्थनायामुपायान्तरफलान्तरत्यागलक्षणप्रपत्तिनिष्ठाविरोधः ; प्रपन्नगताया भक्तेः प्रपत्त्यविच्छेदहेतुत्वेन तदनुप्रवेशात् । नच सकृत्कृतस्योपायत्वे किमविच्छेदेनेति वाच्यम् । तस्य स्वकार्यकरणे बाधाभावस्यापेक्षितत्वात् । बाधितज्ञानस्यापि संस्कारकरणवत् प्रतीकोपासनानामारोपगर्भाणां तेनाकारेण बाध्यानामपि फलप्रदानवच्च किं न स्यादिति चेन्न ; *महा-विश्वासपूर्वकमिति विशेषविधानात् । तादात्विकमहाविश्वासेनापि तच्चरितार्थमिति चेत्सत्यम् ; तदेव तु विश्वासविशेषणं महत्त्वं यावज्जीवं विमर्शकाले बाधाभावे पर्यवस्यतीत्यनुश्रूयते । तच्च महत्वं यद्यपि स्वरूपत उपादातुं न शक्यते ; तथाऽप्यादावेव यथावस्थितप्रपत्तिशास्त्रार्थनिश्चयसंस्कारदृढिमसंपादनद्वारा तत्कार्यस्य विश्वासमहत्वस्यापि विधिविषयता युज्यते । तर्हि तदर्थं भक्त्यपेक्षणमपि निरर्थकमिति चेन्न ; तस्यापि तस्या इव तत्फलत्वात् ; संस्कारदार्ढ्यसंदेहाद्वा तदविच्छेदाय तत्प्रार्थनोपपत्तिः । ज्ञानपूर्त्या ह्यनन्योपायत्वं भक्तिपूर्त्या चानन्यप्रयोजनत्वं स्थिरीभवति । अस्तु वा तदनुपयोगः, तथाऽपि न भक्तिप्रार्थनस्यानन्यताविरोधित्वम्, भगवदानुकूल्याभयादिप्रार्थनात्मकत्वात्, गद्योक्तेस्तस्यैव च काष्ठाप्राप्तस्य निःश्रेयसरूपत्वेन तदनुप्रवेशात् ; निवृत्तसमस्तारिष्टस्य निरतिशयानन्दब्रह्मानुभव एव हि मोक्षः । यद्वा महापराधवर्गः प्रपत्तिमपि प्रतिबद्धुमलम् । स च परिपूर्णे ज्ञाने भक्तौ च सत्यां ब्रह्मविद्वेषादेरसंभवाद्दूरोत्सारितो भवतीति, तदर्थं तत्प्रार्थनम् । बुद्धिपूर्वोत्तराघस्य भगवत्प्रीतिप्रतिबन्धकत्वमुपासनवत् न्यासेऽपि समानमेव । अत एव प्रपन्नस्याचारलङ्घनमधिकृत्योच्यते—*प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनादिति । तथा निषिद्धकाम्यपरिग्रहे च निष्ठाहानिरुच्यते—

*एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा । उपायापायसंयोगे निष्ठया हीयतेऽनया ॥ इति ।

नच तर्हि सकृत्कृतस्य फले व्यभिचारशङ्का स्यादिति वाच्यम् ; उपायापायसंप्लवरहितेषु निश्चितफलत्वात्, अन्येष्वपि प्रायश्चित्तस्य तत्रैव प्रतिपादनात्—

*अपायसंभवे सद्यः प्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत् ॥
उपायानामुपायत्वस्वीकारेऽप्येतदेव हि ॥
प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे । मामेकां देवदेवस्य महिषीं शरणं व्रजेत् ॥ इति ।

यथोक्तं **श्रीरामायणे**ऽपि—

*कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात् ॥ इति ।

तथा *विदितस्स हि धर्मज्ञश्शरणागतवत्सलः । तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ इति ।

तथा *प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा । अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ इति ।

उक्तं च **श्रीसात्वते**विभवमूर्तिपरिच्छेदे लक्ष्मीपतिध्याने लक्ष्मीपुरस्करणमनायासशीघ्रसंसारतरणकारणमिति—

*यामालम्ब्य सुखेनेमं दुस्तरं हि गुणोदधिम् । निस्तरन्त्यचिरेणैव व्यक्तं ध्यानपरायणाः ॥ इति । ऐतिहासिकश्चायमर्थः । यथोक्तं भगवता शौनकेन—*वाचः परं प्रार्थयिता प्रपद्येन्नियतः श्रियमिति । एवमन्यदप्यनुसंधेयम् । तर्हि प्रतिसमाधाने विद्यमाने किं भक्त्येति चेन्न ; *प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । नच वाच्यम् *शरीरपातसमये तु केवलं मदीययैव दययाऽतिप्रबुद्ध इत्यादिकमुपायभूतभक्तियोगपर्यवसानमन्तिमप्रत्ययमुदाहरतीति, पूर्वस्मिन् वाक्ये हि *आध्यात्मिकाधिदैविकाधिभौतिकदुःखगन्धरहितस्त्वं द्वयमर्थानुसंधानेन सह सदैवं वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्स्वेति यावच्छरीरपातं प्रपत्तिप्रतिसंधानपारंपर्यस्यैव प्रतिपादितत्वात्, अत्रापि च *केवलं मदीययैव दययेत्युपायान्तरनिषेधव्यक्तेश्च । उक्तं च गद्यान्तरेऽपि—*एवमवस्थितस्याप्यर्थित्वमात्रेण परमकारुणिको भगवान् स्वानुभवप्रीत्योपनतैकान्तिकात्यन्तिकनित्यकैंकर्यरतिरूपनित्यदास्यं दास्यतीति विश्वासपूर्वकं भगवन्तं नित्यकिङ्करतां प्रार्थय इति । नचैवमाशङ्कनीयम्, यावच्छरीरपातं भगवत्साक्षात्काररहितस्य तदानीमेव झटिति कथं तत्संभव इति ; ईश्वरस्वभावस्यापर्यनुयोज्यत्वात् । श्रीसात्वते च सप्तमपरिच्छेदे व्रतिनां स्वयंव्यक्तसैद्धवैष्णवरूपभगवत्क्षेत्रवासमधिकृत्योक्तम्—

*दुष्टेन्द्रियवशाच्चित्तं नृणां यत्कल्मषैर्वृतम् । तदन्तकाले संशुद्धिं याति नारायणालये ॥ इति ।

तर्हि, *स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः । धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥

ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् । अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥

इत्यादि कथमिति चेत्, इत्थम्—*वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामित्यादिन्यायेन मुमुक्षूणां योगिनामितरेषामपि करणग्रामविलयदशायां क्षणमात्रं सुषुप्तिवत् काष्ठपाषाणसन्निभत्वस्योत्क्रान्तिपादे समर्थितत्वात् । यद्वा प्रपन्नस्य शास्त्रार्थतया स्वप्रयत्नसाध्यान्तिमप्रत्ययनैरपेक्ष्यं काष्ठपाषाणसन्निभमित्यनेनोच्यते । हार्दे परमात्मनि सुषुप्तवद्विश्रान्तस्य तदनन्तरं *तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकयेत्युक्तरीत्या अतिप्रबुद्धत्वादिकथनम् । अथवा शरीरपातसमये त्वित्यत्रान्तिमक्षणेऽपि विस्रम्भशैथिल्याभावः, फलान्तरश्रद्धागन्धराहित्यं चाभिप्रेतमिति मन्तव्यम् । यच्चेदमुक्तं भाष्यकारैरेव भगवदाराधनप्रयोगं प्रक्रम्य प्रपत्तिपरा गद्यस्तुतिस्समाराधनाङ्गतया विनियुक्तेति, तावता न प्रपत्तेः स्वातन्त्र्यमपैति । यथा प्रणवादीनां क्वचित्कर्माङ्गतया विनियुक्तानां विनियोगपृथक्त्वेनापवर्गादिसाधनत्वम् ; तद्वदिहापि, विरोधाभावात् । नचैवं मोक्षार्थप्रपत्तेरावृत्तिप्रसङ्गः, समाराधनप्रयोगमध्यपातिन्याः प्रपत्तेः पत्रपुष्पफलतोयादिवत् भगवदिज्यार्थतया पुरुषार्थत्वाभावात् । ननु प्रपत्त्यैव चेत् सकृत्कृतयाऽपवर्गो लप्स्यते, किं बहुवित्तव्ययायासमनस्समाधानादिसाध्येन प्रपत्त्यङ्गकेन प्रतिदिवसमाप्रयाणादनुवर्तनीयेन भगवदाराधनप्रयोगनिर्बन्धेनेति चेत् ; हन्त ! प्रपन्नाः किमपवर्गार्थं भगवन्तमाराधयन्ति ? अपि तु अनन्तगरुडविष्वक्सेनादय इव भगवच्छेषतैकरसाः शास्त्राविरुद्धेन स्वरूपानुरूपेण भगवदाराधनेन कालं क्षिपन्ति । पञ्चमहायज्ञादिवच्च देवतार्चनं नित्यम् । तच्च ब्रह्मचर्यप्रभृति ; यथोक्तं मन्वादिभिः—

*स्नात्वा नित्यं शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनं चैव समिदाधानमेव च ॥ इति ।

भगवदर्चनमेव त्वनन्यात्मनाम् । तच्च

*गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः । य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥

इत्यादिना **महाभारतादि**सिद्धम् ॥ अनन्ययजनमेव हि ज्ञानिनां भगवद्गीतामोक्षधर्मादिषु प्रपञ्चितम् । उक्तं च **श्रीमद्भागवते** पुराणे—* नान्यं देवं नमस्कुर्याद्विष्णुपादाब्जसंश्रयः इति । इदं च नित्यं भगवदर्चनं शौनकबोधायनाद्युक्तम् तावन्मात्राधिकारिणाम्। विशिष्टाधिकारिणां तु अनन्यभगवच्छास्त्रसिद्धं, तच्च प्रपत्तिगर्भमिति, तदिह *परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्य इत्यारभ्योक्तम् । तत्र च स्वतन्त्राङ्गप्रपत्त्योर्वाचकविशेषाभावात् * अखिलेत्यादिकं सप्रकारानुसन्धानं मनोवृत्त्युपसंहारार्थतया विनियुक्तम् । एवं हि तत्राह—* यथावस्थितस्वरूपरूपगुणविभूतिलीलोपकरणविस्तारमनुसंधाय तमेव शरणमुपगच्छेत् * अखिलेत्यादिनेति । अनन्तरमप्याह * एवं शरणमुपगम्य तत्प्रसादोपबृंहितमनोवृत्तिरिति । यद्यप्यविशिष्टफलसाधनगुरुलघुविकल्पोऽनुपपन्नः ; तथाऽप्यविशिष्ट एवोपाये गुरुलघुभेदश्शास्त्रीयः, तत्फलसंकल्पाख्यसहकारिभेदमाश्रित्य तदुपपत्तेः । एकैकस्यैव हि कर्मणः स्वरूपत एकरूपस्यैव विनियोगपृथक्त्वेन संकल्पभेदाद्विद्याङ्गत्वाश्रमाङ्गत्वस्वर्गाद्यर्थत्वादिकं मीमांसामहे । एवं भक्तियोगेऽपि द्रष्टव्यम् । महावदान्यश्च हि पुरुषोत्तमो यद्यदपेक्षितं तत्सर्वम् अपरीक्षितपात्रदेयोपायतारतम्यस्सकृत्प्रार्थनामात्रेण कल्पद्रुम इव कौपीनं कनकराशिं च विशृंखलं विश्राणयतीत्यानुश्रविकोऽयमर्थः ॥ आह च भगवान् **शौनकः**—

* रत्नपर्वतमारुह्य यथा रत्नं नरो मुने । सत्त्वानुरूपमादत्ते तद्वत्कृष्णान्मनोरथान् ॥ इति ।

अतः प्रपत्तेरपि स्वरूपतो विशेषाभावेऽपि फलापेक्षाभेदेन सर्वफलसाधनत्वान्मोक्षार्थतया समाराधनाद्यर्थतया च विनियोगो न विरुध्यते ।

अतिसूक्ष्मो विशेषो यथासंप्रदायमनुसंधेयः, यमेनमधिकृत्य शरण्यश्शरणागतपरित्राणाय तद्विरोधिनिरसनोन्मुखस्सापराधशरणागतसहोदरपरित्यागिनं शक्रतनयं प्रत्याह * सूक्ष्मः परमदुर्ज्ञेयस्सतां धर्मः प्लवङ्गमेति । इदं च सूक्ष्मत्वं नानाविधेषु धर्मेषु एकस्मिन्नपि वा विनियोगपृथक्त्वेन च समानम् । अतः प्रपत्तिस्वातन्त्र्ये न क्वचिद्भाष्यकारोक्तिविरोधः । उक्तेनैव न्यायेनान्येषामप्याचार्याणां प्रबन्धाः पूर्वापरपरामर्शेन प्रकृताविरुद्धतया प्रतिसन्धेया इति न कश्चित्संप्रदायविरोध इति ॥

**उपसंहारः** ॥ तदेवं स्वरूपाद्यनुपपत्त्यभावात् न्यासोपासनशास्त्रार्थभेदस्सिद्धः । अङ्गाङ्गिभावोऽप्यधिकारिविशेषविषयः । अदूरविप्रकर्षात् भक्तिप्रपत्त्योर्व्यतिकरितप्रयोगः । कर्माद्यनङ्गत्वात् श्रीमतो नारायणस्य गुणगणमनुसंदधतां व्यवसायविशेषादेः स्वरसतया च लघूपायत्वसिद्धिः । आसंसारं प्रसिद्धेः श्रुत्यादिबलाच्च नातिशङ्कावकाशः । संप्रदायश्च योगसंप्रदायवदुपदेशानुष्ठानप्रबन्धैरधिकारिष्वद्यत यावदनुवर्तत इति स्थिते, केषुचिदधिकारिषु प्रपत्तिः भक्तिसाधनान्तरैर्विकल्प्यमानाभक्तिद्वारा मोक्षं साधयति ; केषुचिद्गुणविशेषवत्सु स्वयमेव । यथा कर्मयोगः केषांचित् ज्ञानयोगद्वारा आत्मावलोकनसाधनम् ; अन्येषां तु सुकरोपायसक्तानां विशिष्टतया व्यपदेश्यानां ज्ञानयोगव्यवधानमन्तरेण, तथेहापि । धर्मानधिकारिस्त्रीशूद्रादिकमुद्दिश्य मोक्षोपायतया शरणागतिविधानमिति वदन्तस्तु प्रागेव निरस्तप्रायाः ; त्यागविधिपक्षे तेषां प्राप्त्यभावेन प्रतिषेधायोगात् ; अर्जुनोद्देशेन वचनप्रवृत्तेरसङ्गतत्वात् । नासावर्जुनः स्त्री, शूद्रादिर्वा । ततः एतेषु त्यागानुवादपक्षोऽपि निरस्तः ; नचार्जुनस्य सर्वधर्मानधिकारित्वं सिद्धम् । एतेन * मुक्त्वा चान्द्रायणं चरेदित्यादिवद्विहितकर्मपरित्यागप्रायश्चित्तार्थमात्रं शरणागतिविधिरिति वादोऽपि प्रत्युक्तः ; धर्मप्रवणेऽर्जुने सर्वधर्मपरित्यागरूपनिमित्तानुदयेन नैमित्तिकशास्त्रासङ्गतेः, तदाभिमुख्येन प्रवृत्तस्य वचनस्य तदन्यविषयत्वकल्पनायोगात्, * मा शुच

इत्येतच्छोकापनोदनासङ्गतेश्च। सर्वधर्मान् परित्यज्यापि मदेकशरणागतिं कुर्यादिति शरणागतिप्रशंसामात्रतात्पर्यमिति पक्षोऽपि मा शुच इत्येतदसङ्गतेर्निरस्तः; निराकाङ्क्षे वाक्ये अपिशब्दाध्याहारायोगाच्च। एतेन नित्यनैमित्तिकानपि धर्मान् परित्यज्य मद्यजनैकशेषमदेकध्यानादिपरो भवेति यादवप्रकाशोक्तोऽपि निरस्तः; भावार्थान्तरस्फोरत्वेन पूर्वश्लोकार्थप्रत्यभिज्ञाविरहात्, समाख्यादिभेदाच्च भेदसिद्धेः, प्रशंसामात्रस्य प्रयोजनमान्द्यात्, अधिकस्य चानुपदेशात्। अतस्समस्ताभिमतसाधनस्वतन्त्रप्रपत्तिविषय एवायं श्लोकः॥

सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना। सस तस्याहमेवेति चरमश्लोकसंग्रहः॥ इति।

अङ्कूरत्परभक्तिकुङ्कुमलताकाश्मीरकेदारिकां जीवातुं जरदन्धपङ्गुबधिरप्रायात्मनां प्राणिनाम्।
निष्प्रत्यूहषडङ्गयोगनिगमप्रासादनिःश्रेणिकां नित्यं चेतसि धारयन्तु सुधियो निक्षेपरक्षामिमाम्॥

विवृतमिह रहस्यं यन्मया गोपनीयं स्खलितमपि यदीषद् भूयसा वा तदेतत्।
निजमहिमविशेषप्रेममात्रेण नाथाः क्षमत इति विचिन्त्य क्षन्तुमर्हन्ति सन्तः॥
गुरुचरणसपर्यास्वाद्वैदेशिकानां प्रलपितमवधूय प्राक्तनेनाध्वनैव।
व्यवृणुत परमार्थं वेङ्कटेशः प्रजानां निगमगिरिनिगूढं न्यासविद्यानिधानम्॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु
**॥ निक्षेपरक्षा समाप्ता॥**

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः॥

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्तदेशिकविरचिता

# ॥ सच्चरित्ररक्षा ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

## ॥ सुदर्शनपाञ्चजन्यधारणविधिर्नाम प्रथमोऽधिकारः ॥

चक्रादिलाञ्छनभृतस्सुधृतोर्ध्वपुण्ड्रान् न्यस्तात्मनो भगवतश्चरणारविन्दे।
तद्भुक्तभोगरसिकांस्त्रिदशेन्द्रवन्द्यान् पुंसः प्रमाणशरणान् शिरसोद्वहामः॥

यतिपतिचरणाम्भोरुहरजःप्रभावेन सन्निवृत्तरजाः। विदधाति वेङ्कटेशः स्थिरामिमां सच्चरितरक्षाम्॥

सद्भिर्धृतेषु सततं विमतिं दधुर्ये पत्युस्समस्तजगतां परमायुधेषु।
तैरेव तान्निगमशाणनिघर्षदीप्तैस्तर्कात्मना परिणतैः प्रहरामि मूर्खान्॥

इह कतिचिदतिचिरसमुचितविविधदुरितावलीमलीमसमनसः परमपुरुषचरणारविन्दवैमुख्यमुषितदर्शनास्सुदर्शनादि-धारणे विमन्यन्ते; मन्यन्ते च—*चोदनालक्षणोऽर्थो धर्मः; न चासौ प्रत्यक्षादिवेद्य इति प्रत्यक्षसूत्रे स्थितम्। द्रव्यादीनां स्वरूपतः प्रत्यक्षाणामपि धर्मत्ववेषेणाप्रत्यक्षत्वाच्चोदनैकसमधिगम्यत्वं न विरुध्यते। यथाऽऽहुः—

*द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता॥
श्रेयस्साधनता ह्येषां नित्यं वेदात्प्र[मी]तीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ इति।

ततश्च श्रुतिभिस्तदनुरोधिभिस्स्मृतीतिहासाद्यैस्तदविरोध्याचारैश्च धर्मत्वमवसेयम्।

तत्र न तावच्चक्रादिधारणविधायिनीरनन्यपराः श्रुतीरधीमहे। अखिलेषु च पठितेषु वाक्येषु न विश्वसिमः। न च कल्पसूत्रेष्वपि सामान्यतो वा प्रतिनियताधिकारिविषयतया वा तद्विधिरस्ति। न च स्मरन्ति मन्वादयः; प्रत्युत निषेधन्त्येव स्वशरीरेऽन्यशरीरे वा व्रणकरणादिकम्। तत्करणे च प्रायश्चित्तान्यनुशिष्यन्ते। यद्यपि [अत्र] *अकिणिन इति किणित्वनिषेधो ज्याघातास्फोटनद्यूतासिलतादिजन्यकिणविषयतया भवस्वामिप्रभृतिभिर्व्याख्यातः; तथाऽपि सामान्यतो व्रणकरणाङ्कनादिनिषेधो बाधकाभावे सत्यसङ्कुचितोऽवतिष्ठते। ततश्च यद्यपि कानिचिदैतिहासिकानि पौराणिकानि तान्त्रिकाणि च वचांसि लब्धानि; तथाऽपि तानि भगवदसाधारणपरतया अतिवादरूपाणीति वा, स्मृत्यपेक्षया दुर्बलतया

भ्रान्त्यादिहेतुकानीति वा, प्राक्षेपिकाणीति वा, न तद्धारणप्रमाणतयोपादेयानि । अत एवाचारोऽपि दूरोत्सारितः, आम्नायाविरुद्धानामेव देशजातिकुलधर्माणां प्रमाणत्वात् । तदुक्तम्—* देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति । अत्राम्नायग्रहणं स्मृत्यविरोधस्याप्युपलक्षणार्थम् । यत्पुनराहुः—

* लक्ष्मत्वादात्मभर्तुः प्रकृतिपरिणतिग्रन्थिदाहात्मकत्वात्कर्माङ्गत्वाद्धितत्वात्तनुतनुशयिनोस्संस्कृतित्वात्प्रियत्वात् ।
हेतुत्वात्सद्गृहीतेरितरपरिहृतेर्द्रावणात्किङ्करादेर्धार्यं चक्रादिचिह्नं कृतिभिरकृतिभिश्श्रेयसे मुक्तये च ॥

इति; तत्र तावद्भर्तृशब्देन किं भार्याप्रतियोगिकं भर्तृत्वं विवक्षितम्? उत धारकत्वम्? अथ पोषकत्वम्? यद्वा स्वामित्वमिति? न प्रथमः, असिद्धेः । न द्वितीयतृतीयौ, अनैकान्त्यात् । अत एव न चतुर्थोऽपि, असिद्धेश्च । अनाधेयातिशयस्य शेषित्वमेव नास्ति; कुतः स्वामित्वम्? अतिशयाधायको हि शेषः, आधेयातिशयश्च शेषी । आह च भगवान् **जैमिनिः**—* शेषः परार्थत्वादिति । तस्य शेषित्वाभावात्स्वामित्वाभावः; पूर्वस्य चेतनाचेतनसाधारण्यात् । अतः शेषित्वाभाववत्तु स्वामित्वाभावः स्वयमेवासीदति । न चावश्यं स्वाम्यादिचिह्नं दासादिभिर्धार्यमिति प्रमाणमस्ति । उक्तं चाचार्यैः—

* असिद्धमाद्यं द्वे चान्ये अनैकान्त्येन दूषिते । अनैकान्त्यादसिद्धेश्च न चतुर्थमपीष्यते ॥ इति ।

यच्च * प्रकृतिपरिणतिग्रन्थिदाहात्मकत्वादिति, तत्रापि दाहात्मकत्वमात्रविवक्षायामतिप्रसङ्गः । द्रव्यविशेषेण स्थानविशेषे दाहरूपचिकित्सारूपत्वविवक्षायामप्यायुर्वेदवच्छ्रुतिस्मृत्यादिकमेव शरणम्; तच्च नास्तीत्युक्तम् । अत एव * कर्माङ्गत्वाद्धितत्वादिति हेतुद्वयमपि दत्तोत्तरम् । हितत्वं च न दृष्टापेक्षया, दुःखमात्रतयैवोपलब्धेः । नाप्यदृष्टापेक्षया, अविहितत्वादेव । अनेनैव विकल्पेन * तनुतनुशयिनोस्संस्कृतित्वादित्यपि निरस्तम् । संस्कारो नाम कार्यान्तरयोग्यताकरणम्; तत्तु प्रमाणमूलं चेत्स्वीकुर्महे, अन्यथा निराकुर्महे । * प्रियत्वादिति हेतुः प्रायशोऽसिद्धोऽनैकान्तिकश्च ।

* श्रुतिः स्मृतिस्सदाचारस्स्वस्य च प्रियमात्मनः । सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
* वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

इति स्मरणादात्मप्रियमपि धर्मत्वेनोपादेयमिति चेन्न; तादृग्वचनानाम् * गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनमित्यादिविहितवैकल्पिकधर्मादिविषयत्वेन व्याख्यातृभिर्व्यवस्थापितत्वात् । अन्यथा रागप्राप्तस्य सर्वस्य धर्मत्वप्रसङ्गेन सर्वस्यापि निषेधशास्त्रस्यानुदयप्रसङ्गात् । न ह्यरागप्राप्ते निषेधापेक्षा । आत्महननादिप्रवृत्तिरपि तादात्विकरागत एव । विधिस्पृष्टे तु निषेधोऽवस्थाप्यः । कथमन्यथा श्येनाग्नीषोमीयविभागः? तत्र हि श्येनफलभूताया रागप्राप्तत्वात् * न हिंस्यादिति निषेधविषयत्वम् । अग्नीषोमीयपश्वालम्भनस्य विधिप्राप्तत्वान्न निषेधः । यच्च * हेतुत्वात्सद्गृहीतेरितरपरिहृतेरिति, तत्र किं सदसद्विवेकमात्रौपयिकत्वं विवक्षितम्? उत आदरादिहेतुत्वम्? नाद्यः, अवश्यधार्यत्वं प्रत्यप्रयोजकत्वात्; साङ्केतिकस्य यस्य कस्यापि धार्यत्वप्रसङ्गात्; दुष्टशूद्रादिभिर्ब्रह्मसूत्रादिवद्वञ्चकैरपि तद्धारणसंभवेन विवेकानुपयोगाच्च । पारम्पर्यशीलादिपरिज्ञानेनैव हि सदसद्विवेकः, न पुनर्वेषेण । न द्वितीयः, केवलदृष्टार्थत्वप्रसङ्गात्; अविहितकारित्वेन तस्याप्यसिद्धेश्च । आर्याः खलु विहितकारिणमेवाद्रियन्ते; यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः इति स्मृतेः । यच्च *द्रावणात्किङ्करादेरिति, तच्च प्रत्यक्षश्रुत्याद्यभावादितिहासादेर्दत्तोत्तरत्वान्निरस्तमिति केवलभक्तिप्रकर्षमूलं वा, लौकिकदासविशेषदर्शनजनितभ्रममूलं वा केषाञ्चिदास्तिकानां चक्रादिधारणमिति ॥

तदेतत्प्रशिथिलपठितकतिपयनिगमवचसामश्रुतसमीचीनन्यायनिबन्धनानां *पतिं विश्वस्य, *दासभूतास्स्वतस्सर्वे इत्यादिप्रमाणविशेषावगतस्वाभाविकभगवद्दास्यभयपलायमानमनसामन्तिमयुगतत्त्वचिन्तकानां कूपोदरसंभवकूर्मसमानाना-मभिमानविजृम्भितम् । तथा हि—सत्यम् चोदनालक्षणोऽर्थो धर्मः । विद्यते च चक्रादिधारणे चोदना, तत्कल्पश्च—

श्लो. श्रुत्या स्मृत्या पुराणेन सेतिहासेन गम्यते । पञ्चरात्रेण विप्राणां तप्तचक्रादिधारणम् ॥

यथाऽऽथर्वणमहोपनिषदि ब्रह्मसूक्ते—

*दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥ इति ।

**यजुषि कठशाखायाम्**—*धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥ इति ।

**ऋचि बाष्कलसंहितायाम्**—*प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।
मूले बाह्वोर्दधतेऽन्ये पुराणाः लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥ इति ।

**यजुषि, बृहदारण्यकभेदे अथर्वणि, सुदर्शनोपनिषदि** च—

*निचिक्षेप सुपर्णं भिद्यमानं मध्ये बाहुमदधत्सुदर्शनम् ।
विष्णोरिदं भूरिदं भूरितेजः प्रधर्षति दिवा नक्तं बिभृयुस्तज्जनासः ॥ इति ।

**ऋचि, साम्नि च** *चमूषच्छ्येनश्शकुनो बिभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानस्समुद्रं तुरीयं धाम महिषो विवक्ति ॥ इति ।

**अथर्वणि** *एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवेम ।
तद्विष्णोः परमं पदं ये गच्छन्तीह लाञ्छिताः ॥ इति ।

**ऋग्वेदखिले**— *चक्रं बिभर्ति वपुषाऽभितप्तं बलं देवानाम[मि]मृतस्य विष्णोः ।
स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागाः ॥ इति ।

**साम्नि च** *पवित्रमित्यग्निरग्निर्वै सहस्रारः सहस्रारो नेमिर्नेमिना तप्ततनुर्ब्रह्मणस्सायुज्यं सलोकतामाप्नोतीत्युपनिषदिति ।

त्रिष्वपि वेदेषु— पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामोऽश्नुते श्रृतास इद्वहन्तस्तत्समासते ॥ इति ।

**यजुषि काठके**— *चरणं पवित्रं विततं पुराणम् इत्यारभ्य *सुधितां दधातु इत्यन्तम् । एवमन्यदपि द्रष्टव्यम् ।

नन्वत्र खिलानामनाश्वसनीयत्वादाम्नातानामन्यत्र विनियोगेनान्यपरत्वात्स्मार्तविनियोगस्य सतोऽपि श्रौतविनियोगा-नुरोधेन नेयत्वाद्विनियुक्तमन्त्राणां विधिपरत्वायोगादविनियुक्तस्य खिलस्याखिलस्य च त्वयैवानभ्युपगमाच्चाभिमतासिद्धिरिति चेत्; अतिमन्दमेतत् । तथा हि—खिलानां तावत्किं खिलत्वमात्रादनाश्वसनीयत्वम्? अथ तद्विशेषत्वात्? नाद्यः, यज्ञोपवीतादिमन्त्राणामप्यनाश्वासपदत्वप्रसङ्गात् । न द्वितीयः, वैषम्यासिद्धेः । न ह्यत्र प्रत्यक्षश्रुतिविरोधतदभाव-लक्षणं वैषम्यमस्ति, ब्राह्मणादिभिश्चक्रादिकं न धार्यमिति प्रतिपादयन्त्याः श्रुतेरदर्शनात् । तद्दर्शनेऽपि प्रत्यक्षबहुश्रुत्य-न्तरतत्सदृशभगवच्छास्त्रमहाभारतादिविरोधे सत्यन्यपरतया निर्वाह्यत्वात् । न चात्र निषेधसंभवः, चक्रादिधारणस्य

दुःखैकरूपतयोपलभ्यमानस्य रागप्राप्तत्वायोगेन निषेधाविषयत्वात् । विधिप्राप्तत्वे तु विधिरेव परिपन्थी ; न ह्यत्र विकल्पोऽपि संभवति, एकस्मिन्नेवाधिकारिणि दुःखतदभावरूपयोस्तदयोगात्, व्यवस्थापकस्यापि क्लृप्तौ गौरवादतिप्रसङ्गाच्च । स्मृतिविरोधतदभावाभ्यां वैषम्यमिति चेत् ; स्मृत्यन्तरसंगृहीतश्रुतिविरुद्धायाः स्मृतेरेवानुदयात् ; उदितायाश्च यथाकथञ्चिदविरोधेन नेयत्वात् ; अत्यन्तविरोधे तु विरोधाधिकरणन्यायेन परित्याज्यत्वात् । न चात्यन्तविरोधः, सामान्यतो व्रणकरणादिनिषेधस्योत्सर्गापवादन्यायेन समर्थयिष्यमाणैः श्रुतिस्मृतीतिहासपञ्चरात्रैरैककण्ठ्येन प्रतिपादितार्थव्यतिरिक्तविषयत्वात् । अन्यथाऽग्नीषोमीयहिंसादेरपि * न हिंस्यादित्यादिना निषिद्धत्वेनाधर्मत्वप्रसङ्गात् । प्रसिद्धितदभावाभ्यां वैषम्यमिति चेत् ; केयं प्रसिद्धिः ? किमधीतत्वमेव ? उत संप्रतिपन्नत्वम् ? किं वा खिलत्वेन श्रवणपरम्परागतत्वम् ? यद्वा सूत्रकारादिभिरुपात्तत्वम् ? नाद्यः, खिलत्वविरोधात् । न द्वितीयः, धाष्टर्यात् । त्वामिव विप्रतिपद्यमानं प्रति तदसिद्धेः । इतः पूर्वं तत्र विप्रतिपत्तिर्नास्तीति चेन्न, अत्रापि पूर्वे[र्वोत्तरे]षु सत्त्वोत्तरेषु कालेषु विप्रतिपत्तिसद्भावे प्रमाणाभावात् ; इदानीमपि सात्त्विकानां विशिष्टदेशादिभाजामपि प्रतिपन्नत्वात् । ये नुनः * हरिबाह्यास्तु बाह्लीकाः न स्मरन्ति हरिं क्वचित्, * बाह्लीकांस्तु निरीक्ष्य वै इत्यादिमहाभारतादिवचनप्रतिपन्नतामसदेशविशेषवासिनः, येऽपि सात्त्विकेष्वपि देशेषु कलिबलविलसिततमःप्राया हरिबाह्याः, तेषां विप्रतिपत्तिर्न दोषाय ; अन्यथा विप्रतिपत्तिमात्रेण किञ्चित्करत्वे संप्रति नानासमयसङ्कीर्णसङ्कुचितनिगमधर्माश्रयदेशात्समधिकचतुर्दशगुणसुगतमतसाम्राज्यदेशवासिपुरुषविमतिविहतत्वेन वेदमात्रस्यैव कण्ठगतजीवितत्वप्रसङ्गात् ; इतः पूर्वं विप्रतिपत्त्यभावाच्च । यदङ्गीकृतमायुष्मता तदपि नूनमिदं प्रथमकल्पितविमतिवशगतानुगतिकत्वदधिककुमतिशतपरम्पराभिस्त्वत्पुत्रपौत्रेषु त्वमिव जलाञ्जलिं प्राप्स्यति । न च तृतीयः, अननुष्ठातॄणामनु[ष्ठानेऽपि]तिष्ठतामपि परप्रत्ययशरणानां च तच्छ्रवणपारम्पर्यनैरपेक्ष्येण तेषु तदभावस्याकिञ्चित्करत्वात् । अनुतिष्ठतां तु स्वयं बुभुत्सूनां तत्पारम्पर्यसिद्धेरवैषम्यात् । चतुर्थस्तु परिशिष्यते । तत्र किं सूत्रकारादिभिर्देवानांप्रियेण रुचिमात्रपरिगृहीतैः पुरुषविशेषैरुपादानं विवक्षितम् ? उताविशेषेणाप्तैरुपादानम् ? न प्रथमः, अप्रयोजकत्वात् । सजातीयजनान्तररुचिपरिगृहीतपुरुषान्तरानुपात्तत्वेन त्वदभिमतस्यापि विलयप्रसङ्गात् । न द्वितीयः, अस्मदभिमतेऽपि तत्सद्भावेन वैषम्यासिद्धेः । चक्रादिधारणविषयखिलानां कैराप्तैरुपादानमिति चेत्, आप्ततमपुरुषोत्तमदयोदञ्चितपञ्चरात्रसंहिताभेदकथकैर्महर्षिभिः । तस्य च शास्त्रस्य वेदाविरुद्धतत्त्वानुष्ठानप्रतिपादकत्वात्, क्वाचित्कानुष्ठानविरोधस्य प्रत्यक्षैकायनश्रुतिसंवादेन तत्तच्छाखान्तरप्रतिनियतधर्मान्तरवद्विकल्पतः परिहरणीयत्वात्, जीवोत्पत्त्यादिवादस्य जीवाद्यभिमानिसङ्कर्षणाद्यवतारविषयत्वेन तत्रैव सिद्धत्वात्, तस्मिन्नेव शास्त्रे—

* व्याप्तिरूपेण संबन्धस्तस्याश्च पुरुषस्य च । स ह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥

इत्यादिना जीवनित्यत्वस्यैव स्थापनात्, * साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान् इत्यादेः * न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तर्हि निन्दितादितरत्प्रशंसितुमिति न्यायेनानुदितहोमनिन्दावद्वाऽर्थानभिव्यक्तितात्पर्येण वा भूमविद्योपक्रमगततदितरसमस्तवेदाद्यध्ययनात्मवेदनहेतुत्वाभाववचनवन्निर्वाहात्, * अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा इति स्मृतिकारानुमतत्वात्, महाभारते परश्शतेषु प्रदेशेषु तत्प्रामाण्यस्यात्यादरेण प्रपञ्चितत्वाच्च प्रामाण्यं दुरपह्नवम् । सूत्रितं च तेनैव निखिलनिगमव्यसनव्यसनिना मतिमन्थाननिर्मथितनिगमसिन्धुसमुदितमहाभारतचन्द्रचन्द्रिकानिकराशेषमुषितभुवनभवनोदरतिमिरेण नारायणेन भगवता **बादरायणेन**—* उत्पत्त्यसंभवात्,

*न च कर्तुः करणमिति सूत्रद्वयेन पूर्वपक्षमुपक्षिप्य *विज्ञानादिभावे वा तदप्रतिषेधः, *विप्रतिषेधाच्चेति सिद्धान्त-करणात् । भाष्यादिषु च विस्तरेणेदमनुसन्धेयम् । तत्र च शास्त्रे पारमेश्वरसंहितायां प्रतिष्ठाध्याये चक्रप्रतिष्ठायाम्—

*तत्तत्स्थापनकाले तु तत्तत्संज्ञान्मनून् जपेत् । विद्याङ्गतामित्याद्यं यत् पाठयेत्तद्विदो जनान् ॥ इति ।
*चक्षूषच्छ्येन इति च *प्रते विष्णो इति तृचौ । पाठयेद् बह्वृचान्पश्चाच्छाकुनं सूक्तमेव च ॥
*धृतोर्ध्वपुण्ड्रः कृतचक्रेति मन्त्रं ततः परम् । *पवित्रं ते विततमित्येतन्मन्त्रं यजुर्मयान् ॥
*क्षुरोहरेति सामज्ञान् *पवित्रमित्यग्निरित्यपि । *एभिर्वयमुरुक्रमस्य इत्याथर्वणान् द्विजान् ॥
एवं संस्थाप्य विधिवन्नवभिः कलशैस्ततः । स्नापयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टाभिरेव च ॥ इति ।

अत्रादावेव *तत्तत्स्थापनकाले तु तत्तत्संज्ञान्मनून् जपेदिति वचनादेषां मुख्यतया संज्ञान्वयेन सुदर्शनपरत्वं ज्ञापितम् । तत्रैव स्नापयेदित्यनुवृत्तौ—

*धृतोर्ध्वपुण्ड्र इति च यातुधानीगतेन वै । *दक्षिणे तु भुजे विप्र इति पश्चिमगेन वै ॥
*विष्णुनात्तमश्नन्तीति वायोर्दिक्संस्थितेन तु ॥ इति ।

अत्र *धृतोर्ध्वपुण्ड्रः *विष्णुनात्तमश्नन्ति इत्युभाभ्यामूर्ध्वपुण्ड्रधारणभगवन्निवेदितान्नपानाद्युपयोगश्च सिद्धः । तत्तत्प्रकरणे च प्रपञ्चयिष्यामः । तत्रैव स्नापनाध्याये सहस्रकलशस्नपने—

*पौरुषेण तु सूक्तेन समस्तेन शनैश्शनैः । स्नापयेद्देवदेवेशं मध्यस्थनवकेन तु ॥
यद्वा *सर्वस्य वशिनमित्याद्यैर्मनुभिः क्रमात् । महोपनिषदन्तस्थैर्दिक्स्थितैः कलशाष्टकैः ॥
*एक एव नारायणः इति मध्यगतेन तु ॥ इति ।

अत्र ब्रह्मसूक्तमिति महोपनिषन्मध्यगताः *सहस्रशीर्षेत्याद्या एकोनविंशतिमन्त्राः; [तत उ]तत्रोपरितनाष्टौ मन्त्राः *सर्वस्य वशिनमित्याद्याः । तत्र *दक्षिणे तु भुजे विप्रः इति पञ्चमो मन्त्रः । *एक एव नारायणः इति महोपनिषदाद्यो मन्त्रः । अत्र नारायणपराणामपि पुरुषसूक्तमहोपनिषदादीनां सौदर्शनेष्वपि कर्मसु विनियोगः सुदर्शनस्यापि सङ्कर्षणादिवद्ब्रह्मासु-देवात्मकत्वस्य तस्मिन्नेव शास्त्रे अहिर्बुध्न्यसंहितायामैदम्पर्येण प्रतिपादनादुपपन्नः । वासिष्ठसंहितायां चोक्तम्—*न हेतिर्नाङ्कमयं परमात्मेति नः श्रुतमित्यादि । तन्त्रान्तरानुसारिभिश्चोक्तम् *चक्राभिधानो हरिरिति । एवं स्थिते *परमव्योमनिलयो भगवन्नित्यकिङ्करः इत्यादीनामहिर्बुध्न्यसंहितादिगतानामेव विरोधपरिहाराय क्वचित्सुदर्शनादिशब्दानां भगवच्छरीरभूतजीवविशेषक्रोडीकारेण भगवति वृत्तिरङ्गीक्रियते । यथा प्रतर्दनविद्यायां प्रसिद्धेन्द्रलिङ्गभूतत्वाष्ट्रवधा-द्यसाधारणविशेषणोपादानवशेन प्रसिद्धेन्द्रशरीरकः परमात्मोपास्य इति निर्णीयते, तद्वदत्रापि । एवं च सति विशेष्याभि-प्रायेण, विशिष्टोपास्याभिप्रायेण वा *न हेतिर्नाङ्कमयमित्यादिकमुक्तम्; विशेषणांशमात्राभिप्रायेण प्रकरणान्तरे *भगवन्नित्यकिङ्करः इत्यादिकमुक्तमित्यलमतिप्रसङ्गेन । तत्रैव पारमेश्वरसंहितायामुत्सवाध्याये दमनकोत्सवस्नपने *धृतो वै इति । तत्रैव रक्षार्थे चूर्णस्नपने—

*दक्षिणे तु भुजे विप्रः इति प्राक्संस्थितेन तु । *निचिक्षेप सुषणमिति वह्निगतेन तु ॥
*प्रते विष्णो अब्जचक्रे इति याम्यगतेन तु । *एभिर्वयमुरुक्रमस्येति यातुधानगतेन तु ॥
*धृतोर्ध्वपुण्ड्रः कृतचक्रेति पश्चिमगतेन तु । *पवित्रमित्यग्निरिति ततो वायुगतेन तु ॥

*चरणं पवित्रं विततमिति सोमगतेन तु । *लोकस्य द्वारमर्चिमदिति रुद्रगतेन तु ॥
मन्त्रैरेतैस्तु चाष्टाभिरन्यैस्सौदर्शनैस्तथा । संस्थाप्य मध्यकुम्भेन शुद्धोदैरभिषिच्य च ॥ इति ।

एवमेकस्यामेव संहितायामनेकेष्वध्यायेषु सौदर्शनतया विनियोगो दृष्टः । तथा बह्वीष्वपि संहितासु तेषां विनियोगो दृश्यते । तथा हि—**विष्णुतत्त्वे** चर्यापादे षष्ठे पटले—

*दिव्यान्तरिक्षभौमानामुत्पातानां प्रशान्तये । प्रत्यृचं जुहुयादाज्यं पुंसूक्तेन शतं शतम् ॥
*सर्वस्य वशिनेत्याद्यैश्चतुर्भिश्च शतं दधि । *दक्षिणे तु भुजेत्याद्यैश्चतुर्भिश्चापि तण्डुलैः ॥ इति ।

**कालोत्तरसंहितायां** सुदर्शनसमाराधनाध्याये—

*एवं प्रासादशिखरे चक्रं संस्थापयेद्बुधः । द्वादशारमथाष्टारं षडरं वा महामते ॥
संस्थाप्य विधिवत् [प्राग्वत्] पश्चात्कुम्भैर्द्वादशभिः क्रमात् । *दक्षिणे तु भुजे विप्र इति क्षीरेण सेचयेत् ॥
*निचिक्षेप सुषणमिति दध्ना स्नापयेत्ततः । *प्रते विष्णो इत्यनेन घृतेन ह्यभिषेचयेत् ॥
*एभिर्वयमुरुक्रमस्य मधुना स्नापयेद्बुधः *धृतोर्ध्वपुण्ड्रः कृतचक्रैरित्यैक्षवेण रसेन तु ॥
*पवित्रमित्यग्निरिति पञ्चगव्येन सेचयेत् ॥ इति ।

**श्रीविष्णुमन्दिरे**—

*प्रत्यङ्गिरं शिखाशीर्षं ब्रह्मसूक्तं तथैव च । वैष्णवं पौरुषं चैवमन्यान्मङ्गलवाचकान् ॥ इति ।

तथा— *सूक्तं तु परमात्माख्यं वैष्णवं सूक्तमेव च । अध्यापयेत्पौरुषं च *ध्रुवा द्यौरिति वाचयेत् ॥ इति । अत्रापि ब्रह्मसूक्तपरमात्मसूक्तशब्दाभ्यां महोपनिषत्पठितमेकोनविंशतिमन्त्रात्मकं ब्रह्मसूक्तमेव परिगृहीतम्, शब्दतोऽर्थतश्च प्रत्यभिज्ञानात् । **आनन्दाख्यसंहितायां** प्रतिष्ठाध्याये—

*मत्षडक्षरमन्त्रेण गोघृतेनैव देशिकः । पुरुषाध्यात्मसूक्तैश्च महोपनिषदं तथा ॥
श्रीसूक्तं तु जपंस्तत्र रात्रिशेषं नयेद्बुधः । इति ।

अत्र श्रीसूक्तस्य जपविधिर्मङ्गलतमत्वात्, [भगवत्]पत्नीत्वेन भगवत्सहधर्मचारिणीविषयत्वात, परमात्मदेवताकत्वस्य कैश्चिदनुस्मृतत्वाच्च । तथा **श्रीविष्णुतन्त्रे** चतुःपञ्चाशत्तमेऽध्याये—*पुरुषाध्यात्मसूक्तं च महोपनिषदं तथा इति । एवमाप्तप्रणीतभगवच्छास्त्रविनियोगात् कल्पकारविनियुक्तयज्ञोपवीतादिमन्त्राणामिव खिलानामपि श्रुतित्वमसंदिग्धम् ।

एतेन महोपनिषदः कैश्चिदनुदाहृतत्वचोद्यमपास्तम् । कति कति दृश्यन्ते भाष्यकारादिभिरनुपात्ता उपनिषदः । न केवलं भगवद्रामानुजमुनिभिरेव महोपनिषदुपात्ता, अपि तु तत्परमाचार्यैर्भगवद्यामुनमुनिभिरपि **पुरुषनिर्णये** समुपात्ता । न चैवमेकसिद्धान्तनिष्ठैरेव [अभियुक्तैः] तदुपादानम्, अपि तु तद्विरुद्धसन्मात्रब्रह्मभेदाभेदनिष्णातैर्**यादवप्रकाशै**रपि **भगवद्गीताभाष्ये**ऽष्टमेऽध्याये ; तथा तन्मतानुसारिभिर्**नारायणाचार्यै**रपि **तत्त्वनिर्णये** श्रुतितात्पर्यनिर्णयाधिकारे सोपबृंहणनानाविधश्रुतिशिखरनिकरोदाहरणावसरे महोपनिषदाद्यान् *एक एव नारायणः इत्यादिकांश्चतुरो मन्त्रानुदाहृत्य, एषा चोपनिषत्

*एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥

इत्यादिभिरितिहासैः, *तत्क्रोधसंभवो रुद्रः प्रसादाच्च पितामहः, *यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः इत्यादिभिः पुराणैश्चोपबृंहितेत्युक्तम्। एवं खिलानामनाश्वसनीयत्वादिति जल्पितं प्रत्युक्तम्।

यत्त्वाम्नातानां *पवित्रं ते इत्यादीनामन्यत्र विनियोगेनान्यपरत्वादभिमतासिद्धिरिति, तदपि मन्दम्; यथाऽन्यत्र विनियोगात्त[त्त]दर्थपरत्वमङ्गीक्रियते, तथा भगवच्छास्त्रे *तत्तत्स्थापनकाले तु तत्तत्संज्ञान्मनून् जपेदित्युपक्रमेण सौदर्शनत्वेनाभिधानात्, सौदर्शने प्रतिष्ठास्नपनादौ विनियोगाच्छ्रूयमाणार्थानुगुण्याच्च तदर्थपरत्वमपि किं नेष्यते? यद्येकार्थपरत्वादेव तदन्यार्थपरत्वं निषिध्यते, तर्हि सौदर्शनविनियोगाधीनतदर्थपरत्वादेव तदन्यार्थपरत्वमेव किं न निषिध्यते?

*श्रौतस्मार्तविनियोगयोः परस्परविरोधे श्रौतविनियोगानुसारेणार्थनिर्णयः इत्युक्तमिति चेत्; कुतोऽयं निष्कर्षः? श्रुतिमूलायाः स्मृतेस्तद्विरोधेनोदेतुमशक्यत्वादिति चेत्; तर्हि स्मृत्या तेषां मन्त्राणां गौणोऽपि विनियोगो न स्यात्; अर्थान्तरपरत्वाविशेषेण विरोधस्यावर्जनीयत्वात्। न ह्यभिधावृत्त्यैवार्थान्तरपरत्वे विरोधः, वृत्त्यन्तरेणार्थान्तरपरत्वे न विरोध इति नियामकमस्ति। अतः श्रुत्या स्मृत्या च यत्रयत्र विनियोगः, तत्रापि यत्र शब्दशक्त्यनुसाराद्बाधकाभावाच्च मुख्यतया निर्वाहश्शक्यः, तत्रैकस्मिन्ननेकस्मिन्वा मुख्यत्वमेवेति निर्वोढव्यम्। कश्चात्र विरोधः? एकस्यैव तत्परत्वातत्परत्वलक्षण इति चेन्न, गौणतया स्मार्तविनियोगासिद्धिप्रसङ्गस्योक्तत्वात्। श्रुतावपि *ऐन्द्या गार्हपत्यमुपतिष्ठते इति रूढिपरित्यागेन निर्वचनमात्रानुसारिणो विनियोगस्य लोपप्रसङ्गात्। तदभिधायित्वातदभिधायित्वलक्षणो विरोध इति चेत्, किमयमेकस्मिन्नेव प्रयोगे? उत प्रयोगभेदेऽपि? नाद्यः, अनभ्युपगमात्। न द्वितीयः, प्रयोगभेदादेव विरोधपरिहारात्; नानाशक्तिशालिनः शब्दस्य समभिव्याहृततत्तत्पदान्तरार्थानुसारेण तत्तदुचितार्थाभिधायित्वात्; अन्यथा अनेकार्थशब्दानां सर्वेषामपि परित्यागप्रसङ्गात्।

अस्तु वा विरोधः। अस्तु च श्रुतिमूलायाः स्मृतेः श्रुत्यनुसरिता। तथाऽपि स्वाभाविकसमस्तार्थसाक्षात्कारिणा निरतिशयकारुण्यादिगुणगणेन श्रुतिशिरश्शेखरेण भगवता पुरुषोत्तमेन विप्रकीर्णानन्तदुरवगाहनिखिलनिगमान्ततत्त्वार्थविशदीकरणाय प्रणीतपञ्चरात्रशास्त्रविनियोगानुसारेण श्रुतिरपि नेतव्या। न हि श्रौतो विनियोगः सर्वो रूढ्यैव मुख्यतयैवेति नियन्तुं शक्यम्; ऐन्द्रीन्यायादिविलोपप्रसङ्गात्। यश्चायमर्थो विनियोगानुसारादक्षरानुगुण्याच्चास्माभिरुपवर्ण्यते स न केवलमुन्नयनमात्रप्रभवः, अपि तु वक्ष्यमाणस्फुटतरेतिहासपुराणादिवचनसंवादादिति सर्वथा समूलत्वमेव। अतस्सिद्धमन्यत्र विनियुक्तानामपि सौदर्शनविनियोगात्तदर्थपरत्वम्।

यत्तु खिलानामखिलानां वा सर्वेषां सौदर्शने कर्मणि ततोऽन्यत्र च विनियोगस्याभ्युपगतत्वाद्विनियुक्तानां च मन्त्राणां विधिपरत्वायोगादभिमतासिद्धिरिति, तदपि विचारणीयम्। किं मन्त्रत्वादेव विधिपरत्वासिद्धिः? उत विनियुक्तत्वात्? यद्वा विनियुक्तत्वे सति मन्त्रत्वात्? न प्रथमः, यच्छब्दाद्यनुपहतविधिशक्तीनां मन्त्राणां विधिपरत्वस्य मीमांसकैरेव स्वीकृतत्वात्। *वसन्ताय कपिञ्जलानालभते इत्यादिषु [मन्त्रत्वप्रसिद्ध्या] मन्त्रत्वं विधिपरत्वं च वर्णितं मीमांसकाचार्यैः। न द्वितीयः, *यंयं क्रतुमधीते तेनतेनास्येष्टं भवतीति तत्तत्क्रतुफलतुल्यफलप्राप्त्यर्थे जपाध्ययने विनियुक्तस्यापि ब्राह्मणभागस्य तत्तद्विधिपरत्वानपायात्। अन्यथा क्रतूनामेव निर्मूलत्वप्रसङ्गात्। न च तृतीयः, विनियुक्तत्वमन्त्रत्वयोर्द्वयोरपि विधिशक्तिविरोधित्वाभावे समुच्चितयोरपि तयोस्तद्विरोधित्वे प्रमाणाभावात्। विनियुक्तानां

मन्त्राणां विधिपरत्वं न दृष्टमिति चेन्न, * वसन्ताय कपिञ्जलानालभते इत्यस्यैव कृत्स्नवेदजपाद्यनुप्रवेशेन विनियुक्तस्य मन्त्रस्यापि विधिपरत्वस्वीकारात् । उक्तं च भगवता **शौनकेन**–

*शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम् । प्रवः [पान्थ]प्रान्तमन्धसोऽधीत्यर्धर्चविधानतः ॥ इति ।

* प्रवः[पान्थ]प्रान्तमन्धसोऽधीयाय ते महेश्वराय विष्णवेऽर्चते इत्ययमर्धर्चो ह्यच्छावाकशस्त्रतया द्वादशाहे विनियुक्तः । येषु तु मन्त्रेषु विधिपरत्वं न दृश्यते तेष्वपि न विनियुक्तत्वेन मन्त्रत्वेन तत्समुदायेन वा विधिपरत्व मपक्रान्तम्, अपि त्वनुवादलिङ्गप्राप्तार्थत्वादिभिः । न ह्येष्वपि मन्त्रेषु तैरेव विधिपरत्वाभावस्स्यात्, सर्वानुवादलिङ्ग-भञ्जकस्याप्राप्तार्थत्वस्य विद्यमानत्वात्–* यदाग्नेयोऽष्टाकपालः * उपरि हि देवेभ्यो धारयति इत्यादिषु । असूत्रयच्च भगवान् **जैमिनिः**–* वचनानि त्वपूर्वत्वादिति, * विधिस्तु धारणेऽपूर्वत्वादिति च । आह च भगवान् **बादरायणः**–* विधिर्वा धारणवदिति ।

* दक्षिणे तु भुजे विप्रः इत्यत्र बिभृयादिति विधिरेव प्रतीयते । अयमस्यार्थः–यो विप्रः–ब्राह्मणः, स भगव-च्चिह्नभूतं सुदर्शनं शङ्खं च बिभृयात् । तथा सति हि विप्रत्वानुरूपं कृतं भवतीति भावः । * विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी इति वचनात्तस्य तत्त्वदर्शित्वं हि सिद्धम् । ततश्च सर्वान्तरात्मत्वेन सर्वशेषिणं वासुदेवं विशेषतो यथावस्थितं जानन् ब्राह्मणः स्वात्मनः शेषत्वानुरूपं शेषिणो वासुदेवस्य लाञ्छनं चक्रं शङ्खं च बिभृयादिति वेदवित्सिद्धान्तः, इति । ब्रह्मशब्देन परब्रह्मविवक्षायामपि फलितोऽयमेवार्थः । अस्य चैवमकामो[पनिबन्ध]-पाधिनिबद्धविधिप्राप्तत्वान्नित्यत्वं सिद्धम्, विप्र इति निर्देशेनैव नियोज्याकाङ्क्षाशान्तेः नियोज्यान्तरकल्पनानवकाशात् । यद्यपि चास्योपासनाङ्गत्वं श्रुत्यन्तरे प्रतीतम्; तथाऽपि ज्योतिष्टोमादीनामिव नित्यत्वमपि न विरुध्यते, विनियोगभेदात् । उपवीतादिवदिति हि स्मरन्ति । भगवच्छास्त्रोक्तकालविशेषादिकमपि न नित्यत्वविरुद्धम्, वसन्ताष्टवर्षादिवत् । *ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः इत्यपि वचनं न ब्राह्मणमात्रस्यावश्यकर्तव्यत्वादितरप्रतिषेधपरम्, अपि त्वकरणे प्रत्यवाय-लाघवपरम् । सामान्यतोऽसत्यवचननिषेधेऽप्याहिताग्नौ * तस्मादाहिताग्निर्नानृतं वदेदिति निषेधवचनमाहिताग्नेरसत्य-वचने प्रत्यवायभूयस्त्वमन्यस्यासत्यवचने प्रत्यवायाल्पत्वं च ज्ञापयति, न पुनरन्यस्यासत्यवचनमनुमन्यते ; तद्वदत्रापि ।

न च वाच्यं धारणे फलविशेषस्योदाहरिष्यमाणानेकश्रुतिसिद्धत्वाद्विध्यपेक्षितस्य च रात्रिसत्रन्यायेन वाक्यशेष-श्रुत्यन्तराद्यवगतस्य हानायोगेन विश्वजिन्न्यायानवतारात्कामाधिकारत्वे च प्रवृत्तिशैथिल्यहेतौ संभवति नित्यत्वकल्पनायोगात् * दक्षिणे तु भुजे विप्रः इति फलनिर्देशरहितविधिवाक्येऽपि श्रुत्यन्तरसिद्धमेव फलमिति; उक्तोत्तरत्वात्, निराकाङ्क्षस्य नित्यत्वेन स्मृतस्य फलान्तरापेक्षानियमाभावात् । विनियोगभेदात्तु मोक्षाधिकारे नित्यकर्मान्वयस्येव निःश्रेयससाधन-सहकारित्वमप्युपपद्यत एव । अस्तु वोपासनाङ्गत्वेनास्य तदेकफलत्वम् । तथाऽपि मुमुक्षुणा तावदुपासकेनावश्यं कर्तव्यमिति सिद्धम्, अङ्गाननुष्ठानेऽङ्गिनो वैकल्यात् । अत्रापि विप्रवचनं न क्षत्रियादिव्यवच्छेदार्थम्; तेषामपि वचनान्तरेण विहितत्वात् । यथा–* अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्, * युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्ध-पञ्चमानित्यादिषु ब्राह्मणविप्रशब्दौ न क्षत्रियाद्यध्ययननिवारणाय प्रयुक्तौ, क्षत्रियवैश्ययोरप्युपनीतयोरध्ययनस्य सिद्ध-त्वात् । ततश्च प्रकृष्टाधिकारित्वमात्रादकरणे प्रत्यवायभूयस्त्वाच्चात्र विशेषनिर्देशः । तुशब्दोऽवधरणार्थः ; दक्षिण एव

सुदर्शनं सव्य एव शङ्खमित्यर्थः । यद्वा दक्षिणसव्यशब्दप्रयोगनैष्फल्यायोगादेव नियमसिद्धेः *मूले बाह्वोः इत्यादि-वाक्यान्तरप्रतिपन्नभुजांशविशेषद्योतनार्थस्तुशब्दः । वैशब्देन प्रसिद्धतासंप्रतिपत्तिरेव सिद्धा ।

*ब्रह्मविदो विदुरित्यपि परब्रह्मभूतपरमपुरुषप्रतिपादकवेदवित्सिद्धान्तप्रसिद्धिपरमेवेति । तथा **कठशाखायाम्** *धृतोर्ध्वपुण्ड्रः इत्यादि । अत्रोर्ध्वपुण्ड्रादिवच्चक्रादिधारणस्यापि ध्यानाङ्गत्वं स्पष्टम् । अत्र चक्रशब्दो वचनान्तरविहित-शङ्खादेरप्युपलक्षणार्थः । व्यापनशीलत्वाद्विष्णुः ; तेनाप्यन्तर्यामित्वे तात्पर्याच्छेषित्वं सूचितम् । *परं परात्परमित्यु-भाभ्यामशुद्धेभ्यस्संसारिभ्यश्शुद्धेभ्योऽसंसारिभ्यश्च व्यावृत्तिः । यद्वा परमिति केवलपर्यायः । विष्णुं केवलं ध्यायी-तेत्यर्थः । महतो महान्तं—स्वरूपतो गुणतो वा ये पदार्था उत्कर्षवन्तस्तेभ्यस्सर्वेभ्योऽप्यतिशयितोत्कर्षवन्तमित्यर्थः । यद्वा सर्वेभ्यः पृथुभ्यः पृथुतरमित्यर्थः । सदा हृदि स्थितं परात्परं यदिति पृथग्वाक्यम्, ततश्च यच्छब्दस्सामान्यतो वस्तुमात्र-त्वेनानुवदति ; अन्यथा लिङ्गविरोधात् । तमेवंभूतं विष्णुं तत्प्रतिपादकेन स्वरेण—स्वरप्रधानतया स्वरशब्दनिर्दिष्टेन प्रणवाख्येन मन्त्रेण यो महात्मा ध्यायति स भगवत्प्राप्तिविरोधिभ्यः [सर्वेभ्यः] पापेभ्यो मुच्यत इति वाक्यशेषार्थः । स्वरप्रधानतया स्वरत्वं चाम्नातं प्रणवस्य—*यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः इति । **एकायनब्राह्मणे** च—*ओङ्कारः स्वरः मकारो व्यञ्जनं यः स्वरस्सा प्रकृतिः इति स्वरप्राधान्यमेवोक्तम् ।

अयमत्र विध्यर्थः—सर्वपापप्रमोक्षकामः ऊर्ध्वपुण्ड्रचक्रादिधारी प्रणवेन प्रतिपादकेन विष्णुं ध्यायेदिति । यो महात्मा स ध्यायेदित्यनध्याहारेण वा योजना ; यो ध्यायति स महात्मा भवेदिति वा वचनव्यक्तिः ।

तथा ऋचि—*प्रते विष्णो अब्जजके इत्यादि । स्तवप्रियं स्तव्यं भगवन्तं तुष्टूषन्नभिमुखयति—विष्णो इति । त इति निर्देशेनानिष्टनिवर्तकत्वेष्टप्रापकत्वाद्यपेक्षितसकलाकारयोगित्वमभिप्रेतम् । अनिष्टनिवृत्त्याद्यर्थं हि कस्यचिल्लाञ्छन-धारणम् । अत्राब्जशब्देन शङ्ख उच्यते ; भगवच्चिह्नत्वेन प्रसिद्धेः, श्रुत्यन्तरैकार्थ्यानुसारादब्जजलजादिशब्दानां शङ्खेऽपि रूढत्वाच्च । पद्मपरत्वेऽपि न दोषः, चक्रादिवत्पद्मस्यापि तच्चिह्नत्वेन धार्यत्वानुशासनात् । तच्च—*भवेयु-स्सर्वदा तस्माच्छङ्खचक्रगदाम्बुजैरित्यादिषु वक्ष्यते । पवित्रे इत्यनेन धर्मान्तरवदस्यापि ध्यानविरोधिरजस्तमोवृद्धिहेतुभूत-पापनिबर्हणद्वारोपकारकत्वमिति ज्ञापितम् । निरुक्तश्चायं पवित्रशब्दः एकायनीये *पवित्रमिति पुनः कस्य वक्ता, पुनाति च त्रायते चेत्यतः पवित्रमिति । उपपद्यते च भगवत इव तत्संबन्धिनोरपि तयोः पवित्रत्वम् । ध्यानाङ्गत्वेन श्रुत्यन्तरसिद्धे तस्मिन् ध्यानफलभूतसंसारतारणाख्यफलनिर्देशश्च नानुपपन्नः । तर्तवे—तर्तुमित्यर्थः । चर्षणीन्द्राः—ज्ञानवन्तः प्रकाशवन्तो वा विचक्षणाग्रेसरा योगिवर्या इत्यर्थः । प्रशब्दस्य दधत इत्यनेन वा तर्तव इत्यनेन वाऽन्वयः, *व्यवहिताश्चेत्यनु-शासनात् । धारणे प्रकर्षश्च लाञ्छनत्वेन शरीरावियुक्ततया सार्वकालिकत्वम् । प्रकर्षेण तरणं चापुनरावृत्तिलक्षणमात्यन्ति-कत्वम् । एवं शङ्खचक्रे केचिद्धारयन्ति । अन्ये पुनः परिपूर्णानुष्ठायिनो धर्मप्रवर्तकाः पुरातनाः परमर्षयः पञ्चाप्यायुध-रूपाणि तावकानि लिङ्गानि पञ्चस्वपि भुजशिखरयुगललाटमूर्धहृदाख्येषु स्वावयवेषु धारयन्तीत्याह—अन्ये पुराणा इति । स्मृतेश्चायमर्थो व्यक्तीभविष्यति । एवं शिष्टाचारप्रदर्शनद्वाराऽवश्यकर्तव्यत्वविधावस्य मन्त्रस्य तात्पर्यम् । जन्माम्भोधि-तरणकामो विष्णुलिङ्गानि चक्रादीनि भुजमूलादिषु स्थानेषु बिभृयादिति विध्यर्थः ।

तथा यजुषि—*निचिक्षेप सुषणमित्यादि । अस्यायमर्थः—मध्येबाहुं—बाह्वोर्मध्ये । *पारे मध्ये षष्ठ्या वेति समासः । तत्र छान्दसो बाहुमितिनिर्देशः । बाहुमिति व्यस्तं पदं वा ; षष्ठ्यर्थे द्वितीया ; सुप्तिङादेश्छन्दसि

व्यत्ययस्यानुशिष्टत्वात्। अत्र श्रुत्यन्तरसिद्धभुजशिखरमध्यविवक्षैवेत्येके ; अन्ये तु वक्षस्येव बाहुमध्यत्वप्रसिद्धिप्रकर्षात्तदर्थपरत्वे च द्वयोरपि विकल्पतस्समुच्चयतो वा सुदर्शनधारणस्थानत्वे विरोधाभावात्, तथा च कैश्चिन्महात्मभिरनुष्ठानदर्शनात्, बाहुमध्यशब्देन वक्ष एव व्यपदिश्यत इत्याहुः। यः प्राचीनोऽनुष्ठाता बाहुमध्ये विष्णोरिदं—विष्णोरसाधारणचिह्नमिदं भूरितेजः—प्रभूततेजोविशिष्टं सुदर्शनमदधत्—दधार। *दध धारणे इति धातौ लङन्तं पदम्। स हि प्राक्तनोऽनुष्ठाता भिद्यमानं सुषणं निचिक्षेप—सु[संभक्तं]व्यक्तं बाधमानं पापादिकं निरस्तवानित्यर्थः। अथवा यो बाहुमध्ये दधाति स हि निक्षिपेदिति वाक्यार्थः ; *छन्दसि लुङ्लङ्लिटः इति लिङर्थेऽपि लुङादिविधानात्। अथवा प्राचीनोऽनुष्ठाता परायुधैर्भिद्यमान सुषणं—सुसहनीयमायुधविशेषं निचिक्षेप—परित्यक्तवान्; तैरप्रतिहन्यमानं सुदर्शनं बाहुमध्येऽदधत्—परिगृहीतवानित्यर्थः। रक्षणासमर्थं परित्यज्य रक्षणसमर्थं गृहीतवानित्युक्तं भवति। किं च स एव सुदर्शनधारी, धृतं वा सुदर्शनं दिवानक्तं प्रधर्षति। प्रधर्षणधात्वर्थसामर्थ्यात्प्रतिभटान्बाह्याभ्यन्तरानित्यध्याहरणीयम्। यद्वा यद्दिवानक्तं भूरितेजस्त्वात्परान्प्रधर्षति तत्सुदर्शनमित्यन्वयः। तेजस्त्वमनन्यापेक्षता वा पराभिभवनसामर्थ्यं वा ; यद्वा विग्रहगतं तेजो वा विवक्षितम्। ततश्च सुदर्शनत्ववद्दुर्दर्शनत्वं चास्यास्तीति ज्ञापितम्। उक्तं च **श्रीपौष्करे** चक्राब्जाध्याये चक्रस्वरूपकथने भगवतैव— *ब्रह्मरुद्रेन्द्रदेवानामस्य रश्मिचयश्च यः। अपहृल्लोचनानां वै सुदूराच्च निरीक्षणात्॥

तेनेदं भुवि विख्यातं नाम्ना दुर्दर्शनं द्विज। प्रणतानां च भक्तानां यस्माच्च सुलभं सदा॥

ददाति दर्शनं तेषां स्मृतं तस्मात्सुदर्शनम्। इति।

उक्तं **चाहिर्बुध्न्येन**—

*स्वतेजसा जगत्सर्वं पूरयन्तं महाबलम्। उद्यत्प्रद्योतनशतप्रभाविख्यातपौरुषम्॥ इत्यादि।

एवं **श्रीविष्णुधर्मे**—*सहस्रमिव सूर्याणामित्यादिकमपि भाव्यम्। एवं सुदर्शनधारणस्य विरोधिनिरसनौपयिकत्वात्तदपेक्षिणस्तद्धारयेयुः; अन्ये तु जननभागिनस्संसरन्तीत्यभिप्रायेणाह—*बिभृयुस्तज्जनासः इति। जनासः—जनाः, *आज्जसेरसुक् इति छान्दसोऽसुक्। दिवानक्तं बिभृयुरिति वाऽन्वयः। अङ्कनरूपत्वादविभक्तं सदा वहेयुरित्युक्तं भवति।

*स्वमुद्रालङ्कृतश्चापि यस्सदा चक्रधृक्चरेत्। स देशिको निबोद्धव्यः सर्वैस्सामयिकादिकैः॥

इति **श्रीसात्त्वत**वचनमप्येतद्विषयम्। तत्तदिष्टप्राप्तितत्तदनिष्टनिवृत्तिकामस्सदा सुदर्शनं बिभृयादित्यर्थः।

तथा ऋक्सामपठितं वाक्यम्—*चमूषच्छ्येनः इत्यादि। अस्यार्थः—द्रप्सः—भगवद्विभूत्येकदेशभूतः, श्येनः—श्येनजातीयः, शकुनः—पक्षी वैनतेय इत्यर्थः। वैनतेयस्य कर्माधीनपदलाभत्वकथनं कर्मवश्यत्वाभिनयकृतम्। यद्वा अन्योऽत्र श्येनजातीयः पक्षी विवक्षितः। गां विन्दतीति गोविन्दः, गोशब्देन महीवाक्प्रभृतयो विवक्षिताः; *गवादिषु विन्देस्संज्ञायामिति शः। छान्दसत्वात्तृज्वद्भावः; ऋदन्तता वा। तस्यायुधानि बिभृत्वा अङ्कनरूपेण सार्वकालिकत्वलक्षणविशेषेण धारयित्वा। अत्र वक्ष्यमाणेषु केषुचित्स्वरो बाहुलकेन ग्राह्यः। बिभृत्वेति क्त्वान्तं वेदं पदम्; चमूषदभूत्—भगवत्सेनाधुरन्धरोऽभूदित्यर्थः। यद्वा चमूशब्देन नित्यसूरिपरिषद्विवक्षिता, तत्र सीदति निषीदतीति चमूषत्, नित्यसूरिपरिषन्मध्यवर्तीत्यर्थः। क्रियापेक्षायामभूदिति योग्यक्रियाध्याहारः। अत्रायुधानीति बहुत्वे प्रतीते कपिञ्जलन्यायेन त्रित्वपरिग्रहौचित्येऽपि पञ्चानामायुधानामविशेषेण प्रसिद्धिप्रकर्षादुपबृंहणानुग्रहाच्च पञ्चेति व्यवस्थाप्यते। इदं च सङ्ख्याविशेषस्थापनम् *लिङ्गान्यङ्क इति पूर्वोदाहृतेऽपि भाव्यम्। एवम्, अपामूर्मिं समुद्रं सचमानः अन्योऽपि कश्चिद्भगव-

च्छरीरतया तद्रूपः तदंशभूतो जीवस्संसारोत्तितीर्षया भगवदीयानि पञ्चायुधानि बिभ्रत् तत एव महिषः तुरीयं धाम महिषो विवक्तीत्यन्वयः। अप्छब्दोऽन्यभूतस्याप्युपलक्षणम्। *पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति, *अप एव ससर्जादौ इत्यादिवच्छरीररूपेण परिणताचिद्द्रव्यस्येत्यर्थः। संबन्धसामान्ये षष्ठी। अपामूर्मिम्—अचिद्द्रव्यसंबन्धिनमूर्मिम्, ऊर्मिशब्दाभिलक्ष्यमशनायादिषट्कम्, जन्मादिविकारजातं वा। एकवचनं समुदायाभिप्रायम्। समुद्रं—समुद्रिक्त-मित्यर्थः। यद्वा [अपामूर्मिं] समुद्रं—सागरम्। ऊर्मिमत्त्वादूर्मिरिति लक्षणयोच्यते। अचिद्द्रव्यसंबन्धिनमूर्मिमन्तं संसारसागरमित्यर्थः। अथवा समुद्रमपामूर्मिं—समुद्रिक्तं गर्भोदकानां पुञ्जमित्यर्थः। सचमानः; *षच समवाये इति धातुः, अनुप्रविशन्, तन्मध्ये निमज्जन्नित्यर्थः। एतेन दुःखमयसंसारसागरनिमग्नत्वात्तदुत्तितीर्षायोगित्वमप्यस्तीति फलितम्। महिषः—मह पूजायामिति धातोः *अविमह्योष्टिषजिति टिषच्; पूजित इत्यर्थः। यथा राजचिह्नधारी राज्ञा जगता च पूज्यते तद्वदयमपि भगवता देवमनुष्यादिभिः नित्यसूरिभिश्च पूज्यत इति भावः। महत्पर्यायश्च महिषशब्दः पठितः। तुरीयं—चतुर्थं, धाम—तेजः; व्यूहत्रयाज्जाग्रदादिपदत्रयात् परं वासुदेवसंज्ञं तेज इत्यर्थः। यद्वा धामशब्दः स्थानपरः; तेन मुक्तप्राप्यं परमपदं विवक्षितम्। तुर्यं कर्मवश्यानां प्राप्यात्स्थानत्रयाद्विलक्षणत्वेन सर्वस्मात्परमित्यर्थः। सर्वमपि सांसारिकं भोगस्थानमुदाहृत्य *एते वै निरयास्तात स्थानस्य परमात्मनः इति **मोक्षधर्मे**ऽभिहितम्। विवक्ति—स्तुत्या सेवते। धातूनामनेकार्थत्वादत्र योग्यार्थे तात्पर्यं ग्राह्यम्। यद्वा गोविन्दस्यायुधानि बिभ्रत्तत एव चमूषदादिपद-सप्तकैर्निरुक्तविशेषावसितैर्गुणैर्विशिष्टस्तुरीयं धाम प्राप्नोतीत्येकवाक्यता। संसारनिवृत्तिपूर्वकतुरीयधामप्राप्तिकामो गोविन्द-स्यायुधानि बिभृयादिति विध्यर्थः।

एवमपि सर्वत्र धारणमात्रं प्रतीयते न त्वङ्कनमिति चेन्न;

*एभिर्वयमुरुक्रमस्य चिह्नैरङ्किता लोके सुभगा भवेम। तद्विष्णोः परमं पदं ये गच्छन्तीह लाञ्छिताः॥

इत्या**थर्वणे** व्यक्तमभिधानात्। उरुः प्रभूतः क्रमोऽधिष्ठानं यस्य स तथोक्तः; विश्वान्तर्यामीत्यर्थः। यद्वा त्रिविक्रमा-वतारकृतः पदविक्षेप एव क्रमशब्देन विवक्षितः। पद्यत इति पदं प्राप्यं स्थानमिह विवक्षितम्। नास्य स्वरूपार्थत्वं, वैयधिकरण्यसिद्धभेदे बाधकाभावात्, स्थानविशेषस्यापि प्राप्यत्वे बहुश्रुतिसद्भावाच्च। परो मा अस्मादिति परमम्। तदिति स्वरूपविभवादिभिः प्रसिद्धवैलक्षण्याभिप्रायम्। तदयमन्वयार्थः—ये यादृशास्तादृशा अपि उरुक्रमस्य चिह्नै-र्लाञ्छितास्ते तद्विष्णोः परमं पदं गच्छन्ति। अतो वयमप्युरुक्रमस्य [चक्रादि]चिह्नैरङ्कितास्तस्मिन्परमपदशब्दाभिधेये भगवल्लोके भगवतोऽन्तरङ्गकिङ्करतया सुभगाः—वल्लभा भवेमेति। मुमुक्षूणामिदमनुसन्धानम्। लोकशब्दस्यैतल्लोकविषयत्वं वा; अस्मिँल्लोके सद्भिरभिनन्दनीया भवेमेत्यर्थः। यद्वा सुभगाः—भगवत्समाश्रयणौपयिकभाग्यविशेषभाज इत्यर्थः। तदेवमङ्कनलाञ्छनशब्दाभ्यां विशेषतो निर्देशात् भरणादिशब्दस्तत्र पर्यवसितः; सामान्यशब्दस्य समानप्रकरणोक्त-विशेषपर्यवसानस्य न्याय्यत्वात्। परमपदप्राप्तिसौभाग्यविशेषकाम उरुक्रमस्य भगवतश्चिह्नैरङ्कितो भवेदिति विध्यर्थः।

नन्वत्रापि तप्तैश्चिह्नैरङ्कनं न प्रतीयते, मृत्तिकाचन्दनाद्यालिप्तैरङ्कनोपपत्तेः, तथा च कैश्चिदनुष्ठीयमानत्वादिति चेन्न; *चक्रं बिभर्ति वपुषाऽभितप्तमित्याद्यृग्वेदखिलवचनवैरस्यात्। देवानां बलं—रक्षकमित्यर्थः। [अमितस्य—सर्वत्र परिपूर्णस्य।] विष्णोश्चक्रमित्यन्वयः। नाकम्—अकं—दुःखं, तद्रहितं परमपदम्। दुरिता विधूय—दुरितान्यवधूयेत्यर्थः।

अत्र दुरितशब्देन सांसारिकपुण्यमपि संगृहीतम् । * न सुकृतं न दुष्कृतमित्युक्त्वा * सर्वे पाप्मानोऽतो निवर्तन्ते इति पाप्मशब्देनोपसंहारात्, मुक्तस्य च * सुकृतदुष्कृते धूनुते, * पुण्यपापे विधूय इति द्वयोरपि निवृत्तिश्रुतेः ; अत्र * प्रयान्ति यद्यतयो वीतरागाः इति मुक्तप्राप्यस्यैव प्रतीतेः । अत्र विधिस्तु सुगमः ।

नन्वेतदपि तप्तकाञ्चनादिनिर्मितसुदर्शनादिधारणे चरितार्थम् । यथोक्तं ज्यौतिषे बार्हस्पत्ये मुहूर्तविधाने—

* जातस्य तु कुमारस्य धारयेत्पञ्चमे दिने । चक्रं कृत्वा सुवर्णेन षडरं मन्त्रसंयुतम् ॥ इति ।

संग्रहश्च— * जातस्य पञ्चमदिने शुभदे मुहूर्ते पञ्चायुधाभरणधारणमिष्टमाहुः ।
नाभिप्रदेशपरिलम्बिसुवर्णसूत्रप्रोतं शिशोर्ग्रहनिवारणकैश्च युक्तम् ॥ इति ।

* कृतचक्रधारीति वचनान्तरमपि तथा सत्यनुगुणमिति चेन्न ; * नेमिना तप्ततनुर्ब्रह्मणस्सायुज्यं सलोकतामाप्नोतीति सामोपनिषदैकार्थ्यात् * कृतचक्रधारीत्यत्रापि णिनेरवश्यंभावार्थत्वात् सदा धारणं प्रतीयते । तच्चाङ्कनरूपत्वेऽनुगुणम् ; काञ्चनादिनिर्मितस्याभरणान्तरवदेव सदातनत्वाभावप्रसङ्गात् । ततश्च कृतशब्देन स्मृतिसिद्धप्रतिष्ठार्चनादिसंस्कृतत्वं विवक्षितम् । ब्रह्मणस्सायुज्यमिति ; सायुज्यं समानभोगादियुक्तत्वम्, * परमं साम्यमुपैतीति श्रुतेः, * मम साधर्म्यमागताः, सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति स्मृतेश्च । सूत्रं च—* भोगमात्रसाम्यलिङ्गाच्चेति । सालोक्यादित्रयस्यापि ब्रह्मसायुज्यान्तर्भूतत्वज्ञापनायात्र सालोक्याभिधानम् ; देवतान्तरप्राप्तौ हि सालोक्यादिभेदावाप्तिः । यद्वा भगवत्प्राप्तावपि श्रीविष्णुलोकादिषु द्वार[पाल]कादिष्विव तथाविधभेदोऽस्तीति तदपेक्षिणां प्राप्तिभेदद्योतनाय पृथङ्निर्देशः । यथाहुः—

* लोकेषु विष्णोर्निवसन्ति केचित्समीपमृच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥

इति । यथाभिलषितं ब्रह्मसायुज्यादिप्राप्तिकामः चक्रेण तप्ततनुर्भवेदित्युक्तं भवति । नेमिना तप्ततनुरित्यत्र चक्रधारणं न प्रतीयते इति चेन्न ; नेमिशब्देन नेम्यवयव[कस्य]चक्रस्य लक्ष्यमाणत्वात् । * पवित्रमित्यग्निः अग्निर्वै सहस्रारः सहस्रारो नेमिः इति तत्पूर्ववाक्यानुरोधाच्च । चक्रपर्यायश्च नेमिशब्दो माधवार्येण **नामानुक्रमण्या**मुक्तः—* चक्रं चारिः पविर्नेमिः पृथक्चक्रस्य वाचकाः इति । एवं पविशब्दस्यात्र चक्रपर्यायत्वेन पठनात् * रथचक्रस्य धारायां वज्रे च पविरीरितः इति वेदनिघण्ट्वन्तरपठितः पविशब्दश्शब्दान्तरम् ; लाक्षणिको वा क्वचित्प्रयोगः । उपक्रमगतोऽर्थान्तरप्रसिद्धोऽग्निशब्दस्तत्र कथमिति चेत् ; सौदर्शनस्य धाम्नः * सोमसूर्यदहनप्रभोज्ज्वलं चक्रमेतदुदितं महामुने इत्याद्यहिर्बुध्न्यवचनैस्तेजस्त्रयीमयत्वश्रवणात् । यद्वा * साक्षादप्यविरोधं जैमिनिः इति शारीरकसूत्रे प्रतिपादितेनाग्रनयनेन तस्याग्नित्वम् ; एवं च नेतृवाचिनेमिशब्दोऽप्यनुगुणः । अथवा * नेमिना तप्ततनुरिति विधीयमानाङ्कनदशायामग्नितप्तत्वज्ञापनायाग्निशब्दः । अत्राग्निशब्दस्य प्रसिद्धाग्निमात्रपरत्वे * अग्निर्वै सहस्रारः सहस्रारो नेमिरिति क्रमेणाग्निशब्दार्थविवरणं न घटते ।

एवं पवित्रशब्दस्य सुदर्शनपरत्वश्रुतेः * पवित्रं ते विततम्, * चरणं पवित्रम्, * लोकस्य द्वारमर्चिमत् इत्यादिष्वपि सुदर्शनपरत्वं व्याचख्युः । * पवित्रं ते विततमित्यत्र पवित्रशब्दः निखिललोकरक्षादीक्षितस्य भगवतस्सुदर्शनस्य संज्ञा विज्ञायते । श्रुतिरेव हि पवित्रसंज्ञा सुदर्शनस्य नामेति स्वयमेव स्पष्टीकरोति । तद्यथा—* पवित्रमित्यग्निरित्यादि ।

पावयितृत्वात्तातृत्वाच्च पवित्रमिति । पवित्रशब्दश्च रथनेमिविषयतया **यास्केन** नैगमे काण्डे निरुक्तः ; यथा—* पविः रथनेमिर्भवति पुनाति भूमिमिति । तत्र श्रुतिश्च तेनैवोदाहृता—* उत पविर्या रथानामद्रिं भिन्दन्नोजसा इति ।

**एकायनब्राह्मण**निरुक्तिश्च पूर्वं प्रदर्शिता । तदयमस्यार्थः—ब्रह्मणस्पते इत्यनेन समानत्वात्पवित्रं विततमित्युभयमपि संबुद्ध्यन्तम् । ते इति तृतीयार्थे षष्ठी । वितत, पवित्र, ब्रह्मणस्पते, त्वयाऽततत्तनूरिति संबन्धः ; प्रभुरिति षष्ठ्यर्थे प्रथमा । प्रभोः सर्वेश्वरस्य गात्राणि विश्वतः—विश्वानि, पर्येषि—परिवारयसीत्युक्तं भवति । यद्वा प्रभुस्त्वं विश्वेषामाश्रितानां गात्राणि पर्येषीत्यर्थः । एवं सुदर्शनसंबोधनेन कैश्चिद्व्याख्यातम् । व्याख्यानान्तरमपि—चक्रशरीरिणं केवलं वा भगवन्तं नारायणं वेदवैदिकानां गोप्तारं ब्रह्मणस्पते इति संबोधयन्नाह—* पवित्रं ते विततमिति । तवायुधत्वलाञ्छनत्वाभरणत्वैः शेषभूतं परमपावनं सुदर्शनं विततमित्यर्थः । विततं—विस्तृतं, प्रमाणेषु प्रमातृषु भुवनेषु वा । विश्वतः—* सार्वविभक्तिकस्तसिः ; विश्वस्येत्यर्थः । विश्वस्य प्रभुस्त्वं तव गात्रभूतानि चेतनाचेतनात्मकानि सर्वाणि तत्त्वानि पर्येषि—परितो गच्छसि, व्याप्नोषीत्यर्थः । विश्वतः इति विश्वानिति वाऽर्थः । गात्रशब्देनोपासकानां वा गात्राणि विवक्षितानि । ततश्च प्रभुस्त्वं शेषभूतानामस्माकं गात्राणि तेन विततेन लाञ्छनभूतेन शरीरभूतेन च पवित्रेण पर्येषि, लाञ्छितानि कृत्वा स्वीकरोषीत्युक्तं भवति। तेन पवित्रेणाग्नितप्तेन अतप्ततनूः—अदग्धगात्र इत्यर्थः। तत एव अयमामः—अपक्वकषाय इत्यर्थः । तदिति ब्रह्मोच्यते ; * यत्तत्पदमनुत्तमम्, * तदिति वा तस्य महतो भूतस्य नाम भवति इत्यादिदर्शनात् । ऋग्वेदे—* तत् आमः इति पदभेदाध्ययनादन्यत्रापि तथैवाङ्गीकर्तुमुचितम् । यो भवतश्चक्रेणालाञ्छितः स त्वां न प्राप्नोतीत्युक्तं भवति । ये पुनः शृतासः—श्रिताः, पक्वा इत्यर्थः । तेन

* कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥

इत्याद्युक्तं विवक्षितम् । इदित्यवधारणे । ये सुदर्शनं वहन्तः परिपक्वज्ञानाः, त एव तत्समासत—परब्रह्मभूतं त्वां संप्राप्नुयुरित्यर्थः ।

पवित्रशब्दस्य सुदर्शनपर्यायत्वं न केवलं श्रुतिसिद्धम् ; अपि तु नैघण्टुकैरप्युक्तम् । तथा हि पञ्चायुधानां प्रस्तावे

* सुदर्शनमरं चक्रं पवित्रं चरणं हरेः । शङ्खो जन्यो भवः पाण्डुः पाञ्चजन्यः परावरः ॥ इति ।

**काठके**— * चरणं पवित्रं विततं पुराणं....दधातु इति । अस्यार्थः—* चरणं प्राङ्कणे चक्रे इति नैघण्टुकाः ।

**श्रीशास्त्रे** च—* पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमात्मनः ॥ इति ।

एवं पवित्रचरणशब्दयोश्चक्रवाचकत्वेऽपि तत्तन्निर्वचनसिद्धार्थप्रतिपादनपरत्वादत्र न पौनरुक्त्यशङ्का । पवित्रशब्दार्थः प्रागेवोक्तः । चरणशब्दश्चात्र रथचरणाकारत्वात्परगतिसाधनत्वाद्वा । पुराणं—पुरातनम्, अनादीत्यर्थः । पुरातनत्वेऽपि नवमिति च काचिन्निरुक्तिः । विश्वकर्मादिभिश्चक्रवत्पर्वतादिषु तन्निर्माणमिदानीन्तनशिल्पिभिश्चक्रादिनिर्माणवत् । तत्रापि तत्तच्छक्त्यनुप्रवेशात्तत्तत्कार्यकरत्वोपपत्तिरिदानीन्तनचक्रयन्त्रादिवत् । येन पूतः—यदङ्कनेन संस्कृत इत्यर्थः, पूर्वोक्त्यैकार्थ्यात् । तरति दुष्कृतानि—भगवत्समाराधनानर्हताहेतुभूतपापान्यतिलङ्घयतीत्यर्थः । यद्वा परम्परया सांसारिकं सर्वमपि कर्मातिक्रामतीत्यर्थः। एतत्सर्वसाधारणमुक्तम्; तत्स्वस्मिन्नाशास्ते, तेनेति । शुद्धेन—नित्यास्पृष्टदोषेणेत्यर्थः । पूता इत्यादिकं पूर्ववत् । अतितरेमेत्यन्वयः । लोकस्य द्वारं—भगवल्लोकप्राप्त्युपायभूतमित्यर्थः । यद्वा लोकस्य—जनस्य पुरुषार्थप्राप्त्युपायभूतमित्यर्थः । अर्चिर्ज्योतिर्महःशब्दैर्ज्वालाकिरणप्रकाशादिभेदस्य विवक्षितत्वान्न पौनरुक्त्यम् । भ्राजमानं—शोभमानम् ;

तेन सुदर्शनत्वादिकं विवक्षितम् । *अमृतस्य धारा बहुधा दोहमानमिति; समस्तजरामरणसन्तानोच्छेदकस्य नित्यस्य परमपुरुषार्थस्यानुभवप्रकारादीन् पङ्गोरुपरि गङ्गानिपातवत्स्वयमेवायत्नलभ्यान्संपादयतीत्यर्थः । लोके—प्राप्तिदशायां भगवल्लोके; यद्वा, अस्मिँल्लोके उपासनदशायाम् । सुधितान्—सुखितानित्यर्थः । सुप्रतिष्ठितान् दधात्विति तदपेक्षिताशासनं वा । विनियोगान्तरानुरूपमर्थान्तरमर्थान्तराविरुद्धमिति प्रागेवोक्तम् । एवं वाक्यान्तराण्यपि भाव्यानि ।

तदेवं प्रत्यक्षैः प्रत्यक्षवत्पठ्यमानैश्च श्रुतिवाक्यैर्विशदं प्रतिपन्नस्यार्थस्य विद्यमानैरप्युपबृंहणैर्नैवापेक्षा । अतः कल्पसूत्रकारैर्मन्वादिभिश्चास्मर्यमाणत्वचोद्यमपास्तम् । न च सर्वं सर्वैः स्मर्यते, तथा सत्यन्यनैरपेक्ष्यप्रसङ्गात् । कतिकति कल्पसूत्रकारैर्मन्वादिभिश्चानुपात्ता इतिहासपुराणायुर्वेदधनुर्वेदगन्धर्ववेदार्थशास्त्ररत्नशास्त्रशिल्पशास्त्रादिषु संगृह्यन्ते । अस्ति च **शाण्डिल्यस्मृतिः**—

*पशुपुत्रादिकं सर्वं गृहोपकरणानि च । अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् ॥
कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः । बध्नीयात्कण्ठदेशे तु बालानां सूतिकागृहे ॥
न मुद्रयेदासनानि शयनानि महीतलम् । स्थापयेत्क्षेत्रमध्ये तु शिलां चक्रादिमुद्रिताम् ॥
मुक्तामणिसुवर्णाद्यैः कृत्वा चक्रादिभूषणम् । यथार्हं बिभृयुस्सर्वे पुमांसस्स्त्रीजनोऽपि च ॥

इत्यादिका । [तथा च **वसिष्ठस्मृतिः**—

*अष्टमात् षोऽशाद्वाऽह्वाद्वार्यं चक्रादिभूषणम् । प्रतप्तैरङ्कनं पश्चात्सदा वा भूषणं स्त्रियः ।
जातकर्मणि वा कुर्याच्चौलोपनयनेऽपि वा । वेदाध्ययनकाले वा चक्रचिह्नं विधानतः ॥ इत्यादिका ।]

सन्ति चेतिहासाः । यथा **श्रीविष्णुधर्मे** द्व्यशीतितमेऽध्याये यमकिङ्करसंवादे—

*भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया । विनाऽऽज्ञाभङ्गकृन्नैव भविष्यति नरः क्वचित् ॥ इत्यादि ।

एतेन, *वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते ।
तव गतिरथवा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः ॥

इति **श्रीविष्णुपुराण**गतयमकिङ्करसंवादवचनमपि गतिसामान्यन्यायेन व्याख्यातम्; *परिहर मधुसूदनप्रपन्नानिति प्रपन्नप्रकरणौचित्याद्वाचिकमानसिकशुद्धिवत्कायिकशुद्धेरपि वक्तव्यत्वात्स्ववाक्यौचित्यादध्याहारादिनिरपेक्षत्वाच्च । अयमेवार्थो **मात्स्ये**ऽन्यत्र च **यमकृष्णार्जुनसंवादे**ऽपि स्पष्टः—

*मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः । नैवाप्नोति वशं मृत्योरप्याज्ञाभङ्गकृन्नरः ॥
नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत् । नान्यप्रासादमारोहेन्नान्यदायतनं विशेत् ॥
चक्राङ्कितस्सदा तिष्ठेन्मद्भक्तः पाण्डुनन्दन ॥ इति ।

एवं चक्रादिधारणान्मृत्युवशत्वाभावः **श्रीविष्णुतत्त्वे**ऽपि नरकप्रस्तावे प्रोक्तः—

*चक्रादिधारणं पुंसां परसंबन्धवेदनम् । पतिव्रतानिमित्तं हि वलयादिविभूषणम् ॥
वैष्णवेभ्यो हि बिभ्यन्ति देवा नरकरक्षकाः । अवमानक्रिया तेषां संहरत्यखिलं जगत् ॥
कालेनैतावता तेषु नरकेषु तु कश्चन । न दृश्यते महावीर्य प्रभावात्परमेष्ठिनः ॥ इति ।

एवं भारतेतिहाससारतया सर्वशिष्टपरिगृहीतेतिहाससमुच्चये द्वात्रिंशेऽध्याये श्रीपुण्डरीकाख्याने—

* केचिच्चक्राङ्कितास्तत्र प्राणिनः पुण्यदर्शनाः । विचरन्ति यथाकामं पुण्यतीर्थप्रशंसिनः ॥ इत्यादि ।

न चैतत्तत्र प्रतिक्षेप्यपक्षानुप्रविष्टम्; अङ्गिनो नारायणोपासनस्यैवानन्तरं विधीयमानत्वात्, पूर्वोत्तरगतनानागम-नानापक्षविकल्पानुप्रविष्टत्वाभावात्, सालग्रामक्षेत्रप्रशंसारूपत्वाच्चास्य वाक्यस्य । तथा—

* नारदोऽहमनुप्राप्तस्त्वद्दर्शनकुतूहलात् । प्रभवो भगवद्भक्ता मादृशां सततं द्विज ॥

स्मृतस्संभाषितो वाऽपि पूजितो वा द्विजोत्तम । पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥

इति भगवद्भक्तप्रशंसातात्पर्यदर्शनाच्च । तिष्ठतु चान्यत्सर्वं, स्पष्टमुक्तं हि भगवता **व्यासेनैव** पञ्चमे वेदे **भीष्मपर्वणि** चतुर्थेऽह्नि देवगुह्ये—

* ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ॥

सात्त्वतं विधिमास्थाय गीतः संकर्षणेन यः ॥ इति ।

लाञ्छनं लक्ष्म लक्षणमिति पर्यायः । न चैतदासत्त्या शूद्रमात्रविषयमिति वक्तुं युक्तम्, चतुर्णामपि समुचितानामविशेषेण तदन्वयप्रतीतेः । ये तु *कृतलक्षणैरित्येतत्कृतचीर्णाचारैरिति व्याचख्युः, तेषां नूनमाग्रहग्रहेण पदार्थज्ञानमपि मुषितम्; लक्षणशब्दस्याचारवाचकत्वेन प्रसिद्ध्यभावात्प्रसिद्धार्थे बाधकाभावेनोपचारस्याप्रसिद्धयोगस्य वाऽङ्गीकारायोगात् । आचारबोधकत्वानुरूपस्य च योगोपचारयोर्निमित्तस्य निर्वचनसादृश्यसंबन्धादेः स्फुटस्यादर्शनात्; यथाकथञ्चिदन्यथाकरणेऽतिप्रसङ्गात् । ये तु कृतयज्ञोपवीतादिलक्षणैरिति व्याचख्युस्तेऽपि तेनैवाग्रहग्रहेण शूद्रैश्चेति पदस्य तदन्वयस्य वा विस्मारिताः । न चान्यत्किञ्चिदस्ति शूद्रचिह्नं येनादिशब्देन तत्संग्रहस्स्यात् ।

ननु शूद्राणामपि—*कृतयज्ञोपवीतादिलक्षणैरित्यादौ कृतयुगे यज्ञोपवीतादिधारणमितिहासादिषु श्रुतमिति चेत्, अहो महत्त्वमैतिहासिकत्वस्य, यद्ग्रन्थानां तात्पर्यार्थवदाभिधानिकार्थमपि तिरोधत्ते । आदिकृतयुगे शूद्राणामभाव एव हि महाभारतादिषु प्रपञ्चितः । ततश्च तत्र काले सर्वेषां यज्ञोपवीतधारणवचनमपि पश्चाद्वृत्तिभेदेन शूद्रीभविष्यतां तदातनब्राह्मणविशेषाणां तद्धारणेन चरितार्थम् । अस्तु वा तदानीं वचनबलाच्छूद्राणामपि तद्धारणम्; तथाऽपि नात्र श्लोके तद्विवक्षा शक्या, तेषामाद्यत्रेतायुगात्प्रभृति तत्प्रसङ्गा[त्; अत्र च]भावात्; ततश्च कालविशेषस्यानन्तरश्लोकेऽभिहितत्वात्—

* सात्त्वतं विधिमास्थाय गीतस्संकर्षणेन यः । द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥ इति ।

इदं च कालविशेषविधानं न कालान्तरनिषेधपरम्, सार्वकालिकत्वेन वचनान्तरशतैर्विहितत्वात् । अत एव गीतिकालविशेषपरत्वेऽपि न दोषः । किं च भगवत्समाराधनविधायके वाक्ये तदसाधारणं किञ्चिदङ्गत्वेन विधातुं युक्तम् । यद्यपि च वर्णाश्रमाचारपरित्यागशङ्कानिवृत्त्यर्थं यज्ञोपवीतादिविधानमपि युक्तम्; तथाऽपि—*सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु,

* ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी । परिव्राट् चापि पतितस्तस्मात्तन्न परित्यजेत् ॥

इत्यादिस्मृतिशतसुप्रतिष्ठितत्वादस्यार्थस्यात्र न तद्विधानापेक्षानिबन्धः । तदेवमाचारयज्ञोपवीतादेस्सर्वदेवतार्चनसाधारणत्वान्नात्र विशेषविध्यपेक्षेति युक्तमनुसंधत्स्व । किंच *सात्त्वतं विधिमास्थाय गीतस्संकर्षणेन यः इति भगवच्छास्त्रपुरस्कारेण समाराधनविधानात् कृतलक्षणपदस्यापि तदनुसारेण व्याख्या युक्ता । तत्र हि ब्राह्मणादीनां भगवदर्चनप्रवृत्तानां चक्रादेरवश्यधार्यत्वम् कृतलक्षणशब्दस्य च तद्विषयत्वं सुस्पष्टम् । यथा **श्रीविष्णुमन्दिरे** प्रतिष्ठाध्याये—

*प्रतिष्ठादिवसं ज्ञात्वा ऋत्विग्भिर्द्विजसत्तमैः । एकान्तिमुनिमुख्यैस्तु कृतचक्रादिलक्षणैः ॥
यजमानः प्रकुर्वीत वेद्यादिस्थापनं पुरा ॥ इति ।

तथा **पारमेश्वरे** च प्रतिष्ठाध्याये—

*येषु व्यक्तेषु चिह्नानि नाभिव्यक्तानि सत्तम । तान्यपि स्वानि चिह्नानि ललाटे चांसपट्टयोः ॥
पृष्ठे वाऽप्यङ्कपट्टे वा पाणिपादतलेषु वा । मूर्ध्नि वा दधते तस्मात्तत्र तत्र निरीक्षयेत् ॥
यस्मादलक्षणा व्यक्तिर्विद्यते न कदाचन । एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः ॥
मौद्गल्याद्यास्तथाऽन्ये च न तच्चिह्नविवर्जिताः । भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदाम्बुजैः ॥
लोहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः । पूजितैरर्घ्यगन्धाद्यैरङ्कितव्याः क्षणेन तु ॥
त्रय्यन्तज्ञानसंपन्ना यथोक्ताचारनिष्ठिताः । विप्राद्यास्ते च शूद्राश्च यदैवं कृतलक्षणाः ॥
तदा तु योग्या विज्ञेयाः समयश्रवणादिषु । शास्त्रोदितासु सर्वासु सामग्रीषु महामते ॥
यागोपकरणान्येवमर्घ्यपाद्यादिकान्यपि । सँल्लाञ्छ्यानि यथायोगं शङ्खचक्रादिलक्षणैः ॥
तथा यानासनादीनि विभोस्सर्वाणि यत्नतः । स्वात्मोपकरणं सर्वमासनादिविवर्जितम् ॥
अङ्गुलीयकपर्यन्तं भूषणं कटकादिकम् । उत्तमाङ्गसमुद्धार्यं सर्वमुष्णीषपूर्वकम् ॥
चक्रादिलाञ्छितं कुर्यात्तदीयाश्च गवादयः । विप्रादिवल्लाञ्छितव्यास्तदीया भूरुहादयः ॥
लाञ्छितव्या यथायोगं चक्रशङ्खादिलक्षणैः । आराधकाद्याः कर्मण्या एवं चक्रादिलाञ्छिताः ॥
देवतान्तरचिह्नैस्तु अकर्मण्याश्च लाञ्छिताः । यत्र वा भगवन्मूर्तौ लाञ्छनं न प्रदृश्यते ॥
तत्र वै लक्षणन्यासं न कुर्यात्स्वेच्छया द्विजः । यथास्थितैव सा व्यक्तिः पूज्या व्यापकमन्त्रतः ॥
तदन्ये लाञ्छितव्यास्स्युस्सर्वे पूर्वमलाञ्छिताः ॥ इति ।

**श्रीविष्णुतत्त्वे** तृतीयपादे प्रथमे पटले—

*एवं विज्ञापितास्शिष्याश्चक्रलिङ्गसमन्विताः । देवा एव भवन्त्येते नान्येषां कर्मकारकाः ॥ इति ।

द्वितीये पटले—*इति तेनाभ्यनुज्ञातश्चक्रलिङ्गधरो भवेत् । इति ।

नवमे पटले— *संस्कारव्यञ्जितात्मानः प्रतिचिन्हेन लाञ्छिताः । देवाभिधानवन्तश्च त्यक्तास्पदपरिग्रहाः ॥
तमेव सर्वभावेन संप्रयान्तु महामुने । इति ।

अत्रान्तिमे पटले—*चक्रादिधारणं पुंसामित्यादि प्रागेवोक्तम् । तत्रोपरितने चतुर्थे पटले—

*ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः । एते ह्याश्रमिणः प्रोक्ताश्चत्वारः क्रमयोगतः ॥

इत्यारभ्य *चक्रलिङ्गधरास्सर्वे समयव्रतनिष्ठिताः इति । भवेयुरिति शेषः । **पराशरसंहितायां** गृहार्चाप्रतिष्ठायाम्—

*श्रोत्रियो विष्णुभक्तस्तु गृहस्थश्शास्त्रवित्तमः । चक्रलिङ्गधरो विप्रः प्रतिष्ठां कर्तुमर्हति ॥
तेन प्रतिष्ठि[ते]तस्तत्र सन्निधत्ते सदा हरिः । देवतान्तरभक्तो वा समबुद्धिरथापि वा ॥
नास्तिको वेदहीनो वा न प्रतिष्ठां समाचरेत् ॥ इति ।

**नारदीयपद्धतौ** च—

* गृहस्थः श्रोत्रियो विप्रो नित्यकर्मरतश्शुचिः । शान्तश्चक्रधरो दान्तस्सद्भक्तो दोषवर्जितः ॥
शास्त्रज्ञः कर्मदक्षश्च प्रतिष्ठां कर्तुमर्हति ॥ इति ।

सर्वसंहितासारभूते **श्रीसात्त्वते** च विभवमूर्तिपरिच्छेदे—

* नास्त्रैर्वस्त्रैर्ध्वजैर्येषां व्यक्तिर्व्यक्ता जगत्त्रये । तेऽपि लाञ्छनबृन्दं तु धारयन्त्यङ्घ्रिगोचरे ॥
ललाटे वांसपट्टे वा पृष्ठे पाणितलद्वये । तनूरुहचये मूर्ध्नि कर्मिणां प्रतिपत्तये ॥
अपि संसारिणो जन्तोस्स्वभावाद्वैष्णवस्य च । न जहात्याच्युतं लिङ्गं किं पुनर्विभवाकृतेः ॥ इति ।

न च वाच्यम् * असूयत शुभाचारं वासुदेवपरायणम् । शुभलक्षणसंपन्नं चक्राङ्कितमनुत्तमम् ॥
इति लैङ्गवच[नात् ]नवत् इदमपि सहजचिह्नपरमिति ; तस्मिन्नपि लैङ्गवचने सहजचिह्नपरत्वे नियामकाभावात्, *शुभलक्षण-संपन्नमित्यनेन गतार्थत्वात्, शुभाचारमितिवत्पाश्चात्यार्थवर्णनोपपत्तेश्च । अस्तु वा तत्र शुभलक्षणशब्दस्य गोबलीवर्द-न्यायात्सङ्कोचः, अत्र तु संहितान्तरश्रुत्याद्यनुसारादङ्कनविषय[मेवेति]मिति मन्तव्यम् । एवं **सनत्कुमारसंहिता**दिष्वपि—

* सर्वपापविनाशार्हं रथाङ्गस्य तु धारणम् । सर्वकल्याणदमिह पश्चात्संसारनाशनम् ॥
सुवर्णरूप्यताम्राद्यैर्लोहेन च तथैव वा । तथा रथाङ्गमष्टारं सुनाभिं च सुवृत्तकम् ॥
ज्वालाचतुष्कसंयुक्तं कृत्वा चैवं विधानतः । अग्नौ प्रताप्य विधिवद्धारयेद्भक्तिसंयुतः ॥ इत्यादि द्रष्टव्यम् ।

तदेवं भगवच्छास्त्रे समाराधकादीनां सर्वेषामपि चक्रादिलाञ्छनधारणस्यावश्यकर्तव्यतयाऽभिहितत्वात् प्रमाणा-न्तरगवेषणं चापवरकनिहितहिरण्यनिधेः पुरुषस्य कोद्रवाद्यर्थं कृपणजनयाचनमिति परिहसन्ति सन्तः । तेनाहितलक्षण-पर्यायतया कृतलक्षणशब्दस्याप्रसिद्धरूढिविशेषाश्रयणमपि निरस्तम् । अतः—* ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैरिति चक्रादिविषयमेव ।

एतेन यदुक्तं **हरिवंशे** सप्तचत्वारिंशच्छततमेऽध्याये यात्रारम्भे—

* चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम । नामुद्रिताः प्रवेष्टव्या यावदागमनं मम ॥ इति,

तदपि यथोपलम्भं सामान्यतस्सर्वजनविषयमेवेति निर्व्यूढम् । यद्यपि तत्र नगररक्षाभिधाने तात्पर्यम् ; तथाऽपि भगव-दसाधारणचिह्नमिदमित्यपि सिद्धं भवति, * वैष्णवानां विशेषतः इत्यादिवचनान्तरानुसाराच्च । न च नगररक्षौपयिक-भटादिमात्रविषयमिदमिति वक्तुं शक्यम्, तावन्तं कालं ब्राह्मणादेस्तत्र संचारनिरोधे प्रमाणाभावात्, ब्राह्मणादेश्चक्राङ्कित-त्वाभावे प्रमाणाभावाच्च, प्रत्युत श्रुतिस्मृत्यादिविहितत्वेन तद्वत्त्वादेव । नन्वचक्राङ्कितस्यापि ब्राह्मणादेर्निवारणमत्रानुपयुक्त-मिति चेन्न, अभागवतानां ब्राह्मणानामप्यसितमनसामाशयपरिज्ञानायोगेन तन्निवारणस्यापि नगररक्षणौपयिकत्वात् । अतो ये चक्राङ्कितास्ते प्रवेष्टव्या एव न तु निवारणीयाः ; ये तु न चक्राङ्कितास्ते न प्रवेष्टव्या इति वचनव्यक्तावनुवादांशस्य पुरोवादसापेक्षत्वेन श्रुत्याद्युपस्थापितब्राह्मणादिसर्ववर्णसंभवभगवदसाधारणजनविषयोऽयं ये चक्राङ्किता इत्यनुवादः ; तद्व्यतिरिक्तविषयश्च निषेधः । ये प्रवेष्टव्यास्ते चक्राङ्किता एव स्युरिति वचनव्यक्त्या लोहितोष्णीषन्यायेन विशेषण-विधानतात्पर्येऽपि नगरप्रवेशस्य प्रतिनियतजातिविषयत्वाभावेन साधारण्येनानुवादात्तत्तज्जातीयेषु चक्राङ्किता एव प्रवेष्टव्या नामुद्रिताः इति वाक्यार्थस्स्यात्, तथाऽपि ब्राह्मणादेस्तद्वत्त्वं सिद्धम् ।

पौराणिकानि च परश्शतानि वचांसि ।

**पाद्मे**— * धारयेद्विष्णुभक्तस्तु चक्रं बाहौ तु दक्षिणे । वामे तु शङ्खराजानं धारयेद्विष्णुमाप्नुयात् ॥
चक्रेणैवाङ्कितो विद्वान्वासुदेवं समाश्रयेत् । भावभक्तिं समास्थाय ब्रह्मलोकं प्रयास्यति ॥ इति ।

**श्रीभागवते**— चक्राङ्कितस्य सान्निध्ये तपः कुर्यात्प्रयत्नतः । स्नानं दानं जपं होमं तत्सर्वं चाक्षयं भवेत् ॥
संवत्सरेण यत्पापं मनसा कर्मणा कृतम् । तत्सर्वं नश्यते तेषां सकृच्चक्राङ्कदर्शनात् ॥
ज्वरदाहभयं चैव चोराग्निजभयं तथा । तत्सर्वं प्रशमं याति यत्र चक्राङ्कितो वसेत् ॥ इति ।

**आग्नेये**— * पञ्चायुधानि धार्याणि भक्तिश्रद्धोपबृंहितैः । ललाटे मूर्ध्नि हृद्बाह्वोरेकत्रैकं पृथक्पृथक् ॥
ललाटे तु गदा धार्या मूर्ध्नि चापस्ततः परम् । नन्दकं चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
[य]तथा च विधिवत्कृत्वा पञ्चायुधविधानतः । तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठाप्य पृथक्पृथक् ॥
वह्निमध्ये समारोप्य विधिवत्पूजयेत्पुनः । अङ्कयेद्विधिवद्ब्रह्मन्नप्रमत्तस्समाहितः ॥
वर्णाश्रमेषु निष्ठानामन्येषां च विधानतः । कर्तव्यं भगवद्भक्तैस्सिद्धैर्मुक्तैश्च योगिभिः ॥
चक्रादिधारणाद्ब्रह्मन्विष्णुलोके महीयते । इति ।

सिद्धैः—सिद्धिकामैः; मुक्तैः—मुमुक्षुभिरित्यर्थः । आदिकर्मणि क्तः, आशंसायां वा । **भविष्यत्पुराणे**—
* चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् । तिर्यग्योनिशतं प्राप्य विष्ठायां जायते क्रिमिः ॥ इति ।

**ब्रह्मकैवर्ते**— * चक्राङ्कितभुजं मर्त्यं यो निन्दयति सर्वदा । स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ इति ।

**लैङ्ग्ये**— * अष्टाक्षरविदस्सर्वे विष्णुचक्राङ्कितास्तथा । श्रावका वासुदेवस्य तथैव नटनर्तकाः ॥
अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लाञ्छिताः । इति ।

**श्रीवाराहे**— *वासुदेवाङ्कनं कुर्यादात्मनो बाहुमूलयोः । सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥ इति ।
तत्रैव क्षेत्रमाहात्म्ये—

* मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः । मामेवैष्यति धर्मात्मा मदेकान्तेन चेतसा ॥
चक्राङ्कितभुजाः केचिद्यत्र कुत्र वसन्ति वै । योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥
ये केचिद्यत्र पुरुषा विष्णुचक्राङ्कमुद्रिताः । तेषां दर्शनमात्रेण महापातकनाशनम् ॥
भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे । तत्सर्वं प्रशमं याति यत्र चक्राङ्कितो वसेत् ॥ इत्यादयः ।

**स्कान्दे** यमवचनम्—

* येषां चक्राङ्कितं गात्रं शूद्रेष्वपि च दृश्यते । ते वै स्वर्गस्य नेतारो ब्राह्मणा भुवि देवताः ॥ इति ।

* शूद्रेष्वपि च दृश्यते इत्यस्य स्थाने * लोकेषु परिदृश्यते इति **वरदराजीयस्मृतिसंग्रहे** यमस्मृतिपाठस्संगृहीतः ।

**वामनेऽपि**— * लीलयाऽपि लिखेद्यस्तु बाहुमूले सुदर्शनम् । कुलकोटिं समुद्धृत्य स गच्छेत्परमं पदम् ॥ इति ।

**मात्स्ये**— * चक्राङ्कितभुजाः केचिच्छङ्खाङ्कितभुजास्तथा । शङ्खचक्रधराः केचित्कुले विष्णुपरिग्रहे ॥
शङ्खचक्राङ्कनं कुर्यादात्मनो बाहुमूलयोः । कलत्रापत्यभृत्येषु पश्वादिषु च मुक्तये ॥
मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः । नैवाप्नोति वशं मृत्योरप्याज्ञाभङ्गकृन्नरः ॥ इति ।

**श्रीगारुडे**— * विष्वक्सेनस्स्वयं चक्रमादायात्मविभूषणम् । प्रयच्छति महातेजा हरिभक्तानुकम्पया ॥
विष्णुचक्राङ्कितं गात्रं पवित्रमिति वै श्रुतिः । चक्राङ्किताय दातव्यं हव्यं कव्यं द्विजोत्तमैः ॥
अचक्रधारिणं विप्रं यश्श्राद्धे भोजयिष्यति । रेतोमूत्रपुरीषादीन् स पितृभ्यः प्रयच्छति ॥ इत्यादि ।

तथा— * अग्निनैव तु संतप्तं चक्रमादाय वैष्णवम् । दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥

तथा **ब्रह्माण्डे** श्रीविष्णुरहस्ये त्रयस्त्रिंशेऽध्याये—

* श्रावका वासुदेवस्य तथैव नटनर्तकाः । अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लाञ्छिताः ॥ इति ।

तत्रैव प्रथमेऽध्याये—

* वैष्णवा मुनयः [पूज्याः]पुण्या विष्णुलक्षणलक्षिताः । ध्यायिनो योगनिरताः सदा विष्णुपरायणाः ॥

इति । तत्रैव मोक्षधर्मे उमामहेश्वरसंवादे श्रीवैष्णवमाहात्म्ये—

* शङ्खचक्राङ्कितान् भक्त्या यः पूजयति मानवः । स साक्षाद्विष्णुसामीप्यं लभते नात्र संशयः ॥

इत्यारभ्य महता ग्रन्थेनायमर्थः प्रपञ्चितः । उपपुराणेषु ब्रह्माण्डसंहिताभेदरूपे **वायव्ये**—

* उपवीतादिवद्धार्याः शङ्खचक्रादयस्तथा । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥
विद्या विभूषणं पुंसस्तस्या वृत्तं विभूषणम् । विष्णुभक्तिर्विभूषाऽस्य सा चक्राद्यङ्कभूषणा ॥ इत्यादि ।

**आदित्यपुराणे**—

* चक्रादि धारयेद्विप्रो ललाटे मस्तके भुजे । पातकादिविशुद्ध्यर्थं भवक्लेशविनाशिनम् ॥
विहगेशेशनामाङ्काः शङ्खचक्राङ्किता नराः । निश्शङ्काश्च निरातङ्कास्ते सङ्कर्षणकिङ्कराः ॥
[शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः । सजीवन्नेव चण्डालस्सर्वकर्मबहिष्कृतः ॥
स्वर्णस्तेयं सुरापानं गुरुतल्पायुतानि च । सर्वं दहति निश्शेषं सकृच्चक्राङ्कदर्शनम् ॥

इत्यादीनि परश्शतानि प्रमाणानि विद्यन्ते । ग्रन्थगौरववशादत्र न लिख्यन्ते ।]

यद्यप्येते श्रुतिस्मृत्यादयो न दृश्येरन्; तथाऽपि नेदमनुष्ठानं हेयम्, होलकाधिकरणन्यायात्सर्वदेशवर्तिनोऽप्याचाराः प्रत्यक्षश्रुत्याद्यविरुद्धाः सर्वेषामप्युपादेया इति निरणैषुः; दृश्यते च सर्वेष्वपि च देशेषु भगवत्पराणां सुदर्शनादिधारणम् । तत्राप्यङ्कनविधिमनुस्मरन्ति प्रायशो विद्वांसः । केचित्तु नूनमुष्णालवो यथाकथञ्चिदपि धारणमुपादेयमिति प्रशस्तया मृत्तिकया लाञ्छयन्त्यङ्गानि । तुलसीकाञ्चनलोहताम्रादिनिर्मितां वा मुद्रां धारयन्ति । किंच * आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मरेत्यादिभिस्स्वतस्सिद्धं भगवद्दास्यमनुवर्तेतेति सामान्यतो विहिते तदुचितमनुष्ठीयमानमनिवार्यं पद्यकरणनामधारणवत् । न चाङ्गुलिविच्छेदस्यापि प्रसङ्गः, तस्याननुष्ठाननिरस्तत्वात् । सर्वदेशवर्तिभिरननुष्ठानं दुर्निश्चयमिति चेन्न, यथादृष्टि निरूपणमात्रस्यैव [कर्तु]वक्तव्यत्वात्; अन्यथाऽतिप्रसङ्गात्, व्याप्त्यादेश्चानुदयप्रसङ्गात् । यद्यपि तस्याप्यनुष्ठानं क्वचित्स्यात्, ततस्तस्यापि न्यायबलादुपादेयत्वमेव स्यात्, न तु तत्प्रसङ्गेन ततोऽन्यस्य निषेधः । एतेन देवतान्तरचिह्नधारणप्रसङ्गोऽपि परिहृतः, तस्य स्वसैद्धान्तिकैरन्यैश्च निषिद्धत्वेनाधर्मत्वाच्च । नन्वयमप्याचारो विप्रतिपन्नत्वाद्धेयः स्यादिति चेत्, तत्किं विप्रतिपत्तिमात्रेण? उत प्रमाणादर्शनात्? अथ प्रमाणविरोधादिति? नाद्यः, अतिप्रसङ्गादेः प्रागेव खिलनिरूपणे प्रतिपादितत्वात्; धारणप्रतिकोटित्वेनाधारणस्यापि विप्रति-

पन्नतया हेयत्वप्रसङ्गाच्च । न द्वितीयः, प्रमाणप्रदर्शनात् । नापि तृतीयः, विषयव्यवस्थया विरोधस्य प्रशमितत्वात् । न च कैश्चिदननुष्ठानात्त्याज्यत्वम्, अतिप्रसङ्गादेव । न च शिष्टाननुष्ठानात्, तत्र सर्वशिष्टाननुष्ठानासिद्धेः ; कतिपयशिष्टाननुष्ठानस्यातिप्रसङ्गित्वात् ।

* वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

इति मनुविहितेषु यष्ट्यादिषु यज्ञोपवीतातिरिक्तानां कतिपयशिष्टैरधारणदर्शनाच्च । न च सुदर्शनादिधारिणस्सर्वेऽप्यशिष्टा इति वक्तुं शक्यम्; तदन्येषां सर्वेषामशिष्टत्वप्रसङ्गस्यापि दुर्निवारत्वात् । श्रुत्यादिविधिनिषेधशास्त्रानुविधानात्तेषां शिष्टत्वमिति चेन्न, प्रस्तुतविषये विप्रतिपन्नत्वात्; अर्थान्तरविषयानुष्ठानस्योभयत्र समत्वात् । तैरपि तेषां संबन्धादिषु परिग्रहाद्विशिष्टत्वमभ्युपगतमिति चेत्तुल्यम्, तत एवैतेषामपि तैस्तदभ्युपगमात् । वर्जयन्ति केचित्तानिति चेत्; एतेऽपि केचिदन्यान्वर्जयन्त्येव; यथाप्रमाणमितरेषु तेषामनादरणमाग्रहमूलमिति विशेषः । अतो मध्यस्थबुद्धीनां प्रत्यक्षश्रुत्यादिचोदितेष्वपि केचिदाचाराः सार्वत्रिकाः, केचित्तु न ; तत्र क्वचित्केचित्कांश्चिदाचरन्ति, अन्यत्रान्ये त्वन्यान् सर्वेऽपि सर्वं संभ्रमादिभिर्नाचरन्तीति दुर्निवारोऽयं घण्टापथः ।

एवं * लक्ष्मत्वादात्मभर्तुरित्यादिना पूर्वोक्तास्सर्वे हेतवो निर्व्यूढाः । * लक्ष्मत्वादात्मभर्तुरित्यस्य स्वाभाविकदास्यानुवर्तनविधिसिद्धसमुचितविशेषानुष्ठानपरत्वेनानैकान्त्यानवतारात् । * प्रकृतिपरिणतिग्रन्थिदाहात्मकत्वादित्यस्य * अतप्ततनूरित्यादिना सिद्धत्वात् । *कृतचक्रधारी विष्णुं परं ध्यायतीत्यादिभिः कर्माङ्गत्वादीनां स्थितत्वात् । *प्रियत्वादित्यस्य संदिह्यमानार्थे साधूनामन्तःकरणप्रवृत्तिः प्रमाणमित्यस्मिन्नर्थे तात्पर्यात् । उक्तं च महाकविभिरिति मीमांसाचार्यैरप्युपात्तम्—* सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः इति । * हेतुत्वात् सद्गृहीतेरित्यादिकस्यापि शास्त्रानुसारेण सदसद्विवेकौपयिकत्वतात्पर्येणातिप्रसंगाभावात् । * द्रावणात्किङ्करादेरित्यादिकस्यापि प्राक्प्रदर्शितयमकिङ्करसंवादादिसिद्धत्वात् । अतस्सिद्धं ब्राह्मणादिभिस्सुदर्शनादिकमवश्यं धार्यम्, मुमुक्षुभिस्तु विशेषत इति ॥

श्रीमद्वेङ्कटनाथेन सम्यगेतत्समर्थितम् । श्रुतिस्मृतीतिहासादिसिद्धं चक्रादिधारणम् ॥

अयमनवमसूक्तैरादिभक्तैर्यथावद्विदितनिजसुतत्त्वो विश्वमव्यादभव्यात् ।
रथचरणनिरूढव्यञ्जनानां जनानां दुरितमथनहेलादोहलीदेहलीशः ॥

इति सच्चरित्ररक्षायां सुदर्शनपाञ्चजन्यधारणविधिर्नाम

**प्रथमोऽधिकारः ।**

---

## ॥ ऊर्ध्वपुण्ड्रधारणविधिर्नाम द्वितीयोऽधिकारः ॥

अथोर्ध्वगतिकामानामूर्ध्वपुण्ड्रस्य धारणम् । तिर्यक्पुण्ड्रादिहानं च शास्त्रैस्समभिदध्महे ॥

सन्त्यत्र बहूनि श्रुतिस्मृतीतिहासादिवचांसि । तत्र तावन्महोपनिषदि—

* धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम् ।
ज्ञात्वा विमुच्येत नरस्समस्तैस्संसारपाशैरिह चैव विष्णुम् ॥ इति ।

धृतोर्ध्वपुण्ड्रो ज्ञात्वेत्यन्वयः । मुमुक्षुर्नरः धृतोर्ध्वपुण्ड्रो ध्यायेदिति विध्यर्थः । साङ्ख्ययोगाधिगम्यं—ज्ञानयोग-कर्मयोगाभ्यां भक्तिद्वाराऽधिगम्यमित्यर्थः । नारायणविष्णुशब्दयोरन्यतरस्य संज्ञात्वमितरस्य निर्वचनविवक्षया विशेषण-परत्वं चात्र बोध्यम् । समस्तैस्संसारपाशैरिति बन्धहेतुभूतैः पुण्यपापरूपैः कर्मभिस्तन्मूलैश्च रागादिभिरित्यर्थः । इह चैव मुच्येतेत्येतत् *तमेवं विद्वानमृत इह भवतीत्यादिवत् । तच्चोत्तरपूर्वाघाश्लेषविनाशादिपरमिति सूत्रकारैरेव निर्णीतम्—*समाना चासृत्युपक्रमादमृतत्वं चानुपोष्येत्यादिभिः । यद्वा

*यः करोत्यूर्ध्वपुण्ड्रं तु सन्ध्यावन्दनकर्मसु । तेनाहं सुलभो ब्रह्मन्नेकस्मिन्नेव जन्मनि ॥
यावज्जीवमिदं पुण्यमूर्ध्वपुण्ड्रं दधाति यः । जन्मन्यनन्तरे मुक्तिं सद्यः प्राप्नोति दुर्लभाम् ॥

इत्याद्युपबृंहणभूतब्रह्माण्डवचनानुसारेणै[त]कस्मिन्नेव जन्मनि मोक्षे तात्पर्यम् । यथा

*जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥

इति श्रीमदवताररहस्यतत्त्वविज्ञानस्य शीघ्रं समस्तप्रतिबन्धकनिवर्तकत्वेन संपूर्णविद्यानिष्पत्तेरेकस्मिन्नेव जन्मनि मोक्षहेतुत्वं, तद्वद्वक्ष्यमाणमन्त्रध्यानादिविशिष्टोर्ध्वपुण्ड्रधारणनियमस्यापीति भाव्यमिति ।

या पुनरिदानीं ब्रह्माण्डादिग्रन्थेष्वतिविततविप्रकीर्णत्वादिना केषाञ्चिदतिशङ्का वर्तते; साऽत्र न कर्तव्या, संप्रतिपन्नश्रुतिस्मृत्यादिविरोधाभावात्, अविरोधिनामनाप्तत्वकल्पने गौरवादतिप्रसङ्गाच्च । तथा **कठशाखायाम्**—

*धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ।
स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥ इति ।

अस्यार्थः श्रीमत्सुदर्शनधारणाधिकारे सर्वो व्याख्यातः । तथा **नारदीयसंहितायां** चतुस्सप्ततितमेऽध्याये—*अर्चनाङ्गं ब्रवीत्यन्या ऊर्ध्वपुण्ड्रं तथा श्रुतिः इत्युक्त्वा समुपात्ता काचित्काठकश्रुतिः ।

*धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं पूजयति स्म भक्त्या ।
अर्घ्यादिभिः पौरुषसूक्तमन्त्रैस्संप्राप्नुयाद्विष्णुपदं महात्मा ॥

इत्यादीनि च वाक्यानि श्रूयन्ते । तत्र यः पूजयति स्म स विष्णुपदं संप्राप्नुयादिति यत्तच्छब्दाध्याहारेण योजना । अन्यत्सुगमम् । तस्यामेव संहितायामेकोनसप्ततितमाध्यायप्रभृतिभिष्षड्भिरध्यायैरयमर्थः प्रपञ्चितः; स्वावसरे चोपा-दास्यामहे । तथा **भल्लशाखायाम्**—*अर्चनादौ यज्ञमूर्तेरूर्ध्वपुण्ड्रमित्यारभ्य *कुलं तारयते सप्त स गच्छेद्वैष्णवं पदमिति । तत्रैव देवतान्तरभक्तस्याप्यूर्ध्वपुण्ड्रधारणमभ्युदयावहमिति व्यक्तमुक्तम्—

*अन्यदेवेषु ये भक्ता जपहोमपरायणाः । ऊर्ध्वपुण्ड्रं धारयन्ते इत्यादिना । तथाऽऽ**थर्वणे**—*हरेः पादाकृति-मात्मनो हिताय मध्ये च्छिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति स पुण्यवान्भवति स मुक्तिभाग्भवति—इति । अनेन संस्थानविशेषस्य विहितत्वात्सर्वशाखाप्रत्ययन्यायेन श्रुत्यन्तरेष्वप्येतदेव संस्थानमभिहितमिति गम्यते । इदं चोर्ध्व-पुण्ड्रधारणं सर्वजातिसाधारणम् । क्षत्रियादिष्वर्धचन्द्रादिभेदः; तत्रापि वैष्णवानामूर्ध्वपुण्ड्रधारणमेव कार्यम्; अवैष्ण-वानामपि विप्रमात्राणामेतदेवेति व्यक्तं स्मरन्ति; यथा **अग्निवैश्यगृह्ये**—

*त्रिपुण्ड्रं ब्राह्मणो विद्वाँल्लीलयाऽपि न धारयेत् । धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रं प्रयत्नतः ॥ इति ।

उक्तं च बोधायनेन—

*होमपूजादिसमये सायं प्रातस्समाहितः । ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा ॥ इति ।

**अन्यथेत्यनेन** त्रिपुण्ड्रादेर्धारणमूर्ध्वपुण्ड्रादेरधारणं च निषिध्यते । आह च **वृद्धजाबालिः**—

*शस्त्रधार्य[स्त्र]सिधारी च धनुर्धारी धनापहः । तिर्यक्पुण्ड्रधरो विप्रः स चण्डालसमो भवेत् ॥ इति ।

**शातातपश्च**—

*त्रिपुण्ड्रं ब्राह्मणो विद्वाँल्लीलयाऽपि न धारयेत् । त्रिपुण्ड्रधारणाद्विप्रः पतत्येव न संशयः ॥
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रं विना भवेत् । द्रष्टव्यो नैव तद्देहः श्मशानसदृशो हि सः ॥ इति ।

पुराणेषु च **मात्स्ये**—*न त्रिपुण्ड्रं द्विजः कुर्यान्न तत्पूजां तथैव च इति । तत्रैव—

*त्रिपुण्ड्रं ब्राह्मणो विद्वाँल्लीलयाऽपि न धारयेत् । धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रं तु नित्यशः ॥ इति ।

**श्रीनारदीये** च पद्मपुष्पाकारादिकानग्निशिखाकारपर्यन्तानूर्ध्वपुण्ड्रसंस्थानभेदानभिधाय

*उक्तानि लक्षणान्येवं ब्राह्मणस्येति तत्स्मृतम् । त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते ॥

इत्यन्तेन वर्णानुरूपसंस्थानं विधायानन्तरमुच्यते—

*सर्वजातिषु यो मर्त्यो विष्णुभक्तो भवेन्मुने । तस्योर्ध्वपुण्ड्रकरणे अधिकारो बुधैस्स्मृतः ॥ इति ।

तथा **पारमेष्ठ्यसंहितायां** शारीरभगवत्क्षेत्रवर्णनाध्याये—

*श्वेतमृत्तिकया वाऽपि श्यामया पीतयाऽपि वा । ऊर्ध्वपुण्ड्रं द्विजैः कार्यं वैष्णवैश्च विशेषतः ॥
ध्यानहोमजपाश्चैव सर्वाः पुण्याः क्रियास्तथा । विफलिष्यन्ति विप्राणामूर्ध्वपुण्ड्रं विना कृताः ॥
चन्दनागरुभिश्चैव कर्तव्यं क्षत्रियैर्बुधैः । वैश्यैश्च बिल्वमूलेन शूद्रैर्मृत्या सतोयया ॥
सर्वैः श्वेतमृदा कार्यमूर्ध्वपुण्ड्रं यथाविधि । ऋजूनि सान्तरालानि अङ्गेषु द्वादशस्वपि ॥ इति ।

चन्दनागरुभिरित्यादिकं सामान्यक्षत्रियादिविषयम् । सर्वैरित्यादि तु विशेषविषयम् । तथा **ब्रह्मरात्रे**—

*ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात्क्षत्रियस्यार्धचन्द्रकम् । वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुण्ड्रकम् ॥
त्रिपुण्ड्रं ब्राह्मणो विद्वाँल्लीलयाऽपि न धारयेत् । धारयेत्प्रयतस्सम्यगूर्ध्वपुण्ड्रं प्रयत्नतः ॥
ब्राह्मणस्य न कर्तव्यं तिर्यक्पुण्ड्रस्य धारणम् । स शूद्र इति मन्तव्यस्तिर्यक्पुण्ड्रस्य धारणात् ॥
ममार्चने विशेषेण ऊर्ध्वपुण्ड्रधरो द्विजः । कुलं तारयते सप्त स गच्छेत्समतां मम ॥
उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं विना कृतम् । अपवित्रकरं कर्म विप्रस्य विफलं भवेत् ॥ इति ।

तत्रैवाध्याये पश्चादपि चतुर्णां वर्णानामूर्ध्वपुण्ड्र एव विशेष उक्तः—

*ब्राह्मणस्य गदाकारं चक्राकारं नृपस्य तु । वैश्यस्य पद्मपत्राभं शूद्राणां शङ्खसन्निभम् ॥
पद्मपत्रायतं शस्तं सर्वेषां भोगसिद्धये । एवं वैष्णवचिह्नैस्तु सततं चिह्नितो भवेत् ॥
पिशाचभूतवेतालकूष्माण्डाद्या महागणाः । अस्यान्तिके न तिष्ठन्ति वैष्णवस्य महात्मनः ॥
प्रणवेनैव मन्त्रेण मृदा वै मामनुस्मरन् । ललाटे धारयेन्नित्यं मत्सायुज्यमवाप्नुयात् ॥ इति ।

**ब्रह्माण्डे**— * सर्ववर्णेषु मद्भक्ताः कुर्वीरन्नूर्ध्वपुण्ड्रकम् । ब्राह्मणाश्च विशेषेण जपहोमपरायणाः ॥
किमत्रोक्तेन बहुना धारयेदूर्ध्वपुण्ड्रकम् । यो न धारयते मर्त्यो मामकं चिह्नमीदृशम् ॥
तं त्यजामि दुरात्मानं मदीयाज्ञातिलङ्घिनम् । तस्मान्मां प्राप्तुमिच्छद्भिर्वैष्णवैर्विमलाशयैः ॥
ऊर्ध्वपुण्ड्रमिदं धार्यं सद्यः संसारमोचनम् । यमश्चोद्विजते नित्यमूर्ध्वपुण्ड्रधरान्नरात् ॥
नैनमन्तिमकाले तु बाधन्ते यमकिङ्कराः ॥ इति ।

तदेवं सर्वेषां विप्राणामन्येषामपि वैष्णवानामूर्ध्वपुण्ड्रधारणमेव कार्यम् । अर्धचन्द्रवृत्तादिविधिस्तु ब्राह्मणव्यतिरिक्तजातिष्वप्यवैष्णवविषय इति सिद्धम् ।

अस्य चोर्ध्वपुण्ड्रधारणस्य नित्यनैमित्तिकादिसर्वकर्माङ्गत्वपवित्रत्वमङ्गलत्वफलातिशयहेतुत्वादिभिस्स्वतः पुरुषार्थसाधनत्वं च प्रपञ्चयन्ति । तथा हि **श्रीविष्णुस्मृतौ**—

* उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं विना कृतम् । अपवित्रकरं कर्म विप्रस्य विफलं भवेत् ॥ इति ।

आह च **बोधायनः**—

* होमपूजादिसमये सायं प्रातः समाहितः । ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा ॥ इति ।

स्मृत्यन्तरेषु च—

* स्वाध्याये भोजने चैव होमे मङ्गलकर्मणि । ऊर्ध्वपुण्ड्रधरो नित्यं रक्षसां चापनुत्तये ॥ इति ।

**दक्षः**— * स्नात्वा ललाटे तिलकं मृदा कुर्यादतन्द्रितः । पाषण्डपतितादीनां दर्शनस्यापनुत्तये ॥ इति ।

अत्र तिलकशब्दोऽपि सामान्येनोर्ध्वपुण्ड्रमभिधत्ते; श्रुतिस्मृत्यन्तरानुरोधात्; अभियुक्तप्रयोगतश्च ;—

* उद्धरत्युपरि भक्तजनानित्यूर्ध्वताश्रयणसूचितशक्तिम् ।
ऊर्ध्वपुण्ड्रतिलकं बहुमानात्किं बिभर्षि वरद स्वललाटे ॥ इति ।

**वामने**— * रक्षार्थमघनाशार्थं मङ्गलार्थं च भामिनि । धारयेदूर्ध्वपुण्ड्रं तु शिरसाऽहर्निशं सदा ॥ इत्यादि ।

तथा **पाराशर्यसंहितायाम्**—

* निरूर्ध्वपुण्ड्रस्तु भवेन्न कदाचिदपि द्विजः । वैष्णवश्चेद्विशेषेण सर्वकर्माणि नार्हति ॥ इति ।

आह च **भार्गवः**—

* यज्ञो दानं तपो होमो भोजनं पितृतर्पणम् । सर्वे भवन्ति विफला ऊर्ध्वपुण्ड्रं विना कृताः ॥
द्रष्टव्यं नास्य कायं तच्छ्मशानसदृशं स्मृतम् ॥ इति ।

**ब्रह्माण्डे च**— * मदाराधनकाले च सदा यज्ञादिकर्मणि । अवश्यं धारयेदेतदूर्ध्वपुण्ड्रं द्विजोत्तमः ॥
यज्ञदानतपोहोमजपस्वाध्यायकर्मसु । तत्फलप्राप्तयेऽवश्यं धारयेदूर्ध्वपुण्ड्रकम् ॥
श्रौतस्मार्तक्रियाः सर्वा ऊर्ध्वपुण्ड्रमकुर्वताम् । जायन्ते निष्फला ब्रह्मन् बाधिताश्च भवन्ति ताः ॥
मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन । मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रमतन्द्रितः ॥
ऊर्ध्वपुण्ड्र ऋजुः सौम्यो ललाटे यस्य दृश्यते । चण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः ॥

अशुचिश्चाप्यनाचारो मनसा पापमाचरन् । सद्यश्शुद्धो भवेत्तात ऊर्ध्वपुण्ड्रधरो नरः ॥
ऊर्ध्वपुण्ड्रधरो विप्रो मृतो वा यत्रकुत्रचित् । श्वपचोऽपि विमानस्थो मम लोके महीयते ॥ इति ।

तत्रैवाध्यायान्तरेऽपि—* मत्प्रियार्थमित्यादयः श्लोका एव किञ्चिद्भिन्नाः कृताः । तथोत्तरत्र—

* पाषण्डदर्शनस्पर्शसंभाषणपरोऽपि यः । सोऽपि पूतो भवेद्ब्रह्मन्नूर्ध्वपुण्ड्रस्य धारणात् ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः । अवश्यं धारयेत्पुण्यमूर्ध्वपुण्ड्रं सुशोभनम् ॥
यो मासमात्रं सततं धारयेदूर्ध्वपुण्ड्रकम् । चित्तप्रसादं शान्तिं च मद्भक्तिं लभते च सः ॥
यावज्जीवमिदं पुण्यमूर्ध्वपुण्ड्रं दधाति यः । जन्मन्यनन्तरे मुक्तिं सद्यः प्राप्नोति दुर्लभाम् ॥
विद्याविनयसंपन्ना ब्राह्मणा वेदपारगाः । मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते ॥
ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना । * उद्धृताऽसीति मन्त्रेण वैष्णवेन विशेषतः ॥ इति ।

**पारमेष्ठ्यसंहितायाम्—**

* धृतोर्ध्वपुण्ड्रो विधिवन्नामानि द्वादश न्यसेत् । नमोन्तान्यञ्जलिं कुर्यान्नामान्युक्त्वा यथाक्रमम् ॥
जपं होमं तर्पणं वा दानमाराधनं हरेः । अन्यानि शुभकर्माणि पश्चात्कुर्याद्द्विजोत्तमः ॥
द्विजराजन्यवणिजां शूद्राणामन्त्यजन्मनाम् । एतत्सामान्यतः प्रोक्तं पितृदेवार्चनादिषु ॥
शिखोपवीतवद्धार्यमूर्ध्वपुण्ड्रं द्विजन्मनाम् । विना कृताश्चेद्विफलाः क्रियाः सर्वा महामते ॥
तस्मात्सर्वेषु कार्येषु धार्यं विप्रस्य धीमतः । भूतप्रेतपिशाचादिकूश्माण्डब्रह्मरक्षसाम् ॥
रेवतीपूतनामातृडाकिनीगुह्यकादिनाम् । रक्षाकारं दुर्ग्रहाणां संसारग्रहनाशनम् ॥
ऊर्ध्वपुण्ड्रात्परं नान्यद्दृष्टं ज्ञातं श्रुतं मया । इति ।

तथा **ब्रह्मरात्रे**—पूजाकाले च होमे च सायं प्रातः समाहितः । सावित्रीजपकाले च वेदाध्ययन एव च ॥
याने च भोजने चैव शयने च विशेषतः । मन्त्रानुच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकान् ॥
रक्षार्थं वंशवृद्ध्यर्थं मङ्गलार्थं तु पद्मज । आभिरङ्गुलिभिः पुण्ड्रान्धारयन्ननघो भवेत् ॥
दृष्ट्वा प्रयाणकाले तु ऊर्ध्वपुण्ड्राङ्कितं नरम् । मृत्युरभ्यर्चनं कुर्याद्रुष्टं वैष्णवतेजसा ॥
सर्वपापविनिर्मुक्तः सायुज्यमधिगच्छति ।

तत्रैवाध्याये— * शयने होमकाले च सायं प्रातः समाहितः । मन्त्रमुच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम् ॥
एवं यः कुरुते नित्यं मत्सायुज्यमवाप्नुयात् । इत्यादि ।

तत्रैव— * मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रमतन्द्रितः । जितेन्द्रियो जितक्रोधः फलमेष्यति कर्मणाम् ॥
दैवे च मानुषे पित्र्ये कर्मण्येव विशेषतः । रक्षार्थं पापनाशार्थं वर्धनार्थं ममात्मज ॥
एताभिरङ्गुलीभिश्च कारयेन्न स्पृशेन्नखैः ।
ऊर्ध्वपुण्ड्र ऋजुः सौम्यो ललाटे यत्र दृश्यते । चण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः ॥
अशुचिश्चाप्यनाचारो मनसा पापमाचरन् । शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्रधरो नरः ॥
ऊर्ध्वपुण्ड्रधरो नित्यं मम लोके महीयते । श्वपाको वाऽथ गोघ्नो वा मामेवैष्यत्यसंशयम् ॥

ऊर्ध्वपुण्ड्रमृजुं कुर्यान्मम पादमनुस्मरन् । सर्वापद्भ्यो विनिर्मुक्तस्सायुज्यं मोक्षमृच्छति ॥ इति ।

श्रीनारदप्रोक्तायां **श्रीमदष्टाक्षरब्रह्मविद्यायाम्**—

* असङ्ख्याताच्च सङ्ख्यातः सहस्रगुण उच्यते । सङ्ख्यातादपि साहस्र ऊर्ध्वपुण्ड्रतनोर्जपः ॥ इति ।

**श्रीनारदीये** त्रिसप्ततितमेऽध्याये—

* ऊर्ध्वपुण्ड्राङ्कितो मर्त्यो यत्कुर्यात्कर्म वैदिकम् । तत्सर्वं सफलं तस्य भवत्येव न संशयः ॥
नित्यं नैमित्तिकं चैव लौकिकं कर्म वैदिकम् । ऊर्ध्वपुण्ड्राङ्कितः कुर्यात्तत्तत्फलमवाप्नुयात् ॥
ऊर्ध्वपुण्ड्राङ्कितं गात्रं चण्डालस्यापि दृष्टवान् । पुरुषो हर्षयुक्तश्च भवत्येव महामुने ॥
सर्पं दृष्ट्वा यथा लोके दर्दुरा भयसंयुताः । ऊर्ध्वपुण्ड्राङ्कितं तद्वत्कम्पन्ते यमकिङ्कराः ॥
ऊर्ध्वपुण्ड्रेण संयुक्तो म्रियते यस्तु मानवः । चण्डालोऽपि विशुद्धात्मा विष्णुलोके महीयते ॥
यो विना चोर्ध्वपुण्ड्रेण यत्कुर्यात्कर्म वैदिकम् । निष्फलं तस्य तत्कर्म भस्मनीव हुतं हविः ॥
तस्मात्कर्मादिषु श्रेष्ठमूर्ध्वपुण्ड्रं विचक्षणः । धारयेत्प्रयतः सम्यक् तत्कर्मफलसिद्धये ॥
ऊर्ध्वपुण्ड्रं विना यस्य शरीरं भवति द्विज । तं दृष्ट्वा गगने सूर्यो निरीक्ष्यः साधुभिस्सदा ॥
ऊर्ध्वपुण्ड्रेण संयुक्तो विष्णुभक्तश्च यो नरः । तस्य लोकस्य सिद्धिः स्याद्विष्णोरमिततेजसः ॥
केवलस्योर्ध्वपुण्ड्रस्य धारणादपि मानवः । देहजैः पापसङ्घातैर्मुच्यते नात्र संशयः ॥
श्वपचोऽपि द्विजश्रेष्ठ ऊर्ध्वपुण्ड्रेण संयुतः । विष्णुभक्तस्तु भवति विष्णुलोकं स गच्छति ॥
ऊर्ध्वगत्यां हि यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते । ऊर्ध्वगत्या तु देवत्वं प्राप्नोतीह न संशयः ॥
ऊर्ध्वं नयति यत्पुण्ड्रं प्राणिनः पापकारिणः । तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात्तद्धारयेद्बुधः ॥ इति ।

अतस्सिद्धं कर्माङ्गत्वादिभिरूर्ध्वपुण्ड्रस्य अवश्यधार्यत्वम् ।

अस्य च निर्माणे मृदेव प्रशस्ततमा ; द्रव्यान्तराणि तु अधिकारिविशेषप्रतिनियतान्येव ।

नन्, भस्मनोऽपि शुद्धतमद्रव्यत्वादूर्ध्वपुण्ड्रधारणे मुख्यत्वमेष्टव्यमिति चेन्न ; भस्मनः स्वतः शुद्धत्वासिद्धेः । भस्माद्यधिष्ठितदेशस्य हि चण्डालाद्यधिष्ठितदेशवत्तत्तदनुगुणशोधनानि द्रव्यशुद्धिप्रकरणेषु विधीयन्ते । न हि शुद्धद्रव्यसंस्पृष्टप्रदेशस्य क्वचिच्छोधनमुपदिश्यते । आह च **शङ्खः**—

* दीपाग्निर्दीपतैलं च भस्म चास्थि रजस्वला । एतानि ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ इति ।

तथा निषिध्यमानतुषलोष्टाद्यशुद्धद्रव्यसमभिव्याहारबलात्स्वतोऽशुद्धत्वमेव हि भस्मनः प्रतीतम् । यथोक्तं **गौतमेन**—* न भस्मकेशतुषकपालामेध्यान्यधितिष्ठेदिति । उक्तं **चापस्तम्बेन**—* भस्मतुषाधिष्ठानं पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेदिति । एवमन्यत्रापि । ननु * भस्मकरीषच्छायासु मूत्रं न विसृजेदिति प्रशस्तसहपाठोऽपि दृश्यत इति चेन्न । करीषस्य प्रशस्तत्वेऽपि छायायाः प्राशस्त्यनियमाभावात् ; अप्रशस्ता एव हि स्नुहिकरञ्जादिच्छायाः । तस्मादशुद्धमेव स्वतो भस्म । कथं तर्हि * आग्नेयं भस्मना स्नानं वायव्यं गोरजस्स्मृतमिति स्नानकरणतया तस्य विधिरिति चेत्, इत्थम्—न हि तत्र भस्मनः स्वतः शुद्धत्वमभिधीयते । अपि त्ववगाहनाद्यशक्तविषयामुख्यस्नानविधानपरतया तस्य तदानीं शुद्ध्यापादकत्वमात्रम् । न च क्वचिच्छुद्धिहेतोस्सर्वत्र शुद्धत्वमिति नियमः ; सुरापशोधकाग्निस्पृष्टसुराया अवकीर्णिपशुभूतगर्दभादेश्च स्वतश्शुद्धत्वप्रसङ्गात् । एतेन—

*मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यांश्च कृत्वा ।
भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥

इति । **शातातप**वचनमपि निर्व्यूढम्; अस्यापि प्रायश्चित्तव्रतविशेषविधिपरत्वादिति । यत्पुनरथर्वशिरसि *अग्निरिति भस्मेत्यादिना *विमृज्याङ्गानि संस्पृशेदित्यन्तेन समन्त्रकं भस्मग्रहणं विहितम्; तदपि *व्रतमेतत्पाशुपतमिति तत्र विधीयमानपाशुपतव्रताङ्गमिति न सार्वत्रिकं भवितुमर्हति । उक्तं चैतद्वरदगुरुभिस्तत्त्वसारे—

*प्रस्तुत्य रुद्रवपुषः पुरुषोत्तमस्य विद्यामथर्वशिरसीरितमङ्गमस्याः ।
भस्मप्रसक्तिरितरत्र न चास्ति यद्वत्सौत्रामणीप्रकरणोक्तसुराग्रहस्य ॥ इति ।

अग्निहोत्रभस्मग्रहणं तु कल्पसूत्रकाराद्यननुशिष्टत्वात्, न क्रियाङ्गम्; भस्मापेक्षायां तु शुद्धस्थलात्तदुपादानमुचितमिति तत्र तद्ग्रहः । एतदभिप्रायेण ह्युक्तं **ब्रह्माण्डे**—

*अथ द्रव्यं प्रवक्ष्येऽहमूर्ध्वपुण्ड्रस्य पद्मज । मृच्चन्दनजलान्याहुस्तथा भस्माग्निहोत्रजम् ॥ इत्यादिकम् ।

अस्तु वा शुद्धत्वं भस्मनोऽपि, वचनबलात्तु ब्राह्मणमात्रस्यापि मृदेव प्रशस्ततमा । वैष्णवैस्तु भस्म परित्याज्यमेव । न हि वचनविरोधे न्यायप्रसरो मीमांसकैरनुमतः । सन्ति च बहूनि वचांसि । तथा हि—

**मार्कण्डेये**— *ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना । *उद्धृताऽसीति मन्त्रेण वैष्णवेन विशेषतः ॥ इति ।

**पारमेष्ठ्यसंहितायाम्**—

*श्वेतमृत्तिकया वाऽपि श्यामया पीतयाऽपि वा । ऊर्ध्वपुण्ड्रं द्विजैः कार्यं वैष्णवैश्च विशेषतः ॥ इत्यादि ।

तथा **कुण्ठिनप्रोक्ते श्रीकृष्णमन्त्रकल्पे**—

*स्नात्वा विधानतः पूर्वमूर्ध्वपुण्ड्रं तु धारयेत् । मृदैव वैष्णवः कुर्यादलाभे चन्दनेन वा ॥
न भस्मना कदाचिच्च ऊर्ध्वपुण्ड्रं समाचरेत् ॥ इति ।

**ब्रह्मरात्रे**—*चन्दनं पञ्चगव्यं च बिल्वं पञ्चाङ्गमृत्तिका । न प्राण्यङ्गसुगन्धानि श्रीपत्रं भस्म तोयकम् ॥
वैष्णवेन विशेषेण धार्या पञ्चाङ्गमृत्तिका । चन्दनं पञ्चगव्यं च ब्राह्मणेन विशेषतः ॥ इति ।

एतद्ब्राह्मणस्य भस्मादिनिषेधपरम्, न तु चन्दनादेः मृद्वत्प्रशस्ततमत्वपरमिति स्वप्रकरणसमानप्रकरणाभ्यां व्यक्तम् । अतोऽत्र [प्रशस्त]मृदलाभदशायां ब्राह्मणस्य चन्दनपञ्चगव्ययोरनुमतिमात्रम्—

*श्रीकामो धारयेद्बिल्वं श्रीपत्रं चन्दनं तु वा । राजा प्राणिसुगन्धानि चन्दनं चागुरुं तथा ॥
भस्म विट्छूद्रयोः क्लृप्तं पञ्चगव्यं विशोऽपि वा । शूद्रेणैव सदा धार्यं भस्म तोयकमेव च ॥ इत्यादि ।

तथा— मृदैव वैष्णवः कुर्यादलाभे चन्दनेन वा । न भस्मना कदाचिच्च द्रव्येणान्यतमेन वा ॥
चन्दनं प्राणिगन्धं च श्रीपत्रमगुरुं तथा । राजसद्रव्यमेवैतद्वदन्ति ब्रह्मवादिनः ॥
पञ्चगव्यं च बिल्वं च श्रीपत्रं भस्म तोयकम् । तामसद्रव्यमेवैतत्सात्त्विकी पञ्च मृत्तिका ॥ इति ।

तथा किञ्चिदनन्तरमतिक्रम्योक्तम्—

*सौभाग्यैश्वर्यविज्ञानं चन्दनं समुदाहृतम् । आयुष्यमगुरुश्चैव श्रीपत्रं शान्तिदं स्मृतम् ॥ इत्युपक्रम्य,

* मुक्तिदा पञ्चमृच्चैव श्रीकरो विल्व एव च । सर्वगन्धानि वश्यानि पुण्या केदारमृत्तिका ॥ इति चतुर-
श्रीनारदीये च मृच्चन्दनादिविकल्पो व्यवस्थितविषयः ; मृदलाभदशायां चेतरद्रव्यग्रहणमिणि निर्णीतम् । तथा हि
* मृद्द्रव्यं प्रथमं श्रेष्ठं तत्र कारणमुच्यते इत्युक्त्वा, * उद्धृताऽसीत्यादिकां, * प्रतिष्ठितमित्यन्तां श्रुतिमुपादाय,

* तस्मात्तु मृत्तिका ग्राह्या सर्वद्रव्येषु नित्यशः । मृत्तिकायाः प्रधानत्वं वक्ति तत्रापरा श्रुतिः ॥

इत्युक्त्वा, * अश्वक्रान्तेति मन्त्रमुपादाय * प्रत्यक्षा श्रुतिरित्याह तस्माच्छ्रेष्ठतमा तु मृदित्युक्तम् । अनन्तरं च,

* ब्राह्मणस्य तु मृत्प्रोक्ता क्षत्रियाणां च चन्दनम् । वैश्यस्य बिल्वमूलं तु शूद्राणां भस्म चोच्यते ॥

इति वर्णव्यवस्थया द्रव्याणि विभज्यालाभदशायां प्रतिनियतानुकल्पफलविशेषादि मूलाधिकारिविशेषाभिप्रायेणोक्तम्—

* सर्वेषां वा यथायोगं मृत्तिका वाऽथ चन्दनम् । बिल्वमूलं तथा भस्म निर्दिष्टानि पुरातनैः ॥
तस्मादन्यतमं तेषां मृदित्वा मन्त्रसंयुतम् । ऊर्ध्वपुण्ड्रं नरः कुर्याद्रक्षसां चापनुत्तये ॥ इति ।

एवमन्यान्यपि तथाविधानि वचनानि मृदलाभदशापेक्षया प्रवृत्तानीति मन्तव्यम् । तथा **नारदीयसंहितायां** चतुर्विंशाध्याये

* ऊर्ध्वपुण्ड्रं मृदा शुभ्रं यो धत्ते नित्यमात्मवान् । तस्य प्रसादं कुरुते विष्णुर्लोकनमस्कृतः ॥ इति ।

स्मृतिषु **वृद्धवसिष्ठस्मृतौ**—

ऊर्ध्वपुण्ड्रं मृदा कार्यं यतीनां च विशेषतः । भस्मचन्दनगन्धादीन्वर्जयेद्यावदायुषम् ॥ इति ।

इदं च यतितुल्यभगवदसाधारण्याद्वचनान्तरानुरोधाच्चान्येषामपि वैष्णवानां ग्राह्यम् । एवं **श्रीपाद्मसंहितायाम्**—

* प्रशस्ते पर्वताग्रादौ जातया श्वेतमृत्स्नया । उच्चार्य केशवादीनि नामान्यङ्गे यथाक्रमम् ॥

इत्यादि । तत्रैव समाराधनमधिकृत्य—

* पूजकोऽलङ्कृतः स्रग्वी शुक्लाम्बरधरः शुचिः । शुक्लोत्तरीयवान् रम्यचन्दनाद्यनुलेपनः ॥
चन्दनश्वेतमृत्स्नाम्बुकल्पिताङ्ग्योर्ध्वपुण्ड्रकः ॥ इति ।

**पारमेश्वरे** कुमुदादीनां ध्यानोपदेशे तेषामूर्ध्वपुण्ड्रधारणोक्त्यनन्तरमुक्तम्—

* एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः । मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ॥
द्वादशैकचतुर्भिर्वा भूषितास्स्युस्सदा द्विजेति ।

मृदैव वा चन्दनेनेति—मृदैव, तदलाभे चन्दनेन वेत्यर्थः । **आदित्यपुराणे गौतमशापः**—

* त्रिपुण्ड्रधारिणो नित्यं भस्मोद्धूलनतत्पराः । भविष्यथ त्रयीबाह्या मिथ्याज्ञानप्रलापिनः ॥ इति ।
* अन्ये भस्मजटोपेता यथोक्तं गौतमात्पुरा इति च ।

एवं **वाराहेऽपि**—* गोवध्याकरणं मह्यं यावत्पश्यति योगवित् । ऋषीणां मायया सर्वमिति संचिन्त्य तत्र वै ॥
शशाप ताञ्जटाभस्ममिथ्याव्रतधरांस्तथा ॥ इति ।

तत्रैव क्षेत्रमाहात्म्याभिधानभागे—

* कुलीनो ब्राह्मणो विद्वान्भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि मद्योच्छिष्टघटं यथा ॥ इति ।

**मार्कण्डेये**—* ऊर्ध्वपुण्ड्रं मृदा धार्यं विप्रेण ब्रह्मवादिना । * उद्धृताऽसीति मन्त्रेण वैष्णवेन विशेषतः ॥ इति ।

भागवतासाधारणे **श्रीसात्वते**—

* जलनिर्मथितेनैव ऊर्ध्वपुण्ड्रचतुष्टयम् । हृदंसयोर्ललाटे च कुर्याद्दीपशिखाकृति ॥

इति विधानात् भस्मापि वैष्णवैर्ग्राह्यमिति चेत्, किं विहितत्वमात्रेण तैस्तद्ग्राह्यम् ? उत तान्प्रति विहितत्वेन ? नाद्यः, अतिप्रसङ्गात्; तान्प्रति तन्निषेधशतस्योक्तत्वात् । अत एव न द्वितीयोऽपि, तान्प्रति विहितत्वासिद्धेश्च । ननु भगवत्समाराधनाधिकृतः * नाविष्णुर्विष्णुमर्चयेदित्यादिभिः विष्णुभूतः किमवैष्णवः इति चेत्, शान्तं पापम्, केनैव-मुक्तम् ? तान्प्रति विहिते वैष्णवान्प्रति विहितत्वं नास्तीति वदता त्वयैवेति चेत्, हन्त अभिप्रायानभिज्ञोऽसि; तत्र हि पूर्वमेव धृतोर्ध्वपुण्ड्रस्य समाराधितवासुदेवस्याग्निकार्यसमनन्तरमिदं विधीयमानं तत्रत्याग्निकार्यानुप्रविष्टं मन्तव्यमायुष्मता; न पुनर्वैष्णवमात्रप्रयुक्तोऽयं विधिः; नापि समाराधनस्यापि सार्वत्रिकः । न हि क्वचित्कर्मणि विहितं सार्वत्रिकं भवितु-मर्हति, अतिप्रसङ्गादिति । एतेन विखनस्सूत्राद्युक्तमपि तत्कर्ममात्राङ्गत्वेन निर्व्यूढम् । एवं च यान्यपि **कल्पेषु**—

* अन्नाद्यकामो जुहुयादेवमेव समाहितः । तद्भस्म धारयेन्नित्यं भवेदन्नाद्यवान्भुवि ॥

इत्यादीनि वचनानि, तान्यपि तत्तत्कामानधिकृत्य प्रवृत्तानीति न पूर्वोक्तेन निषेधेन विरुद्धानि ॥

ननु समस्तभागवतसार्थसंगृहीतवकुलधरमहर्षिदृष्टे द्रमिडनिगमे $ कथं भगवत्किङ्करलाञ्छनतया भस्मोर्ध्वपुण्ड्र-प्रतिपादनम् ? इत्थम्—सादृश्यमूलभ्रान्तिप्रतिपादनपरत्वात्तस्य वाक्यस्य । यद्वा, न तत्र भस्मासाधारणः शब्दः प्रयुक्तः, तत्र हि प्रयुक्तः शब्दो भगवद्भक्तपादरजसि तेनैव प्रयुक्तः; अतो दिव्यचूर्णविषयतयाऽपि तच्छक्यं निर्वोढुम् । नन्वस्तु तत्र तथा; धवलचूर्णपरामर्शेन भगवत्कामुकनायिकोन्मादप्रशमनाभिधानं कथमिति चेन्न, पूर्ववाक्यपरामर्शाद्धवलचूर्णपरा-मर्शेन तच्छान्तिरिति वाक्यार्थपरत्वात् । अनन्तरगाथायां भगवद्भक्तपादरजसा तच्छान्तिस्सिद्धान्तिता । धवलशब्दस्यापि *सितमनसमितिवत् विशुद्धमात्रपरतयोत्तरैकार्थ्यं वा । एतेन भगवत एव वलक्षचूर्णधारणवचनमपि निर्व्यूढम् । चक्षुषि च तद्धारणं तत्र विहितमिति अञ्जनपरत्वमाहुराचार्याः । वलक्षशब्दोऽपि पूर्ववत् । न हि तत्र वलक्षशब्दोऽपभ्रंश-प्रयुक्तः, अपि त्वञ्जनार्थतयैव द्रमिडादिभाषारूढं शब्दान्तरमेवेति तद्भाषाविदः । बकुलधरमहर्षेश्च श्रुतिस्मृत्याद्युपबृंहण-प्रवृत्तत्वान्न तद्विरोधेन निर्वाहः शक्यः । अतो मृदेवोर्ध्वपुण्ड्रे प्रशस्ततमा । सैव च वैष्णवैरुपादेयेति सिद्धम् ।

इयं च भगवत्क्षेत्रत्वविशेषितेष्वेव पर्वताग्रादिषु मृत्तिका ग्राह्या । तथा हि **पारमेष्ठ्यसंहितायां** मध्यमखण्डे शारीरभगवत्क्षेत्रवर्णने—

* गिरौ नदीतटे वाऽथ वल्मीके जलधेस्तटे । श्रीमत्तुलसिकामूले विष्णुक्षेत्रे यदि द्विज ॥
सर्वतः सन्ति सरितो वल्मीकाः सन्ति भूतले । पर्वताः सन्ति बहवः समुद्राः सर्वतो वृताः ॥
तत्रतत्र च न ग्राह्या मृत्तिका मुनिसत्तम । ग्राह्या भगवतः क्षेत्रे तद्वर्णानां फलं शृणु ॥ इति ।

**ब्रह्माण्डे** च—* सिन्धुतीरेऽथ वल्मीके बिल्वमूले जलाशये । पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ॥
अन्येष्वपि च तीर्थेषु नलिनीमूलकेषु च । स्थानेष्वेतेषु गृह्णीयात्कुर्यान्नान्यत्र मानवः ॥ इति ।

**तत्रैवाध्यायान्तरे**—* पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरेऽथ वल्मीके तुलसीमूलमाश्रिते ॥
मृद एताश्च संग्राह्या वर्ज्याश्चान्यत्र मृत्तिकाः ॥ इति ।

$ नीरु शेव्वे इडक्काणिल् (४. ४. ७) इति गाथाऽत्रानुसन्धेया ।

अत्र *मम क्षेत्रे विशेषत इत्येतत्सर्वत्रान्वेतव्यम्, विशेषत इत्येतदाङ्गस्याद्वचनान्तरानुरोधाच्च। यत्तु तत्र त्रिचतुर-वचनव्यवधानेन पृथगेवोक्तम्—

*मूले कृष्णतुलस्या यत्तन्मेऽतीव प्रियं भवेत्। मत्सायुज्यं च सारूप्यं सालोक्यं वा लभेत सः॥

इति, तद्भगवत्क्षेत्रत्वप्रसिद्ध्यभावेऽपि कृष्णतुलसीसंबन्धमात्रेण भागवतत्वं सिद्धमिति ज्ञापनार्थम्; तुलसीमात्रात्कृष्णतुलस्या वैशिष्ट्यज्ञापनार्थं वा। तथा **ब्रह्मरात्रे**—

*तस्मात्सर्वप्रयत्नेन संग्राह्याः पञ्च मृत्तिकाः। पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः॥
सिन्धुतीरेऽथ वल्मीके तुलसीमूलमाश्रिते। मृद एतास्तु संग्राह्या वर्जयेदन्यमृत्तिकाः॥ इति।

अत्र पर्वताग्रनदीतीरसिन्धुतीरवल्मीकतुलसीमूलानि पञ्चापि विशेष्यन्ते, मम क्षेत्रे विशेषत इति।

तथा **भरद्वाजसंहितायाम्**—

*प्रशस्ते पर्वताग्रादौ यत्रास्ते मधुसूदनः। तत्रोद्धृतमृदा कार्यमूर्ध्वपुण्ड्रं विधानतः॥ इति।

तथा **नारदीये** सप्ततितमेऽध्याये—

*श्वेता प्रधानतो ग्राह्या ऊर्ध्वपुण्ड्रस्य धारणे। सा च स्थानविशेषेण विशेषफलदा भवेत्॥

इत्युपक्रम्य श्रीमद्वेङ्कटाद्रिश्रीमुष्णवृषभाद्रिश्रीरङ्गादिभगवदसाधारणस्थानगतपुष्करणीषु मृत्तिकाया ग्राह्यत्वमुक्तम्। गङ्गा-तीरमृत्तिकाया अपि विष्णुपादसंबन्धपुरस्कारेण ग्राह्यत्वं प्रदर्शितम्। तथा हि—

*विष्णुपादाब्जसंभूता गङ्गा नाम महानदी। तस्यास्तीरे समुद्धृतां मृदं मूर्ध्ना तु धारयेत्॥ इति।

यच्च तत्र सामान्येनोक्तम्—

*महानदीनां पुण्यानां तीरे मृच्चापि साधिनी। गिरीणामग्रसंभूता पुण्यानां मृत्तिका शुभा॥
साधनं चोर्ध्वपुण्ड्रस्य आश्रमेषूत्तमेषु च॥ इति,

तदप्यत्र पूर्वानुपात्तभगवत्संबन्धिस्थलविशेषान्तरपरम्। पूर्वापरपरामर्शादत्रापि पुण्यत्वमुत्तमत्वं च भगवत्संबन्धाधीनमेव विवक्षितमिति गम्यते। उपसंहारे चैतद्व्यक्तम्—

अन्यानि क्षेत्रजातानि पुण्यानि हरिमेधसः। तेषामपि मृदा कार्यमूर्ध्वपुण्ड्रं हितेच्छुभिः॥ इति।

अतस्सिद्धं भगवत्क्षेत्रत्वविशेषितेष्वेव पर्वताग्रादिषु भगवदसाधारणतुलसीमूलादिषु वा संग्राह्येयमूर्ध्वपुण्ड्रमृत्तिकेति।

श्वेतैव चेयं मृत्तिका मुमुक्षुभिर्धार्या। तथा हि **श्रीनारदीये** सप्ततितमेऽध्याये—

*श्वेता प्रधानतो ग्राह्या ऊर्ध्वपुण्ड्रस्य धारणे। सा च स्थानविशेषेण विशेषफलदा भवेत्॥ इति।

तथा **पारमेष्ठ्यसंहितायाम्**—

*श्यामं शान्तिकरं पीतं पुष्टिदं रक्तमृत्तथा। वश्यं श्वेतं तथा पुण्यं मोक्षदं मुनिसत्तम॥ इति।

यत्तत्रानन्तरमुक्तम्—

*श्वेतमृत्तिकया वाऽपि श्यामया पीतयाऽपि वा। ऊर्ध्वपुण्ड्रं द्विजैः कार्यं वैष्णवैश्च विशेषतः॥

इति, तदपि प्रथमोदितव्यवस्थानुसारेण तत्तत्फलकामविषयतया भाव्यम्। किंचास्य वचनस्य वैष्णवानां भस्मादिवर्जने

त्रिपुण्ड्रादिवर्जने च तात्पर्यं स्फुटमित्यन्यपरैतद्वचनानुसारेण न पूर्वमन्यथा कार्यम् । नापि तुल्यविकल्पश्शक्यः । अत्रापि प्राधान्येन श्वेतमृत्तिकैव प्रथममुपात्ता, अनन्तरं श्यामादिवर्णनमपि भस्मादिभ्यः श्यामादिवर्णविशिष्टाया अपि मृत्तिकायाः प्राशस्त्यपरम् । किंचात्र मृत्प्राधान्यादौ तात्पर्यम् अनन्तरश्लोकैर्व्यक्तम्—

* ध्यानहोमजपाश्चैव सर्वाः पुण्याः क्रियास्तथा । विफलिष्यन्ति विप्राणामूर्ध्वपुण्ड्रं विना कृताः ॥
चन्दनागुरुभिश्चैव कर्तव्यं क्षत्रियैर्बुधैः । वैश्यैश्च बिल्वमूलेन शूद्रैर्भूत्या सतोयया ॥
सर्वैः श्वेतमृदा कार्यमूर्ध्वपुण्ड्रं यथाविधि । ऋजूनि सान्तरालानि अङ्गेषु द्वादशस्वपि ॥ इति ।

सर्वैरित्यादिकं वैष्णवविषयम्; पूर्वं तु सर्वसामान्यमिति स्थलान्तरेऽप्युक्तम् ।

तथा **ब्रह्माण्डे**—* द्रव्याणां तु गृहीतानां वर्णतः फलमुच्यते । श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा ॥
श्रीकरं पीतमित्याहुः वैष्णवं श्वेतमुच्यते ॥ इति ।

तत्रैवाध्यायान्तरे—* द्रव्याणामेव सर्वेषां फलमेवं विधीयते । श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ॥
श्रीकरं पीतमित्याहुः मुक्तिदं श्वेतमुच्यते ॥ इति ।

**[illegible]ञ्चरात्रे**—* श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् । श्रीकरं पीतमित्येव मुक्तिदं श्वेतमुच्यते ॥ इति ।

**[illegible]रद्वाजसंहितायाम्**—

* असङ्कलितया स्निग्धश्वेतया श्लक्ष्णया मृदा । ऊर्ध्वपुण्ड्राणि सौम्यानि कुर्यात्सुरभिगन्धया ॥
न पीतया नासितया नातिगौर्या न रक्तया । न धूम्रवर्णया नापि रूक्षया नासुगन्धया ॥ इति ।

[illegible]यं वर्णान्तरनिषेधो मुमुक्षुविषयः । सुरभित्वविधिरविशेषात्सर्ववर्णसाधारणः । एकस्मिन्नपि वर्णविशेषे वचनभेदेन [illegible]लान्तरं विहितमविरोधात् समुच्चेयम्, तत्तत्कामिनां तत्तत्सिद्धिरिति । अतश्श्वेतैव मृत्तिका प्रशस्ततमा; वर्णान्तर-[illegible]विशिष्टास्तु तत्तत्फलविशेषाभिलाषिणां विहिता इति न वर्णविशेषस्य सर्वपुरुषेषु विकल्प इति ।

एवमङ्गुल्योऽपि तत्तत्पुरुषार्थभेदेन व्यवस्थाप्यन्ते । तथा हि **पारमेष्ठ्यसंहितायाम्**—

* अनामिका कामदा स्यान्मुक्तिदा च प्रदेशिनी । कनिष्ठाऽऽयुष्यदा प्रोक्ता अङ्गुष्ठः पुष्टिदो भवेत् ॥
निषिद्धा मध्यमा प्रोक्ता चोर्ध्वपुण्ड्रविधौ मुने ॥ इति ।

**श्रीनारदीये**—* दक्षिणस्य तु हस्तस्य अङ्गुल्यस्संप्रकीर्तिताः । आयुष्कामेन मर्त्येन ग्राह्या तत्र कनिष्ठिका ॥
अपत्यकामी यो मर्त्यो अङ्गुल्याऽनामिकाख्यया । ऊर्ध्वपुण्ड्रस्य करणे निषिद्धा मध्यमाऽङ्गुलिः ॥
निष्फलं चोर्ध्वपुण्ड्रं स्यात्तया केवलया कृतम् । मुक्तिः सिद्धा प्रदेशिन्या कृतेन मुनिसत्तम ॥
तस्मात्तया कृतं पुण्यं पापं हरति तन्नृणाम् । अङ्गुष्ठेनार्थकामस्तु नित्यं कुर्यादतन्द्रितः ॥
सर्वाभिरङ्गुलीभिर्वा नित्यं कुर्यात्समाहितः । चतुर्भिर्वा ततः कुर्यात्कृतं तत्र प्रशस्यते ॥
येनोर्ध्वपुण्ड्रं सौम्यं स्यादार्जवं च कृतं भवेत् । तेन कुर्यात्प्रकारेण तादृशं फलदं भवेत् ॥ इति ।

तथा **ब्रह्माण्डे**—* अङ्गुष्ठं मोक्षदं प्रोक्तं मध्यमाऽऽयुष्करी भवेत् । अनामिका नित्यवश्या तर्जनी पापनाशिनी ॥ इति ।

तत्रैवाध्यायान्तरे—

* अङ्गुष्ठं[भ]मुक्तिदं प्रोक्तं मध्यमाऽऽयुष्करी तथा । अनामिका कामदोक्ता मुक्तिदा च प्रदेशिनी ॥ इति ।

**ब्रह्मरात्रे**— *अङ्गुष्ठं [पुष्टि]मुक्तिदं प्रोक्तं मध्यमाऽऽयुष्करी तथा । अनामी कामदा प्रोक्ता मुक्तिदा तर्जनी स्मृता ॥
कनिष्ठिका कदाचिच्च न योग्या भवति ध्रुवम् । ब्राह्मणस्य विशेषेण कल्पिताऽनामिका स्मृता ॥
अङ्गुष्ठमेव राज्ञश्च तर्जनी विश एव च । शूद्रस्य मध्यमा प्रोक्ता सर्वेषां वाऽप्यनामिका ॥
तर्जनी भिक्षुकस्यैव वनस्थस्य तु मध्यमा । अनामिका गृहस्थस्य अङ्गुष्ठाग्रमथापि वा ॥
अङ्गुष्ठेन ब्रह्मचारी सर्वेषां स्यादनामिका । इति ।

तस्मिन्नेवाध्याये—*नाचरेद्वामहस्तेन न नखैरपि कारयेत् । आत्मनैवात्मनोऽङ्गेषु नेतरेण तु कारयेत् ॥ इति ।

अयं वामहस्तनिषेधो दक्षिणाशक्तविषयः, शक्त्यनुसारेण शास्त्रप्रवृत्तेः । तथा **भरद्वाजसंहितायाम्**—

*ऊर्ध्वपुण्ड्रविधौ मोक्षमङ्गुष्ठं तर्जनी श्रियम् । मध्यमा पशुपुत्रादि मोक्षैश्वर्यमनामिका ॥
वश्यं कनिष्ठिका कुर्यान्न चान्येन विधीयते । यथाकामं तु सर्वाभिर्न नखैरिति केचन ॥ इति ।

अत्र मध्यमाकनिष्ठिकयोर्निषेधः ; क्वचिच्च तयोरेव फलान्तरसाधनतया विधिश्च दृश्यते ; तत्कथमुपपद्यते ? उच्यते—विशेषविधाने सति सामान्यनिषेधो विहितव्यतिरिक्तविषयतया व्यवस्थाप्यः । अतो विधायकवाक्यावगतफलविशेषनिरपेक्षान्प्रति तन्निषेधः । यद्वा तत्तद्वाक्यप्रकृतफलविशेषापेक्षया निषेध इत्यासत्तेर्व्यवस्थापनीयम्—या चात्र वर्णाश्रमविषयतयाऽङ्गुलिव्यवस्था सा तत्तत्फलविशेषनिरपेक्षणा तत्तत्कर्माङ्गत्वादिमात्रेणोर्ध्वपुण्ड्रकरणदशायामिति मन्तव्यमिति ।

क्रियमाणस्य चोर्ध्वपुण्ड्रस्य हरिपादसंस्थानत्वं सान्तरालत्वं च *हरेः पादाकृतिमित्यादिकया श्रुत्या प्रागुपात्तया प्रदर्शितम् । सन्ति च पुराणादिष्वपि तथात्वे वचांसि । तथा हि **श्रीवाराहे**—

*एकान्तिनो महाभागा मत्स्वरूपविदोऽमलाः । सान्तरालान्प्रकुर्वीरन्पुण्ड्रान्मम पदाकृतीन् ॥
रक्षार्थं मङ्गलार्थं च पवित्रार्थं वरानने । मन्त्रमुच्चार्य विधिवद्धारयेदूर्ध्वपुण्ड्रकान् ॥ इति ।

**स्कान्दे**— *ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं सुशोभनम् । मध्यच्छिद्रं वैष्णवस्तु नमोऽन्तैः केशवादिभिः ॥ इति ।

**ब्रह्माण्डेऽपि**—*अथ कर्म प्रवक्ष्येऽहमूर्ध्वपुण्ड्रस्य तत्त्वतः । ऋजुं सुपार्श्वमूर्ध्वाग्रमूर्ध्वपुण्ड्रं मतं मम ॥
सान्तरालमृजुं सौम्यं सुपार्श्वं सुमनोहरम् । यः करोत्यूर्ध्वपुण्ड्रं स ममातीव प्रियो भवेत् ॥
मत्सायुज्यं च सारूप्यं सालोक्यं वा लभेत सः । यश्चिन्तयन्मां सततं धारयेदूर्ध्वपुण्ड्रकम् ॥
विमलान्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः । करोति विपुलं तत्र मन्दिरं मे करोति सः ॥
ऊर्ध्वपुण्ड्रस्य मध्ये तु विशालेऽतिमनोहरे । लक्ष्म्या सार्धं समासीनो रमेऽहं तत्र निर्वृतः ॥
निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति ॥ इत्यादि ।

आह च **मरीचिः**—चतुरङ्गुलमूर्ध्वाग्रं द्व्यङ्गुलं विस्तृतं मृदा । द्विजः पुण्ड्रमृजुं सौम्यं सान्तरालं तु कारयेत् ॥
अच्छिद्रमूर्ध्वपुण्ड्रं तुः य करोति विमूढधीः । स पर्यायेण तान्याति नरकानेकविंशतिम् ॥
विमलान्यूर्ध्वपुण्ड्राणि सान्तरालानि यो नरः । करोति विपुलं तत्र मन्दिरं मे करोति सः ॥

तथा **पारमेष्ठ्यसंहितायाम्**—*ऋजूनि सान्तरालानि अङ्गेषु द्वादशस्वपीति ।

तथा **ब्रह्मरात्रे**—*ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं सुशोभनम् । मध्ये च्छिद्रं विजानीयाद्वैष्णवानां विशेषतः ॥

मद्भक्तोऽपि विशुद्धात्मा मृद्धारी चेन्मम प्रियः । निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं विमोहितः ॥
स हि तत्र स्थितं विष्णुं श्रियं च पिदधाति हि । बहुना किं प्रलापेन हृद्यं सौम्यं सुदर्शनम् ॥
ऋजुं सुपार्श्वमूर्ध्वाग्रं कुर्यादत्यच्छमध्यमम् । पार्श्वयोर्घनविन्यासमूर्ध्वपुण्ड्रमिहोच्यते ॥ इति ।

अत्यच्छमध्यममित्यन्तरालविधिपरमेव, तत्प्रसङ्गात्, न पुनरत्यच्छमृद्विन्यासपरम् । एवम् *मध्येऽच्छान्पार्श्वतस्स्थितानिति वचनान्तरमपीति । यद्वा अत्यच्छमृद्विन्यासेऽपि अन्तरालाविरोधात्तावन्मात्रस्यातिमात्र[वर्जन]निर्बन्धो न कार्य इति तात्पर्यम् । तदेवं हरिपादसंस्थानत्वं सान्तरालत्वं च सोपबृंहणश्रुतिसिद्धम्, भगवदसाधारण्यातिशयलिङ्गं चेति, तदेव भागवतैरङ्गीकार्यम्; निरन्तरालं तु निषिद्धमेवेत्यनादरणीयम्; संस्थानान्तराणि त्वमुख्यानीति विभागः ।

ननु दीपशिखादण्डाकारादिसंस्थानस्य कथं वैष्णवैर्हेयत्वम्? तदपि प्रमाणभूतशास्त्रविहितमेव । यथा **ईश्वरसंहितायाम्**—*लक्ष्म दीपशिखाकारं ललाटे तु मृदा चरेदिति । भगवच्छास्त्ररत्नभूते **श्रीसात्वते** च—

*जलनिर्मथितेनैव ऊर्ध्वपुण्ड्रचतुष्टयम् । हृद्यंसयोर्ललाटे च कुर्याद्दीपशिखाकृति ॥ इति ।

**ब्रह्माण्डे**— *ऊर्ध्वपुण्ड्रप्रमाणानि द्रव्यवर्णानि कर्म च । स्थानमन्त्राङ्गुलीश्चैवं प्रवक्ष्यामि फलानि च ॥
वर्तिदीपाकृतिं चैव वेणुपत्राकृतिं तथा । कुर्यात्स्वाङ्गेषु मनसा चिन्तयन्मां सदा नरः ॥ इति ।

तत्रैवाध्यायान्तरे—

*वर्तिदीपाकृतिं चैव वेणु[शङ्ख]पत्राकृतिं तथा । पद्मस्य मुकुलाकारं कुमुदस्योत्पलस्य वा ॥
मत्स्यकूर्माकृतिं चैव शङ्खाकारमथापि वा । ऋजुं संभाव्यमूर्ध्वाग्रमूर्ध्वपुण्ड्रमिहोच्यते ॥ इति ।

**पारमेष्ठ्यसंहितायाम्**—

*शृणु वत्स यथान्यायमङ्गानि गदतो मम । लक्षणानि च सर्वेषां मृत्पुण्ड्राणां यथाविधि ॥
वेणुपत्राकृतिं चैव दीपाकारं तथैव च । अब्जकुड्मलसङ्काशं शङ्खाकारं तथैव च ॥
मत्स्याकृतिं तथा प्रोक्तं कूर्माकारं तथैव च । एवं सलक्षणं प्रोक्तं द्विजानां मुनिसत्तम ॥
बालेन्दुवत्क्षत्रियाणां वैश्यानां वर्तुलाकृति । त्रिपुण्ड्रं शूद्रजातीनां विधिरेष सनातनः ॥
ऊर्ध्वपुण्ड्रधरा ये वै ते तु भागवताः स्मृताः । क्षत्रिया वाऽथ वैश्या वा शूद्रा वा मुनिसत्तम ॥
ब्राह्मणानां च सर्वेषामुत्तमौ मत्स्यकूर्मकौ । सर्वे ह्यूर्ध्वमुखाः प्रोक्ता मुने मत्स्याकृतिं विना ॥
अधोमुखं त्वेककोणं न्यूनमन्यत्ततोऽधिकम् । मध्यं किंचित्तु वक्रं स्यादूर्ध्वभागविशालकम् ॥
सान्तरालमृजुं मध्ये मात्स्यमेतत्कृतो विधिः । समकोणमधोभागमूर्ध्वभागं [वि]सकोणकम् ॥
नीरन्ध्रमेव तत्प्रोक्तं लक्षणं कमठाकृतेः ॥ इति ।

तथा **ब्रह्मरात्रे**—

*दीपाकारं ततश्चापि वेणुपत्रसमाकृति । पद्मस्य मुकुलाकारं कुमुदस्योत्पलस्य वा ॥
मत्स्याकारं तथा वाऽपि कूर्माकारं तथाऽपि वा । शङ्खाकारमथाऽपि स्यान्मम पादाकृतिं तथा ॥
शूर्पाकारमिति प्राहुरेकचक्राकृतिं तथा । मोहिनीपुष्पसंकाशं चक्राकारमिदं बुधाः ॥
ऊर्ध्वपुण्ड्रं द्विजः कुर्याद्दण्डाकारं सुशोभनम् । इत्यादि ।

**श्रीनारदीये** एकोनसप्ततितमेऽध्याये—

*यद्दृष्ट्वा वैष्णवश्चेति निस्संशयमभून्मुने । तादृशं लक्षणं वक्ष्ये वैष्णवानां प्रधानतः ॥
वैष्णवौ द्वौ सदा सम्यक्सङ्गतौ तु परस्परम् । प्रणामं कुरुतस्तत्र तयोर्मध्ये स्थितो हरिः ॥
तस्मादवश्यं कर्तव्यं वैष्णवस्य तु लक्षणम् । ललाटमध्ये तिलकमूर्ध्वरूपं समाहितः ॥
यः कुर्यान्मन्त्रसंयुक्तमूर्ध्वपुण्ड्रमिति स्मृतम् । कर्तव्यं प्रथमं पद्मपुष्पाकारं सुपूजितम् ॥
कूर्माकारं ततः कुर्याच्छङ्खाकारं ततः परम् । अश्वत्थपत्रसदृशं कुर्यात्सर्वत्र पूजितम् ॥
अहमश्वत्थरूपेण पालयामि जगत्त्रयम् । इत्याह भगवान्विष्णुः स्वयमेव ततःपरम् ॥
अश्वत्थश्चास्मि वृक्षाणामित्याह परमेश्वरः । वेणुपत्रसमाकारं पूजितं ब्रह्मणा पुरा ॥
दीपाकारं ततःश्रेष्ठमूर्ध्वपुण्ड्रस्य नित्यशः । मालतीपुष्पसङ्काशं श्रेष्ठं सर्वत्र पूजितम् ॥
तिन्त्रिणीपत्रसदृशं कुर्यादग्निशिखोपमम् । उक्तानि लक्षणान्येवं ब्राह्मणस्येति तत्स्मृतम् ॥

इत्यादि । एवं च विकल्पितेषु मत्स्यकूर्मसंस्थानयोरेवोत्तमत्वं प्रतीतम्; न तु हरिपादसंस्थानस्य । अतोऽस्य सर्वातिशायित्वे किं प्रमाणम्? इति चेत्; दत्तोत्तरमिदम् । तथा हि—सोपबृंहणश्रुतिसिद्धस्य भगवदसाधारण्यातिशयलिङ्गत्वौचित्यात्तदेव हि भगवच्छेषत्वज्ञानपौष्कल्यवद्भिर्विचक्षणैरुपादेयम् । मत्स्यकूर्मपद्माश्वत्थपत्रादिसंस्थानेष्वपि हि प्राशस्त्यवादो भगवद्विग्रहविशेषसाधर्म्यभगवच्चिह्नत्वभगवदनुप्रवेशविशेषादिनिबन्धन इति तत्रतत्रैव व्यक्तम् । अस्ति च—*एकान्तिनो महाभागा इत्यादिविशेषविधिः । ततश्च बहुधा विकल्पितेष्वपि संस्थानेषु तात्पर्यपर्यालोचनयाऽस्यैव प्रधानत्वमवसितम् । यच्च कमठसंस्थानस्योर्ध्वपुण्ड्रस्य नीरन्ध्रत्वं विहितम्, तदपि तावन्मात्रनिष्ठमेव वचनबलात्स्वीक्रियते । अन्यत्र तु सान्तरालत्वविधेर्निरन्तरालत्वनिषेधस्य च सङ्कोचकाभावात्सान्तरालत्वमेव ग्राह्यम् । यच्च दीपाकारविधिपरं श्रीसात्त्वतवचनं तदपि विशेषविषयमिति प्रागेव निर्णीतम् । एवमन्यदपि भाव्यम् । न च संस्थानान्तरस्य वैष्णवैरत्यन्ताननुष्ठाने वचनविरोधः; एकान्तित्वरहितवैष्णवमात्रविषयतयाऽपि वचनस्य चरितार्थत्वात् ।

ननु भगवदर्चावतारेषु दीपशिखाकारोर्ध्वपुण्ड्रस्य दर्शनात् *यच्छीलस्स्वामीति न्यायेन भागवतैरपि तथैवानुष्ठेयमिति चेन्न, वचनविरोधे न्यायस्यानवतारात् । अन्यथा भगवदनुष्ठितगोपकन्योन्मादनस्वकुलविनाशनबुद्धसमयप्रवर्तनादेरपि प्रसङ्गात् । अतो न स्वामिकृतं सर्वं भृत्येनाप्याचरणीयम् । लोके चैतदेवं द्रष्टव्यम् । न च दीपशिखाकारमेवार्चावतारेषूर्ध्वपुण्ड्रं कुर्वीतेति विधिरस्ति, येन संस्थानान्तराणि परित्यजेरन् । यदि च वचनं दृष्टं, तदपि तन्मात्रविषयमिति नास्माभिरनुष्ठेयम् । किं च अलङ्करणरूपतया हि भगवतस्तद्धारणम्; तत्र शोभैव प्रधानभूतेति यथा शोभाभिमानस्तथैव कुर्वन्तीति किं विरुध्यते? अतः श्रुत्यादिविहितहरिपादादिसंस्थानमेव भागवतैरुपादेयमिति स्थितम् ।

अथ पुण्ड्रसङ्ख्यां विचारयामः । बहुधा च विकल्पतः पुण्ड्रसङ्ख्या प्रोक्ता । तथा हि—

**ब्रह्मरात्रे**— *ललाटे कण्ठदेशे तु स्कन्धयोश्च त्रिके तथा । चतुरङ्गुलमानानि पञ्च पुण्ड्राणि धारयेत् ॥
हृदये चोदरे चैव पार्श्वयोः पृष्ठ एव च । बाह्वोर्मध्ये च सप्त स्युः पुण्ड्राण्यष्टाङ्गुलानि वै ॥
व्यूहं तु विद्यात्प्रथमं चतुरङ्गुलसंमितम् । अष्टाङ्गुलं द्वितीयं तु द्विविधं व्यूहसंज्ञितम् ॥
एवं यः कुरुते नित्यं मत्सायुज्यमवाप्नुयात् ॥ इति ।

तस्मिन्नेवाध्याये—* द्व्यङ्गुलं विस्तृतं रम्यं चतुरङ्गुलमायतम् । प्रथमव्यूह एव स्यात्पञ्चपुण्ड्रस्य लक्षणम् ॥
त्र्यङ्गुलं विस्तृतं हृद्यमङ्गुलाष्टकमायतम् । द्वितीयं व्यूह एवं स्यात् सप्तपुण्ड्रस्य लक्षणम् ॥
इत्यूर्ध्वपुण्ड्रं यः कुर्यान्न मृत्योर्वशमाप्नुयात् । केशवादिनमोऽन्तं वै जप्त्वा द्वादशनामभिः ॥
तं स्मृत्वा देवदेवेशमूर्ध्वपुण्ड्रं समाचरेत् ॥ इति ।

तत्रैवाध्याये पश्चादपि—

* आदौ तु लक्षणोपेतां सुगन्धां सात्त्विकीं शुभाम् । वामेऽस्त्रशोधिते हस्ते वाग्यतः प्रणवेन तु ॥
निधाय जलमादाय *गन्धद्वारेति सेचयेत् । अस्त्रमन्त्रेण रक्षां च कृत्वा दशसु दिक्ष्वपि ॥
तारमन्त्रेण संमिश्र मूलमन्त्रेण मन्त्रयेत् । नृसिंहबीजं च लिखेद्रक्षार्थं दोषशान्तये ॥
*शतधारेण मन्त्रेण तीर्थतोयं च निक्षिपेत् । तामेकीकृत्य तर्जन्या स्मृत्वा मम पदद्वयम् ॥
* विष्णोर्नुकेन मन्त्रेण मन्त्रयित्वा यथाक्रमम् । पञ्चोपनिषदैर्मन्त्रैर्मूलमन्त्रेण मन्त्रयेत् ॥
द्वादशाक्षरमुच्चार्य प्रार्थयेदिष्टसिद्धये । सप्तभिर्वैष्णवैर्मन्त्रैर्मन्त्रयेन्मोक्षसिद्धये ॥
मृदं प्राक् तारमन्त्रेण तर्जन्या मूर्ध्नि विन्यसेत् । चतुश्चक्रधरं मां तु स्मृत्वा जाम्बूनदप्रभम् ॥
ललाटे केशवायेति धारयेदूर्ध्वपुण्ड्रकम् । चतुश्शङ्खधरं देवं नीलजीमूतसन्निभम् ॥
कुक्षौ नारायणायेति मन्त्रमुच्चार्य धारयेत् । इन्द्रनीलनिभश्यामं चतुर्हस्तैर्गदाधरम् ॥
हृदये माधवायेति धारयेदङ्गुलाष्टकम् । चतुर्भुजं धनुष्मन्तं चन्द्रभासदृशद्युतिम् ॥
गोविन्दायेति मन्त्रेण कण्ठे च चतुरङ्गुलम् । चतुर्हलधरं देवं पद्मकिञ्जल्कसन्निभम् ॥
विष्णवेऽष्टाङ्गुलमिदं धारयेद्दक्षिणोदरे । मुसलास्त्रं महाविष्णुमरविन्दाभमेव च ॥
मधुसूदनमन्त्रेण धारयेद्दक्षिणे भुजे । खड्गपाणिं चतुर्हस्तमग्निसन्निभतेजसम् ॥
त्रिविक्रमायमन्त्रेण धारयेद्दक्षिणे गले । चतुर्वज्रधरं देवं तरुणादित्यसन्निभम् ॥
वामनाय नमोऽन्तेन वामे कुक्षौ तु धारयेत् । पट्टिशायुधहस्तं च पुण्डरीकाभमेव च ॥
श्रीधरायेति मन्त्रेण भुजे वामे तु धारयेत् । चतुर्भिर्मुद्गरधरं भुजैर्विद्युत्समप्रभम् ॥
हृषीकेशेति मन्त्रेण धारयेद्वामके गले । पञ्चायुधधरं मां च सहस्रांशुसमप्रभम् ॥
पद्मनाभायमन्त्रेण पृष्ठे वै धारयेत्क्रमात् । पाशहस्तधरं देवं बालार्कशतसंनिभम् ॥
दामोदरायमन्त्रेण धारयेत्पश्चिमे गले । द्वादशाक्षरमुच्चार्य शेषं मूर्धनि विन्यसेत् ॥ इति ।

तथा किञ्चिदतिलङ्घ्य—

भोगार्थी भोगसिद्ध्यर्थं कनिष्ठोपगया क्रमात् । अष्टाक्षरेण मन्त्रेण प्रत्यक्षरमनुस्मरन् ॥
ललाटे हृदि बाह्वोश्च कुक्षिमध्ये च पार्श्वयोः । पृष्ठेऽपि चाक्षरैर्मन्त्रैर्विष्णुगायत्रियाऽन्वितैः ॥
ऊर्ध्वपुण्ड्राणि वै कुर्यान्मृदा वा चन्दनेन वा । मोक्षार्थी च विशेषेण द्वादशाक्षरविद्यया ॥
द्वादशैतानि पुण्ड्राणि कुर्याद्द्वादशनामभिः । षडक्षरेण मन्त्रेण भोगार्थी चन्दनेन च ॥
ललाटे हृदि कण्ठे च कुक्षौ बाह्वोर्यथाक्रमम् ॥ इति ।

**श्रीनारदीये** चतुस्सप्ततितमाध्याये—

* स्थानानि संप्रवक्ष्यामि ऊर्ध्वपुण्ड्रस्य धारणे । केचित्त्रयोदशेत्याहुर्वैष्णवानां द्विजर्षभ ॥
तत्पक्षे संप्रवक्ष्यामि स्थानामि मुनिसत्तम ॥ ललाटे प्रथमं विद्यात्,

इत्युपक्रम्य * त्रयोदशमथो मूर्ध्नि धारयेदूर्ध्वपुण्ड्रकम् । स्थानानि द्वादशाष्टौ वेत्याहुः केचिन्मनीषिणः ॥
द्वादशेति च यः पक्षः तस्मिञ्शिरसि वर्जयेत् । अष्टौ वेति च यः पक्षः शिरआदीनि वर्जयेत् ॥
तत्र मन्त्रं प्रवक्ष्यामि ऊर्ध्वपुण्ड्रस्य धारणे ।

इत्यादिना द्वादश नामान्युक्त्वा—

* द्वादशाक्षरमन्त्रेण मूर्ध्नि दद्यान्मृदं ततः । पक्षे तु द्वादशे कुर्याच्छिरोमात्रं विना पुनः ॥
अस्मिन्पक्षेऽपि वा कुर्यान्मन्त्रभेदेन मानवः । द्वादशाक्षरमन्त्रस्य प्रथमाद्यक्षरैस्सह ॥
पुनः क्रमेण तत्कुर्यादूर्ध्वपुण्ड्रं स वैष्णवः । अष्टौ वेति च यः पक्षस्तस्य मन्त्रं वदाम्यहम् ॥
अष्टाक्षरस्य मन्त्रस्य प्रथमाद्यक्षरैस्सह । वर्जयित्वा गलस्थानि चत्वारि मुनिसत्तम ॥

इति प्रतिपादितम् । तत्तद्ध्यानस्य चावश्यंभावित्वमुक्तम्—

* ध्यानं तत्संप्रवक्ष्यामि ऊर्ध्वपुण्ड्रस्य धारणे । येन नाम्ना च यत्कुर्यात्तन्नामार्थं विचिन्तयेत् ॥
विनाकृतं तु ध्यानेन ऊर्ध्वपुण्ड्रं तु निष्फलम् ॥ इति ।

अत्र च पुण्ड्रसङ्ख्यानिरूपकमन्त्रविशेषनिर्देशदर्शनात् ब्रह्मरात्रोक्तं प्रणवेन ललाटे धारणं ब्रह्माण्डोक्तम् * ऊद्धृताऽसीति मन्त्रेण धारणं चैकसङ्ख्याविषयमिति मन्तव्यम् । तथाऽन्यत्र—

* वामहस्ते शुचिष्वप्सु निर्घृष्य मृदमुत्तमाम् । प्रदक्षिणं समुद्धाथ मूलमन्त्रेण योजयेत् ॥
ऊर्ध्वपुण्ड्राणि कुर्वीत केशवाद्यैर्यथाक्रमम् । ऋजूनि स्फुटपार्श्वानि स्थानव्यापीन्यतन्द्रितः ॥
नासिकामूलमारभ्य ललाटे प्रथमं न्यसेत् । द्वितीयमुदरे नाभेरूर्ध्वं हृदि ततः परम् ॥
वक्षोऽन्ते तत्परं पश्चात्कुक्षौ दक्षिणपार्श्वतः । भुजे षष्ठं ततः स्कन्धे तथा सव्ये त्रयं भवेत् ॥
एकादशं द्वादशं च पृष्ठेऽधस्तात्तथोपरि । इति कुर्याद्यथाचारमूर्ध्वपुण्ड्राणि यत्नतः ॥ इति ।

**ब्रह्माण्डे**— * ललाटे केशवं ध्यायेन्नारायणमथोदरे । माधवं हृदये चैव गोविन्दं कण्ठकूबरे ॥
उदरे दक्षिणे पार्श्वे विष्णुं व्याप्तं विचिन्तयेत् । तत्पार्श्वे बाहुमध्ये तु चिन्तयेन्मधुसूदनम् ॥
त्रिविक्रमं च तत्स्कन्धे वामपार्श्वे तु वामनम् । श्रीधरं बाहुके वामे हृषीकेशं तु स्कन्धके ॥
अपरे पद्मनाभं च त्रिके दामोदरं स्मरन् । तत्प्रक्षालनतोयेन वासुदेवेति मूर्धनि ॥
एवं हि धारयेन्नित्यं मद्भक्तस्तूर्ध्वपुण्ड्रकम् । धारयित्वा ततो मन्त्रैः केशवाद्यैश्च नामभिः ॥
अङ्गुलीभिः स्पृशेत्पुण्यमूर्ध्वपुण्ड्रं मनोहरम् ॥ इति ।

तत्रैवाध्यायान्तरे कतिपयपदावापोद्वापभेदेनेमानेव श्लोकानुक्त्वा अन्यदप्युक्तम्—

* श्रीवत्सं दक्षिणे भागे विन्यसेत्पद्ममेव वा । मत्पूजाजपकालेषु सायं प्रातस्समाहितः ॥
एवं मन्त्रविधानेन धारयेदूर्ध्वपुण्ड्रकम् ॥ इत्यादि ।

तथा **पारमेष्ठ्यसंहितायां** शारीरभगवत्क्षेत्रवर्णने—

*विस्तारं त्र्यङ्गुलं प्रोक्तं द्व्यङ्गुलं वा ललाटके । तत्केशवाभिधानस्य विष्णोः स्थानमनुत्तमम् ॥
कुक्षौ तु नाभेरूर्ध्वं च द्वादशाङ्गुलमायतम् । तत्रापि त्र्यङ्गुलं प्रोक्तं विस्तरं मुनिसत्तम ॥
नारायणाभिधानस्य विष्णोः स्थानमनुत्तमम् । स्थानान्तरेऽपि च तथा कुर्यात्प्रादेशमायतम् ॥
प्रोक्तं तत्र च देवर्षे विस्तारं चतुरङ्गुलम् । स्थानं लक्ष्मीसहायस्य माधवस्य शुभं मतम् ॥
कण्ठकूपेऽपि च तथा त्र्यङ्गुलायतविस्तृतम् । तद्गोविन्दाभिधानस्य विष्णोस्स्थानमनुत्तमम् ॥
दक्षिणे कुक्षिपार्श्वे तु आयतं द्वादशाङ्गुलम् । विस्तारं त्र्यङ्गुलं तत्र तद्विष्णोः परमं पदम् ॥
दक्षिणे तु भुजे कुर्यादायतं च दशाङ्गुलम् । यथापूर्वं तु विस्तारं मधुसूदनकेतनम् ॥
जत्रौ त्र्यङ्गुलमायामं विस्तारं तु तथैव च । त्रिविक्रमाभिधानस्य केतनं तदिहोच्यते ॥
वामे च कुक्षिपार्श्वे तु द्वादशाङ्गुलमायतम् ॥ विस्तृतं त्र्यङ्गुलं तच्च वामनायतनं महत् ॥
वामे भुजे च जत्रौ च कुर्याद्दक्षिणपार्श्ववत् । स्थानं च श्रीधरस्यापि हृषीकेशस्य वै क्रमात् ॥
भागेऽपरे तथा कुर्यादधस्ताज्जघनोपरि । वंशे त्र्यङ्गुलमायामं विस्तारं तु तथैव च ॥
स्थानं तत्पद्मनाभस्य ऋषे स्थानमनुत्तमम् । तत्स्थानं पद्मनाभस्य स्थानमित्यन्वयः क्रमात् ॥
ककुदे च तथा कुर्यात्त्र्यङ्गुलायामविस्तरम् । स्थानं दामोदराख्यस्य विष्णोरुक्तं महामुने ॥
एतानि द्वादशाङ्गानि तवोक्तानि महामुने । ऊर्ध्वपुण्ड्रविधानं च लक्षणं च तथैव च ॥
दैवतं च तथा प्रोक्तं यथाऽऽह भगवानृषिः । धृतोर्ध्वपुण्ड्रो विधिवन्न्यस्य नामानि द्वादश ॥
नमोऽन्तान्यञ्जलिं कुर्यान्नामान्युक्त्वा यथाक्रमम् । इति ।

**पारमेश्वरे** च—

*एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः । मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ॥
द्वादशैकचतुर्भिर्वा भूषिताः स्युस्सदा द्विज । इति ।

**ब्रह्माण्डे** तु एषामायामप्रमाणमुत्तममध्यमादिरूपेण बहुधा प्रतिपादितम् । यथा—

*दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमथाधमम् ॥
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं भवेत् । चतुस्त्रयं द्वयं कुर्यादधमं त्रिविधं भवेत् ॥ इति ।

शेषं च **स्मृतिचन्द्रिकादिषु** द्रष्टव्यम् । एवं बहुप्रकारसंख्याप्रधाने का सङ्ख्या प्रधानभूतेति चेदुच्यते—गुरुलघुविकल्पस्यैकस्मिन्नसंभवाद्गुरोरेव तावत् मुख्यत्वं सिद्धम् ; यत्र तु कर्मविशेषाङ्गतया वा फलविशेषमुद्दिश्य वा न्यूनसङ्ख्याविधानं, तत्र विशेषवचनबलान्न्यूनतयैव तत्परिग्रहः । अन्यत्र त्वधिकपरिग्रह एव मुख्यः । द्रव्यालाभासामर्थ्यादिदशासु तु गत्यन्तराभावान्न्यूनपरिग्रहः, अत्यन्ताकरणाद्यथाशक्तिकरणस्यापि नित्येषु शास्त्रीयत्वात् ; काम्येष्वपि केषुचिद्यथाशक्त्यनुष्ठानेऽपि तत्तद्यत्नानुरूपफलप्राप्तेः प्रतिपादितत्वात्, यथा दानादिषु । उक्तं **चाहिर्बुध्न्यसंहितायाम्**—
*अस्मिन्समाधिविरही ललितक्रियोऽपि यत्नोचितं लभत एव फलं मनुष्यः । इति । तदयं संग्रहः—

त्याज्यं विप्रैस्त्रिपुण्ड्रादिकमिति विहितं विष्णुभक्तैस्तथाऽन्यैः कर्माङ्गत्वादिनोर्ध्वग्रहणमिह सदा मृत्प्रशस्तेतरेभ्यः ।
विष्णुक्षेत्रोद्भवा सा सितरुचिरुचिराऽनामिकादेर्विकल्पः सच्छिद्रं कच्छपान्यद्धरिपदसदृशं मुख्यमन्यूनता च ॥

श्रीमद्वेङ्कटनाथेन श्रुतिस्मृतिशतैरिति । विधानमूर्ध्वपुण्ड्रस्य विस्तरेण निरूपितम् ॥

**इति सच्चरित्ररक्षायां ऊर्ध्वपुण्ड्रधारणविधिर्नाम द्वितीयोऽधिकारः ॥**

---

## ॥ अथ भगवन्निवेदितोपयोगविधिर्नाम तृतीयोऽधिकारः ॥

अथ चक्षुष्मतां शास्त्रैश्चतुर्वर्गाभिलाषिणाम् । विष्णोर्निवेदितस्यैव भोज्यत्वं प्रतिपाद्यते ॥

समर्थितं ह्येतत्संग्रहेणा**गमप्रामाण्ये भगवद्यामुनाचार्यपादैः** । प्रपञ्चितं च **वरदराजपण्डितैः सन्मार्गदीपिकायाम्** । तदनुसारेणास्माभिरपि नातिसंक्षेपविस्तरमुपपाद्यते ।

तत्रैवं पूर्वपक्षी प्रत्यवतिष्ठते—भगवन्निवेदितं भोज्यमित्यत्र किं भोज्यद्रव्यत्वमात्रं विवक्षितम्? उत भोक्तुः प्रत्यवायानाधायकत्वम्? यद्वा भोक्तुर्हितत्वमिति? नाद्यः, अविवादात् । न द्वितीयतृतीयौ, दृष्टप्रत्यवायनिवृत्तौ दृष्टरूपहितत्वे च अविवादादेव; अलौकिकस्य तु प्रत्यवायस्य प्रायश्चित्तादिशास्त्रावगतत्वेन तन्निषेधस्याशक्यत्वात्; विध्यभावेनालौकिकहितत्वासिद्धेश्च । स्मर्यते हि—* निर्माल्यं च निवेद्यं च भुक्त्वा चान्द्रायणं चरेदिति । तथा च **मनुना** चाभक्ष्यप्रकरणे पठितम्—

* वृथा कृसरसंयावपायसापूपमेव च । अनुपाकृतमांसं च देवान्नानि हवींषि च ॥ इति ।

उच्छिष्टमात्रनिषेधाच्च निवेदितभक्षणमपि निषिद्धमेव । न च सामान्यतः प्रवृत्तस्य निषेधस्याग्नीषोमीयहिंसासोमोच्छिष्टादिविधानवदत्रापवादो दृश्यते । न च वाच्यं पितृगुरुभर्तृस्वामिनामुच्छिष्टं पुत्रशिष्यभार्याभृत्यैर्भोज्यमितिधर्मज्ञसंमतत्वाज्जगदपेक्षया च भगवतः पितृत्वादेः * भगवतः अहं पुत्रः प्रेष्यः शिष्यश्चेति शास्त्रशतसिद्धत्वात्तदुच्छिष्टं सर्वेषां भोज्यत्वेन संमतमिति; उच्छिष्टभक्षणानुमतिहेतुभूतपितृत्वादेरत्रासिद्धेः, सिद्धस्य जगन्निमित्तत्वादिमात्ररूपस्य तदप्रयोजकत्वात्; प्रयोजकत्वे चातिप्रसङ्गात् । अस्ति हि कथंचित्तथाविधं पितृत्वादिकं हिरण्यगर्भरुद्रादेरपि, कतिपयविषयेऽपि कारणत्वशास्त्रप्रवर्तकत्वपतित्वादिभिस्तत्सिद्धेः; अस्मदपेक्षया तेषां साक्षात्पितृत्वादिकं नास्तीति चेत्, न, प्रकृतेऽपि समानत्वात्; पित्रादिभूततत्तत्पुरुषशरीरकत्वेन वा स्वशरीरात्प्रजासर्गकरणमात्रेण वा भगवतोऽपि हि पितृत्वम्; न पुनस्समर्चनकर्मभूतवासुदेवादिदिव्यमङ्गलविग्रहविशिष्टत्वेन । पित्रादिशरीरकत्वमपि हिरण्यगर्भादेर्नास्तीति विशेष इति चेत्सत्यम्, तथाऽपि पित्रादिशरीरकेण भगवता भुक्तोज्झितमेव भोक्तव्यत्वेनानुमतमिति मन्तव्यम्; न तु शरीरान्तरविशिष्टभुक्तोज्झितमपि । अन्यथा ब्रह्मरुद्रेन्द्रादिशरीरकभगवद्भुक्तोज्झितस्यापि भोक्तव्यत्वप्रसङ्गात् । पित्रादिभिरव्यवधानेन भुक्तोच्छिष्टं भोक्तव्यमिति नातिप्रसङ्ग इति चेन्न, वासुदेवादिविग्रहार्चने विग्रहद्वारेणैव भगवतोऽपि भोक्तृत्वाद्विग्रहमात्रव्यवधानस्यादोषत्वे सर्वेषामपि तद्विग्रहत्वस्य शास्त्रसिद्धत्वेनातिप्रसङ्गस्य दुष्परिहरत्वात् । अतो लोकसिद्धमेव पितृत्वादिकं तत्र विवक्षितम्, तच्च भगवतोऽप्यवतारेषु यदपेक्षया विद्यते त एव तदुच्छिष्टं भुञ्जीरन् न त्वन्य इति नियमः । यदि च पित्रादिभूता भगवानिति तदुच्छिष्टं भोक्तव्यं स्यात्ततस्तज्ज्येष्ठपुत्रत्वेन श्रुत्यादिसिद्धस्य हिरण्यगर्भस्योच्छिष्टमपि भोक्तव्यमित्यायातम्, ज्येष्ठभ्रातुरपि पितृसमत्वं तदुच्छिष्टभोजनं च शास्त्रीयमेव । अत्र निषेधात्तत्परित्याग इति चेन्न, अत्रापि सामान्य-

निषेधपर्यवसानस्य दर्शितत्वात् । किं च भगवतः पितृत्वादिवन्मातृत्वादेरपि *माता पिता भ्राता निवासः शरणं सुहृद्गति-र्नारायणः इत्यादिवाक्यसहस्रसिद्धत्वान्मात्राद्युच्छिष्टभक्षणस्याननुमतत्वाद्भगवद्भुक्तोज्झितमप्यननुमतमेव किं न स्यात्? ननु किं पितृत्वादिनिर्बन्धेन, वचनत एव तत्सिद्धेः सामान्यनिषेधस्यापि सङ्कोचनीयत्वात्? श्रूयते च **महोपनिषदि**— *विष्णुनाऽत्तमश्नन्ति विष्णुना पीतं पिबन्ति विष्णुना घ्रातं जिघ्रन्ति विष्णुरसितं रसयन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुः इति । **रहस्याम्नायब्राह्मणे** च परिव्राजकप्रकरणे-*अथ यदि कारिणं नासादयेत्स्वयमन्नेन कुर्वीतेति । भोजनरूपं भगवत्समाराधनमिति शेषः । एतदेव वाक्यं ब्रह्मचारिवानप्रस्थप्रकरणयोरप्याम्नातम् । कौटुम्बप्रकरणेऽपि *अथ यदि कारिणोऽप्यसन्निहिता स्युः स्वयमन्नेन कुर्वीतेति । पूर्वमनिवेदितानां भोजनसमयसमागतानां द्रव्याणां मनसा निवेद्यैव हि भोजनमाम्नायते *अथ यदि पश्चाद्भुक्तस्य गुणाः प्रादुःष्युः येनेष्टं स्यादिति भगवन्निवेदितप्राशन-रूपमनुयागं प्रस्तुत्य, *अन्नत एव ॐ नमो भगवते वासुदेवायेति कृत्वा प्रकुर्वीत अथ यदि पश्चाद्भुक्तस्य गुणाः प्रादुःष्युः येनेष्टं स्यादभ्युदिता अप्राप्ता मनसा समीक्षितव्या भवन्ति अस्मान्न ह्यत्तीति मनस उपघातः अन्तरेण मलवद्वाससं सूतिकां शवस्पृष्टकं च—इति । सन्ति भगवच्छास्त्रेषु वचनानि परश्शतानि । यथा **श्रीसात्त्वतसंहितायां** सप्तमे परिच्छेदे—

*दत्तशिष्टम[तृप्त]शेषं च दैवीयान्नेन भावितम् । हविश्शेषेण संयुक्तं व्रतिनां भोजनं हितम् ॥ इति ।

दत्तशिष्टं—कार्यसंप्रदानावशिष्टम्, दैवीयान्नेन—पाकपात्रावशिष्टेन हविःशेषेण—चरुशेषेण व्रतिनां—भगवद्व्रतनिष्ठानां सर्वेषां हितम्—अनिष्टनिवर्तकत्वादिष्टप्रापकत्वाच्चावश्यं भोक्तव्यमित्यर्थः । अत्र भोजनमिति कर्मणि ल्युडन्तम् । अत्रैव श्रीनारसिंहकल्पपरिच्छेदे—

* निष्कामः पावनार्थं तु स्तोकमुद्धृत्य वै पुरा । सन्धार्य मन्त्रपूतं प्राक् तमश्नीयाच्च मौनवान् ॥ इति ।

**भरद्वाजे** होमाधिकारे भगवन्निवेदितमित्यनुवृत्तौ—

*प्राप्तानुज्ञस्तथा तस्मान्नैवेद्यं प्रतिपाद्य च । द्विजेन्द्राणां हि योग्यानां बन्धूनां शान्तचेतसाम् ॥
निष्कामस्स्वयमश्नीयाद्भार्यासुतसमन्वितः । संप्रदानावशिष्टं यत्सकामः पुनरेव तत् ॥ इति ।

**श्रीपौष्करे** शयनाध्याये—

*कृतोपवासा येऽश्नन्ति प्रापणं पारमेश्वरम् । संप्रदानावशिष्टं च पूतदेहा नरास्तु ते ॥
वन्दनीयामराणां च मान्या वै सिद्धसन्ततेः । इति ।

पारमेश्वरं—परमेश्वराय भगवते निवेदितमित्यर्थः । **पारमेश्वरे** समाराधनाध्याये—

*ततस्तु भगवद्भुक्तं प्राश्नीयान्नियतस्स्वयम् । क्षयाय सर्वपापानां कोष्ठसंसिद्धयेऽपि च ॥ इति ।

**नारदीये** समाराधनाध्याये—

*ततस्तु भगवद्भक्तान्दीक्षितान्पाञ्चरात्रिणः । समभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥
तेभ्यो दद्याच्च नैवेद्यं मधुपर्कपुरस्सरम् । किञ्चित्संस्थाप्य पूजार्थं विष्वक्सेनस्य पूर्वतः ॥ इति ।

प्रदानं विधाय प्रायश्चित्तप्रकरणे ह्युक्तम्—

*दत्तं भागवतश्रेष्ठैर्विष्णवे प्रभविष्णवे । तत्पवित्रं पवित्राणां पावनानां च पावनम् ॥

दातव्यं तु द्विजातीनां भक्तानां पावनाय च । इति ।

तथा— *ब्राह्मणैः क्षत्रियैर्वैश्यैर्वैष्णवैर्भक्तिसंयुतैः । भोज्यं निवेदितं यत्तत् इत्यादि ।

तथा— *स्वयं चापि तदश्नीयात्सर्वपापविशुद्धये । तस्य संस्पर्शनात्पानाद्भोजनाद्धारणात्सदा ॥
शुचिर्भवति विप्रेन्द्र सर्वकर्मसु संमतः । इति ।

तथा **पाद्मे** चर्यापादे दशमेऽध्याये परित्याज्यपरिग्राह्यविभागप्रदर्शनपूर्वकमुक्तम्—

*ब्रह्मेशानादिदेवानां नैव भोज्यं निवेदितम् । न स्पृश्यं लङ्घनीयं नो चण्डादीनां तथैव च ॥
देवीनां तु श्रियादीनां विनतानन्दनस्य च । चक्रादीनामायुधानां वस्तु यद्यन्निवेदितम् ॥
भोक्तव्यमेव सर्वेषां विप्रादीनामशङ्कितम् । विष्णोर्निवेदितं सर्वं पावनानां च पावनम् ॥
प्रापणं दुर्लभं भोज्यं न त्याज्यं स्यात्कदाचन । भुञ्जानानामेधते श्रीस्त्यजतां परिहीयते ॥
व्रतोपवासतुलितमशनं तस्य पावनम् ॥ इति ।

**श्रीविष्णुतत्त्वे** योगपादे पञ्चमे पटले—*तद्भुक्तशेषभोगा स्याज्जिह्वा गन्धस्तथाविधः । इति । अन्तिमे पटले—

*शेषभुक्तिं प्रशंसन्ति मुनयस्तत्त्वदर्शिनः । युवानः खलु वाञ्छन्ति ताम्बूलं तरुणीमुखात् ॥ इति ।

अत्र तत्त्वदर्शिनो मुनयः प्रशंसन्तीत्यनेन पावनतमत्वं सिद्धम् । तथा **महाभारते** ज्ञानकाण्डे तृतीयाध्याये—

*पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः । प्रापणं भगवद्भुक्तं भुञ्जते चाग्र्यभोजनम् ॥ इति ।

अत्र भुञ्जत इत्येव भोजनस्याभिधानेऽपि पुनरग्र्यभोजनमिति वचनं तस्यापि समन्त्रकसमाराधनरूपत्वं प्रशस्ततमत्वं च प्रतिपादयितुमिति । तथा कर्मकाण्डे च—

*हृदि ध्यायन्हरिं तस्मै निवेद्यान्नं समाहितः । मध्यमानामिकाङ्गुष्ठैर्गृहीत्वाऽन्नं समाहितः ॥
प्राणाय चेत्यपानाय व्यानाय च ततः परम् । उदानाय समानाय स्वाहेति जुहुयात्क्रमात् ॥ इति ।

**बोधायनीये विष्णुकल्पे** च—

*इदं विष्णुर्विचक्रमे इत्येतया चरुं प्राश्नीयात्—इति । तथा तत्रैव—*अहं वैष्णवोऽस्मीति यः प्रतिब्रूयात्तस्मै शेषं प्रदद्यात्—इत्येतैरेव मन्त्रैः प्राश्नीयादिति । **श्रीमद्रामायणे** च—

*गते पुरोहिते रामः स्नात्वा नियतमानसः । सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥
प्रगृह्य शिरसा पात्रं हविषो विधिवत्ततः । महते दैवतायाज्यं जुहाव ज्वलितेऽनले ॥
शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् । ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः । श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ इति ।

सन्ति तावदेतानि वचांसि; न पुनरत्र निवेदितभक्षणं सिध्यति । तथा हि—*विष्णुनाऽत्तमश्नन्तीत्यादेर्वर्तमानापदेशरूपत्वेन विधिपरत्वे प्रमाणाभावात्। रहस्याम्नायभगवच्छास्त्रोक्तं त्वधिकारिविशेषप्रतिनियतधर्मान्तरवन्न विश्वसनीयम् । यद्यपि च सर्वेषामपि च धर्माणां परमार्थतो भगवत्समाराधनरूपत्वेन सर्वेषां तत्समाराधकत्वम्; तथाऽप्यभिगमनादिपूर्वकाष्टाङ्गयजनाभावात्तदनुप्रविष्टं निवेदितान्नभक्षणं तेषां न प्राप्नोति । किंच यस्मिन्नाम्नाये अनादरो भवतामद्यापि वर्तते तदेव च प्रमाणमिदानीमुपस्थाप्यत इत्ययमपि महान् क्लेशः । रहस्याम्नायस्य प्रमाणत्वाभ्युपगमेऽपि भवद्भिस्तदनुष्ठान-

मनादृतमेव । ततश्चास्तु भगवन्निवेदितं रहस्याम्नायभगवच्छास्त्रनिष्ठैर्भोक्तव्यम्; तथाऽपि न केवलं त्रयीधर्मरूपभगवत्समाराधननिष्ठैर्भोक्तव्यत्वे प्रमाणम् । तेभ्यस्तत्प्रदानविधानात्तत्सिद्धिरिति चेन्नैवम् । न हि प्रदानं विहितमिति प्रतिग्रहीतुरपि धर्मता स्यात्, श्राद्धादिवत् । किंच यदिदमिह शेषभोजनं विधीयते, तदपीष्टशिष्टभक्षणन्यायेन निवेदितावशिष्टविषयमिति निर्वोढव्यम् । न हि निवेदितस्य शेषशब्दार्थता संभवति । न च तस्य भगवद्भुक्तशिष्टत्वम्; तत्र कस्यचिदप्यंशस्य भगवता ग्रहणादर्शनात् । अतश्च शिष्टशब्दो निवेदितावशिष्टपरः । निवेदितस्य तु कृत्स्नस्य विष्वक्सेनादिनिवेदनपरम्परया त्याग एव विहित इति ग्राह्यम् । किंच निवेदितस्याभोज्यत्वं भगवच्छास्त्रसंहितास्वेव प्रतीयते; यथा **सनत्कुमारसंहितायाम्**—

*निवेदितं तु यद्द्रव्यं पुष्पं फलमथापि वा । तन्निर्माल्यमिति प्रोक्तं तत्प्रयत्नेन वर्जयेत् ॥ इति ।

प्रदेशान्तरे च—*निर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपि । मासं पयोव्रती भूत्वा जपन्नष्टाक्षरं सदा ॥

ब्रह्मकूर्चं ततः पीत्वा पूतो भवति मानवः ॥ इति ।

तत्रैवेन्द्ररात्रे—*न चोपजीवेद्देवेशं निर्माल्यादि न भक्षयेदिति । तथा, *न चोपयोगयोग्यानि निर्माल्यानि कदाचनेति च ।

तथा संहितान्तरे—*निर्माल्यानि च नाश्नीयान्न जिघ्रेन्न च लङ्घयेदिति ।

नच वाच्यम्; *दशनाड्यधिकं पूतं स्थापयेत्तु विचक्षणः । कालयोगस्स उद्दिष्टो रात्रावहनि चैव च ॥

कालयोगातिरिक्तं तु निर्माल्यं परिचक्षते । ततस्तदप्सु चैवाग्नौ क्षिपेद्भूमौ खनेत्तु वा ॥

इतीन्द्ररात्रवचनानुसारेण निषेधवचनानां दशनाड्यधिकविषयत्वमिति; तत्र हि सामान्येन निवेदितस्य पुष्पौदनादेः कृतकार्यतया निर्माल्यत्वेनापनये प्राप्ते दशनाड्यधिकपूर्णपूजाङ्गतया स्थापनं विधीयते; ततो नाडिकादशकादर्वागपि तस्योपयोगान्नाडिकादशकातिरिक्तविषयो निषेध इति मन्दं वचः । न चात्रास्य रुद्रादिनिर्माल्यविषयत्वम्; दीक्षितादीक्षितसाधारणतया सुरादिवदत्यन्तनिषिद्धस्य दीक्षितं प्रति समयोपदेशसमये भगवद्यागदीक्षितं प्रति प्रसङ्गाभावेन निषेधप्रयोजनाभावात्, भगवन्निवेद्यादेश्च प्रसङ्गस्य संभवात् । एवं च सति केरलादिदेशगतशिष्टानुसारश्च । यत्तु *प्रापणं भगवद्भुक्तमित्यादि **महाभारत**वचनं तदप्युक्तरीत्या पञ्चरात्रार्थनिर्णये सति तदनुसारित्वाद्भगवद्भुक्तावशिष्टविषयमेव भवितुमर्हति । यत्तु **बोधायनीये** विष्णुकल्पे च भगवत्समाराधनमुक्त्वा तदन्ते भगवद्भुक्तोज्झितस्य प्राशनीयत्वमुक्तमिति, तदपि न, भुक्तोज्झितप्राशनस्य तत्राविहितत्वात्, *इदं विष्णुर्विचक्रमे इत्येतया चरुं प्राश्नीयादित्यत्रावशिष्टचरुप्राशनमात्रेण चरितार्थत्वात्, *अहं वैष्णवोऽस्मीति यः प्रतिब्रूयात्तस्मै शेषं दद्यादिति एतैरेव मन्त्रैः प्राश्नीयादित्यत्रापि निवेदितमेव प्राशनीयमिति प्रतीयते । तत्प्रतीतावपि न समाराधकस्य तत्प्राशनसिद्धिः, तस्मात्प्रतिग्रहीतुस्तदभिधानात् । यत्तु श्रीमति **रामायणे** लिङ्गदर्शनं तत्रापि शेषशब्दस्य निवेदितावशिष्टविषयत्वेऽपि न विरोधः । अतो नैतदपि निवेदितभोजनस्यैकान्तिकं लिङ्गम् । एवं च सतीष्टशिष्टभक्षणनयोऽप्यनुसृतो भवति । यत्तु *हृदि ध्यायन्हरिं तस्मै निवेद्यान्नं समाहित इत्यादि कर्मकाण्डवचनं, तदपि पूर्वमनिवेदितत्वस्य लिङ्गम् । अन्यथा निवेदितनिवेदनादिदोषप्रसक्तेः । वैश्वदेवप्राणाहुत्योश्च देवतान्तरनिवेदनरूपयोर्भगवन्निवेदितेनानुपपत्तेः । अन्यथाऽतिप्रसङ्गात् । न च द्रव्यान्तरेण तत्करणोपपत्तिः । भोक्तव्यत्वेनोपस्थितान्नविषयत्वात्तयोः । अतो भगवतस्सर्वोत्तरत्वेऽपि तन्निवेदितनिर्माल्यादेरुपभोगो न शास्त्रीय इति ॥

तत्रोच्यते—यद्भगवन्निवेदितादेरभोक्तव्यत्वमुक्तं तत्सतां दूरपरिहरणीयैस्त्वादृशैरेवेति शास्त्राण्याचक्षते । तथा हि—**रहस्याम्नायब्राह्मणे**—* अथ यदि वक्ता तृतीयलक्षणो भवेदुदासीनश्च द्वितीयलक्षणस्स्यात्, उदासीन एव नियोज्यो भवति अस्मात्सर्वा हि वृत्तिर्निवर्तते तृतीयलक्षणात्तथा चतुर्थलक्षणादिति । निवेदितस्य च स्वाचार्यप्रभृतियोग्यतमेभ्यः प्रदेयत्वमुक्त्वा तदलाभे यथालाभं ज्ञातेभ्यो योग्येभ्यः प्रदेयत्वमभिधायानन्तरमुच्यते—* अथ यदि कश्चित्सुप्रक्षालितपाणिपादोऽभिमुखो भवेत्, । न च ज्ञायेत, प्रष्टव्यो भवति किं भवान्प्राप्तेनान्नेन करिष्यतीति, स यदि ब्रूयाद्वो यथाज्ञानं भगवन्तं यक्ष्यामीति तस्मा अन्नं देयं भवति, अथ यदि ब्रूयात् भो न खल्वहं जानाम्येवं भगवन्तं यष्टुमिति किं तर्ह्ययमिहोपायोऽन्नलाभायेत्यभिगतोऽस्मीति तदन्नं प्रतिष्ठाप्यान्तर्हित्वा वा इत्यादि । उक्तं च **पाद्मे** चर्यापादे द्वादशाध्याये—* शुनामिव पुरोडाशो न नीचेषु तदिष्यते इति । तथा **ईश्वरसंहितायाम्**—

> * दुर्लभो भगवद्भक्तो लोकेऽस्मिन्पुरुषस्सुत । तत्रापि दुर्लभतरो भावो वै यस्य तत्त्वतः ॥
> पादोदकं प्रति शुभः सिद्धान्ने च निवेदिते । स्रगादिके चोपभुक्ते ह्युपभोगार्थमेव च ॥
> अतश्च भावहीनानामभक्तानां च षण्मुख । निषिद्धं भगवन्मन्त्रदृक्पूतमखिलं च यत् ॥ इति ।

**श्रीपौष्करे** शयनाध्याये तादृशेभ्यः प्रदातुरपि पातित्यमुक्तम्—

> *अपात्राणामभक्तानां नास्तिकानां दुरात्मनाम् । वर्जनीयं प्रयत्नेन स्वानुष्ठानपरेण तु ॥
> स्त्रीशूद्राणां शिशूनां च भृतकानां विशेषतः । सकामो वाऽथ निष्कामो मन्त्रज्ञस्सद्व्रतस्थितः ॥
> मन्त्रपूतं च नैवेद्यं निषिद्धानां ददाति यः । सिद्धोऽपि याति पातित्यमारुरुक्षुस्तु किं पुनः ॥ इति ।

**ईश्वरसंहितायां** प्रायश्चित्तित्वमप्युक्तम्—

> *रक्षणीयमभक्तेभ्यस्तदन्नं विष्णुयाजकैः । प्रायश्चित्ती भवेद्दाता अपात्रे प्रतिपादनात् ॥ इति ।

तत्रैव— *प्राणवद्रक्षणीयं च मन्त्रपूतं महामुने । नैवेद्यं श्वसृगालेभ्यो मार्जारेभ्यो विशेषतः ॥
पक्षिभ्यो मर्कटेभ्यश्च मूषिकेभ्यस्सदैव हि ॥ इति च ।

**नारदीये** प्रायश्चित्तविशेषोऽप्युक्तः—

> *ब्राह्मणैः क्षत्रियैर्वैश्यैर्वैष्णवैर्भक्तिसंयुतैः । भोज्यं निवेदितं यत्तदन्यैर्भुक्ते निवेदिते ॥
> जपेदष्टोत्तरशतं मूलमन्त्रं समाहितः ॥ इति ।

किंच भवादृशेभ्यो दाने सत्यन्ननाश एव **रहस्याम्नाये** ब्रह्मचर्याश्रमप्रकरणे श्रुतः—* यद्येवमतिरिक्तं स्यादतिरिक्तमिति पुनः कस्य वार्ता ? इत्यादिना *तदतिरिक्तमित्यन्तेन अतिरिक्तं प्रतिपाद्य, *तदुपादानवते दद्यादित्यादिना रहस्याम्नायनिष्ठेभ्यः, तदभावे त्रयीधर्मरूपभगवत्समाराधननिष्ठेभ्यः, तदभावेऽन्नस्यादनीयताप्रवृत्तिनिमित्तकान्नशब्दवाच्यत्वेन **यस्मैकस्मैचिदवश्यदेयत्वे** भगवत्कर्मयोग्येभ्यो गवादिभ्यः, तदभावे तादृग्भ्यो हस्त्यादिभ्यः, तदभावे भगवद्यज्ञार्हौषधादिस्थावरेभ्यश्च मूले दानमुक्त्वाऽनन्तरमुक्तम्—* न त्वेवान्नं नाश्यं भवति, कोऽन्ननाशः ? उज्झनं निखननमप्सु प्रक्षेपणं काकेभ्यः श्वसूकरेभ्यो वा यत्किञ्चिन्न कर्मण्यं स्थावरजङ्गमं वा तत्र दानमित्येषोऽन्ननाशः इति । तदेतदखिलमनुसन्दधानैरुक्तमागमप्रामाण्ये—

*ये हि युष्मद्विधा मूर्खास्तेषामेव निषेधगीः । सेव्यमानं हि तत्सर्वं वैष्णवैरधिकारिभिः ॥
अघौघध्वंसनायालं सोमपानमिवाध्वरे । अन्येषां हि तदस्पृश्यं पुरोडाशः शुनामिव ॥ इति ।

यत्तु *विष्णुनाऽत्तमश्नन्तीत्यादौ वर्तमानापदेशरूपत्वाद्विधिपरत्वं न प्रतीयत इत्युक्तम्, तन्मीमांसागोष्ठीबहिष्ठितानां निष्ठ्यूतम् । अप्राप्तार्थत्वेनैव हि विधिव्यवस्थापनम्; अन्यथा तत्रतत्र यजतिजुहोत्यवहन्तिप्रोक्षतीत्यादिष्वपि वर्तमानापदेशरूपेषु विधिपरत्वपरित्यागप्रसङ्गात् । अत्र विधिरेव साक्षादनन्तरं प्रतीयते *तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुरिति । ननु यदि *विष्णुनाऽत्तमश्नन्तीत्यादौ विधिपरत्वस्वीकारः, तर्हि तत एव प्राप्तार्थत्वाद्भक्षयेयुरित्यस्य विधिपरत्वं न स्यादिति चेत्, कस्तर्ह्यस्यार्थः ? प्रागुक्तानुवादमात्ररूपमिति चेत्तथाऽपि तेनैवाश्नन्तीत्यादेर्विधित्वं दृढीकृतम् । न ह्यसिद्धमनूद्यत इत्यत्रोपपत्तिं पश्यामः । न चानुवादो निष्प्रयोजनो भवितुमर्हति । न चैतदनुवादेनान्यद्विधेयं दृश्यते । अतः प्रयोजनालोचनायां प्रागुक्तविधित्वस्थिरीकरणमेव प्रयोजनमिति सिद्धम् । यद्वा—विधिप्रत्ययश्रवणादेष एव विध्युद्देशः, अश्नन्तीत्यादिकं त्वेतदभिप्रेतविशेष[ण]व्यञ्जन [रूपेणावयुत्तया] रूपत्वोक्त्याऽनुवादादेतस्यैवोपकारकमिति, तथाऽपि विधावेव पर्यवसानमिति सिद्धम् । एवं श्रुत्यैव स्मृत्यादीनामनुविधेयतया सिद्धस्यार्थस्य न स्मृत्या बाधश्शङ्कनीयः, अपि तु तद्विरुद्धाः स्मृत्यादय एव बाध्येरन्निति विरोधाधिकरणे स्थापितम् । एवं च सति, यद्यपि *निर्माल्यं च निवेद्यं चेत्यादिवचनमाप्तकोटौ निविष्टं स्यात्; तथाऽपि सामान्यरूपत्वेन सावकाशत्वात् श्रुतिविहितविशेषव्यतिरिक्तविषयमिति उत्सर्गापवादन्यायतस्सिद्धम्, विशेषोपसंहारन्यायाच्च । तथा हि; रुद्रादिदेवतान्तरनिवेद्यादेरनुपभोग्यत्वं तत्तच्छास्त्रैरेव सिद्धमिति सर्वैरङ्गीकृतत्वान्न तत्र तावद्विवादः । अत एव हि रुद्रपरत्वप्रतिपादनाग्रहगृहीतैरपि तैस्तदुच्छिष्टपरित्यागेन तन्निकर्षमाशङ्क्य *त्वं ब्रह्मण इत्यादिना तदुच्छिष्टपरित्यागस्यान्यथासिद्धत्वेन अपकर्षलिङ्गत्वं निराकृतम् । एवं च सति सामान्यरूपनिर्माल्यनिवेद्यशब्दयोर्विशेषाकाङ्क्षायामाकाङ्क्षितविशेषसमर्पणक्षमनिषिध्यमानविशेषसमधिगमे तस्मिन्नेव पर्यवसानं नान्यत्रेति स्वीकार्यम् । यथा पशुशब्दस्य छागशब्दोक्तविशेषपर्यवसानं तथेहापीति न सङ्कटं किञ्चित् । अयमर्थो न्यायनिरपेक्षमेव वचनैः प्रतीयते । यथा **ब्राह्मे** पुराणे—

*विष्णोर्निवेदितं शुद्धं मुनिभिर्भोज्यमुच्यते । अन्य[वेद्यं तु]न्निवेद्यं निर्माल्यं भुक्त्वा चान्द्रायणं चरेत् ॥ इति ।

यत्तु पितृत्वादिविकल्पदूषणैर्वल्गितं, तत्तदा शोभेत यदि वयं तेषु हेतुत्वम[भि]नुसंदधीमहि ; यदि चोच्छिष्टानुमतिवाक्यविषय[त्वेनोपक्षिपेम ।]त्वं नापेक्षेमहि । सिद्धे तु विशेषविधाने तत्प्ररोचनप्रवृत्तवचनोपस्थापितपरमार्थभूततत्तदाकारवर्णनं तु क्रियमाणं नोपालम्भपदम् । न चातिप्रसङ्गः, स्वयमसाधकत्वात् । साधकानुग्राहकं तु साधकसन्निधौ वर्तमानमपि हि न स्वयं कार्यं साधयेत्, अन्यथा सामग्रीमनपेक्ष्य हेतूनां सर्वेषां प्रत्येकं कार्यकरणप्रसङ्गे यस्य कस्यापि देशकालेश्वरादेः हेतोस्सर्वत्र सन्निहितत्वेन सर्वं कार्यं सर्वदा सं[प्रति]पद्येत । ततः प्रेक्षावतां तदर्थोद्योगभङ्गो विधिनिषेधादिवैयर्थ्यं च स्यात्, अयत्नत एव सर्वफलावाप्तेः, दुःखानां च दुष्परिहरत्वात् ।

यद्वा, *निर्माल्यं च निवेद्यं चेत्यस्यायमर्थः—निर्माल्यं—रुद्रादिनिवेदितम् ; प्रसिद्ध्यादिवशात्तत्तावत्सिद्धम् । भगवन्निवेदिते हि निर्माल्यशब्दप्रयोगोऽपि निषिध्यते, यथेश्वरसंहितायाम्—*निर्माल्यबुद्ध्या दैवीयमित्यादि । निवेद्यं—निवेदनयोग्यं, निवेदनार्थं परिकल्पितमित्यर्थः । निवेदनार्थं परिकल्पितस्य भोजनेऽपि दोषमाहुः । यथा **श्रीपौष्करे** विष्वक्सेनाध्याये—

*प्राक्साधितं च यागार्थं देवतानां प्रयत्नतः । तत्समर्पणपर्यन्तं यावद्देवान्नमुच्यते ॥
अन्यथा भक्षणं तस्य यदि मोहात्कृतं द्विज । प्रायश्चित्तशतैश्चीर्णैश्शुचिर्भवति मानवः ॥
तत्र[मन्त्र]संतर्पणादन्ते याजिनां याजिनां वर । गर्वबुद्धिविमुक्तानां भक्षणं सर्वशुद्धिकृत् ॥
पावनं पुण्यदं शश्वद्भूरिभूत्यभिवृद्धिदम् । इति ।

एतेन, *वृथाकृसरसंयावपायसापूपमेव च । अनुपाकृतमांसं च देवान्नानि हवींषि च ॥
इति मनुवचनमपि निर्व्यूढम् । निवेदनार्थं परिकल्पिते देवान्नमिति संज्ञात्वेन प्रयोगात्तदैकार्थ्ये च संभवति तद्विरुद्धार्थकल्पनायोगात् । मन्वादिधर्मशास्त्रस्यापि चित्रशिखण्डिप्रणीतभगवच्छास्त्रमूलकत्वस्य **महाभारते** प्रतिपादितत्वेन मूलविरोधप्रसङ्गाच्च । तथा ह्युक्तमुपरिचराख्याने—

*तस्मात्प्रवक्ष्यते धर्मान्मनुस्स्वायंभुवः स्वयम् । उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ॥
प्रवक्ष्यतस्तदा शास्त्रं युष्मन्मतसमुद्धृतम् । इति ; *एतद्धि सर्वशास्त्राणां शास्त्रमुत्तमसंज्ञितम् । इति च ।

*मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते इति स्मृत्यन्तरवचनेनैव मानवस्मृत्यपेक्षया स्मृत्यन्तराणां दुर्बलत्वात् मानवस्मृत्युपजीव्यभगवच्छास्त्रविरोधे तेषां बाध्यत्वमेव ।

यद्वा, *निर्माल्यं च निवेद्यं चेत्युभयमपि रौद्रविषयमेव । तथा हि ; तैरेव षड्विधनिर्माल्यनिरूपणे—*निर्माल्यं च निवेद्यं चेत्यवान्तरविधाद्वयमुक्तम् । [तथा हि—]यथा तेषां सिद्धान्तसारपद्धतौ प्रायश्चित्ते—*निर्माल्यभक्षणे त्वकामाद्ब्रह्मपञ्चकं सार्धसहस्रमावर्तयेत् । कामतोऽनन्तयागे पादाध्वरदीक्षया शुध्यति । निर्माल्यभेदाः कथ्यन्ते—देवस्वं देवद्रव्यं नैवेद्यं निवेदितं चण्डद्रव्यं निर्माल्यं चेति । देवसंबन्धि ग्रामादि देवस्वम् । वस्त्रावलङ्कारादि देवद्रव्यम् । निवेदनार्थं परिकल्पितं नैवेद्यम् । तदेवोत्सृष्टं निवेदितम् । चण्डाय दत्तं चण्डद्रव्यम् । बहिर्निक्षिप्तं निर्माल्यम् । विसर्जितेऽपि देवे पिण्डिकास्थं यन्त्रिकाद्यन्निर्माल्यं[अन्नं]भवति, षड्विधमपि निर्माल्यं न जिघ्रेन्न च लङ्घयेन्न दद्यान्न क्रीणीयाद्दत्वा क्रव्यादो भवति भुक्त्वा मातङ्गः लङ्घने सिद्धिहानिः आघ्राणे वृकः स्पर्शने स्त्रीत्वम् अथादाने चण्डालः विक्रये शबरः इति । उक्तं च भगवच्छास्त्रेऽपीश्वरसंहितायां समाराधनाध्याये—

*स्कन्दः— त्वया निषेध आख्यातो मन्त्रदत्तस्य वस्तुनः । सर्वत्र पत्रपुष्पान्नपूर्वस्य परमेश्वर ॥
तस्येदानीं प्रदानं तु प्राशनं च प्रशंससि । किमेतदत्र मे जातः संशयः परमेश्वर ॥
ईश्वरः— प्रदानं प्राशनं पुत्र उपभोग्यत्वमेव च । शैवपाशुपते दुष्टमचिरादेव पापकृत् ॥
तत्पुनर्वैष्णवे मार्गे वर्तते व्यत्ययेन तु । अनन्तफलदं दानात्प्राशनात्कोष्ठशुद्धिकृत् ॥
क्षयं नयति पापानि पुण्यवृद्धिं करोति च । दानैर्धर्मैः कृतैः पुण्यैस्तपोभिश्च न तत्फलम् ॥
यत्फलं भगवद्भुक्तिप्रदानप्राशनादनात् ॥ इति ।

तत्रैवाध्याये सोमपानादपि पावनतरत्वमस्य प्रपञ्चितम् । तथा हि—

*क्लेशेन महता चैव प्राप्तं पशुवधादिना । यज्ञान्ते सोमपानं तु संस्कृतं पशुकर्मणि ॥
तस्य तद्वैष्णवैस्सूक्तैर्जाता कर्मण्यता यथा । तथा पुनाति तत्पुत्र द्विजानां यज्ञयाजिनाम् ॥
किं पुनस्तत्प्रभावाद्वै दिव्यैर्मन्त्रैस्तु वाग्यतैः । संस्कृत्य साधितं यद्वै सर्वं संशोधितं पुनः ॥

मुद्रामन्त्रसमेतेन सध्यानेन षडानन । जगद्गुरौ मन्त्रमूर्तौ तन्मन्त्रेण निवेदितम् ॥
दत्तं मन्त्रवरेणैव मन्त्रज्ञस्य महात्मनः । अनादिभगवच्छास्त्रवचनैर्विहितक्रियम् ॥
प्रदानाद्भक्षणात्तस्य चोत्तारयति तत्सुत । आदिसर्गपवित्रं तदमरैरभिवन्दितम् ॥
पूजितं सिद्धगन्धर्वैर्वन्दितं भगवन्मयैः । दत्तं ब्रह्ममयैर्नित्यमात्मज्ञैर्ग्राहितं पुनः ॥
रक्षितं कर्मनिष्ठैस्तु शंसितं यज्ञयाजकैः ॥ इति ।

तत्रैव दशमेऽध्याये समयोपदेशे महादेवेन भगवन्निवेदितस्य सर्वस्य प्रतिपत्तिं विना संभूतैस्साधारणैः केवलान्नादिशब्दैरभिधाने निर्माल्यबुद्ध्या दूषणे च महादोष उपपादितः—

* उपभुक्तस्य सर्वस्य गन्धपुष्पादिकस्य च । स्नानादावुपयुक्तस्य दधिक्षीरादिकस्य च ॥
दूषणं न प्रयोक्तव्यं शब्दैरप्रतिपत्तिजैः । निर्माल्यबुद्ध्या दैवीयं पावनं दूषयन्ति ये ॥
ते यान्ति नरकं मूढास्तत्प्रभावापलापिनः । प्रत्यक्षेण प्रमाणेन लोकदृष्टेन हेतुना ॥
शिष्टैरनुष्ठिता चैव वैष्णवस्य पवित्रता । सिद्धा पादोदकान्तस्य महत्ता देवपूजिता ॥ इति ।

अत्र गन्धपुष्पादीत्यादिशब्देन तुलसीपत्रादिग्रहणम्; दधिक्षीरादीत्यादिशब्देन दिव्यचूर्णादिग्रहणम् । सर्वस्य गन्धपुष्पादिकस्य पादोदकान्तस्येति भगवदुपभुक्तस्य सर्वस्यापि संग्रहः प्रतीयते । यथा **ईश्वरसंहितायामेव**—

* कुङ्कुमं चन्दनं चैव कर्पूरं चानुलेपनम् । विष्णुदेहपरामृष्टं तद्वै पावनपावनम् ॥ इति ।

तथा **पाद्मोद्भवे**—* विष्णुदेहपरामृष्टं यश्चूर्णं शिरसा वहेत् । सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥ इति ।

तथाऽन्यत्र—* विष्णुगात्रच्युतं चूर्णं ललाटे धारयेद्द्विजः । अपोह्य पातकान्याशु मोदते दिवि देववत् ॥ इति ।

एतेन भगवत्पादोदकदिव्यचूर्णमालादीनामपि न निर्माल्यशब्दाभिलप्यत्वमिति सिद्धम् । अन्यत्रापि तेषां विधिः प्रतीयते । यथा **ब्राह्मे** पुराणे—

* विष्णोर्नैवेद्यकं शुद्धं मुनिभिर्भोज्यमुच्यते । अन्यवेद्यं तु निर्माल्यं भुक्त्वा चान्द्रायणं चरेत् ॥
विष्णुदेहपरामृष्टं माल्यं पापहरं शुभम् । यो नरश्शिरसा धत्ते स याति परमां गतिम् ॥ इति ।

**श्रीवैखानसेऽप्यत्रिसंहितायाम्**—

* मन्त्रेण पादे यद्दत्तं माधवं पाद्यमुच्यते । तत्पाद्यतीर्थमादाय भक्त्या देवमनुस्मरन् ॥
आत्मानं प्रोक्षयेद्यस्तु सर्वपापैः प्रमुच्यते ॥ इति ।

**ब्रह्माण्डे**— * पृथिव्यां यानि तीर्थानि तेषु स्नानेन यत्फलम् । विष्णोः पादोदकं मूर्ध्नि धारयेत्सर्वमाप्नुयात् ॥
मानवो यस्तु गङ्गायां स्नानं पानं समाचरेत् । तस्य यादृग्भवेत्पुण्यं तादृक्पादाम्बुधारणात् ॥
त्रिषु लोकेषु यत्तीर्थं प्रयागं पुष्करादिकम् । तत्पादयुग्मे कृष्णस्य तत्र तिष्ठति नित्यशः ॥

**श्रीभागवते**—* पादोदकस्य माहात्म्यं जानात्येव हि शङ्करः । विष्णुपादोद्भवां गङ्गां शिरसाऽधारयद्धि सः ॥
प्रायश्चित्तमनुप्राप्तं कृच्छ्रं वाऽप्यघमर्षणम् । विष्णुपादोदकं पीत्वा शुद्धिमाप्नोति तत्क्षणात् ॥
**हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः** । पादोदकं च **निर्माल्यं** यस्य **मूर्ध्नि स वैष्णवः** ॥ इति ।

ईदृशेषु निर्माल्यशब्दो भुक्तोज्झितत्वमात्रविवक्षया, न तु निन्दाभिप्रायेण ।

**श्रीनारसिंहे**—*गङ्गाप्रयागगयनैमिशपुष्कराणि पुण्यानि यानि कुरुजाङ्गलयामुनानि ।

कालेन तीर्थसलिलानि पुनन्ति पापं पादोदकं भगवतस्तु पुनाति सद्यः ।। इति ।

आह च भगवान् **शौनकः**—* नैवेद्यं स्वयमश्नीयादित्यादि । तथाऽन्यत्र—

* भक्तपादच्युतेनापि मत्स्नापितजलेन वा । नरः पापात्प्रमुच्येत स्नानपानादिकर्मभिः ।।

तथा— * विष्णोः पाद्यं समादाय तीर्थं भक्त्या च संस्मरन् । आत्मानं प्रोक्षयेद्यस्तु मालां वा मूर्ध्नि धारयेत् ।।

भक्तियुक्तस्य विप्रस्य महापातकनाशनम् । इति ।

तथा— *मालां यो धारयेन्नित्यं वैष्णवीं भक्तिमाश्रितः । सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।। इति ।

**श्रीभागवते**—* त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां तरेमहि ।। इति ।

तथाऽन्यत्र— * मुकुन्दाशनशेषं तु यो भुनक्ति दिनेदिने । सिक्थेसिक्थे महासेन चान्द्रायणशताधिकम् ।। इति ।

पुराणादिषु श्रीसालग्रामादिप्रसङ्गे च—

* वैष्णवं तु रजोजुष्टं नैवेद्यस्य च भक्षणम् । निर्माल्यधारणं मूर्ध्नि महापातकनाशनम् ।।

स्नानपानोदकं देवि पिबन् शिरसि धारयेत् । पुण्यपापविनिर्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ।।

विष्णुगात्रेण संस्पृष्टं पत्रं वा पुष्पमेव वा । शिरसा धारयेद्यो वै स याति हरिमञ्जसा ।।

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः । पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ।।

पादोदकं पिबेन्नित्यं चक्राङ्कितशिलाहरेः । प्रक्षालयति यत्तोयं ब्रह्महत्यादिपातकम् ।।

बहुचक्रसमायुक्तं द्वारकापुरवासिनम् । स्नापयित्वा तु तत्तोयं पिबन् ज्ञानमवाप्नुयात् ।। इति ।

* भक्त्या भुञ्जंस्तु नैवेद्यं सालग्रामशिलार्पितम् । फलं यज्ञसहस्राणां पराकाणां शतं लभेत् ।। इत्यादि ।

* अग्निष्टोमसहस्रस्य वाजपेयशतस्य च । यत्पुण्यं तल्लभेद्देवि विष्णोर्नैवेद्यभक्षणात् ।।

ब्रह्मचारिगृहस्थैश्च वनस्थैर्यतिभिस्सदा । विष्णोर्निवेद्यं भोक्तव्यं नात्र कार्या विचारणा ।। इत्यादि च ।

एवमेतादृशवचनशतवशात् *निर्माल्यं च निवेद्यं चेत्यत्र निर्माल्यादिशब्दो रुद्रादिनिर्माल्यविषय इति सिद्धम् । सामान्यतो निषिद्धानामीदृशानां भागवते पुनर्निषेधो दोषाधिक्यादिविवक्षया ।

किंच भगवदनिवेदितमेव शास्त्रैर्निषिद्धम् । तथा हि **श्रीसात्त्वते** एकविंशतितमे परिच्छेदे—

* सुगन्धफलपुष्पाद्यमपूर्वमुचितं च यत् । अभोज्यं गुरुदेवादिनिवेदनविवर्जितम् ।। इति ।

**जयाख्यसंहितायां** षोडशे पटले समयोपदेशे—* नानिवेद्य हरेः किंचिद्भोक्तव्यं वा गुरोस्तथेति । **भारद्वाजे**ऽष्टमेऽधिकारे—* नानिवेद्य हरेः किंचित्समश्नीयाच्च पावनमिति । तत्रैव भोजनमध्ये दधिक्षीरोदकादेः पूर्वमनिवेदितस्य अकस्मात्समागतस्यापि मनसा निवेद्यैव भोक्तव्यत्वमुक्तम्—* तदकस्मात्प्रवृत्तं च भोजने मनसाऽपि चेति । अश्नीयादिति शेषः । **तथेश्वरसंहितायाम्**—

* भोजनावसरे प्राप्ते मध्ये प्रागवसानतः । यत्किंचिदुपभोगार्थमकस्मात्समुपागतम् ।।

तद्गुरौ भगवत्यादौ कल्पयित्वाऽऽहरेत्ततः । भक्तस्य समयज्ञस्य अन्यथा व्यत्ययो भवेत् ॥

तस्मान्निवेद्य वै पूर्वमपूर्वमुचितं च यत् । भक्त्या भगवतो विष्णोर्देशिकस्य महात्मनः ॥ इति ।

न चात्र गुरुसमभिव्याहारात् भगवत्यपि कल्पनं विज्ञापनमात्रमिति शङ्क्यम्; गुरुभुक्तस्य भोक्तुमशक्यत्वाद्धि तत्र तथा स्वीकारः । अत्र तु योग्यत्वात्कल्पनशब्दाभिहितं निवेदनं यजनमेव । एवं च सति प्रागुक्तश्रुत्यैकार्थ्यमपि सिद्धं भवति । अतो भगवदनिवेदितमेव निषिद्धमिति सिद्धं भवति ।

यत्पुनरधिकारिविशेषविषयं न सर्वैर्ग्राह्यमिति, तन्न; * न चैकं प्रति शिष्यत इति न्यायस्यात्रानपवादादन्येषामप्यधिकारिणां भगवत्समाराधनस्य भगवच्छास्त्रेषु प्रतिपादनात् । **महोपनिषदि** च सामान्यतः—* विष्णुनाऽत्तमश्नन्तीत्यादिविधानेन त्रयीधर्मनिष्ठैरपि तदनुवर्तनस्यापरिहार्यत्वात् । न च शाखाविशेषेऽनादरः, तत्प्रामाण्यस्य **महाभारते भगवच्छास्त्रे** च बहुषु प्रदेशेषु सिद्धस्य दुरपह्नवत्वात् । तदर्थविशेषाननुष्ठानस्य शाखाभेदप्रतिनियतधर्मान्तरवदेवोपपत्तेः । नच भगवत्समाराधनं तथा प्रतिनियतमिति वक्तुं शक्यम्; तत्साधारण्यस्योक्तत्वात् । यत्तु शेषशब्दो निवेदितावशिष्टविषय इति, तन्न; निवेदितेनैव संप्रदानानुयागादेरुपात्तसुव्यक्तवचनशतसिद्धत्वात्; निषेधस्य च परिहृतत्वात्; भगवता सूक्ष्मांशग्रहणस्य वक्ष्यमाणानेकवचनसिद्धत्वेन निवेदिते शेषशब्दस्याप्युपपत्तेः, तरुणीमुखगतताम्बूलदृष्टान्तवचनाच्च । तथा भगवन्निवेदितशेषभोजिनि विष्वक्सेने * यजेच्छेषाशनं देवम्, * शेषाशनाभिधानस्य गणेशस्यार्चनाय वै इत्यादिभिश्शेषाशनशब्दप्रयोगात् । उक्तं च **स्तोत्रे**ऽपि—* त्वदीयभुक्तोज्झितशेषभोजिनेत्यादि । न चेष्टशिष्टभक्षणन्यायविरोधः; विधिबलेन यथाविधिशिष्टत्वस्वीकारात् । केरलादिदेशे भगवन्निवेदितपरित्यागस्तु सुदर्शनादिधारणाधिकारोक्तन्यायेन दूष्यः । एवं च भगवच्छास्त्रानुसारिणि महाभारतवचने प्रतीयमानं भगवद्भुक्तप्राशनमितीदमपि न बाधितं भवति । विष्वक्सेनसंविभागप्रकारैश्च शेषशब्दस्य निवेदितविषयत्वं सुव्यक्तम् । तथाहि **पारमेश्वरे**ऽपि—

* अर्घ्यलेपनपुष्पैश्च धूपेनाभ्यर्च्य वै ततः । मुख्याधिकारिणो विप्रान्द्वादशाध्यात्मचिन्तकान् ॥
बलादिमन्त्रनिरतानष्टौ वा चतुरो द्विज । दीक्षितान्गुरुपूर्वांश्च ह्यनुकल्पाधिकारिणः ॥
बीजपिण्डपदाद्येषु मन्त्रेषु निरतान्सदा । त्रयीधर्मरतांश्चापि आमूलाद्भगवन्मयान् ॥
त्रय्यन्तज्ञानसंपन्नान्यथोक्ताचारनिष्ठितान् । समाहूयार्घ्यगन्धाद्यैस्समभ्यर्च्य यथाक्रमम् ॥
भगवच्छेषमादाय न्यस्तमाहृत्य मन्त्रतः । प्राङ्निवेदनकाले तु चतुर्धा संविभज्य तम् ॥
प्रापणं मधुपर्काद्यमन्यच्चाभ्यवहारिकम् । तेभ्यो दद्यादेकभागमर्घ्योदकपुरस्सरम् ॥
मात्रां चतुर्विधां चापि आचार्याय प्रदाय च । स्वप्राशनार्थमेकांशं स्थापयित्वा निरीक्षितम् ॥
शेषाशनाभिधानस्य गणेशस्यार्चनाय वै । भागमेकं तु संस्थाप्य भागेनान्येन तोषयेत् ॥
ब्राह्मणादीञ्छुभाचारान्भक्तान्ग्रामादिवासिनः । इति ।

**श्रीपौष्करे** विष्वक्सेनाध्याये—* विष्वक्सेनोऽथ यष्टव्यः इत्यनुवृत्तौ,

* नैवेद्यैर्मधुपर्काद्यैर्मुख्यमूर्तेर्निवेदितैः । द्विजप्राशनशिष्टैश्च स्वयं प्राशनवर्जितैः ॥ इति ।

तथा तत्रैव भगवानुवाच—

* कालवैश्वानराख्या या मूर्तिस्तस्यात्मनो विभोः । स एष द्विजदेवास्यो विष्वक्सेनः प्रकीर्तितः ॥

स्थित आहवनीयादिभेदेन मखयाजिनाम् । ऋक्पूतं हुतमादाय तर्पयत्यखिलं जगत् ॥
एवं मन्त्रमयाद्यागात्सात्त्विकाद्ब्रह्मभावितात् । संप्राप्यं गुरुमूर्तेर्वै प्रापणं मन्त्रसत्कृतम् ॥
अनाहूतामराणां च सर्वलोकनिवासिनाम् । स्वयं तु संविभज्याथ तदनुग्रहकाम्यया ॥ इति ।

तथेश्वर**संहितायां** समाराधनाध्याये—

* दत्तशिष्टमथादाय संविभज्य द्विधा च तत् । पूजितस्यार्घ्यपुष्पाद्यैर्विष्वक्सेनस्य वै विभोः ॥
प्रतिपाद्यामराणां च तृप्तये विघ्नशान्तये । द्वितीयमनुयागादौ प्राशनं बान्धवैस्सह ॥
तन्निश्शेषं च भोक्तव्यं हृन्मन्त्रं संस्मरन्हृदि । ज्वलत्पावकसङ्काशं ज्वालागणशतावृतम् ॥ इति ।

अनुयागादौ प्राशनमिति समन्त्रकाहुतिरुच्यते । हृन्मन्त्रं संस्मरन् हृदीति—हृन्मन्त्रं हृदयमन्त्रप्रतिपाद्यं, हृद्रूपेणावस्थितं भगवन्तं भोक्तृत्वेनानुसन्दधान इत्यर्थः । सङ्कर्षणादिव्यूह इव जपज्ञानाद्यैकैकगुणविशिष्टहृदादिरूपेण भगवान्स्वयमेवावस्थित इति * नेत्राख्यं भगवत्तत्त्वमित्यादिना **श्रीपौष्करे** स्पष्टम् । एवं संविभागप्रपञ्चनात् भगवन्निवेदितस्य कृत्स्नस्य विष्वक्सेनादिनिवेदनपरम्परया त्याग इति मन्दं वचः । भगवच्छास्त्रेषु निर्माल्यनिषेधपराणां वचसा**मागमप्रामाण्ये** निर्वाहः कृतः । एवं हि तत्रोक्तम्—* यानि पुनर्दीक्षितमेवाधिकृत्य समयानुशासनसमये निर्माल्योपयोगनिषेधपराणि वचनानि तानि पार्षदेशोपयोगोत्तरकालाभिप्रायेण द्रष्टव्यानि ।

* यतो भगवदर्थेन त्यक्तं स्रक्चन्दनादिकम् । पश्चादभोग्यतां याति विष्वक्सेनपरिग्रहात् ॥
अत एव निवेद्यं तत्ततोऽर्वागेव सात्त्वतैः । सेव्यते तेन तत्तेषामुत्कर्षस्यैव कारणम् ॥ इति ।

विष्वक्सेननिवेदिते च विकल्पभेदास्तत्तत्संहितानुसारेण **प्रयोगपद्धतिरत्नावल्या**दिषु भोजराजादिभिः स्थापिता द्रष्टव्याः ।

एवं च प्रमाणशतनिर्धारितस्यार्थस्य विरुद्धं भगवन्निवेदितत्यजनं यत्केरलादिदेशेषु कैश्चिदनुष्ठीयते, तदहिच्छत्रब्राह्मणीसुरापानादिवदपन्यायमूलत्वादनादरणीयम् । न चार्यावर्तादिवासिन इव केरलादयोऽप्यनुविधेयाचाराः क्वचित्सिद्धाः । न च सर्वं प्रामाणिकमेव केरलादयोऽनुतिष्ठन्तो दृश्यन्ते, मातुलकन्यापरिणयनरजस्वलापरिणयनादेरद्याप्यविगानं क्वचित्क्वचिदनुष्ठीयमानत्वादिति ।

एवं बोधायनीये विष्णुकल्पे च शेषशब्दो रहस्याम्नायभगवच्छास्त्रमहाभारताद्यैकरस्यान्निवेदितविषय एव । यत्तु प्रतिग्रहीतुरेव तत्र तत्प्राशनं विहितमिति, तत्सत्यम्; तथाऽपि वैष्णवस्य भगवन्निवेदितप्रतिग्रहस्तत्प्राशनं तत्रापि भगवदसाधारणमन्त्रचतुष्टयेन च प्राशनं प्राप्तं प्रतीयमानमबाधितं धर्मपक्षे निक्षेपमर्हतीति; अन्यथा प्रागुक्तप्रबलशास्त्रान्तरविरोधाच्च । तदैकरस्यं चात्रापि पायसपाकवेदिगन्धोशीरमयवृत्तिस्थाननिवेदितान्नविनियोगप्रकारस्वाध्यायशब्दवाच्यद्वादशाक्षरजपादिलिङ्गैरावाहनोद्वासनादिहोमनमस्कारादिषु चातुरात्म्यसमाराधनप्रतीतेः तत्तन्मन्त्रगतानां शब्दानां चातुरात्म्यपरत्वस्य तत्तच्छास्त्रपर्यालोचनावसितत्वात्सिद्धम् । अतस्तदनुसारेण निवेदितभोजनमेव समन्त्रकमत्रापि प्रतीयत इति ।

**श्रीमद्रामायणे** च तैस्तैर्लिङ्गैरेव रहस्याम्नायभगवच्छास्त्रोक्तप्रक्रियाप्रत्यभिज्ञानात्, मूलापेक्षायाश्च स्मृतेस्संभवदधीयमानमूलपरित्यागेन मूलान्तरानुमानायोगात्, ब्राह्मणादीनां सर्वेषामपि भगवत्समाराधनस्य सात्त्वतविध्यास्थानपूर्वकत्वस्य * ब्राह्मणैः क्षत्रियैर्वैश्यैरित्यादिना महाभारते स्पष्टमुक्तत्वेन तदैकार्थ्यात्, उपरिचरादिभिश्चानुष्ठितत्वात्,

अत्र च *विधिवदित्यनेन मूलभूतविध्यन्तरस्मरणात्, इक्ष्वाकुप्रभृतीनां सर्वेषामपि पुष्करोक्तप्रकारेण भगवत्समाराधनस्य भगवच्छास्त्रप्रसिद्धत्वात्,

*ततश्चैतत्क्रमाल्लेभे देवस्सर्वेश्वरस्स्वयम्। रामो राजीवनयनो भ्रातृभिर्दैस्त्रिभिस्सह ॥

इत्यारभ्य, *सोऽप्येवमर्चयेदेवं पौष्करोक्तविधानतः इति रामाभिधानस्य भगवत एव स्वयं श्रीरङ्गविमाने पौष्करोक्तविधानेन भगवत्समाराधनस्य पारमेश्वरे स्वयंव्यक्तस्थाननिर्णयाध्याये प्रदर्शितत्वाच्च भगवच्छास्त्रोक्तप्रकारेणैवेदं समाराधनमिति अव[गते सति]गम्यते। एवं सति भोक्तव्यविषयः शेषशब्दोऽपि तच्छास्त्रप्रसिद्धनिवेदितविषय इति निश्चीयते। तथा ह्यत्र—*अथातो भोगानुपार्ज्य सुस्नातस्सुप्रक्षालितपाणिपादः स्वाचान्तः इत्यारभ्य *अभिगमनेनाभिगच्छेद्भगवन्तम् इत्यानुपूर्वीकवचनेन—

*अन्तःकरणयागादि यावदात्मनिवेदनम्। तदाद्यमङ्गं यागस्य नाम्नाऽभिगमनं महत् ॥

इति **जयाख्यसंहितावचनेन** च प्राप्तमभिगमनाख्यमाद्यमङ्गं *नारायणमुपागमदित्यनेन सूचितम्। हविषः पात्रं शिरसा विधिवत्प्रतिगृह्येत्यनेनान्नयज्ञाख्यं प्रधानमङ्गं सूचितम्। हविषश्शिरसा ग्रहणं निवेदनार्थमेव, *ततोऽन्नमभ्युद्यम्योत्तानतलाभ्यां पाणिभ्यामवनतमुखमनभ्युच्छ्वसन्प्रापणेन संविभागेन चार्चयेद्भगवन्तम् इत्यानुपूर्वीवचनात्, *द्विधा निवेदनं तेषां शिरसाऽवनतेन यदित्यादिपौष्करादिवचनात्,

*प्रयतस्तु शुचिर्मूर्ध्ना सर्वमेव निवेदयेत्। तन्मनास्सुमना भूत्वा त्वराक्रोधविवर्जितः ॥

इति **श्रीविष्णुस्मृतेश्च**। एतेन हविश्शब्देन होतव्याज्यपरिग्रह इति अत्र कुदृष्टिदृष्टं निरस्तम्। होम्यस्याज्यस्य शिरसा ग्रहणाख्यसंस्काराश्रवणादन्नस्य तच्छ्रवणाच्च। *जुहाव ज्वलितेऽनले इति च होमाख्यमङ्गं सूचितम्। अत्र काष्ठादिषु

*प्राक्कुङ्कुमादिना लिप्तां काष्ठसंज्ञां तु होमयेत्। स्रग्धूपमधुपर्कं च बीजान्याज्यं यथाक्रमम् ॥

इति **श्रीसात्त्वत**वचनादिसिद्धासु सप्तसु समित्सु सतीष्वपि केवलस्याज्यस्योपादानं तत्प्राधान्यादिभिः; संस्कृताज्यस्य विप्रुड्भिस्संस्पृष्टेदिन्धनादिकम्। निश्शेषदोषशान्त्यर्थम् इति हि तत्रोच्यते। पूर्णाहुतौ चाज्यमेव विनियुज्यते। यथा **श्रीपौष्करे** शयनाध्याये—*दद्यात्पूर्णाहुतिं ततः इत्यारभ्य *स्रुवमभ्यर्च्य पुष्पाद्यैराज्यपूर्णां स्रुवं ततः इत्यादि। तत्रैव कुण्डलक्षणाध्याये—*आचतुस्सप्तनिष्ठेनेत्यारभ्य *भिन्नमन्त्रगणं सर्वमाज्यदोहैर्मुदं नयेदित्यन्तम्। **पारमेश्वरे** त्वितरसमिदभावे घृतेनैव तत्पूर्तिः कीर्तिता—*काष्ठादीनामभावे तत्सर्वमाज्येन होमयेदित्यादिभिः। **यजुषि** च भगवद्देवताकत्वेनाज्यस्यायातयामत्वमाम्नातम्—*ब्रह्मवादिनो वदन्ति कस्मात्सत्याद्यातयामान्यन्यानि हवींष्ययातयाममाज्यमिति प्राजापत्यमिति ब्रूयादयातयामा हि देवानां प्रजापतिः इति। अत्र प्रजापतिर्भगवानेव; तस्यैव नित्ययुवत्वेनायातयामत्वात्। प्रजापतिशब्दश्च भगवत्येव बहुषु प्रदेशेषु श्रूयते *तेन प्रजापतिरश्राम्यत् इत्युपक्रम्य *स वराहो रूपं कृत्वा इति वचनात्; *श्यामा एकरूपा भवन्ति। एवमिव हि प्रजापतिस्समृद्ध्या इत्यत्र प्राजापत्यानां पशूनां श्यामत्वार्थं प्रजापतेरपि श्यामत्वप्रतिपादनात्। *आश्रावयेत्यादिना चोक्तस्य सप्तदशस्य प्रजापतेर्विष्णुत्वं **महाभारते** प्रोक्तम्—

*चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु ॥ इति।

*प्रजापतेस्सभां वेश्म प्रपद्ये इति मुक्तप्राप्यदेशवर्तित्वादिभिः *आज्यस्य दैवतं विष्णुः इति नारदीयादिवचनैश्चाज्यदेवताभूतः प्रजापतिर्भगवानेव। तदेवमाज्यप्राधान्यादिभिराज्योपादानं समिदन्तरोपलक्षणार्थम्। नन्वत्र *महते

दैवतायेति महादेवः प्रतीयते । मैवम् । समस्तस्यैव तथा रूढत्वात् । व्यस्तस्य नामधेयतयाऽहिर्बुध्न्यविश्वेदेवादिवत्सं-ज्ञायामलुक्त्वेन वा प्रसिद्ध्यभावात् । तदभावेऽपि तत्प्रत्यभिज्ञया तत्प्रतीतिर्जायत इति चेन्न; व्यस्तत्वेनैव संज्ञात्वे अप्राकृतनिरुपाधिकमहत्त्वदेवतात्वयोः *वेदाहमेतं पुरुषं महान्तम्, *तेजः परस्यां देवतायामित्यादिप्रतिपन्नपरमात्म-परमपुरुषविषयत्वौचित्यादेवात्र रूढ्यास्पदमहादेवप्रत्यभिज्ञाप्रतिरोधात् । *नारायणमुपागमत्, *ध्यायन्नारायणं देवम्, *श्रीमत्यायतने विष्णोः इत्यादिपूर्वापरविरोधाच्च । बोधायनीयादिषु महादेवशब्दस्य व्यस्तोऽपि रुद्रे प्रयोगस्संप्रतिपन्नो दृश्यत इति चेत्सत्यम्, प्रकरणादिवशात्तु तथा तत्र निर्णयः, अत्र तद्विपरीतमेव । किं च *महते दैवतायेति दैवत-शब्दोऽत्र प्रयुज्यते न तु देवशब्दः । न हि महादैवतमिति रुद्रस्य नाम, अपि तु महादेव इति । अतोऽत्र भगव-च्छास्त्रादिप्रसिद्धमग्निमध्यगतस्य भगवतस्समाराधनमेवोच्यते; *ज्वलितेऽनले इति अग्नेरासनवदाधारत्वप्रतीतेः । अग्नि-मध्ये चासनकल्पनापूर्वकं भगवत्समाराधनं बहुसंहितासिद्धम् । यथा **जयाख्यसंहितायाम्**—*वह्निं तु व्योमवद्ध्यात्वा तन्मध्ये पूजयेत्प्रभुमिति । **ईश्वरसंहितायाम्** *अथ ज्वालाजटाधारी वह्नौ वै कुण्डमध्यतः इत्यारभ्य *ततोऽवतार्य तन्मध्ये हृदयात्परमेश्वरमिति । **भारद्वाजीये**—

*एवं संस्कारसंशुद्धं कृत्वा प्राग्जातवेदसम् । तन्मध्ये स्वेच्छया कार्या प्रागुक्तासनकल्पना ॥

तत्रावतार्य हृदयात् इत्यादि ।

अतोऽत्र *शेषं च हविषस्तस्येत्यनुयाग उच्यते । अत्र चशब्दात्पाकपात्रावशिष्टहुताज्यशेषचरुशेषाणां समुच्चयः प्रमाणानुरोधेन ग्राह्यः । अत्राभिषेकार्थाधिवासभूतव्रतसमाराधनत्वादप्ययमेवार्थो युक्तः । उक्तं हि **श्रीसात्त्वते**—

*दत्तशिष्टमतृप्तं च दैवीयान्नेन भावितम् । हविश्शेषेण संयुक्तं व्रतिनां भोजनं हितम् ॥ इति ।

**श्रीपौष्करेऽपि**—*अण्वात्मतत्त्वं विज्ञेयं विहितं तस्य सर्वदा । आत्मनैवात्मसिद्ध्यर्थं यागमन्नेन तेन च ॥
सह यज्ञावशिष्टेन हुतशेषेण वै सह ॥ इति ।

नन्वन्तरात्मनिवेदनमन्तरा न भोक्तव्यम् । तत्र बहिर्वृत्त्यादिवृत्तिस्थानावस्थितस्य भगवतो निवेदितमन्तरात्मतया हृदयावस्थितस्य तस्यैव निवेदनीयं चेन्निवेदितनिवेदनाख्यो दोषस्स्यात् । एकस्मिन्समाराधने निवेदितानां सर्वेषामपि भोगानामविशेषेण समाराधनान्तरेऽपि निवेदनप्रसङ्गः । यदपि **श्रीसात्त्वते** चतुर्दशे परिच्छेदे पवित्रमधिकृत्योक्तम्—

*अपरेऽहनि सन्न्यासमाचरेद्विधिपूर्वकम् । अपनीय च माल्यादीन्प्रदद्याद्वै दिने दिने ॥
नो यान्ति म्लानतां यावच्चतुर्थेऽहनि वा त्यजेत् । विशेषपूर्वयागं तु कारिभ्योऽवसरे स्वके ॥ इति ।

तेनापि हि पवित्रारोपणनिवेदितानां पवित्राख्यभूषणानामेव पुनर्निवेदनमुक्तम् । तच्च नियतावधिकम्; न पुनस्सर्व-विषयम्; समाराधनानुवृत्तं च । **श्रीपौष्करे** च स्थिराणामेव समाराधनान्तरे अनुवृत्तिरस्थिराणां तु परित्याग एवेति स्पष्टमुक्तम् । तथा हि श्राद्धाध्याये तिलदर्भोदकादीनां द्रव्याणां प्रतिकर्मणि—

*जायते उपविष्टानामुपशान्तिश्च तैजसी । अत एवोपयुक्तानां भोगानां कमलोद्भव ॥
विरुद्धस्संग्रहो भूयस्त्वन्यस्मिन् हि क्रियान्तरे । गौणी व्यक्तिर्यतस्तेषामामूलाच्चिदधिष्ठिता ॥
वर्तते परमाश्रित्य तत्कर्तुः फलसिद्धये । चित्सामान्यविनिर्मुक्ता ह्ययोग्यास्ते शरीरवत् ॥
मन्त्राणां स्थायिनो भोगा यान्ति वै योग्यतां पुनः । कदाचिन्मन्त्रसामर्थ्याज्ज्ञानभावनयाऽब्जज ॥ इति ।

तस्मादस्थिराणां प्रापणमधुपर्कादीनां हृदयावस्थितस्य पुनर्निवेदनमयुक्तमिति ; नैवम् ; स्नपने निवेदितानामेवामलकोदकादीनां जलमयादीनां सर्वेषां भोगानामेकदेशैरेकपात्रस्थैः [संवन्द]स्ववदनाख्यभोगनिवेदनस्योक्तत्वात् । तथा हि **ईश्वरसंहितायां** सप्तमे पटले—

विभोः [संवन्दने प्राप्ते]स्रक्चन्दनघटास्ततस्तैःस्नापयेत्प्रभुम् । निरन्तरैस्सावशेषैस्समुत्तीर्याथ पश्चिमम् ॥
क्रमशो दत्तशेषेण सर्वकुम्भस्थितेन च । इत्यादि ।

यदि पुनरस्थिरस्यापि विधिबलात्क्वचिदभ्युपगमस्तदन्यत्रापि तुल्यम् । अस्ति च विधिः ; यथा **रहस्याम्नाये** कर्मावर्तप्रकरणे ओदनपचने—* शुच्यन्नं श्रपयित्वा वेद्यां भगवते नयति वेद्यां भगवन्तमिष्ट्वा तत्कारिभ्यः प्रयच्छति कारिणः प्राप्तेनान्नेन वेद्यां भगवन्तमिष्ट्वा तद्धात्र उपनयन्ति उपनीतेन धाता स्वयं च कुरुते शिष्टेन च भृत्यान्यान्बिभर्ति किं हि भो भवान्धाता भृत्यवान्भवति तत्के न्वस्य भृत्याः समूहकर्मकालव्यक्तिशब्दस्पर्शरूपरसगन्धाः इति । अत्र धातृशब्दोऽन्तरात्मतयाऽवस्थितभगवत्परः । तथा तत्र चतुःश्लोकप्रकरणे **श्रूयते**—* अयमिहाध्यक्षो भगवान्धाता हृदये सत्यसन्धस्स एवास्य संविदं ददाति यदा कालं मन्यते तस्य हि विज्ञानद्वयमैन्द्रियिकं स्वाभाविकमस्य तद्यदि तदानीमितरत्परतस्तद्भवत्यक्षतः अयमेतावदस्यान्तरात्मा सर्वतः प्रकाशते इति । अध्यक्षत्वं च तत्राध्यात्मप्रकरणे विशदीकृतम्—

* पुरमेकादशद्वारमजस्यावक्ररोचिषः । अत्रस्थः प्रेक्ष्यतेऽध्यक्षः सर्वमत्र कृताकृतम् ॥ इति ।

उपनयन्ति—निवेदयेयुरित्यर्थः । कुरुते—अशनं कुरुत इत्यर्थः । उक्तं च **श्रीसात्त्वते** समाराधनपरिच्छेदे—

* पश्चाच्छरीरयात्रार्थमभ्यर्थ्य परमेश्वरम् । लब्धानुज्ञस्तथा कुर्यादात्मयागं यथाविधि ॥
भोज्यं नैवेद्यपूर्वं तु सर्वमादाय पात्रगम् । विनिवेद्य च देवाय पवित्रीकृत्य चाम्भसा ॥
सत्यरूपस्य लक्ष्म्याश्चाप्यन्नदोषक्षयङ्करी ॥ इत्यादि ।

अत्रायोग्यजननिरीक्षितत्वयातयामत्वादिदोषसंभावनया तन्निवृत्त्यर्थं पवित्रीकरणोक्तिः ; भगवन्निवेदितभोजनस्य हिततमत्वेन तत्रैव प्रतिपादितत्वात्, अन्यथाऽनुयागस्य द्रव्यान्तरेण विधानप्रसङ्गाच्च, * प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । किंच—

* कपित्थस्य फलं चैव यथा कुञ्जरभक्षितम् । तस्य सारं च गृह्णीयात्तथा हविरसं प्रभुः ॥

इत्यादिभिर्निवेदनदशायां तस्य सूक्ष्मांशं गृहीत्वा गुर्वादिमुखेन तस्यैव प्रत्यक्षयोग्यं स्थूलांशमपि भगवानेव गृह्णातीति प्रतीयते । तथा हि **श्रीपौष्करे** भोगनिर्णयाध्याये प्रापणनिवेदनप्रकारमुक्त्वा—

* यस्मात्प्रागात्मसात्कुर्याद्भोगशक्तिमनश्वरीम् । व्यक्तां गुर्वादिवक्त्रैस्तु भुनक्ति तदनन्तरम् ॥
भोगत्वमुपचारस्य भोजनाद्धिहितं ततः । इति ।

भुञ्जानादिति पाठे घञन्तत्वादयमेवार्थः । अत्रायमाशयः—भुज्यते इति भोग इति घञन्तव्युत्पत्त्या हि भोगशब्दोऽत्र प्रसिद्धः, न केवलं रूढः । रहास्याम्नाये च भगवद्यागत एव भोगो भवतीत्याम्नायते । * तत्राष्टाष्टकसंख्यैस्तु क्रमशो नरनाथवदित्यादिषु बहुषु प्रदेशेषु राजवद्भगवतस्सर्वोपचारग्रहणमुच्यते । तथा—* या परा प्रकृतिर्मान्त्री, इत्युपक्रम्य—

* **देहस्थमात्मतत्त्वं तु** भोगं विषयजं यथा । भुनक्ति तद्वदादत्ते पूर्णव्यक्तिगतः प्रभुः ॥

इति चोच्यते। तच्चौपचारिकसांस्पर्शिकभोगेषु संभवति; आभ्यवहारिकेषु तु प्रत्यक्षविरुद्धमिति शङ्कापाकरणाय सूक्ष्म-स्थूलांशविभागेन क्रमशस्तद्भोगान्न प्रत्यक्षविरोधः, स्थूलग्रहणपर्यन्तश्च भगवतो भोगस्वीकार इति तेनैव समाराधनपरिपूर्तिरप्युच्यत इति। किं च तत्र शयनाध्याये निवेदितान्नेन सह पाकपात्रावशिष्टेन साम्बुफलादिना यो यागः क्रियते सोऽनुयागः। अ[णु]नुभूतजीवात्मसिद्ध्यर्थत्वाच्चायम[णु]नुयाग इत्यपि ग्राह्यः। तस्मिंश्च यागे हार्दानलशरीरको भगवानेव भोक्ता तच्छक्त्यनुग्रहाच्चायमणुभूतोऽहंस्वभावः पुमान् भोगापवर्गरूपपुरुषार्थप्राप्त्यनुरूपपुंस्त्ववान्भवतीति स्पष्टमुच्यते—

* अण्वात्मतत्त्वं विज्ञेयं विहितं तस्य सर्वदा। आत्मनैवात्मसिद्ध्यर्थं यागमन्नेन तेन च॥
सह यज्ञावशिष्टेन साम्बुना च फलादिना। अनुयागं च तं विद्धि आत्मनाऽऽत्मनि यत्कृतम्॥
कुर्वन्ति भोजनात्पूर्वं प्रत्यहं प्राशनं तु ये। तच्छक्तिग्रहणाद्प्राणैः प्रयोजनवशात्तु वा॥
भाव[श]भक्तिसमायुक्तास्सन्मार्गस्था दृढव्रताः। अप्रयत्नेन ते यान्ति देहान्ते पदमच्युतम्॥ इत्यादि।

तथा— * हार्दानलात्मना भुङ्क्ते ह्यध्यक्षः परमेश्वरः। तच्छक्त्यनुगृहीतत्वात्सोऽहंप्रकृतिकः पुमान्॥ इति।

तथा **नारदीयसंग्रहे**—

* तच्च कारिमुखो भुङ्क्ते भगवान्भक्तवत्सलः। यथा चाग्निमुखा देवास्तथा कारिमुखो हरिः॥ इति।

ननु वैश्वदेवावशिष्टमेव भोक्तव्यम्, तच्च देवतान्तरविषयम्; ततः कथं भगवन्निवेदितेन देवतान्तरयजनम्, तथा सत्यतिप्रसङ्गात्। यद्यपि श्रुतिस्मृतीतिहासादिशतैस्तेषां भगवत्पुत्रत्वदासत्वभृत्यत्वशिष्यत्वोपासकत्वप्रभृतिप्रतिपादनात्तैस्तद्भुक्तोज्झितं प्राशनीयम्; तथाऽपि नास्माभिस्तन्निवेदितं तेभ्यो देयम्। न हि लोके पुत्रशिष्यादीन्भोजयन्तः पित्राचार्यादीन्भोजयित्वा तदुच्छिष्टेन भोजयन्ति। अतो भगवन्निवेदितस्य वैश्वदेवविनियोगायोगेन तदवशिष्टत्वासंभवान्न भोक्तव्यत्वमिति। मैवम्; भगवन्निवेदितेनैव देवतान्तरयागस्य तत्तृप्तेश्च विहितत्वात्। तथा हि **पाद्मे** चर्यापादे द्वादशाध्याये—

* विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्। पितृभ्यश्चापि तद्देयं तच्चानन्त्याय कल्पते॥ इति।

**पारमेश्वरे** समाराधनाध्याये—

* ये यजन्ति पितृन्देवान्गुरूनपि तथैव च। स्थापितस्यानुयागार्थं प्रापणांशः पुरा तु यः॥
तस्मात्किंचित्समादाय संविभागं समाचरेत्। पितॄणां चैव बन्धूनामाश्रितानां तथैव च॥
संविभागावशिष्टेन स्वानुयागं समाचरेत्। यद्वा स्थाल्यवशिष्टात्तु किंचिदादाय पात्रगम्॥
प्राग्वन्निवेद्य देवाय तेन पित्र्यं समाचरेत्। ये वैश्वदेवनिरता विप्राद्या वैष्णवास्तु ते॥
यल्लब्धं भगवद्भुक्तं तस्मादादाय चांशकम्। तेन कृत्वा वैश्वदेवमवशिष्टांशकेन तु॥
कुर्यात्प्राणादियात्रां तु विधानेन द्विजोत्तम॥ इति।

**श्रीसात्त्वते** समाराधनपरिच्छेदे—* संविभागः पितॄणां च यथाकार्यस्तथोच्यते। इत्यारभ्य,

* क्रमेण भावयेत्तत्र पितृनथ पितामहान्। तृप्तये ह्यथ सर्वेषां देवाय विनिवेद्य च॥
प्रोक्षितान्यन्नपात्राणि चत्वारि कबलानि च। [तथात्वेसंवि]तन्मध्ये तु निधायाथ संपूज्यार्घ्यादिना ततः॥

इत्यादि। **ईश्वरसंहितायाम्**—

* आस्तां सु संस्कृतं तावदन्नं सुव्यञ्जनान्वितम्। प्रदाने भगवन्मन्त्रपूतान्यारण्यकानि च॥

शाकमूलफलादीनि यथाकालोद्भवानि च । कर्मण्यानि विचित्राणि स्वल्पानि सुबहूनि वा ॥
विभोर्निवेद्य दत्तानि यान्ति तान्यमृतात्मताम् । पितॄणां पितृलोकेषु देवानां सदनेष्वपि ॥ इति ।
तथा **महाभारते** ज्ञानकाण्डे तृतीयाध्याये—* राजोपरिचरो नामेति प्रक्रम्य,
* सात्त्वतं विधिमास्थाय नारायणमुखोद्भवम् । पूजयमास देवेशं तच्छेषेण पितामहान् ॥
पितॄनृषींश्च विप्रांश्च संविभज्याश्रितांस्ततः ॥ इति ।
अत्रापि शेषशब्दः प्रापणविषयः ; * सात्त्वतं विधिमास्थायेत्युपक्रमात्,
* पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः । प्रापणं भगवद्भुक्तं भुञ्जते चाग्र्यभोजनम् ॥
इत्युपसंहाराच्च । पञ्चरात्रतन्मूलवेदयोश्शेषशब्दो निवेदितविषयतया प्रसिद्ध इति ह्यन्यत्र स्थापितम् । किंच,
* यश्श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् । तेनैव पिण्डं च तिलैर्विमिश्रमाकल्पकोटीः पितरस्सुतृप्ताः ॥
इत्यादीनि वचनानि तत्र तत्र द्रष्टव्यानि । अतो निवेदितेनैव वैश्वदेवकरणसंभवात् वैश्वदेवदेवतानामपि भगवन्निवेदितस्य भोज्यत्वमनपोदितमिति ।

एतेन प्राणाहुतिकरणमपि भगवन्निवेदितेनैव कार्यमिति सिद्धम् ; अनिवेदितभक्षणनिषेधाच्च । उक्तं च **जयाख्यसंहितायाम्**—* प्राणाग्निहवनं नाम्ना त्वनुयागं तदष्टममिति । अनुयागस्य प्राणाग्निहवनत्वोक्तेस्तस्य च निवेदितैकसाध्यत्वाच्च । नच वाच्यं तत्र प्राणाहुतेः प्रसङ्गाभावात्संज्ञामात्रमिदमिति ; पूर्वमेव बहुविधवैष्णवलक्षणे—
* नानात्वेनात्मसिद्ध्यर्थं विश्वात्मानं यजन्ति ये । मोक्षार्थमपि विप्रेन्द्र स्मृतास्तेऽञ्जलिकारिणः ॥
इति इन्द्रादिदेवतान्तरशरीरकपरमात्मयाजिनामपि वैष्णवत्वेन कथनात्तेषामपि प्रतिष्ठादिषु विनियोगस्य पूर्वमुक्तत्वात्तेषां च प्राणाहुतिमत्त्वात्तान्सर्वानधिकृत्य भगवत्समाराधनाष्टमाङ्गप्रकारचिन्तने प्राणाहुतेरपि प्रसङ्गोऽस्त्येव । एवं **श्रीपौष्करे** शयनाध्याये—* प्राणयात्रां ततः कुर्यान्नैवेद्यप्राशनादिकमिति । आदिशब्देनाबादिसंग्रहः । * अनुयागं ततः कुर्यादित्येव यथागमप्रसिद्धि निर्दिष्टव्यत्वे प्राणयात्राशब्देनाभिधानं प्राणाद्याहुतिरूपेण प्राप्तायाः प्राणयात्राया अपि तदन्तरात्मभगवदाहुतिरूपेणानुयागत्वख्यापनार्थम् । तथा **पारमेश्वरे**ऽनुयागविधौ—* ततस्तु शेषमादायेत्युपक्रम्य,
* त्रयीधर्मेण संयुक्ता आमूलाद्भगवन्मयाः । येन येन तु मन्त्रेण बहिराराधनक्रमे ॥
वेद्यादिस्थस्य देवस्य प्रापणं विनिवेदितम् । तेन तेन तु मन्त्रेण जुहुयुर्वक्रकुण्डके ॥
चतुः पञ्च त्रिधा वाऽपि प्राणपूर्वैर्द्विजोत्तम । केवला भक्तिपूतास्तु त्रयीधर्मरता द्विजाः ॥
प्राणापानादिभिर्मन्त्रैर्जुहुयुः पञ्चधा क्रमात् । हृदयस्थाय देवाय विष्णवे सर्वजिष्णवे ॥
एवं तु भगवद्भुक्तप्राशनं कुर्वते तु ये । तेषां पुण्यफलावाप्तिं कश्शक्नोत्यभिवर्णितुम् ॥ इति ।

येषां तु भगवदसाधारणमन्त्रेण वक्रकुण्डे विहितो होमः, न तेषु वैदिकमर्यादाविरोधश्शङ्कनीयः ; कल्पसूत्रप्रतिनियतधर्मान्तरवत्तदुपपत्तेः । उक्तं च भगवता **बोधायनेन** * तस्मै शेषं दद्यादेतैरेव मन्त्रैः प्राश्नीयादिति भगवदसाधारणमन्त्रैरेव प्राशनं वैष्णवस्य । यथा च **वैष्णव्यां स्मृतौ** वैश्वदेवप्रकरणे—* वासुदेवाय सङ्कर्षणाय प्रद्युम्नायानिरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवायेति भगवदसाधारणमन्त्रविधिस्तद्वदत्रापि । तादृशधर्माणां शाखाविशेषमूलत्वं च भगवच्छास्त्रेषु बहुषु प्रदेशेषु श्रुतम् ; अतो न कश्चिद्विरोधः । तथाऽप्यन्नान्तरेण प्राणाग्निहोत्रं कृत्वा निवेदित-

भोजनेऽपि न विरोधः; भोजनान्तरं वा नैवेद्याय प्रयुज्यतामिति चेन्मैवम्, न तावत्तथा विधिर्दृश्यते, न च तत्कल्पकं किञ्चित्, निवेदितनिवेदनाद्यनुपपत्तेर्वचनबलेनैव निरस्तत्वात्। प्राणाहुतेश्च भोक्तव्यतया रागतः प्राप्तान्नमेवोपजीव्यमित्यतोऽपि ना[न्तर]न्नविभागः। भोजनान्तरं तु *नान्तरा भोजनं कुर्यादिति निषेधान्न कल्पयितुं युक्तम्। किञ्च **महाभारते**—*हृदि ध्यायन्हरिमित्यादिना निवेदितेनैव प्राणाहुतिकरणं स्फुटमुक्तम्। यथा च हृदयावस्थितभगवद्भोक्तृत्वानुसन्धानेन निवेदितस्यैव भोजनमपि समाराधनम्, तद्वद्बहिर्निवेदितेन प्राणादिशरीरकपरमात्मभोक्तृत्वानुसन्धानेन प्राणाहुतिरपि भगवत्समाराधनमेव; *आमनन्ति चैनमस्मिन्निति **शारीरकसूत्रे** त्रैलोक्यशरीरकस्य वैश्वानराभिधानस्य परमात्मन एव प्राणाहुत्याधारत्वाय उपासकशरीरेऽप्यनुसन्धानं निर्णीतमिति न सङ्कटं किञ्चिदिति। एवं चोद्यपूर्वकमुक्तमागमप्रामाण्ये—

*ननु प्राणाग्निहोत्रस्य निवेद्यं साधनं कथम्। निरिष्टकं न शिष्टानामिष्टं होमादिसाधनम्॥
न च द्रव्यान्तराक्षेपो होमायेत्यवकल्पते। रागतः प्राप्तमेवान्नं यतस्तेनोपजीव्यते॥
नापि भुक्त्यन्तराक्षेपो नैवेद्यायोपपद्यते। सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम्॥
नान्तरा भोजनं कुर्यादिति तत्प्रतिषेधनात्। नैष दोषो यतः प्राणप्रभृतिर्देवतागणः॥
गुणभूतः श्रुतो विष्णोर्विष्णुपारिषदेशवत्।

यथैव हि भगवन्निवेदितमपि पुष्पौदनादि विष्वक्सेनाय दीयमानं नानौचित्यमावहति।

यथा वा होतुरुच्छिष्ट एव सोमरसोऽध्वरे। अध्वर्यादेर्विशुद्ध्यै स्यादेवमत्र भविष्यति॥

अपि च— भोज्याभोज्यव्यवस्थायाः शास्त्रमेव निबन्धनम्। तच्चेद्भोज्यमिदं ब्रूते किं वयं विदधीमहि॥
यथाऽनुष्ठानतन्त्रत्वं नित्यकाम्याग्निहोत्रयोः। एवं प्राणाग्निहोत्रेऽपि नैवेद्याशनतन्त्रता॥ इति।

ततः सिद्धम् भगवन्निवेदितेनैव पावनतमेनानादिकालसञ्चितानन्तस्वान्तध्वान्तविध्वंसिना विश्वेषां वैदिकानां वैश्वदेवप्राणाग्निहवनपूर्वकं वैश्वानरमूर्तेर्भगवतस्समाराधनमनुयागापराभिधानमनुदिनमनुविधेयमिति॥

श्रीमद्वेङ्कटनाथेन सतामित्थं समर्पितम्। पावनं भगवद्भुक्तप्रापणादिनिषेवणम्॥

शमितभवभयानां शङ्खचक्रादिचिह्नैर्दिविषदधिकभूम्नां दीप्यतामूर्ध्वपुण्ड्रैः।
प्रथितगुणगणानां प्रापणप्राशनाद्यैरयमहमनघानामस्मि पात्रं दयायाः॥

**इति सच्चरित्ररक्षायां भगवन्निवेदितोपयोगविधिर्नाम तृतीयोऽधिकारः॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ सच्चरित्ररक्षा समाप्ता॥**

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः॥

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्तदेशिकविरचिता

# ॥ श्रीपाञ्चरात्ररक्षा ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

## ॥ सिद्धान्तव्यवस्थापनाख्यः प्रथमोऽधिकारः ॥

चातुर्व्यूहं परं ब्रह्म षाड्गुण्यपरिकर्मितम्। पञ्चरात्रस्य कृत्स्नस्य प्रसूतिं पर्युपास्महे॥

अनन्यदेवतास्थायिन्यायते महिते वयम्। पञ्चरात्रमहाम्भोधिपारदृश्वनि सज्जने॥

आरोहन्त्वनवद्यतर्कपदवीसीमादृशां मादृशां पक्षे कार्तयुगे निवेशितपदान् पक्षे पतद्भ्यः परान्।

सर्वानुश्रवसारदर्शिसशिरःकम्पद्विजिह्वाशनक्रीडाकुण्डलमौलिरत्नघृणिभिस्सारात्रिकास्सूक्तयः॥

अत्र तावत् प्रत्यक्षितसमस्तवेदार्थतत्त्वस्थितिभिः पाराशर्यप्रभृतिभिर्महाभारतादिषु भगवच्छास्त्रस्य सार्वभौमं प्रामाण्यं प्रत्यपादि। शारीरके च कपिलकणभक्षभिक्षुक्षपणकपशुपतिसमयप्रतिक्षेपसमनन्तरं तन्त्रान्तरसहपाठादिसंभवन्मन्दमतिव्यामोहशमनाय * उत्पत्त्यसंभवात् * न च कर्तुः करणम् इतिसूत्राभ्यां पूर्वपक्षमुपक्षिप्य * विज्ञानादिभावे वा तदप्रतिषेधः * विप्रतिषेधाच्च इतिसूत्रद्वयेन जीवोत्पत्त्याद्यनुपपत्तितत्प्रतिषेधप्रतिपादनद्वारेण सिद्धान्तस्समर्थितः॥ **भगवद्यामुनमुनिभिर्भाष्यकारैश्च**—

* इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥
वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम्॥

इत्यादिप्रमाणगणप्रतिपादितप्रक्रियया अतिविततगहनगम्भीरनिगमशतशिखरगतपरमपुरुषार्थतदुपायतदितिकर्तव्यतासंग्रहरूपस्य भगवन्मुखोद्गतस्य शास्त्रस्य कारणदोषाद्यभावेन क्वचिदप्यप्रामाण्यं न शङ्कनीयमिति निरणायि॥

कर्मकाण्डेऽपि प्रमाणलक्षणे—संभवद्वेदविरोधानां व्यासाद्यपरिगृहीतानामेव स्मृतीनामप्रामाण्यमसूत्र्यत। ये पुनश्चरमयुगमीमांसकास्तन्त्रान्तरैस्समानयोगक्षेमं सात्त्वतं शास्त्रमभिमन्यन्ते, तेषां विकत्थनान्यागमप्रामाण्ये निराचक्रिरे। उक्तं च * तच्चेदेतच्छ्रुतिपथपरिभ्रष्टतन्त्रैस्समानं पात्रत्वेन प्रसजति तदा सोमपास्ते सुरापाः इति। शूद्रार्चनादिप्रसङ्गे त्वेवं प्रतिबन्दी **श्रीकृष्णमुनिभिरुक्ता**—

* हविष्कृतो यथा शूद्रे यथा वा बहुयाजिनः। निर्वाहः क्रियते तद्वच्छास्त्रस्यास्यापि नान्यथा॥ इति।

अयमर्थः,—यथा *हविष्कृदाधावेति शूद्रस्य बहुयाजिनोऽगाराच्छूद्रवर्जनमित्यादिवाक्येषु कर्मविशेषाधिकारमुपचारविशेषं वा समालम्ब्य निर्वाहस्तद्वदिहापीति ॥

**भट्टारकैश्च** तन्त्रान्तरेभ्य इदं सार्वत्रिकेन प्रामाण्येन व्यभज्यत—*तस्मात्साङ्ख्यं सयोगं सपशुपतिमतं कुत्रचित्पञ्चरात्रं सर्वत्रैव प्रमाणं तदिदमवगतं पञ्चमादेव वेदात् इति । तदेतत् *महतो वेदवृक्षस्य मूलभूतो महानयम् इत्याद्युक्तानन्तशाखाश्रयऋगादिस्कन्धभिदुरनिगमतरुमूलभागोपबृंहणरूपं स्वमूलनिगमभागभेदात् ऋगादिवदेव चतुर्धा अवतिष्ठते—आगमसिद्धान्तो मन्त्रसिद्धान्तस्तन्त्रसिद्धान्तस्तन्त्रान्तरसिद्धान्त इति । चत्वारश्चैते सिद्धान्ता ऋगादिवदेव शाखाभेदैरवान्तरतन्त्रैर्भिद्यन्ते । तत्र यथा ऋगादयो वेदभेदास्तत्तच्छाखाभेदाश्च पूर्वपूर्वपरिग्रहानुसारेण व्यवतिष्ठन्ते पुत्रादिभिश्च परिगृह्यन्ते, तथा सिद्धान्तभेदास्तदवान्तरभेदाश्च प्रथमपरिग्रहानुसारेण व्यवतिष्ठन्ते । यथा च वाचनिकातिरिक्ते वेदान्तरशाखान्तरसूत्रान्तरसङ्करदोषः, तथेह सिद्धान्तसङ्करे तन्त्रसङ्करे प्रत्येकतन्त्रान्तःपातिनियतवैकल्पिकधर्मादिसङ्करे चासङ्कीर्णा चेयं व्यवस्था प्रमाणान्तरसहकृतपारम्पर्यपर्यालोचनया व्यवस्थाप्या । इदं च गर्भाधानादिदाहान्तसंस्कारान्तरसेवनाद्भागवतानामब्राह्मण्यं पूर्वपक्षिणा प्रसञ्जितं परिहरद्भिर्भगव**द्यामुनमुनिभि**रर्थतस्समर्थितम्—*य एते वंशपरम्परया वाजसनेयशाखामधीयानाः कात्यायनगृह्योक्तमार्गेण गर्भाधानादिसंस्कारान् कुर्वते, ये पुनस्सावित्र्यनुवचनप्रभृति त्रयीधर्मत्यागेनैव एकायनश्रुतिविहितानेव संस्काराननुतिष्ठन्ति, तेऽपि स्वशाखागृह्योक्तं यथावदनुतिष्ठमाना न शाखान्तरीयकर्माननुष्ठानाद्ब्राह्मण्यात्प्रच्यवन्ते । अन्येषामपि पर[स्पर]शाखाविहितकर्माननुष्ठाननिमित्ताब्राह्मण्यप्रसङ्गात् ; सर्वत्र हि जातिचरणगोत्राधिकारादिव्यवस्थिता एव समाचारा उपलभ्यन्ते । यद्यपि सर्वशाखाप्रत्ययमेकं कर्म, तथाऽपि न परस्परविलक्षणाधिकारिसंबद्धा धर्माः क्वचित्समुच्चीयन्ते । विलक्षणा[श्च] हि त्रयीविहितस्वर्गपुत्रादिविषयोपभोगसाधनैन्द्राग्नाग्नेयादिकर्माधिकारिभ्यो द्विजेभ्यस्त्रय्यन्तैकायनश्रुतिविहितविज्ञानाभिगमनोपादानेज्याप्रभृतिभगवत्प्राप्त्यैकोपायकर्माधिकारिणो मुमुक्षवो ब्राह्मणा इति नोभयेषामप्यन्योन्यशाखाविहितकर्माननुष्ठानमब्राह्मण्यमापादयति । यथा चैकायनशाखाया अपौरुषेयत्वं, तथा **काश्मीरागमप्रामाण्य** एव प्रपञ्चितमिति नेह प्रस्तूयते । प्रकृतानां तु भागवतानां सावित्र्यनुवचनादित्रयी[धर्म]संबन्धस्य स्फुटतरमुपलब्धेर्न तत्त्यागनिमित्तव्रात्यत्वादिसन्देहं सहत इति । अत्र विज्ञानशब्देन **संवित्सिद्ध्यादिषु** स्वयमेव स्थापितं विशिष्टं ज्ञानं विवक्षितम् ॥ आह हि—

*यथा चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले । इति तत्तुल्यनृपतिनिवारणपरं वचः ॥
न तु तत्पुत्रतद्भृत्यकलत्रादिनिवारणम् । तथा सुरासुरनरब्रह्माण्डशतकोटयः ॥
क्लेशकर्मविपाकाद्यैरस्पृष्टस्याखिलेशितुः । ज्ञानादिषाड्गुण्यनिधेरचिन्त्यविभवस्य ताः ॥
विष्णोर्विभूतिमहिमसमुद्र[जल]द्रप्सविप्रुषः ॥ इति ।

इदं च वेदभेदं भोजराजबलदेवाचार्यादयश्च विविञ्चते—

*यो वेदवृक्षं बहुमूलशाखं नानाफलार्थिद्विजसङ्घसेव्यम् । पूर्वश्रवानुश्रवभेदभिन्नमारोपयत्तं पुरुषं प्रपद्ये ॥

इत्यादिभिः । एवं च सर्वत्रासङ्करस्संग्रहेण प्रदर्शितः **श्रीसात्वते**—

*न शास्त्रार्थस्य शास्त्राणां बुद्धिपूर्वं उपप्लवः । आचर्तव्य इहाज्ञानात्पारम्पर्यक्रमं विना ॥ इति ।

अस्खलितपारम्पर्यप्रत्यभिज्ञानेषु स्थानेषु परिदृश्यमानप्रमाणमूलान्याचारपरम्परागृहीतानि च कर्माणि न मात्रयाऽपि परि-

[भाव्या]ह्याप्यानि ; नच तद्विरुद्धान्युपादेयानीत्युक्तं भवति । **श्रीपौष्करे** चाधिकारिनिरूपणाध्याये प्रतिनियताधिकारिविषयत्वाभिप्रायेणैव सिद्धान्तभेदस्तदवान्तरभेदश्च दर्शितः । यथा–

* कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते । क्रमागतैस्स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत् ॥
विद्धि सिद्धान्तसंज्ञं च तत्पूर्वमथ पौष्कर । नानाव्यूहसमेतं च मूर्तिद्वादशकं हि तत् ॥
तथा मूर्त्यन्तरयुतं प्रादुर्भावगणं हि यत् । प्रादुर्भावान्तरयुतं धृतं हृत्पद्मपूर्वके ॥
लक्ष्म्यादिशङ्खचक्राख्यगारुत्म्यसदिगीश्वरैः । सगणैरस्त्रनिष्ठैश्च तद्विद्धि कमलोद्भव ॥
मन्त्रसिद्धान्तसंज्ञं च शास्त्रं सर्वफलप्रदम् । विना मूर्तिचतुष्केण यत्रान्यदुपचर्यते ॥
मन्त्रेण भगवद्रूपं केवलं वाऽङ्गसंवृतम् । युक्तं श्रियादिकेनैव कान्ताव्यूहेन पौष्कर ॥
भिन्नैराभरणैरस्त्रैरावृतं च सविग्रहैः । तन्त्रसंज्ञं हि तच्छास्त्रं परिज्ञेयं हि चाब्जज ॥
मुख्यानुवृत्तिभेदेन यत्र सिंहादयस्तु वै । चतुस्त्रिद्व्यादिकेनैव योगेनाभ्यर्थितेन तु ॥
संवृताः परिवारेण स्वेन स्वेनोत्थितास्तु वा । यच्छक्त्याराधितं सर्वं विद्धि तन्त्रान्तरं तु तत् ॥
एवं नानागमानां च सामान्यं विद्धि सर्वदा । नामद्वयं वा सिद्धान्तपञ्चरात्रेति पौष्कर ॥
एकैकं बहुभिर्भेदैरामूलादेव संस्थितम् । नानाशयवशेनैव सिद्धाद्यैः प्रकटीकृतम् ॥
सङ्क्षिप्तं सप्रपञ्चं च तृतीयमुभयात्मकम् । सेतिहासपुराणैस्तु वेदवेदान्तसंयुतैः ॥
ये जन्मकोटिभिस्सिद्धास्तेषामन्तेऽत्र संस्थितिः ॥ इति ।

अत्रैकैकस्य सिद्धान्तस्यामूलादेव बहुभिर्भेदैस्संस्थितत्ववचनाच्चतुर्णां सिद्धान्तानां तदवान्तरतन्त्रभेदानाञ्च सिद्धान्तान्तरतन्त्रान्तरसङ्करपरिहारेणैव सर्वदाऽवस्थानं सूचितम् । अत्र च सिद्धान्तसंज्ञितानामेषां चतुर्णामपि मोक्षप्रदत्वमनन्तरमेवोक्तम्–

* यस्मात्सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् । एतस्मात्प्राप्यते शास्त्राज्ज्ञानपूर्वेण कर्मणा ॥
सिद्धान्तसंज्ञा विप्रास्य सार्थका अत एव हि ॥ इति ।

अत्र सार्थका इति बहुवचनान्तसामानाधिकरण्यात् सिद्धान्तसंज्ञाशब्दोऽपि बहुवचनान्तस्सन्नागमादिविशेषणयोगेन चतुर्धा संज्ञावस्थानमभिप्रैति । पञ्चरात्रशब्दवत् सिद्धान्तशब्दोपि चतुर्णां साधारण इति चात्रैव पूर्वमुक्तम् । **पाद्मे** च * सदागमादिसिद्धान्तचतुष्के सत्पदप्रदे इति चतुर्णां सत्पदशब्दवाच्यभगवत्पदप्राप्तिसाधनत्वमुक्तम् । **हयग्रीवसंहितायाम**पि कस्यचिन्मोक्षैकान्त्यमन्येषामपि फलान्तरेण सह मोक्षप्रदत्वमुक्तम्–

* आगमाख्यं हि सिद्धान्तं सन्मोक्षैकफलप्रदम् । मन्त्रसंज्ञं हि सिद्धान्तं सिद्धिमोक्षप्रदं नृणाम् ॥
तन्त्रसंज्ञं हि सिद्धान्तं चतुर्वर्गफलप्रदम् । तन्त्रान्तरं तु सिद्धान्तं वाञ्छितार्थफलप्रदम् ॥ इति ।

अत्र वाञ्छितार्थशब्देनाविशेषात् त्रिवर्गवदपवर्गोऽपि संगृह्यते ; अत एषां चतुर्णामपि परब्रह्मभूतवासुदेवप्रापकत्वादपवर्गार्थिभिर्मोक्षोपायोपदेशप्रदेशेषु * विकल्पोऽविशिष्टफलत्वात् इतिन्यायेन सदक्षरदहरमधुभूमवैश्वानरशाण्डिल्यनाचिकेतोपकोसलप्रतर्दनसंवर्गान्तरादित्यानन्दमयविद्यादिष्विव वैकल्पिकः परिग्रहः । ब्रह्मस्वरूपनिरूपकधर्मव्यतिरिक्तानां तत्तद्विद्याप्रतिनियतगुणानां यथा विद्यासु परस्परमनुपसंहारः, तथाऽत्रापीति, प्रत्येकं प्रतिनियतानां प्रक्रियाणां परस्परासङ्करेण

प्रयोगस्सिद्धः । यत्र तु मधुविद्यादौ वसुपदप्राप्त्यादिपूर्वकब्रह्मप्राप्तिवत्परम्परया वासुदेवप्राप्तिरभिधीयते, तत्रापि तत्तदर्वाचीनपर्वव्यवहितपरप्राप्तिकामानामधिकार इति व्यवस्था; तदभिप्रायेण चोक्तं **भाष्ये**—*तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुस्सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक् प्राप्यते, विभवार्चनात् व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते इति वदन्तीति । अतश्चतुर्णामप्यपवर्गे तात्पर्यम् । फलान्तरसाधनवचनस्यान्यार्थत्वं स्वयमेवोक्तम्—*प्रत्ययार्थं च मोक्षस्य सिद्धयस्संप्रकीर्तिताः इति । एवं चतुर्णामपि मोक्षप्रदत्वे हि त्रय्यन्तसारोपबृंहणरूपत्वमपि समञ्जसं भवति । **पाद्मे** चर्यापादे चतुर्णामेतेषां परस्परविभागस्सिद्धान्तसङ्करे तन्त्रसङ्करे च दोषः प्रपञ्चितः—

*तच्चतुर्धा स्थितं शास्त्रमृगादिवदनेकधा । एकैकं भिद्यते तन्त्रं शाखाभेदेन भूयसा ॥
प्रथमं मन्त्रसिद्धान्तं द्वितीयं चागमाह्वयम् । तृतीयं तन्त्रसिद्धान्तं तुर्यं तन्त्रान्तरं भवेत् ॥ इति ।

अत्र आगममन्त्रसिद्धान्तयोः **पौष्करोक्त**क्रमाद्व्युत्क्रमेणोपादानं सिद्धिमोक्षप्रदमन्त्रसिद्धान्तप्राशस्त्ये तात्पर्यात् । अत्रापि ह्यागमसिद्धान्तस्य केवलमोक्षप्रदत्वलक्षणः *कर्मणामपि सन्न्यासः कथ्यते यत्र चागमे इति प्रदर्शित एव । अत्र काम्यकर्मणां स्वरूपतस्सन्न्यासः, स्ववर्णाश्रमनियतानां भगवद्गीताष्टादशाध्यायनिर्णीतप्रकारेण सात्त्विकत्यागः, स्वशाखागृह्योक्तमर्यादया च सर्वत्र नित्यनैमित्तिकादिपरिग्रहः; अत आगमसिद्धान्ते सर्वकर्मस्वरूपत्याग इति न भ्रमितव्यम्, कर्मविशेषभूयस्त्वात्; अत एव हि तन्निष्ठानधिकृत्योक्तम्—

*त्रयोदशविधं कर्म कामादिपरिवर्जितम् । गुणैस्सांयमिकैर्युक्तमनुतिष्ठन्ति साधवः ॥ इति ।

अत्रैवोद्दिष्टक्रमेण चत्वारस्सिद्धान्ता लक्ष्यन्ते—

*एकैव मूर्तिराराध्या प्राधान्येनेतराः पुनः । देव्यः श्रियादयश्चापि संपूज्याः परिवारवत् ॥
आयुधैश्शङ्खचक्राद्यैः श्रीवत्साद्यैश्च भूषणैः । मूर्तिमद्भिः परिवृता केवला वाऽम्बुजासन ॥
कथ्यते यत्र तत्प्रोक्तं मन्त्रसिद्धान्तमग्रिमम् । वासुदेवादयो व्यूहाश्चत्वारस्साधकैरपि ॥
क्रमागतैस्तुल्यकक्ष्याः पूज्यास्तु प्रभवाप्यये । कर्मणामपि सन्न्यासः कथ्यते यत्र चागमे ॥
तन्त्रमागमसिद्धान्तं तदुक्तं कमलासन । नवानामपि मूर्तीनां प्राधान्यं यत्र कथ्यते ॥
मूर्तयो द्वादशाङ्गानि तेषामेव तथाऽपरे । प्रादुर्भावगणाश्चापि मूर्त्यन्तरगणा अपि ॥
प्रादुर्भावान्तरयुतास्सदिग्देवैस्सहायुधैः । मूर्तिमद्भिश्च देवीभिर्लक्ष्म्यादिभिरपि स्फुटम् ॥
तत्तन्त्रसिद्धान्ताह्वानं चतुर्थं परमं पुनः । सौम्यसिंहादिभूयिष्ठवक्त्रभेदैश्चतुर्मुख ॥
द्वित्र्यादिमुखभेदा वा मूर्तिरेकैव पूज्यते । संवृता परिवारैः स्वैर्विना वा सर्वकामदा ॥
यत्तु तन्त्रान्तरं तत्स्याच्चतुर्थं चतुरानन । येन सिद्धान्तमार्गेण कर्षणादिक्रिया कृता ॥
आदौ तेनैव सकला नान्यसिद्धान्तवर्त्मना । तन्त्रेणापि तथा येन कर्षणादिक्रिया कृता ॥
तेनैव सकला कार्या न तन्त्रान्तरवर्त्मना । तन्त्रान्तरेऽपि कथितमनुक्तं ग्राह्यमेव हि ॥
सिद्धान्तसङ्करस्तस्मात्तन्त्रसङ्कर एव च । दोषाय कल्पते राजराष्ट्रधामक्षयात्मने ॥
सिद्धान्तसङ्करे जाते प्रमादात्तस्य शान्तये । कृत्वा संप्रोक्षणं पूर्वं सहस्रकलशाप्लवः ॥

कर्तव्यं स्नपनं कुर्यात्तन्त्रसङ्करसंभवे । अन्ते महोत्सवं कुर्याद्ध्वजारोहणपूर्वकम् ॥ इति ।

अत्र पाद्मोक्तं तन्त्रतन्त्रान्तरलक्षणं पौष्करोक्ताविरोधेन नेतव्यम् । यदि द्वयोर्ग्रन्थयोरैकार्थ्यं संभवति तदा न विरोधः, इतरतन्त्रेषु अभ्युपगमसिद्धान्ततन्त्रतन्त्रान्तरलक्षणं द्विप्रकारमनुसन्धेयम् । यथा न्यायविस्तरे सर्वतन्त्रप्रतितन्त्राभ्युपगमाधारसिद्धान्तेष्वभ्युपगमसिद्धान्तस्य द्वेधा लक्षणमक्षपादाभिप्रेतं वर्णयन्ति—

* साधितः परतन्त्रे यः स्वतन्त्रे च समाश्रितः । स ह्यभ्युपगमो न्यायो मनसोऽनुमतिर्यथा ॥
तद्विशेषपरीक्षा वा सद्भावेऽन्यत्र साधिते । यथाऽन्यत्र मनस्सिद्धं तस्याक्षत्वपरीक्षणम् ॥ इति ।

पारमेश्वरोक्तं तन्त्रतन्त्रान्तरलक्षणं तु पौष्करोक्तेन समानमेव । तथा हि, प्रायश्चित्ताध्याये सङ्करादिदोषपरिहारार्थं विभज्यमानेषु सिद्धान्तेष्वागममन्त्रसिद्धान्तप्रपञ्चनानन्तरमुच्यते—

* परव्यूहादिहिभेदेन विनैकैकेन मूर्तिना । साङ्गेन केवलेनाथ कान्ताव्यूहेन भूषणैः ॥
तथाऽस्त्रैर्विग्रहोपेतैरावृतं तन्त्रसंज्ञितम् । नृसिंहकपिलक्रोडहंसवागीश्वरादयः ॥
मुख्यानुवृत्तिभेदेन केवला वाऽपि संयुताः । चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभिः ॥
कान्तागणैश्च लक्ष्म्याद्यैः परिवारैः खगादिभिः । पूजिता विधिना यत्र तत्तन्त्रान्तरमीरितम् ॥ इति ।

तदेवं व्यवस्थितेषु सिद्धान्तेषु सङ्करपरिहारः पाद्मे स्पष्टः । तस्मिन्नेव चाध्याये कचित्सिद्धान्ते तदवान्तरतन्त्रभेदे वा दीक्षितस्य सिद्धान्तान्तरोक्तासु तन्त्रान्तरोक्तासु च क्रियास्वनधिकार उक्तः—

* एकत्र दीक्षितस्तन्त्रे सिद्धान्ते वा द्विजोत्तमः । क्रियां न कुर्यादन्यत्र कर्षणादींश्चतुर्मुख ॥
आचार्यकमथार्त्विज्यं पूजाद्यं मधुविद्विषः । तन्त्रभेदे च सिद्धान्तभेदे चापि न युज्यते ॥ इति ।
* तन्त्रान्तरे तथा तन्त्रे मन्त्रसिद्धान्तवर्त्मना । दीक्षितानां क्रमेणैव ह्युपर्युपरि योगतः ॥
अन्येषामधिकारस्स्यात्तत्तत्संस्कारपूर्वकम् ॥

इत्युक्त्वा पुनरप्युपर्युपरितन्त्राधिकाराणामधोधस्तन्त्राधिकारित्वं प्रदर्शितम्—

* कारणागमसिद्धान्तनिष्ठेनान्यैस्त्रिभिः सदा । अर्चनीयमथान्याभ्यां मन्त्रसिद्धान्तिना तथा ॥
पूजनीयमथान्येन तन्त्रसिद्धान्तिनाऽनिशम् । स्वेन तन्त्रान्तरेणैव पूजनीयं स्वके गृहे ॥ इति ।

अत्राप्युत्कृष्टसिद्धान्तस्थितेनाप्यपकृष्टसिद्धान्तस्थानेषु तत्तत्सिद्धान्तप्रकारेणैव पूजनीयत्वमुक्तम्, उत्कृष्टसिद्धान्तस्थितस्य स्वस्थानेऽपकृष्टसिद्धान्तप्रसङ्गाभावात् ; अत एव ह्यनन्तरमेवोच्यते—

* मुख्याधिकारिणस्सन्ति यदि गौणाधिकारिणः । स्वतन्त्रेण प्रवेष्टव्याः प्रासादे च स्वतन्त्रके ॥ इति ।

स्वतन्त्रेण—स्वकीयेन प्राक्प्रवृत्तशास्त्रेणेत्यर्थः । विशेषतश्च एकायनविधानस्यान्यत्र प्रवेशे प्रत्यवायातिशयश्च तत्रैवोक्तः—

* तत्सिद्धान्तान्यमार्गेण स्थापितं बिम्बमालये । अज्ञानादथवा मोहादेकायनविधानतः ॥
अर्चयन्नापदं सर्वमाप्नोतीह परत्र च ॥ इति ।

एवमेकैकसिद्धान्तस्थितानां सिद्धान्तान्तरक्रियासु यथोक्तप्रक्रिययाऽनधिकारे समर्थिते सिद्धान्तान्तरप्रतिष्ठितेषु भगवदालयेषु तदन्यसिद्धान्तस्थितानां प्रदक्षिणप्रणाममालाकरणदीपारोपणसम्मार्जनसेचनोपलेपनालङ्करणरक्षणसंवर्धनहविरादिसमर्पणस्तोत्रादीनां साधारणधर्माणामपि प्रतिषेधप्रसङ्गमाशङ्क्य परिजहार—

* प्रदक्षिणप्रणामादि राद्धान्तेऽन्यत्र केवलम् । विहितं नार्चनं कुर्याद्राजराष्ट्रभयावहम् ॥ इति ।

तत्रैकोनविंशेऽध्याये सिद्धान्तसङ्करे प्रत्यवायं विस्तरेण प्रतिपाद्यासङ्कीर्णसिद्धान्तधर्माणामेवाधिकारिणामन्योन्यसंबन्धादि-योग्यत्वमितरेषां तु बाह्यानामिव वर्जनीयत्वमपि प्रतिपादितम्—

* सिद्धान्तानां चतुर्णां तु साङ्कर्यं व्यसनावहम् । सिद्धान्तेषु चतुर्ष्वेकं पूर्वैर्नृभिरनुष्ठितम् ॥
त्यक्त्वा समाश्रयेदन्यं नरो भवति किल्बिषी । तस्माज्जन्मप्रभृत्येकराद्धान्तनियतो भवेत् ॥
अन्यथा कुलमात्मानं सर्वं नाशयति स्वयम् । मन्त्रमण्डलकुण्डादिक्रियामुद्रोपचारकैः ॥
योगं नयति यो मोहात्स्वसिद्धान्तोक्तवर्त्मनि । सोऽपि स्वकुलजान् सर्वान् परमात्मानमब्जज ॥
नयेन्निरयमत्युग्रं पुरुषान् पुरुषाधमः । निष्फला च क्रिया तस्य प्रत्युतानर्थकारिणी ॥
अकर्मणोऽस्य तत्कोपो राजराष्ट्रभयावहः । कर्ता कारयिता चोभौ सान्वयं विनशिष्यतः ॥
न सन्निधानं च हरेर्धाम्नि हानिश्च सम्पदाम् । राद्धान्तसङ्करः कार्यो नान्यसिद्धान्तकर्मणा ॥
मन्त्रसिद्धान्तमुख्येषु चतुर्ष्वपि यथापुरम् । अनुतिष्ठन्ति ये कर्म समाराधनमुच्यते ॥
असङ्करेण तेऽन्योन्यं संबद्धा हि नरोत्तमाः ॥ इति ।

असङ्करेणानुतिष्ठन्तीत्यन्वयः । तत्रैव जीर्णोद्धाराध्याये—

* या मूर्तिर्येन तन्त्रेण यादृशेनाधिकारिणा । प्रथमे कल्पने सैव द्वितीये कल्पने भवेत् ॥
मूर्तिस्तदेव तन्त्रं च स एव स्थापकः पुनः । तन्त्राधिकारिमूर्तीनां व्यत्यये कल्पिते सति ॥
नृणां नरपतेश्चापि राष्ट्रस्य च भवेत् क्षयः ॥ इति ।

तस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्याये—

* जनने मरणे चैव श्वसृगालमृगादिभिः । स्पृष्टे च बिम्बे तन्त्राणां सङ्करे समुपस्थिते ॥
एवमादिषु चान्येषु संप्रोक्षणविधिर्भवेत् ॥ इति ।

**नारदीये**ऽपि—* व्यत्यये परिवाराणां भोगादीनां च गौतम । पूर्ववत्स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥ इति ।

अत्र आदिशब्देन सिद्धान्तव्यत्ययतन्त्रव्यत्ययादिसंग्रहः, अपेक्षितत्वादविशेषाच्च ; अत एव ह्यत्रैवोक्तम्—

* तन्त्रेणैकेन कर्तव्यं कर्षणादिषु नारद । यत्तन्त्रेण समारब्धं तत्तन्त्रेणैव कारयेत् ॥
अनुक्तांश्चान्यतन्त्रेषु निरीक्ष्यात्र नियोजयेत् । विशेषाश्च मुनिश्रेष्ठ त्वन्यथा राष्ट्रनाशकृत् ॥ इति ।

**पारमेश्वरे** च प्रतिष्ठाध्याये—

* विशेषेण स्वयंव्यक्ते दिव्ये सैद्धेऽपि चार्षके । स्थाने तु कर्मबिम्बानां व्यत्ययं न समाचरेत् ॥
द्वाराङ्गावृतिदेवानां पूजाया हवनस्य च । इत्यारभ्य,

* न लक्षणान्तरं कुर्यान्न प्रमाणान्तरं तथा । न तु द्रव्यान्तरं चैव न च कुर्यात्क्रियान्तरम् ॥
मन्त्रान्तरं न कुर्वीत सर्वं कुर्याद्यथापुरम् । कुर्याच्चेदेवमादीनां विपर्यासं महामते ॥
राज्ञो राष्ट्रस्य नाशस्स्यात् सर्वस्यापि स्वसन्ततेः ॥ इति ।

तत्रैव— * भोगानां च विपर्यासं मन्त्राणां च महामते । ध्यानानां चैव मुद्राणां देवतानां तथैव च ॥
अन्येषां चैवमादीनां व्यत्यासं न समाचरेत् ॥ इति ।

तथोत्तरत्र प्रायश्चित्ताध्याये—

* प्रासादश्च तथा बिम्बं येन शास्त्रेण निर्मितौ । प्रतिष्ठाप्य च तेनैव नित्यादौ पूजयेद्धरिम् ॥
योऽर्चयेदन्यमार्गेण तथा चार्चापकस्तु यः । तावुभौ कलुषात्मानौ राज्ञो राष्ट्रस्य वै गुरोः ॥
कुलं च व्याधितं चैव विप्लवं दुःखमञ्जसा । वित्तहानिं विशेषेण कुर्यातामालयस्य च ॥
न कुर्यात्तन्त्रसाङ्कर्यं पञ्चरात्रपरायणः । पुनः प्रतिष्ठा कर्तव्या कृतश्चेत्तन्त्रसङ्करः ॥ इति ।

तत्रैव सिद्धान्तभेदान् विस्तरेण प्रतिपाद्यानन्तरमुच्यते—

* शास्त्रमन्त्रक्रियादीनां मूर्तीनां भवनस्य च । देशिकस्याभिजातस्य यथापूर्वं परिग्रहः ॥
तथैव यावत्कालं तु आचर्तव्यं नचान्यथा । विपरीते कृते चात्र राजराष्ट्राद्यनर्थकृत् ॥
ततस्समाचरेद्यत्नात्प्रतिष्ठां प्राक्प्रकारतः । ततस्सिद्धान्तसाङ्कर्यं नाचर्तव्यं कृतात्मभिः ॥
यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत् । प्रतिग्राह्यमथान्योन्यविरुद्धं संत्यजेद्बुधः ॥ इति ।

एवं **कालोत्तरे** चतुर्विधपूजानिर्णयाध्याये—

* वैदिकैस्तान्त्रिकैर्वाऽपि श्रौतैर्वा द्विजसत्तम । स्वयंव्यक्ते तु भवने मिश्रैर्वा देवमर्चयेत् ॥
ऋष्यादिपूजिते स्थाने पारम्पर्यक्रमं विना । विशेषं नाचरेत्किञ्चिद्राजराष्ट्रसमृद्धये ॥ इति ।

अस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्यायेऽप्येतावेव श्लोकौ पठितौ ।

तत्रैव— * यद्बिम्बं येन शास्त्रेण समारब्धं पुरा द्विज । प्रासादं वा ततस्तेन शास्त्रेणैव तदर्चयेत् ॥
तच्छास्त्रमन्तरेणैव यो यजेदन्यवर्त्मना । राज्ञो राष्ट्रस्य कर्तुश्च विनाशं कर्तुमिच्छति ॥
न कदाचिदपि प्राज्ञः प्रकुर्याच्छास्त्रसङ्करम् । शास्त्रसङ्करदोषेण महान् दोषो भवेद्ध्रुवम् ॥ इति ।

यद्यपि वैखानसपञ्चरात्रसङ्करपरिहारस्याप्यत्रैव [शास्त्रे] प्रतिपादनात्तत्परिहारार्थमिदं वचनमिति वक्तुं शक्यम्, तथाऽपि येन शास्त्रेणेति सामान्यवचनात्सर्वविषयमेव । यत्तत्रोक्तम्—

* महोत्सवेषु सर्वेषु देशिकेन्द्रानुसारतः । ऊहापोहविधानेन करणीयं समर्चनम् ॥

इति, इदमपि देशकालद्रव्यबलाद्यनुसारेण तत्तदुचितवैदिकादिसङ्कोचविस्तारादिमात्रविषयम्; अत एव ह्यत्र * वैदिकैस्तान्त्रिकैः इत्यादि पुनः पठित्वा

* ऋष्यादिपूजिते स्थाने पारम्पर्यक्रमं विना । विशेषं नाचरेत्किञ्चिद्राजराष्ट्रसमृद्धये ॥

इति च निगद्यते । एवं पञ्चरात्राख्यैकशास्त्रावान्तरसंहितासङ्करस्यात्यन्तगर्हितत्वे वैखानसपञ्चरात्रसंकरः कैमुतिकन्यायसिद्धः, परस्परं च द्वयोरपि स्पष्टं प्रतिषिध्यते । पञ्चरात्रस्य तु वैखानसैरपि क्वचित्क्वचिदुपजीव्य[त्व]मस्ति ।

तथा हि— * ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मसु ॥
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥

इत्यादिभिरविशेषेण सर्वेषां ब्राह्मणादीनां श्रीपञ्चरात्रोक्तमार्गेण भगवदर्चनादिकं कर्तव्यमिति **महाभारता**दिष्वभिधीयते । **नहि** क्वचिदपि सूत्रविशेषादिनियमः कृतः, प्रत्युत सर्वसूत्रनिष्ठानां तदन्वयस्तस्मिन्नेव शास्त्रे प्रतिपाद्यते—

* निषेकादींश्च संस्कारान् सूत्रोक्तांश्च समाचरेत् । पञ्चरात्रोदितान् वाऽपि ये स्ववंश्यैरनुष्ठिताः ॥ इति । नच बोधायनविखनश्शौनकाद्युक्तेषु भगवत्प्रतिष्ठार्चनादिषु सत्सु किमन्येनेति वाच्यम्; तदुक्तिरहितसूत्रनिष्ठानामन्यापेक्षायां साधारणशास्त्रपरिग्रहोपपत्तेः । न च क्वचित् पूर्णोपदेशस्संभवतीति तच्छक्तस्य पूर्णमुपादानं युक्तम्; अत एव हि हौत्रं होतृशाखोक्तमध्वर्यवोऽपि परिगृह्णन्ति । अतो येषु सूत्रेषु भगवदर्चनादिकं प्रत्यपादि तन्निष्ठानामपि भगवच्छास्त्रोक्तप्रक्रियया समाराधनादिकं प्रशस्ततमम् । तथा च शिष्टैरनुष्ठीयते । ननु च वैखानससूत्रानुसारिषु काश्यपमरीचिभार्गवात्रेयेषु शास्त्रेषु तदनुबन्धिषु चाधिकारग्रन्थेषु संग्रहविस्तररूपेषु भगवत्प्रतिष्ठार्चनादिकं पूर्णमुपदिशत्सु किं पञ्चरात्रेण ? मैवम्; तत्सूत्रनिष्ठान् प्रत्येव तत्प्रक्रियोपदेशात् । तर्हि तन्निष्ठानां पञ्चरात्रप्रक्रियाया अनुपादेयत्वे तस्याः सर्वसूत्रनिष्ठसाधारण्यं भज्येतेति चेत् । तन्न; दत्तोत्तरत्वात् । **काश्यपी**यादीन्यपि हि शास्त्राणि काञ्चित्प्रक्रियामुपदिशन्ति तेषु तेष्वर्थेषु शास्त्रान्तरोपजीवीन्येव; एवं पञ्चरात्रोक्तमपि कचित्कचिदुपजीवन्ति । यथोक्तं **भृगु**प्रोक्ते क्रियाधिकारे—

* गुरूपदेशसंसिद्धैः कल्पमन्त्रैरथापि वा । आसनाद्युपचारैस्तु पूजयेदिति केचन ॥ इति ।

अत्र कल्पमन्त्रशब्देन भगवच्छास्त्रोक्तमन्त्राणामेव ग्रहणम्; अत एव ह्यधीतवेदान् वैखानसान् प्रति गुरूपदेशसंसिद्धैरिति विशेष्यते । नच तत्तत्तन्त्रमन्त्रकल्पाः पञ्चरात्रतन्त्रेभ्यः पृथग्भूताः, चतुर्धा व्यूढे हि तस्मिंच्छास्त्रे प्रत्येकं च संहिताभेदभेदिनि सर्वेऽपि भगवन्मन्त्रकल्पास्तदङ्गमन्त्रकल्पाश्च यथायथं समाविशन्ति; अत एव हि तांस्तान् भगवन्मन्त्रकल्पानार्षपञ्चरात्रमित्यभियुक्ता वर्णयन्ति, तन्निष्ठांश्च कल्पभागवतशब्देन व्यपदिशन्ति । एवं **भार्गवा**दिष्वपि—

* वैखानसेन सूत्रेण निषेकादिक्रियान्वितान् । विप्रान् वेदविदश्शुद्धान् मन्त्रकल्पविचक्षणान् ॥

इत्यादिषु मन्त्रकल्पवेदनोक्तिस्तत्रतत्रापेक्षितग्रहणार्था । तथा **भार्गवे** क्रियाधिकारे सारस्वतप्रतिष्ठादिकं प्रक्रम्योच्यते— * अनेन विधिना स्थाप्य कल्पमन्त्रेण पूजयेत् इति । न चात्र कल्पमन्त्रस्वरूपतदङ्गादिकमुपदिष्टम्; अतः कल्पोक्तप्रक्रियैवात्रानुसरणीया । एवं तत्र सुदर्शनरूपस्य भगवतः प्रतिष्ठार्चनादौ प्रक्रान्ते फलभेदापेक्षया प्रक्रियान्तरमुपक्षिप्यते—

* एतद्वैदिकमुद्दिष्टं भुक्तिमुक्तिफलप्रदम् । केवलं मुक्तिकामश्चेत्स्मरन् मन्त्रं षडक्षरम् ॥ इति ।

नचात्र षडक्षरमन्त्रप्रक्रियाप्रपञ्चनम् । ततश्च वासिष्ठगार्ग्यविहगेन्द्राहिर्बुध्न्यादिसंहितोक्तप्रक्रियैव शरणम् । एवं द्विभुजप्रभृति षोडशभुजपर्यन्तरूपोपदेशोऽप्यनुक्तमपेक्षितमन्यतो ग्राह्यम्; अत एव हि * कृष्णरूपाण्यनन्तानि इत्यादिभिः कृष्णनरसिंहादिरूपाणामसङ्ख्येयत्वेन वक्तुमशक्यतया विरम्यते । तेषु च कानिचिच्छास्त्रान्तरोक्तानि संग्राह्याण्येव; अत इदं * वेदान्तेषु यथा सारं संगृह्य भगवान् हरिरित्युक्तप्रक्रियया सर्ववेदान्तसारोद्धारेण सर्वजनहितैषिणा भगवता स्वयमेव प्रणीतं श्रीमत्पञ्चरात्रशास्त्रं सर्वसूत्रनिष्ठानामुपजीव्यमिति सिद्धम् ॥

यत्तु **श्रीवैखानसे**—* आग्नेयं पञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् । अवैदिकत्वात्तत्तन्त्रं तथा वैखानसेन तु ॥
सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ॥ इत्यादि ;

यच्चोक्तं श्रीपञ्चरात्रे **तन्त्रसारसमुच्चये**—* अश्रीकरमसौम्यं च वैखानसमसात्त्विकम् इत्यारभ्य * तद्विधानं परित्यज्य पञ्चरात्रेण पूजयेत् इत्यादि, यानि च पाद्मपारमेश्वरादिष्वतिवादवचनानि, तानि नूनमिक्षुभक्षकर्तृचिकीर्षुभिः प्रक्षिप्तानि परस्परस्थानाक्रमणलोलुपैः वटुभिर्वा पूजकाधमैर्निवेशितानि ।

* अविरोधोपयोगाभ्यामुभयोरपि शास्त्रयोः । मध्यस्थैर्हि कृतं धर्मविद्यास्थाननिवेशनम् ॥ इति । अन्यथा प्रसिद्धप्रामाण्ययोः परिग्रहप्राचुर्यवतोः प्रसिद्धतरेषु श्रीरङ्गश्रीमद्वेङ्कटाद्रिश्रीहस्तिशैलवृषगिरिप्रभृतिषु पारम्पर्येण प्रवृत्तयोः व्यासादिनिबद्धश्रीवैष्णवधर्मशास्त्रकाण्डादिषु—

* कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते । वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥

श्रीभगवानुवाच—शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः । स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥

अष्टाक्षरविधानेनाप्यथवा द्वादशाक्षरैः । वैदिकैरथवा मन्त्रैर्मम सूक्तेन वा पुनः ॥
स्थापितं मां ततस्तस्मिन्नर्चयित्वा विचक्षणः । पुरुषं च ततस्सत्यमच्युतं च युधिष्ठिर ॥
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः । अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिकाः ॥
वासुदेवं च राजेन्द्र सङ्कर्षणमथापि वा । प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः । विद्ध्यनर्थान्तरायैव मामेवं चार्चयेद्बुधः ॥

इत्यादिभिर्वैष्णवशास्त्रभेदत्वेन समपरिपठितयोर्वेदाविरुद्धयोर्भगवद्यामुनमुनिवासुदेवस्वामिप्रभृतिभिः स्थापितप्रामाण्ययारविशेषवैष्णवसमयपरिग्रहयोः श्रीमत्पञ्चरात्रवैखानसशास्त्रयोर्द्वयोरप्यप्रामाण्यप्रसङ्गात् । अथैतानि परस्परापकर्षवचनान्यसङ्कीर्णबहुकोशपाठावलोकनादाप्तभाषितानीति मन्येमहि, तथाऽपि * प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् इत्यादिषूदितहोमप्रशंसार्थमनुदितहोमनिन्दावत्प्रक्रान्तशास्त्रप्राशस्त्य[प्रतिपादक]मात्रपरत्वेन नेतव्यानि । * नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु निन्द्यादितरत्प्रशंसितुमिति न्यायविदः । एवमेव * साङ्गेषु वेदेषु निष्ठामलभमानश्शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवान् इत्यादौ वेदनिन्दाप्रसङ्गेन वेदविरोधमाशङ्क्य स्वशास्त्रप्रशंसादिपरत्वेन पर्यहारि । **भाष्यकारैर्न्यदर्शि** च—* ऋग्वेदं भगवोऽध्येमि इत्यारभ्य, * सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् इति भूमविद्योपक्रमगतस्य तदितरसमस्तवेदाध्ययनादात्मवेदनालाभवचनस्य भूमविद्याप्रशंसामात्रे तात्पर्यम् ।

अपि च— * चत्वार एकतो वेदा भारतं चैकमेकतः । समागतैस्सुरर्षिभिस्तुलामारोपितं पुरा ॥
महत्त्वे च गुरुत्वे च ध्रियमाणे ततोऽधिकम् । महत्त्वाच्च गुरुत्वाच्च महाभारतमीरितम् ॥

इत्यादीनि वचनानि वेदेभ्योऽपि महाभारतस्याधिक्यं ब्रुवाणानि वेदार्थोपबृंहणरूपातिशयशालिमहाभारतप्रशंसार्थानि, न पुनर्वेदानामपकर्षगन्धमभिदधते ॥

किञ्च, बह्वृचाम्नाये * ऋग्गाथाभ्यां वाक्तनितं यजुर्निगमो वृथावाक् । तदमितं सामाधेयकश्च गेयः इति यजुरादिनिन्दा ऋग्वेदस्तुत्यर्थैव ; एवमिहापि श्रीवैखानसपञ्चरात्रयोः परस्परापकर्षवचनानामाप्तत्वेऽपि स्वाभिमतस्तुत्यर्थतयैव निर्वोढव्यम् ; अन्यथा सर्वोपप्लवप्रसङ्गात् । अविस्रम्भणीयवचनानां यथाश्रुतस्वीकारेऽतिप्रसङ्गाच्च । एवमेव हि शैवागमे **कारणतन्त्रे** जल्प्यते—

* शैवस्सर्वाधिकारी स्यात् स्वकीये च परत्र च । शैवास्सर्वं प्रकुर्वन्ति ये गृहस्था द्विजोत्तमाः ॥
यामले मातृतन्त्रे च कापाले पञ्चरात्रके । बौद्धे वाऽप्यार्हते चैव लागुडे वैदिकेऽपि च ॥
अन्येष्वपि च मार्गेषु तत्तच्छास्त्रानुसारतः । शैवास्सर्वं प्रकुर्वन्ति तल्लिङ्गस्थापनादिकम् ॥
मुख्यत्वादिह शैवस्य मुख्यमाहात्म्यतोऽपि च । अधिकारोऽस्ति शैवस्य नान्येषां शिवदर्शने ॥ इति ।

ननु पाशुपताधिकरणे *पत्युरसामञ्जस्यात् इति पशुपतिप्रणीतानां शैवादीनां सर्वेषां तन्त्राणामप्रामाण्यसमर्थनादेतस्मिन्नपि वचने *जैनालयं प्रविष्टस्तु सवासा जलमाविशेत् इत्यादिभिर्दर्शनस्पर्शनाद्ययोग्य[विषय]जैनयामलबौद्धादिबाह्यमततन्त्रैस्सह वैदिकस्य समभिव्याहाराद्वैदिकानर्हेषु बाह्येषु च शैवस्याधिकारोक्तेः,

*शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान् द्विजान् शूद्रान् सचेलो जलमाविशेत् ॥

इति **विज्ञानेश्वर**संगृहीतधर्मशास्त्रवचनेन स्पर्शादिषु परिहरणीयत्वेन प्रसिद्धस्य शैवस्य वैदिकदेवताप्रतिष्ठादिषु मुख्याधिकारित्वजल्पनाल्लोके च शै[वैः]वे क्वचिदपि भगवत्प्रतिष्ठाद्यनुमत्यभावात्तत्स्पर्शादिष्वपि—

*स्थापिते पञ्चरात्रेण देवे षड्भिरथाध्वभिः। प्रतिष्ठादौ कृते मोहाद्दोषस्सर्वक्षयात्मकः ॥<br>
शान्तिश्च तस्य भूयोऽपि पञ्चरात्रोक्तवर्त्मना। प्रतिष्ठाप्य सहस्रेण कलशैः स्नपनं हरेः ॥<br>
महोत्सवश्च कर्तव्यो ध्वजारोहणपूर्वकः।

इति **पाद्मा**दिप्रतिपादितप्रायश्चित्तविशेषानुष्ठानदर्शनाच्च। शैवस्तुतिवचनस्यास्य—

*त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय। दर्शयित्वाऽल्पमायासं फलं शीघ्रं प्रदर्शय ॥

इत्यादिप्रकारेणाप्रामाण्यमनीश्वरप्रक्षिप्तत्वमतिवादरूपतया स्वीयतन्त्राधिकारिशैवस्तुतिमात्ररूपत्वं वा कल्पनीयमिति चेत्, हन्त तर्ह्येनयोरपि श्रीवैष्णवमार्गभेदयोरन्यतरस्येतरतन्त्रप्रविष्टैरप्रवेशनात्, परस्परसङ्करप्रसङ्गे च तत्तत्तन्त्रोक्तप्रायश्चित्तानुष्ठानदर्शनाच्च परस्परापकर्षपरस्परमर्यादाप्रवेशनवचनानि प्रक्षिप्तत्वादप्रमाणान्यतिवादरूपतया स्वतन्त्रस्तुतिपराणीति वा निर्वाह्यत्वात्परम्परागतमर्यादापरित्यागेन परस्परप्रवेशो न क्षम इति मध्यस्थदृष्ट्या संपश्यध्वम्। तत्र पक्षे पतन्तस्तु पतन्त्येव पर[म]धर्ममर्यादोपप्लवात्। अतो वैखानसपञ्चरात्रयोः पञ्चरात्रावान्तरभेदचतुष्कस्य तत्तदवान्तरतन्त्रभेदानां च परस्परमसङ्करेणैव सर्वदा स्थितिरिति सिद्धम्। तत्रेदन्तु किञ्चिद्विमर्शनीयम्—यत्तत्**पारमेश्वरकालोत्तर**योः प्रमाणभूतानामेव भगवच्छास्त्रसिद्धान्तानामाकारान्तरेणोत्कर्षापकर्षयोगात्प्राक्प्रवृत्तापकृष्टसिद्धान्तपरित्यागेनाप्युत्कृष्टसिद्धान्तप्रवेशनं न दोषाय प्रत्युत गुणायैव; उत्कृष्टतन्त्रपरित्यागेन निकृष्टतन्त्रप्रवेशने समानतन्त्रसङ्करे च दोष इत्युक्तम्। इदमपि दत्तोत्तरप्रायम्, तथा हि; **श्रीसात्त्वते** द्वाविंशे परिच्छेदे समयिपुत्रकसाधकलक्षणोक्त्यनन्तरमाचार्यलक्षणे *साङ्कर्यमागमानां च वेत्ति वाक्यवशात्तु यः इत्युक्त्वा शास्त्रसङ्करशोधनार्थमनन्तरमुच्यते—

*तत्र वै त्रिविधं वाक्यं दिव्यं च मुनिभाषितम्। पौरुषं चारविन्दाक्ष तद्भेदमवधारय ॥<br>
यदर्थाढ्यमसंदिग्धं स्वच्छमल्पाक्षरं स्थिरम्। यत्पारमेश्वरं वाक्यमाज्ञासिद्धं हि मोक्षदम् ॥<br>
प्रशंसकं वै सिद्धीनां संप्रवर्तनमप्यथ। सर्वेषां रञ्जकं गूढं निश्चयीकरणक्षमम् ॥<br>
मुनिवाक्यं च तद्विद्धि चतुर्वर्गफलप्रदम्। अनर्थकमसंबद्धम[पा]ल्पार्थं शब्दडम्बरम् ॥<br>
अनिर्वाहकमाद्योक्तेर्वाक्यं तत्पौरुषं स्मृतम्। हेयं चानर्थसिद्धीनामाकरं नरकावहम् ॥<br>
प्रसिद्धार्थानुवादं यत् सङ्गतार्थं विलक्षणम्। अपि चेत्पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ॥ इति।

अत्र *अनिर्वाहकमाद्योक्तेः इति दिव्यमुनिभाषितयोर्विरुद्धार्थत्वमुच्यते। असंबद्धमिति पूर्वापरविरुद्धत्वम्। तदिदमुभयमपि निकृष्टसंहितात्यागेनोत्कृष्टसंहितापरिग्रहवचने श्रीसात्त्वतपौष्करनादीयपाद्मादिविरोधात् सामान्येन

सर्वसङ्करनिषेधपरस्परपूर्वापरग्रन्थविरोधमवधारयन्तो धृष्टबुद्धयः कतिचन तन्त्रतन्त्रान्तरमर्यादाप्रवृत्तस्थानाक्रमणलुब्धागम-मन्त्रसिद्धान्ताभिमानिपुरुषकृतप्रक्षेपोऽयमिति मन्यन्ते ॥

अन्ये तु—प्रागुक्तन्यायेन मन्त्रसिद्धान्तादिस्तुतिपरतामातिष्ठन्ते । न खल्वेतावता कालेन कल्पारम्भकृतयुगाप्रभृति संतन्यमानेषु सात्वतशास्त्रसंहितास्रोतोभेदेषु अपकृष्टसंहितां परित्यज्योत्कृष्टसंहितां कश्चित्परिजग्राहेति महाभारते श्रीमद्वाराहादिषु वा परश्शतेषु पञ्चरात्रप्रस्तावेषु महर्षयस्सूचयन्ति, नचार्वाचीनैरप्याचार्यैरितःपूर्वं तथाकृतमिति संप्रदाय-विदश्शिष्टा विदामासुः । अतश्शिष्टानुष्ठानबलादेव स्तुतिपरत्वमध्यवस्यामः । यदि चैवं शास्त्रार्थस्स्यात्, एतावता कालेन तन्त्रतन्त्रान्तरस्थानानि सर्वाणि मन्त्रसिद्धान्तादिना व्याप्येरन् । इतःपूर्वमनुवृत्तावपि परस्तादेतद्वलावलम्बनेन तन्त्रतन्त्रान्तर-सिद्धान्तयोस्सर्वत्रोच्छेदः प्रसज्येत । अथ चेदैहिकभोगादिप्राचुर्यात्पुरुषाणां च त्रिवर्गप्रावण्यातिशयात्तन्त्रतन्त्रान्तरयो-स्सर्वत्रानुवृत्तिस्संभवतीति मन्वीथाः, तर्हि राजराष्ट्रसमृद्ध्यर्थेषु स्थानेष्वैहिकफलप्रचुरयोरेव तन्त्रतन्त्रान्तरयोर्यथापूर्वमवस्थान-मुचितम्, नहि राजसु वा राष्ट्रेषु वा सुलभाः केवलमुमुक्षवः । **श्रीकरसंहितायां** च प्रागुक्तस्यैव सिद्धान्तचतुष्टयस्य वेद-सिद्धान्तो दिव्यसिद्धान्तस्तन्त्रसिद्धान्तः पुराणसिद्धान्त इति प्रागुक्तादूरविप्रकृष्टैर्नामभेदैर्विभागमुक्त्वा पुराणसिद्धान्तसंज्ञितस्य तन्त्रान्तरसिद्धान्तस्य मोक्षप्रदस्यापि विशेषतः श्रीकरत्वमुक्तम्—

* एतत्पुराणसिद्धान्तं श्रीकरं च विशेषतः । इदं श्रीकरसंज्ञाख्यं भोगमोक्षफलप्रदम् ॥ इति ।

अस्य च पूर्वापरं सर्वं **सन्मार्गदीपिकायां** विस्तरेण द्रष्टव्यम् । भोगमोक्षफलप्रदमित्यस्य श्रीकरसंज्ञसंहिता-विशेषान्वितत्वेऽपि तस्यास्संहितायाः पुराणसिद्धान्तान्तःपातित्वाद्विशेष इति नियमाच्चकारेणानुक्तसमुच्चयाच्च कृत्स्नस्यापि तन्त्रान्तरसिद्धान्तस्य विशेषतः श्रीकरत्वं मोक्षप्रदत्वं च सिद्धम् । श्रीकामाश्च प्रायशो राजानो राष्ट्रवर्तिनश्चेति तत्समृ-द्ध्यर्थेषु साधारणस्थानेषु तन्त्रान्तरसिद्धान्तस्यौचित्यमधिकम् । निस्सङ्गास्तु स्वगृहादिष्वागमसिद्धान्तादिमर्यादामनुतिष्ठन्तु नाम ; अतस्तन्त्रतन्त्रान्तरस्थानेष्वन्यसिद्धान्तावतरणवचनमपवर्गप्रत्यासत्त्यतिशयनिबन्धनप्राशस्त्याधिक्यपरमिति मन्तव्यम् । तदपेक्षयैवेदमुक्तं **कालोत्तरे**—* स्वयं व्यक्तं तथा दिव्यमुत्कृष्टफलदं यतः इति ॥

अपरे त्वाहुः—व्यवस्थितस्थानविषयमेवेदमपकृष्टसंहितात्यागेनोत्कृष्टसंहितापरिग्रहवचनमिति । तथा हि ; यदुक्तं **कालोत्तरे**—* अनेकभेदभिन्नं च पञ्चरात्राख्यमागमम् । पूर्वमागमसिद्धान्तं मन्त्राख्यं तदनन्तरम् ॥
तन्त्रं तन्त्रान्तरं चेति चतुर्धा परिकीर्तितम् ॥

इति चतुर्धा विभागं सामान्येन प्रतिपाद्य, * नारायणीयमौदध्यमग्निकाश्यपसंज्ञितम् इत्यादिना * शास्त्राण्येतानि सुव्रत इत्यन्तेनागमादिसिद्धान्तेषु चतुर्षु कतिपयसंहितानां निदर्शनमनुक्तानामपि संहितानामुपलक्षणतयोदाहृत्य * एतद्वै पञ्चरात्राख्यं शास्त्रं सर्वोत्तमोत्तमम् इति चतुर्विधमपि पञ्चरात्रशास्त्रं सर्वोत्तमोत्तमत्वेन निगम्य—

* चतुर्धा भेदभिन्नं च स्वयंव्यक्तादिभेदतः । स्वयंव्यक्तं हि सिद्धान्तमागमाख्यं पुरोदितम् ॥
मन्त्रसिद्धान्तसंज्ञं यत्तद्दिव्यं परिकीर्तितम् । तन्त्रसंज्ञं हि यच्छास्त्रं तत्सैद्धं समुदाहृतम् ॥
तन्त्रान्तरं तु यत्प्रोक्तमार्षं तु तदुदाहृतम् ॥

इति प्रागुक्तानामेवागमादिसिद्धान्तानां स्वयंव्यक्तदिव्यसैद्धार्षरूपेण वक्ष्यमाणोपयोगिसंज्ञान्तराणि निर्दिश्य,

* स्वयंव्यक्तेन दिव्येन पूज्यमाने तु कौतुकात् । तन्त्रतन्त्रान्तराभ्यां तु न कुर्याद्देवपूजनम् ॥

पूज्यते यदि संमोहात्स्थाननाशो भवेद्ध्रुवम् । राज्ञो राष्ट्रस्य कर्तुश्च मरणं जायते ध्रुवम् ॥
तस्मात्पूजा न कर्तव्या तन्त्रतन्त्रान्तराध्वना । अनुक्तं यत्स्वयंव्यक्ते दिव्यशास्त्रे द्विजोत्तम ॥
यत्किञ्चित्तत्तदादेयं तन्त्रतन्त्रान्तरे तथा । तन्त्रतन्त्रान्तरोक्तेन पूज्यमानेऽपि देशिकैः ॥
तद्विधानं परित्यज्य स्वयंव्यक्तोक्तवर्त्मना । दिव्योक्तविधिना कार्यं पूजनं प्रतिमासु च ॥
स्वयंव्यक्तं तथा दिव्यमुत्कृष्टफलदं यतः । तस्मादुत्कृष्टशास्त्रोक्तमार्गेणैव प्रपूजयेत् ॥

इति तन्त्रतन्त्रान्तराभ्यां पूज्यमानेऽपि तद्विधानं परित्यज्योत्कृष्टफलदत्वेनोत्कृष्टेन स्वयंव्यक्तेन दिव्येन च शास्त्रेण पूजनं युक्तमिति ; तदिदं सर्वस्थानविषयम्, प्रतिनियतस्थानविषयं वा ? इति विचारणीयम् ; यदि सर्वस्थानविषयं तदा परिगृहीततमसात्त्वताद्यनेकसंहिताग्रन्थसङ्कोचः प्रसज्येत । अपि चास्मिन्नेवोत्तरत्र स्वयंव्यक्तादिस्थानलक्षणनिरूपणाध्याये तत्तत्स्थानलक्षणमुक्त्वा पश्चाच्चतुर्विधपूजानिर्णयाध्याये चतुर्विधपूजनस्य यथाक्रमं * वैदिकं तान्त्रिकं श्रौतं मिश्रं चेति चतुर्विधम् इति प्रक्रम्य मूलश्रुतिदिव्यमन्त्रप्रवृत्तश्रुतितत्संभेदनिमित्तनामधेयानि प्रतिपाद्यानन्तरमुच्यते—

* वैदिकैस्तान्त्रिकैर्वाऽपि श्रौतैर्वा द्विजसत्तम । स्वयंव्यक्ते तु भवने मिश्रैर्वा देवमर्चयेत् ॥
ऋष्यादिपूजिते स्थाने पारम्पर्यक्रमं विना । विशेषं नाचरेत्किञ्चिद्राजराष्ट्रसमृद्धये ॥ इति ।

अत्र स्वयंव्यक्तस्थाने चतुर्णां पूजाविशेषाणां यथारुचि विकल्पेन परिग्रहं प्रतिपाद्य ऋष्यादिपूजितेषु स्थानान्तरेषु पारम्पर्यक्रममन्तरेण मात्रयाऽपि विशेषं नाचरेदित्युक्तत्वात् स्वयंव्यक्ते विकल्पेन कर्मणां प्रवृत्तिस्संभवतीति तत्रैवापकृष्टफलशास्त्रपरित्यागेनोत्कृष्टफलशास्त्रपरिग्रहवचनं लिङ्गवशान्नेतव्यम् । * पवित्रं दक्षिणे कर्णे इतिलिङ्गात् * दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्रः इत्यस्य स्थाननियमवत्प्रतिनियतस्वयंव्यक्तेषु स्थानेष्विति व्यक्तमवसीयते । अस्मिन्नेवोत्तरत्र प्रायश्चित्ताध्यायेऽपि * वैदिकैस्तान्त्रिकैर्वेत्यादिश्लोकद्वयं पुनः पठितम् ; * मानुषे भवने देवं तन्त्रमार्गेण पूजयेदिति चोक्तम् ।

पुनश्च— * यद्बिम्बं येन शास्त्रेण समारब्धं पुरा द्विज । प्रासादं वा ततस्तेन शास्त्रेणैव तदर्चयेत् ॥
तच्छास्त्रमन्तरेणैव यो यजेदन्यवर्त्मना । राज्ञो राष्ट्रस्य कर्तुश्च स नाशं कर्तुमिच्छति ॥
न कदाचिदपि प्राज्ञः प्रकुर्याच्छास्त्रसङ्करम् । शास्त्रसङ्करदोषेण महान् दोषो भवेद्ध्रुवम् ॥ इत्युक्तम् ;

अतोऽप्यत्रापकृष्टशास्त्रपरित्यागेनोत्कृष्टशास्त्रपरिग्रहवचनं स्वेनैव नानाशास्त्रार्थविकल्पयोग्यत्वेन प्रतिपादिते स्वयंव्यक्ते स्थाने न स्थापनीयमिति सिद्धम् । यदपि चात्र स्थानविशेषमधिकृत्य शास्त्राधिकारिणोर्नियमः क्रियते—

* स्वयंव्यक्ते तथा दिव्ये दिव्यशास्त्रोक्तवर्त्मना । मूलागमसमेतेन मुख्यैर्भागवतैस्सदा ॥
पूजनं प्रयतैः कार्यं पञ्चकालपरायणैः । वैष्णवायतने कार्यं केवलैः पाञ्चरात्रिकैः ॥
सान्तानिकैः प्रविष्टैर्वा मुनिवाक्योक्तवर्त्मना । अनुक्तान्यर्थजालानि सिद्धान्तेष्वागमादिषु ॥
अन्योन्यापेक्षया ग्राह्यं शास्त्रेष्वन्यन्न चाहरेत् ॥ इति,

एतदपि प्रकृष्टस्थाने प्रकृष्टाधिकारिणां प्रकृष्टशास्त्रादिपरिग्रहौचित्यमप्रकृष्टस्थानेऽप्रकृष्टाधिकारिणामपकृष्टशास्त्रादियोग्यत्वं च स्थापयति, अन्यथा वैष्णवायतने क्वचिदपि दिव्यशास्त्रानवतारप्रसङ्गात् । मानुषेऽपि भवने मुख्याधिकारिभिः प्रतिष्ठिते दिव्यशास्त्रेण पूजनादिकर्तव्यत्वस्य पारमेश्वरनिरूपणे दर्शयिष्यमाणत्वाच्च । अत्रापि सिद्धान्तसङ्करपरिहार एव * अनुक्तान्यर्थजालानि इत्यादिना स्थापितः । यत्पुनः **पारमेश्वरे** स्वयंव्यक्तनिर्णयाध्याये—

*स्वयंव्यक्तं तथा सिद्धविबुधैश्च प्रतिष्ठितम् । मुनिमुख्यैस्तु गन्धर्वैर्यक्षैर्विद्याधरैरपि ॥
रक्षोभिरधमैर्मुख्यैः स्थापितं मन्त्रविग्रहम् । दिव्यशास्त्रोक्तविधिना पूजयेच्छास्त्रकोविदः ॥' इति,

इदमपि दिव्यशास्त्रस्य सर्वस्थानेषु [सद्भा]संभवं दर्शयति, नतु शास्त्रान्तरपरित्यागेन दिव्यप्रवेशम् । यच्चानन्तरमुक्तम्—*स्थापितं मनुजैर्देवं मुनिवाक्येन यत्र तु । पूजयेद्द्विज तत्रापि ज्ञानिभिस्तत्त्वदर्शिभिः ॥
वासुदेवैकनिष्ठैस्तु देवतान्तरवर्जितैः ॥ इति,

इदञ्च व्यामिश्रमुनिवाक्यस्थापिते स्थाने व्यामिश्रयागमुक्तैर्वासुदेवैकनिष्ठैः पूजनमात्रं प्रशस्तमित्याह, न पुनर्मुनिवाक्यपरित्यागेनास्याधिकारानुगुणोत्कृष्टशास्त्रेण पूजनं विदधाति, प्राक्प्रवृत्तशास्त्रानुसारेण तैरपि तत्र पूजनस्य युक्तत्वात् । उत्कृष्टशास्त्रनिष्ठानामप्यपकृष्टशास्त्रधर्मेषु लोकानुग्रहार्थं प्रवृत्तेः संहितान्तरादिसिद्धत्वस्य प्रागेव दर्शितत्वात् । यच्चेदमनन्तरमभिधीयते—*व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितैः । स्थापितं मनुजेन्द्रैस्तु निषद्धाकादिकोविदैः ॥
अर्चयेद्देवदेवेशं दिव्यशास्त्रोक्तवर्त्मना ॥ इति,

इदमपि दिव्यशास्त्रेण स्थापितस्थानविषयमनुसन्धेयम् । इदं त्ववशिष्यते ; यदुक्तम्—

*मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते । तत्रापि दिव्यमार्गाच्चेत्पूजनं कर्तुमिच्छति ॥
मुनिवाक्यं परित्यज्य दिव्यमार्गेण पूजयेत् । भवेत्सन्निधिमाहात्म्यं कालं कल्पक्षयावधि ॥
दिव्यमार्गेण पूजाद्यं वर्तते यत्र नित्यशः । तत्र दिव्यं परित्यज्य कदाचिच्च महामते ॥
मुनिवाक्योक्तमार्गेण न कुर्यात्पूजनादिकम् । कुर्याद्वा यदि वा मोहात् विप्रस्संमूढचेतनः ॥
स वृथार्थश्चिरात्तस्य भक्तिबीजेन वै सह । समन्त्रकर्मतन्त्रं च सिद्धयश्च पराङ्मुखाः ॥
इहैव शीघ्रं विप्रेन्द्र देहान्ते शतसन्ततिः । घोरं प्रयाति नरकं राजा राष्ट्रं च नश्यति ॥
तस्मात्सर्वप्रयत्नेन दिव्यमार्गं तु न त्यजेत् ॥ इति,

अस्यापि प्रागुक्तन्यायेन दिव्यमार्गप्रशंसापरत्वं सुव्यक्तम् । तत्रापीत्यपिशब्दादिलिङ्गात् *दिव्यमार्गं तु न त्यजेत् इति निगमनेन तत्रैव तात्पर्यविश्रमाच्च । यद्वा कालोत्तरोक्तन्यायेन विकल्पतश्चतुर्विधपूजायोग्यं स्वयंव्यक्तस्थानं *मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते इत्यनूद्य, तत्रापि दिव्यमार्गेण पूजनेच्छायां मुनिवाक्यपरित्यागेन दिव्यमार्गेण पूजनमविरुद्धमित्युच्यते ; नह्यत्र मुनिवाक्यस्थापितस्थाने दिव्यमार्गप्रवेशः क्वचिदपि प्रस्तूयते, अपि तु मुनिवाक्यपूजित एव । सा च मुनिवाक्येन पूजा स्वयंव्यक्तेऽपि पूर्वं यदि वर्तेत, तत्र कुतश्चित्प्रमाणात्स्वयंव्यक्तक्षेत्रत्वेऽवसिते सति मुनिवाक्यपरित्यागेनापि दिव्यशास्त्रोक्तविधिना दिव्यशास्त्राधिकारी पूजयेदित्युक्तं भवति ।

एतेन दिव्याद्यायतननिर्णयाध्यायोक्तः प्रपञ्चोऽपि प्रत्युक्तः । तथा हि ;

*दिव्याद्यायतनानां च पूजाद्यं यत्त्वयोदितम् । शास्त्रं दिव्यादिभेदेन यथावद्वक्तुमर्हसि ॥

इति पृष्टस्सनकः *वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयमित्यादिना साक्षाद्भगवत्प्रणीतं ब्रह्मरुद्रेन्द्रप्रमुखैः प्रवर्तितं शास्त्रं दिव्यमित्युक्त्वा,

*ब्रह्मरुद्रमुखैर्देवै ऋषिभिश्च तपोधनैः । स्वयं प्रणीतं यच्छास्त्रं तद्विद्धि मुनिभाषितम् ॥

इति विभज्य, * एतत्तु त्रिविधं विद्धि सात्त्विकादिविभेदतः इति मुनिभाषितस्य त्रैविध्यं प्रस्तुत्य, साक्षाद्भगवतः श्रुतार्थमात्रनिबन्धनरूपं शास्त्रं सात्त्विकम्, भगवतः श्रुतमेकदेशं स्वयोगमहिमसिद्धं चाशेषं सङ्कलय्य ब्रह्मादिभिस्तच्छिष्यैश्च स्वयं प्रणीतं शास्त्रं राजसम्, केवलसत्त्वयोगविकल्पोत्थैरर्थैः कृतं शास्त्रं तामसमिति मुनिभाषितस्य त्रैविध्यमुक्त्वा, * केवलं मनुजैर्यत्तु कृतं तत्पौरुषं भवेत् इति दिव्यान्मुनिभाषिताच्च व्यक्तीभवतः प्रामाण्यम् (?) अयोगिभिर्मनुजमात्रैः प्रणीतं पौरुषं वाक्यं प्रतिपाद्य, पुनर्दिव्यसात्त्विकराजसतामससंज्ञितानि प्रमाणभूतान्येव शास्त्राणि संहिताविशेषनियमेनापि विभज्य, सात्त्वतपौष्करजयाख्यादीनि शास्त्राणि दिव्यानि; ईश्वरभारद्वाजसौमन्तवपारमेश्वरवैहायसचित्रशिखण्डिसंहिताजयोत्तरादीनि सात्त्विकानि, सनत्कुमारपद्मोद्भवशातातपतेजोद्रविणमायावैभविकादीनि राजसानि, पञ्चप्रश्नशुकप्रश्नतत्त्वसागरादीनि तामसानि इति संहिताविभागनिर्देशानन्तरमुच्यते—

* तामसेन तु मार्गेण पूजाद्यं यत्र वर्तते । तत्रापि राजसेनैव पूजाद्यं सिद्धिदं भवेत् ॥
राजसेन तु पूजाद्यं वर्तते यत्र नित्यशः । तत्रापि सात्त्विकेनैव पूजाद्यं शुभदं सदा ॥
सात्त्विकेन तु पूजाद्यं वर्तते यत्र नित्यशः । तत्र राजसमार्गेण न कुर्यात्पूजनादिकम् ॥
यत्र राजसमार्गेण प्रवृत्तं त्वर्चनादिकम् । तत्र तामसमार्गेण न कुर्यादर्चनादिकम् ॥
विविधानां राजसानामन्योन्यं स्यान्न सङ्करः ॥

इति मुनिभाषितेषु त्रिषु शास्त्रेषूत्कृष्टमध्यमाधमसंज्ञानिर्दिष्टेषु अपकृष्टगुणसंज्ञितशास्त्रप्रवृत्तिस्थाने तत्परित्यागेनाप्युत्कृष्टगुणसंज्ञितशास्त्रेण पूजाद्यं सिद्धिदम्, उत्कृष्टगुणसंज्ञितशास्त्रप्रवृत्तिस्थाने तद्विपरीतेन शास्त्रेण पूजादिकं न कर्तव्यम्, न तु सार्वत्रिकत्वम् । ननु गुणसंज्ञितानां चान्योन्यं न सङ्करः कार्यमित्युक्तम् । इहापि यत्रेति सामान्यनिर्दिष्टेऽपि प्रागुक्तन्यायेन प्रभूतानुभावितया सर्वसहस्वयंव्यक्तक्षेत्रविशेषविषयत्वं मन्तव्यम् । यद्वा चिरकालराष्ट्रक्षोभादिना विच्छिन्नपारम्पर्यप्रत्यभिज्ञानेषु किङ्कर्तव्यतामूढान् प्रति पूर्वमपकृष्टशास्त्रप्रवृत्तावपि तदज्ञानदशायामुपप्लवाभिसन्ध्यभावात्सर्वाधिकारिणां मुख्यानामुत्कृष्टशास्त्रपरिग्रहौचित्यमिहोच्यते । तत्र पुनः कुतश्चित्प्रमाणात् प्राक्प्रवृत्तशास्त्रज्ञानेन दिव्यस्यापरित्याज्यत्वं च; इदं च तत्रापीत्यतिवादलिङ्गादपिशब्दात् । अपिशब्दस्यातिवादलिङ्गत्वं * चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः इत्यादिप्रयोगेषु प्रसिद्धम् । अत एव ह्यत्रैव पुनस्सङ्करपरिहारे संरम्भः क्रियते—

* भवेद्दिव्यादिकं सम्यग् ज्ञात्वा सर्वं समाचरेत् । यो न ज्ञात्वा तु साङ्कर्यात्पूजाद्यमनुतिष्ठति ॥
स हि सर्वस्य जगतस्साङ्कर्यं कुरुते सदा । विशेषात्स्वस्य वंशस्य तस्मादापद्यपि द्विजः ॥
न कुर्याच्छास्त्रसाङ्कर्यं हितैषी शास्त्रकोविदः ॥ इति ।

अतो यथोक्त एवार्थः ॥

केचित्तु—* मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते । तत्रापि दिव्यमार्गाच्चेत्पूजनं कर्तुमिच्छति ॥
मुनिवाक्यं परित्यज्य दिव्यमार्गेण पूजयेत् ।

इत्यादीनां वचनानामधिकारिविशेषविषयतया व्यवस्थामिच्छन्ति; * व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितैः इति प्रक्रमादैहिकामुष्मिकसांसारिकफलविरक्तानामपवर्गासन्नतमशास्त्रपरिग्रहस्य युक्तत्वाच्च । तत्तन्त्रोक्तसांसारिकफलासक्तानां तु यथापूर्वं परिग्रह इति । न चात्र राजसतामससंज्ञितेषु शास्त्रेषु अकुतोप्रामाण्यमाशङ्कनीयम्—

*स्यान्नागरद्राविडवेसरं च क्रमेण वै सत्त्वरजस्तमांसि ।
महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आदिदेवः ॥

इति विमानक्रियादिविषयोत्तममध्यमत्वादिविवक्षया तद्गुणोक्तेः, प्रमाणभूतशास्त्रविषयेष्वेव सात्त्विकराजसतामसविभागस्य *यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः इत्यादिभिर्भगवद्गीतायामपि प्रतिपादितत्वात् । अप्रामाण्यस्य पौरुषस्य वाक्यस्य *केवलं मनुजैर्यत्तु कृतं तत्पौरुषं भवेत् इति पृथङ्निर्देशात् ।

*सर्वत्र पौरुषे वाक्ये तद्ग्राह्यमविरोधि यत् । केवलं तद्विधानेन न कुर्यात्स्थापनादिकम् ॥

इति हि पौरुषसंज्ञिते हि वाक्ये [विरुद्धा]विरुद्धांशसद्भावोऽत्र दर्शितः, अतस्सात्विकराजसतामससंज्ञानिवेशोऽत्र सत्त्व-रजस्तमःप्रचुरतत्तत्फलसिद्धिविशेषतारतम्याभिप्रायेणेति मन्तव्यम् । कार्त्स्न्येन हि भगवच्छास्त्रस्य प्रामाण्यं प्रागेव प्रतिपादितम् । न चात्र भगवद्व्यतिरिक्तब्रह्मादिपुरुषकृतांशेषु कारणदोषस्संभवति—*पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् इति स्ववक्तृके शास्त्रे भगवतैव तेषामृषीणां तत्तत्पुण्यविशेषानुसारेण नित्येऽपि वेदे सूत्रकाण्डमन्त्रकृत्त्ववत्संहिता-कर्तृत्वस्याधिकारतया समर्पितत्वात् । यथा च व्यासोक्ते **महाभारते** वैशम्पायनसंहितादिभेदः, एवमत्रापीति न सङ्कटं किञ्चित्; अतः कृत्स्नं पञ्चरात्रं प्रमाणम् । तस्यावान्तरसंहिताभेदम् ऋगादिवच्चतुर्धा स्थितम्, तद्वदेव यथाधिकारं व्यवस्थितानुष्ठानतया सिद्धान्तादिसङ्करपरिहारेणैव सर्वदाऽनुवर्तनीयम् । तथाऽनु[वर्तने]वर्तमानानां यथाधिकारं साक्षात्परम्परया वा सद्ब्रह्मवासुदेवाख्यपरमपुरुषार्थप्राप्तिसाधनमिति सिद्धम् ॥

पञ्चकालव्यवस्थित्यै वेङ्कटेशविपश्चिता । श्रीपाञ्चरात्रसिद्धान्तव्यवस्थेयं समर्थिता ॥

अहितविहतिदक्षैर्बाहुभिर्व्यूहभेदैर्निजनिगमशतैश्च व्यक्तभूमा चतुर्भिः ।
प्रथमयुगसमग्रं धर्ममभ्यस्यमानान् प्रशमितकलुषान्नः पातु वैकुण्ठनाथः ॥

**इति श्रीपाञ्चरात्ररक्षायां सिद्धान्तव्यवस्थापनाख्यः प्रथमोऽधिकारः ॥**

---

## ॥ अथ नित्यानुष्ठानस्थापनाख्यो द्वितीयोऽधिकारः ॥

अथादौ समुपक्षिप्तमच्छिद्रं स्थाप्यतेऽधुना । स्वयंप्रयोजनं नित्यं स्वामिसेवनमञ्जसा ॥
ससामान्यविशेषात्मा चर्येयं हृदयङ्गमा । ससूत्रसुमनस्स्तोमा मालेवामोदिनी विभोः ॥

इह तावदेकैकस्मिन्नहोरात्रे कालपञ्चकविभागेनाभिगमनोपादानेज्यास्वाध्याययोगरूपभगवत्सेवनं स्ववर्णाश्रमजाति-गुणनिमित्तादिनियतधर्मसचिवं भगवद्धर्मनिष्ठानां सर्वेषां समानम्, तच्च संहिताभेदेषु चोदनाख्याविशेषेऽपि सूत्रभेदेषु समानचोदनाख्यचत्वारिंशत्संस्कारादिवल्लेशतो भिन्नरूपं प्रतिपाद्यते । तत्र रहस्याम्नायविदामेवायं धर्म इत्यविदितसात्त्वत-धर्माणामाकस्मिको भ्रमः, ते तु स्वशाखोक्तप्रकारेण पाञ्चकालिकधर्ममनुतिष्ठन्ति; इतरे च यथास्वं तत्संहितोक्तप्रक्रिययेति व्यवस्था । वर्गद्वयेऽपि अधिकारिविशेषमात्रेणैव हि भेदोऽनुशिष्यते । यथोक्तं **पाद्मे**—

*ब्रह्मोवाच—कर्षणादिप्रतिष्ठान्तं कर्म यस्य प्रसिद्धये । तं समाराधनविधिं श्रोतुमिच्छामि सांप्रतम् ॥
आराधनविधिः कीदृगधिकारी च कीदृशः । भगवंस्तदशेषेण ब्रूहि मे भक्तवत्सल ॥

भगवानुवाच—श्रूयतामभिधास्यामि पृष्टं निरवशेषतः। चतुर्णां ब्राह्मणादीनां वर्णानां कमलासन॥
अधिकारोऽनुलोमानामपि नान्यस्य कस्यचित्। पूजाविधौ भगवतस्तेऽनुकल्पाधिकारिणः॥
प्रतिलोमभुवां सूतः प्रथमं तत्र शस्यते। आद्यमेकायनं वेदं सद्ब्रह्मप्रतिपादकम्॥
तेनैव संस्कृता विप्रा मुख्यकल्पाधिकारिणः। त्रयाणां क्षत्रियादीनामनुलोमभुवामपि॥
सूतस्य च विशेषेण दीक्षा चात्मपराऽनिशम्। परार्थयजनं कुर्युर्विप्रा मुख्यानुकल्पयोः॥
नैवाधिकारिणो गौणा दीक्षासंस्कारवर्जिताः। यथैव दीक्षणीयेष्ट्या जायन्ते ब्राह्मणादयः॥
तथैव दीक्षाविधिना जायमाना यथोदिताः। पूजाविधौ भगवतः प्रकल्पन्तेऽधिकारिणः॥ इत्यादि।

एवं संहितान्तरेष्वपि ग्राह्यम्। तदिह तत्तत्सिद्धान्तोक्तवर्त्मना चतुर्विधपञ्चरात्राणां साधारणमभिगमनादिपञ्चकम्। मन्त्रसिद्धान्तादिष्वपि हि कालपञ्चकविभागोऽयमुपदिश्यते। यथोक्तं साक्षाद्भगवन्मुखोद्गततया रत्नत्रयमितिप्रसिद्धेषु **जयाख्यसात्त्वतपौष्करेषु, जयाख्यसंहितायाम्—**

नारदः— *एको हि श्रूयते देव कालो लोके न चापरः। पञ्च कालास्त्वयोद्दिष्टाः किमेतन्मेऽत्र संशयः॥
श्रीभगवानुवाच—एकस्यैव हि कालस्य वासरीयस्य नारद। आप्रभातादानिशान्तं पञ्चधा परिकल्पना॥
पृथक्कर्मवशात्कार्या न काला बहवस्स्मृताः॥

नारदः— एककालाश्रितानां च कर्मणां लक्षणं वद। परिज्ञातैस्तु यैस्सद्यः कृतकृत्यो भवाम्यहम्॥
श्रीभगवानुवाच—ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र वासरे। जपध्यानार्चनस्तोत्रैः कर्मवाक्चित्तसंयुतैः॥
अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम्। ततः पुष्पफलादीनामुत्थायार्जनमाचरेत्॥
भगवद्यागनिष्पत्तिकारणं प्रहरः परम्। तदुपादानसंज्ञं वै कर्मकालपदाश्रितम्॥
ततोऽष्टाङ्गेन यागेन पूजयेत्परमेश्वरम्। साधिकं प्रहरं विप्र इज्याकालस्तु संस्मृतः॥
श्रवणं चिन्तनं व्याख्या तपःपाठसमन्विता। स्वाध्यायसंज्ञं तद्विद्धि कालांशं मुनिसत्तम॥
दिनावसाने संप्राप्ते पूजां कृत्वा समभ्यसेत्। योगं निशावसाने च विश्रमैरन्तरीकृतम्॥
पञ्चमो योगसंज्ञोऽसौ कालांशो ब्रह्मसिद्धिदः।

नारदः— श्रुतो मयाऽखिलः पूर्वं भगवद्याग उत्तरः। तस्याङ्गानि विभागेन ज्ञातुमिच्छाम्यहं पुनः॥
श्रीभगवानुवाच—अन्तःकरणयागादि यावदात्मनिवेदनम्। तदाद्यमङ्गं यागस्य तच्चाभिगमनं भवेत्॥
पूजनं चार्घ्यपुष्पाद्यैर्भोगैर्यदखिलं मुने। बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद॥
मध्वाज्याक्तेन दध्ना वै पूजा च पशुना सह। तत्तृतीयं हि यागाङ्गं तुर्यमन्नेन पूजनम्॥
निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने। संप्रदानं तु तन्नाम यागाङ्गं पञ्चमं स्मृतम्॥
वह्निसन्तर्पणं षष्ठं पितृयागं तु सप्तमम्। प्राणाग्निहवनं नाम्ना त्वनुयागं तदष्टमम्॥
इत्येतत्कथितं सर्वं यत्त्वया परिचोदितम्। प्रददाम्यचिराद्यद्वै तन्निष्ठानां परं पदम्॥ इति।

अचिरादित्यनेनास्य कर्मणः कर्मान्तरेभ्यस्स्वभावतः प्राशस्त्यमुच्यते। स्मरन्ति च **व्यासादयः—**
*न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्। सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः॥ इति।

प्रयाससाम्यवैषम्यानादरेण स्वरूपतः प्राशस्त्यं द्रव्यादिष्वपि विद्यते । यथोक्तमाश्वमेधिके श्रीवैष्णवधर्मशास्त्रे—

* सर्वेषामेव पुष्पाणां सहस्रगुणमुत्पलम् । तस्मात्पद्मं तथा राजन् पद्मात्तु शतपत्रकम् ॥
तस्मात्सहस्रपत्रं तु पुण्डरीकमतः परम् । पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ॥
बकपुष्पं ततस्तु स्यात्सौवर्णं तु ततोऽधिकम् । सौवर्णाच्च प्रसूनात्तु मत्प्रियं नास्ति पाण्डव ॥ इति ।

एवं जपहोमदानादिष्वपि प्रसिद्धम् । **पाद्मे**ऽप्येवं प्रसिद्धतमं पञ्चकालसेवनमुक्तम्—

* ब्रह्मोवाच—पञ्चकालविशुद्धानां प्राशस्त्यं भगवन्निह । कथितं पञ्च के काला विधयश्चापि पञ्च के ॥
मह्यं जिज्ञासमानाय कथयस्व यथातथम् । न चेद्रहस्यमत्यन्तं यदहं पृष्टवानिदम् ॥

श्रीभगवानुवाच—आद्यं कर्माभिगमनमुपादानं ततःपरम् । इज्या च पश्चात्स्वाध्यायस्ततो योगस्ततः परम् ॥
पञ्च ते विधयस्तेषां कालाः पञ्चैव ते क्रमात् । कल्याणाचरणान्तं यत्कर्मजातं चतुर्मुख ॥
उत्थानादिक्रमादेतदभियानमुदीरितम् । ब्राह्मे मुहूर्ते बुध्येत ध्यायन्नारायणं परम् ॥
उत्थायासीत शयने कीर्तयन्नाम वैष्णवम् ।

इत्यादिरध्यायः कृत्स्नोऽपि पाठ्यः । एवं संहितान्तरेष्वपि तत्र तत्र संग्रहेण विस्तरेण च पञ्चकालविधिर्द्रष्टव्यः ।

किंच— * नमस्ते पञ्चकालज्ञ पञ्चकालपरायण । पञ्चकालैकमनसां त्वमेव गतिरव्यय ॥

इत्यादिषु पाञ्चकालिकधर्मस्य भगवदेकवेद्यत्वं भगवत्प्रियतरत्वं तन्निष्ठानामप्यव्यवधानेन भगवत्प्राप्तिश्च प्रतिपाद्यते ॥

यदुक्तम् **भोजराजेन प्रयोगपद्धतिरत्नावल्याम्**—* तत्र सङ्गवादयः काला अहरहः प्रवर्तन्ते, * सङ्गवस्समो विष्णुप्रियो धर्मो विराग इति पञ्चकाला अध्यात्मविद्भिरुपदिष्टाः, उदयात्पञ्च नाड्यस्सङ्गव उक्तः, तस्माद्द्विगुणमात्रात्सम उपदिश्यते, तावता विष्णुप्रिय इत्यादि । तत्र पुष्पविशेषाराध्यविशेषनिर्णयार्थोऽयं कालविभागः, न त्वभिगमनादि-पञ्चककर्तव्यार्थः । तथा हि पूर्वमुक्तम् तत्र सङ्गवे वैकुण्ठस्य प्रीतिः, समेऽनिरुद्धस्य, विष्णुप्रिये शिंशुमारस्य, धर्मे वडबामुखाग्नेः, विरागे कपिलस्येत्येवं पञ्चानां पञ्चप्रीतिकालविशेषाः इति; अतो जयाख्यसंहितोक्तप्रकारेणैवाभिगमनादि-पञ्चकव्यवस्था नित्या, अन्यत्काम्यादिकम्; एवं दिनचर्यामर्यादायां स्थितायां केषाञ्चित् त्रैकाल्यार्चनादिविधानानि विषुवायनोपरागजन्मत्रयद्वादशीपर्वश्रवणादिवैशेषिकार्चनान्यपि यथाबलं तदन्तःपातेन नेतव्यानि । अशक्तमधिकृत्यैव समाहृत्यानुष्ठानं क्वचिद्विधीयते । सच्छिद्रपञ्चकालता च तावन्मात्रयोग्यस्यैव, अन्यार्थकर्मान्तरितत्वं सच्छिद्रत्वम् ।

* द्वादशाक्षरतत्त्वज्ञश्चतुर्व्यूहविभागवित् । अच्छिद्रपञ्चकालज्ञस्स तु भागवतः स्मृतः ॥

इति तु पूर्णस्य मुख्याधिकारिणः स्तुतिः, नतु तस्यैव पाञ्चकालिकभागवतत्वप्रतिपादनपरम् ।

* चतुर्व्यूहविभागज्ञः पञ्चकालपरायणः । द्वादशाक्षरनिष्ठो यस्स वै भागवतोत्तमः ॥

इति शाण्डिल्यवचनमपि तथैव । एवं द्वादशाक्षरोपादानमपि व्यापकान्तरोपलक्षणम् । स्वसंहितोक्तनिष्ठामात्रेण यथार्हं सर्वेषां पञ्चकालधर्मप्राप्तेः, अत एव हि भाष्यकाराणां शिष्याः प्रशिष्याश्च श्रीमदष्टाक्षरेण समाराधनं प्रपञ्चयन्तः पञ्चकालकल्पनयैव दिनचर्यामुपदिदिशुः । तथा हि । भाष्यकाराव्यवहितशिष्यैर्वङ्गिवंशेश्वरैः श्रीरङ्गनारायणाचार्यैः ब्राह्ममुहूर्तप्रभृति दिनचर्यां प्रपञ्चयद्भिर्हरिसङ्कीर्तनसंसारनिर्वेदसात्त्विकधृत्यालम्बनसमनन्तरकालविहिताध्यवसायपर्यन्तमुक्त्वा अनन्तरमुच्यते—

*इत ऊर्ध्वमहं तावद्यावज्जीवं श्रियः श्रियः । पदयोरर्चनं कर्तुं यतमानस्समाहितः ॥
अभिगच्छन् हरिं प्रातः पश्चाद्द्रव्याणि चार्जयन् । अर्चयंश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥
ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु । वर्तमानस्सदा चैवं पाञ्चकालिकवर्त्मना ॥
स्वार्जितैर्गन्धपुष्पाद्यैश्शुभैश्शक्त्यनुरूपतः । आराधयन् हरिं भक्त्या गमयिष्यामि वासरान् ॥ इति ।

**श्रीपराशरभट्टारकैश्च—**

*गर्भजन्मजरादुःखमिश्रसंसारसागरात् । उत्तीर्य भगवत्प्राप्तिं लिप्सेत पुरुषो यदि ॥
प्रातरुत्थाय संस्मृत्य हरिं तच्चरणोत्थिताम् । गङ्गां विभाव्य तीर्थाम्भस्ततस्तदवगाह्य च ॥
श्रुतिस्मृत्युदितं कर्म यावच्छक्ति परात्मनः । आराधनत्वेनापाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत् ॥
मन्त्रैराधारशक्त्यादिपारिषद्यान्तसंस्थितैः ।

इति पूर्वाचार्योक्तं संग्रहेण प्रदर्श्य *हरिं प्रणम्य चायम्य प्राणान् प्रणिपतन् गुरून् इत्यारभ्य श्रीमदष्टाक्षरमन्त्रस्य ऋषिच्छन्दोदेवताबीजशक्तीः प्रकाश्य भाष्यकारानुक्तो मन्त्रन्यासस्तच्छिष्याद्युक्तप्रकारेणोपादेय इति ज्ञापनाय *मन्त्रन्यासं ततः कृत्वा मन्त्रार्थमपि चिन्तयेत् इति संग्रहेणाभिधाय *एवं संचिन्त्य मन्त्रार्थं ततस्तं पुरुषम् इत्यादिना पूर्वैरुक्तं ध्यानं सङ्क्षिप्य तदनुक्तं पादादिकेशान्तध्यानं प्रपञ्च्य षोडशोपचारक्रमेण समाराधनं च विहितम् । उपचारान्तराणामपि सर्वेषामेते षोडश प्रधानतमाः, तदनुबन्धेनैवान्यत्सर्वमनुष्ठीयते, देशकालावस्थानुसारेण संक्षेपविस्तारस्वीकारश्च शास्त्रीयः, अतः पूर्वैरैककण्ठ्यमिहाप्यनुसन्धेयम् ; अत एव हि तदुभयानुसारिभिर्नारायणमुनिभिरपि पञ्चकालकल्पनया तत्तत्कालानुष्ठेयानि यथाक्रमं प्रपञ्चितानि । तथा हि—

*भगवच्चरणाम्भोजपरिचर्याविधिक्रमम् । एकान्तिभिरनुष्ठेयं नित्यं समभिदध्महे ॥
ब्राह्मे मुहूर्ते सत्त्वस्थो हरिर्हरिरिति ब्रुवन् । उत्थाय तत्र शयने समासीनस्समाहितः ॥ इत्यारभ्य,
*द्वयेन तद्विवरणैः प्रपद्य प्रभुमीश्वरम् । निक्षिप्य चिरमात्मानं तत्पादाब्जे कृती भवेत् ॥
यो नारायणदासीयो माधवाराधनक्रमः । तत्राभिगमनं नाम प्रथमः पटलो ह्ययम् ॥

इत्यन्तेन अभिगमनं परिसमाप्य—

*अह्नो द्वितीयभागेन कृष्णाराधनतत्परः । द्रव्याण्याराधनार्थानि शास्त्रीयाणि समार्जयेत् ॥

इत्यादिभिः पटलैस्तत्तत्कालांशसाधनीयमुपादानादिकमपि यथाक्रमं प्रपञ्चितम् ।

तदेवं चतुर्विधपञ्चरात्रनिष्ठानां तत्रापि यत्किञ्चिद्व्यापकमन्त्रप्रधानानां सर्वेषामपि भगवदेकान्तिनां यथायथं प्राचीनपरिगृहीतवैकल्पिकमर्यादाभेदैः पाञ्चकालिकधर्मः प्राप्तः । तत्र ये स्वाधिकारानुरूपं प्रपत्तिमेव केवलमव्यवहितमपवर्गसाधनमवलम्बन्ते, तैरयं पञ्चकालक्रमः परित्याज्यः परिग्राह्यो वेति विचार्यते । प्रपत्तिप्रकरणेषु तदङ्गत्वेन तदुपदेशाभावाद्विलम्बाक्षमस्याधिकारिणश्शातवार्षिकव्रतपूरणावधि कालक्षेपाक्षमत्वात्, तदेकदेशभूतयोगशक्तौ च तस्यैवोपायत्वस्वीकारप्राप्तेः, यथाशक्ति वर्णाश्रमधर्मानुष्ठानरूपस्य भगवत्प्रीणनस्य तदाज्ञानुपालनस्य कर्तव्यत्वेऽपि व्यासदक्षादिधर्मशास्त्रोपदिष्टकालविभागपूर्वकदिनचर्यामर्यादयाऽपि सिद्धेः, अन्यथा कर्मणां परस्परोपरोधप्रसङ्गाच्च परित्याज्य इति पूर्वः पक्षः । राद्धान्तस्तु परिग्राह्य एवायमिति । तिष्ठतु तावदिह प्रमाणोपपत्तिपरामर्शः, भाष्यकाराद्युपदेशसंप्रदाय-

स्तावत्परामृश्यताम्; * अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये इत्यारभ्य शौनकव्यासबोधायनादिधर्मशास्त्रानुक्तेन भगवच्छास्त्रोक्तेन वर्त्मना स्नानविशेषादिपूर्वकविलक्षणसमाराधनप्रक्रियाप्रतिपादनं कथंभूतमधिकारिणमधिकृत्य भाष्यकारैः कृतमिति कर्णे तवागतम्? भवतु तच्छक्तमधिकार्यन्तरं प्रतीति चेन्न; प्रपत्त्येकनिष्ठैस्तच्छिष्यप्रशिष्यादिभिश्च योग्यैरद्य यावद्यथाशक्ति तदनुष्ठानदर्शनात्साधनबुद्ध्या च तदनुष्ठानाभावस्य भगवत्कैङ्कर्यैकरतिः परमैकान्ती भूत्वेत्यादिभिस्तत्रैवोपदेशात्। अनन्योपायेऽनन्यप्रयोजने चाधिकारिणि परमैकान्तिशब्दसाम्राज्यात् * अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये इत्यस्य पूर्ववृत्तापेक्षायां, * तमेव शरणमुपगच्छेत्—अखिलेत्यादिना, शरणागतिप्रकारश्च पूर्वोक्तः इति तत्प्रबन्धस्थवाक्यद्वयेन परिपूर्णशरणागतिविषयगद्यग्रन्थस्य पूर्ववृत्तत्वप्रतीतेः। एतच्च समर्थयिष्यते। अतस्तथाविधप्रपन्न एवात्र परमैकान्ती, तमधिकृत्यैव किञ्चित्सिद्धान्तस्थां काञ्चित्संहितां प्रधानीकृत्य समाराधनप्रयोगोऽत्र संगृह्यत इति यथासंप्रदायमकामेनापि स्वीकरणीयम्। तच्च समाराधनमर्घ्यादिपात्रप्रक्षेपतत्तदासनभोगानुपूर्वीसमर्पणीयौपचारिकसांस्पर्शिकाभ्यवहारिकादिभेदभिन्नगन्धपुष्पादिपरश्शतद्रव्यसापेक्षं दृश्यते। तदपि न्यायतस्स्वयमेवार्जितं मुख्यम्, अशक्तस्य तु पुत्रशिष्यादिमुखेन तत्प्रेरणरूपार्जनव्यापारः, पूर्वसिद्धद्रव्यस्यापि * तत्काले तदर्थोपादानम् इति समाराधनात्पूर्वमेव नान्तरीयकं सम्यग्द्रव्योपादानम्; अत इज्योपदेशेनैवार्थादपेक्षितोपादानमपि स्वकालप्राप्तमुपदिष्टं भवति। ततोऽपि पूर्वमभिगमनमपि तद्विधायकतत्तच्छास्त्रतत्तन्मन्त्रविशेषादिपरामर्शादन्ततः प्रपत्तिरूपतयैव परिणतमिति प्रागेव तदुपदेशेनार्थादभिगमनमप्युपदिष्टं भवति; अत एव हि तदभिप्रायविद्भिर्नारायणमुनिभिः—

* द्वयेन तद्विवरणैः प्रपद्य प्रभुमीश्वरम्। निक्षिप्य चिरमात्मानं तत्पादाब्जे कृती भवेत्॥

इत्यभिगमनं निगमितम्, तद्विवरणं च गद्यादिकमेव। अनुयागपर्यन्तसमाराधनसमनन्तरभाविस्वाध्यायश्च श्रुतिस्मृतीतिहासपुराणमन्त्रजपसत्संवादाध्यात्मशास्त्रश्रवणप्रवचनाद्यात्मा यथासंभवं भगवच्छास्त्रधर्मशास्त्रादिषु अनन्तरभावियोगोपकारकज्ञानसन्धुक्षणप्रयोजनः प्रतिपाद्यत इति तत्कालनित्यः; सोऽपि *द्वयमर्थानुसन्धानेन सह सदैवं वक्ता इति गद्योक्तस्य द्वयवचनस्य शास्त्रीयकर्मान्तरानुपरोधेन यथावसरमुपनिपातादुपदिष्ट एवेति ज्ञायते। सदावचनं हि न निद्राकाले, अशक्यत्वात्; न मौनकाले, तद्विरोधात्; न मन्त्रान्तरादिसाध्यसमाराधनादिकाले, तेनैव तदुपरोधात्; अतो यथावसरं तत्प्राप्तिः। एवं योगो द्वयार्थानुसन्धानैकाग्र्यरूपसर्वव्यापारोपरतिसुभगनिद्रापूर्वापरकालयोस्तत्पूर्वापररात्रेषु * युञ्जानः इत्याद्युक्तावसरयत्नलभ्यः। श्रीवैकुण्ठगद्ये च स्वतन्त्रप्रपत्तिनिष्ठामेव विधाय * ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत् इत्यारभ्य परमपदपर्यङ्कनिलयस्य भगवतः परिपूर्णध्यानयोगमुक्त्वाऽनुसन्धानविशेषांश्चोपदिश्य * श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवस्सुखमासीत इत्यनेनानन्यप्रयोजनो विचित्रयोगः प्रतिदिनकर्तव्यत्वेन विहितः; तदधिकारे च विस्तरेण दर्शयिष्यामः। नित्ये च * एवं शरणमुपगम्य तत्प्रसादोपबृंहितमनोवृत्तिस्तमेव भगवन्तं सर्वेश्वरेश्वरमात्मनस्स्वामित्वेनानुसन्धायात्यर्थप्रियाविरतविशदतमप्रत्यक्षतापन्नानुध्यानेन ध्यायन्नासीत इति समाराधनारम्भोक्तानुध्यानस्य स्वादुतमस्य समाराधनवदेवानन्यप्रयोजनकैङ्कर्यरूपतयाऽवसरे प्राप्तिर्युक्ता। तस्मादन्यप्रयोजनप्रधानतया परिपूर्णसमाराधनविशेषोपदेशिभिर्भाष्यकारैरर्थतश्शास्त्रान्तरैश्च सिद्धमन्यदपि सर्वमनुज्ञातमिति विज्ञायते। अत एव हि तच्छिष्यप्रशिष्यादयः पञ्चकालविभागेनैव भगवत्सेवां प्रत्यपीपदन्। प्रपत्त्यावृत्तिप्रसङ्गादिचोद्यानि तु निक्षेपरक्षान्ते परिहृतानि। अत्र यदुक्तं प्रपत्त्यङ्गत्वेनोपदेशाभावात्परित्याज्य इति, तदसत्; भाष्यकारोक्तनित्यसमाराधनस्यापि तत एव

परित्याज्यत्वप्रसङ्गात्, तच्चेद्भगवत्प्रीत्येकप्रयोजनतयाऽनुष्ठेयमित्यनुज्ञायेत तर्हि तदनुबन्धि सर्वमपि तद्वदनुज्ञायताम् । प्रपत्त्यङ्गसर्वधर्मस्वरूपत्यागविधिवादिनोऽपि हि स्वामिनि भगवति दासभूतस्य प्रपन्नस्य स्वरूपप्राप्तां किङ्करवृत्तिमनुजानन्ति । यत्तु शातवार्षिकव्रतावधि विलम्बाक्षमत्वमुक्तं तत्तथैव, नह्यस्य निष्पन्नोपायस्य शातवार्षिकव्रतमनुष्ठेयं ब्रूमः । यथा हि नदीतरणाय नौकागमनं प्रतीक्षमाणाः पुरुषाः केचिल्लीलाद्यूतेन कालं यापयन्ति, केचित्पणबन्धद्यूतेन ; द्यूतमर्यादानुपालनं चोभयेषां समानम् ; तत्रानियतकालभाविनौकागमनसमये वैहारिका विहारद्यूतविच्छेदेनापि नदीं तरन्ति । बद्धपणास्तु यावद्द्यूतसमाप्ति विलम्बन्ते, तद्वदिहापीति तत्त्वविदां संप्रदायः ॥

यच्चान्यदुक्तम् योगशक्तौ तस्यैवोपायत्वस्वीकारः प्राप्नोतीति, तदपि मन्दम् ; स्वयोगमहिमप्रत्यक्षिततत्त्वत्रयाणां नाथमुनिकुरुकेश्वरप्रभृतीनां प्राक्परिगृहीतप्रपत्त्युपायैकनिष्ठानामेव पश्चादपि भगवत्प्रसादलब्धयौगिकभगवदानन्दास्वादस्य प्रसिद्धत्वात् । अन्यथा तथाविधानुसन्धानपूर्वकभाष्यकारोक्तसमाराधनादिशक्तौ तस्याप्युपायत्वप्रसङ्गात् । तच्चेत्स्वामिकैङ्कर्यरूपमिति स्वयंप्रयोजनत्वेनोपादीयेत, समाधावप्ययं समाधिकदरिद्रसुखसन्दोहात्मनि समस्समाधिः । प्रपन्नानुगुणं च यौगिकमनुसन्धानं **शाण्डिल्यस्मृता**वप्युच्यते—

*ईदृशः परमात्माऽयं प्रत्यगात्माऽयमीदृशः । तत्संबन्धानुसन्धानमिति योगः प्रकीर्तितः ॥
योगो नामेन्द्रियैर्वश्यैर्बुद्धेर्ब्रह्मणि संस्थितिः । प्रयुक्तैरप्रयुक्तैर्वा भगवत्कर्मविस्तरैः ॥ इति ।

एतदनुसन्धानमेव द्वयार्थानुसन्धानम्, एतद्विरुद्धं तु राहुमीमांसकानां कबन्धमीमांसकानां चानुसन्धानं वेदबाह्यमिति **श्रीकृष्णमुनिभि**रुक्तम्—

*चेतनस्त्वेक एवेति मतिर्या केवला क्रिया । फलतीति मतिस्ते द्वे वेदाप्रामाण्यबुद्धिजे ॥
स एनं प्रीतः प्रीणाति ब्राह्मणस्यानुगेन ते ॥ इति ।

यत्त्वपरमुक्तम् व्यासदक्षाद्युपदिष्टवर्त्मनाऽपि स्ववर्णाश्रमोचितभगवदाज्ञानुपालनरूपदिनचर्यासिद्धिः, अतश्चोभयसंभेदे कर्मणां परस्परोपरोधप्रसङ्गश्चेति ; तत्र तावदविदितश्रौतस्मार्तवृत्तान्तानां परस्परोपरोधचोद्यावतारः । एवं ह्यत्र परिहृतं **श्रीकृष्णमुनिभिः**—*पश्विष्टिदर्वीहोमानां ससोमानां समुच्चयः । यथा बहूनामेकस्मिन् तथैवास्यापि कर्मणः ॥ इति । न चात्र तावानप्युपरोधः । अपि च तत्रापीदमभिगमनादिपञ्चकमनुप्रविष्टं दृश्यते । **व्यासस्तावत्**

*ब्राह्मे मुहूर्ते उत्थाय धर्ममर्थं च चिन्तयेत् । कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम् ॥

इत्यारभ्य प्राभातिकस्नानसन्ध्योपासनप्रकारमुपदिश्य, *अथागत्य गृहं विप्रः समाचम्य यथाविधि । प्रज्वाल्य वह्निं विधिवत् इत्यादिना प्रातर्होमं च विधाय, अनन्तरमाह—

*देवादीनां नमस्कुर्यादुपहारं निवेदयेत् । दद्यात्पुष्पादिकं तेषां वृद्धांश्चैवाभिवादयेत् ॥
गुरुंश्चैवाप्युपासीत हितं चास्य समाचरेत् । वेदाभ्यासं ततः कुर्यात्प्रयत्नाच्छक्तितो द्विजः ॥
जपेदध्यापयेच्छिष्यान् धारयेच्च विचारयेत् । अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः ॥
वैदिकांश्चैव निगमान् वेदाङ्गानि विशेषतः ॥ इति ।

अत्र दक्षोक्तप्रक्रियया द्वितीयार्धयामसाध्यवेदाभ्यासादिष्वदृष्टार्थांशो जपस्तोत्रशब्दाभ्यां जयाख्यसंहितायामुपलक्ष्यते । वृत्तिकर्शितस्य कस्यचिददृष्टांशोऽस्ति चेदभिगमनकालसङ्कोचेन परस्मिन्नुपादाने समन्वेति । अत्र देवनमस्कारोपहार-

निवेदनपुष्पादिप्रदानवचनादभिगमनं सिद्धम्। देवनमस्कारश्चात्र विष्णुनमस्कार एव स्वरसतः प्राप्तः, निरुपाधिकदेवत्वस्य देवान्तरनमस्कारस्यापि तत्रैव विश्रमात्। अत एवादौ *ध्यायीत मनसेश्वरम् इति ध्येयतयोक्त ईश्वरोऽपि जयादिष्विव सर्वेश्वरो विष्णुरेव; *ईश्वरो विक्रमी धन्वी इति नामसु पठ्यते। अत्र एवोत्तरत्र—*न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् इति स्वयमेवाभिधानाच्च। इदमेव विष्णुनमस्कारादिरूपमभिगमनं तत्परशास्त्रेष्वपि नानाप्रकारमुपदिश्यते। देवादीनामित्यादिशब्देन पित्रादिसंग्रहः। एवं प्रथमकालकर्तव्यमुक्त्वा द्वितीयकालसाध्यं समाराधनोपकरणसंपादनरूपमुपादानमाह—

*उपेयादीश्वरं चापि योगक्षेमार्थसिद्धये। साधयेद्विविधानर्थान् कुटुम्बार्थे ततो द्विजः॥ इति।

एतच्च लौकिकेश्वराभिगमनं गत्यन्तरहीनस्यापद्विषयम्; स्मरन्ति हि—*नगरप्रवेशनानि वर्जयेत् इति। उक्तं च **शाण्डिल्यस्मृतौ**—

*बुद्धरुद्रादिवसतिं श्मशानं शवमेव च। अटवीं राजधानीं च दूरतः परिवर्जयेत्॥ इति।

कालपञ्चककृत्यं तत्र प्रपञ्चितं यथायोग्यं सर्वैर्ग्राह्यम्। इदमेव चोपादानं भगवदर्थत्वेन भगवच्छास्त्रेषु विधीयते। अत्रापि *कुटुम्बार्थे इति न केवलं तादर्थ्यं विवक्षितम्, तद्बुद्धेस्सर्वत्र प्रतिषेधात्। गीयते च स्वयं **भगवता**—

*यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर॥ इति।

अतो भगवदाराधनरूपयज्ञशिष्टेन कुटुम्बभरणमपि भगवदाज्ञानुपालनरूपमेवेति तद्विवक्षया महर्षिणा *कुटुम्बार्थे इत्युक्तम्। *धर्ममर्थं च चिन्तयेत् इत्यारम्भोक्तार्थचिन्तनमपि धर्मशेषतया, कायक्लेशचिन्तनं तु क्लेशरहितोपायगवेषणार्थम्; स्मरन्ति हि **मन्वादयः**—

*अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम्। अप्रयत्नागतास्सेव्या गृहस्थैर्विषयास्सदा॥ इत्यादि।

अथ तृतीयकालकृत्यमाह—*ततो मध्याह्नसमये स्नानार्थं मृदमाहरेदित्यादिना। स्नानेन चैवं भगवदनुसन्धानमाह—

*अभिमन्त्र्य जलं मन्त्रैरब्लिङ्गैर्वारुणैश्शुभैः। भावपूतं तदव्यग्रं ध्यायन्वै विष्णुमव्ययम्॥
आपो नारायणोद्भूतास्ता एवास्यायनं पुनः। तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः॥ इति।

तथा— *त्रिपदां वाऽत्र सावित्रीं तद्विष्णोः परमं पदम्। आवर्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम्॥ इति च।

तर्पणे— *आदावोङ्कारमुच्चार्य नामान्ते तर्पयामि च। देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः॥
तिलोदकैः पितॄन् भक्त्या स्वसूत्रोक्तविधानतः॥ इति।

अत्र प्रणवपूर्वकत्वेन भगवदात्मकत्वानुसन्धानं विहितम्। एतदेव च नित्ये **भाष्यकारै**रपि दर्शितम्—*देवानृषीन् पितॄन् भगवदात्मकान् ध्यात्वा संतर्प्य इति। तृतीयकालसाध्यं साक्षादिज्यारूपं समाराधनमेवाह—

*न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्। तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्॥
तद्विष्णोरितिमन्त्रेण सूक्तेन पुरुषेण च। नैवाभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि॥
निवेदयीत स्वात्मानं विष्णावमलतेजसि। तदात्मा तन्मनाश्शान्तस्तद्विष्णोरितिमन्त्रतः॥

इत्यत्र तद्विष्णोरित्यादेस्स्तुतिर्न याज्ञवल्क्यादिविहितप्रणवाद्यपकर्षपरा, एवं विष्ण्वाराधनस्य सर्वोत्तरत्वकण्ठोक्तेः। पूर्वापर-

ग्रन्थेषु सामान्यतो विशेषतश्च देवतान्तरार्चनवचनमन्तवत्परिमितफलार्थिप्रतिबुद्धेतराल्पमेधपुरुषानधिकृत्येति मन्तव्यम्। गीयते च * अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् इति। उत्तरत्र च **महाभारते**—

* ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्॥ इति।

आह च भगवान् **बादरायणः**—* नान्यं देवं नमस्कुर्याद्विष्णुपादाब्जसंश्रयः। इति।

* कर्मणां परिपाकत्वादाविरिञ्चादमङ्गलम्। इति मत्वा विरक्तस्य वासुदेवः परा गतिः॥ इति च।

इदंच विष्णवाराधनं भगवच्छास्त्रेषु तैस्तैर्व्यापकमन्त्रप्रभृतिभिस्तत्तदधिकारानुरूपं प्रपञ्च्यते। अधिकृतशास्त्रप्रतिपादितस्य पूर्णोपदिष्टस्यैव मुख्यत्वं होतृशाखोक्तहोत्रपरिग्रहन्यायेन सिद्धम्। एतेन * अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा इति स्मृतिरपि प्रणवाष्टाक्षरद्वादशाक्षरादिमन्त्राणामाथर्वणरहस्याम्नायाद्यधीततया वेदमन्त्रशब्देन संग्रहात् * पञ्चरात्रोदितेन वा इत्ययमंशस्तान्त्रिकसंज्ञितप्रत्यक्षेतरश्रुतिमूलमन्त्रान्तरविषयतया योज्यः। नित्यं चैतद्वैश्वदेवादिवद्भगवत्समाराधनम्, * नित्यमाराधयेद्धरिमिति वचनात्।

* शौनकोऽहं प्रवक्ष्यामि नित्यं विष्णवर्चनं परम्। प्रवःपान्तमन्धसोधि इत्यर्धर्चविधानतः॥

इति सूत्रान्तरानुसारात्।

* स्नात्वा नित्यं शुचिः कुर्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनं चैव समिधादानमेव च॥

इति सामान्यतो **मनूक्तेश्च**। उक्तं **चानुशासनिके** श्रीपुण्डरीकनारदसंवादे—

* ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः। केशवाराधनं हित्वा नैव याति परां गतिम्॥ इति॥

एवं **योगयाज्ञवल्क्यादि**ष्वपि—

* विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः। तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात्॥

इत्यादिकमुच्यते। एवंविधदेवतार्चनाकरणे च प्रत्यवायं **व्यास** एवाह—

* यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्। भुङ्क्ते स याति नरकान् सूकरेष्वपि जायते॥ इति।

भगवदर्चावतारहितगृहस्य पुरुषस्याभोज्यान्नत्वमप्यन्यत्रोच्यते—

* केशवार्चा गृहे यस्य न तिष्ठति महीपते। तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत्॥ इति।

अनन्तरं च पञ्चमहायज्ञपूर्वकं प्राणाग्निहोत्रं प्रपञ्चयन्नेवमाह—

* स्वाहाप्रणवसंयुक्तं प्राणायान्नाहुतिं ततः। अपानाय ततो हुत्वा व्यानाय तदनन्तरम्॥
उदानाय ततः कुर्यात्समानायेति पञ्चमम्। विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः॥
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्। ध्यात्वा तु मनसा देवमात्मानं वै प्रजापतिम्॥ इति।

अत्रापि देवप्रजापतिशब्दौ पूर्वोक्तनयेन विष्णुपरौ मन्तव्यौ; * हृदि ध्यायन्हरिं तस्मै निवेद्यान्नं समाहित इत्यादि-भगवद्**यामुनेयो**पात्तकर्मकाण्डस्थप्राणाग्निहोत्रविषयव्यासवचनानुसाराच्च। अस्मिन्नपि व्यासवचने देवध्यानं तदेव हृदयस्थहरिध्यानमिति गम्यते। ईदृशं च भोजनमेवानुयागसमाख्ययाऽन्यत्र व्यपदिश्यते। अथान्यदपि भोजनेऽपेक्षितं सर्वमुपदिश्य

* भुक्त्वैवं सुखमास्थाय तदन्नं परिणामयेत्। इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्॥ इति चतुर्थकालसाध्यं

स्वाध्यायमाह । एवमन्येऽपि स्मरन्ति—* भुक्त्वोपस्थाय चादित्यं पुराणानि सदा पठेत् इत्यादि । अत्र परिपूर्णज्ञानस्योपबृंहणनिरपेक्षस्याधिकारिविशेषस्य द्विषडष्टषडक्षरद्वयादिजप एव स्वाध्याय इति तत्रतत्र तद्विधिः । अत एव रहस्याम्नाये वेदान्तरनिषेधेन द्विषट्कमात्रस्वाध्यायविधानं निर्व्यूढम् ॥

यत्पुनरनन्तरं पञ्चकालकृत्यमुक्तं * ततस्सन्ध्यामुपासीत इत्युपक्रम्य—

* हुत्वाऽग्निं विधिवन्मन्त्रैर्भुक्त्वा चान्नमभीष्टकम् । सभृत्यबान्धवजनः स्वपेच्छुष्कपदो निशि ॥

इत्यादि, अत्र रात्रिभोजनवचनेन तदनन्तरं योगोऽपि दिवाभोजनानन्तरोक्तः स्वयमेवागच्छतीति तदनुक्तिः । तथा हि ; पूर्वं दिवा भोजनानन्तरमेवमाह—

* हुतानुमन्त्रणं कुर्याच्छ्रद्धायामिति मन्त्रतः । तथाऽक्षरेण स्वात्मानं योजयेद्ब्रह्मणीति हि ॥
सर्वेषामेव योगानामात्मयोगः परः स्मृतः । योऽनेन विधिना कुर्यात्स याति पदमक्षयम् ॥ इति ।

एवं च निगमयामास—* इत्येतदखिलेनोक्तमहन्यहनि यन्मया । ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः । स याति नरकान् घोरान् काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं सुखम् । तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ इति ।

अत्र परमेष्ठी सर्वकर्मसमाराध्यो विष्णुरेव । विष्णोरेव सर्वकर्मसमाराध्यत्वम्—

* भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्, * अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च,
* यज्ञैस्त्वमिज्यसे नित्यं सर्वभूतमयाच्युत । हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् ॥

इत्यादिषु प्रसिद्धम् । अयं चात्र परमेष्ठी विहितकर्मतोष्यत्वेनोच्यते । परमे पदे तिष्ठतीति परमेष्ठी, स च * तमसः परस्तात्, * तद्विष्णोः परमं पदम् इत्युक्ते शुद्धसत्त्वमये वैकुण्ठसंज्ञिते लोके वर्तमानः पुरुषोत्तम एव । एवं वैयासके धर्मशास्त्रे भगवतः पञ्चसु कालेषु भजनं भगवन्नित्यकर्मानुप्रवेशेनैव विहितमिति न कस्यचित्तत्परित्याग उपपद्यते ॥

यत्तु दक्षेणोक्तं कालाष्टकविभागेन दिनकृत्यम्, तदपि प्रकृतानुगुणमेव; तथा हि—

* प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिनेदिने । तत्सर्वं संप्रवक्ष्यामि द्विजानामुपकारकम् ॥
उदयास्तमयं यावन्न विप्रः क्षणिको भवेत् । नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥
स्वकं कर्म परित्यज्य यदन्यत्कुरुते द्विजः । अज्ञानादथवा लोभात् [स तेन]त्यागेन पतितो भवेत् ॥

इति नित्यनैमित्तककर्मणां तदुपकारिकाम्यकर्मणां च यथाकालमनुष्ठानमविच्छेदेन कर्तव्यमिति प्रतिपाद्य,

* दिवसस्याद्यभागेन कृत्यं तस्योपदिश्यते । द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक्पृथक् । भागेष्वेतेषु यत्कृत्यं तत्प्रवक्ष्याम्यशेषतः ॥

इति कालाष्टकविभागेन कृत्यविभागं सामान्यतः प्रस्तुत्य,

* उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्हवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ इत्यादिना,
* सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

इत्यन्तेन स्नानाचमनसन्ध्यावन्दनादीनि यथावत्प्रतिपाद्य,

*सन्ध्याकर्मावसाने तु स्वयंहोमो विधीयते । स्वयंहोमफलं यत्तु न तदन्येन जायते ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः । एतैरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥

इति प्राभातिकं होमं चोक्त्वाऽनन्तरमाह—

*देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् । देवकार्यस्य सर्वस्य पूर्वाह्णं तु विशिष्यते ॥
देवकार्याणि पूर्वाह्णे मनुष्याणां तु मध्यमे । पितॄणामपराह्णे तु कार्याण्येतानि यत्नतः ॥ इति ।

अत्र प्रातर्होमानन्तरं देवकार्यविधानात्तत्कालचोदितं भगवदभिगमनमपि सामान्यत उपदिष्टं भवति । यत्त्वनन्तरमुक्तम्

*द्वितीये तु तथा भागे वेदाभ्यासो विधीयते । वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥

इति, तदप्यनुगुणम्; उक्तानि हि **जयाख्यसंहितायां** जपध्यानार्चनस्तोत्राणि प्रथमप्रहरपर्यन्ते अभिगमने । उपादानं चानन्तरमेवाह—

*समित्पुष्पकुशादीनां स कालस्समुदाहृतः । तृतीये तु तथा भागे पोष्यवर्गार्थसाधनम् ॥ इति ।

इदञ्चोक्तं **जयाख्यसंहितायाम्** *ततः पुष्पफलादीनाम् इत्यादिना । अत्र *पोष्यवर्गार्थसाधनमित्येतत्प्रागुक्तन्यायेन भगवत्प्रीणनतयैवेति ग्राह्यम्; आह चात्र प्रातस्स्नानादीन् प्रक्रम्य पूर्वमेव सर्वेषु कर्मसु भगवदनुसन्धानम्—

*ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥ इति च ।

असूत्रयच्च भगवान् शौनकः *हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च इति । अत्र कर्मशब्देनानवच्छेदाद्दृष्टादृष्टसर्वकर्मसंग्रहः । अन्यदैवत्यकर्मण्यपि तदन्तरात्मभूतो हरिरनुसन्धेय इत्येवकाराभिप्रायः । नित्यमित्यनेन काम्यत्वनैमित्तिकत्वशङ्काव्युदासः । स्वतः प्राप्तं कर्मकाले स्मरणं चकारेण संगृह्यते । एवं शास्त्रीयेषु सर्वेषु कर्मसु भगवदनुसन्धानं नित्यमिति सिद्धम् । एतदेव रागप्राप्तेष्वप्यवर्जनीयमिति **जयाख्यसंहितायां** नियमेषु पठ्यते—

*शयनासनयानादावासक्तश्चापि भोजने । हृद्गतं न त्यजेद्ध्यानमानन्दफलदं हि यत् ॥ इति ।

सर्वसंग्रहेण तूच्यते—

*आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ इति ।

एतच्च नित्यत्वात्स्वरूपानुरूपानन्दफलत्वेन स्वयंप्रयोजनत्वाच्च स्वतन्त्रप्रपत्तिशास्त्रनिष्ठैरपि दुस्त्यजम् । उक्तं चैवं स्वयंप्रयोजनत्वं **नारायणमुनिभिः**—

*वृत्तिः स्वामिनि दासस्य स्वरूपानुगुणा शुभा । भक्तिश्रद्धासमायुक्ता तत्समाराधनं विदुः ॥
किं किं न साध्यं भगवदाराधनपरैर्नरैः । वैष्णवानां विशेषेण स्वयमेतत्प्रयोजनम् ॥ इति ।

भगवदनुसन्धानविच्छेदोऽपि हि पुरुषार्थहानित्वेन स्मर्यते—

*यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥ इति ।

पुरुषार्थहानिः कामक्रोधाद्यरीणामवकाशः, अनात्मादिषु आत्मबुद्धिहेतुरस्वाभाविकसुखदुःखकारणं चेत्यर्थः ।

*एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥ इति ।

खिन्नवृत्तीनामन्यपराणामपि—

*व्यापृतेनापि मनसा विष्णुस्सेव्योऽन्तरान्तरा । मेथीबद्धो भ्राम्यमाणो घासग्रासं करोति गौः ॥

इत्यादिभिर्यथावसरं क्षुच्छान्तिकरकर्मसमाधिना तावन्मात्रप्रयोजनत्वेन भगवत्सेवनं स्मर्यते । तदिह सिद्धोपायस्योपायं साधयतश्च भगवत्कैङ्कर्यमरोगस्यारोग्यार्थिनश्च क्षीरास्वादवत् स्वयं प्रयोजनमेव ।

यत्तु *चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् इत्यादिना स्नानभेदानप्युपदिश्य—

*पञ्चमे तु तथा भागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानां चोपदिश्यते ॥ इत्यादिना

*संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् । भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ॥

इत्यन्तेन संग्रहेण देवार्चनं भोजनपर्यन्तमुक्तम्, तत्राप्यवान्तरपर्वभेदेन द्विधा विभक्तोऽयं काल एवेज्याकाल इत्येकीकृत्य निर्दिश्यत इति न विरोधः । अत्र देवसंविभागशब्दनिर्दिष्टमर्थमुत्तरत्र देवार्चनशब्देन विशेषयामास । *सन्ध्या स्नानं जपो होमस्स्वाध्यायो देवतार्चनम् इति । एवम् *इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत् इत्युक्तकालद्वयं स्वाध्यायकाल इत्येकीकृतम् । अत्र मात्रया कालत्रयवैषम्यं मतभेदादुपपद्यते । *अष्टमे लोकयात्रां तु बहिस्सन्ध्यां ततःपुनः इत्युक्तलोकयात्राकालविभागस्तु लोकपराङ्मुखे भगवदेकान्तिनि नातीवापेक्षित इति तदनुक्तिः । यथोक्तं पूर्वश्रवे—

*गुरोर्गुरौ संनिहिते वृत्तिः कार्या यथा गुरौ । विद्यागुरुष्वनन्येष्वप्यनुवृत्तिस्स्वयोनिषु ॥ इति ।

उक्तं च ब्रह्मविद्भिः—

*अद्यप्रभृति हे लोका यूयं यूयं वयं वयम् । अर्थकामपरा यूयं नारायणपरा वयम् ॥

नास्ति सङ्गतिरस्माकं युष्माकं च परस्परम् । वयं तु किङ्करा विष्णोर्यूयमिन्द्रियकिङ्कराः ॥ इति ।

*अहेरिव गणाद्भीतः इत्यादिषु च भिन्नशीलगुणपरिहार उपदिश्यते । संन्यासप्रकरणे *समानशीलैस्सहवासो न दोषाय इति कपिलानुशिष्टस्य कैमुत्येन गृहस्थादिष्वपि मोक्षार्थिषु तुल्यप्रसरत्वात् । आमनन्ति बह्वृचाः *नेदंविदनिदंविदा समुदद्दिशेन्न सह भुञ्जीत न सधर्मा स्यात् इति; तस्येदमुपबृंहणम्—

*अवैद्यः प्राकृतः प्रोक्तो वैद्यो वैष्णव उच्यते । अवैद्येन न केनापि वैद्यः किञ्चित्समाचरेत् ॥ इति ।

*अहन्यहनि धर्मस्य योनिस्साधुसमागमः । मोहजालस्य हेतुर्हि धूर्तैरेव समागमः ॥ इति ।

तथा— *मनीषिणो हि ये केचिद्यतयो मोक्षकाङ्क्षिणः । तेषां वै छिन्नतृष्णानां योगक्षेमवहो हरिः ॥

*अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

*शरीरारोग्यमर्थांश्च भोगांश्चैवानुषङ्गिकान् । ददाति ध्यायिनां नित्यमपवर्गप्रदो हरिः ॥

*वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥

इत्यादिभिर्ब्रह्मविदां लोकनैरपेक्ष्यं सिद्धम्; अत एव हि लौकिकेश्वराभिगमनमप्यापद्विषयमिति ॥

यत्तु पश्चादुक्तम्

*प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत् । यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥ इति,

अत्र योगासमर्थस्य तच्छेषभूतः स्वाध्यायः, समर्थस्य तु योग एवेति न समानकालतदुभयविधायकशास्त्रद्वयविरोधः । विस्तरेण चाह योगमन्ते दक्षः; तत्र चैष सारः प्रोक्तः—

*सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् । एतद्ध्यानं च योगश्च शेषोऽन्यो ग्रन्थविस्तरः ॥ इति ।

**याज्ञवल्क्यश्च** *वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं ब्रह्मणि न्यसेत् इति। वृत्तिहीनम्—बाह्यवृत्तिरहितमित्यर्थः। अतः स्वाध्याययोगयोरेकैकस्मिन् प्रदोषादिकाले तदंशभेदेन क्रमात्प्रयोगभेदेऽपि न विरोधः, *यत्रैकाग्रता तत्राविशेषादिति शारीरकसमर्थितप्रकारेणैकाग्रतानुगुणकालान्तरेऽपि स्वगुणभूतस्वाध्यायादिनिरोधेनापि योगोऽनुष्ठातुं युक्तः, यामयामार्धविभागे स्वाध्यायादिषु नातिदूरपूर्वापरन्यूनाधिकनाडिकाविभागादयस्तु मतभेदतया निर्वाह्या इति। एवं स्मृत्यन्तराण्यपि सम्पादनीयानि।

अतः पञ्चसु कालेषु तैस्तैः कर्मभिर्भगवत्सेवनस्य नित्यत्वेन विधानात् व्यासदक्षाद्युक्तमर्यादया भगवदाज्ञानुपालनेऽपि नीरन्ध्रभगवदुपासनसिद्धेरधिकृतशास्त्रोक्तप्रशस्ततमपूर्णशास्त्रार्थपरिग्रहौचित्यस्य प्रागेव दर्शितत्वात्, **भाष्यकारान्तेवासिप्रभृतिभिश्च** प्रपत्त्येकनिष्ठैस्तदनुसारेण भगवद्भजनस्योक्तत्वात्तद्योग्यैश्चाद्ययावत्तदनुष्ठानस्य यथाशक्ति परिग्रहात्, यच्छीलस्स्वामी तच्छीला प्रकृतिरितिन्यायेन

*नाहङ्कारान्न संरम्भान्नामर्षान्नार्थकारणात्। न भेदवादाल्लोभाद्वा धर्मं जह्यात्कथञ्चन॥

इति वदता भगवता वासुदेवनन्दनेन स्वामिना तद्दासैस्समशीलैर्भावितत्वात्, स्वामिसंप्रीणनस्वरूपानुगुणरूपवृत्तेश्च सर्वाभिमतत्वात्तत्प्रीणनस्य नित्यानां मुक्तानामिव च मुमुक्षुभिः प्रत्यक्षेणावगन्तुमशक्यत्वात् *श्रुतिः स्मृतिर्ममैवाज्ञा इति तदुक्त्यनुसारेण शास्त्रादेव तत्प्रीणननिश्चयात्, *येनास्य पितरो याताः, *पञ्चरात्रोदितान्वाऽपि ये स्ववंश्यैरनुष्ठिताः इत्यादिप्रतिपादितप्रकारेण तत्तत्संहिताभेदभिदुरेषु परमात्मसंप्रीणनप्रस्थानभेदेषु काञ्चिन्मर्यादामवलम्ब्य स्वतन्त्रप्रपत्तिनिष्ठैरपि स्वाधिकारोपदेशाद्यनुरूपम्

*कुसीदमेके विहरन्ति सर्वे य आशीर्वदन्तो ददत्यत्र किञ्चित्।
पर्यन्तलोकास्त्विह ते भवन्ति अनाशिषस्तु विजयायानन्ताय॥

*यस्य सर्वे समारम्भा अनाशीर्बन्धनास्त्विह। त्यागे यस्य हुतं सर्वं स त्यागी स च पण्डितः॥

*अपि भो भगवन्तं याचेत न भो इत्याह आश्रयितव्यो भगवान् भवति न त्वेव याच्यः इति **रहस्याम्नायादि**चोदितप्रकारेण प्रयोजनान्तरप्रार्थनारहितैः स्वयंप्रयोजनत्वात्पञ्चस्वपि कालेष्वविच्छेदेन भगवत्सुप्रीणनरूपशास्त्रीयकैङ्कर्यव्यापारेण यावन्न्यासविद्याख्ययागावभृथमागामिनिश्श्रेयसकालनिर्विशेषमवन्ध्यः कालो यापनीय इति सिद्धम्।

अयमत्र सारः—

मङ्गल्यसूत्रवस्त्रादीन् संरक्षति यथा वधूः। तथा प्रपन्नश्शास्त्रीयपतिकैङ्कर्यपद्धतिम्॥
यद्वन्मङ्गलसूत्रादेस्त्यागे संरक्षणेऽपि वा। रक्षेन्निरोधैर्भोगैर्वा पतिस्तद्वदिहापि नः॥ इति।

अनुपुरमुपरुन्धन्नान्तरध्वान्तराशिं न च पुरत उदेता नास्तमेता च पश्चात्।
स्वविषयनिजधर्मांच्छुद्धसत्त्वान् ससत्त्वानवतु भवतुषाराद्दक्षरव्योमसूर्यः॥

कालं सर्वमिहाभ्युपेत्य भगवत्कैङ्कर्यमादेशिकं तत्पर्वक्रमपञ्चके किमु वयं मान्ये विमन्येमहि॥
त्यक्त्वा विंशतिपञ्चकं शतमिव प्राप्तुं मुधा मुह्यतामस्माकं सदसद्विवेकिषु मतं हासास्पदं मा स्म भूत्॥

**इति श्रीपाञ्चरात्ररक्षायां नित्यानुष्ठानस्थापनाख्यो द्वितीयोऽधिकारः॥**

## ॥ अथ नित्यव्याख्यानाख्यः तृतीयोऽधिकारः ॥

अथोपक्रम्यते नित्यकर्तव्यक्रमसं[चयः]क्रमः । नाथयामुनपूर्णादिसंप्रदायसरित्पथे ॥

अत्र यदुक्तं भगवद्यामुनाचार्यैः श्रीमद्गीतार्थसंग्रहे—

*ज्ञानी तु परमैकान्ती तदायत्तात्मजीवनः । तत्संश्लेषवियोगैकसुखदुःखस्तदेकधीः ॥
भगवद्ध्यानयोगोक्तिवन्दनस्तुतिकीर्तनैः । लब्धात्मा तद्गतप्राणमनोबुद्धीन्द्रियक्रियः ॥
निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैव कारितः । उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः ॥ इति,

इदं तावदाप्रभातादानिशान्तमनुष्ठीयमानेषु सर्वेषु कर्मसु न विस्मर्तव्यम् । समयाचारनियमाध्यायश्रीवैष्णवधर्मशास्त्रादिकथितं परमैकान्तिनां विशेषकर्तव्यं च सर्वं यथावदनुगन्तव्यम् । सर्वेषु च कर्मारम्भेषु भगवच्छास्त्राद्युक्तस्तत्तन्मन्त्रः, *भगवानेव इत्यादिकं भाष्यकारनित्योक्तं च वाक्यं पठितव्यम् । अन्ते च *सर्वं स्वनियाम्येत्यादिक्रमेण समन्त्रकं भगवति समर्पणीयम् । न चैतदखिलमुपासनोपायाधिकार्यन्तरमात्रविषयमिति भ्रमितव्यम्, तथासति तत्सहपठितगुरुभजननिर्माल्यभक्षणनिषेधादेरपि तावन्मात्रविषयत्वप्रसङ्गेनालेपकवादावतारप्रसङ्गात् । प्रपञ्चितं चैतत्पूर्वस्मिन्नधिकारे **निक्षेपरक्षादिषु** च । तत्र **भाष्यकारोक्त**नित्यानुष्ठाननिष्ठस्य ब्राह्ममुहूर्तादिप्राप्तौ यत्कर्तव्यं तत्तावत्तच्छिष्यप्रशिष्यग्रन्थतन्मूलभूतसंहिताद्यनुसारेण संगृह्यते—पूर्वमेव यथाकालं विश्रान्त्यै निद्रां निर्विश्य प्राप्ते यामिन्याः पश्चिमे यामे सावधानेन निद्रा परित्याज्या ; *यामद्वयं शयानस्तु, *युक्तस्वप्नावबोधस्य इत्यादिस्मरणात् । येषु च योगग्रन्थेषु कृत्स्नायां रात्रौ निश्छिद्रयोगार्थं स्वप्नसमयसंभावितेन्द्रियक्षोभादिपरिहाराय च जागरः प्रतिपाद्यते, स तु विश्रमनिरपेक्षयोगदशापन्नपूर्णारोग्यपुरुषविशेषविषयः । तत्तत्पुरुषशक्त्यनुसारेणैव हि नित्यनैमित्तिककाम्यविषयाणां सर्वेषां शास्त्राणां प्रवृत्तिः, अत एव हि धर्मसाधनेषु प्रधानतमं शरीरं रक्षितुं प्रवृत्ते *ब्रह्मा स्मृत्वाऽऽयुषो वेदमुपवेदमथर्वणाम् इत्यथर्वणवेदोपवेदभूतायुर्वेदे

*ब्राह्मे मुहूर्त उत्तिष्ठेज्जीर्णाजीर्णे निरूपयन् । अजीर्णे पुनरासन्ध्यागमात्स्वापो विधीयते ॥

ईदृशसर्वक्रोडीकारेण हि *युक्तस्वप्नावबोधस्य इति गीतम् ; तस्मात्सर्वेषु मानवेषु प्रायिकतयौत्सर्गिकौ निद्राप्रबोधकालौ *यामद्वयं शयानः इत्यादिभिरुपदिश्यत इति विषयव्यवस्था । एवं प्राप्तकालमपनीतनिद्रातमस्कत्वेन सत्त्वस्थः प्रसन्नधीश्च भवति । तेन पूर्वयामानुसंहितमन्तःकरणचित्रभित्तिगतं विचित्रशुभाश्रयविशिष्टं ध्येयं निद्रातमोन्तरितमपि तत्कालसमुन्मिषितसत्त्वसन्धुक्षितसात्त्विकज्ञानरूपप्रदीपप्रकाशेन सम्यगवलोक्यते ; तत एवापररात्रयोगो निष्पद्यते, य एष सात्त्वतादिषु ब्राह्ममुहूर्तात्पूर्वमेव कर्तव्यत्वेन प्रपञ्च्यते—

*समुत्थायार्धरात्रेऽथ जितनिद्रो जितश्रमः । कमण्डलुस्थितेनैव [द्विरा]समाचम्य तु वारिणा ॥
गुरून् देवान् नमस्कृत्य ह्युपविश्याजिनासने ॥

इत्यादिना । एतत्संहितानिष्ठानामेष कालनियमः । निश्शब्दे सर्वसुषुप्तिकाले च ऐकाग्र्यातिशयसंभावनया च तद्विधिः । तत्तत्पुरुषशक्त्याद्यनुसाराच्च तत्तत्कालविधेरविरोध इत्युक्तम् ।

अत्र— *वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

इत्यादिभिर्मन्वाद्युपदिष्टसोदककमण्डलुधारणादिकं भगवद्योगिनोऽप्यनपोदितमिति ज्ञापनाय * कमण्डलुस्थितेनैवेत्युक्तम्। निद्रा[न्त]निमित्ततयोत्तरकर्माङ्गतया चात्र तन्त्रेणाचमनम्, तुशब्देन स्वशास्त्रोक्तविशेषः तोयाभावदशायां दक्षिणश्रवण-स्पर्शश्च व्यज्यते। स्मरन्ति हि—

*सम्यगाचमनाशक्तावभावे सलिलस्य च। पूर्वोक्तेषु निमित्तेषु दक्षिणं श्रवणं स्पृशेत्॥ इति।

अत्र मन्त्रचतुष्कादिव्यतिरिक्तं सर्वं संहितान्तरनिष्ठानामपि साधारणम्। अजिनासन इति *चेलाजिनकुशोत्तरम् इति गीते प्रधानांशग्रहणम्। *ततस्त्वभिमतेनैव तिष्ठेत्पद्मासनादिना इति जितासनगतत्वं विधीयते।

यच्च— *समं कायशिरोग्रीवं सन्धाय सह वक्षसा। दृङ्नासाग्रगता कार्या विनिमीलितलक्षणा॥

जिह्वा तालुतलस्था च सान्तरे दशनावली। ईषदोष्ठपुटौ लग्नौ धार्यौ द्वौ बाहुकूर्परौ॥

ऊरुमध्यप्रदेशे तु हस्तौ नाभेरधो न्यसेत्। अधरोत्तरयोगेन वामदक्षिणतः क्रमात्॥

अचलं योगपट्टेन त्वेवं सन्धार्य विग्रहम्। सङ्कोच्यापानदेशात्तु ह्युपरिष्टात्तमेव हि॥

विकास्य वर्णहीनेन हार्देनालक्ष्यमूर्तिना। विषयान्तर्निविष्टं तु क्रमाच्चित्तं समाहरेत्॥

कुर्याद्वै बुद्धिलीनं तु तां च कुर्यात्स्वगोचरे। समाधायात्मनाऽऽत्मानं सहमन्त्रैः स्वतः क्रमात्॥ इति।

यत्पुनरिह योगदशायां तादात्म्यभावनमुपदिश्यते—

*ततो जाग्रत्पदस्थं चाप्यनिरुद्धं च मन्त्रपम्। परावर्त्य शतं बुद्ध्या तदभिन्नेन चेतसा॥

तन्मन्त्रजपसामर्थ्यात्तादात्म्यस्थितिबन्धनात्। महिमा तु स विज्ञानस्तदीयस्तस्य जायते॥

अभ्यासाद्वत्सरान्ते तु तदद्वैतसमन्वितः। अथ प्रद्युम्नमन्त्रं तु परावर्त्य शतद्वयम्॥

योऽ[हं]यं सोऽहमनेनैवाप्यद्वैतेन सदैव हि। एवमेव समभ्यासान्मतिमान् छिन्नसंशयः॥

तत्प्रभावाच्च तेनैव तथा कालेन जायते। अनेन क्रमयोगेन जपध्यानान्वितेन तु॥

निखिलं [चा]व्याप्यधीकुर्यान्मन्त्रवृन्दं पुरोदितम्। यावदाभाति भगवान् स्थाने पूर्वोक्तलक्षणे॥

प्रलीनमूर्तिरमलोऽप्यनन्तस्तेजसां निधिः। चिदानन्दघनश्शान्तोऽप्यनौपम्यो ह्यनाकुलः॥

समाधायात्मनाऽऽत्मानं तत्र त्यक्त्वा जपक्रियाम्। ध्यातृध्येयाविभागेन यावत्तन्मयतां व्रजेत्॥

यदा संवेद्य निर्मुक्ते समाधौ लभते स्थितिम्। अभ्यासाद्भगवद्योगी ब्रह्म संपद्यते तदा॥ इति।

अत्र न स्वरूपैक्यादिकं विवक्षितम्; शरीरशरीरिणोर्जीवात्मपरमात्मनोश्शारीरकसमर्थितप्रकारेणाविरुद्धस्यास्पष्टलक्षणा-दोषस्याशेषशास्त्रानुगुणस्यानुकूलतर्कशालिनः, *तत्त्वथत्वादनुपश्यन्ति ह्येक एवेति साधवः इत्युपबृंहणशतसुस्थितस्य, *अवस्थितेरिति काशकृत्स्नः इतिसूत्रितस्य, पूर्वापरग्रन्थसंहितान्तरानुगुणस्य, विशिष्टाद्वैतस्य विवक्षितत्वात्। *ध्यातृ-ध्येयाविभागेन, इत्यादिना च निर्विकल्पकसमाध्यवस्था उच्यते। *ब्रह्म सम्पद्यते तदा इति च परमसाम्यरूपफल-प्रतिपादनम्। उक्तं च *ब्रह्मैव भवति इत्यादिवाक्यान्यधिकृत्य **भाष्यकारैः** *प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरितीति। अन्यथा *निरञ्जनः परमं साम्यमुपैति, *मम साधर्म्यमागताः इत्यादिश्रुतिस्मृतिभ्यां विरोधः।

तथा च श्रुत्यन्तरम्—

*यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम॥ इति।

साम्ये च स एवेतिव्यपदेशः श्रुतावेव दृश्यते *वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयति इति। एवं च सति *महिमा तु स विज्ञानस्तदीयस्तस्य जायते इत्यादिप्राकरणिकग्रन्थसामञ्जस्यं भवति। शारीरके च फलपादे मुक्तस्याविर्भूतस्वरूपस्य गुणाष्टकविशिष्टस्य जगद्व्यापारव्यतिरिक्तं भोगमात्रसाम्यं च सूत्रितम्—*जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च, भोगमात्रसाम्यलिङ्गाच्च इति। अत उपायदशायां फलदशायां च विशिष्टैक्यानुसन्धानमेवात्र विवक्षितम्। एतेन लाञ्छनन्यासादनन्तरं *मुद्रां बद्ध्वा स्मरेद्ध्यानं देवोऽहमिति भावयेत् इत्यादिसंहितान्तरग्रन्थाश्चात्र तुल्यन्यायाः। अत्र *मनो ब्रह्मेत्युपासीत इत्यादिष्विवेतिकरणादिवशाद्दृष्टिविधित्वं सुस्पष्टम्; अत एव हि तथाविध-भावनयाऽप्यनन्तरं योग्यतापादनमात्रमुक्तम्—

*न्यासेन देवमन्त्राणां देवतादात्म्यभावनात्। अप्राकृताङ्गकरणात्पूजामर्हति साधकः॥ इति।

अन्यथा— *देवतारूपमात्मानमर्चयेदर्घ्यधूपकैः। धूपावसानिकैर्भोगैर्ध्यात्वा नारायणं हृदि॥

इति समनन्तरकर्तव्यं कथं सङ्गच्छते? नहि स्वरूपैक्यभावनायां हृदि पुनर्नारायणध्यानमिति किञ्चित्स्यात्। नच शेषवृत्तौ प्रवर्तमानस्य स्वरूपैक्यभावनं जाघटीति। अतो दृष्टिविधिपक्षोऽत्र स्वीकार्यः। यद्वा गत्यन्तरे संभवति दृष्टिविधिविवक्षा च न युक्ता; अतस्तच्छरीरतया तादधीन्यादिभिस्सर्वानुवृत्तस्तद्व्यपदेशः; तदभिप्रायेण च *स्वनियाम्येत्यादिकं वक्ष्यति भाष्यकारः। योगे च भिन्नलक्षणयोः परमात्मप्रत्यगात्मनोः संबन्धानुसन्धानमेवेति शाण्डिल्यस्मृतिवाक्येन स्थापितं पूर्वाधिकारे। उक्तं च विप्रकीर्णं सात्त्व[ते]तनित्यं संगृह्यान्ते **श्रीकृष्णमुनिभि**स्स्वरूपैक्यादिबुद्धेरवैदिकत्वम्—

*चेतनस्त्वेक एवेति मतिर्या केवला क्रिया। फलतीति मतिस्ते द्वे वेदाप्रामाण्यबुद्धिजे।
स एनं प्रीतः प्रीणाति ब्राह्मणस्यानुगे न ते॥ इति।

एवं यथावदनुष्ठितयोगस्य श्रान्तिसम्भावनायां ब्राह्ममुहूर्तात्पुनर्विश्रामोऽनुज्ञाप्यते—

*ततः श्रमजयं कुर्यात्त्यक्त्वा ध्यानासने क्रमात्। समासीत शयानश्च कालं रात्रिक्षयावधि॥

अत्र ब्राह्ममुहूर्तप्रभृति विशेषकर्तव्ये दिङ्मात्रं प्रदर्शितम्—

*ब्राह्मे मुहूर्ते संप्राप्ते उत्थाय शयनात्ततः। स्नात्वाऽभ्यर्च्य जगन्नाथं समिदाधानमाचरेत्॥

इत्यादिना। तदिदं संहितान्तरेषु विस्तृतम्। अत्र हरिर्हरिर्हरिरिति मुहुस्सङ्कीर्तयन् हरिमेव चिन्तयन्नुत्तिष्ठेत्। अत्र हरिशब्दसङ्कीर्तनं सप्तकृत्व इति **श्रीमद्गृध्रसरोमुनिभि**र्नित्यकर्मसंग्रहे निबद्धम्। उत्तिष्ठतश्च हरिशब्दपूर्वकभगवदनु-स्मरणं **श्रीविष्णुधर्मे** भगवता शौनकेनोक्तम्—

*उत्तिष्ठंश्चिन्तय हरिं व्रजंश्चिन्तय केशवम्। भुञ्जंश्चिन्तय गोविन्दं स्वपंश्चिन्तय माधवम्॥ इति।

सर्वकर्मारम्भावसानेषु च हरिसंस्मरणं तेनैव स्वकीयसूत्रेऽप्युक्तम्—*हरिमेव स्मरेन्नित्यं कर्मपूर्वापरेषु च इति। स च निद्रानन्तरमनुस्मर्तव्यो हरिः *नरो नारायणश्चैव हरिः कृष्णस्तथैव च इति धर्मदेवतात्मजत्वेन स्मर्यमाणेषु भगवदव-तारेषु तृतीय इति संप्रदायः। गजेन्द्रमोक्षकश्चैव—

*ग्राहग्रस्ते गजेन्द्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन् व्याघूर्णन्माल्यभूषावसनपरिकरो मेघगम्भीरघोषः।
आबिभ्राणो रथाङ्गं शरमसिमभयं शङ्खचापौ सखेटौ हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः॥

स खलु तमोमयग्राहग्रस्तस्वाश्रितगजेन्द्रमोचकः सुषुप्तिरूपस्वेतरदुर्निवारतमोग्राहग्रस्तजन्तुजालमोचकत्वेनानुसन्धीयते।

तमधिकृत्यैव पौराणिकोपजप्यं *प्रातः स्मरामि इत्यादिश्लोकत्रयं प्रभाते सर्वैः पठ्यते । तत्फलश्रुतौ च हरिरित्येव भगवान्निर्दिष्टः—*श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत् । लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ इति । पापं तद्विपाकरूपं सर्वमनिष्टं हरतीत्यत्र हरिशब्दः ।

*ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते ॥

इत्यादिभिस्तस्यैव निखिलजगदुदयविभवलयलीलस्य निरङ्कुशस्वातन्त्र्यं चानुसन्धेयम् । एवमुत्थाय निद्रान्ताचमनं मुख्यम्, दक्षिणश्रवणस्पर्शनरूपं वा तदानीं शक्यं विधाय तस्मिन्नेव शयने समासीनः प्रतिसं[ह्र]हितयोगो योगशास्त्रोक्ते यतमान-व्यतिरेकैकेन्द्रियवशीकरणाख्ये क्रमभाविनि संज्ञाचतुष्टये द्वितीयावस्थारूपव्यतिरेकसंज्ञान्यायेन भूतभाविदशाविशेषपरा-मर्शाय कृताकृतप्रत्यवेक्षणाय च नियतेन्द्रियस्समाहितोऽतिक्रान्तमनन्तं कालं निरर्थकमवलोक्य निर्वेदं परं गच्छेत् । निर्वेदप्रकाराश्च विविधाः तत्तत्संहिताविशेषेष्वनुसंधेयाः । तदिदं संगृहीतं **नारायण**मुनिभिः—

*ब्राह्मे मुहूर्ते सत्त्वस्थो हरिर्हरिरिति ब्रुवन् । उत्थाय शयने तत्र समासीनस्समाहितः ॥
व्यर्थं वीक्ष्य गतं कालं निर्विद्याहमितः परम् ॥ इति ।

विस्तरेणोद्धृतं चैतद्वङ्गिवंशेश्वरैः—

*ब्राह्मे मुहूर्ते संप्राप्ते निद्रां त्यक्त्वा प्रसन्नधीः । हरिर्हरिर्हरिरिति व्याहरेद्वैष्णवः पुमान् ॥
उत्थाय शयने तस्मिन्नासीनो नियतेन्द्रियः । त्रस्तनिर्विण्णहृदयो व्यर्थं वीक्ष्य गतं वयः ॥

इत्यादिभिः, *दुस्तरां मद्दशामेतां कथयिष्यामि कस्य वा इत्यन्तैरधिकविंशैः श्लोकैः । यद्यपि मुमुक्षोः *परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ; तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् इति प्राथमिकगुरूपसत्तिकालात्पूर्व-मेव तृणीकृतहिरण्यगर्भादिभोगः परिपूर्णनिर्वेदस्संवृत्तः, तथाऽपि विषमविपाकविशेषगुणत्रयाश्रयभूतप्रकृतिसंबद्धतया संभावितविषयसङ्गादिदोषपरिहाराय तथाविध एव निर्वेदोऽनुवर्तनीयः । अगीयत चास्य नित्यानुवर्तनीयत्वम् अमानित्वादि-गुणगणमध्ये—*जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् इति । अतस्सिद्धोपायस्यापि पराङ्कुशपरकालादीनामिव भगव-दनुभवविच्छेदकतया हेयतमरजस्तमोमयनिद्रादिप्रतिकूलवर्गप्रवाहानुवृत्तिदर्शनेन संसारवैराग्योपचयार्थमहरहस्तदुचिताव-सरेषु निर्वेदः कर्तव्य एव । एवं सति विवेकविमोकादिसप्तकान्यतमभूतानवसादविरुद्धावसादवशादुत्तरकैङ्कर्यप्रवृत्ते-रनिष्पत्तिस्स्यादिति तत्परिहारायानन्तरमुच्यते—

*इति निर्विद्य तदनु धृतिमालम्ब्य सात्त्विकीम् । विधूय चेमं निर्वेदं सर्वकार्यावसादकम् ॥

इत्यादिना गतजलसेतुबन्धनाभिलाषतुल्यानुतापप्रशमनपूर्वकं सात्त्विकधृत्यालम्बनात्मकागामिकालशक्यकैङ्कर्यनिश्चयः । सात्त्विकधृतिस्वरूपं चेदं भगवता गीतम्—

*धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिस्सा पार्थ सात्त्विकी ॥ इति ।

सच निश्चयप्रकारः एवं तत्कालोचितकर्तव्यविभागेन संगृहीतः—

*इत ऊर्ध्वमहं तावद्यावज्जीवं श्रियः श्रियः । पदयोरर्चनं कर्तुं यतमानस्समाहितः ॥
अभिगच्छन् हरिं प्रातः पश्चाद्द्रव्याणि चार्जयन् । अर्चयंश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥

ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु । वर्तमानस्सदा चैवं पाञ्चकालिकवर्त्मना ॥

स्वार्जितैर्गन्धपुष्पाद्यैः शुभैश्शक्त्यनुरूपतः । आराधयन् हरिं भक्त्या गमयिष्यामि वासरान् ॥ इति ।

अत्र इत ऊर्ध्वं यावज्जीवं सदेत्यादयः शब्दाः कैङ्कर्यप्रारम्भदिवसे तावत्स्वरसवाहिन उत्तरोत्तरदिवसेष्वपि निरुपाधिककैङ्कर्योपचयसिद्ध्यर्थं निर्वेदविषयतयाऽनुवर्तमानानां भगवदासक्तिविरोधिनामान्तराणामष्टादशचण्डालषड्वृषलादिशब्दव्यपदेश्यानां दोषविशेषाणां निश्शेषनिवृत्तिलक्षणवैशिष्ट्यलाभार्थं प्राज्ञप्रज्ञापहारकविषयेन्द्रियादिमूलसंभावितपाक्षिककैङ्कर्यविच्छेदपरिहारार्थं चेदं प्रथमप्रवर्तनेनैवं मनोरथानुवर्तनं कार्यमेव । अत एव **नारायणमुनि**भिरपि—

*भगवच्चरणाम्भोजपरिचर्याविधिक्रमम् । एकान्तिभिरनुष्ठेयं नित्यं समभिदध्महे ॥

इति नित्यकर्तव्यं प्रक्रम्योक्तम्—

*व्यर्थं वीक्ष्य गतं कालं निर्विद्याहमितःपरम् । आराधयेयं ध्यायेयं भजेयं पुरुषोत्तमम् ॥

कीर्तयेयं नमस्येयं चिन्तयेयमनारतम् । व्रजेयं शरणं चेति निश्चित्य मनसा स्वयम् ॥ इति ।

तत्र *गमयिष्यामि वासरान् इत्यनेन प्रकृतस्य परमैकान्तिनः प्रकारान्तरेण कालयापनमशक्यमित्यच्छिद्रकैङ्कर्यस्य स्वयंप्रयोजनत्वं व्यज्यते । तदेव कण्ठोक्तं **नारायणमुनिभिः**—

*किं किं न साध्यं भगवदाराधनपरैर्नरैः । वैष्णवानां विशेषेण स्वयमेतत्प्रयोजनम् ॥ इति ।

यदत्र धर्मार्थचिन्तनं तदुपायभूतकायक्लेशचिन्तनं च स्मर्यते, तत्र कैङ्कर्यरूपो धर्मः, तच्छेषभूतोऽर्थः, तयोर्गुरुलघूपायविवेकार्थं कायक्लेशचिन्तनम् । तत्र न पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्यात् यथाशक्ति धर्मार्थकामेभ्यस्तेषु च धर्मोत्तरस्स्यादित्यादिभिर्गौतमाद्युक्तकामोपाधिकप्रवृत्त्यंशोऽपि *धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ इत्युक्तसत्सन्तानोत्पादनादिमात्रार्थशास्त्रीयकामविषयतया गृहस्थस्य कैङ्कर्यपक्षे निक्षिप्यते । तदयमपवर्गाङ्कुरभूतस्वयंप्रयोजनस्वामिकैङ्कर्यमहानन्दलाभः *विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्यत इति कथं भविष्यतीति भयादनन्तरं प्रतिबन्धकनिवृत्तिः कथ्यते—

*एतत्क्रियाविरोधीनि प्राचीनान्यशुभानि मे । कर्माण्यनन्तान्यच्छेद्यान्यनादीन्यशुचीन्यपि ॥

स्वयैव कृपया देवो विनाश्यास्मन्मनोरथान् । पूरयत्विति संप्रार्थ्य मन्त्रमेतमुदीरयेत् ॥ इति ।

स च प्रार्थनामन्त्रः *त्वय्याराधनकामोऽयम् इत्यादिको यथान्यायं देशिकसकाशादधीत्यात्रान्वहं प्रयोक्तव्यः । एवमेव हि सर्वेषां मन्त्राणां समाधिः, विपर्यये हि नैष्फल्यं दृष्टादृष्टप्रत्यवायश्च तेषु तेषु शास्त्रेषु पठ्यते—

*यदृच्छया श्रुतो मन्त्रश्छन्नेनाथ छलेन वा । पत्रेक्षितो वा व्यर्थस्स्यात्प्रत्युतानर्थदो भवेत् ॥ इति ।

अस्यैव श्लोकस्यान्यत्र *तं जपेद्यद्यनर्थकृत् इति चतुर्थपादस्य पाठः । एवंविधनिर्विघ्नकैङ्कर्यसिद्धिरपि—

*सङ्कल्पादेव भगवांस्तत्त्वतो भावितात्मनाम् । वृत्तान्तमखिलं कालं सेचयत्यमृतेन तु ॥

इति **श्रीसात्त्वता**दिकथितप्रकारेण भगवत्प्रसादादेव भविष्यतीति तत्सिद्ध्यर्थमपि प्रथमं हरेरेव ध्यानमुच्यते—*इति संप्रार्थ्य तत्सिद्ध्यै संस्मरेत्प्रथमं हरिम् इत्यादिना । अत्र गुरुपरम्पराप्रपत्तिपूर्वकमिदं ध्यानं विवक्षितम् , *गुरून् प्रपद्य प्रथमं तद्गुरूंश्च ततो हरिम् इति तस्मिन्नवसरे नित्यान्तरोक्तेः । उक्तं च **श्रीसात्त्वते**ऽपररात्रयोगारम्भे *गुरून् देवं नमस्कृत्य ह्युपविश्याजिनासने इत्यादि । सर्वत्र शास्त्रीयकर्मारम्भे भगवत्पर्यन्तगुरुपंक्तिप्रपदनं निश्श्रेयसाय भवति । उक्तं च

**रहस्याम्नाय**ब्राह्मणे *स चाचार्यवंशो ज्ञेयो भवति आचार्याणामसावसावित्याभगवत्त इति । देवगुरुभक्तिरेव सर्वतत्त्वप्रकाशकारणमिति **कठवल्ल्यां** श्रूयते—

*यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ।

उक्तं **चापस्तम्बा**दिभिः *देवमिवाचार्यमुपासीत इत्यादि । एवं मनोरथसिद्ध्यै गुरूपसत्तिपूर्वकं भगवन्तं प्रपद्य भगवच्छास्त्रतदुपबृंहणनित्यगद्यस्तोत्रादिषु विप्रकीर्णोक्तध्यानं यथावगमं समाहृत्यानुतिष्ठेत् । गुणोपसंहारपादोक्तन्यायेन ध्येयरूपादिषु साधारणमसाधारणं च सर्वं तत्तत्संहितादिविशेषानुसारेणावगन्तव्यम् ; एवं परिपूर्णं भगवन्तमनुसन्धाय ततो वासुदेवादिव्यूह[नाम]चतुष्टयं केशवादिव्यूहान्तरनामानि मत्स्यादिदशावतारनामान्यन्यान्यप्यधिगतानि पृथग्भूतानि स्तोत्रनिबद्धानि देव्यादिनामानि च प्रहर्षजनकेनोच्चैश्शब्देन सङ्कीर्तयेत् ; तत्कालचोदितं समुचितभगवन्मन्त्रजपं वेदाभ्यासं च यथाबलमाचरेत् । तत्र वासुदेवादिकल्किपर्यन्तसङ्कीर्तनं प्रणवपूर्वकं मन्त्रात्मकं **पारमेश्वरे** प्रोक्तम्—

*संप्रबुद्धः प्रभाते तु उत्थाय शयने स्थितः । नाम्नां सङ्कीर्तनं कुर्यात्षोडशानां प्रयत्नतः ॥
ओं नमो वासुदेवाय नमस्सङ्कर्षणाय ते । प्रद्युम्नाय नमस्तेऽस्तु अनिरुद्धाय ते नमः ॥
क्रमशः केशवादीनां यावद्दामोदरं द्विजः । नमो नमः केशवाय नमो नारायणाय च ॥
माधवाय नमश्चैव गोविन्दाय नमस्ततः । विष्णवेऽथ नमस्कुर्यान्नमस्ते मधुसूदन ॥
नमस्त्रिविक्रमायाथ वामनाय नमस्ततः । नमोऽस्तु श्रीधरायाथ हृषीकेशाय ते नमः ॥
नमस्ते पद्मनाभाय नमो दामोदराय च । दिव्यानामवताराणां दशानामथ कीर्तनम् ॥
एकशृङ्गादिकानां तु विहितः क्रमशः प्रभोः । नमस्ते मीनरूपाय कमठाय नमस्ततः ॥
नमोऽस्त्वादिवराहाय नारसिंहाय ते नमः । नमो वामनरूपाय नमो रामत्रयाय च ॥
कुठारज्याहलास्त्राय नमः कृष्णाय वेधसे । कल्किन् विष्णो नमस्तेऽस्तु सर्वं सप्रणवं द्विजः ॥
यथास्थितक्रमेणैव भेदांस्त्वेतान् हरेर्विभोः । नमस्कुर्यात्प्रभाते तु योगान्ते तु दिनक्षये ॥
शब्देनोच्चतरेणैव संहृष्टिजनकेन तु । स्तोत्राणि चाथ मन्त्राणि उदीर्यान्यानि वै ततः ॥ इति ।

एवञ्च संगृहीतं **वङ्गिवंशेश्वरैः**—

*चिकीर्षन्नीप्सितं कर्म तन्नामान्यनुकीर्तयेत् । चतुर्भिर्वासुदेवाद्यैर्नामभिस्सह संयतः ॥
जपेद्द्वादशनामानि केशवादीनि चादरात् । दशावतारनामानि मत्स्यकूर्मादिकान्यपि ॥
जपन्नुत्थाय शयनादर्चयिष्यन् सदा हरिम् ॥ इति ।

एवमुच्चैस्तरेण शृण्वतामपि सकलदुरितहारिणा हरिसङ्कीर्तनेन संहृष्टमानसः सन्ध्यायामासन्नायां सन्धातृत्वेन सर्वेषां सन्ध्येति परिकीर्तितं भगवन्तमुपासितुं जिगमिषुर्हरिं ब्रुवन् तल्पादुत्थाय *नमः क्षितिधरायोक्त्वा वामं पादं महामते इति **पारमेश्वरा**दिपठितेन नमःपूर्वेण क्षितिधरलिङ्गेन मन्त्रेण महावराहं क्षितिधरमनुध्यायन् वामपादं भूमौ विन्यसेत् । *ततो भूधरमन्त्रेण वामपादं भुवीत्यपि स एव मन्त्र उच्यते । तत्र क्षितिधारणसाम्यात्कूर्मादिरूपान्तरशङ्काव्युदासाय *श्रीमद्वराहमन्त्रेण न्यसेद्वामपदं भुवि इति विशेषशब्देन व्याचख्युः । महावराहमहिष्या भुवः प्रपदनं चात्र **महाभारता**दिषु समन्त्रकमुपदिश्यते—*नमोऽस्तु प्रियदत्तायै तुभ्यं देवि वसुन्धरे इति । पृथिव्याः प्रियदत्तेति कीर्तनं च विष्णोः ब्रह्मण्यदेवकीर्तनवदनवसादहेतुत्वेन स्मर्यते—

*पृथिवीं प्रियदत्तेति गायन् सर्वंसहेति वै। विष्णुं ब्रह्मण्यदेवेति कीर्तयन्नावसीदति ॥ इति।
ततः पदक्रमान् कुर्वन् विष्णुक्रमणमन्त्रेण पादेन्द्रियाधिदैवतं त्रिविक्रमं विष्णुं ध्यायेत्, *क्रान्ते विष्णुं बले हरिम् इति पदविक्षेपे विष्णोरनुध्येयतोक्तेः, तदनुसन्धानस्य च तत्तदुचितशास्त्रीयप्रकाशसापेक्षत्वात्। इति सन्ध्यापूर्वकालकर्तव्यक्रमः।

ततः स्नानीयदर्भतिलवस्त्रादिकं दृष्टादृष्टार्थस्नानोपकरणं सर्वं समाहृत्य तमस्तिरोहितदुष्टजन्तुपलायनार्थं निर्गममार्गं सञ्चालयेत्। यथोक्तं **पारमेश्वरे**–*बहिर्निर्गममार्गं तु सञ्चाल्य इत्यादि। ततो गृहान्निर्गच्छन् केशवमनुध्यायेत् *व्रजन् चिन्तय केशवम् इतिस्मरणात्; केशवशब्देन *अंशवो ये प्रकाशन्ते *यदादित्यगतं तेजः इत्याद्युक्ता अंशव उच्यन्ते, तद्वत्त्वात् केशवः, गच्छतो मार्गादिप्रकाशनार्थं दिङ्मोहाद्यान्तरतमोनिरासार्थम्,

*क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे सम्भूतौ तस्मात्केशवनामवान् ॥

इति ब्रह्मरुद्रोपलक्षितविश्वसृष्टिरक्षाहेतुत्वात्, केशिवधोपलक्षितसर्वदुष्टदमनस्वभावत्वाच्चासहायदशासाहाय्यार्थं तदा तच्चिन्तनम्। ततः स्वाश्रमग्रामादिभ्यो बहिः नैर्ऋत्यां दिशि द्वित्रेषुपातप्रमितां भुवमतिक्रम्य शुद्धे देशे निक्षिप्तस्नानोपकरणो यथोक्तनियमैर्विण्मूत्रविसर्जनं कृत्वा स्ववर्णाश्रमावस्थाद्यनुगुणादृष्टार्थमृत्सङ्ख्यावर्णपरिमाणादिनियमवद्गन्धलेपक्षयकरमर्शःपीडादिरहितं शौचं कुर्यात्। अत्र मूत्रपुरीषयोरेकस्य प्रवृत्तौ तस्यैव शुद्धिः, क्रमेणोभयप्रवृत्तौ यथाक्रमम्, युगपत्प्रवृत्तौ पुरीषशुद्धिः प्रथममिति निष्कर्षः। तत्रैव **पाद्मे** *उपवीतं कर्णदेशे निधाय च तृणादिना इत्यादिना विण्मूत्रविसर्जनप्रकारमुक्त्वाऽनन्तरमेव शौचविधिरुक्तः–

*दक्षिणेतरहस्तेन गृहीत्वा मेहनं ततः। दक्षिणे मृत्तिकां हस्ते समुत्थाय जलाशयम् ॥ इति।
प्रागुदीच्यामुदीच्यां वा गत्वा शौचं समाचरेत्। मृत्तिकाभिर्द्वादशभिर्गुदं षड्भिश्च मेहनम् ॥
अन्तरा चान्तरा वामं करं प्रक्षाल्य वारिभिः। तन्मात्राभिस्तदन्ते द्वौ करौ द्वादशसङ्ख्यया ॥
संशोध्य च करौ जङ्घे कटिं चोरुं च वारिभिः। प्रत्येकं मृत्तिकामात्रचतुष्केन विशोधयेत् ॥

पितामहस्तु सनत्कुमारायैवमाह–

*ततः पूर्वं समुत्थाय प्राचीमेवोपनिष्क्रमेत्। उदीचीं प्रागुदीचीं वा शौचाचारक्षमां दिशम् ॥
यत्रोदकं प्रभूतं तु तद्गत्वा शौचमाचरेत् ॥ इति।

स्मरन्ति देशादिभिन्नं शौचम्–

*देशं कालं तथा ज्ञानं द्रव्यं द्रव्यप्रयोजनम्। उपपत्तिमवस्थां च ज्ञात्वा शौचं समाचरेत् ॥ इति।

दिवसादिभेदेनापि शौचतारतम्यं स्मर्यते–

*अह्नि यच्छौचमुद्दिष्टं निश्यर्द्धं तु ततो भवेत्। पथि पादस्ततः प्रोक्तो यथाशक्त्यातुरस्य तु ॥ इति।

**पारमेश्वरे** प्रावृडादिकालभेदेनापि मृत्सङ्ख्याभेदादिकमुक्तम्–

*अस्पृष्टतीर्थश्शौचार्थं मृद्भिरभ्युद्धृतैर्जलैः। गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥
तिस्रो लिङ्गे मृदो देया एकैकान्तरमृत्तिकाः। पञ्च वामकरे देयास्तिस्रः पाण्योर्विशुद्धये ॥
मूत्रोत्सर्गे शुद्धिरेषा पुरीषस्याप्यनन्तरम्। अर्धप्रसृतिमात्रं तु प्रथमा मृत्तिका स्मृता ॥
द्वितीया च तृतीया च तदर्धा परिकीर्तिता। बिडालपादमात्रं तु तदूर्ध्वं परिकीर्तिता ॥

पञ्चापाने मृत्तिकाः स्युस्तथैवान्तरमृत्तिकाः । दश वामकरे देयास्सप्त तूभयहस्तयोः ॥
पादाभ्यां तिसृभिश्शुद्धिर्जङ्घाशुद्धिश्च पञ्चभिः । नियोजयेत्ततो विप्रः कट्यां वै सप्तमृत्तिकाः ॥
स्वदेहस्वेददोषघ्ना बाह्यकर्दमशान्तये । भक्तानां श्रोत्रियाणां च वर्षास्वेवं निरूपितम् ॥
प्रावृडुक्तात्तु वै तस्मादेकमृद्द्वयपनोदनम् । शरद्ग्रीष्मवसन्तेषु नित्यं कार्यं क्रियापरैः ॥
एकस्मादपि चैकैका परिपाल्या तु मृत्तिका । हेमन्ते शिशिरे विप्रैः श्रोत्रियैस्संयमस्थितैः ॥
पथि शौचं प्रकर्तव्यं देशकालानुरूपतः । गन्धलेपमपास्यैव मनश्शुद्ध्या विशुद्ध्यति ॥
विहिताः पादशौचे तु बिडालपदसम्मिताः । मृदश्चतुर्द्विजेन्द्राणां त्रिर्द्विरेका क्रमात्ततः ॥
वर्णानां शूद्रनिष्ठनां कटिशौचे तथैव हि । सप्तसप्त उभाभ्यां तु कराभ्यां त्रितयं पुनः ॥
सर्वेषामेव सामान्यं पाणिशौचमुदाहृतम् । अन्तर्जानुगतं कृत्वा भुजयुग्मं द्विजोत्तमः ॥
चतुर्धा मणिबन्धस्थं तोयं कृत्वा सुनिर्मलम् । बुद्बुदाद्यैर्विनिर्मुक्तं पिबेद्विप्रो हृदा ततः ॥
एकैकां ह्रासयेन्मात्रां वर्णक्रममनुक्रमात् । पाणिना क्षालितेनैव पुनराचमयेद्बुधः ॥ इति ।

आचमनप्रकाराश्च बहुधा धर्मशास्त्रेषु भगवच्छास्त्रेषु च प्रतिपादिताः । तत्र स्वसूत्रोक्तमन्यद्वा यथाधिगममाचमनं कुर्यात् । आचमनोक्त्यनन्तरं च दन्तधावनमुखशोधनप्रकारः **पारमेश्वरे** उक्तः—

* एवं प्रक्षाल्य विधिवदाचम्य प्रयतः शुचिः । प्राङ्मुखोदङ्मुखो वाऽपि उपविश्यासनं ततः ॥
अर्कादिभिरपामार्गैः कारयेद्दन्तधावनम् । प्रातर्हुत्वाऽऽचमन्नग्रे कषायकटुतिक्तकम् ॥
भक्षयेद्दन्तकाष्ठं च दन्तमांसान्यबाधयन् । द्वादशाङ्गुलमात्रं तु वक्रग्रन्थिविवर्जितम् ॥
पयोभिस्सह तर्जन्या ब्रह्मन् द्वादशसङ्ख्यया । काष्ठालाभे तु रोगे वा कर्तव्यं दन्तधावनम् ॥
षोडशाङ्गुलदीर्घैस्तु वक्रग्रन्थिविवर्जितैः । हेमादिनिर्मितैर्वाऽपि कुशदर्भादिभिस्तथा ॥
जिह्वानिर्लेहनं चैव गण्डूषमुखधावनम् । कुर्यादाचमनं विप्रश्शुचिना सलिलेन च ॥ इति ।

अत्रार्कादिभिरित्युक्तं तत्रैव विवृतम्—

* अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् । शारजोदुम्बराश्वत्थप्लक्षदर्भांश्च वैणवान् ॥
आम्राङ्कुरमपामार्गमर्जुनं धातकी शमी । अन्यानि च पवित्राणि तेषु संपन्नमाहरेत् ॥ इति ।

अत्राभक्षणीयस्यापि काष्ठस्य भक्षणोक्तिर्भक्षणवदाद्यन्ताचमनादिप्राप्त्यर्था । **पाद्मे**ऽप्येवं दन्तधावनमुक्तम्—

* आचम्य प्राङ्मुखो भूत्वा दन्तधावनमाचरेत् । न्यग्रोधोदुम्बराश्वत्थप्लक्षाम्रार्जुनधातकी ॥
पलाशवेणुखदिरशमीदारूणि धावने । दन्तानामुदितान्येकादश चाम्भोरुहासन ॥
दन्तधावनकाष्ठं च द्वादशाङ्गुलमायतम् । दशाङ्गुलं तथा मानमष्टाङ्गुलमथायतम् ॥
ब्राह्मणक्षत्रियविशां क्रमेणैतदुदाहृतम् ॥ इति ।

अत्र सर्वत्र प्रतिषिद्धानां वर्जनं सर्वत्र विहितानामुपादानं च क्वचिद्विहितानां क्वचिच्च प्रतिषिद्धानां गत्यभावे ग्रहणमिति निष्कर्षः; एवं सर्वत्र भाव्यम् । यथोक्तलक्षणं दन्तकाष्ठं समन्त्रकं गृहीत्वा * आयुर्बलम् इत्यादिस्मार्तमन्त्रपूर्वकं प्रादक्षि-

ण्येन प्रथममधरतो दन्तधावनं कुर्यात्। काष्ठालाभादिदशासु तत्तत्तरुपर्णैस्तृणैर्वा तेषामप्यभावे द्वादशगण्डूषैर्मुखशुद्धिः।
उक्तं चैवं **नारायणमुनिभिः**—

*तीर्थं संशोध्य संक्षाल्य पादावाचम्य वाग्यतः। तृणैर्वा शास्त्रसंसिद्धैर्वटार्कखदिरादिभिः॥
दन्तान् संशोध्य निर्लिख्य जिह्वां गण्डूषयेन्मुहुः॥ इति।

स्मरन्ति च—*अलाभे दन्तकाष्ठानां प्रतिषिद्धदिनेष्वपि। अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति॥ इति।

अत्र— *प्रतिपत्पर्वषष्ठीषु चतुर्दश्यष्टमीषु च। दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥
अष्टम्यां च चतुर्दश्यां पञ्चदश्यां त्रिजन्मसु। तैलं मांसं व्यवायं च दन्तकाष्ठं च वर्जयेत्॥

इत्यादिभिः प्रतिषिद्धदिनानि ग्राह्याणि। दन्तशुद्ध्यनन्तरं दन्तकाष्ठं क्षालयित्वा भङ्क्त्वा शुद्धस्थले निक्षिपेत्। तत्र यच्छुद्धेः पूर्वं जलाशयगमनमुक्तं तत्र भागवतं भागवताश्रितं च तीर्थं विवक्षितम्; यथाऽऽहुः—*तीर्थं भागवतं शुद्धमुपगच्छेन्मनोहरम् इति, *ततस्तीर्थं समाश्रित्य शुद्धं भागवताश्रितम् इति। स्मरन्ति च—

*जलं शुद्धमशुद्धं वा विष्णुवास्तुसमीपतः। विष्णुगङ्गासमं तीर्थं महापातकनाशनम्॥
भवद्विधा भागवतास्तीर्थभूताः स्वयं प्रभो। तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता॥
ये भजन्ति जगद्योनिं वासुदेवमनीश्वरम्। न तेभ्यो विद्यते तीर्थमधिकं राजसत्तम॥
यत्र भागवताः स्नानं कुर्वन्ति विमलाशयाः। तत्तीर्थमधिकं विद्धि सर्वपापप्रणाशनम्॥ इति।

एवं गृहीतस्नानोपकरणस्तीर्थमासाद्य मुखशोधनपर्यन्तं कृत्वा वक्ष्यमाणक्रमेण तीर्थावगाहनादिपूर्वकं सर्वक्रियामूलभूतं स्नानमाचरेत्। प्रातस्स्नानस्य नित्यत्वं प्रभावश्च तत्रतत्र द्रष्टव्यः। तत्र तत्र वर्णभेदेन स्नाननियमं स्मरन्ति **पितामहादयः**—

*आपोवगाहनं स्नानं विहितं सार्ववर्णिकम्। मन्त्रवत्प्रोक्षणं चापि द्विजातीनां विशिष्यते॥ इति।

तत्रशक्तस्य वारुणमेव स्नानम्, तदशक्तस्य तु—

*न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि। न चान्यवस्त्रमाच्छाद्य नाविज्ञाते जलाशये॥

इत्यादिभिस्तत्तत्प्रतिषेधात् स्नानान्तराणि भवन्ति। तेषु च वारुणानन्तरमाकण्ठस्नानमशक्तौ आशिरस्कं वेति स्मरणात् तत्राप्यशक्तस्य कापिलं तस्मिन्नप्यशक्तस्य तत्तच्छास्त्रचोदितेषु पार्थिववायव्यमन्त्रमानसात्मध्यानपञ्चाङ्गपुरुषान्तरकृतस्पर्शपूर्वकावगाहनरूपेषु स्नानान्तरेषु तत्कालसंभावितं तत्रापि स्वशक्त्यं कुर्यात्। आह चैवं **क्रतुः**—

*प्राक् शौचं स्नानमादेयं ब्राह्मं वा स्नानमिष्यते। वृद्धातुराणामुष्णाद्भिर्योगाङ्गैर्वा यमादिभिः॥ इति।

अत्र यथाधिकारमिति विवक्षा। एवं चोक्तं **पारमेश्वरे**—

*विना विविधसंपर्कैः पञ्चाङ्गं स्नानमाचरेत्। मुखं करद्वयोपेतं पादौ कटितटावधि॥
स्त्रीसङ्गाद्युपघातेषु स्नानं कुर्याद्यथाविधि॥ इति।

शीतोदकस्नानासमर्थस्योष्णोदकस्नानं, तच्चानुपहतस्याप्रतिषिद्धदिवसेष्वेव। एवं शक्त्याद्यनुगुणं स्नानं कुर्यात्। बलानुरूपस्नानं प्रत्येकं समुदितं वा संजगृहुः—

*दिव्याप्यमान्त्रवायव्यभौमतैजसमानसैः। एतैस्समस्तैर्व्यस्तैर्वा कृतशुद्धिर्यथाबलम्॥ इति।

अन्यथा त्वकर्मण्यो भवति, *स्नानमूलाः क्रियास्सर्वाः इति विधानात्। **अत्रिश्च** स्नानजपहोमदानानां नित्यत्वमाह—

* अस्नाताशी मलं भुङ्क्ते अजपः पूयशोणितम् । अहुताग्निः क्रिमिं भुङ्क्ते अदाता कीटमश्नुते ॥ इति ।

एवं स्नातः कृतोर्ध्वपुण्ड्रः स्नानाङ्गं भगवदात्मकदेवर्षिपितृतर्पणं कृत्वा आचम्य मन्त्रप्रोक्षणमन्त्राचमनपुनःप्रोक्षणस्वात्मपरिषेचनानि स्वसूत्रसंहितोक्तप्रकारेण कृत्वा गायत्र्याऽभिमन्त्रितजलमादित्यान्तस्स्थिताय परमात्मनेऽर्घ्यरूपं दद्यात् । अत्र जलाञ्जलिप्रक्षेपस्त्रिरिति सनत्कुमाराय **पितामहः** प्राह—

* उभाभ्यां तोयमादाय हस्ताभ्यां सुसमाहितः । गायत्र्या चाभिमन्त्र्यापस्तारव्याहृतिपूर्वया ॥
रवेरभिमुखस्तिष्ठन्नूर्ध्वं त्रिस्सन्ध्ययोः क्षिपेत् ॥ इति ।

ततो वज्रीभूततज्जलनिहतमन्देहाख्यरक्षोनिरसनपाप्मावधूननार्थं प्रदक्षिणं परिक्रम्य मार्गशीर्षादिमासेशान् तत्तन्मन्त्रेण तर्पयित्वा,

* सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिःपठेदायतप्राणः प्राणायामस्स उच्यते ॥

इत्युक्तप्रकारेण प्राणायामत्रयं कृत्वा गायत्रीमावाह्याष्टोत्तरसहस्रमष्टोत्तरशतं यथाशक्ति [दशावरां] गायत्रीं जपेत् ।

* न च क्रमन्न च हसन्न पार्श्वमलोकयन् । न पदा पादमाक्रम्य न चैव हि तथा करौ ॥

इत्यादयश्च जपकालनियमाः ।

* मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणाः । मद्याजिनो मन्नियमास्तान् प्रयत्नेन पूजयेत् ॥
तेषां तु पावनायाहं नित्यमेव युधिष्ठिर । उभे सन्ध्येऽधितिष्ठामि ह्यस्कन्नं तद्व्रतं मम ॥
तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः । सन्ध्याकालेषु जप्तव्यं सततं चात्मशुद्धये ॥

इति श्रीवैष्णवधर्मशास्त्रोक्तश्रीमदष्टाक्षरजपोऽपि यथाशक्ति सन्ध्यायामवसरे कार्यः । प्राणायामेन शतकृत्वः प्रणवव्याहृतिसंभेदविशेषेण दशकृत्वः गायत्रीजपं सहस्रतुल्यं बोधायनादयः स्मरन्ति । एवमेकपादस्थित्यासनविशेषस्वगृहतटाकाश्वत्थमूलदेवतायतनादिस्थानभेदेषु च फलतारतम्यं स्मर्यते ; तत्रैषा काष्ठा *अनन्तं विष्णुसन्निधौ इति । गणनायां च कराक्षसूत्रयोर्यथाशक्ति विकल्पतः करणत्वम् । उक्तं च **जयाख्यसंहितायाम्**—*जपं तु द्विविधं कुर्यादक्षसूत्रकरार्पितम् इति । अक्षसूत्रार्पितं वा करार्पितं वेत्यर्थः । तदेव विशेषितं **श्रीसात्वते** * स्फाटिकेनाक्षसूत्रेण स्वकैर्वा करपर्वभिः इति । अत्र स्फाटिकेनेत्यक्षमालावर्गोदाहरणं शास्त्रान्तरेषु पद्माक्षमालादीनामाधिक्यस्मरणात् । फलविशेषार्थं तु मणिमुक्तामयाद्यक्षमालाभेदाः प्रतिष्ठाविशेषादिनियमाश्च तत्रतत्र प्रपञ्च्यन्ते ; करेऽपि शङ्खपद्ममुद्रादिभेदाश्च । तत्रैष सारः—

* कनिष्ठामूलामारभ्य प्रादक्षिण्यक्रमेण तु । अनामिकान्तं देवेश जपेत्कोटिसहस्रकम् ॥ इति ।

**बोधायनीये** तु श्रीमदष्टाक्षरविधावेवमुक्तम्—

* क्रियायागाद्दशगुणो जपयज्ञः प्रकीर्तितः । उच्चाच्छतगुणो ज्ञेय उपांशुश्चेत्स्मृतस्तदा ॥
उपांशोर्मानसः प्रोक्तस्सहस्रगुणतोऽधिकः ॥ इति ।

अन्यदपि तत्रोक्तम्—

* जपमध्ये गुरुर्वाऽपि वैष्णवो यः समागतः । संभाषणादिपूजां तु तस्य कृत्वाऽनुमान्य च ॥
अनुश्राव्य ततः कृत्वा जपशेषं समाहितः । सर्वस्य प्रभवो यस्माद्विष्णुपादाश्रया नराः ॥
तन्मूलतः क्रियास्सर्वास्सफलास्तु भवन्ति हि ॥ इति ।

**नारदीयश्रीमदष्टाक्षरब्रह्मविद्यायाम्**—

*सर्वस्सप्रणवो जप्यो जपादप्रणवादपि । सहस्र इति विज्ञेयः प्रणवो ह्यक्षरं परम् ॥
असङ्ख्यातात्च सङ्ख्यातस्सहस्रगुण उच्यते । सङ्ख्यातादपि साहस्रस्सोर्ध्वपुण्ड्रतनोर्जपः ॥ इत्युक्तम् ।
एवं *विधियज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः । उपांशुस्स्याच्छतगुणस्सहस्रो मानसः स्मृतः ॥
उच्चैर्जपादुपांशुस्स्याद्विशिष्टो दशभिर्गुणैः । जिह्वाजपश्शतगुणस्सहस्रो मानसः स्मृतः ॥

इत्यादिकमपि द्रष्टव्यम् । एवमासूर्योदयात् *पूर्वोत्तराशाभिमुखस्स्वपरोत्तरदिङ्मुखः इत्यादिस्मृत्यनुसारेण प्राङ्मुखः प्रागुदङ्मुखो वा तिष्ठन् गायत्रीमावर्त्य पूर्ववत्कृतप्राणायामत्रयस्सन्ध्योपस्थानसङ्कल्पपूर्वकम् *उत्तमे शिखरे इतिमन्त्रेण गायत्रीमनुज्ञाप्य स्वसूत्रोक्तैर्मन्त्रैरादित्यमण्डलान्तस्स्थितं भगवन्तमुपस्थाय सप्रदक्षिणं भगवदात्मकसन्ध्यादि[पञ्चक]नमस्कारं कृत्वा *स यश्चायं पुरुषे, यश्चासावादित्ये, स एकः इत्यधीतं हृदयान्तस्स्थितं परमात्मानमभिवाद्य प्रणम्य, दिगादिनमस्काराणामपि स्वपूर्वपूर्वोपदेशानुष्ठानपारम्पर्यमस्ति चेत् तत्राऽपि भगवदात्मकत्वध्यानपूर्वं प्रणमेत् । एवं तूपस्थानप्रकारं

**पितामहः सनत्कुमारायाह**—

*एताभिः प्राञ्जलिर्नित्यं विस्पष्टोदितमण्डलम् । सहस्ररश्मिं भर्गं तमुपतिष्ठेद्दिवाकरम् ॥
ततस्तस्मै नमस्कृत्वा सन्ध्याद्याः पञ्च देवताः । प्रदक्षिणनमस्कारैर्दिशश्चैवोपतिष्ठते ॥
परमात्मानमात्मानं भावयित्वा द्विजोत्तम ॥ इति ।

तत आधारशक्त्यादिपारिषदान्तान् देवर्षिपितॄंश्च भगवदात्मकान् ध्यात्वा प्रणवपूर्वकैस्तत्तन्नामभिस्सन्तर्प्य शुचौ स्थले स्नानवस्त्रं निष्पीड्याचम्यावाहिततीर्थमन्त्रांश्चात्मनि समाहरेत् । अत्र यद्यप्यार्षी वैष्णवी प्राजापत्येति त्रिविधाः सन्ध्योपास्तिविशेषास्तत्तत्संहितासूच्यन्ते ; तथाऽपि तासां संहितानां लुप्तप्रायत्वेन तत्तत्प्रकाराणां दुर्ज्ञानत्वात्, **पारमेश्वरपरमसंहितादिषु** परिदृश्यमानसन्ध्योपासनप्रकारभेदानामपि यथावदुपदेशानुष्ठानपारम्पर्यासिद्धेः, भगवच्छास्त्रसंहितास्वेव स्वसूत्रोक्तसंस्काराचाराभ्यनुज्ञानात्, प्रथमपरिगृहीतपरित्यागे निर्बन्धाभावात्, यथासूत्रमनुष्ठानेऽपि भगवत्समाराधनरूपत्वसिद्धेस्स्वसूत्रविहितमेव सन्ध्योपास्त्यादिकं कर्तुमुचितम् । उक्तं हि **नारदीये**—*स्वसूत्रविहितान्वाऽपि निषेकादीन् समाचरेत् इत्यादि । **पाद्मे** च शौचाचमनदन्तधावनस्नानानि यथाक्रमं विधायानन्तरमेवं सन्ध्योपासनमुक्तम्—

*आचम्य प्रोक्षयेद्दर्भवारिभिर्मन्त्रवत्तनुम् । ओंपूर्वया च गायत्र्या वारिभिश्चाभिमन्त्रितैः ॥
आत्मानं परिषिच्योर्ध्वमुत्क्षिपेत्सलिलाञ्जलिम् । योद्धुकामानि रक्षांसि सन्ध्ययोरुभयोरपि ॥
शाम्यन्ति तैर्वज्रभूतैर्हतानि प्रेरितैर्जलैः । प्रायश्चित्तं तु हिंसायाः परिक्रम्य प्रदक्षिणम् ॥
तर्पयेदुपविश्याथ तत्तन्मन्त्रानुदीरयन् । देवादीन् सलिले तिष्ठन् सावित्रीं प्राङ्मुखो जपेत् ॥
यावत्सूर्योदयं दृष्ट्वा प्राञ्जलिस्तिमिरापहम् । उपस्थाय स्वशाखोक्तैर्मन्त्रैर्ध्येयं हृदि स्थितम् ॥
अभिवाद्य गुरून् वृद्धांस्तथा भागवतान् क्रमात् ॥ इति ।

अत एव हि **श्रीमद्भट्टारकैरुक्तम्**—

*प्रातरुत्थाय संस्मृत्य हरिं तच्चरणोत्थिताम् । गङ्गां विभाव्य तीर्थाम्भस्ततस्तदवगाह्य च ॥
श्रुतिस्मृत्युदितं कर्म यावच्छक्ति परात्मनः । आराधनत्वेनापाद्य सोर्ध्वपुण्ड्रश्च तर्पयेत् ॥ इति ।

तद्गुरुभिः **श्रीवत्साङ्कमिश्रै**रपि **वटुकपूर्णा**भ्यर्थनया **अभिगमनसार**मुपदिशद्भिरादावुक्तम्—*प्रातरुत्थाय स्वगुरोश्चरणारविन्दे आत्मानं समर्प्य कृतार्थं निर्भरं स्वात्मानमनुसन्धाय स्नानादिकं स्वकर्म कृत्वा शुचौ देशे आसीनः इत्यादि । **वङ्गिवंशेश्वरै**श्च—

*धृतोर्ध्वपुण्ड्रो देवर्षिपितॄन् सन्तर्प्य मन्त्रतः । प्रयतः परया भक्त्या स्वकर्माराध्यमच्युतम् ॥
आदित्यमण्डलान्तस्स्थं प्रणम्य मनसा स्मरन् । संधातृत्वेन सर्वेषां सन्ध्येति परिकीर्तितम् ॥
श्रुतिस्मृत्युदितं कर्म स्ववर्णस्वाश्रमोचितम् । फलाभिसन्धिरहितं परब्रह्मार्चनात्मकम् ॥
न्यस्य कर्तृत्वभोक्तृत्वे स्वामित्वं च परात्मनि । नित्यनैमित्तिकैः काम्यैः कर्मभिश्च समन्वितः ॥
गायत्रीजपपर्यन्तं मन्त्राचमनपूर्वकम् । सान्ध्यं कर्माखिलं साधु समाप्य च यथाविधि ॥
ततः स्वकर्मभोक्तारमादित्यान्तरवस्थितम् । उपस्थाय स्वकैर्मन्त्रैर्नारायणमतन्द्रितः ॥ इत्यादि ।

अत्र गायत्र्यभिमन्त्रितजलाञ्जलिप्रक्षेपे भगवदर्घ्यत्वरूपत्वमपि भावनीयतया संगृहीतं **नारायणमुनिभिः**—

*आपो हीत्यादिभिर्मन्त्रैर्वाचकैः परमात्मनः । संप्रोक्ष्य मन्त्राचमनं मन्त्रैस्तत्प्रतिपादकैः ॥
आदित्यान्तस्स्थितस्यार्घ्यं वितीर्य परमात्मनः । प्रतिपादिकया विष्णोस्सावित्र्या तं जपेद्धरिम् ॥
ध्यायन् जप्त्वोपतिष्ठेत तगेव पुरुषोत्तमम् । नारायणात्मकान्देवानृषीन् संतर्पयेत्पितॄन् ॥
तत आधारशक्त्यादीन् सर्वान्पारिषदान्तकान् । संपीड्य तीरे तद्वस्त्रं पुनराचम्य वाग्यतः ॥
पाषण्डादिभिरालापदर्शनादीनि वर्जयेत् ॥ इति ।

यथोपदिष्टसन्ध्यानादरे च दोषं स्मरन्ति—

*अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् । सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ॥
सायं प्रातस्सदा सन्ध्यां ये न विप्रा उपासते । कामं तान् धार्मिको राजा हीनकर्मसु योजयेत् ॥ इति ।

स एष सन्ध्याकर्मक्रमः ॥

अथ ब्रह्मयज्ञं प्रत्यक्षतैत्तिरीयश्रुत्याद्यनुसारेण उदित आदित्ये कुर्यात्, माध्यन्दिनानन्तरमेव वा, भोजनात्पूर्वं वा, यत्र क्वचिदवसरे वा । तीर्थस्नानसमनन्तरं **महाभारतोक्त**प्रकारेण तीर्थासन्नविष्ण्वायतनं च नमस्कुर्यात् । भगवन्मन्दिरप्रवेशदशायां कर्त[व्यं]व्यस्य दिङ्मात्रं प्रदर्शितं **श्रीसात्त्वते**—

*प्रासादं देवदेवीयमाचार्यं पाञ्चरात्रिकम् । अश्वत्थं च वटं धेनुं सत्समूहं गुरोर्गृहम् ॥
दूरात्प्रदक्षिणीकुर्यान्निकटात्प्रतिमां विभोः । दण्डवत्प्रणिपातैस्तु नमस्कुर्याच्चतुर्दिशम् ॥
न यानपादुकारूढो न सोपानत्कपादभृत् । न विक्षिप्तमना भूत्वा संविशेद्भगवद्गृहम् ॥ इति ।

तत्र च प्रदक्षिणप्रणामांश्च युग्मानेव कुर्यात्,

*द्विधा प्रदक्षिणं कुर्यात्प्रणामं च तथाविधम् । यतस्समो हि भगवान् देवस्सर्वस्य वै हरिः ॥

इति परमेश्वरेण *एकत्रिपञ्चसप्तादिगणना विषमं हि यदिति विषमप्रतिषेधात् । *प्रवेशे निर्गमे चैव विष्वक्सेननतिं चरेत् इति विधानात् विष्वक्सेनं तत्तद्द्वारपालांश्च प्रणम्यानुज्ञाप्य तत्रतत्र प्रविशेत् ।

*चक्रवद्भ्रामयेन्नाङ्गं पृष्ठभागं न दर्शयेत् । पश्चाद्भागेन निर्गच्छेद्देवतासन्निधौ सुधीः ॥ इति ।

प्रविष्टश्चाष्टाङ्गेन तत्तद्देशकालशक्येन मस्तिष्कसम्पुटप्रह्वाङ्गपञ्चाङ्गदण्डाङ्गादिष्वन्यतमेन वा प्रणमेत् । तत्राष्टाङ्गप्रणामं

*मनोबुद्ध्यभिमानेन सह न्यस्य धरातले । कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥

इति **सात्त्वतोक्त**मुदाहरिष्यति **भाष्यकारः** । मस्तिष्कादिपञ्चकं तु **श्रीवैखानसशास्त्रे** पठितम्—

*स मस्तिष्कप्रणामस्स्यादञ्जलिं मस्तके न्यसेत् । प्रणामस्सम्पुटस्स स्याद्धृदयेऽञ्जलिमर्पयेत् ॥
प्रह्वाङ्गस्सम्पुटं कुर्यात्सा प्रह्वाङ्गनमस्क्रिया । पादाङ्गुलिभ्यां जानुभ्यां शिरसा चावनिं स्पृशन् ॥
बद्धाञ्जलिर्नमस्कुर्यात्स पञ्चाङ्ग उदीर्यते । पादौ हस्तौ प्रसार्यैव शेते भूमौ च दण्डवत् ॥
स दण्डाङ्गप्रणामस्स्यात्प्रणामानेवमाचरेत् ॥ इति ।

**सङ्कर्षणसंहितायां** सुकृतप्रणामप्रकरणे त्वेवं प्रणाम उक्तः—

*ललाटोदरजान्वङ्घ्रियुगाग्रानूर्ध्वगौ करौ । भूमौ संधाय मनसा वासुदेवमनुसरन् ॥ इति ।

एवं चाष्टाङ्गप्रणामः स्मर्यते—

*उरसा शिरसा वाचा मनसा च कपोलतः । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥ इति ।

**रहस्याम्नायब्राह्मणे** च नमस्कारप्रकरणे *जानुभ्यां पाणिभ्यां शिरसा च नन्तव्यं भवतीत्यादिना पूर्णनमस्कारस्वरूपादिकमुपदिश्य तत्फलं चोक्तम् *सर्वैः करणैर्नमन् समग्रो नमति समग्रो नमन्नाप्तकारी भवति आप्तकारी भगवन्तमाप्नोति इति । एवं द्वादशाङ्गप्रणामादिकं च तत्रतत्र द्रष्टव्यम् । एकहस्तेन नमनं तु **श्रीभागवते** प्रतिषिद्धम्—

*एकेन पाणिना यस्तु प्रणमेत्पुरुषोत्तमम् । न्याय्यस्तस्य करच्छेद इति धर्मविदो विदुः ॥ इति ।

अञ्जलित्वमपि ह्यस्य नास्ति *तौ युतावञ्जलिः पुमान् इति नैघण्टुकपाठात् । चामरग्राहिणीप्रभृतीनां तु व्यापृतान्यहस्ततया एकहस्तनमनाभ्यनुज्ञा । अतोऽवज्ञादिमूलैककरनमने करच्छेददण्डानुशासनमिति *यथा तथा वाऽपि सकृत्कृतोऽञ्जलिः इत्यादीनामविरोधः । योग्यतायां सत्यां द्वाभ्यां पाणिभ्यां प्रणमतोऽप्यूनत्वमामनन्ति *यदा ह्ययं केवलपाणिभ्यामेव नमति न जानुभ्यां न शिरसा एकेन ज्ञानेन नमति स्पर्शविशेषज्ञानेन हीयते इतराणि ज्ञानानि कर्मणः एकेन नमन्नूनो नमति ऊनो नमन्ननाप्तकारी भवति अनाप्तकारी न भगवन्तमाप्नोति इति । आचार्य[दर्शने]कीर्तने भगवन्नामग्रहणे चाञ्जलिबन्धादिकं तत्रतत्र ग्राह्यम् । दर्शितश्चायमाचारः **संभवपर्वणि** व्यासप्रस्तावे *महर्षेः कीर्तनात्तस्य भीष्मः प्राञ्जलिरब्रवीत् इति । एवं यथार्हं प्रणम्योत्थितश्च भगवतः पुरस्ताद्दक्षिणतोऽवस्थाय गुरुपरम्परया भगवन्तं शरणमुपगम्य पावनमनोहरतद्दर्शनानन्दबृंहितसर्वाङ्गः प्रीतिपरीवाहरूपाणि स्तव्यस्तवप्रियवशीकरणानि स्तोत्राणि पठेत् । भगवदर्चावतारदर्शनमाहात्म्यं चैवमुक्तं **श्रीपौष्करे**—

*संदर्शनादकस्माच्च पुंसां संमूढचेतसाम् । कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः ॥
कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत् ॥ इति ।

अन्यत्र तु महतामपि पातकानां प्रायश्चित्ततया विधीयते *अहरेकं हरेर्बिम्बमापीठादवलोकयेत् इति ;

*आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् । पातकान्याशु नश्यन्ति किंपुनस्तूपपातकम् ॥ इत्यादि च ।

स्तुतिसङ्कीर्तनादेश्च प्रभावः

*एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥

*कलौ सङ्कीर्त्य केशवम्,

*कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः। कीर्तनादेव कृष्णस्य मुक्तबन्धः पदं व्रजेत् ॥

इत्यादिषु ग्राह्यः। अत्र भगवत्प्रसादलब्धं तुलसीपादोदकादिकं यत्किञ्चिदपि प्रणिपातपुरस्सरं हर्षोत्फुल्लकपोलश्शिरसा संभाव्य यथार्हमुपयुञ्जीत। अत्र *प्रतापभूपरचितस्तथाऽऽचमननिर्णय इत्यादौ शिष्टाः पठन्ति—

*आम्रेक्षुदण्डताम्बूलचर्वणे सोमपानके। विष्णवङ्घ्रितोयपाने च नाद्यन्ताचमनं स्मृतम् ॥ इति।

तन्मूलभूता चाथर्वणश्रुतिर्नारायणमुनिभिस्संगृहीता—*भगवान् पवित्रं वासुदेवः पवित्रं तत्पादौ पवित्रं तत्पादोदकं पवित्रं न तत्पान आचमनं यथा हि सोमपान इति। एवं भगवत्सेवयाऽऽत्मानं कृतार्थं मन्यमानो भगवदनुज्ञया क्वचिन्निभृतमुपविश्य जपादिभिरुपासीत। भगवन्मन्दिरे च तत्तच्छास्त्रोक्तानपचारान्परिहरेत्; एवं तु श्रीवराहपुराणे द्वात्रिंशदपचाराःपठिताः—

*श्रीधरण्युवाच—देवदेव जगन्नाथ श्रुतं त्वत्तो मयाऽखिलम्। यान् कृत्वाऽयोग्यतां यान्ति तव वेश्मप्रवेशने ॥

तान् ब्रूहि देवदेवेश भक्तवत्सल माधव ॥

श्रीभगवानुवाच—अपचारानहं वक्ष्ये तच्छृणुष्व वसुन्धरे ॥

गीतवादित्रनृत्तादिपुण्याख्यानकथाश्च ये। लोपयन्त्यथ पारुष्यैर्मम वेश्मसु मानवाः ॥
ते यान्ति वसुधे पापा नरकानेकविंशतिम्। ततस्तेऽपि महाभागे गार्दभीं योनिमाश्रिताः ॥
वर्तन्ते तत्र वै देवि सप्तजन्मानि सौकरीम्। वस्त्रेणाच्छाद्य देहं तु यो नरः प्रणमेत्तु माम् ॥
श्वित्री च जायते मूर्खस्त्रीणि जन्मानि भामिनि। कृष्णकम्बलसंवीतो यो नरः प्रणमेत्तु माम् ॥
चण्डालयोनितां याति जन्मानि नव पञ्च च। तैलेनाभ्यक्तसर्वाङ्ग उपानद्गूढपादकः ॥
यो नरः प्रविशेद्गेहं मम भूतधरे शुभे। स याति गृहपालानां योनौ जन्मत्रयं शुभे ॥
नखरोमाणि यश्चैव केशास्थीनि तथैव च। यः क्षिपेन्मम गेहेषु तस्य पापफलं शृणु ॥
माक्षिकीं योनिमाविश्य नखरोमचितस्तथा। सप्त जन्मानि तत्रैव नरकानेकविंशतिम् ॥
ताम्बूलचर्वितं यस्तु प्रक्षिपेन्मम मन्दिरे। स याति नरकं घोरं यावदाभूतसम्प्लवम् ॥
ततो मुक्तो महाभागे शुनकोऽपरजन्मनि। संस्थितस्त्रीणि जन्मानि वसत्येव न संशयः ॥
निष्ठीवनकरो यस्तु मन्दिरे मम सुन्दरि। क्रिमिभक्ष्ये पतेद्धोरे नरके पापकृन्नरः।
श्लेष्मातकतरुर्भूत्वा जायते जन्मपञ्चकम्। श्मशानमध्ये गत्वा तु यो नरो मामथार्चयेत् ॥
सप्तजन्मकृतात्पुण्यात्तत्क्षणान्मुच्यते नरः। सार्गालीं योनिमाश्रित्य वसेज्जन्मत्रयं शुभे।
मूत्रयेन्मन्दिरे यस्तु मम देवि शुभानने। स मूत्रगर्तनरके पतत्येव ह्यवाक्छिराः ॥
तस्मान्मुक्तस्तु रक्तादिनिम्बकद्रुममास्थितः। जनिष्यति वरारोहे ह्यष्ट जन्मानि सौकरीम् ॥
पुरीषं वा प्रकुर्वीत यो नरो मम मन्दिरे। स याति नरकान् घोरान् पर्यायेणैकविंशतिम् ॥
ततो मुक्तो महाभागे विष्ठायां जायते क्रिमिः। अनुगम्य तथा प्रेतमिच्छया यस्तु मानवः ॥
आराधितुमथेच्छेन्मां स व्रजत्यधमां गतिम्। बलिभुग्योनितां याति जन्मानि भुवि भूधरे ॥
भरणं तु तथा कृत्वा मृतकस्य वसुन्धरे। मन्दिरं न प्रवेष्टव्यं प्रविष्टस्य फलं शृणु ॥

चाण्डालीं योनिमाश्रित्य जन्मानि नव पञ्च च । भविष्यति वरारोहे व्याधः क्रूरोऽतिनिष्ठुरः ॥
भुक्त्वा श्राद्धं महाभागे मनुजो मामथार्चयेत् । चटकत्वमनुप्राप्य ततो गोधावपुर्गतः ॥
छायामाक्रम्य यो मोहाद्विमानस्य वसुन्धरे । प्रदक्षिणमकुर्वंस्तु यस्तिष्ठेन्मतिपूर्वकम् ॥
तिष्ठेत्स कानने शून्ये कण्टकैर्बहुभिर्वृतः । फलपुष्पविहीनश्च अरण्ये शून्यवृक्षताम् ॥
समीपे मन्दिरस्यापि शकृन्मूत्रं करोति यः । स तिष्ठेद्रौरवे घोरे वर्षाणामयुतं शुभे ॥
ततोऽपि मनुजो मुक्तो ग्रामसूकरजातिताम् । ग्रामे जन्मशतं सुभ्रु विष्ठाभुक् सूकरस्तथा ॥
अनिबद्धप्रलापान् ये कुर्वते मम सन्निधौ । तेऽपि तित्तिरितां भूत्वा जायन्ते जन्मपञ्चकम् ॥
आरोपितं प्रदीपं ये नयन्त्यन्यत्र मन्दिरात् । अन्धास्तेऽपि भविष्यन्ति जन्मानि नव पञ्च च ॥
कथायां कथ्यमानायां मन्दिरे मे वरानने । अनादृत्य च ये यान्ति तेषां पापफलं शृणु ॥
तोयहीनेऽतिरौद्रे च वने वै शून्यवृक्षताम् । जायन्ते सप्तजन्मनि ततश्चण्डालतां ययुः ॥
बधिरास्ते भविष्यन्ति मूका वै जन्मपञ्चकम् । पादौ प्रसार्य मद्गेहे शेरते ये नराधमाः ॥
लालां विसृज्य चोच्छिष्टां तेषां पापफलं शृणु । तोयहीनेऽतिरौद्रे च वने वै शून्यवृक्षताम् ॥
जायन्ते सप्त जन्मानि ततश्चण्डालतां ययुः । दरिद्राश्चैव मूर्खाश्च भविष्यन्ति त्रिजन्मकम् ॥
अन्यदेवार्थसंदिष्टैः पुष्पैर्यो मामथार्चयेत् । ममैव तु महागेहे मण्डूकत्वं व्रजन्ति ते ॥
जन्मद्वयं तु वै मूढाः शूद्रतां यान्ति ते नराः । अन्यदेवगृहं गत्वा ह्यस्नात्वा यो व्रजेद्गृहम् ॥
ममैव वसुधे तस्य फलं पापस्य मे शृणु । गृहाद्गृहमथो गत्वा भिक्षार्थी क्षुधितः स्वयम् ॥
भिक्षामलब्ध्वा तत्रापि दरिद्रो जायते नरः । चत्वारि चैव जन्मानि तेषामन्ते च योऽबुधः ॥
चण्डालयोनिमाप्नोति जन्मानि दश पञ्च च । अन्यदेवसमं यस्तु मन्यते मां तु सोऽधमः ॥
चण्डालयोनितां याति जन्मानि दश पञ्च च । कुसुमानां निवेद्यानां गन्धमाघ्राति यो नरः ॥
स पूतिगन्धसंयुक्तः कुष्ठी चैव धरे शुभे । भवति त्रीणि जन्मानि भवत्येव न संशयः ॥
विष्णुस्थानसमीपस्थान् विष्णुसेवार्थमागतान् । श्वपचान् पतितान्वाऽपि स्पृष्ट्वा न स्नानमाचरेत् ॥
उत्सवे वासुदेवस्य यः स्नाति स्पर्शशङ्कया । स्वर्गस्थाः पितरस्तस्य पतन्ति नरके क्षणात् ॥
पिबेत्पादोदकं विष्णोर्वैष्णवानां विशेषतः । तत्र नाचमनं कुर्याद्यथा सोमे द्विजोत्तमः ॥

**इति श्रीवराहपुराणे धरणीप्रश्ने द्वात्रिंशदपचारोनाम पञ्चचत्वारिंशोऽध्यायः ॥**

अन्ये तु द्वात्रिंशदपचाराः प्रकारान्तरेण पठ्यन्ते ; तत्र चात्र चोक्तानुक्तसमुच्चयः कार्यः । तत्रेयमेका प्रक्रिया—

* अपचारास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः । यानैर्वा पादुकैर्वाऽपि गमनं भगवद्गृहे ॥
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः । एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम् ॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम् । पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ॥
शयनं भोजनं चैव मिथ्याभाषणमेव च । उच्चैर्भाषा वृथाजल्पो रोदनाद्यं च विग्रहः ॥
निग्रहानुग्रहौ चैव स्त्रीषु साकूतभाषणम् । अश्लीलकथनं चैवाप्यधोवायुविमोक्षणम् ॥

कम्बलावरणं चैव परनिन्दा परस्तुतिः । शक्तौ गौणोपचारश्चाप्यनिवेदितभक्षणम् ॥
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् । विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिषु ॥
पृष्ठीकृत्यासनं चैव परेषामभिवादनम् । गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ॥ इति ।

एवं प्रक्रियान्तराण्यपि तत्रतत्र ग्राह्याणि । तथा—

*प्रमादादपि कालालं यः स्पृशेद्वैष्णवो नरः । उपचारशतेनापि न क्षमामि वसुन्धरे ॥
स्वाधीनशयनं जल्पं स्वाध्यायं च विशेषतः । आसनारोहणं चैव न कुर्यात्केशवालये ॥
यो विष्णोः प्रतिमाकारे लोहभावं करोति च । यो गुरौ मानुषं भावमुभौ नरकपातिनौ ॥

इत्याद्युक्तान्यपचारान्तराण्यपि द्रष्टव्यानि। एवं भगवन्मन्दिरे सावधानः परिहृतापचारः पूर्ववत्प्रणम्य विष्वक्सेनादीननुज्ञाप्य निर्गच्छेत् । ततः स्वदेवाधिष्ठितमाश्रमगृहादिकमागत्य सुप्रक्षालितपाणिपादः स्वाचान्तः स्वर्णरजतताम्रादिपात्रैः स्वयं पूर्वाहृतेन मणिकस्थेन वा गृहं संप्रोक्ष्य स्वसूत्रविधिना भगवदात्मकं स्वाग्निं हुत्वा देवगृहमागत्य दूरात्प्रणमेत् । अत्र चैवमभिगमनं **वङ्गिवंशेश्वरै**र्दर्शितम्—

*ततः कुम्भं समादाय शुचिनाऽऽपूर्य वारिणा । हरेराराधनार्थाय मौनी नियतमानसः ॥
पाषण्डावेक्षणादीनि वर्जयन् यत्नतः पथि । ध्यायन्नारायणं देवं यागभूमिं समाश्रयेत् ॥
ततः प्रक्षाल्य चरणौ स्वाचान्तस्सुसमाहितः । ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा मुनिः ॥
स्ववर्णस्वाश्रमार्हेण विधिना श्रद्धयाऽन्वितः । समिदाज्यादिभिर्द्रव्यैर्मन्त्रैरपि यथोदितैः ॥
हुत्वाऽग्नीनग्निहोत्रादावुक्तं कालमविक्षिपन् । पराराधनरूपेण कृतेनैव स्वकर्मणा ॥
कृते निष्कल्मषे शुद्धे स्वस्मिन्मनसि सुस्थिते । लब्धाधिकारो देवस्य ध्यानार्चनजपादिषु ॥
विनिष्क्रम्याग्निशालाया गत्वा यागगृहं स्वकम् । अर्चयित्वा परात्मानं देशकालाद्यपेक्षया ॥
पत्रैः पुष्पैः फलैर्वाऽपि पूजाकालोक्तवर्त्मना । केवलाञ्जलिना वाऽपि विहितेन यथा तथा ॥ इति ।

अत्र पराराधनरूपेण कर्मणा परिशुद्धान्तःकरणस्य ध्यानार्चनादिष्वधिकारविधानात् केषाञ्चित्कुदृष्टीनां मतं निरस्तम् । उक्तं च कुदृष्टिमतोपन्यासमध्ये **परकालसूरिभिः**—

*स्तुतिजपनिजबिम्बालोकनध्यानसेवास्मृतिकथनसमर्चाकर्मभिः श्रौतदूरैः ।
वृषभशिखरिनाथ त्वामभीप्सन्ति केचिच्छ्रुतिपथपरिनिष्ठप्रापणीयाङ्घ्रिपद्मम् ॥ इति ।

एवं च संगृहीतं **नारायणमुनिभिः**—

*पाषण्डादिभिरालापदर्शनादीनि वर्जयेत् । गृहानागत्य संक्षाल्य पादावाचम्य वाग्यतः ॥
द्वारपालाननुज्ञाप्य प्रविश्य सदनं हरेः । अभिगम्य च देवेशं निभृतः परया मुदा ॥
मनोबुद्ध्यभिमानेन सह न्यस्य धरातले । कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥
अष्टाङ्गेन प्रणामेन दिव्यशास्त्रोदितेन च । प्रणमेत्पुण्डरीकाक्षं भक्तिभारावनामितः ॥
द्वयेन तद्विवरणैः प्रपद्य प्रभुमीश्वरम् । निक्षिप्य चिरमात्मानं तत्पादाब्जे कृती भवेत् ॥ इति ।

इह च— *ब्राह्मे मुहूर्ते संप्राप्ते उत्थाय शयनात्ततः । स्नात्वाऽभ्यर्च्य जगन्नाथं समाराधनमाचरेत् ॥

इत्येतावत्सात्त्वतोक्तं [सर्वेषां] समानम्, शेषं तु तावत् तत्तत्संहितानिष्ठानामेव। एवं संहितान्तरेषु कालान्तरकर्मस्वपि ग्राह्यम्। **जयाख्यसंहितायां** तु सर्वसंहितोक्ताभिगमनं संग्रहेणोक्तम्—

*ब्राह्मान्मुहूर्तादारभ्य प्रागंशं विप्र वासरे। जपध्यानार्चनस्तोत्रैः कर्मवाकूचित्तसंयुतैः ॥
अभिगच्छेज्जगद्योनिं तच्चाभिगमनं स्मृतम् ॥ इति।

**पाद्मे** च आद्यन्तकर्मावच्छेदेन दर्शितम्—

*कल्याणाचरणान्तं यत्कर्मजातं चतुर्मुख। उत्थानादिक्रमादेतदभियानमुदीरितम् ॥ इति।

सन्ध्योपासनानन्तरकृत्यं चैवं विवृतम्—

*अभिवाद्य गुरून् वृद्धांस्तथा भागवतान् क्रमात्। प्रविश्य स्वाश्रमं देवमभिगम्य यथाविधि ॥
अर्चयेज्जपहोमान्तं दद्याद्ग्रासं गवामपि। अञ्जनालेपनैः स्रग्भिर्वासोभिर्भूषणैस्तथा ॥
अलक्तकरसाद्यैश्च ताम्बूलमुखशोधनैः। उपेतो मङ्गलैरन्यैर्नयेदभिगमक्रियाम् ॥ इति।

एतेन *देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् इति स्मृत्यभिप्रेतमपि विवृतम्। अत्र च *उपेतो मङ्गलैरन्यैर्नयेद-भिगमक्रियाम् इति वचनं तत्तदाश्रमाविरुद्धमङ्गलदेवतावल्लभदेवगुरुपूजास्तुतिनमस्कारादिकमपि संगृह्णाति। *ग्रासं गवामपि इत्येतच्च परगोविषयम्, *ग्रासमुष्टिं परगवे दद्याच्चैव न लोपयेत् इति। श्रीवैष्णवधर्मशास्त्रोक्तेः। कृष्णमन्त्र-कल्पेऽप्युक्तम्—*दद्याद्ग्रासमित्यारभ्य, *गोषु चैवं प्रसन्नासु गोपालोऽपि प्रसीदति इति। गवादिषु चान्तस्स्थितो भगवान् भाव्य इति **जयाख्यसंहितायामुक्तम्**—

*सोमसूर्यान्तरस्थं च गवाश्वत्थाग्निमध्यगम्। भावयेद्भगवद्विष्णुं गुरुविप्रशरीरगम् ॥ इति।

अतस्तत्रतत्र प्रयुक्तेष्वपि कर्मसु न देवतान्तरभजनरूपत्वप्रसङ्गः। एवं व्यासाद्युक्तदेवादिनमस्कारोपहारनिवेदनपुष्पादि-प्रदानवृद्धाभिवादनगुरूपसेवनतद्धिताचरणवेदाभ्यासजपाध्ययनधारणतदर्थविचारणधर्मादिशास्त्र[वैदिक]निगमवेदाङ्गावेक्षण-प्रभृतीनि प्रथमकालकर्तव्यानि पूर्वाधिकारविशोधितप्रक्रियया प्रतिसन्धेयानि ॥ इति व्याख्यातमभिगमनम् ॥

**उपादानविधिः** ॥ अथोपादानं व्याख्यास्यामः—तच्चैवं संगृहीतं **वङ्गिवंशेश्वरैः**—

*प्राप्तेऽथाह्नो द्वितीयांशे शास्त्रधर्मेण धर्मतः। आर्जयित्वाऽर्चनाद्द्रव्यमशेषं च यथोदितम् ॥ इति।

तदेतद्व्याख्यातं **नारायणमुनिभिः**—

*अह्नो द्वितीयभागेन कृष्णाराधनतत्परः। द्रव्याण्याराधनार्थानि शास्त्रीयाणि समार्जयेत् ॥
प्रभूतानि विशुद्धानि शुद्धदेशोद्भवानि च। अरौद्राण्यनिषिद्धानि संगृहीतानि वैष्णवैः ॥
सुगन्धीनि मनोज्ञानि पुष्पाण्यभिमुखानि च। वासांसि धनधान्यानि चन्दनाद्यनुलेपनम् ॥
अन्यानि हविरर्थानि तानि मूलफलानि च। संक्षालितानि बहुशो देवभोग्यानि यानि च ॥
दधिक्षीराज्यमुख्यानि द्रव्याणि च विशेषतः। उत्तमानुपदंशांश्च मुद्गमाषादिकान्यपि ॥
ताम्बूलादीनि चान्यानि सर्वाण्यादाय सादरम्। यथार्हं तानि संस्कृत्य प्रक्रमेतार्चनं ततः ॥ इति।

यदुक्तं **श्रीसात्त्वते**—

*प्रातरुत्थाय चिन्वीयात्स्वारामात्स्वयमेव हि। पूजार्थमस्त्रमन्त्रेण पुष्पादीन्यत्नतस्सदा ॥

याया॒दरण्यमथवा निर्बाधं हि तदार्जयेत् । अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥
हृद्यास्सुगन्धाः कर्मण्या ग्राह्यास्सर्वे सितादयः । उग्रगन्धास्त्वकर्मण्यास्त्वप्रसिद्धास्तथैव च ॥
चतुष्पथशिवावासश्मशानावनिमध्यजाः । क्षता अशनि[वा]पाताद्यैः क्रिमिकीटसमावृताः ॥
वर्जनीयाः प्रयत्नेन पत्रपुष्पफलादयः । अम्बुजानि सुगन्धीनि सितरक्तानि कानिचित् ॥
योक्तव्यानि पवित्राणि नित्यमाराधने तु वै । साङ्कुराणि च पत्राणि भूगतान्येवमेव हि ॥
विहितान्यर्चने नित्यं यथर्तुप्रभवानि च । न गृहे करवीरोत्थैः कुसुमैरर्चनं हितम् ॥
विशेषतस्सकामस्य सिद्धिभूतियुतस्य च । अतोऽन्यथा न दोषोऽस्ति दोष उन्मत्तकादिभिः ॥
सद्यो हृतानां विहितं त्वम्लानानां यथाक्रमम् । प्रदानमम्बुसिक्तानां तेषां कार्यं न चान्यथा ॥
निर्दोषतां प्रयान्त्याशु मन्त्रिणामवलोकनात् । भवन्ति भक्तिपूतानि हृन्मन्त्रनिरतात्मनाम् ॥ इति ।

तदिदं नियमपरिच्छेदानुशिष्टत्वाद्विपर्ययानर्हमवधातव्यम् । शक्तमधिकृत्य चात्र स्वारसिकं स्वयंप्रवृत्त्यादिकमुपदिश्यते, पक्षान्तरस्याप्यन्यत्रानुज्ञानात् । अत्र वैशेषिकार्चनादिषु कदाचित्प्रातश्शब्दस्य मुख्यार्थता, अन्यथा त्वभिगमनविधिना प्रातःकालोपरोधात्, अन्येषु च सर्वेषु शास्त्रेषु द्वितीयकाल एव द्रव्यार्जनविधानात् । प्रातश्शब्देन सन्निकर्षवशात्त्वरातिशयसिद्ध्यर्थं तदुचितकालो लक्ष्यते, *सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् इतिवत् । अत एवात्रत्यमुत्थानं च न स्वापानन्तरभावि, अपि तु *ततः पुष्पफलादीनामुत्थायार्जनमाचरेत् इति **जयाख्यसंहितोक्त**मभिगमनानन्तरं देवसन्निधेरुत्थानम् । इह च श्रीवैष्णवधर्मशास्त्रोक्तपुष्पनियमः पूर्वाधिकारे प्रसङ्गाद्दर्शितः । **पाद्मे** त्वेवं विचित्रद्रव्योपार्जनमुक्तम्—

*उपादद्याद्यथापूर्वं साधनानि यथातथम् । पुष्पाणि फलमूलानि विविधान्योषधीरपि ॥
दध्यादि च हविर्योग्यतण्डुलानि गुडानि च । स्नानीयान्यपि वस्त्राणि स्वादूनि सलिलानि च ॥
दर्भान् पत्राणि समिधो यथाशक्ति यथावसु । आहृत्य याच्ञया तैर्वा पूजास्थाने निवेशयेत् ॥
नीत्वोपादानसमयमित्थं तदनु पूजयेत् ॥ इति ।

अस्यां संहितायां संहितान्तरेषु पुष्पप्रकरणहविष्पाकप्रकरणादिषु च हेयोपादेयसमस्तद्रव्यविभागो द्रष्टव्यः । अत्र याच्ञयेत्युक्तोऽयमधमाधमपक्षः ;

*स्वप्रयत्नकृतं शस्तं मध्यमं वन्यमुच्यते । अधमं तु क्रयक्रीतं[याचितं] पारक्यं त्वधमाधमम् ॥

इति पुष्पप्रकरणोक्तस्य सर्वेषु द्रव्येष्वविशेषेण सञ्चरणात् । **भोजराज**स्त्वेवं पुष्पेषु राजसतामसादिविभागं पुष्पाङ्कुरपत्रमूलधूपदीपवस्त्राभरणेषु वर्ज्यावर्ज्यविभागं संजग्राह—*अथ पुष्पाणि त्रिविधानि, सात्त्विकानि राजसानि तामसानीति । शुक्लानि सात्त्विकानि, रक्तानि राजसानि, कृष्णानि तामसानीति । शुक्लानि द्विविधानि, शुक्लवर्णं वलक्षमिति । शुक्लं शङ्खकुन्देन्द्वादिवर्णम्, वलक्षं स्फटिकवर्णादि । रक्तं द्विविधम्, रक्तमरुणमिति । रक्तं जपाकुसुमादिवर्णम्, अरुणं किंशुकादिवर्णम् । पीतं द्विविधम्, पीतं हरितमिति । कृष्णं द्विविधम्, नीलं श्याममिति ; श्यामं विष्णुक्रान्तादि । फलमेषां भिद्यते, सात्त्विकादर्धफलानि राजसानि, राजसादर्धफलानि तामसानीति । एतानि स्वारामोत्पादितानि, आरण्यानि, क्रीतानि, प्रतिग्रहाल्लब्धानि, अयाचितानि च ग्राह्याणि पञ्चविधानि पुष्पाणि । तत्र स्वारामजमुत्तमम्, आरण्यं मध्यमम्, क्रीतमधमम्, अयाचितमधमाधमम्, प्रतिग्रहपुष्पे दातुरेव फलं कर्तुः किञ्चिद्भवेन्न वा ; तस्मात्प्रतिग्रहलब्धैः पुष्पैर्नार्चयेत् ।

र्नार्चयेत्। करवीरौ पद्मौ केतकी जातिमल्लिकोत्पलानि तिन्त्रिणीतकरचम्पकश्वेतार्ककुटजवकुलकदलीतुलसीतमालवनमाल-मरुवकशमीसिन्दुवारपलाशसहदेवीफणिज्जकपुन्नागवंशपुंनागक्षुद्रपुन्नागमालतीश्वेतकुमुदकन्दलपद्ममहापुष्पनागसदाभद्रा - प्रियङ्गुबिल्ववनमल्लिकालक्ष्म्यगस्त्यद्वयवैष्णवीकर्णिकाराशोककुटजिस्तथा कारण्डनन्द्यावर्तद्वयक्षुद्रकेतक्यः इत्यादीनि पुष्पाणि। एतानि तिथिभेदेन ग्रहणायनसंक्रान्तिव्यतीपातविषुवादिभेदात्सङ्गवादिकालविशेषाच्च समग्रफलानि फलन्ति। तत्र तिथिपुष्पाणि वैष्णव्ये—कदलीपद्मलक्ष्मीसिन्दुवारद्रोणप्रियङ्गुमालतीपाटलकेतकीजातिमल्लिकामहाजातिपलाशाश्वत्थ-पत्राणि तिथीनामानुपूर्व्येण पुष्पाणि गृह्णीयात्। नन्द्यावर्तकैस्संक्रान्त्यां भगवन्तं पूजयेत्, उपनन्द्यावर्तकैरयने, विषुवे तुलसीभिर्व्यतीपाते फणिज्जकैर्ग्रहणे मरन्दैः पूजयेत्। सङ्गवे तत्ततिथिचोदितं पुष्पं गृह्णीयात्, समे पद्मैः, धर्मे कुमुदैः, करवीरैः विष्णुप्रिये, बिल्वपत्रैः विरागे भगवन्तं पूजयेत्। अत्र सङ्गवादयः काला अहरहः प्रवर्तन्ते, सङ्गवस्समो विष्णुप्रियो धर्मो विराग इति पञ्च काला अध्यात्मविद्भिरुपदिष्टाः। उदयात्पञ्च नाड्यस्सङ्गव उक्तः, तस्माद्द्विगुणमात्रस्सम उपदिश्यते, तावता विष्णुप्रियः, तावता धर्मः, तावता विराग इति। तत्र पूर्वापरौ भूत्वा नाडिद्वयतस्सङ्गवादयो मुहूर्ता उक्ताः। तत्र सङ्गवे वैकुण्ठस्य प्रीतिः, समे अनिरुद्धस्य, विष्णुप्रिये शिंशुमारस्य, धर्मे बडबामुखाग्नेः, विरागे कपिलस्य—इत्येवं पञ्चानां पञ्च प्रीतिकालविशेषाः। दिवापुष्पैर्दिवापूजा मुख्या, रात्रिपुष्पैर्निशि। विहितेष्वपि छिद्रं मुकुलं जीर्णं पर्युषितं भुक्तशेषमाघ्रातं परिम्लानमस्पृश्यस्पृष्टं जन्तुभिर्भक्षितं जन्तुभिरधिष्ठितमशुभदेशे पुष्पितमापद्यपि न गृह्णीयात्। पाणी प्रक्षाल्य पात्रे पुष्पाणि गृह्णीयात्। पिधाय स्थापयेत् [पात्रम्] अप्रतापे प्रदेशे यथा न परिम्लायेत। केवलपुष्प-निवेदनान्माला वरा, मालायाः स्रग्वरा; एकगुणा माला, बहुगुणा स्रक्। तत्र सूत्रैः पुष्पाणि न ग्रथ्नीयात्, यदि ग्रथ्नीयात् निर्माल्यसमानानि भवन्तीति, देवोद्दिष्टानां निन्दां न कुर्यात्, प्रशंसामेव सर्वदा कुर्यात्, देवोद्दिष्टं मनुष्यो न गृह्णीयात् देवस्वं भवतीति, यत्किञ्चित्पीतवर्णं पुष्पं जलजं स्थलजं वा तदापदि संग्राह्यम्, अनुक्तमप्यन्यत्र। तत्रापि वर्जनीयानि विशेषेण वर्जयेत्। कारण्डं कृष्णवर्णं कपित्थं गिरिकर्णिकाम्रविभीतकशिरीषमदयन्तिनिर्गुण्डीसिन्दुवार-किंशुकशाल्मलीजपार्ककनकोन्मत्तकारञ्जविषपादपबन्धूकमाधवीनीपार्जुनपाटलिचिञ्चाकोशातक्यलाबुशिग्रुः इत्येतानि वृक्ष-वल्लीषु वर्जयेत्, यवमुद्गप्रियङ्गुनिष्पावशणदूर्वाभूतृणमाषाणामेवाङ्कुराणि गृह्णीयात्, अन्येषामङ्कुराणि निर्माल्यसमानानि भवन्ति इति, अपामार्गसहभद्रातुलसीबिल्वाश्वत्थपलाशधातकीतमालगन्धपूर्णकृष्णाब्राह्मीशमीवृक्षाणामेव पर्णानि गृह्णीयात्। उत्पलानामेव मुकुलं गृह्णीयात्। पद्मोत्पलादीनां जलजानां दिनद्वयादूर्ध्वं पर्युषितत्वम्, सर्वेषां मूलानामुशीरमूलमेव विशिष्टम्। देवदारुकृतं धूपं चन्दनागरुमिश्रितं विधूमाङ्गारसंभवं शस्तम्; सालसज्जरसं कृष्णागरुमिश्रितं प्राण्यङ्गवर्जित-मन्यं वा धूपं निवेदयेत्। पात्रे गव्येन सर्पिषा दिव्येन तैलेनापि कृतं सूत्रवर्तियुतं मुखानिलदीप्तिदीपितं दीपं भवेत्। दुकूलं क्षौमं नेत्रं सूत्रं वा कार्पासिकं सुगन्धधूपितं नवं वस्त्रं भवेत्। हेमरत्नमयमाभरणं दद्यात्। दोषयुतं मनुष्यैर्भुक्तपूर्वं वा नाभरणं भवेत्। तदेतन्नानासंहितापरामर्शसमुद्धृतं सारम्। अन्यदपि सर्वं तत्तत्संहितासु विस्तरेण द्रष्टव्यम्। **श्रीशाण्डिल्यस्मृतौ** च काष्ठपर्यन्तवर्ज्यावर्ज्यद्रव्यविभागः कृतः। **श्रीविष्णुस्मृत्यादिषु** प्राण्यङ्गसुगन्धेषु कस्तूरीमृग-मदयोरङ्गरागतया परिग्रहो गृहार्चायां शुक्लाम्बरसमर्पणपद्मकह्लारेतररक्तपुष्पवर्जनमित्याद्यपि ग्राह्यम्। योगक्षेमार्थेश्वराभि-गमनादिस्वरूपशोधनं च पूर्वाधिकारसिद्धं न विस्मर्तव्यम्। एवं द्रव्याण्यार्जयतः प्रतिग्रहनियमश्च तत्र तत्र सङ्क्षिप्तः। यथोक्तं **श्रीशाण्डिल्यस्मृतौ**—

* कुलटाषण्डपतितवैरिभ्यः काकणीमपि । उद्यतामपि गृह्णीयान्नापद्यपि कदाचन ॥ इति ।

उक्तं च **श्रीसात्त्वते**—

* तस्करात्पतितात्षण्डाड्डम्भलोभमदान्वितात् । मात्राविंत्तं न गृह्णीयादभक्तादपचारतः ॥ इति ।

स्मर्यते च— * केशवार्चा गृहे यस्य न तिष्ठति महीपते । तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं हि तत् ॥ इति । तत्र पक्वमन्नमपक्वं वा केशवार्चनरूपनित्य[ध]कर्मरहिते गृहे न प्रतिग्राह्यम्, उभयत्रान्नशब्दप्रयोगात्, अन्यथा पक्वान्नमिति विशेषेण प्रयोगानुपपत्तेः । प्रतिग्रहगुणदोषविस्तरश्च धर्मशास्त्रेषु पठितव्यः, सर्वेषु चापदनापद्दशाभाविषु प्रतिग्रहेषु **यमो**पदिष्टं मन्त्रविशेषं भगवान् **शौनकः** स्मरति—

* दानं ददद्भिर्यैरुक्तमच्युतः प्रियतामिति । प्रतिग्रहीतृभिश्चैवं न ते मद्विषयोपगाः ॥ इति ।

तथा बलादिमन्त्रान्तरैरपि तत्तन्निष्ठानां प्रतिग्रहादिः । यद्यप्यस्त्रमन्त्रेण सामान्यतस्सर्वपुष्पादिग्रहणमुक्तं, तथाऽपि तुलस्या मन्त्रविशेषास्तत्तत्कल्पेषूपदिश्यन्ते—* तुलस्यमृतजन्मासि इत्यादयः । एवं वृत्त्यर्थतयाऽनुज्ञातैरध्यापनयाजनादिभिरपि यथाशास्त्रं प्रयुक्तैस्समुचितानि समाराधनोपकरणानि सम्पादयेत् । पूर्वनिष्पन्नद्रव्यस्तु न प्रतिग्रहादिषु प्रवर्तेत । * आपत्स्वनन्तरा वृत्तिः इत्यनुज्ञातेष्वपि * वृत्तिं प्राप्य विरमेत् इति स्मरणान्न नित्यं प्रवर्तेत । कृषिवाणिज्ये च स्वयंकृते कुसीदं चैवमाद्यमपि गत्यन्तरासम्भवे । * सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः इत्याद्युक्तनन्दनवनकरणादियतनमपि पुष्पफलादिपूजोपकरणार्थतयोपादानकोटौ निविशते । अत्र परिव्राजकानां न स्वयं पुष्पापचयादि कर्तव्यम्, यथोक्तं **यतिधर्मसमुच्चये**—* फलपुष्पोत्पाटने प्रायश्चित्तविधानादद्भिः कर्तव्यमन्याहृतैर्वा इति । एषा च **वृद्धवसिष्ठस्मृतिः** तत्रोपात्ता—* जले मत्स्यादीनां स्थले पशुमृगसरीसृपादीनां सर्वप्राणिनामभयं दत्त्वा पुष्पमूलफलोपादान[च्छेदन]चन्दनमधुमांसानृतवचनादीनि वर्जयेत् इति । इतरेषां तु स्वयं परतो वा अन्यारामादिसम्भूतानाम् [अदत्तानां] ग्रहणे तस्करत्वमपि स्यात् इति तत्रतत्र द्रष्टव्यम् । स्मर्यते च द्रव्यगृहारामादिनियमो **मन्वादिभिः**—

* यानशय्यासनान्यस्य कूपारामगृहाणि च । अदत्तान्युपभुञ्जान एनसस्स्यात्तुरीयभाक् ॥

अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥ इत्यादिना ।

तदिह साक्षाद्वा परम्परया वा समाराधनोपकरणभूतशास्त्रीयसमस्तद्रव्योपायेषु स्वशक्येषु ध्यानादिविरोधिकायक्लेशकरबह्वायासरहितेषु न्यायतः प्रवर्तेतेत्युपादानसंग्रहः । प्रभूतायासवर्जनमपि हि मुमुक्षूणामवश्यंभावित्वेन परिगणितेष्वष्टसु गुणेषु गौतमः पठति—*दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा नचाष्टावात्मगुणाः न स ब्रह्मणस्सायुज्यं सालोक्यं च गच्छतीति । एवं च सति बाह्यद्रव्यार्जनवत्संप्रीणनेषु प्रधानतमामानित्वादिगुणानां सदाचार्यसेवासत्संभाषणादिभिर्ज्ञानवृद्धिहेतुभिर्न्यायतः प्रवृत्तैस्सम्यगुपार्जनमपि पूर्वसिद्धपरिपूर्णबाह्यपूजोपकरणस्योपादान[कोटौ]काले निवेशनीयम् । बाह्यद्रव्याभाव इव गुणाभावेऽपि महाभारताद्युक्ताष्टादशचण्डालषड्वृषलसंज्ञितहेयगुणयोगेनानन्तरभावीज्यानर्हत्वप्रसङ्गात् । अत एव श्रुतिनिबन्धः क्रियते—* श्रुतादन्यत्र सन्तुष्टस्तत्रैव च कुतूहली इति ; तस्मात्समाराधनोपकरणं बाह्यमान्तरं च सर्वं यथार्हमुपादद्यात् ॥ **इति व्याख्यातमुपादानम्** ॥

**इज्याविधिः** ॥ सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे देवीभूषादिजुष्टो नवजलदनिभः पातु दिव्यः परो नः ॥

अथेदानीं मन्त्रसिद्धान्तोपास्यपररूपविषयां भोगार्चनमयीमिज्यां भाष्यकारप्रणीतनित्यग्रन्थविवरणमुखेन व्याख्यास्यामः । मन्त्रसिद्धान्ते परिवारभेदस्तु गुणीभूतमूर्त्यन्तरयोर्वैकल्पिकः । तत्र प्रथममधिकारिविशेषे वृत्तवर्तिष्यमाणयोस्सङ्गतिं दर्शयन्

*कर्मारम्भेण मन्त्रेण प्राप्तं कालमनुस्मरेत् । इज्यामेवाभिसन्दध्यात्सा योनिस्सर्वकर्मणाम् ॥

इति प्रशंसितं चिकीर्षितग्रन्थविषयीभूतमहोरात्रकृत्ये प्रधानांशं दर्शयति—*अथपरमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये इति । अथशब्दस्य प्रसिद्धिप्रकर्षसिद्धानन्तर्ये संभवत्यर्थान्तरतात्पर्यपरिग्रहोऽनुपपन्न इति भाष्यादिषु स्थापितम् । अथ गद्यैर्यथावत्प्रपत्तिप्रतिपादनानन्तरं तत एव तन्निष्ठाधिकारिविशेषसिद्धिसमनन्तरं [वा] *यथावस्थितस्वरूपरूपगुणविभूतिलीलोपकरणविस्तारमनुसन्धाय तमेव शरणमुपगच्छेदखिलेत्यादिना इति वक्ष्यमाणानुसाराच्चात्र तथाविधशरणागतिविषयगद्यग्रन्थस्य पूर्ववृत्तत्वं विवक्षितमिति ज्ञायते । नच तत्र *अखिलजगदाधार इत्यादिवक्ष्यमाणमन्त्रपङ्क्तिर्विवक्षिता, तस्याः प्रपत्तिकरणत्वादर्शनात्, यथावस्थितस्वरूपरूपगुणविभूत्यादीनां च गद्य एव प्रपञ्चनात्, *अनन्यशरणस्त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये इति च तत्र कण्ठोक्तेः । तस्माद्यथोक्त एवत्राथशब्दार्थः । परमश्चासौ एकान्तश्चेति परमैकान्तः, सोऽस्यास्तीति परमैकान्ती; एकत्र अन्तो निश्चयः प्राप्यतया प्रापकतया च तदुभयं संभूय परमैकान्तः, परमश्चासौ एकान्ती च इति वा समासः । तत्राप्यनन्योपायत्वानन्यप्रयोजनत्वयोस्समुच्चयात्पारम्यम्, अनन्योपायत्वं चानन्यदेवताकत्वपर्यन्तम् । यथोक्तम्— *चतुर्विधा मम जना भक्ता एव हि ते [म]श्रुताः । तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ॥ इति । अनन्यप्रयोजनत्वं च आत्मानुभवानन्दनैरपेक्ष्यपर्यन्तम्; तदप्युक्तम्—

*ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥ इति ।

एतेन तुल्यन्यायतया भगवदनुभवानन्देऽपि फलित्वाभिप्रायो निरस्तः, मुक्तानन्दस्यापि सार्वभौमान्तःपुरशुकक्षीरास्वादनसुखवत्स्वतन्त्रेण परेणैव स्वप्रीत्यर्थमुपपादितत्वात् । एवंविधञ्च परमैकान्तित्वं मन्त्रसिद्धान्तादिनिष्ठेष्वपि संभवतीति पूर्वाधिकारे स्थापितम् । दृश्यते च सदाचार्यसकाशाद्यथावस्थितगद्यत्रयादिश्राविणामिदानीमपि तत्संभवः । तत्र हि यथावत्पारार्थ्यनिश्चयादन्यभक्त्युन्मूलनेनानन्यदेवताकत्वादिकञ्च सिध्यति । ताञ्चावस्थां स्वयमेवाह भगवान्—

*अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः । मामेव शरणं प्राप्तास्ते मद्भक्ताः प्रकीर्तिताः ॥ इति ।

निरतिशयभोग्यभगवत्स्वरूपादिनिश्चयेन विषयान्तरवैमुख्यादनन्यप्रयोजनत्वमपि तत्रैव सिध्यति, यस्यां दशायां भगवानत्यन्तासन्नसुहृदादिवत्स्वच्छन्दाराधनयोग्यो भवति; यथोक्तं भगवता शौनकेन—

*पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् । तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम् ॥
तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके ॥ इति ।

एवं परिमितविषयत्यागिनां परिमितफलप्रददेवतान्तरत्यागो नियतो भवति,

*काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः । क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥
*ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥

इति परिमितफलसङ्गतदभावाभ्यां देवतान्तरसंबन्धासंबन्धप्रतिपादनात् । अतो यथा—

*परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि । सर्वेषणाविनिर्मुक्तस्स भैक्षं भोक्तुमर्हति ॥

इति प्रतिपादितस्य परमात्मेतरसर्वविषयविरक्तस्य प्रव्रजिताधिकारिणो देवतान्तरवर्जनं तथा त्रिष्वप्याश्रमान्तरेषु प्रतिबुद्धाधिकारिणः। स्मर्यते च प्रव्रजितानां देवतान्तरार्चनत्यागः—

**अत्रिः**—*त्रैकाल्यमर्चनं विष्णोर्देवानां च तदात्मनाम्। नमस्कारार्चनादीनि कुर्यान्नान्यस्य कस्यचित्॥ इति।

**क्रतुः**— *ईश्वरो भगवान्विष्णुः परमात्मा महानजः। शास्ता चराचरस्यैको यतीनां परमा गतिः॥ इति।

पुनस्स एवाह—*ध्यायतेऽर्चयते योऽन्यं विष्णुलिङ्गमुपाश्रितः। कल्पकोटिशतैश्चापि गतिस्तस्य न विद्यते॥ इति। एवं प्रतिबुद्धानां सर्वेषां देवतान्तरवर्जनं प्रागेव दर्शितम्।

एतेन, *देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम्। नमस्कारं न कुर्याच्चेदुपवासेन शुध्यति॥

इत्यादिकमपि प्रतिबुद्धेतरविषयं मन्तव्यम्, प्रतिबुद्धस्यापि स्वनमस्कारयोग्यभगवत्तत्परिवारादिप्रतिमासु लब्धावकाशमेतत्। एवं परमैकान्तिशब्देनाधिकारिविशेष उक्तः; तस्य च

*परदाररतश्चैव परद्रव्यापहारकः। न स्पृशेन्मामनादृत्य स्पृष्ट्वा च पतितो भवेत्॥

इत्यादिभिरनर्हतापादकानि [सर्वाणि] तत्रतत्र द्रष्टव्यानि। संगृहीतञ्च समाराधनोपयुक्तसर्वद्रव्यसाधारण्येन **वङ्गिवंशेश्वरैः**—

*निषेधाविषयीभावादृते नैवापरो गुणः। प्रीतिहेतुः परेशस्य स्वार्चनाङ्गेषु वस्तुषु॥ इति।

आराधकस्याप्यर्चनाङ्गवस्तुत्वमविशिष्टम्। यथा च प्रशस्तजातिष्वेव तुलस्यादिपत्रपद्मादिपुष्परम्भादिफलगङ्गादितोयादिषु तैस्तैरुपहतिनिमित्तैर्निषेधविषयता, एवमाराधकेऽपि यतः कुतश्चिदुपघा[ता]तकादाप्रायश्चित्तमनर्हतया निषेधविषयत्वं भवति; अन्यथा *नाविरतो दुश्चरितात् इत्यादिश्रुतिव्याकोपप्रसङ्गात्, उपहतिविषयस्पृष्टबिम्बादिषु च प्रायश्चित्तविधानात्। ब्रह्मविदोऽपि ह्युत्तराघाश्लेषवचनं प्रामादिक[ादि]विषयमिति स्थापितं भाष्यादिषु। *सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् इत्यादिभिश्च सूत्रैरयमर्थस्सिद्धः। अपि च राजवदुपचारो ह्यत्र विधीयते, राजोपचारवृत्तिश्चापचारपरिहारप्रधाना, तद्वदिहापि। यथा च गुणवति राजनि सेवकानां सापराधानामपि क्षामणमात्रेण निरपराधता, तथेहापीति तल्लाभः। इदमपि संगृहीतम्—

*अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि। प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम्॥ इति।

यत्त्वत्रानन्तरमुक्तम्—

*अर्चनादिष्वनर्हत्वान्न कश्चिन्नापराध्यति। अतोऽनङ्गीकृताशेषकर्तृदोषविमर्शया॥
कृपयैवास्य देवस्य सर्वोऽप्यर्हति तत्क्रियाम्॥ इति,

एतदपि क्षामणयोग्यताख्यापकम्, अन्यथा क्षमस्वेति प्रार्थना[विधाना]नुपपत्तेः। नचैतावता कृतापराधेन [निर्भयेन] भवितव्यम्, *प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् इतिन्यायात्। अत्र चाकर्मण्यताहेतूनपराधानेवमाह भगवान्—

*शृणु सुन्दरि तत्त्वेन आहारस्य विनिर्णयम्।
आहारो यस्त्वनाहारस्तच्छृणुष्व वसुन्धरे। भोजनं यस्तु भुञ्जीत मम योगाय माधवि॥
अशुभं कर्म कृत्वाऽपि पुरुषोऽधर्मसंश्रितम्। आहारं चैव कर्मण्यमुपयुञ्जीत नित्यशः॥
सर्वेषां च ततः कर्मप्रवृत्तेः प्राणधारणम्। अकर्मण्यानि वक्ष्यामि यैर्न तुष्यामि संप्रति॥
राजान्नं च न भोक्तव्यं मम भक्तैः कदाचन। राजान्नेन तु भुक्तेन ह्यपराधो महान् भवेत्॥

द्वात्रिंशदपराधांस्तु न सेवेत मम प्रिये । भोज्यान्नपानाहारेषु ये मया परिकीर्तिताः ॥
दन्तकाष्ठमखादित्वा यस्तु मामुपसर्पति । द्वितीयमपराधं तु धर्मविन्न प्रवर्तते ॥
गत्वा मैथुनसङ्गं तु यस्तु मां स्पृशते नरः । तृतीयमपराधं तु कल्पयामि वसुन्धरे ॥
दृष्ट्वा तु मृतकं देवि यस्तु मामुपसर्पति । चतुर्थमपराधं तु न क्षमामि वसुन्धरे ॥
स्पृष्ट्वा रजस्वलां नारीं यस्तु मामुपसर्पति । पञ्चमं त्वपराधं च दृष्ट्वा वै न क्षमाम्यहम् ॥
स्पृष्ट्वा तु मृतकं चैव संस्कारं मृतकस्य वै । अपराधमिमं षष्ठं न क्षमामि वसुन्धरे ॥
ममार्चनविधौ काले वातं मुञ्चति निर्घृणः । सप्तमश्चापराधोऽयं मम देवि न रोचते ॥
ममैवार्चनकाले तु पुरीषं यस्तु मुञ्चति । अष्टमश्चापराधोऽयं ममात्र तु न रोचते ॥
मदीयार्चनकाले तु यो हि वाचा प्रभाषते । नवमं चापराधं तु न क्षमामि वसुन्धरे ॥
यस्तु नीलेन वस्त्रेण प्रावृतो मां प्रपश्यति । दशमश्चापराधोऽयं मम देवि न रोचते ॥
परिधायैकवस्त्रं च यस्तु वै मां प्रपद्यते । एकादशोऽपराधस्तु मम विप्रियकारणम् ॥
क्रुद्धस्तु यस्तु कर्माणि कुरुते कर्मकारकः । द्वादशं चापराधं तु कल्पयामि वसुन्धरे ॥
अकर्मण्यानि पुष्पाणि यस्तु मामुपकल्पयेत् । त्रयोदशापराधं तु न क्षमामि वसुन्धरे ॥
यस्तु रक्तेन वस्त्रेण कौसुम्भेनाधिगच्छति । चतुर्दशापराधं तं कल्पयामि वसुन्धरे ॥
अन्धकारे तु मां देवि यः स्पृशेत कदाचन । पञ्चदशापराधं तु कल्पयामि वसुन्धरे ॥
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत् । षोडशं चापराधं तु कल्पयामि न संशयः ॥
स्ववासमवधून्वन्वै यस्तु मय्युपकल्पयेत् । सप्तदशापराधं तं कल्पयामि वसुन्धरे ॥
श्वानं स्पृष्ट्वा ममान्यद्वा यो दद्यान्मम माधवि । अष्टादशापराधं तं कल्पयामि न संशयः ॥
वाराहं यस्तु मांसं वै भक्षयित्वा प्रपद्यते । एकोनविंशापराधं प्रतिजानामि माधवि ॥
जालपादं समश्नन्वै यस्तु मामुपसर्पति । अपराधं विंशतितमं कल्पयामि वसुन्धरे ॥
स्पृष्ट्वा वै दीपकं यस्तु यो मां स्पृशति माधवि । एकविंशापराधं तं कल्पयामि वसुन्धरे ॥
श्मशानं यस्तु वै गत्वा मम चैवाभिगच्छति । द्वाविंशमपराधं तु तमहं चोपकल्पये ॥
पिण्याकं भक्षयित्वा तु मम चैवोपचक्रमेत् । त्रयोविंशापराधं तं नरो मम च कल्पयेत् ॥
मज्जनानवजानन्यो मां तु पश्यति माधवि । चतुर्विंशापराधं तं कल्पयामि वसुन्धरे ॥
एकहस्तप्रणामं च यः करोति च भामिनि । पञ्चविंशापराधं तं न क्षमामि वसुन्धरे ॥
परप्रापणकेनैव यस्तु मामभिगच्छति । सप्तविंशापराधं तं न क्षमामि वसुन्धरे ॥
न चाग्रे ये तु व्रीहीणामदत्वाऽपीह भुञ्जते । अष्टविंशापराधं तं कल्पयामि वसुन्धरे ॥
अदत्वा सुमनो यो वै धूपं मे दातुमिच्छति । एकोनत्रिंशापराधं कल्पयामि वसुन्धरे ॥
सोपानत्कस्तु यो मर्त्यो मामेवमुपसर्पति । अपराधमिमं त्रिंशं कल्पयामि वसुन्धरे ॥
भेरीमताडयित्वा तु यस्तु मां प्रतिबोधति । एकत्रिंशापराधं तु कल्पयामि वसुन्धरे ॥
अजीर्णरसमाविष्टो यस्तु मामुपसर्पति । महापराधं तं विद्याद्द्वात्रिंशमिह चोत्तमम् ॥ इति ।

एवमेतान्यन्यानि चानर्हतानिमित्तानि परिहरतस्तत्संभवे च सानुतापं यथोचितप्रायश्चित्तमनुतिष्ठत इह समाराधनाधिकारित्वम् । एवं जात्यादिनिबन्धनाधिकारिविशेषोऽपि शास्त्रेषु श्रूयते । यथोक्तं श्रीसात्त्वते—

*अष्टाङ्गयोगसिद्धानां हृद्यागनिरतात्मनाम् । योगिनामधिकारस्स्यादेकस्मिन् हृदयेशये ॥
व्यामिश्रयागमुक्तानां विप्राणां वेदवेदिनाम् । समन्त्रे तु चतुर्व्यूहे त्वधिकारो न चान्यथा ॥
त्रयाणां क्षत्रियादीनां प्रपन्नानां च तत्त्वतः । अमन्त्रमधिकारस्तु चातुर्व्यूहक्रियाक्रमे ॥
सक्रिये मन्त्रचक्रे तु वैभवेऽपि विवेकिनाम् । ममतासन्निरस्तानां स्वकर्मनिरतात्मनाम् ॥
कर्मवाङ्मानसैस्सम्यग्भक्तानां परमेश्वरे । चतुर्णामधिकारो वै प्राप्ते दीक्षाक्रमे सति ॥
एवं संप्रतिपन्नानां मन्त्रपूर्वं यथास्थितम् । विधानमेकमूर्तीयं समाकर्णय सांप्रतम् ॥ इति ।

जयादिषु चाष्टादिभेदो द्रष्टव्यः । सर्वेषामन्ततो गत्वा भगवत्प्राप्तिस्समाना, विकलानामपि भागवतानाम् ॥

**स्वाध्यायविधिः** ॥ अथ स्वाध्यायं व्याख्यास्यामः—चतुर्थे काले संप्राप्ते स्वावगतवेदवाक्यार्थव्यक्तीकरणाय विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतपरावरतत्त्वयाथार्थ्यानां मनुपराशरपाराशर्यशुकशौनकादीनां महर्षीणां प्रबन्धान् [ वेदोपबृंहणानि ] श्रवणमननजपादिभिरभ्यसेत् । तदिदमुक्तं **व्यासेन** तत्कालकृत्यम् *इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् इति । **दक्षेण** तु *इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत् इति । एवं *भुक्त्वोपस्थाय चादित्यं पुराणानि सदा पठेत् इत्यादिकं च द्रष्टव्यम् । उपबृंहणनिरपेक्षस्योपबृंहणीयवेदभागजप एव युक्तः, तत्रापि साक्षाद्भगवत्प्रतिपादक एव भागो जप्य इति श्रीशाण्डिल्यस्मृत्यादिषूक्तम् । संग्रहरुचीनां महामन्त्रसक्तानां च सर्वसारभूतव्यापकमन्त्रजपोपदेशः । जपादिकालेऽपि गुर्वादिषु मौनवर्जनं सर्वत्रोक्तम् । आह चैवं **बोधायनः**—

*जपमध्ये गुरुर्वाऽपि वैष्णवो यस्समागतः । संभाषणादिपूजां तु तस्य कृत्वाऽनुमान्य च ॥
अनुश्राव्य ततः कुर्याज्जपशेषं समाहितः । सर्वस्य प्रभवो यस्माद्विष्णुपादाश्रया नराः ॥
तन्मूलतः क्रियास्सर्वास्सफलास्तु भवन्ति हि ॥ इति ।

तत्र मौनमन्त्रार्थचिन्तनादिनियमास्तत्रतत्र ग्राह्याः । शिष्यगुरुसब्रह्मचारि[शिष्ट]श्रेयोर्थिभिरनसूयुभिर्वीतरागैस्सह वादः । *बोधयन्तः परस्परमित्युक्तसंवादोऽपि तत्त्वनिर्णयफलत्वाविशेषादितिहासपुराणादिवत्स्वाध्यायकाल एव प्रवर्तनीयः । स्मरन्ति चाभिगमनान्तःपातिनि पूर्वयामस्वाध्याये *जपेदध्यापयेच्छिष्यान् धारयेच्च विचारयेत् इति, *विचारोऽभ्यसनं जपः इति च । उक्तं चानुयागविधानानन्तरं **श्रीसात्त्वते** *समाचम्य पुनर्यायात्प्रयतो भगवद्गृहम् इत्युक्त्वा *मनोबुद्ध्यभिमानेन सह न्यस्य धरातले इत्यादिना अष्टाङ्गप्रणामं च विधाय,

*अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो हरेः । आगमाध्ययनं कुर्यात्तद्वाक्यार्थविचारणम् ॥ इति ।

तदिह भगवत्प्रीणनस्वचित्तरञ्जकेतिहासपुराणस्तोत्रनिगमान्तद्वयव्यापकमन्त्रादीनां श्रवणमननप्रवचनजपादयो वादसंवादादयश्च यौगिकज्ञानप्रदीपस्नेहायमानाः,

*पारुष्यमनृतं चैव पैशुन्यं चैव सर्वतः । अनिबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥

इत्यादिना दर्शितविविधवाचिकपापोदयप्रतिबन्धिनश्च सर्वे व्यापारा यथासंभवं संभूय वा पृथग्भूय वा स्वाध्यायो भवन्ति । शमाद्युपयुक्तशब्दशीलनं कुर्यादिति स्वाध्यायसारः । उक्तं हि **महाभारते**—

* यच्छ्रुतं न विरागाय न धर्माय न शान्तये । सुबद्धमपि शब्देन काकवाशितमेव तत् ॥ इति ।
* न शब्दशास्त्राभिरतस्य मोक्षः इत्यादि च । अथ लोहितायति भास्करे यथासूत्रं सायंसन्ध्योपासनं, सायंहोमः, पुनर्यथाशक्ति भगवदभिगमनं, हविर्निवेदनपूर्वकं भोजनम्, केनचिन्निमित्तेन विलुप्ते भोजने प्राणाग्निहोत्रमन्त्रजपः, ततश्च रात्रियोग्यस्वाध्यायो योगश्चेति क्रमः । तत्र प्रमाणानि * उभे सन्ध्ये भगवानभिगन्तव्यः, * नानिवेद्य हरेः किञ्चित्समश्नीयात्तु पावनम्,

* सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

* प्राणाग्निहोत्रमन्त्रांश्च विलुप्ते भोजने जपेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन यापयेत् ॥

* तत्पूर्वापररात्रेषु युञ्जानः इत्यादीनि । अनन्यप्रयोजनाधिकारिकर्तव्यपूर्वयामस्वाध्यायश्च त्रयोदश्यां प्रदोषाख्यकाले वर्जनीयः । यथा संगृहीतं **कालविधाने**—

* विषुवायनद्वितयपञ्चदशीप्रथमाष्टमीषु कलानाथतिथौ । रजनीमुखे च मदनाधिपतेर्विधिराह नाध्ययनकर्म नृणाम् ॥ इति । **स्मृत्यर्णवे** चैतदुपात्तम्—

* मितसन्ध्यस्त्रयोदश्यामस्मरन्नात्मनो हितम् । अह्नोऽष्टमांशसंयुक्तं रात्र्यर्धं मौनमाचरेत् ॥ इति ।
एवं तत्कालनियतसावित्रीजपहोमादिव्यतिरिक्तदशायां प्रदोषाख्यकाले मौनविधानान्मन्त्रजपादिकमपि वर्जनीयम् । यथोक्तं **कृष्णमन्त्रकल्पे** * जपेन्न सन्ध्याकालेषु प्रदोषेष्वशुभेषु च इति । विषुवायनादिषु तु स्वाध्यायमात्रं निषिध्यते, मन्त्रजपादिकं तु विधीयते । उक्तश्चाष्टाक्षरजपस्य नित्यत्वं **बोधायनेन**—

* एवं गुरोस्समारभ्य मन्त्रानुष्ठानमाचरेत् । अष्टाक्षरं जपेद्विद्वान्नित्यमष्टसहस्रकम् ॥
अजप्त्वाऽष्टाक्षरं मन्त्रं नाहमश्नामि किञ्चन । यावज्जीवं जपामीति पश्चादहरहर्जपेत् ॥
अष्टाक्षरजपो यस्य नित्यो नैमित्तिकोऽपि वा । काम्यो वाऽपि भवेत्तस्य नित्या देवार्चना स्मृता ॥ इति ।

नचात्र मौनविधिकाले भगवद्धर्मविच्छेदः, तदानीं यथाविहितमौनानुष्ठानस्यैव भगवत्सेवारूपत्वात् । प्रवृत्तिविषया निवृत्तिविषया वा भगवदाज्ञैव सर्वदा अनुवर्तनीयेत्यच्छिद्रानुष्ठानसिद्धिः ।

यद्यपि चातत्क्रियस्य प्रदोषे हरिदर्शनादिकं प्रतिषिध्यते, तच्चानुपालितं परमैकान्तिभिर्भाष्यकारादिभिः; तथाऽपि स्वगृहार्चायास्तत्क्रियात्वात्तदनुज्ञा । उक्तं चैवं बोधायनीये **पुराणसारसमुच्चये**—

* आस्थानस्थस्सदा सेव्यो विमानस्थस्तु कालतः । स्वगृहे सर्वदा सेव्यो मध्यरात्रं विना प्रभुः ॥ इति ।
मध्यरात्रेऽप्युपरागादिनिमित्तविशेषसंभवे स्नानादिपूर्वकभगवत्सेवाजपादिकमवश्यकर्तव्यतया विधीयत इति न विरोधः । एतौ च स्वाध्याययोगौ आह्निकानुयागात्पूर्वमेव केषुचित्संहिताविशेषेषु समाहृत्योपदिश्यते, यथा संगृहीतं **नारायणमुनिभिः**—

* पुनः प्रणम्य देवेशमह्नो भागे तुरीयके । द्विषडष्टषडर्णादिमन्त्रेषु स्वानुसंहितम् ॥
विशेषेण जपेन्मन्त्रमष्टोत्तरसहस्रकम् । अष्टोत्तरशतं वाऽपि यथाशक्ति दशावरम् ॥
गुर्वादींश्च नमस्कृत्य बीजशक्त्यादिकं तथा । मन्त्रनाथं प्रणम्येशमापदादवलोकयन् ॥
जप्त्वा च सुचिरं योगमास्थाय प्रणमेद्धरिम् । स्वधामनीत्वा देवेशं प्रह्वस्सपरिवारकम् ॥

तत्रार्घ्यादिभिरभ्यर्च्य रक्षां कृत्वाऽस्त्रनायकैः । पुनःपुनः प्रणम्याथ होमाद्यं संविधाय च ॥
अनुयागं ततः कृत्वा कृतकृत्यो भवेन्नरः ॥ इति ।

अयमेव क्रमो विस्तरेणोक्तस्तद्गुरुभिर्वङ्गिवंशेश्वरैः । तथा हि—

* प्राप्तमहश्चतुर्थांशं स्वाध्यायार्थमुदीरितम् । विज्ञाप्य विष्णवे तस्मै लब्धानुज्ञस्ततोऽपि च ॥
बाह्यार्थादखिलाच्चेतस्समाहृत्येन्द्रियैस्सह । जपन्नष्टाक्षरं मन्त्रं प्राणायामपुरस्सरम् ॥
प्रयतः परया भक्त्या पूर्वमेव समाहितः । कराङ्गुलिशरीरेषु न्यासान् कृत्वा यथोदितान् ॥
गुरुं मन्त्रमृषिं छन्दो देवताश्च यथाक्रमम् । शक्तिं बीजं च शिरसा प्रणमेद्देवमादितः ॥
इदं गुरुभ्यः पूर्वेभ्यः क्रियते शिरसा नमः । मन्त्रज्ञानप्रदातृभ्यस्तद्गुरुभ्योऽपि सांप्रतम् ॥
नमस्ते मन्त्रराजाय नमस्तेऽष्टाक्षरात्मने । नमस्ते चेतनाधार परब्रह्माभिधायिने ॥
स्थित्वाऽन्तर्हृदये सर्वानात्मनस्सन्नियच्छते । ऋषयेऽष्टाक्षरस्यान्तर्यामिणे हरये नमः ॥
अष्टाक्षरमहामन्त्रवर्णसङ्ख्याभिधायिनीम् । छन्दश्च देवीं गायत्रीं शिरसा प्रणमाम्यहम् ॥
मन्त्रस्य देवतां चापि परमात्मानमव्ययम् । नारायणं परं ब्रह्म नतोऽस्मि शिरसा हरिम् ॥
मन्त्रशक्तिस्स्थिता यस्मिन्नाश्रितेष्टार्थदायिनी । पदं नारायणायेति शक्तिं तां प्रणतोऽस्म्यहम् ॥
अकारादुत्थितं बी[जात्]जं वासुदेवाभिधायिनः । तद्बीजमस्य प्रभवं प्रणवं प्रणतोऽस्म्यहम् ॥
प्रणम्य चैवं गुर्वादीन् गन्धाद्यैरभिपूज्य च । अनिशं भगवद्बिम्बमापीठादवलोकयन् ॥
जपेदष्टाक्षरं मन्त्रं तदर्थमनुचिन्तयन् । अष्टोत्तरसहस्रं वा शतं वा दश वोत्सुकः ॥
जपान्ते मनसा ध्यात्वा यथोक्ताकृतिमच्युतम् । सपत्नीकं सानुयात्रं सद्वारपगणेश्वरम् ॥
कृत्वैवं मनसा योगं सुचिरं हृष्टमानसः । उत्थाय च ततो योगाद्दण्डवत्प्रणिपत्य च ॥
स्तुत्वा च बहुभिः स्तोत्रैः कृत्वा चापि प्रदक्षिणम् । स्थित्वाऽग्रे देवदेवस्य कृत्वा मूर्ध्नि स्वमञ्जलिम् ॥
जितं त इति मन्त्रेण तं देवं शरणं व्रजेत् ॥
ततस्तस्मै प्रपन्नाय दत्ते तेनाभये सति । निर्भयस्सर्वभूतेभ्यो भवेन्निर्वृतमानसः ॥
कर्मण्यवसिते तस्मिन्दुर्लभे दुष्करेऽपि च । अर्घ्यं दत्त्वा यथापूर्वं स्वं चात्मानं निवेद्य च ॥
स्वनिवेदनमन्त्रेण दासशिष्यात्मजात्मनः । सोदकं स्वेन शिरसा भक्तिनिष्ठः परात्मने ॥
निदध्यात्स्वं च कर्तृत्वं तस्मिन्नेव परात्मनि । क्षामयेच्चापराधान्स्वान्ज्ञानाज्ञानोपपादितान् ॥
असह्यानविषह्यांश्च क्रियमाणानहर्निशम् । अज्ञानतोऽप्यशक्त्या वाऽप्यालस्याद्दुष्टभावतः ॥
कृतापराधं कृपया क्षन्तुमर्हसि मां विभो । अज्ञानादथवा ज्ञानादशुभं यत्कृतं मया ॥
क्षन्तव्यं तदशेषेण दास्येन च गृहाण माम् । उपचारापदेशेन कृतानहरहर्मया ॥
अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम । शिरसा प्रार्थितेनैवं प्रसन्नेन परात्मना ॥
क्षान्तसर्वापचारेण करुणामृतवर्षिणा । वात्सल्यौदार्यसौशील्याद्यनन्तगुणशालिना ॥
अशरण्यशरण्येन कृपया परया स्वया । सस्मितालोकमधुरमाह्वयाद्भुतया गिरा ॥
दत्तं तत्पदयोर्युग्मं स्वयमेव स्वमूर्धनि । वहंस्तच्चरणस्पर्शनिहताशेषकल्मषः ॥

आसीत सुचिरं तस्य पुरतः परया मुदा । समुत्थाय ततस्तस्मै भूयोभूयः प्रणम्य च ॥
स्मारयित्वा स्वकं धाम तद्यानाय प्रणम्य च । दत्वाऽथ पादुकायुग्मं तत्र देवं समानयेत् ॥
सपत्नीकं सानुयात्रं सद्वारपगणेश्वरम् । ततस्तदर्हविन्यासं सूपधानं स्वलङ्कृतम् ॥
अनन्तभोगशयनमधिरूढे परात्मनि । आसीनयोस्तदा देव्योर्देवपार्श्वे यथातथम् ॥
आसीनेषु यथाभागं सेनान्यादिषु सर्वतः । अथार्घ्यपाद्याचमनताम्बूलादि यथोचितम् ॥
देवाय देवीयुक्ताय सानुगाय निवेद्य च । प्रणम्य दण्डवद्भूम्यां भूयोभूयः पुरो हरेः ॥
अनुयागादिकं चाथ चिकीर्षन्नाह्निकं विधिम् । दत्तानुज्ञः परेणापि गमनायात्मनो बहिः ॥
निर्गन्तुकामो निक्षिप्य देवं दौवारिकादिषु । सभयस्सानुतापश्च चण्डादीन् द्वारपालकान् ॥
कुमुदादीन् गणेशांश्च चक्रादीन्यायुधानि च । गरुडं च विशेषेण शेषं शेषाशनं तथा ॥
प्रणम्य स्मारयेद्देवं सस्नेहादरसाध्वसः । निक्षिपन् जीवितमिव न्यस्यन्निव महानिधिम् ॥
निधित्सन्निव चक्षुस्स्वमर्पयन्निव कल्पकम् । सर्वे भवन्तस्सगणास्सन्नद्धास्सर्वदिक्ष्वपि ॥
सावधानाश्च तिष्ठन्तु निक्षिपामि भवत्स्वहम् । मम नाथं मम गुरुं पितरं मातरं च मे ॥
हरिं श्रियं भुवं चापि तान् पालयत सर्वतः । यथा निक्षिप्तरूपं मे सन्दर्शयत सर्वदा ॥
भवतश्शरणं लब्ध्वा व्रजामि गतसाध्वसः । इति विज्ञाप्य तान् पश्चात्प्रार्थयेत हरिं गिरा ॥
ननु देव त्वमेवैकस्सस्थावरचरं जगत् । ब्रह्मादि स्थावरान्तं च परिपासि बिभर्षि च ॥
संहरिष्यसि चाप्यन्ते रूपैस्तैस्तैर्यथेप्सितैः । केन त्वं पाल्यसे देव केन वा त्वं विहन्यसे ॥
अतस्त्वमेव त्वां देव्यौ चण्डादीन् पालकानपि । मां च मामकमप्येतत्सर्वं गृहमशेषतः ॥
पालयित्वा स्वसङ्कल्पमात्रेण मधुसूदन । त्वां मया त्वयि निक्षिप्तं विश्वस्तेनार्थिकल्पक ॥
आगताय यथाकालं सर्वं मे दातुमर्हसि । इति विज्ञाप्य पुरतो दण्डवत्प्रणिपत्य च ॥
होमं पितृक्रियां पश्चादनुयागादिकं च यत् । सर्वमावेद्य तेनैव नियुक्तस्तच्चिकीर्षया ॥
वीक्षमाणस्तमेवैनं चक्षुषा स्निग्धपक्ष्मणा । मूर्ध्नि न्यस्ताञ्जलिपुटो विनिष्क्रम्य शनैश्शनैः ॥
बध्वा कवाटयुगलं रक्षां कृत्वा प्रणम्य च । होमाद्यमनुयागान्तं वैधं कर्म समाचरेत् ॥ इति ।

एवमष्टाङ्गयजनमध्य एव स्वाध्याययोगयोस्समाहृत्योपदेशात्तत्तद्देशकालावस्थाभेदेन यथाक्रमानुष्ठानाशक्तौ विध्यादेरपि यथोचितकालान्तरे समाहरणं रहस्याम्नायादिषु प्रपञ्चितमिहाविरुद्धमिति सूचितम् । स्वाध्याययोगयोश्च यथावसरं मात्रया सर्वत्रानुप्रवेशः प्रागेव दर्शितः ॥ इति व्याख्यातः स्वाध्यायः ॥

**योगविधिः** ॥ अथ योगं व्याख्यास्यामः—तत्रानन्यप्रयोजनाधिकर्तव्यो योगविशेषः, *ईदृशः परमात्माऽयम् इत्यादिना **श्रीशाण्डिल्यस्मृत्युक्तः** प्रागेव दर्शितः । श्रीसात्त्वताद्युपदिष्टयोगप्रकाराणामविरोधश्च सम्यक् समर्थितः । तत्र **पराशरस्त्वेवमाह** भगवान्—

*आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥

इत्ययमेव त्वनन्यप्रायोजनस्य योगः, क्षुद्रयोगान्तराणि तु सिद्ध्यन्तरार्थान्येव योगशास्त्रेषु पठ्यन्ते । यद्यप्यनन्यप्रयो-

जनस्यापि तत्रतत्रोक्तन्यासविद्याभेदात्स्वनिष्ठाविषयतत्तत्संहितोक्तप्रक्रियाभेदाच्चानुसन्धेयरूपगुणविभूत्यादिकं नाना भवति, तथाऽपि स्वरूपनिरूपकानन्दत्वादिपञ्चकनिरूपितस्वरूपे सर्वशेषिणि परस्मिन् ब्रह्मणि श्रीमति पुरुषोत्तमे तत्तद्विद्योदित-रूपादिविशेषविशिष्टे मनोवृत्तिनैरन्तर्यरूपत्वं योगस्याविशिष्टम् । अत एव—

* पृथग्भूतेषु दृष्टेषु चतुर्ष्वाश्रमकर्मसु । समाधौ योगमेवैकं शाण्डिल्यस्समुक्तवान् ॥

इति महाभारतवचनं सुसङ्गतं भवति । अत्र तु भाष्यकाराद्युक्तनित्यगद्यस्तोत्रादिषु यथानुसन्धानमुक्तम्, तथैव तत्सं-प्रदायनिष्ठैरनुसन्धेयम् । श्रीवैकुण्ठगद्ये अनन्यगतेः प्रपत्तिमेवापवर्गोपायं विधाय तस्यैव क्षुधितस्यारोगस्य क्षीरान्नभोजन-वत्स्वयंप्रयोजनतयैव ध्यानयोगविशेषस्तदनुबन्ध्यनुसन्धानविशेषाश्च प्रपञ्चिताः । तथा हि—* स्वाधीनत्रिविधचेतनाचेतन-स्वरूपस्थितिप्रवृत्तिभेदम् इत्यारभ्य * स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य इत्यन्तेन प्राप्यप्रापकभूतशरण्या-ध्यवसायमुक्त्वा अनन्तरम् * ऐकान्तिकात्यन्तिकपरिचर्यैकमनोरथः इति पुरुषार्थविशेषलिप्साया अनन्यप्रयोजनतां प्रति-पाद्य * तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः इत्यनन्योपायतानु-सन्धानमभिधाय *तस्यैव भगवतः इत्यादिना *महाविभूतेः श्रीमतः इत्यन्तेन शरण्यत्वाद्युपयुक्ताकारानभिधाय *चरणार-विन्दयुगलमनन्यात्मसञ्जीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् इति शरणवरणमेव मोक्षोपायत्वेन विधाय * ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत् इति स्वतन्त्रप्रपत्तिनिष्ठस्यैव प्रत्यहं प्राणरक्षणार्थं भोजनादिन्यायेन आत्मोज्जीवनार्थ-मनुस्मरणविशेषं विधाय विस्तरेण प्राप्यान्तर्गतं परमपदं वर्णयित्वा * महति दिव्ययोगपर्यङ्केऽनन्तभोगिनि श्रीमद्वैकुण्ठै-श्वर्यादिदिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेषशेषाशनादि सर्वं परिजनं भगवतस्तत्तदवस्थोचितपरिचर्यायामाज्ञाप-यन्त्या शीलरूपगुणविलासादिभिरात्मानुरूपया श्रिया सहासीनम् इत्यादिना * भगवन्तं नारायणं ध्यानयोगेन दृष्ट्वा इत्यन्तेन परिपूर्णध्यानमुक्त्वा पुनः * भगवत इत्यारभ्य * भगवत्परिचर्यायामाशां वर्धयित्वा इत्यन्तेन * मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत्, * कदा द्रक्ष्यति मां पतिः इत्यादिवत् पुरुषार्थप्राप्तिमनोरथप्रकारान् प्रतिपाद्य * तयैवाशया तत्प्रसादोपबृंहितया भगवदभिगमनं दूरात्सपरिवारस्य भगवतो नारायणस्य *समस्तपरिवाराय इत्यादिना मन्त्रेण प्रणाम-मुत्थाय पुनःपुनः प्रणामं चाभिधायानन्तरमेवमनुसन्धानमुक्तम् *अत्यन्तसाध्वसविनयावनतो भूत्वा भगवत्पार्षदगणनायकैः द्वारपालकैः कृपया स्नेहगर्भया दृशाऽवलोकितस्सम्यगभिवन्दितैस्तैस्तैरेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण मामै-कान्तिकात्यन्तिकपरिचर्याकरणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते निवेदयेत्, ततो भगवताऽमर्यादशील-वताऽतिप्रेमान्वितेनावलोकनेन सर्वदेशसर्वकालसर्वावस्थोचितात्यन्तशेषभावाय स्वीकृतोऽनुज्ञातश्चात्यन्तसाध्वसविनयावनतः किङ्कुर्वाणः कृताञ्जलिपुटो भगवन्तमुपासीत, ततश्चानुभूयमानभावविशेषो निरतिशयप्रीत्याऽप्रीत्याऽन्यत्किञ्चित्कर्तुं द्रष्टुं स्मर्तुमशक्तः पुनरपि शेषभावमेव याचमानो भगवन्तमेवाविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत, ततो भगवता स्वयमेवात्मसञ्जीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्तक्लेशापहं निरतिशयसुखावहमात्मीयं श्रीमत्पादारविन्दयुगलं शिरसि कृतं ध्यात्वा अमृतसागरान्तर्निमग्नसर्वावयवस्सुखमासीत इति । अपिचात्र द्वयव्याख्यानरूपे गद्यत्रये निर्वेद-भूयस्तया कैङ्कर्यत्वरातिशयाच्च प्राभातिकेऽभिगमने मितगद्यानुसन्धानमुचितम् । बृहद्गद्यं तु समाराधनकाले विशेषतो-ऽनुसन्धेयानां स्वरूपरूपगुणविभूतिदेवीभूषणायुधपरिजनपरिच्छदद्वारपालपार्षदादीनां यथावदनुसन्धानहेतुतया यथाव-

स्थितस्वरूपरूपगुणविभूतिलीलोपकरणविस्तारमनुसन्धाय तमेव शरणमुपगच्छेदखिलेत्यादिनेति समाराधनादावन्ते च भाष्यकारैरेव विनियुक्तम् । **श्रीवैकुण्ठगद्ये** तु—

*यामुनार्यसुधाम्बोधिमवगाह्य यथामति । आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥

इति प्रारम्भात्पश्चादपि *ध्यानयोगेन दृष्ट्वा इत्यभिधानात् फलरूपविलक्षणानुसन्धानभेदानां विधानात् *अविच्छिन्नस्रोतोरूपेणावलोकनेनावलोकयन्नासीत इति कण्ठोक्तेश्च योगार्थसङ्कल्पिते काले विशेषतोऽनुसन्धेयमिति **भाष्यकाराशयः** प्रतीयते । न च *भक्तियोगाख्यं रत्नमिति प्रारम्भादुपायभूतभक्तिविषयोऽयं प्रबन्ध इति भ्रमितव्यम् । अनन्यगतिकस्य प्रपत्तेरेवात्रोपायत्वेनोपदेशादुपायभूते फलभूते चानुसन्धानविशेषभक्तियोगशब्दप्रवृत्त्यविरोधाच्च । ततस्सिद्धोपायैरप्ययं योगस्स्वकाले निवेशनीयः । योगकालानियमादैकाग्र्यानुरूपकालान्तरेऽपि कदाचिद्भवति । यामिन्यां भगवद्ध्यानस्य तु पावनत्वातिशयः स्मर्यते—

*उपपातकयुक्तोऽपि महापातकवानपि । यामिन्याः पादमेकं तु ब्रह्मध्यानं समाचरेत् ॥ इति ।

ततश्च—*परस्मिन्व्यूहाख्ये विभवनिवहेऽर्चावतरणे तथाऽप्यन्तर्यन्तर्यजहदधिकारादिनियमाः ।

निरुध्य स्वं चित्तं निरवधिमहानन्दजलधौ निरस्तान्यापेक्षानियतसफलं कालमखिलम् ॥

एषु च परव्यूहप्रभृतिषु चित्तालम्बनेषु प्रपत्त्येकनिष्ठा नाथयामुनप्रभृतयः । सुलभतमत्वेन परिपूर्णत्वाविशेषाच्च समाहितचित्तानामप्यनुसन्धेयमर्चावतारमेव चेतसश्शुभाश्रयमालम्बनम् । तत्र यद्यपि शीघ्रसाक्षात्कारहेतुभूतो मन्त्रविशेष उच्छिन्नसंप्रदाय इति वृद्धा विदामासुः, तथाऽपि स्वावगतैर्मन्त्रविशेषैरमन्त्रकं वा यथासंभवं यथासंप्रदायं तदनुसन्धानमप्यवर्जनीयमेव । *सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः इत्यादिना तस्यैव पूर्णत्वं सिद्धम् । **श्रीवैखानसे**ऽपि तदनुसन्धानस्यैव मुख्यत्वं प्रतिपादितम्, यथोक्तं **क्रियाधिकारे** *मानसी होमपूजा च बेरपूजेति सा त्रिधा इत्युपक्रम्य—

*यथोपयोगशक्यत्वात्कर्तुं पुष्पादिपूजनम् । चक्षुषः प्रीतिकरणान्मनसो हृदयस्य च ॥

प्रीत्या संजायते भक्तिर्भक्तस्य सुलभो हरिः । तस्मात्त्रयाणामेतेषां बेरपूजा विशिष्यते ॥ इति ।

आह च भगवान् **शौनकः**—

*सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥

तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥ इति ।

अतो यत्र क्वचिद्भगवद्रूपे यथाशक्ति निरन्तरानुसन्धानं नाथमुनिप्रभृतिवत्सिद्धोपायैरपि निवेशनीयम् । एवं तु सात्त्वतोक्तस्सन्ध्यादिनिद्रान्तकर्मसंग्रहः—

*प्राप्तेऽथ सन्ध्यासमये स्नात्वा वा जघनावधि । क्षालयित्वा ततः कुर्याद्वाससां परिवर्तनम् ॥

अर्चयित्वाऽर्घ्यपुष्पाद्यैर्देवमग्निं यजेत्तथा । यथाशक्ति जपं कुर्यादासाद्य शयनं ततः ॥

समाधाय बहिर्देवं निरालम्बपदे स्थितम् । अप्रमत्तेन वैतावदनिरुद्धेन चेतसा ।

सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम् ॥ इति ।

**पाद्मे** त्वेवमुक्तम्—

*ततः पश्चिमसन्ध्यायां प्राप्तायां तत्र चोदितम् । जपहोमादिकं सर्वं कृत्वा परमपूरुषम् ॥

अर्चयित्वा यथान्यायं यथापूर्वमशेषतः । भुक्त्वा संविश्य शयने समुत्थाय महानिशि ॥
आचम्य प्रयतो भूत्वा ध्यात्वा परमपूरुषम् । योगासने समासीनो युञ्जीतात्मानमात्मनि ॥
यथोक्तेन प्रकारेण यथाशक्ति चतुर्मुख । संहारक्रममाश्रित्य तत्त्वान्यात्मनि संहरेत् ॥
आत्मानं चापि हृत्पद्मे परमात्मनि विष्ठिते । संहरेदुत्थितो योगात्स्वापं क्लेशापहं व्रजेत् ॥
इत्येष कथितो ब्रह्मन् योगकालश्च पञ्चमः ॥ इति ।

नचैतन्निरन्तरभगवदनुसन्धानं सनकादिसाध्यमस्मदादिभिर्दुश्शकमिति मत्वोदासितव्यम् । यथारोग्यं भोजनवद्यथाशक्ति तदास्वादस्यापरित्याज्यत्वात्; उक्तं च श्रीमत्प्रह्लादेन—

*आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् । पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ इत्यादि ।

अतो यथा वा—

*द्रष्टुमिच्छामि ते रूपमैश्वरं परमेश्वर । मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥

इत्येतावद्वादिनोऽर्जुनस्य भगवान्विश्वरूपं स्वात्मानं दर्शयामास, एवमत्रापि स्वानुभवसापेक्षान् यथामनोरथं परमोदारो भगवानेव स्वात्मानमनुभावयति । अतो निर्यललब्धेन भगवदनुभवानन्दसन्दोहेन कृतार्थोऽस्मीति मन्यमानः करणकलेबरानुगुण्यावधि सुखमासीनो विविधव्यापारायत्तस्य करिष्यमाणयोगोपकरणभूतस्य करणवर्गस्य विश्रान्तये स्वयमुपनमन्तीं निद्रां न निवारयेत्; *युक्तस्वप्नावबोधस्य इति स्मरणात् । निद्रैव तदा कैङ्कर्यं सुषुप्तौ च, *तदभावो नाडीषु तच्छ्रुतेरात्मनि च इति शारीरकसूत्रोक्तेन प्रासादखट्वापर्यङ्कन्यायेन नाडीपुरीतद्ब्रह्मसु स्वात्मनश्शयनमनुसन्धाय लक्ष्मीपरिष्वङ्गव्यञ्जकेन माधवशब्देन भगवन्तं सङ्कीर्तयन् *यथा प्रियया सम्परिष्वक्तः इत्यारभ्य *प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् इत्याम्नातप्रक्रियया परमात्मनि परिष्वङ्गविशेषं च परामृश्य *यत्करोषि इत्यादिप्रस्थानेन निद्रामपि समाराधनत्वेन मन्यमानस्संशुद्धशुष्कपादश्शास्त्रोक्तप्रकारेण समुचिते स्थाने शास्त्रीये शयनीये चोदितदिक्छिराश्शुद्धस्वानम्रादिनियमयुक्तः श्रीशाण्डिल्यस्मृत्याद्युक्तप्रकारेण स्वाराध्यस्य भगवतश्चरणारविन्दयोर्विन्यस्तशिरस्कः *शयनासनयानादौ इत्यादिविधानात्तमेव माधवं हृदये ध्यायन् तमेव कीर्तयन् सुखं शयीत । यदा यदा निद्राविच्छेदस्तदातदा तमेव ध्यायेत् सङ्कीर्तयेच्च तानि नामानि पुनरानिद्रागमात्; सोऽयं प्रदोषप्रभृति ब्राह्ममुहूर्तावधि सारस्वतस्रोतस इव विश्रमान्तरितस्य योगस्यावसरः, अवसरान्तरेऽप्यैकाग्र्यसंभवे कर्मान्तरसङ्कोचेन स्वीकार्य इति प्रागेवोक्तम् । एवं वर्तमानस्य सर्वः कालोऽप्यवन्ध्यो भवति, सर्वे व्यापाराः कैङ्कर्यरूपा भवन्ति, सर्वोऽप्यानुषङ्गिको भोगः क्रीडाशुकक्षीरास्वादन्यायेन स्वामिभोगशेषभूतो भवतीति भगवत्कैङ्कर्यरतेः परमैकान्तिनोऽनादिमायानिशावसाने अनन्तमोक्षवासरप्रारम्भे च प्रत्यूषवदास्थितोऽयमायुश्शेषकाल इति । स चायमौत्सर्गिकः क्रम उक्तः, अपवादे तु व्युत्क्रमविलोपादिप्रवृत्तिः, यथा ह्युपवासदिवसेषु एकादश्यादिषु अनुयागस्य लोपो भवति । सत्राङ्गमेव च तदानीं यजनम्, अत एव चानुयागस्यानियतत्वव्यञ्जनाय भाष्यकाराणां तदनुक्तिः, तदर्थः कालश्च तस्मिन् दिवसे स्वाध्याययोगादिष्वन्यतमेन यथोचितं यापनीयः । कदाचिद्द्वादश्यादिषु प्रभाते पारणं भवति । तदर्थं पूर्वं यजने कृते स्वकालप्राप्तं माध्यन्दिनयजनं सत्राङ्गं तिष्ठति, वैशेषिकार्चनेषु बहुष्वेकदिवसे क्रमात्संभवत्सु अङ्गगुणविरोधे च तादर्थ्यादितिन्यायेन उपादानादिप्रवृत्तिर्लेशतः

प्रतिषिद्ध्यते, तत्र पूर्वदिवसार्जितैर्द्रव्यैः परोपनीतैर्वा तत्तत्क्रियानिष्पत्तिः, यजनं च सर्वस्मिन् काले ह्यभ्यनुज्ञातम्, खिन्नवृत्तेरन्यपरस्यातुरस्य कलहाद्युपद्रुतस्य च भोजनात्पूर्वं यदा कदाचिल्लब्धावसरे भवति, अत्यन्ताशक्तौ तु ऋत्विक्पुत्रशिष्यादिभिस्स्वसमैरन्यैः कार्यते, तत्र स्वयमपवादः स्मर्यते—

* विधुरो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः । परार्थं कर्म कुर्वाणाः पातयन्ति पतन्ति च ॥ इति ।

ईषच्छक्तौ तु सङ्कुचितयजनम्, एकोपचारमारभ्य तत्तच्छक्त्याद्यनुसारेण सहस्रोपचारान्तविधानात् * विषुवायनद्वितय-पञ्चदशी इत्यादिना प्रतिषिद्धेष्ववसरेषु वेदाभ्यासरूपस्वाध्यायो लुप्यते तदा तत्कालमध्ययनन्यपरस्य प्रधानतमो योगस्समास्कन्दति, त्रयोदशीनिशामुखे च तस्याप्यपवादं केचिदिच्छन्ति, तदाऽपि सर्वक्रियान्तरनिरोधपूर्वकं मौनव्रतमनुष्ठीयमानं सात्त्विकत्यागप्रक्रियया स्वकीयेन मया स्वप्रीत्यर्थं भगवतैव कार्यत इत्यनुसन्धेयम् । तस्मात् * आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः इत्यारभ्य * ध्येयो नारायणस्सदा इत्यादिभिरुक्तम् भगवदनुस्मरणं सर्वत्रैव सावकाशम्, अविच्छिन्नस्मृतिसन्ततिरूपत्वादिकं तु मात्रया भज्यते । एवं मृतकसूतकाद्यप्रायत्यकालेष्वपि प्रयतकर्तव्यशास्त्रीयसर्वकर्मविलोपः, तदानीं तु मौनावसरव्यतिरिक्तः कालस्सङ्कीर्तनेन स्मरणेन च यापनीयः । * सततं कीर्तयन्तो माम्, * तस्मात्सर्वेषु कालेषु मामनुस्मर इत्यादेस्तदानीं निरपवादत्वात्; प्रत्युत—

* चक्रायुधस्य नामानि सदा सर्वत्र कीर्तयेत् । नाशौचं कीर्तने तस्य पवित्रं भगवान् हरिः ॥
नाशौचं कीर्तने तस्य स्मरणे वाऽपि विद्यते । अशुचिश्चाप्यनाचारस्सर्वावस्थां गतोऽपि वा ॥
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

इत्यादिभिः कीर्तनस्मरणयोश्चाशौचकालेऽप्यनुष्ठेयत्वोक्तेः ।

किञ्च— * सङ्कीर्तयेज्जगन्नाथं वेदं वाऽपि समीरयेत् । ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन् ॥
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम् ॥

इत्यादिभिर्देशकालावस्थाधिकार्याद्यविशेषेण [ विहितम् ] वेदाभ्यासध्यानयजनार्चनस्थाने तुल्यफलतया सङ्कीर्तनस्य विहितत्वात् । प्रपन्नाभिमतभगवत्प्रीतेश्च तावतैव सुलभत्वाच्च सर्वदेशसर्वकालाधिका[र्य]र्याद्यनुगुणं सङ्कीर्तनमेव कर्मान्तरलोपकाले समुचितम्, विशेषतः कालधर्मत्वाच्च कलौ युगे प्रयतस्याप्यन्याशक्तस्य तदेव युक्तम् । यथाऽऽह भगवान् **शौनकः**— * कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् इति । अत एवाभिगमनस्य न कदाचिदपि लोपः । अप्रयतस्यापि दूरावस्थितस्य सङ्कीर्तनप्रणामाञ्जलिबन्धभाषास्तोत्रलौकिकवाक्यमात्रपूर्वकप्रपदनैरपि तत्स्वरूपनिष्पत्तेः । ननु भागवतस्य सदाचार्यसकाशात्समधिगतवेदान्तस्य ब्रह्मवित्त्वेन सद्यश्शौचविधानादनुवृत्ताशौचासिद्धेः कथं कर्मविलोपः? मैवम्; रहस्याम्नायनिष्ठानामेव तच्छाखागृह्योक्तप्रक्रियया तदभावात्, मन्त्रसिद्धान्तादिनिष्ठानां तु दीक्षितानामपि प्रक्रान्तमहोत्सवाधिकारिष्वेव तन्निषेधः । यद्यपि ब्रह्मवित्त्वं तेषामप्यविशिष्टम्, तथाऽपि कृतादिषु त्रिषु युगेषु तेषामपि सद्यश्शौचम् । * वृत्तस्वाध्यायसंपन्नस्याघसङ्कोचनं तथा इति घटिकाव्यवस्थावचनेन कलियुगे वृत्तादिनिमित्ताघसङ्कोचप्रतिषेधात् । न च वाच्यम्—

* एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥

इत्यादिसूक्तस्याग्निवेदादिनिमित्ताघसङ्कोचस्यायं प्रतिषेधः, नतु ब्रह्मवित्त्वनिमित्तस्येति; न च ब्रह्मविच्छब्देन प्रव्रजित-

ग्रहणम्, ब्रह्मविदां प्रव्रजितानां च सद्यश्शौचानर्हत्वेन पृथगुपादानात्; मैवम्, यथोक्तं ब्रह्मविदामपि वृत्तगुणशब्देन ग्रहणसंभवे सङ्कोचकाभावात्, तर्हि *सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा इति सहपठितानां सत्रिप्रभृतीनामपि सत्रव्रत-ब्रह्मचर्यदानादिगुणनिमित्तमघसङ्कोचनमिति तेषामप्येतदन्तिमयुगे न स्यादिति चेन्न; अनुष्ठानतस्तद्व्यवस्थापनात् अद्यापि हि सद्यश्शौचं व्रतादिषु शिष्टैरनुष्ठीयते, न शारीराधिगमसिद्धब्रह्मवेदनवतामपि गृहस्थानां क्वचित्तदनुष्ठानं दृश्यते, अनन्त-बाह्यकुदृष्टिसिद्धान्तव्याकुलतत्त्वाध्यवसाये रागादिदोषान्धकारबहुले बहुलनिशीथखद्योतकल्पगुणलवे कलिविलुप्तस्वधर्मवर्गे-ऽस्मिन् काले ब्रह्मविदामसंभवादेव तथाऽनुष्ठानादर्शनमिति चेत्तर्हि कस्येदानीं ब्रह्मविदस्सद्यश्शौचेन कर्मलोपं परिजिहीर्षसि?

*कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः॥

इतिन्यायेन यः कश्चिद्यत्रक्वचिद्ब्रह्मविदपि संभवतीति चेत्, सत्यम्; स तावद्व्यासागस्त्यभृगुपतिविभीषणप्रभृतिभिस्त्वया-ऽप्यदृष्टे क्वचित्प्रदेशे वर्तमानस्स्वान्तरात्मसाक्षिकं तथाऽनुतिष्ठतु नाम, तदन्येषां तु भागवतमर्यादाप्रविष्टानां परिपूर्णब्रह्म-वित्त्वाभावेऽपि ह्युपनीतावस्थत्वमात्रेण द्विजत्ववत्संस्कारविशेषादियोगमात्रेण भागवतत्वमात्रं सिद्धमिति। तावन्मात्रशालिनां तन्निबन्धनाघसङ्कोचे प्रमाणं क्वचिन्न पश्यामः; अत एव हि तेषामपि पौष्करादिष्वाशौचमनुमतम्। यत्तु तत्रत्यसंस्कार-विशेषतः कस्यचिदाशौचकालेऽपि मानसयागमात्रमनुमन्यते, तद्गायत्रीस्मरणपूर्वकजलाञ्जलिप्रक्षेपन्यायेन नेतव्यम्। विष्ण्वर्चनमपि हि प्रत्यक्षश्रुतिसिद्धं नित्यं चेति प्रागेवोक्तम्; मानसयागमात्राभ्यनुज्ञानेन शेषनिषेधश्च तत्रापि सिद्ध इति; तदेवं स्वतःप्राप्तिमपवादप्रकारं च यथावदधिगम्यायं धर्मोऽनुष्ठेयः।

*एकं यदि भवेच्छास्त्रं ज्ञानं निस्संशयं भवेत्। बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम्॥

इत्यादिभिर्याथात्म्येनातिविततगहनगम्भीरविविधविकल्पबहुतरशास्त्रसंक्षोभजनितदिङ्मोहशान्तये सर्वैस्सङ्कलनमात्रमिह कृतम्। अनेनैव प्रस्थानेन प्रशमितदिङ्मोहैस्समर्थैराप्रभातादनुष्ठेयानि सर्वाणि कर्माणि प्रत्येकं बहुतरेतिकर्तव्यतामुख्यानुकल्प-विकल्पापवादादिविधायकतत्तच्छास्त्रेषु यथावदधिगम्यानुष्ठेयानि।

हन्त तर्हि दुर्ज्ञानेऽतिदुष्करे अस्मिन् प्रस्थाने को नामाधिकारी स्यादिति चेन्मैवं भेतव्यम्—

*न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्। सर्वेषामेव धर्माणामुत्तमो वैष्णवो विधिः॥

*नित्यं विष्ण्वर्चनं परम् इत्यादिभिस्सर्वोत्तरत्वेन नित्यत्वेन च श्रुतेऽस्मिन् धर्मे अष्टवर्षस्य ब्रह्मचर्यधर्म इव यथाकथञ्चि-दनुप्रवेशस्य युक्तत्वात्।

*स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्। नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति॥

*जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते। इत्यादिन्यायेन भगवतैवाश्रितवत्सलेन शेषपूरणात्॥

स्मरन्ति च—*सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रति॥
साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघविनाशनम्॥
सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतैश्चितम्। पापराशिं दहत्याशु तूलराशिमिवानलः॥
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः। अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः॥
दुर्गसंसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः॥

एकोऽपि कृष्णे सुकृतप्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥

उपोषितः पोषितो वा दुष्टो वा प्रणतोऽपि वा । प्रसह्य हरते पापं को न सेवेद्धरिं ततः ॥
कोऽतिभारो हरेर्नाम्नः जिह्वायाः परिकीर्तने । आयासः स्मरणे कोऽस्य स्मृतो यच्छति शोभनम् ॥
पापक्षयश्च भवति स्मरतां तमहर्निशम् । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥
उदकेनाप्यलाभे तु द्रव्याणां पूजितः प्रभुः । अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात् ॥
अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः ।

पत्रेषु पुष्पेषु फलेषु तोयेष्वक्रीतलभ्येषु सदैव सत्सु ।
भक्त्येकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तमहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥
अण्वप्युपहृतं भक्तैर्मम तोषाय कल्पते ॥ इत्यादि ।

उक्तं च **नारदीये** श्रीमदष्टाक्षरब्रह्मविद्यायां षोडशोपचारोक्त्यनन्तरम्—

*एवमष्टाक्षरेणैव सर्वत्रार्चनकर्मणि । उपचारानिमान्कुर्वन् भक्तियुक्तेन चेतसा ॥
तुलसीपद्मपालाशसुवर्णकुसुमैश्शुभैः । पूजयित्वा जगन्नाथं फलमानन्त्यमश्नुते ॥
गन्धैः पुष्पैः फलैर्मूलैः पत्रैर्वारिभिरेव वा । नित्यं भगवतः पूजां यथासंभवमाचरेत् ॥
समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः । साक्षाद्भगवतो विष्णोः पूजनं जन्मनः फलम् ॥ इति ।

एतेन भगवत्पूजनस्य नित्यत्वं सुकरत्वं स्वयंप्रयोजनत्वं च व्यक्तमुक्तम् । यत्पुनरिदं विकलसमाराधनादौ प्रत्यवायादिकमुच्यते—

*सर्पं दृष्ट्वा यथा कायं कम्पते च मुहुर्मुहुः । अमन्त्रमर्चकं दृष्ट्वा तथा भीतो जनार्दनः ॥
*गन्धहीने भयोत्पत्तिः पुष्पहीने तु सङ्कुलम् । निवेद्यहीने दुर्भिक्षं मरणं मन्त्रहीनके ॥
अमन्त्रमविधिं चैवमकाले चैव पूजनम् । नित्यं राष्ट्रभयं कुर्यात्तद्ग्रामं तु विनश्यति ॥
अमन्त्रेणैव यत्पूज्यं पिशाचासुरवर्धनम् । व्याधितस्करदोषाश्च अनावृष्टिर्महद्भयम् ॥ इत्यादि ।

तदेतत्सर्वं राजराष्ट्रादिसमृद्ध्यर्थं काम्याराधनेष्वन्येष्वपि संपूर्णानुष्ठानशक्तस्य संपूर्णद्रव्यस्य लोभादिभिस्तत्तद्धानौ मुख्यकल्पसमर्थस्यानुकल्पेन प्रवृत्तौ च दोषमाह, नतु नित्ये कर्मणि निष्कामस्य यथाशक्तिकरणे । स्मरन्ति च **मन्वादयः**—

*वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ॥ इत्यादि ।

अस्ति चान्यो भगवद्धर्मस्य विशेषः, यमधिकृत्यायं सात्वतसंग्रहः—

*सकृत् त्र्यहं च सप्ताहं पक्षं मासमथापि वा । यो यजेद्विधिनाऽनेन भक्तिश्रद्धासमन्वितः ॥
सोऽपि यायात्परं स्थानं किंपुनर्योगसंस्थितः । यावज्जीवावधि कालं बद्धकक्ष्यो महामतिः ॥ इति ।

एतदेव संक्षिप्तं **नारायणमुनिभिः**—

*दिनमेकमपि प्रीतो यः कुर्यान्मतिमान्नरः । सुकृती किंपुनर्यावज्जीवमेवं समाचरेत् ॥ इति ।

उक्तं चाहिर्बुध्न्येन—

* समाराधयतस्त्वेवमेकाहमपि नारद । मुक्तिः करस्थिता तस्य सर्वे कामाश्च किंपुनः ॥ इति ।

तदिदं फलार्थिविषयम्; अन्येषां तु स्वयंप्रयोजनत्वं प्रागेवं स्थापितम्; तदभिप्रायेणोक्तं वङ्गिवंशेश्वरैः—

* एवमेकदिनं वाऽथ द्विदिनं त्रिदिनं तु वा । मासं वा वत्सरं वाऽपि यावज्जीवितमेव वा ॥
वर्तेत भक्त्या परया वैष्णवस्सुचिरं सुखम् । प्रारब्धे मध्यतो विघ्नैर्विच्छिन्नेऽप्यत्र कर्मणि ॥
नानर्थो न च नैष्फल्यं न कृतांशस्य संक्षयः । प्रारब्धेष्वसमाप्तेषु विच्छिन्नेष्वन्यकर्मसु ॥
भवत्येवैतदखिलं वैदिकेष्वितरेष्वपि । कृतस्वल्पांशकोऽप्यस्य स्थित्वा सुचिरमक्षयम् ॥
त्रायेतैव स्वकर्तारं स्वशक्त्या भवभीतितः । श्रद्धावानधिकार्यस्मिन्नुक्ते कर्मणि वैष्णवे ॥
नापरः कुलवृत्तादिगुणः कर्तृविशेषतः । येनकेनचिदेषित्रा भाव्यमस्मिंस्तु कर्मणि ॥
तस्मिन्सुदुर्लभे लब्धे कृपैवानन्तरक्रिया । ज्ञानकर्मतपोयोगयुक्तानप्यधिकारिणः ॥
श्रद्धाहानिः परो दोषश्च्यावयेदधिकारतः । स्वोक्तासूपनिषत्स्वेवमुक्तवानुत्तमः पुमान् ॥
श्रद्धाश्रद्धे समुद्दिश्य तस्माच्छ्रद्धा परो गुणः । नेह कालक्रियाकर्तृद्रव्यदिग्देशसंश्रिताः ॥
एषितारं तदिच्छां वा विहायास्ति नियन्त्रणा । निषेधाविषयीभावादृते नैवापरो गुणः ॥
प्रीतिहेतुः परेशस्य स्वार्चनाङ्गेषु वस्तुषु । अत एवार्चनाङ्गानि द्रव्याणि गणयन् स्वयम् ॥
प्राह पत्रादिमात्राणि जातिवर्णादिभिर्विना । अहो हरिं ब्रुवन्नेवं मुक्तिमेत्यप्यहो अहो ॥
अहो अहो सुलभता कृपा चेयमहो अहो । अस्त्येव निर्मलं तोयमयत्नसुलभं भुवि ॥
दृश्यन्ते च शुभा दूर्वास्सुलभास्सर्वदिक्ष्वपि । अस्ति जिह्वा हरिं स्तोतुमात्मीयैवास्य मध्यगा ॥
स्वकरावपि कर्मण्यौ ध्यातुमस्त्येव मानसम् । अतो न हानिर्मन्त्राणां यागविघ्नकरी हरेः ॥
मासम्यैषा हि संपूर्णा पत्राद्येकैकमेव तु । अज्ञानादथवा ज्ञानादपराधेषु सत्स्वपि ॥
प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव केवलम् । सत्यसङ्कल्पसंयुक्ते सर्वज्ञे सर्वशक्तिके ॥
नित्यनिर्दोषनिस्सीममहाविभवयोगिनि । स्वाधीनत्रिविधाशेषचिदचिद्वस्तुशेषिणि ॥
निर्मलानन्दविज्ञाननिधावुदधिशायिनि । स्वसङ्कल्पकृताशेषजगज्जन्मलयस्थितौ ॥
अर्चनादिष्वनर्हत्वान्न कश्चिन्नापराध्यति । अतोऽनङ्गीकृताशेषकर्तृदोषविमर्शया ॥
कृपयैवास्य देवस्य सर्वोऽप्यर्हति तत्क्रियाम् ॥ इति ।

अत्र तत्क्रियामिति सामान्यनिर्देशाद्यथाधिकारं साक्षात्समाराधनं परैस्तत्प्रवर्तनं समाराधनापेक्षितप्रदानेन शुश्रूषणमित्यादिकं सर्वं संगृहीतम् । उक्तन्यायेन न्यूनाधिकोपचारादिकमपि सर्वमुपपादितं मन्तव्यम् । अपि च अप्रयत्नलभ्यैरान्तरपुष्पादिभिरपि भगवदुपासनं स्मर्यते—

* अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥
ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तु सप्तमम् । सत्यमेवाष्टमं पुष्पं तेन तुष्यति केशवः ॥ इति ।

आह च भगवान् शौनकः—

*रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना । हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥ इति ।

प्रत्येकं संपूर्णसमाराधनमित्यर्थः । अतो यथाधिकारं यथाशक्यमत्र श्रद्धानैर्दयार्द्रहृदयदेशिकोपदेशपूर्वकमनुप्रविश्य देशकालदशाद्यानुगुण्येनाच्छिद्रं यथाक्रमं समाहृत्य वा अनुतिष्ठद्भिरनन्यप्रयोजनैः परमैकान्तिभिरनवधिकपरमपुरुषचरणपरिचर्यारूपमपवर्गैश्वर्यं यथारोग्यं यथायोग्यं चात्रैव भोक्तव्यमिति सिद्धम् ॥

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः ॥

विदितनिगमसीम्ना वेङ्कटेशेन तत्तद्बहुसमयसमक्षं बद्धजैत्रध्वजेन ।
प्रतिपदमवधानं पुष्यतां सा[त्वता]त्त्विकानां परिषदि विहितेयं पञ्चकालस्य रक्षा ॥

कण्डूलाः कलिकज्जलाविलधियः केचिज्जडा निष्फलं विक्रोशन्तु वियच्चरैस्सह बलिव्यत्याससवित्रासिभिः ।
मोघाशाऽपि तथाविधेष्ववितथेष्वार्तेष्वमोघा भृशं मुक्तैश्वर्यमहाफलोद्गमधियां चर्येयमाचर्यताम् ॥

त्यक्तं शास्त्रमलेपकप्रभृतिभिः किं तेन तस्यागतं प्रद्विष्टं जगदेकचक्षुषि दिवाभीतैस्ततस्तस्य किम् ।
दुग्धं पित्तहतैर्जुगुप्सितमतस्तस्यापि किं दुर्जनैस्त्यक्तं चेदपि मत्कृतं सुरुचिरं किं देशिकैस्त्यज्यते ॥

**इति श्रीपाञ्चरात्ररक्षायां नित्यव्याख्यानाख्यस्तृतीयोऽधिकारः ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य

श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ श्रीपाञ्चरात्ररक्षा समाप्ता ॥**

** रक्षात्रयमिदं मन्त्रसालघट्टाग्रहारिभिः । कवितार्किकसिंहाख्यगोविन्दार्यैरुपाहृतम् ।
श्रीकोशमवलम्ब्यैव पर्यशोधि यथामति । शोधनीयेष्वथांशेषु प्रमाणं पण्डितोत्तमाः ॥

लिबर्टी प्रेस्, मद्रपुरी.

श्रीरस्तु ।

श्रीमते रामानुजाय नमः ॥

[ इत उपरितना लघीयांसः प्रबन्धा न देशिकचरणकृतय इति भूयसां बहुविदां प्रवादः । तृप्तिकराश्च पाठा नोपलभ्यन्ते । उच्चावचा अशुद्धयश्च हृदयं व्यथयन्ति । अथापि गृहीतग्राहिणां केषाञ्चिदुपच्छन्दनाय एतेऽत्र प्रकाश्यन्ते । निर्धारणे प्रामाणिकाः प्रमाणम् । ]

## ॥ यज्ञोपवीतप्रतिष्ठा ॥

कालै स्वाध्याययोग्ये शुभकृति दिवसे श्रीपतेर्मन्दिरादौ कृत्वा स्नानाद्यनुष्ठां शुचिचरणकरो द्विस्तथाऽऽचम्य हृष्टः ।
दर्भेषु प्रागुदग्वोपविशतु शुचिभिर्निर्मितं यज्ञसूत्रं तारेणामन्त्र्य चापस्त्विति तु तदभिषिञ्चेज्जपेत्सप्ततारम् ॥ १ ॥

भूरादिव्याहृतीभिस्त्रिगुणितमथ तत् स्वेन मानेन तारव्याहृद्भिः प्रोक्ष्य कूर्चोपरि निहितमधो मार्जयेद्दर्भपुञ्जैः ।
आपोहिष्ठादिमन्त्रैरथ च तदनुवर्त्योर्ध्वदक्षं कराभ्यां तारेण व्याहृतीभिस्त्रिगुणितमथ सावित्रमन्त्रेण भूयः ॥ २ ॥

प्राणानां ग्रन्थिमन्त्रग्रथितमुपरि यद्वामहस्तं कराभ्यां भूरग्निं भूर्भुवस्स्वस्त्विति च तदनुवर्त्योत्सृजेद्दर्भदृष्टम् ।
दर्भास्तीर्णे प्रदेशे तदुपरि च कुशौ प्रास्य हस्ताग्रतालं त्रिः कृत्वा नावपश्येद्भ्रममथ च तरौ याज्ञिये तं निबध्य ॥ ३ ॥

उक्त्वा मन्त्रं पितृभ्यो नम इति कुटिलं तारतो व्याहृतीभिः चर्तूकृत्य स्वहस्ते त्रिगुणितमथ चावेष्ट्य मध्यं शिखाभ्याम् ।
ताभ्यामावेष्ट्य सूत्रत्रममपि कलयेद्ग्रन्थिकं ग्रन्थिमन्त्रात् अश्वत्थाद्युक्तशाखाविनिहितमथ तत् स्थण्डिले व्रीहियुक्ते ॥४॥

न्यस्ते ताम्रादिपात्रे शुभजलभरिते सूत्रसंवेष्टिते सत्कूर्चे तारादिमन्त्रैर्निहितमुपचितं गन्धपुष्पाक्षताद्यैः ।
आयम्यासून् करिष्ये सकलशुभकृते यज्ञसूत्रप्रतिष्ठां संकल्प्येत्थं स्पृशंस्तत्कलयतु सुमना व्याहृतीभिः प्रतिष्ठाम् ॥ ५ ॥

व्यस्ताभिस्संहताभिस्तदनु तदनुगावर्तिताभिः क्रमाद्भूरग्निं पर्यायभेदैरभिजपतु पुनः पञ्चभूतासुकाद्यान् ।
यद्वा ताराग्निनागाश्शशिपितृविधयो वायुसूर्यादिशेषाः तन्तूनां देवतास्स्युर्विधिहरिगिरिशा ग्रन्थिदेवाः क्रमेण ॥ ६ ॥

श्रीशो यज्ञोपवीतस्य च खलु तदिमानाह्वयेत्तत्र कुम्भे गन्धाद्यैरर्घ्यपाद्यादिभिरपि कलयेदर्चनं वीटिकान्तैः ।
सत्कारैरर्चयित्वा सुविहितमथ तद्दर्शयित्वा सवित्रे त्वासत्येनेति चग्भिश्चतसृभिरथ तन्निक्षिपेत्पूर्णकुम्भे ॥ ७ ॥

तत्स्पृष्ट्वाऽष्टोत्तरं वै शतमनुकलयेत्सूर्यगायत्रजापं तत्स्वाचान्तस्समन्त्रं हरिदिगभिमुखो धारयेत्सासुयामः ।
पादौ प्रक्षाल्य पाणी शुचिचरणकरो द्विस्तथाऽऽचम्य दर्भेष्वासीनोऽसूत्रियम्य स्पृशतु जपतु च त्र्यम्बकं यज्ञसूत्रम् ॥ ८ ॥

सर्षिच्छन्दोऽधिदैवं मनुमथ सुजपन् धारयेद्यज्ञसूत्रं प्रत्येकं मन्त्र आचान्तिरथ बहुषु चेत्नाशुचिर्नावतिष्ठेत् ।
वेदान्ताचार्य इत्थं विविधमुनिमतां यज्ञसूत्रप्रतिष्ठां व्यातानीद्वैदिकाध्वस्थितिविहितमतिः वैधनिष्ठां गरिष्ठाम् ॥ ९ ॥

॥ इति यज्ञोपवीतप्रतिष्ठा समाप्ता ॥

## ॥ वैश्वदेवकारिका ॥

स्वाग्निं संस्थाप्य पूर्वं कुशनिचयलसत्संस्तरस्सासुयामः स्वाकूत्याधिश्रयोक्तिप्रतिवचनहविःप्रोक्षणं स्थापनं स्यात् ।
अन्नं द्वेधोत्तरार्धं त्रिविधविभजितं पश्चिमारम्भमन्यत् भागे द्वेधा विभक्ते हुतभुजि जुहुयात्तत्र पूर्वस्थमन्नम् ॥ १ ॥
आद्यैष्षड्भिस्सतारैर्मनुभिरथ पृथक्पाणिना होममग्नौ कृत्वा तत्रैकदेशं हविरथ समिधं(हितं) पश्चिमांशेन तेन ।
पश्चादग्नेर्धरण्यां बलिहरणविधौ मार्जनप्रोक्षणादेः पात्रेष्वाहृत्य तोयं क्रमविधिविहिते मार्जनप्रोक्षणे च ॥ २ ॥
धर्माधर्मादिभेदप्रचुरबलिविधिस्थाननिर्देशनं तत् सर्वं चक्रान्तरस्थं व्यजनविकृतिगं वेदशास्त्रानुरोधम् ।
पित्रे रौद्रये तथा स्यात्क्रमविधिविहिते मार्जनप्रोक्षणादौ यद्यत्प्राचीनसूत्रं यदपि तदितरत्तच्च तीर्थं निवीतम् ॥ ३ ॥
पश्चाद्वैहायसस्य प्रथमबलिमतो वायसस्याग्रभागे श्वभ्यां तस्याग्रभागे बलिमथ निविशेदत्रपादात्मशुद्धिः ।
धर्मादेर्दर्शनं चेदसुखकरमतश्चान्द्रमत्रोपवासः स्याद्दैवे पित्र्यभूत(द्विज)द्वययजनविधौ पश्चिमस्थं हविस्स्यात् ॥ ४ ॥
मध्यादुद्धृत्य भागान्मनुजयजनमित्यग्रभागेऽग्रदानं कृत्वा गोदोहकालक्षपणविधिबलात्तत्र लप्धातिथिभ्यः ।
दद्याल्लक्ष्मीविशिष्टस्वदितिमपि हविर्यज्ञशिष्टान्नयुक्तं कृत्वा पाद्यासनार्घ्यैर्विधिवदपचितिं कल्पयित्वा यथार्हम् ॥ ५ ॥
सायं रौद्रान्तमन्नाद्यदि हितमशनं यद्यथा तद्यथा स्यात् नक्तं चामेन तोयाद्यदि मनुजपतस्तच्च रौद्रान्तमाहुः ।
केचित्त्वामेन तोयान्म(नु)सुजपकरणैः षड्भिरेवाद्यमन्त्रैः नक्तं स्यात्सायमेव त्वनशननियतश्राद्धभोक्तुर्जपस्स्यात् ॥ ६ ॥
धर्मादीशानदत्तं हविरपि च मनुः पञ्च यज्ञे च दत्तं भागं रौद्रावशिष्टं महदनभिमतं त्वातिथेयान्नदाने ।
स्वार्थेऽप्यन्नादिकृद्द्वयामिति नियमविधिश्चाग्रयज्ञादिशिष्टं सर्वं पित्रोर्मृताहे द्विजमुखहवने नेष्टमित्याहुरार्याः ॥ ७ ॥
नेत्रेन्दू नयनं युगं शशिविधू चन्द्रावतारश्शशी चन्द्रश्चन्द्रशशीन्दवोऽत्र गणिता धर्मादिकास्सेचने ।
तद्दैवे नयनं क्रमात्पितृमुखे चन्द्रश्च भूते शशी मर्त्येन्दुश्च तथागृहे हुतवहे पूर्वाहुतीष्वीक्षणम् ॥ ८ ॥
इत्थं व्यासपराशरादिमुनिभिस्सिद्धान्तितार्थेऽप्ययं श्रीमल्लक्ष्मणयोगियामुनमुखैर्नाथादिभिर्निर्णितः ।
तत्सर्वं त्ववलोक्य तत्करुणया तद्वैश्वदेवक्रमः सम्मोदाय च वेङ्कटेशकविना प्रोक्तोऽभवद्धीमता ॥ ९ ॥

॥ इति वैश्वदेवकारिका समाप्ता ॥

## ॥ भूगोलनिर्णयः सव्याख्यः ॥

पञ्चाशत्कोटिभिस्स्यान्मितमवनितलं योजनानां तथा हि स्याज्जम्बूद्वीपमेकं नियुतमुदधिना तावता वेष्टितं तत् । प्लक्षद्वीपेन सोऽपि द्विगुणविततिना तावतेक्ष्वब्धिनाऽसौ द्वीपाद्वैगुण्यभाजस्स्वसदृगुदधिभिस्संवृता एवमेव ॥ १ ॥

**पञ्चशत्कोटिभिस्स्यादिति ।** तत्र कटाहभित्तिः कोटियोजनमाना, अण्डकटाहान्तरविवरं पञ्चाशत्कोटियोजनो-

च्छ्रितं पञ्चाशत्कोटिविस्तीर्णं च । तत्र भूर्भुवस्सुवर्महर्जनस्तपस्सत्याख्यानि सप्तभुवनानि । तत्र पञ्चाशत्कोटिविस्तीर्णा भूमिः । तथाहि— जम्बूद्वीपं लक्षयोजनविस्तीर्णम् । तच्च नववर्षविभागयुक्तम्, तानि भारतकिंपुरुषहरिवर्षेलावृत-रम्यकहिरण्वत्कुरुभद्राश्वकेतुमालनामकानि । वर्षपर्वताश्च — हिमवद्धेमकूटनिषधनीलश्वेतशृङ्गिमाल्यवद्गन्धमादनाख्या अष्टौ । तत्र हिमवद्धेमकूटनिषधा मेरोर्दक्षिणपर्वताः; नीलश्वेतशृङ्गिण उत्तरपर्वताः; माल्यवान् प्राचीनः; गन्धमादनस्तु पश्चिम इति ॥ तत्र माल्यवद्गन्धमादनव्यतिरिक्ता षट् पर्वताः द्विसहस्रयोजनोच्छ्रया द्विसहस्रयोजनविस्ताराश्च; माल्य-वद्गन्धमादनौ त्वेकसहस्रयोजनोच्छ्रायौ तावद्विस्तारिणौ च; पूर्वे षट्पर्वता आपूर्वपश्चिमसमुद्रायाताः, तत्र मध्यौ नीलनिषधौ लक्षयोजनायातौ, हेमकूटश्वेतौ तु नवतिसहस्रायातौ, हिमवच्छृङ्गिणौ त्वशीतिसहस्रायातौ, जम्बूद्वीपस्य परि-मण्डलत्वादेवं परिमाणोपचयः, माल्यवद्गन्धमादनौ तु आनीलनीलनिषधायातौ, चतुर्विंशत्सहस्रयोजनोन्नतौ, वर्षेष्वपि भारतकिंपुरुषहरिवर्षाणि मेरोर्दक्षिणानि, रम्यकहिरण्वत्कुरुवर्षाणि मेरोरुत्तराणि; भद्राश्ववर्षं प्राचीनम्; केतुमालवर्षं पश्चिमम्; मध्यमं त्विलावृतवर्षम् । तस्य च मध्ये मेरुश्चतुरशीतियोजनोच्छ्रायः, अधः षोडशसहस्रयोजनो निमग्नः, षोडशसस्रयोजनविस्तीर्णः, उपरि द्वात्रिंशत्सहस्रयोजनविस्तीर्णः, भूपद्मस्य मेरुः कर्णिकाकारः । मेरोश्चतुर्दिशं नवसहस्र-योजनविस्तारः, स च षोडशसहस्रयोजनविस्तार इति । इलावृतं सर्वतश्चतुस्त्रिंशत्सहस्रयोजना, नीलनिषधान्तं तु चतुस्त्रिं-शत्सहस्रयोजनानि, अन्यानि षड्वर्षाणि प्रत्येकं नवसहस्रयोजनाविस्तृतानि । दक्षिणोत्तरं प्राक्पश्चिमविस्तृतं भद्राश्ववर्षम् । माल्यवत्समुद्रान्तं द्वात्रिंशत्सहस्रयोजनविस्तृतम् । आनीलनिषधान्तं चतुस्त्रिंशत्सहस्रयोजनविस्तृतम् । गन्धमादनसमु-द्रान्तं तु द्वात्रिंशत्सहस्रयोजनानि, अनीलनिषधान्तं तु चतुस्त्रिंशत्सहस्रयोजनानि, अन्यानि षड्वर्षाणि प्रत्येकं नवसहस्र-योजनविस्तृतानि, दक्षिणोत्तरं प्राक्पश्चिमं त्वासमुद्रान्तानि तु विवेकः ।

एवं जम्बूद्वीपस्य प्राक्पश्चिमं भद्राश्वकेतुमालयोश्चतुष्षष्टिसहस्रयोजनत्वादिलावृतस्य चतुस्त्रिंशत्सहस्रयोजनत्वा-न्माल्यवद्गन्धमादनयोश्चतुस्सहस्रयोजनत्वाच्च लक्षयोजनत्वं सिद्धम् । दक्षिणोत्तरमपीलावृतस्य चतुस्त्रिंशत्सहस्रयोजनत्वा-दन्येषां षण्णां वर्षाणां चतुःपञ्चाशत्सहस्रयोजनत्वात् षण्णां पर्वतानां द्वादशसहस्रयोजनत्वाच्च लक्षयोजनविस्तीर्णेन लवणसमुद्रेण वेष्टितम् । सोऽपि समुद्रो द्विलक्षयोजनविस्तृतेन प्लक्षद्वीपेन परिवेष्टितः । प्लक्षद्वीपोऽपि तावत्प्रमाणेनेक्षु-समुद्रेण परिवेष्टितः । एवमेव शाल्मलिकुशक्रौञ्चशाकपुष्करद्वीपा उत्तरोत्तरं पूर्वस्मात् द्विगुणप्रमाणा द्रष्टव्याः ॥ १ ॥

**जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करद्वीपाः । लवणेक्षुसुराघृतदधिदुग्धाम्भस्सिन्धुसंवृताः क्रमशः ॥ २ ॥**

सुरासर्पिर्दधिदुग्धशुद्धजलसमुद्राश्च तत्तद्द्वीपप्रमाणा एवावगन्तव्याः ॥

तत्र प्लक्षादीनां पञ्चानां द्वीपानामुभयतस्समुद्रान्तायातैः सप्तकुलपर्वतैः सप्तवर्षाणि द्रष्टव्यानि । पुष्करद्वीपस्तु मध्ये वलयाकारः पञ्चाशत्सहस्रयोजनोच्छ्रायः, तावद्विस्तृतेन मानसोत्तरपर्वतेन वर्षद्वयविभागयुक्तः । एवं मेरोरेकतः सप्तानां समुद्राणां सप्तविंशतिलक्षोत्तरकोटियोजनविस्तृतत्वाद् द्वीपानां पञ्चानां च पञ्चाशत्सहस्रषड्विंशतिलक्षोत्तरकोटियोजनविस्तृ-तत्वात् । स्वादूदकसमुद्रात् परवेलान्तं सपञ्चाशत्सहस्रत्रिपञ्चाशल्लक्षोत्तरकोटिद्वययोजनपरिमितत्वं द्रष्टव्यम् ।

एवं च सति समुद्राणां सप्तद्वीपानामायामप्रमाणेन सप्तलक्षोत्तरपञ्चकोटिपरिमितत्वमवगन्तव्यम् ॥ २ ॥

**सप्तद्वीपंससिन्धुं द्विगुणगुणितया स्वर्णभूम्या परीतं लोकालोकाद्रिणा साऽप्ययुतविततिना**

**तावदुच्चेन वीता। लोकालोकाच्च मेरोर्भवति हि धरणी यावती ध्वान्तभूम्या तावत्याऽसौ वृतस्सा-ऽप्युदकपरिधिना साऽपि वेधोण्डभित्त्या ॥ ३ ॥**

एतच्च समुद्रं सप्तद्वीपं स्वद्विगुणप्रमाणया काञ्चनभूम्या वृतम् । सा च लोकालोकपर्वतेन योजनायुतोच्छ्रयेणा तावद्विस्तारिणा च सर्वतः परिवेष्टिता । एवं च मेरोरेकतो लोकालोकान्तं सपञ्चाशत्सहस्रसप्तषष्टिलक्षोत्तरद्वादशकोटि-परिमितत्वं सिद्धम् । लोकालोकोऽपि मेरोरालोकालोकान्तं यावत्प्रमाणाभूस्तावत्प्रमाणयैव तमोभूम्या समावृतः ततःपरं अण्डकटाह इति ॥

एवं च मेरोरेकतोऽण्डकटाहान्तं पञ्चत्रिंशल्लक्षोत्तरपञ्चविंशतिकोटियोजनानि भवन्ति। तत्र पञ्चत्रिंशल्लक्षयोजनपरि-मितं गर्भोदकम् ; अन्यत्तु पञ्चविंशति कोटियोजनपरिमितं भूमण्डलमिति। एवं मेरोश्चतुर्दिशं द्रष्टव्यमिति पञ्चाशत्कोटि-विस्तीर्णा भूमिः ॥

एवं भूमण्डलं तूर्ध्वं चाधश्च सर्वत्राण्डकटाहः तद्विवरस्य पञ्चाशत्कोटीविस्तीर्णत्वमवबोद्धव्यम् ॥ ३ ॥

**सप्तद्वीपं समुद्रैस्सह मुनिनियुतैः कोटिभिः पञ्चभिस्स्यात् लोकालोकाद्रिमेर्वन्तरमपि रविभिः कोटिभिः सप्तषष्ट्या । लक्षैः पञ्चायुतैस्स्यादथ शरनयनैः कोटिभिर्भूतरामैर्लक्षैस्स्या-च्चक्रवालान्तरममरशिखर्यण्डभित्त्योश्च मध्यम् ॥ ४ ॥**

**शरनेत्रकोटिभिर्भूपरिधिजलं बाणवह्निलक्षैस्स्यात् । अभितो मेरोरेवं पञ्चाशत्कोटियोजनाभूमिः ॥५॥**

एषा च भूमिस्सप्ततिसहस्रयोजनोच्छ्राया, अस्या भूमेः विवररूपाणि अतलवितलनितलगभस्तिमन्महातलसुतल-पातालानि सप्त प्रत्येकं नवनवसहस्रयोजनोच्छ्रायाणि । मध्येमध्ये भूमण्डलादधश्च प्रत्येकं एकसहस्रयोजनोच्छ्रायत्वं भुवः ; एतस्या भुवोऽधस्ताच्छेषलोकः । तत्र अधस्ताद्गर्भोदकं नरकाश्च । एतत्किञ्चिन्न्यूनद्विलक्षोनपञ्चविंशतिकोटियोज-नोच्छ्रायम् ॥ एतच्च

सूर्याण्डगोलयोर्मध्ये कोट्यस्स्युः पञ्चविंशतिः । इति श्रीभागवतश्लोकमर्यादया एवं परिमाणमवसेयम् ॥४—५॥

**लक्षे सूर्येन्दुताराज्ञकविकुजसुराचार्यमन्दाद्विलक्षे लक्षे सप्तर्षयोऽथ ध्रुव इह नियतं त्वन्तरिक्षं सुवस्स्यात् । अन्यान्यब्धीन्दुलक्षाण्यथ शशिनयनोष्टार्ककोट्यान्यलोका ध्वान्तं न्यूनद्विकोटीत्युपरि सवितृतोऽण्डं हि भूताक्षिकोट्यः ॥ ६ ॥**

**शैलैः पातालरन्ध्रैर्नवदशशतकैस्सप्तभिर्भूरधोऽधो मध्येमध्ये सहस्रैर्भवति हि तदधः शेषलोको जलं च । तस्याधो नारकास्स्युस्तदिदमिषुदशः कोटयः किंचिदूनाः पञ्चाशत्कोटितुङ्गं विततमिदमतो ह्यण्डभित्तिस्तु कोटिः ॥ ७ ॥**

भूमेरुपरि लक्षयोजने सूर्यमण्डलावस्थानात् भूमण्डलस्य सप्ततिसहस्रयोजनोच्छ्रितत्वादवशिष्टानां सर्वेषां भुवनानां भूमेरोरध एव द्रष्टव्यत्वात् , भूमेरुपरिष्टात् लक्षयोजने सूर्यमण्डलम् । एतच्च भुवर्लोक इति गीयते । सूर्यस्योपरि लक्षयोजने चन्द्रमण्डलम् । तदुपरि लक्षयोजने नक्षत्रमण्डलम् । ततो द्विलक्षयोजने बुधः । ततो द्विलक्षे शुक्रः ।

तदुपरि लक्षद्वयेऽङ्गारकः। तत उपरि लक्षद्वये बृहस्पतिः। ततो द्विलक्षे शनिः। शनेरुपरि लक्षयोजने सप्तर्षिमण्डलम्, सप्तर्षिमण्डलस्योपरिष्टाल्लक्षे ज्योतिश्चक्राधारभूतो ध्रुवः, एवं सवितृमण्डलस्योपरि ध्रुवपर्यन्तं चतुर्दशलक्षोत्सेधः स्वर्लोकः॥

सप्तर्षिमण्डलस्योर्ध्वं ध्रुवमण्डलपर्यन्तं कश्चिद्विष्णुलोकः। ध्रुवमण्डलस्योपरि महर्लोकः कोटियोजनोत्सेधः। ततो जनलोको द्विकोटियोजनोच्छ्रायः, तपोलोकोऽष्टकोटियोजनोच्छ्रायः। सत्यलोकस्तु द्वादशकोटियोजनोच्छ्रायः। एवं ध्रुवादुपरि सत्यलोकोर्ध्वसीमान्तं त्रयोविंशतिकोटियोजनानि भवन्ति। तत उपरि किञ्चिदूनकोटिद्वययोजनं तमः; ततःपरमण्डकटाह इति। एवं सूर्याण्डगोलकटाहयोर्मध्ये पञ्चविंशतिकोटियोजनत्वम् ऊर्ध्वमधश्चेत्यण्डकटाहान्तरविवरोच्छ्रायस्य पञ्चाशत्कोटियोजनत्वं सिद्धम् ॥ ६—७॥

॥ इति भूगोलनिर्णयस्सव्याख्यस्समाप्तः ॥

---

## भगवदाराधनप्रयोगकारिका ॥

स्वाचान्तस्सूर्ध्वपुण्ड्रः प्रणमनमजिनाद्यासनं स सुयामस्साङ्गन्यासो जपस्स्याद्धृदयकमलके मानसी देवपूजा।
वामस्थं वारिपात्रं कुसुममितरतश्चान्यदग्रेऽर्घ्यपाद्यस्नानीयाचामपूर्वाद्धरितनुकुसुमस्वात्मनां प्रोक्षणं स्यात् ॥ १ ॥
आह्वानं चासनार्घ्यं पदसलिलमथाचामपुंसूक्तयुक्तस्नानं वस्त्रोपवीते मलयजकुसुमे धूपदीपौ क्रमेण।
मध्वादिः पर्क आदावुपरि च सलिलं पायसाद्यन्नजातं पानीयाचामपूगं परिगतिनमनोद्वासनं देवपूजा ॥ २ ॥
कूर्मादीन् दिव्यलोकान्तदनु मणिमयं मण्टपं तत्र शेषं तस्मिन् धर्मादिपीठं तदुपरि कमलं चामरग्राहिणीश्च।
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं सेनेशान्द्वारपालान्कुमुदमुखगणान्विष्णुभक्तान्प्रपद्ये ॥ ३ ॥

॥ इति भगवदाराधनप्रयोगकारिका ॥

---

## श्रीमन्निगमान्तमहादेशिकैः समयविशेषेष्वनुगृहीताः
## मुक्तकश्लोकाः ॥

अहन्ते नाहं ते विहरणपदं देशिकगिरस्स्वदन्ते नः स्वान्ते सपदि गतसन्देहविषयाः।
अनायासा यासामहिपतिशया सा भगवती धराधारा धाराधरनिकरसाधारणरुचिः ॥

सूते सूकरयुवतिस्सुतशतमत्यन्तदुर्भगं झटिति। करिणी चिराय सूते [कमपि] सकलमहीपाललालितं कलभम् ॥

कर्मावलम्बकाः केचित् केचित् ज्ञानावलम्बकाः। वयं तु हरिदासानां पादरक्षावलम्बकाः ॥

तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्ये।
तन्त्रेषु निश्चितधियो वयमेव नान्ये कृष्णे निवेशितधियो वयमेव नान्ये ॥

॥ श्रीरस्तु ॥ Acc no: 628

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

[व्याख्यानविभागे द्वितीयसम्पुटम्]

# ॥ गीतार्थसंग्रहरक्षा, गीताभाष्यतात्पर्यचन्द्रिका च ॥

पर्यवेक्षकः परिष्कारकश्च

॥ श्रीकाञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥

प्रकाशनादिसर्वाधिकारी :

विद्वान् अ. संपत्कुमाराचार्यः, M. A.

पुस्तकप्राप्तिस्थानम् :

३९, सन्निधिवीथी, कञ्जीवरम्.

मद्रपुर्यां लिबर्टी मुद्रणालये सममुद्यत ।

1941

Price : 5—0—0] ॥ मूल्यं रूप्यपञ्चकमात्रम् ॥ [Postage Extra.